युक्तमित्यतस्तस्य प्रमाणेनार्थान्तरमाह–**तप्त इति** ।। यत आलोचनायुक्तस्तप्त इत्युच्यते तस्माद्धरेस्तप्तता तु कार्यार्थकामनेति सम्बन्धः । अत्राऽलोचना नामेच्छाविशेषो ग्राह्यः । सन्तापार्थत्वमेव किं न स्यादित्यत आह– **कुत इति** ।। अनेन तप्तस्य खिन्नस्येति परकीयव्याख्यानमप्यपास्तम् । प्राक् प्रमाणेन तेजोरसशब्दस्य अव्याख्याततत्वादप्रतीतेस्तं व्याचष्टे– **तेज इति** ।। जगत इति शेषोक्तिः । तेजःशब्दार्थकथनं– **सामर्थ्येति** ।। रसशब्दार्थः– **सारभूत इति** ।। 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' इत्यभिधानादिति ।।

**अथ खण्डार्थः**

अर्कशब्दस्याऽदित्ये प्रसिद्धत्वादप्शब्दोऽपि तत्रेत्याशङ्कां निवारयितुमाह– **आप इति** ।। आप एवार्कः अर्कशब्दवाच्या इत्यर्थः । तत् तत्राप्सु यत् यः अपां शरः फेनरूपो मण्डः आसीत् तत् सशरः मृत्युना स्वरेतसा समहन्यत सङ्घातत्वं प्रापितः । यः सङ्घातः सा पृथिवी ब्रह्माण्डरूपाऽभवत् । तस्यां पृथिव्याम् अश्राम्यत् शिश्ये मृत्युनामा जनार्दनः । तदनन्तरम् अग्निः स्यादिति कामनाम् अकरोदिति शेषः । श्रान्तस्य शयितस्य तप्तस्य कार्यकामनावतः तस्य मृत्युनामकस्य परमात्मनः सकाशात् तेजोरसो जगत्सामर्थ्यसारभूतः अग्निः अग्रजत्वादग्न्यभिधानवान् वायुः निरवर्तत अजायतेति ।।

**उपनिषत्**—

[मुख्यवायोः त्रेधोत्पत्तिः]

**स त्रेधाऽत्मानं व्यकुरुताऽदित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहितस्तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मावथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरस्स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ।। ३ ।।**

**भाष्यम्—**

**वायुरग्निरिति प्रोक्तो ह्यग्रणीत्वादथाङ्गिनाम्।**
**नेतृत्वाददनाच्चापि तस्य स्रष्टा जनार्दनः॥**
**स वायुर्वायुरूपेण जगत्पाति शरीरगः।**
**आदित्यस्थेन रूपेण जगद् याति प्रकाशयन्॥**
**अग्निस्थेन तु रूपेण हूयते सर्वयष्टृभिः।**
**आदाय यात्यायुरिति स एवादित्य उच्यते॥**
**तत्सम्बन्धात्तु तन्नाम सूर्यस्याग्नेस्तथैव च॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

'स त्रेधाऽत्मानं व्यकुरुत' इत्यस्य स जातः प्रजापतिः त्रेधा त्रिप्रकारमात्मानं स्वयमेव कार्यकारणसङ्घातं व्यकुरुत व्यभजत् इत्यादि परव्याख्यानमप्रामाणिकं प्रमाणविरुद्धं चेति भावेन खण्डं प्रमाणेन व्याचष्टे— **वायुरित्यादिना**॥ स त्रेधेत्युक्तत्वादग्निं तृतीयमित्यपि ग्राह्यमिति सूचयन् अग्निशब्दं तावत्प्रकारान्तरेण वायौ निर्वक्ति— **वायुरिति**॥ 'स त्रेधाऽत्मानम्' इत्युक्तरूपाणां मूलानुक्त-व्यापारानाह— **स वायुरिति**॥ हूयते हविरादाय हूयते हविःप्रक्षेपाधिकरणत्वेन हूयते वा। आदित्यशब्दस्य सूर्यपरत्वप्रतीतिं निवारयितुं वायौ निर्वक्ति— **आदायेति**॥ आयुरादायेत्यन्वयः। आदित् इत्यस्यार्थः— **आदायेति**॥ यकारस्यार्थः— **यातीति**॥ आयुरिति योग्यतया सम्बद्ध्यते। तर्ह्यादित्याग्निशब्दयोः सूर्यादौ प्रसिद्धिः कथमित्यत आह— **तत्सम्बन्धादिति**॥ अत्रोपनिषदि अन्ते ग्राह्यवाक्यगताग्निशब्दस्याऽदौ निर्वचनेन आदौ प्रयुक्तवाक्यगतादित्य-शब्दस्यान्ते निर्वचनेन मध्यवाक्यप्रतिपाद्यवायोर्व्यापारस्याऽदावुक्त्या त्रयाणां रूपाणां साम्यमेव न क्रमेण निर्देशे प्राधान्यादिकं निमित्तमित्यभिप्रेत्योपनिषदि आदित्यं तृतीयं वायुं तृतीयं अग्निं तृतीयमित्युक्तमिति सूचितम्॥

**भाष्यम्—**

**स एष कूर्मरूपेण वायुरण्डोदके स्थितः ॥**
**विष्णुना कूर्मरूपेण धारितोऽनन्तधारकः ।**
**अस्य पादा हि चत्वारो ह्यण्डोदे कोणसंस्थिताः ॥**
**उरस्तु भूमिसंश्लिष्टमतिरिच्य भुवं पुनः ।**
**पार्श्वतः पृष्ठतश्चैव शिरश्चोदकसंस्थितम् ॥**
**आकाशमुदरे तस्य द्यौः पृष्ठे संस्थिता विभोः ।**
**एवं विद्वांस्तु यत्रैति तत्रैव प्रतितिष्ठति ॥ इति प्रभञ्जने ॥**

**टिप्पणी—**

'तस्य प्राची दिक् शिरः' इत्यादेः 'तस्यास्य प्रथमाग्नेः अश्वमेधक्रतूपयोगिकस्यार्कस्य विराजः चित्यात्मकस्याश्वस्येव दर्शनमुच्यते' इत्यादि परेषां व्याख्यानं निर्मूलमिति भावेन व्याचष्टे– **स एष इत्यादिना** ॥ 'स एषोऽप्सु प्रतिष्ठितः' इत्यंशं व्याचष्टे– **स एष इति** ॥ विष्णोः कूर्मरूपप्रतिपादकप्रमाणानुरोधेनाऽह– **विष्णुनेति** ॥ अनन्तः शेषः । असौ चासौ चेर्मौ असौ चासौ च सक्थ्यौ इति वाक्यद्वयतात्पर्यं वदन् कूर्मस्वरूपस्य पादाः कुत्र सन्तीति जिज्ञासायामाह– **अप्स्विति** ॥ ईर्मौ सक्थ्यावित्यस्य चत्वारः पादा इत्यनेन तात्पर्यमुक्तं भवति । असौ चासौ चेत्यादेः कोणसंस्थिता इत्यनेन । अण्डोदे कोणसंस्थिताश्चत्वारः पादाः अप्सु संस्थिता इति सम्बन्धः । आद्यः हिशब्दः अप्सु संस्थितत्वस्य द्वितीयस्तु कोणसंस्थितत्वस्य प्रसिद्धिद्योतकः । इयमुर इत्येतद् व्याचष्टे– **उरस्त्विति** ॥ ननु शिर आद्यवयवानामपि भूमिसंश्लिष्टत्वात् किं विशिष्योच्यते 'उरस्तु भूमिसंश्लिष्टम्' इत्यत आह– **अतिरिच्येति** ॥ पार्श्वेन पुच्छेन च सह शिरश्च भुवमतिरिच्यैवोदकसंस्थितमित्यर्थः । 'अन्तरिक्षमुदरम्' इत्येतद् व्याचष्टे– **आकाशमिति** ॥ 'द्यौः पृष्ठम्' इत्येतद् व्याचष्टे–**द्यौरिति** ॥ 'यत्र क्वचैति' इत्यादि व्याचष्टे–**एवं विद्वानिति** ॥ तदेवेत्यस्यार्थः– **तत्रैवेति** ॥

भाष्यम्—

स्थानेच्छा चेत्तत्रैव प्रतितिष्ठति।

उपास्ते कूर्मरूपं यो वायुं संस्थितिमाप्नुयात्।
इच्छया विनिवृत्तिं वा लोकं चाऽवृत्तिवर्जितम्॥ इत्यध्यात्मे॥

स एष प्राणस्त्रेधा विहित इति वचनाच्च वायुः।

बिभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत्।
उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः॥
वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम्।
बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम्॥ इति वैभवे॥

वायोस्तु कूर्मरूपस्य पूर्वतश्चोदके मुखम्।
आग्नेयैशानिगौ बाहू पादौ निर्ऋतिवायुगौ॥ इति प्रकृष्टे॥

टिप्पणी—

गमनेच्छायामप्यन्यत्र गमनप्रतिबन्धकत्वेन कथमस्य विज्ञानफलत्वमित्यतस्तदभिप्रायमाह— **स्थानेच्छेति**॥ वायुज्ञानस्योक्तफलमानुषङ्गिकम् अधिकमपि फलमस्तीति भावेनोभयविषयं प्रमाणं पठति— **उपास्त इति**॥ 'लोकं चाऽवृत्तिवर्जितम्' इत्यनेन यत्र क्वच स्वयोग्यमुक्तस्थानं गच्छति तत्रैव प्रतितिष्ठति न पुनरावर्तते इति प्रकारान्तरेण व्याख्यातं भवति । नन्वत्राग्निशब्दश्रवणादश्वमेधक्रतूपयोग्यग्निप्रकरणमेवेदं किं न स्यादित्यत आन्तरोपपत्तिमप्याह— **स इति**॥ चशब्दः पूर्वोक्तप्रमाणसमुच्चायकः । वायुः एतत्प्रकरणप्रतिपाद्य इति शेषः । कूर्मस्वरूपेण विष्णुना धारितः कूर्मरूपो वायुः अण्डोदकस्थः शेषधारकः इत्येतत्प्रमाणान्तरेणापि दृढयति— **बिभर्तीति**॥ तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ असौ चासौ च सक्थ्यौ इति वाक्यत्रयं स्पष्टप्रमाणेन व्याचष्टे— **वायोरिति**॥ पूर्वतः पूर्वस्यां दिशि ॥

### अथ खण्डार्थः

सः अग्निनामको वायुः आत्मानं त्रेधा त्रिप्रकारं व्यकुरुत व्यभजत् । कथम्? आदित्यं तृतीयम् अग्निवाय्वपेक्षया त्रित्वसंख्यापूरकम् । वायुं तृतीयम् आदित्याग्न्यपेक्षया त्रित्वसङ्ख्यापूरकम् । एवमग्निं तृतीयम् आदित्यवाय्वपेक्षया त्रित्वसङ्ख्यापूरकमिति ग्राह्यम् । स एष मृत्युनोत्पन्नोऽग्निनामकः प्राणो मुख्यवायुः उक्तप्रकारेण त्रेधा विहितो मृत्युना । वायोर्जगद्धारकं कूर्मरूपं निरूपयति– **तस्येति** ।। रूपान्तरनिरूपणारम्भज्ञापकतयाऽथास्येत्यत्राथशब्दः प्रथमतो योज्यः । तस्य बुद्धिसन्निहितस्य कूर्मरूपस्य वायोः शिरः प्राची दिक् प्राच्यां दिशि वर्तते। ईर्मौ बाहू असौ चासौ च आग्नेयेशानगौ। चशब्दावितरेतरयोगे । अस्य पुच्छं प्रतीची दिक् प्रतीच्यां दिशि स्थितम् । सक्थ्यौ पादौ असौ चासौ च नैर्ऋतवायव्यगौ । पार्श्वे दक्षिणोदीची च। चशब्दावितरेतरयोगे । दक्षिणोत्तरदिग्गते । द्यौः द्युलोकः पृष्ठं पृष्ठे स्थितः । अन्तरिक्षम् आकाशः। उदरम् उदरे स्थितः । उरः वक्षःस्थलम् । इयं भूमिः । तत्संश्लिष्टम्। एतादृशं वायोः कूर्मरूपं कुत्र तिष्ठतीत्यत आह– **स इति** ।। यस्त्रेधा विहितः स एष कूर्मरूपो वायुः अप्सु अण्डोदके प्रतिष्ठितः। एवं विद्वान् आदित्यवाय्वग्निरूपस्य जगत्पालकत्वादिना कूर्मरूपस्य तु जगद्धारकत्वेन ज्ञानी यत्र क्वचिद्देशे एति गच्छति अवस्थानेच्छा चेत्तदेव तत्रैव प्रतितिष्ठति । यद्वा, एवं विद्वान् विष्ण्वपरोक्षज्ञानद्वारा यत्र क्व च योग्यमुक्तस्थाने गच्छति तत्रैव प्रतितिष्ठति । न पुनरावर्तते ।। ३ ।।

उपनिषत्—

[ब्रह्मसरस्वत्योरुत्पत्तिः]

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनायां मृत्युस्तद् यद् रेत आसीत्स संवत्सरोऽभवन्न ह पुरा ततः संवत्सर आस तमेतावन्तं**

**कालमबिभर्यावान् संवत्सरस्तमेतावतः कालस्य परस्ताद-सृजत तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत् ॥ ४ ॥**

भाष्यम्—

आत्मा ब्रह्मा मे द्वितीयो जायेतेत्यकामयत। वायुरेव ब्रह्मा भवतीति दर्शयितुं वायोः सृष्टिः प्रथममुक्ता।

वायुरेव यतो ब्रह्मपदं नियमतो व्रजेत्।
सहैव जननेऽप्यस्मात्पूर्वं वायोर्जनिं वदेत्॥
क्वचित्तु ब्रह्मणः पूर्वं प्राधान्यात्तत्पदस्य च॥ इति ब्रह्मतर्के॥

स मनसा स्वेच्छया वाचं श्रियं देवीं मिथुनं समभवत्।

मम द्वितीयो जायेत ब्रह्मेति भगवान् परः।
वेदाभिमानिनीं देवीं श्रियं समभवत्प्रभुः॥
स्वेच्छयैव यतः शक्तिस्तां विनाऽपि हरेः सदा॥
ततः संवत्सरो नाम ब्रह्मा समभवत्प्रभोः।
तं गर्भमुदरेऽबिभद् यावत्संवत्सरं रमा॥
तं जातमत्तुं स्वमुखं विदार्य पुरुषोत्तमः।
श्रुत्वा रावं पुनस्तस्य व्यदधात्सृष्टये प्रभुः॥ इति कारणविवेके॥

टिप्पणी—

अथ भाष्यार्थः

'सोऽकामयत द्वितीयो म आत्मा जायेत' इति वाक्यं परैः स मृत्युरकामयत। किं द्वितीयः मे मम आत्मा शरीरं येनाहं शरीरी स्यां तत् जायेतेत्येवमकामयत इति व्याख्यातम्। तदसत्। उदाहरिष्यमाणप्रमाणविरोधादिति भावेन व्याचष्टे– **आत्मेति**॥ द्वितीयो वाय्वपेक्षया। अनेन स इत्यकामयतेत्यन्वयो दर्शितः। ननु आगमे क्वचिद् ब्रह्मणा सह क्वचिद् ब्रह्मानन्तरं वायोर्जन्मोक्तेः

कथमत्र ब्रह्मजन्मोक्तेः पूर्वं वायुजन्मोक्तिरित्यत आह– **वायुरेवेति** ।। उक्तार्थे प्रमाणमाह– **वायुरेवेति** । वदेत् श्रुतिरिति शेषः । ननूभयोः सह जननेऽपि अस्तूक्तनिमित्तेन क्वचिद्वायुजन्मोक्तेः प्राथम्यम् । क्वचिद्ब्रह्मजन्मोक्तेः प्राथम्ये किं निमित्तमित्यत आह– **क्वचिदिति** ।। आत्मा ब्रह्मेति व्याख्यानमभिधानेन गमयति– **आत्मेति** ।। यः पूर्वजः प्रजापतिरित्यन्वयः । दक्षादिव्यावृत्त्यर्थं पूर्वज इति विशेषणम् ।

यद्वा, पूर्वज इत्येतच्चतुर्मुखश्चेतीतिशब्दात्पूर्वं योज्यम् । स मृत्युर्मनसा पूर्वोत्पन्नेन वाचं त्रयीलक्षणां मिथुनं द्वन्द्वभावं समभवत्सम्भवनं कृतवानित्यादिना 'स मनसा वाचं मिथुनं समभवत्' इत्येतत् परैरन्यथा व्याख्यातम् । तदसदिति भावेन व्याचष्टे– **स इति** ।। द्वितीय इति स मनसेत्यनयोर्वाक्ययोः स्वकृतं व्याख्यानं द्रढयन् खण्डं प्रमाणेन व्याचष्टे– **ममेत्यादिना** ।। ब्रह्मा द्वितीयो जायेतेतीत्यन्वयः । वाचमित्यस्यार्थः– **वेदाभिमानिनीमिति** ।। श्रिया मिथुनीभावं विना ब्रह्माणमुत्पादयितुमशक्तत्वे स्वेच्छयेति व्यर्थमित्यत आह–**यत इति** ।। 'तद् यद् रेत आसीत्स संवत्सरोऽभवत्' इत्येतद् व्याचष्टे– **तत इति** ।। ततो रेतसः मिथुनीभावानन्तरं वा । अनेन 'न ह पुरा ततः संवत्सर आस' इत्येतदुक्ततात्पर्यं भवति । 'तमेतावन्तं कालमबिभर्यावान् संवत्सरः' इत्येतद् व्याचष्टे– **तं गर्भमिति** ।। 'तं जातमभिव्याददात्' इत्येतद् व्याचष्टे– **तमिति** ।। 'स भाणमकरोत्' 'स ऐक्षत' इति वाक्यद्वयादर्थतः सिद्धस्यार्थस्य कथनम्– **श्रुत्वा रावमिति** ।। स्तुतिरूपं शब्दमित्यर्थः । 'स तया वाचा तेनाऽत्मनेदं सर्वमसृजत' इत्युत्तरखण्डस्थवाक्यतात्पर्यकथनम्– **व्यदधादिति** ।। तमित्यनुवर्तते । अत एव तत्त्वप्रकाशिकायां भाष्योदाहृतप्रमाणगतसृष्टि-कर्मण्ययोजयदिति वाक्यव्याख्येयत्वेन 'स तया' इति वाक्यमुदाहृतम् ।

**भाष्यम्—**

**बिन्दुलोपेनाशनाया मृत्युरित्यर्थः। 'अशनाया हि मृत्युः' इत्युक्तम्। सर्वाशननेतेत्यर्थे बिन्दुः। आधिक्येऽधिकमिति सूत्रात्। सम्यगात्मनो वत्सभूतान् देवादीन् रमयतीति संवत्सरः।**

**ब्रह्मणो भाणिति वचो निःसृतं भयतो मुखात्।**
**तस्याभिमानिनी देवी तदैवोत्था चतुर्मुखात्॥**
**वागीश्वरीति तामाहुर्वाचं चापि सरस्वतीम्॥ इति भावतत्त्वे॥**

**तदभिमानित्वात्सैव वागित्युच्यते। भारूपो णरूपश्चेति भगवान् भाण् तद्व्यञ्जकत्वाद् भणनं वाक्॥ ४॥**

**टिप्पणी—**

श्रुतावशनायां वाचमित्यन्वयभ्रान्तिं वारयितुं व्याचष्टे– **बिन्दुलोपेनेति**॥ द्वितीयाविभक्त्यर्थाविवक्षयेत्यर्थः। तथैवान्वयः किं न स्यादित्यत आह– **अशनाया हीति**॥ हि यस्मादुक्तमित्यर्थः। तथात्वेऽशनायात्वस्य प्रमाणप्रसिद्ध्या मृत्युविशेषणत्वोक्तविरोधः स्यादिति भावः। द्वितीयार्थाविवक्षायां किमर्थं बिन्दुप्रयोग इत्यत आह– **सर्वेति**॥ बिन्दुप्रयोगात्कथमेतल्लब्धमित्यत आह– **आधिक्य इति**॥ अर्थाधिक्ये विवक्षितेऽधिकं शब्दरूपं भवतीत्यर्थः। संवत्सरकालं धृतगर्भगतत्वेनैव संवत्सरशब्दवाच्यत्वं चतुर्मुखस्येति प्रतीतिं निवारयन् संवत्सरशब्दं चतुर्मुखे निर्वक्ति– **सम्यगिति**॥ यद्वा, संवत्सरकालनिर्माता संवत्सरः प्रजापतिरिति परेषां व्याख्यानमसत्। जन्यवाचकशब्देन जनकग्रहणे लाक्षणिकत्वापत्तेरिति भावेन संवत्सरशब्दस्य चतुर्मुखे योगमाह– **सम्यगिति**॥ 'स भाणमकरोत्सैव वागभवत्' इत्येतद् वाक्शब्दस्य शब्दमात्रार्थत्वप्रतीतिं वारयन् प्रमाणेन व्याचष्टे– **ब्रह्मण इति**॥ ब्रह्मणो मुखादिति सम्बन्धः। तां सरस्वतीमपि वागीश्वरीति हेतोः वाचं चाऽहुरिति सम्बन्धः। ननु यदि वाक्शब्दः सरस्वतीपरः तर्हि कथं सैव वागिति तस्याः भाण्शब्दा-भेदेनोक्तिरित्यत आह– **तदभिमानित्वादिति**॥ महतश्चतुर्मुखादित्यादिवदिति

भावः । भाणिति रोदनमकरोदित्यन्यथाप्रतीतिनिरासाय भाण्शब्दार्थमाह– **भारूप इति** ।। ज्ञानरूपः प्रकाशरूपश्च । णरूपः सुखरूपः । ननु यदि भाण्शब्दो भगवत्परः तर्हि स भाणकरोदिति कथम्? नहि भगवत्करणं सम्भवतीत्यत आह– **तद्व्यञ्जकत्वादिति**– तज्ज्ञानजनकत्वादित्यर्थः । स भाणमिति भाण्शब्दस्य भणनशब्दसमानार्थताज्ञापनाय भाणनमित्युक्तम् । तथाचोक्तयोगेन भाण्शब्दो मुख्यतो भगवत्परस्तद्व्यञ्जकत्वेन तत्सम्बन्धाद् वाक्पर इति भावः ।।

**अथ खण्डार्थः**

स मृत्युनामा भगवान् मे मम आत्मा ब्रह्मा द्वितीयो वाय्वपेक्षया जायेत इत्यकामयत । तदनन्तरम् अशनायां सर्वाशननेता स मृत्युर्मनसा स्वेच्छयैव वाचं वेदाभिमानिनीं श्रियं मिथुनं द्वन्द्वभावं समभवत् । तत् तेन मिथुनीभावेन यद्रेत आसीत्सः तदुपादानकदेवान् संवत्सरः सम्यगात्मनो वत्सान् देवादीन् रमयतीति संवत्सरनामकश्चतुर्मुखोऽभवत् । ततो मिथुनीभावात् पुरा देहयोगराहित्येन देवादिरमणहेतुत्वायोगात्संवत्सरनामको नास ह यस्मात्तस्मात्संवत्सरोऽभवदिति सम्बन्धः । तं रेत उपादानकं गर्भं यावान् संवत्सरः द्वादशमासात्मकः कालः एतावन्तं कालम् अबिभः अबिभ्रद् वाङ्नाम्नी रमेति शेषः । तं गर्भस्थम् एतावतः संवत्सरात्मकस्य कालस्य परस्तादनन्तरम् असृजत असूत । जातं तं संवत्सरम् अभि अभिलक्ष्य अत्तुमिति यावत् व्याददात् विददार । स्वमुखं मृत्युरिति शेषः । स संवत्सरो भयाद् भाणं भाणिति वचः अकरोत् निःसारितवान् । यद् भाणिति वचः सैव तदभिमानिनी ज्ञानप्रकाशसुखरूप-भगवद्व्यञ्जकत्वेन भाण्शब्दाभिधेया वाक् वागभिमानिनी सरस्वती अभवत् । अभिमन्यमानशब्दोच्चारणकाल एवाभिमानिनी देव्यभवदिति यावदिति ।।

**उपनिषत्**—

**[भगवतः सर्वसंहारकत्ववर्णनम्]**

**स ऐक्षत यदि ह वाव इममभिमंस्ये कनीयोऽन्नं करिष्य**

इति स तया वाचा तेनाऽत्मनेद१ँ सर्वमसृजत यदिदं किञ्चर्चो यजू१ँषि सामानि च्छन्दा१ँसि यज्ञान् प्रजाः पशून् स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्व१ँ सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

भाष्यम्——

अभिमंस्ये लीनं करिष्ये चेत् ।

मानं ज्ञानं लयश्चैव मर्यादा चैव कथ्यते ।
उत्पादनं च सङ्ख्यानं बलं च क्वचिदुच्यते ॥

इति शब्दनिर्णये ॥

वेदाभिमानिनः सर्वास्तथा यज्ञाभिमानिनः ।
गायत्र्यामसृजद् ब्रह्मा स्वभार्यायां प्रजास्तथा ॥

इति प्रकाशिकायाम् ॥

यद्यद् ब्रह्माऽसृजत् पूर्वं तत्तदत्ति जनार्दनः ।
अदितिर्नाम तेनासौ भगवान् पुरुषोत्तमः ॥
उपास्ते यः परं देवमेवमत्तीति सर्वदा ।
स्वयोग्यतानुसारेण सर्वात्ताऽसौ भवत्युत ॥
ब्रह्मरुद्रसुपर्णानां सर्वात्तृत्वं विशेषतः ।
प्रायेणात्तृत्वमिन्द्रादेरन्येषां दर्शनादिकम् ॥
बहुलस्येति योग्यत्वभेदादत्तृत्वमिष्यते ॥ इति मान्यसंहितायाम् ॥

आत्मनो यादृशा भोगा भोक्तुं योग्या हि तादृशान् ।
भोक्ता विष्णुरिति ध्यायेत् सर्वात्तृत्वं हरेः स्मरेत् ॥
दैवतानां च सर्वेषां सर्वात्तिध्यानमिष्यते ॥ इति प्रवृत्ते ॥

**टिप्पणी—**

**अथ भाष्यार्थः**

अप्रतीतेरभिमंस्य इत्येतदनूद्य व्याचष्टे– **अभिमंस्य इति** ॥ अभिपूर्वो मन्यतिः हिंसार्थ इति व्याख्यानमसत्। मन्यतेरेव लयवाचकत्वस्य प्रामाणिकत्वे उपसर्गस्य धात्वर्थबाधकत्वस्यानाश्रयणीयत्वादिति भावेन तत्राभिधानमाह– **मानमिति** ॥ ऋचः समानाक्षरपादबन्धसमन्वितमन्त्रविशेषाः । यजूंषि अनियताक्षरपादाः। ऋच एव स्तोभाक्षरसंयुक्ताः सामानीत्यादिना ऋगादिशब्दाः प्रसिद्धार्थत्वेनैव परैर्व्याख्यातास्तदसदिति भावेन 'स तया वाचा' इत्यादिकं प्रमाणेन व्याचष्टे– **वेदाभिमानिन इति**॥ अदितिशब्दस्य देवमातरि प्रसिद्धेस्तत्परत्वभ्रमं वारयितुं स यद्यदेवेत्यादि व्याचष्टे– **यद्यदिति** ॥ तत्तदत्तीत्यनेन सर्वं वाऽत्तीत्यनुवादान्यथानुपपत्त्या श्रुतावादद्चेति पूरणीयमिति सूचितम् । 'सर्वं वा अत्तीति तददितेरदितित्वम्' इत्येतत्तात्पर्यतो व्याचष्टे– **अदितिरिति** ॥ तेन ब्रह्मसृष्टसर्वात्तृत्वेन । अदितिशब्दस्य देवमातृपरत्वे सर्वं वात्तीति सर्वात्तृत्वविरोधः स्यादिति भावः। सर्वस्यैतस्यात्ता भवतीत्येतत्परैर्य एतददितेरदितित्वं वेद उपासीत सः सर्वात्मा भूत्वा अदितिवत्सर्वस्यैतस्यात्ता भवतीति व्याख्यातं तदसत्। तत्प्रतिपादकाभावात्। जीवाभेदस्य निरसिष्य-माणत्वाच्चेति भावेन ज्ञानमात्रेण सर्वेषामपि सर्वात्तृत्वं भवतीति प्रतीतिमपि वारयंस्तद्वाक्यं प्रमाणेन व्याचष्टे– **उपास्त इति** ॥ सर्वदोपास्त इति वा। सर्वदा प्रतिकल्पमेवात्तीति वा सम्बन्धः । उत उपास्त्यनन्तरम्। योग्यतामेव दर्शयति– **ब्रह्मेति** ॥ अत्तृत्वं फलत्वेनोक्तं सर्वात्तृत्वं ब्रह्मादीनां इन्द्राद्यपेक्षया विशेषतः, सर्वात्तृत्वं चेन्द्रादीनां प्रायः अत्तृत्वमन्येषां बहुलस्य दर्शनादिकमित्यनेकप्रकारम्। नतु सर्वेषामेकप्रकारम्। कुतः? योग्यताभेदादित्यर्थः। नन्वितरेषां कथं सर्वात्तृत्वध्यायिनां बहुलदर्शनादिकं फलं तस्य ध्यानानुगुणत्वात् इत्यतस्तेषां न सर्वात्तृत्वध्यानं किन्तु तथा स्मरणमतो नोक्तदोष इत्याह–

**आत्मन इति** ॥ यथा मनुष्याणां सर्वात्तृत्वस्मरणमात्रं तथा किं केषाञ्चिद्देवानामपीत्यत आह– **दैवतानामिति** ॥

अथ खण्डार्थः

स मृत्युः कृतरवं कुमारमालोक्य ऐक्षत विचारमकरोत् किमिति यदीमं जातं संवत्सरम् अभिमंस्ये लीनं करिष्ये तदा कनीयोऽल्पम् अन्नं करिष्ये अतो बह्वन्नं भवत्वित्यालोच्य स मृत्युः तया पूर्वोत्पन्नया वाचा गायत्र्या तेनाऽत्मना चतुर्मुखेन यदिदं किञ्चेदं सर्वमसृजत जनयामास । तदेव विवृणोति– **ऋच इत्यादिना** ॥ ऋचो ऋगभिमानिनीरित्यादि द्रष्टव्यम् । स संवत्सरः ब्रह्मा यद्यदेवासृजत तत्तत् अत्तुं स मृत्युनामा जनार्दनः अध्रियत । मन इति शेषः आदञ्चेति शेषः । कुतः? सर्वात्तृत्वं मृत्योः सर्वमत्तीति यत् तद्वै तदेव अदितेरदितिशब्दवाच्यस्य परमात्मनः अदितित्वं अदितिशब्द-प्रवृत्तिनिमित्तं यस्मात् । य एवमुक्तप्रकारेण अदितेरदितित्वं वेद उपास्ते स एतस्य स्वयोग्यस्य सर्वस्य अत्ता भवति । अस्योपासकस्य सर्वं स्वयोग्यम् अन्नं भवतीति पुनर्वचनं तात्पर्यद्योतनायेति ॥

**उपनिषत्—**

[विरिञ्चिकृताश्वमेधयागः]

**सोऽकामयत भूयसा यज्ञेन यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳश्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥**

इति अश्वमेधब्राह्मणम्

**भाष्यम्—**

इच्छतो विष्णुयजनं ब्रह्मणः साधनास्मृतेः ।
श्रमात्तापाच्च देहं तं त्यक्तुमिच्छा बभूव ह ॥

**इच्छया चाप्युदक्रामत्प्राणैः सह पितामहः ।**
**यशोवीर्यनिमित्तत्वात्प्राणास्तन्नामकाः स्मृताः ॥**
**अत्यल्पे चापि सञ्जाते श्रमेऽपि न तदिच्छया ।**
**तापे प्राणा निःसरन्ति सा च क्रीडा विभोः स्मृता ॥**
**बृंहमाणं शरीरं तु पुनर्दृष्ट्वा पितामहः ।**
**प्रवेष्टुं तच्छरीरं च कामयामास स प्रभुः ॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

यजनेच्छायाः श्रमादिहेतुत्वायोगेन कथं तदनन्तरं श्रमाद्युक्तिरित्यतः साक्षाच्छ्रमादिहेतुं प्रदर्शयन् 'सोऽकामयत' इति वाक्यं प्रमाणेन व्याचष्टे– **इच्छत इति** ॥ साधनास्मृतेः यः श्रमः तस्मात् । 'स तपोऽतप्यत' इत्यनन्तरम् अध्याहारं सूचयति – **देहं तमिति** ॥ 'तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्' इत्येतद् व्याचष्टे– **इच्छयेति** ॥ चशब्दः श्रमतापयोरनुकर्षणार्थः । अपिशब्दः समुच्चये । अनेन तप्तस्येत्यनन्तरं शरीरत्यागेच्छावत इत्यपि ग्राह्यमिति सूचितम् । स्वावस्थाने प्राणनिर्गमनायोग इत्यत उक्तम्– **प्राणैः सह पितामह इति** ॥ केन निमित्तेन प्राणानां यशोवीर्यशब्दार्थत्वमित्यत आह– **यश इति** ॥ ननु साधनास्मृतिनिमित्तकाल्पश्रमतापाभ्यां कथं ब्रह्मणो देहत्यागेच्छा? तदिच्छया वा कथं प्राणैः सह निःसरणं लोके अदर्शनादित्यत आह– **अत्यल्प इति** ॥ यद्यपि श्रमे तापे चात्यल्पे सञ्जातेऽपि न लोके देहत्यागस्येच्छा तदिच्छयाऽपि न प्राणा निःसरन्ति । तथाऽपि सा साधनास्मृतिनिमित्तकश्रमतापजन्येच्छा चशब्दात्तदिच्छया प्राणैः सह निःसरणं विभोः समर्थस्य चतुर्मुखस्य क्रीडा स्मृतेत्यर्थः । 'शरीरं श्वयितुमध्रियत' इत्येतदनन्तरमध्याहार्यमाह– **बृंहमाणमिति** ॥ बृंहमाणमित्यनुवादेनैव शरीरं श्वयितुमध्रियत इत्येतदुक्ततात्पर्यम् । श्वयितुमिति वृद्ध्यर्थकस्य टु ओ श्वि

गतिवृद्ध्योरिति धातो रूपम् । 'तस्य शरीर एव मन आसीत्' इत्येतद् व्याचष्टे– **प्रवेष्टुमिति** ॥

**उपनिषत्**—

[अश्वमेधनाम्नः अर्थविस्तृतिः]

**सोऽकामयत मेध्यं म इदꣳ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत् तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा अश्वमेधं वेद य एनमेवं वेद ॥ ७ ॥**

**तमनवरुध्यैवामन्यत तꣳ संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत्तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्त ॥ एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानः तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेव अप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽत्मा भवत्येतासां देवतानामेको भवति ॥ ८ ॥**

**भाष्यम्**—

पुनस्तस्मिन् प्रवेशाय शवरूपस्य मेध्यताम् ।
ऐच्छत्तेनैव देही स्यामिति तस्मिन् विवेश च ॥
तस्मिन् प्रवेश्य स ब्रह्मा द्वितीयं वपुरग्रहीत् ।
दृष्ट्वोपायं महायज्ञेऽथाश्वाकारं पितामहः ॥
श्वैतीभावात्परं यस्मात्तज्ज्ञेऽतोऽश्वनामकम् ।
यदर्थं श्वैततामाप तद्देहो मेध्यतामपि ॥
अश्वमेधः स यज्ञोऽभून्नाम्ना तेन तदा कृतः ।
श्वैतीभावं गते देहे पुनर्मेध्ये यतः स्थितः ॥

**इच्छया चाप्युदक्रामत्प्राणैः सह पितामहः ।**
**यशोवीर्यनिमित्तत्वात्प्राणास्तन्नामकाः स्मृताः ॥**
**अत्यल्पे चापि सञ्जाते श्रमेऽपि न तदिच्छया ।**
**तापे प्राणा निःसरन्ति सा च क्रीडा विभोः स्मृता ॥**
**बृंहमाणं शरीरं तु पुनर्दृष्ट्वा पितामहः ।**
**प्रवेष्टुं तच्छरीरं च कामयामास स प्रभुः ॥**

**टिप्पणी——**

**अथ भाष्यार्थः**

यजनेच्छायाः श्रमादिहेतुत्वायोगेन कथं तदनन्तरं श्रमाद्युक्तिरित्यतः साक्षाच्छ्रमादिहेतुं प्रदर्शयन् 'सोऽकामयत' इति वाक्यं प्रमाणेन व्याचष्टे– **इच्छत इति** ॥ साधनास्मृतेः यः श्रमः तस्मात् । 'स तपोऽतप्यत' इत्यनन्तरम् अध्याहारं सूचयति – **देहं तमिति** ॥ 'तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत्' इत्येतद् व्याचष्टे– **इच्छयेति** ॥ चशब्दः श्रमतापयोरनुकर्षणार्थः । अपिशब्दः समुच्चये । अनेन तप्तस्येत्यनन्तरं शरीरत्यागेच्छावत इत्यपि ग्राह्यमिति सूचितम् । स्वावस्थाने प्राणनिर्गमनायोग इत्यत उक्तम्– **प्राणैः सह पितामह इति** ॥ केन निमित्तेन प्राणानां यशोवीर्यशब्दार्थत्वमित्यत आह– **यश इति** ॥ ननु साधनास्मृतिनिमित्तकाल्पश्रमतापाभ्यां कथं ब्रह्मणो देहत्यागेच्छा? तदिच्छया वा कथं प्राणैः सह निःसरणं लोके अदर्शनादित्यत आह– **अत्यल्प इति** ॥ यद्यपि श्रमे तापे चात्यल्पे सञ्जातेऽपि न लोके देहत्यागस्येच्छा तदिच्छयाऽपि न प्राणा निःसरन्ति । तथाऽपि सा साधनास्मृतिनिमित्तकश्रमतापजन्येच्छा चशब्दात्तदिच्छया प्राणैः सह निःसरणं विभोः समर्थस्य चतुर्मुखस्य क्रीडा स्मृतेत्यर्थः । 'शरीरं श्वयितुमध्रियत' इत्येतदनन्तरमध्याहार्यमाह– **बृंहमाणमिति** ॥ बृंहमाणमित्यनुवादेनैव शरीरं श्वयितुमध्रियत इत्येतदुक्ततात्पर्यम् । श्वयितुमिति वृद्ध्यर्थकस्य टु ओ श्वि

गतिवृद्ध्योरिति धातो रूपम् । 'तस्य शरीर एव मन आसीत्' इत्येतद् व्याचष्टे– **प्रवेष्टुमिति** ॥

उपनिषत्—

[अश्वमेधनाम्नः अर्थविस्तृतिः]

**सोऽकामयत मेध्यं म इद१ँ स्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत् तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वमेष ह वा अश्वमेधं वेद य एनमेवं वेद ॥ ७ ॥**

**तमनवरुध्यैवामन्यत त१ँ संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत्तस्मात्सर्वदैवत्यं प्रोक्षितं प्राजापत्यमालभन्त ॥ एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानः तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेव अप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्याऽत्मा भवत्येतासां देवतानामेको भवति ॥ ८ ॥**

भाष्यम्—

पुनस्तस्मिन् प्रवेशाय शवरूपस्य मेध्यताम् ।
ऐच्छत्तेनैव देही स्यामिति तस्मिन् विवेश च ॥
तस्मिन् प्रवेश्य स ब्रह्मा द्वितीयं वपुरग्रहीत् ।
दृष्ट्वोपायं महायज्ञेऽथाश्वाकारं पितामहः ॥
श्वैतीभावात्परं यस्मात्तज्जज्ञेऽतोऽश्वनामकम् ।
यदर्थं श्वैततामाप तद्देहो मेध्यतामपि ॥
अश्वमेधः स यज्ञोऽभून्नाम्ना तेन तदा कृतः ।
श्वैतीभावं गते देहे पुनर्मेध्ये यतः स्थितः ॥

अतोऽश्वमेधनामाऽसौ ब्रह्मा शुभचतुर्मुखः ।
अश्वो भूत्वा यतो मेध्यः सोऽभवत्तेन वा स्मृतः ॥
मेधो यज्ञः समुद्दिष्टो याज्ञीयं मेध्यमुच्यते ।
शुद्धं मेध्यमथापि स्यादेवंविद् योऽश्वमेधवित् ॥

**टिप्पणी—**

**अथ भाष्यार्थः**

'सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्याम्' इत्येतद् व्याचष्टे– **पुनरिति** ॥ तस्मिन् विवेश चेति शेषपूरणम् । 'ततोऽश्वः समभवत्' इत्येतद् व्याचष्टे– **तस्मिन्निति** ॥ अनेन तत इत्येतत्प्रवेशानन्तरमिति व्याख्यातम् । स ब्रह्मा तस्मिन् प्राणान् प्रवेश्य प्रविश्य तस्मिन् प्राणान् प्रवेश्य वा । प्रविश्येति क्वचित्पाठः । महायज्ञे उपायं दृष्ट्वा अथ दर्शनानन्तरम् अश्वाकारं द्वितीयं वपुरग्रहीत् इति योजना । 'ततोऽश्वः समभवत्' इति वाक्यं यदश्वदित्येतत्सम्बद्धत्वेनापि व्याचष्टे– **श्वैतीभावादिति** ॥ 'यदश्वत् तन्मेध्यमभूत्' इति तदेवाश्वमेधस्याश्वमेधत्वं इति वाक्यं व्याचष्टे– **यदर्थमिति** ॥ तद्देहः चतुर्मुखदेहः यदर्थं यज्ञाद्यर्थं श्वेततां मेध्यतामप्याप तेन शरीरेण तदा कृतः स यज्ञो नाम्नाऽश्वमेधोऽभूदित्यन्वयः । एवमश्वमेधशब्दस्य क्रतुपरत्वमभ्युपगम्य व्याख्यातम् । इदानीं यज्ञकर्तृचतुर्मुखपरत्वमभ्युपेत्यापि तदेव वाक्यं प्रकारान्तरेण व्याचष्टे– **श्वैतीभावमिति** ॥ शुभानि चत्वारि मुखानि यस्यासौ शुभचतुर्मुखः अनेनास्य कर्तृरूपत्वं सूचयति । ब्रह्मेति विशेष्यस्य पृथगुक्तेः । अश्वमेधशब्दस्य यागीयाश्वरूपचतुर्मुखपरत्वमभ्युपेत्यापि तदेव वाक्यं व्याचष्टे– **अश्व इति** ॥ स्मृतः अश्वमेधनामा इत्यन्वयः । मेध्यः सोऽभवदित्युक्तमेध्यशब्दार्थमाह– **मेध इति** ॥ ननु 'मेध्यं म इदं स्यात्' इत्यादौ मेध्यशब्दस्य शुद्धे प्रयोगात् कथमेतदित्यत आह– **शुद्धमिति** ॥ अथेति पक्षान्तरे शुद्धमपीत्यन्वयः । अनेन शवरूपस्य मेध्यतामिति मेध्यतामपीति पुनर्मेध्ये इत्येतदपि व्याख्यातम् । 'एष ह वा अश्वमेधं वेद य एनमेवं वेद' इति वाक्यं व्याचष्टे– **एवंविदिति** ॥

एवं यदर्थमित्याद्युक्तप्रकारेण य इत्यनन्तरमेष इति शेषः। अश्वमेधविद्-श्वमेधशब्दार्थवित् ॥

**भाष्यम्—**

**तमश्वरूपमात्मानमनिवारितवद् विभुः।**
**चारयामास रूपेण तदन्येन पुमात्मना ॥**
**सर्वस्मिन् भुवने चाब्दं तदन्ते परमात्मने ।**
**स्वस्मिन् स्थिताय सङ्कल्प्य यज्ञ आलभताऽत्मवान् ॥**
**अजादिकान् पशूनन्यदेवस्थपरमात्मने।**
**कर्तृत्वेन पशुत्वेन यत्फलं तदशेषतः ॥**
**मम स्यादिति मन्वानः सोऽश्वरूपमधारयत् ।**
**अबुद्धिपूर्वमरणात्स्वर्गश्चापि पशोर्भवेत् ॥**
**ज्ञानपूर्वमृतेः पुंसः किमु वक्तव्यमित्यजः।**
**एवं सूर्योऽप्यश्वमेधनामा संवत्सराभिधः॥**
**सूर्ये स्थितो यतो ब्रह्मा ह्यश्वमेधाभिधः स्वयम् ।**
**सूर्ये ततत्वात्सूर्यात्मा ब्रह्माऽसौ परिकीर्तितः ॥**
**अग्नौ स्थितो यतः सोऽर्कस्तस्मादग्निरितीर्यते॥**

**टिप्पणी—**

'तमनवरुद्ध्येवामन्यत' इत्येतद् व्याचष्टे– **तमिति** ॥ देशविशेषानुक्त्या सर्वस्मिन् भुवन इति संवत्सरस्य परस्तादित्युत्तरवाक्यानुरोधेनाब्दमिति चोक्तम् । 'तं संवत्सरस्य परस्तादात्मन आलभत' इत्येतद् आत्मने आत्मार्थमिति प्रतीतिं निवारयन् व्याचष्टे– **तदन्त इति** ॥ स्वस्मिन् स्थिताय परमात्मने इत्यात्मशब्दस्यैवार्थद्वयम् । 'पशून् देवताभ्यः प्रत्यौहत्' इत्येतद् व्याचष्टे– **अजादिकानिति** ॥ ब्रह्मा स्वयमेव कुतः पशुर्जात इत्यत आह– **कर्तृत्वेनेति** ॥ स्यादेतद् यदि यज्ञपशोः फलं स्यात् । तदेव कुत इत्यत आह– **अबुद्धीति** ॥

इति भावेन अजोऽश्वरूपमधारयदिति सम्बन्धः । न केवलं ब्रह्मादिः अश्वमेधशब्दाभिधेयः अपि तर्हि सूर्योऽपीत्युक्तम्– **एष ह वा इति** ।। तद्व्याचष्टे– **एवमिति** ।। सूर्यस्याश्वमेधशब्दवाच्यत्वं केन निमित्तेनेत्यतः प्राप्तं 'तस्य संवत्सर आत्मा' इति वाक्यं व्याचष्टे– **संवत्सराभिध इति** ।। संवत्सराभिधस्य ब्रह्मणः सूर्ये स्थितत्वेऽपि अश्वमेधनामा सूर्यः कथमित्यत आह– **अश्वमेधाभिधः स्वयमिति** ।। ननु संवत्सर आत्मेति सूर्यस्य संवत्सररूपत्वोक्तेः कथं सूर्ये स्थित इत्युक्तमित्यत आह– **सूर्ये इति** ।। ततत्वाद् व्याप्तत्वादित्यर्थः । अश्वमेधनाम्नो ब्रह्मणो महिमा उक्तः– **अयमग्नि-रित्यादिना** ।। तत्राभेदप्रतीतिं निवारयन् व्याचष्टे– **अग्नाविति** ।। अर्कः अर्कस्थो ब्रह्मा ।।

**भाष्यम्—**

**ब्रह्मातता यतो लोकास्तदात्मानस्ततो मताः ।**
**ब्रह्मसूर्याग्निलोकेषु व्याप्तैका देवता हरिः ।**
**तादृशं नृहरिं ज्ञात्वा पुनर्मृत्युं जयन्नसौ ।।**
**सदैव वर्तते ब्रह्मा पुनर्मृत्युर्मृतिः स्मृता ।**
**नैनं मृत्व्यात्मको मृत्युः प्राप्नोति हरिसेवनात् ।।**
**यस्मान्नृसिंहो मृत्योश्च मृत्युरात्माऽस्य वै भवेत् ।**
**आतत्वात्तथाऽत्तृत्वादात्माऽसौ ब्रह्मणः स्मृतः ।।**
**आदानादात्तनिर्माणादात्तज्ञानात्तथैव च ।**
**एतासां देवतानां च ब्रह्मेशत्वेन वर्तते ।।**
**नृसिंहस्य सदा ज्ञानाद् ध्यानाच्च तदनुग्रहात् ।।**

**—इति महासंहितायाम् ।।**

**टिप्पणी—**

आत्मशब्दस्य स्वरूपार्थत्वप्रतीतिं निवारयितुं 'तस्येमे लोका आत्मानः' इत्येतद् व्याचष्टे– **ब्रह्मातता इति** ।। ब्रह्मणः सूर्यादिषु स्थित्युक्त्या प्राप्तां

सर्वोत्तमत्वशङ्कां परिहर्तुं प्रवृत्तं 'तावेतौ' इति वाक्यम् अर्काश्वमेध-शब्दयोरग्निलोकोपलक्षकत्वमभिप्रेत्य व्याचष्टे– **ब्रह्मेति** ॥ ब्रह्मेत्यश्वमेधशब्दा-र्थकथनम्। 'अपपुनर्मृत्युं जयति' इति फलाभिधायकं वाक्यं सर्वाधिकारपरत्वप्रतीतिं निवारयन् व्याचष्टे– **तादृशमिति** ॥ मृत्युरेवेत्यनन्तरं 'य एनमेवं वेद' इति वाक्यमनुवर्तनीयमेवेति भावः । ब्रह्मादिषु व्याप्तं मृत्युं अपमृत्युम् । एकदा अपमृत्युप्राप्त्यभावात्पुनरपमृत्युं जयतीति कथमुक्तमित्यत आह– **पुनर्मृत्यु-रिति** ॥ तथाचापपुनर्मृत्युमित्यस्यापमृतिमित्यर्थ उक्तो भवति । ननु 'नैनं मृत्यु-राप्नोति' इति कथं मृत्युशब्देन प्रकृतपरमात्मनः सदा चतुर्मुखव्याप्तेरित्यतस्तद् व्याचष्टे– **नैनमिति** ॥ मृत्यात्मकः अपमृत्यात्मकः । ननु 'यद्येनं मृत्युर्नाऽप्नोति' तर्हि कथमस्याऽत्मा स्यादित्याशङ्कां मृत्युशब्दस्यार्थान्तरकथनेन परिहरन् 'मृत्युरस्याऽत्मा भवति' इति वाक्यं हेतुप्रतिपादकतया व्याचष्टे– **यस्मादिति** ॥ अनेनास्य मृत्योर्मृत्युः नरसिंहोऽस्य चतुर्मुखस्याऽत्मा भवतीति योजना दर्शिता भवति ।

ननु मृत्योर्मृत्युर्नरसिंहः सर्वेषामप्यात्मा भवति तथाच किं विशिष्याभि-धीयते एनं चतुर्मुखं मृत्यात्मको मृत्युर्नाऽप्नोतीति तत्राऽह–**हरिसेवनादिति** ॥ अन्ये त्वयमस्माकं आत्मेति ज्ञात्वा तथा नृहरिसेवनं न कुर्वन्तीति भावः । आत्मशब्दस्य स्वरूपार्थत्वप्रतीतिं निवारयन् आत्मशब्दं नृसिंहे निर्वक्ति– **आततत्वादिति** ॥ आततत्वाद् व्याप्तत्वाद् अत्तृत्वात्संहर्तृत्वात् । आदानाद् भृत्यत्वेन चतुर्मुखादेरादानाद् आत्तनिर्माणात् आत्तमुपात्तं व्याप्तं वा तच्च निर्माणं च तस्माद् आत्तज्ञानाद् व्याप्तज्ञानात् । तथाचशब्दौ समुच्चये । एवशब्दः स्वरूपत्वव्यावृत्त्यर्थः प्रत्येकं सम्बद्ध्यते । आङ्पूर्वात् तनोतेः ड्मन् । तथा आङ्पूर्वाद्दत्तेर्दाणश्च ड्मन् । उभयत्रापि दकारस्य तकारः । आङ्पूर्वाभ्यां तनु विस्तारे मा निर्माण इति धातुभ्यां डन् । आङ्पूर्वाभ्यां तनु विस्तारे माङ्मान इति धातुभ्यां डन्निति ज्ञातव्यम् । एतासां देवतानामेको भवति इत्येतद् व्याचष्टे– **एतासामिति** ॥ ईशत्वेनेत्यनेनैकशब्दः प्रधानार्थक इत्युक्तं भवति ।

'मृत्युरस्याऽत्मा भवति' इत्येतदत्रापि हेतुप्रतिपादकतया व्याचष्टे– **नृसिंहस्येति** ॥ एतेन ध्येयत्वेन ज्ञेयत्वेन ब्रह्मणाऽऽत्तत्वादात्मेति व्याख्यातं भवति ॥

**भाष्यम्—**

**भूयःशब्दः पूर्णत्ववाची । परमेश्वरं परिपूर्णं यजेयेति । अश्वदित्यश्वोऽभवत्तदेव रूपं मेध्यं यज्ञ आलभनीयं चाभवदित्यश्वमेधः । तमनवरुध्येवामन्यतेत्यादिवाक्यशेषादश्वभावः प्रतीयते । अश्वत् बृंहितं पश्चान्मेध्यं चाभूद्यस्य शरीरं सोऽश्वमेध इति च । निरोधमकृत्वा चारयिष्यामीत्यमन्यत स्वेच्छयैव । स्वरूपान्तरत्वादश्वरूपस्य ॥ ७-८ ॥**

इति अश्वमेधब्राह्मणम्

**टिप्पणी—**

भूयो यजेयेत्यत्र भूयःशब्दो जन्मान्तरकरणापेक्षयेति परैरुक्तं तदसत् । अवश्यवक्तव्यस्यार्थान्तरस्य सम्भवे अगतिकस्य तस्यानाश्रयणीयत्वादिति भावेन तद्व्याचष्टे– **भूयःशब्द इति** ॥ श्रुतौ विशेष्यानुक्तेस्तत्प्रदर्शनपूर्वकमन्वयमाह– **परमेश्वरमिति** ॥ अश्वो भूत्वा यतो मेध्य इति अश्वे अश्वमेधशब्दो निरुक्तः तदुपनिषदारूढं कर्तुं यदश्वत् तन्मेध्यमभूदित्येतद् व्याचष्टे– **अश्वदिति** ॥ अश्वदित्यनूद्य अश्वोऽभवदिति व्याख्यातम् । 'जॄस्तम्भ्वित्यङ् श्वयतेः' पररूपत्वम् अश्वत् । मेध्यमित्यनुवादेन यज्ञे आलम्भनीयमिति व्याख्यानम् । अश्वमेधः अश्वमेधशब्दवाच्यः अश्व इति शेषः । ननु अश्वदित्यश्वोऽभवदिति कथं व्याख्यानं मूलेऽश्वरूपाप्रतीतेः । नच 'ततोऽश्वः समभवत्' इति वाक्यात्तत्प्रतीतिरिरिति वाच्यम् । तत्राश्वशब्दस्य वृद्ध्यर्थत्वे निर्णयासम्भवादित्यत आह– **तमिति** ॥ यतोऽतोऽश्वोऽभवदिति व्याख्यानं युक्तमिति शेषः । श्वैतीभावमित्यादिना कृतं व्याख्यानं उपनिषदारूढं कुर्वन् यदश्वदिति वाक्यं प्रकारान्तरेण व्याचष्टे– **अश्वदिति** ॥ स चतुर्मुखः अश्वमेधः अश्वमेधशब्दवाच्यः । 'तमनवरुध्येवामन्यत' इति वाक्यस्य 'तमश्वरूपमात्मानं अनिवारितवद् विभुश्चारयामास' इति व्याख्यानमयुक्तम् । तत्र तावदर्थाप्रतीतेरित्यतः शेषपूरणेन

व्याचष्टे– **निरोधमिति** ।। तथाच उदाहृतवचनं तमनवरुद्ध्येवामन्यतेत्येतदनन्तर-भाविप्रमेयकथनपरमिति भावः । तर्हीवशब्दप्रयोगः कथमित्यत आह– **स्वेच्छयेति** ।। निरोध्य निरोधकभेदाभावादिवशब्दः प्रयुक्त इत्यर्थः ।।

**अथ खण्डार्थः**

स संवत्सरनामा ब्रह्मा भूयसा क्रतुश्रेष्ठेन यज्ञेनाश्वमेधनामकेन भूयः परिपूर्णं परमात्मानं यजेय यक्ष्ये इत्यकामयत ऐच्छत् । स ब्रह्मा यज्ञोपयोगिसाधना-स्मरणादश्राम्यत् श्रमयुक्तो बभूव । तत एव स ब्रह्मा तपःसन्तापात्मकम् अतप्यत । ततश्च स्वदेहत्यागमैच्छद् इति शेषः । श्रान्तस्य तप्तस्य देहत्यागेच्छावतः तस्य यशोवीर्यमुदक्रामत् । किं तद्यशोवीर्यम् । प्राणाश्चक्षुरादयः यशोवीर्यनिमित्तत्वाद् यशोवीर्यं यशोवीर्यनामानः । प्राणैः सह स्वयं शरीरादुत्क्रामदिति यावत् । तत्प्राणेषु चतुर्मुखप्राणेषु । तेन सहितेष्विति यावत् । उत्क्रान्तेषु सत्सु शरीरं श्वयितुम् उच्छूनभावं गन्तुम् अध्रियत आरब्धम् अमेध्यं चाभवत् । बृंहमाणं तच्छरीरं दृष्ट्वा तस्य चतुर्मुखस्य शरीर एव तस्मिन्नेव शरीरे प्रवेष्टुं मन आसीदिच्छा बभूव ।।

स प्रवेशनेच्छावान् चतुर्मुखः तत्र प्रवेशाय मे मम इदं शवरूपं शरीरं मेध्यं शुद्धं स्यादित्यकामयतैच्छत् । देहान्तरग्रहणसम्भवात्किमिति तस्यैव शुद्धीच्छा इत्यत उक्तम्– **आत्मन्वीति** ।। अहमनेनैव विसृष्टेनैव देहेनाऽत्मन्वी देहवान् स्यामित्यभिप्रायेणाकामयतेति सम्बन्धः । ततस्तन्मेध्यमभूत् । तस्मिन् शरीरे विवेश च । ततः तत्प्रवेशानन्तरं स इत्यनुवर्तते । यज्ञपशुत्वनिमित्तकफलस्यापि लाभार्थम् अश्वः अश्वाकारः समभवत् । तद् द्वितीयरूपं केन निमित्तेना-श्वनामकमित्यत उक्तम्– **यदश्वदिति** ।। तत इत्यादि अत्रापि सम्बद्ध्यते । पूर्वप्रकृतं पुरुषशरीरम् अश्वत् श्वैतीभावं गतम् । ततः श्वैतीभावानन्तरं द्वितीय-मश्वरूपम् । अभवत् जज्ञे । यद् यस्मात् ततस्तस्मात्सोऽश्वोऽश्वनामकः समभवदिति योजना । अत्राश्वमेधनामकश्चतुर्मुखोऽश्वमेधनामकेन स्वकीय-द्वितीयाश्वरूपेण पशुनाऽश्वमेधनामकं यज्ञमकरोदिति वक्तव्यम् । तत्र त्रयाणा-

मश्वमेधशब्दवाच्यत्वव्युत्पादनार्थं यदश्वदित्यादि प्रवृत्तम् । तस्यैवं योजना । तद् ब्रह्मशरीरं यद् यदर्थं यज्ञसाधनास्मृत्या निःसृतप्राणमश्वत् श्वैतीभावं प्राप्तं ततश्चामेध्यं सद्ब्रह्मेच्छया पुनर्यज्ञार्थमेव मेध्यं शुद्धमभूद् इति यत् तदेव तच्छरीरेण तदा श्वैतीभावमेध्यताप्राप्त्यनन्तरं कृतत्वमेव अश्वमेधस्य चतुर्मुखकृताश्वमेधनामकयज्ञस्य अश्वमेधत्वम् अश्वमेधशब्दप्रवृत्तिनिमित्तमिति । तथा यत् तत्पुरुषशरीरमश्वद् बृंहितं पश्चान्मेध्यं चाभूदिति यत् तदेव तच्छरीरे स्थितत्वमेव अश्वमेधस्याश्वमेधनामकस्य ब्रह्मणोऽश्वमेधत्वमिति । तथा तत् चतुर्मुखस्य द्वितीयं रूपम् अश्वद् अश्वोऽभवत् तदेव रूपं मेध्यं यज्ञ आलम्भनीयं चाभूदिति यत् तदेवाश्वाकारेण यज्ञीयत्वमेव अश्वमेधस्याश्वमेधनामकस्य चतुर्मुखद्वितीयरूपस्याश्वमेधत्वमिति । योऽधिकारी एनं यजमानं पशुरूपं चतुर्मुखं तत्कृतयज्ञं च एवमुक्तनिमित्तेनाश्वमेधशब्दवाच्यत्वेन वेद जानाति एष अश्वमेधम् अश्वमेधशब्दार्थं वेद । ह वा इति प्रमाणप्रसिद्धिं द्योतयति ॥ ७ ॥

यदर्थमश्वोऽभवत् तत्राश्वस्येत्थम्भावपूर्वकं विनियोगमाह– **तमिति** ॥ विभुस्तमश्वरूपं स्वात्मानं अनवरुद्ध्य निरोधमकृत्वैव स्वेच्छागृहीरूपान्तरत्वेन निरोध्यनिरोधकभावाभावादिवेत्युक्तम् । चारयिष्यामीत्यमन्यत । सर्वस्मिन् भुवने संवत्सरपर्यन्तं चारयामास च । तं संवत्सरचारितमश्वं संवत्सरस्य परस्तादन्ते आत्मने स्वस्थिताय परमात्मने तदुद्देशेन यज्ञे आलभत आलम्भनं कृतवान् । पशून् अजादिकान् देवताभ्योऽन्यदेवस्थपरमात्मोद्देशेन प्रत्यौहत् त्यक्तवान् । यस्मात् पशून् देवताभ्यः प्रत्यौहद् ब्रह्मा तस्मादेवाधुनातना याज्ञिकाः प्राजापत्यं देवताभ्यो दीयमानत्वेन प्रजापतिज्ञापिततया प्रजापतिसम्बन्धिनं प्रोक्षितं मन्त्रपूतं पशुं सर्वदैवत्यं सर्वदेवतोद्देशेन आलभन्ते । न केवलं ब्रह्मादिरश्वमेधशब्दाभिधेयः अपि तर्हि य एष दृश्यमानमण्डलान्तर्गतस्तपति एष सूर्योऽपि अश्वमेधनामा केन निमित्तेन यतः संवत्सरः संवत्सराभिधोऽश्वमेधनामा ब्रह्मा तस्य सूर्यस्य आत्मा सूर्ये व्याप्ततया स्थितः । अस्याश्वमेधनाम्नो

ब्रह्मणो महिमानमाह– **अयमित्यादिना** ।। अर्कः अर्के स्थितोऽयं संवत्सराभिधो ब्रह्मा अग्निरग्निस्थत्वेनाग्निशब्दवाच्यः इमे लोका भूरादयः तस्य संवत्सरस्याऽत्मानः तेन व्याप्ताः । एवं सूर्याग्निलोकेषु चतुर्मुखेषु चतुर्मुखस्य स्थित्युक्त्या प्राप्तां सर्वोत्तमत्वशङ्कां वारयति– **तावेताविति** ।। तावेतौ पूर्वोक्तौ अर्काश्वमेधौ सूर्यचतुर्मुखौ । उपलक्षणमेतत् । अग्निर्लोकाश्च या पुनरेकैव मुख्यैव देवता भवति सा उ सैव तदाश्रिता एवेति यावत् । का सा मृत्युरेव नृसिंह एव । य एनमेवं वेदेत्यनुवर्तते । योऽधिकारी एनं नृसिंहम् एवं ब्रह्मसूर्याग्निलोकेषु व्याप्तं वेद स चतुर्मुखः अपपुनर्मृत्युम् अकालमृत्युं जयति । पराजितोऽप्यपमृत्युः पुनः कदाचिदेनं प्राप्नोति किम्? नेत्याह– **नैनमिति** ।। एनं चतुर्मुखं मृत्युरपमृत्युः कदाऽपि नाऽप्नोति । कुतः? यस्मादस्य मृत्योः मृत्युः नरसिंहोऽस्य चतुर्मुखस्याऽत्माऽनेन चतुर्मुखेन ज्ञेयत्वध्येयत्वादिना स्वीकृतो भवति । एतस्मादेव हेतोरेतासां देवतानाम् अर्कादीनामेकः प्रधानभूतो भवति ।। ८ ।।

इति अश्वमेधब्राह्मणम् ।। २ ।।

उपनिषत्—

## अथ उद्गीथब्राह्मणम्

[रुद्रादिदेवानाम् असुरावेशः]

**द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ।। १ ।।**

भाष्यम्—

द्वया ब्रह्मसुतास्तत्र दैतेया बहवः स्मृताः ।
तमोरूपाः, सत्त्वरूपा अल्पसङ्ख्या सुराः स्मृताः ।।
बहुत्वात्तैर्जिता देवाः शङ्करस्य वरेण च ।
यज्ञेन विष्णुमभ्यर्च्य तत्रोद्गातृबलेन च ।।
जयामैनानिति स्मृत्वा वह्न्यादीनप्यचूचुदन् ।।

**टिप्पणी——**

**अथ भाष्यार्थः**

अश्वमेधादिषु वायुरेवोद्गाता कर्तव्यः। तस्यैव तत्र प्राप्तविघ्नपरिहारक्षमत्वादिति भावेन तत्रोपयुक्तां काञ्चन कथामाह– **द्वया इत्यादिना** ॥ इदं ब्राह्मणं द्वयाः द्विप्रकाराः प्राजापत्याः प्रजापतेर्हिरण्यगर्भस्य यजमानावस्थस्येमेऽपत्यभूताः गोलकावस्था वागादयः प्रजापत्याः के ते द्विप्रकाराः? देवाश्चासुराश्च । शास्त्रीयज्ञानकर्मवासनावासिता द्योतनात्मका देवाः। प्रत्यक्षानुमानजनितदृष्ट-प्रयोजनकस्वाभाविकज्ञानकर्मवासनावासिताः असुरा इत्यादिना परैरन्यथा व्याख्यातम् । तदसत् । देवासुरादिशब्दानां वागादिगोलकपरत्वे 'ते होचु-र्वागुदगायत् ते विदुः' इत्यादिसंवादानुपपत्तेः। नहि तेषां जडानां वागादिकरण-मस्ति । सुखप्रतिपत्त्यर्थं श्रुत्या वागादेः करणान्यारोप्य संवादाद्युपदिश्यत इति वदन् देवानां प्रियः श्लाघनीयप्रज्ञः। तथात्वे काव्यादिवदौत्प्रेक्षिकार्थत्वप्रसङ्गात् । देवासुरादिशब्दानां प्रसिद्धार्थपरित्यागेन अप्रसिद्धार्थकल्पने मानाभावाच्चेति भावेन प्रसिद्धार्थपरत्वेनैव ब्राह्मणं प्रमाणेन व्याचष्टे– **तत्रेति** ॥ तत इत्यस्यार्थः– **तत्रेति** ॥ तयोः देवासुरभागयोरित्यर्थः । ननु असुराणां केषाञ्चित् कदाचित् साधनसम्पत्त्या स्वभावाभिभवेन देवत्वप्राप्तौ देवभागस्य ज्यायस्त्वम् असुरभागस्याल्पत्वं च स्यादिति कथमेवमुक्तमित्यत आह– **तमोरूपाः सत्वरूपा इति** ॥ स्वरूपस्य च अनभिभव इति भावः। 'त एषु लोकेष्वस्पर्धन्त' इत्यनन्तरम् अध्याहार्यमाह– **बहुत्वादिति** ॥ देवानां स्वभावप्राबल्याद् बहुत्वं कथं जये प्रयोजकमित्यत आह– **शङ्करस्येति** ॥ 'ते ह देवा ऊचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति' इति वाक्यं व्याचष्टे– **यज्ञेनेति** ॥

'ते ह वाचमूचुः' इत्यादिखण्डपञ्चकगतं वाक्यं वागादिशब्दानां प्रसिद्धार्थत्व-प्रतीतिं निवारयन् तात्पर्यतो व्याचष्टे– **वह्न्यादीनिति** ॥ वागादिशब्दानां प्रसिद्धार्थपरत्वे एतासां देवतानामित्याद्युत्तरवाक्यविरोध इति भावः ।

उपनिषत्—

ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद् यो वाचि भोगस्तं देवेभ्य आ गायद् यत्कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥ अथ ह घ्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः घ्राण उदगायद् यो घ्राणे भोगस्तं देवेभ्य आगायद् यत्कल्याणं जिघ्रति तदात्मने। ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥ अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायद् यश्चक्षुषि भोगस्तं देवेभ्य आगायद् यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्राऽ-त्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥ अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद् यः श्रोत्रे भोगस्तं देवेभ्य आगायद् यत्कल्याणꣳ शृणोति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥ अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद् यो मनसि भोगस्तं देवेभ्य आगायद् यत्कल्याणं सङ्कल्पयति तदात्मने ते विदुरनेन वैन

उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥

[प्राणस्य असुरावेशाभावः]

अथ हेममासन्यं प्राणमूचुस्त्वन्न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन्परासुरा भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातव्यो भवति य एवं वेद ॥ ७ ॥

भाष्यम्—

औद्गात्रेऽग्निमुखाः सर्वे इन्द्ररुद्रौ च वेधितौ ॥
असुरैः पापपूगेन मुख्यवायुं ततोऽब्रुवन् ।
दैत्यास्तं वेद्धुमीप्सन्तो ध्वस्ता नेशुश्च सर्वशः ॥
पांसुपिण्डो यथा वज्रशिलां प्राप्यैव नश्यति ।
तस्मादखण्डशक्तिः स मुख्यवायुरुदाहृतः ॥
शापैरथ वरैर्वाऽपि नास्य प्रतिहतिर्भवेत् ।
स्वेच्छयैवानुसारेण विना कुत्रापि पुत्रक ॥
एवंविदपि पापेभ्यः शत्रुभ्योऽपि प्रमुच्यते ।

टिप्पणी—

अथ भाष्यार्थः

खण्डपञ्चकगतस्य 'तमभिद्रुत्य पाप्मनाऽविध्यन्' इति वाक्यपञ्चकस्यार्थमाह—

**अग्निमुखा इति** ।। सर्वे इन्द्रियाभिमानिनः । ननु अग्निनासिक्यवायुदिक्पालादित्य-चन्द्राणामसुरैः पापविद्धत्वेऽपि दिक्पेषु श्रेष्ठस्येन्द्रस्य मनसो मुख्याभिमानिनो रुद्रस्य च न वेध इत्यत आह– **इन्द्ररुद्रौ चेति** ।। 'अथ हेममासन्यं प्राणमूचुः' इति वाक्यं व्याचष्टे– **मुख्यवायुमिति** ।। 'तमभिद्रुत्य' इत्यादि 'विष्वञ्चो विनेशुः' इत्यन्तं वाक्यं व्याचष्टे– **दैत्या इति** ।। नश्यत्येवेति एवशब्दसम्बन्धः । 'स यथाश्मानम्' इति दृष्टान्तोक्त्या सूचितमर्थमाह– **तस्मादिति** ।। असुराणां स्वतो वायुशक्तिखण्डनासामर्थ्येऽपि शङ्करवरादिना तत्स्यादित्यत आह– **शापैरिति** । तर्हि कथमजगरबन्धनादिना भीमस्य शक्तिविस्रंसनादिदर्शनमित्यत आह– **स्वेच्छयैवेति** ।। ईश्वरसङ्कल्पानुसारेण स्वेच्छयैव शक्तिप्रतिहतिप्रदर्शनं नतु तया विनेत्यर्थः । 'भवत्यात्मना' इत्यादि फलवाक्यं तात्पर्यतो व्याचष्टे– **एवमिति** ।। किमु देवा इति कैमुत्यार्थो अपिशब्दः । भ्रातृव्य इत्यस्यार्थकथनम्– **पापेभ्य इति** ।। द्विषन्नित्यस्य– **शत्रुभ्य इति** ।।

उपनिषत्—

[मुख्यप्राणे अयास्यादिनाम्नां निर्वचनम्]

**ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ।। ८ ।।**

[प्राणस्यानुग्रहेण देवानां जयः]

**सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युर्दूरꣳ ह वा अस्मान्मृत्युर्भवति य एवं वेद ।। ९ ।। सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तमयाञ्चकार तदासां पाप्मनो विन्यदधात् तस्मान्न जनमियान्नान्त-मियान्नेत्पाप्मानं मृत्युमन्ववायानीति ।। १० ।। सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्याथैनां मृत्युमत्य-**

वहत् ॥ ११ ॥ स वै वाचमेव प्रथमामत्यवहत्सा या यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥ अथ घ्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥ अथ चक्षुरवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽ-भवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥ अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥ अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

भाष्यम्—

स वायू रुद्रशक्रादेर्वासुदेवबलाश्रयः ॥
विमोच्य पापसङ्घातं दिशामन्तेष्वथाक्षिपत् ।
उन्मुच्य मृत्योस्तांश्चैवाथोर्ध्वलोकेषु चावहत् ॥
अग्निर्नासिक्यवायुश्च दिक्पा इन्द्रादयोऽखिलाः ।
सूर्यः सोमश्च रुद्रश्च तेनैव स्वपदे स्थिताः ॥

टिप्पणी—

'सा वा एषा देवता एतासाम्' इत्यादि गमयाञ्चकारेत्यन्तं वाक्यं व्याचष्टे– **स वायुरिति** ॥ एषेत्यस्यार्थः वासुदेवबलाश्रय इति– रुद्रशक्रादेः सकाशात् विमुच्य मोचयित्वा । 'एतासां देवतानाम्' इत्यादि 'अवहत्'इत्यन्तं वाक्यं व्याचष्टे– **उन्मुच्येति** ॥ 'स वै वाचमेव प्रथमामत्यवहत्' इत्यादिखण्ड-

पञ्चकतात्पर्यमाह– **अग्निरिति** ॥ दिश इत्यस्यार्थः **दिक्पा इति** । के ते? इत्यत उक्तम्– **इन्द्रादय इति** ॥ रुद्रोऽपि मनोभिमानी ॥ ८-१६ ॥

उपनिषत्——

[सकलजीवनिकायभोग्यं मुख्यप्राणस्य अन्नम्]

**अथात्मनेऽन्नाद्यमागायद् यद्धि किञ्चान्नमद्यते अनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥ ते देवा अब्रुवन् एतावद् वा इदꣳ सर्वं यदन्नं तदाऽत्मन आगासीरनु नोऽस्मिन् अन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त तस्माद् यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवं विदꣳ स्वेषु प्रति प्रति बुभूषति नहैवालं भार्येभ्यो भवत्यथ य एवैतमनु-भवति यो वै तमनु भार्यान् बुभूषति स हैवालं भार्येभ्यो भवति ॥ १८ ॥**

[मुख्यप्राणे अङ्गिरसबृहस्पत्यादिनाम्नां निर्वचनम्]

**सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानाꣳ रसस्तस्माद् यस्मात्कस्मा-च्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यत्येष ह वा अङ्गानाꣳ हि रसः ॥ १९ ॥ एष उ वा बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥ एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥ एष उ एव साम वाग्वै सा अम एष सा चामश्चेति तत्साम्नः**

**सामत्वं यद्धेव समः प्लुषिणा, समो मशकेन, समो नागेन, सम एभिस्त्रिभिर्लोकैः, समोऽनेन सर्वेण, तस्मादेव साम अश्नुते साम्नः सायुज्यꣳ सलोकतां जयति य एवमेतत्साम वेद ॥ २२ ॥ एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदꣳसर्वमुत्तब्धम् । वागेव गीथा उच्च गीथा चेति स उद्गीथः ॥ २३ ॥**

भाष्यम्—

**स्त्रीगुणैः सर्वपूर्णत्वाद् बृहती तु सरस्वती ।**
**अनन्तवेदरूपत्वात्सैव ब्रह्मेति कीर्तिता ॥**
**विष्णुना बृंहितत्वाद्वा तत्पतिर्वायुरीश्वरः ।**
**सारत्वात्स्त्रीषु सा देवी सेत्युक्ता सामरूपतः ॥**
**गीथेत्युक्ता तदुद्गीथः सामाख्योऽर्धतनुस्तथा ।**
**अर्धनारीनरवपुर्वायुः कुत्रचिदीरितः ॥**

टिप्पणी—

अथ भाष्यार्थः

'वाग्वै बृहती'इत्यत्र वाक्शब्दस्य प्रसिद्धार्थत्वप्रतीतिं निवारयन् बृहतीशब्दनिर्वचन-पूर्वकं तद्व्याचष्टे– **स्त्रीगुणैरिति** ॥ सर्वपूर्णत्वात् सर्वात्मना पूर्णत्वात् । 'वाग्वै ब्रह्म'इत्येतत् पूर्ववद् द्वेधा व्याचष्टे– **अनन्तेति** ॥'तस्या एष पतिः'इति वाक्यद्वयं व्याचष्टे– **तत्पतिरिति** ॥

'वाग्वै सा'इत्येतत् व्याचष्टे– **सारत्वादिति** ॥ 'वागेव गीथा'इत्येतत् व्याचष्टे– **सामरूपतः गीथेत्युक्तेति** ॥ सामवेदाभिमानित्वाद् इत्यर्थः । न मीयत इत्यम इति स्पष्टत्वादुच्छब्दस्योपनिषदैव निरुक्तत्वात् नैतद्व्याख्या-तम् । ननु यदि सामोद्गीथशब्दान्तर्गत सेति गीथेति शब्दवाच्या सरस्वती तर्हि वायोः सामोद्गीथशब्दवाच्यत्वाभावात् 'एष उ एव सामैष उ एवोद्गीथः'

इति च कथमुक्तम् इत्यत आह– **तदिति** ॥ तत् तस्मात् सरस्वत्याः सेति गीथेति शब्दवाच्यत्वात्तयाऽर्धतनुर्वायुः उद्गीथसामाख्य इति सम्बन्धः । अत एव श्रुतौ 'सा चामश्च' इति 'उच्च गीथा च' इति द्वन्द्वसमासोक्तिरिति भावः । विष्णोरर्धनारीनरात्मकत्वं प्रमाणप्रसिद्धं तत्कथं वायोरित्यत आह– **अर्धनारीति** ॥ कुत्रचित् 'एष उ एव साम' इत्यादौ ॥ १७-२३ ॥

उपनिषत्—

[उद्गातृषु स्थित्वा सामगानकर्ता मुख्यप्राणः]

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्वस्य राजा मूर्धानं विपातयताद्यदीतोऽयास्य आङ्गिरसोऽन्येनो-दगायदिति वाचा च ह्येव स प्राणेन चोदगायदिति ॥ २४ ॥ तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एवाथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥ २५ ॥ तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥ तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्युहैक आहुः ॥ २७ ॥**

भाष्यम्—

अयास्यो विश्वसृग्यज्ञे तेनाविष्टोऽन्वगायत ।
गृहकोशादिकं यत्स्वं तद्रूप्यस्य स्वरस्थितः ॥
भूषणस्वर्णरूपी च स एवापि स्वरस्थितः ।

**वागिन्द्रियं पीठरूपं तस्य देवस्य संस्थितम् ॥**
**गानकालेऽन्यदा त्वन्नं प्राणपीठमिति स्मृतम् ॥**

**टिप्पणी——**

**अथ भाष्यार्थः**

'वाचा च ह्येव स प्राणेन चोदगायत्'इति वाक्यम् अपेक्षितं पूरयन् व्याचष्टे– **अयास्य इति** ॥ तेनार्धनारीनरात्मकेन । अनेन वाचा प्राणेनेत्युभयोक्तेस्तात्पर्यमुक्तं भवति ॥ 'तस्य वै स्वर एव स्वम्'इत्येतद् व्याचष्टे– **गृहेति** ॥ तद्रूपी तदभिमानी । अस्योद्गातुः ॥

'तस्य वै स्वर एव सुवर्णम्'इत्येतद् व्याचष्टे– **भूषणेति** ॥ स एव वायुरेव भूषणस्वर्णरूपी च सोऽपि स्वरस्थित इति योजना– तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयत इत्येतद् व्याचष्टे– **वागिन्द्रियमिति** ॥ वागिन्द्रियं गानकाले तस्य देवस्य वायोः पीठरूपं संस्थितमित्यन्वयः । गानकाल इत्यनेनैतदुक्तार्थम् । 'अन्न इत्युहैक आहुः' इत्येतद् व्याचष्टे– **अन्यदा त्वन्नमिति** ॥ २४-२७ ॥

**उपनिषत्——**

**["तमसो मा ज्योतिर्गमय" इति मन्त्रार्थः]**

**अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तूयात्तदेतानि जपेदसतो मा सद् गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्यो-र्मामृतं गमयामृतं मां कुर्वित्येवैतदाह तमसो मा ज्योति-र्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मां कुर्वित्येवैतदाह ॥ २८ ॥ मृत्योर्माऽमृतं गमयेति नात्र**

तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽ-न्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत त९ स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥ २९ ॥

इत्युद्गीथब्राह्मणम् ॥ ३-३ ॥

भाष्यम्—

पवमाना इति प्रोक्ता मुख्यवायुत्वयोगिनः ॥
अनादिकालसम्बद्धा योग्यता सा प्रकीर्तिता ।
सर्वाधिक्यारोहणं तु तेषामेव विमुक्तिगम् ॥
प्रस्तावकाले प्रस्तोतुं योग्यो वायुपदस्य यः ।
जपेद् यजूंषि त्वेतानि त्रीणि विष्णुं सदा स्मरन् ॥
असतो मा सदित्यादि विष्णुप्रार्थनभाञ्जि च ।

टिप्पणी—

अथ भाष्यार्थः

ननु वायोरेकत्वात्पवमानानामित्युक्तिः कथमित्यत आह– **पवमाना इतीति** ॥ योगिनो योग्याः । योग्यता च नाऽगन्तुकेत्याह– **अनादीति** ॥ इदानीम् 'अथातः' इत्येतद् व्याचष्टे– **सर्वेति** ॥ विमुक्तिगमित्यनेनाथेत्युक्ततात्पर्यम् । 'स वै खलु प्रस्तोता' इत्यादि जपेदित्यन्तं वाक्यं व्याचष्टे– **प्रस्तावेति** ॥ प्रस्तावकाले जपेदिति सम्बन्धः । योग्य इत्यस्य पूर्वेणोत्तरेण च सम्बन्धः । य इति श्रवणात् स इति लभ्यते । तुशब्द एवार्थे स्मरन्नेवेति सम्बन्धः ।

भाष्यम्—

द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः ।
नियमेनैव विष्णोस्तु प्रादुर्भावा विशेषतः ।

**वागिन्द्रियं पीठरूपं तस्य देवस्य संस्थितम् ॥**
**गानकालेऽन्यदा त्वन्नं प्राणपीठमिति स्मृतम् ॥**

**टिप्पणी**——

**अथ भाष्यार्थः**

'वाचा च ह्येव स प्राणेन चोदगायत्'इति वाक्यम् अपेक्षितं पूरयन् व्याचष्टे– **अयास्य इति** ॥ तेनार्धनारीनरात्मकेन । अनेन वाचा प्राणेनेत्युभयोक्तेस्तात्पर्यमुक्तं भवति ॥ 'तस्य वै स्वर एव स्वम्'इत्येतद् व्याचष्टे– **गृहेति** ॥ तद्रूपी तदभिमानी । अस्योद्गातुः ॥

'तस्य वै स्वर एव सुवर्णम्'इत्येतद् व्याचष्टे– **भूषणेति** ॥ स एव वायुरेव भूषणस्वर्णरूपी च सोऽपि स्वरस्थित इति योजना– तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयत इत्येतद् व्याचष्टे– **वागिन्द्रियमिति** ॥ वागिन्द्रियं गानकाले तस्य देवस्य वायोः पीठरूपं संस्थितमित्यन्वयः । गानकाल इत्यनेनैतदुक्तार्थम् । 'अन्न इत्युहैक आहुः' इत्येतद् व्याचष्टे– **अन्यदा त्वन्नमिति** ॥ २४-२७ ॥

**उपनिषत्**——

[**''तमसो मा ज्योतिर्गमय'' इति मन्त्रार्थः**]

**अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तूयात्तदेतानि जपेदसतो मा सद् गमय तमसो मा ज्योतिर्गमय मृत्योऽर्मामृतं गमयेति स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्यो-र्मामृतं गमयामृतं मां कुर्वित्येवैतदाह तमसो मा ज्योति-र्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मां कुर्वित्येवैतदाह ॥ २८ ॥ मृत्योर्माऽमृतं गमयेति नात्र**

**तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽ-न्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तं॑ स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ॥ २९ ॥**

इत्युद्गीथब्राह्मणम् ॥ ३-३ ॥

भाष्यम्—

**पवमाना इति प्रोक्ता मुख्यवायुत्वयोगिनः ॥**
**अनादिकालसम्बद्धा योग्यता सा प्रकीर्तिता ।**
**सर्वाधिक्यारोहणं तु तेषामेव विमुक्तिगम् ॥**
**प्रस्तावकाले प्रस्तोतुं योग्यो वायुपदस्य यः ।**
**जपेद् यजूंषि त्वेतानि त्रीणि विष्णुं सदा स्मरन् ॥**
**असतो मा सदित्यादि विष्णुप्रार्थनभाञ्जि च ।**

टिप्पणी—

अथ भाष्यार्थः

ननु वायोरेकत्वात्पवमानानामित्युक्तिः कथमित्यत आह— **पवमाना इतीति** ॥ योगिनो योग्याः । योग्यता च नाऽगन्तुकेत्याह— **अनादीति** ॥ इदानीम् 'अथातः'इत्येतद् व्याचष्टे— **सर्वेति** ॥ विमुक्तिगमित्यनेनाथेत्युक्ततात्पर्यम् । 'स वै खलु प्रस्तोता'इत्यादि जपेदित्यन्तं वाक्यं व्याचष्टे— **प्रस्तावेति** ॥ प्रस्तावकाले जपेदिति सम्बन्धः । योग्य इत्यस्य पूर्वेणोत्तरेण च सम्बन्धः । य इति श्रवणात् स इति लभ्यते । तुशब्द एवार्थे स्मरन्नेवेति सम्बन्धः ।

भाष्यम्—

**द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः ।**
**नियमेनैव विष्णोस्तु प्रादुर्भावा विशेषतः ।**

**सहस्रारेण चक्रेण चिह्निता दक्षिणे करे ॥**
**गदयाऽष्टाश्रया चैव शतावर्तेन कम्बुना ।**
**वामे करे तथाऽब्जेन सहस्रदलशोभिना ॥**
**अष्टाविंशल्लक्षणाश्च गिरीशपदयोगिनः ।**
**चतुर्विंशतिमारभ्य षोडशादासुराः स्मृताः ॥**
**अष्टकादृषयश्चोक्तास्तदूनाश्चक्रवर्तिनः ॥**

**टिप्पणी**—

ननु वायुत्वयोग्यानां किं लक्षणं येन तेषां वायुपदयोग्यतां ज्ञात्वोद्गातृत्वेन वरणमित्यत आह– **द्वात्रिंशदिति** ॥ सरस्वतीव्यावृत्त्यर्थं सम्यगिति । सरस्वत्यपेक्षयेति शेषः । तेन एवशब्दसम्बन्धः । नियमेन वायुत्वयोग्यका इति सम्बन्धः । सम्यग् द्वात्रिंशल्लक्षणोपेतः कश्चिदपि वायुपदायोग्यो नेत्यर्थः । ननु रामकृष्णादौ विद्यमानमिदं लक्षणं कथं वायुपदयोग्यताज्ञापकमित्यत आह– **विष्णोरिति** ॥ प्रादुर्भावास्त्विति सम्बन्धः । वायुपदयोग्यापेक्षया विशेषतः सम्यग्द्वात्रिंशल्लक्षणैर्युताः । तथाच सरस्वत्यपेक्षयैवेत्युक्त्याऽतिव्याप्तिपरिहार इति भावः । सर्वात्मनाऽन्यानिष्ठं भगवतो लक्षणान्तरमाह– **सहस्रारेणेति** ॥ सरस्वत्या इव सम्यगित्यनेनैव रुद्रादेरपि व्यावृत्तिः किन्नेत्याह– **अष्टाविंशदिति** ॥ षोडशादा षोडशपर्यन्तम् । षोडशादारभ्य अष्टकादा अष्टकपर्यन्तम् ऋषयश्चोक्ता इत्यर्थः ॥

**भाष्यम्**—

**असद्दुःखात्मको मृत्युः सदानन्दोऽमृतं स्मृतम् ।**
**तमोऽज्ञानात्मको मृत्युर्ज्योतिर्ज्ञानामृतं स्मृतम् ।**
**मृत्योर्माऽमृतमित्यत्र मृत्युर्मरणमेव च ॥**
**एवंविद् वायुपदयोग्या उद्गातार एव तु ।**
**यदा भवेयुस्तेषु तदा याजी तु वृणुयाद् वरम् ॥**

**आत्मने याजिने वाऽपि ह्युद्गातैवंविधो यदि ।**
**आगायेत्तद्भवेन्नात्र कार्याऽभीष्टे विचारणा ॥**
**एवं तं सामनामानं वायुं यो वेद सादरम् ।**
**तस्येष्टलोकराहित्ये नाऽशा कार्याऽरिणा क्वचित् ॥**
**तस्माद् वायुत्वयोग्यैर्हि येषां लोकाः प्रकीर्तिताः ।**
**तेषामलोकाशङ्का च नैव कार्या कदाचन ॥**
**यस्मान्नारायणस्यातिप्रियाः प्राणत्वयोगिनः ॥**

**इत्यादि महासंहितायाम् ॥**

**टिप्पणी—**

असत इत्यादि मन्त्रद्वयस्य 'मृत्योर्माऽमृतं गमय' इति तात्पर्यकथनेन मन्त्राणामेकार्थत्वं प्रतीयते तन्निरासाय 'मृत्युर्वा असत्सदमृतं' 'मृत्युर्वै तमो ज्योतिरमृतम्' इत्येतद् व्याचष्टे– **असदिति** ॥ असन्मृत्युर्दुःखात्मकः इत्यादि योज्यम् । नात्र तिरोहितमिवास्तीत्यस्याभिप्रायमाह– **मृत्योरिति** ॥ चशब्देनामृतं मोक्षमित्यपि ग्राह्यम् । एवेति प्रसिद्ध्यर्थकम् । 'तस्मादु तेषु वरं वृणीत' इत्येतद् व्याचष्टे– **एवंविदिति** ॥ एवंविद उक्तमन्त्रार्थविदश्च ते वायुपदयोग्याश्चेति विग्रहः । योग्या एवेति सम्बन्धः । याजी यजमानः । 'स एष एवम्' इत्यादि 'लोकजिदेव' इत्यन्तं वाक्यं व्याचष्टे– **आत्मन इति** ॥ एवंविध उद्गाता आत्मने स्वार्थं याजिनेऽपि वा यदि फलमुद्दिश्योद्गायेत् तर्हि तत्फलं भवेदेवात्राभीष्टे विचारणा न कार्येति हि यस्मात्तस्मात्तेषु याजी वृणुयाद् वरमिति पूर्वेण सम्बन्धः । लोकजिदेवेत्येवकाराभिप्रायः नात्रेति । 'नहैवालोक्यतायाः' इत्येतत्फलवाक्यं व्याचष्टे– **एवमिति** ॥ 'नहैवालोक्यताया आशाऽस्ति' इत्यस्य पूर्ववाक्यशेषत्वमप्यभिप्रेत्य तद्वाक्यार्थः कैमुत्यसिद्ध इत्याह– **तस्मादिति** ॥ तस्मात् सामनामकवायुरूपविदो लोकप्राप्तिनियमात् । यदा तद्विद इष्टलोकराहित्येन आशा कार्या तदा वायुपदयोग्यैर्येषां यजमानानां लोकाः प्रकीर्तिताः गानकाले फलत्वेनोक्तास्तेषां न केवलमरिणेष्टलोकराहित्ये आशा न कार्या किन्त्वलोकशङ्का

च नैव कार्येति किमु वक्तव्यमिति भावः । तज्ज्ञानेन वा तदुक्त्या वा लोकप्राप्तिनियमः कुत इत्यत आह– **यस्मादिति** ॥ नारायणातिप्रियत्वमपि कुत इत्यत आह– **प्राणत्वेति** ॥ नारायणप्रीतिकरणयुक्ता इत्यर्थः ।

**भाष्यम्—**

**आस्यादयत इत्ययास्यः। प्रसिद्धमृत्य्वमृतत्वान्नात्र तिरोहितमिवास्ति । एष उद्गातेति वायुत्वयोग्यः। तद्धैतल्लोकजिदेवेति तस्माद्वराभियाचनम् ॥**

**इति उद्गीथब्राह्मणम् ॥ ३-३ ॥**

**टिप्पणी—**

श्रुतौ सोऽयास्य आङ्गिरस इति प्राणवाचकत्वेनोक्तशब्दद्वये 'अङ्गानां हि रसः' इति प्राणे अङ्गिरसशब्दनिर्वचनवद् अयास्यशब्दनिर्वचनाभावात्स्वयं प्राणे तन्निर्वक्ति– **आस्यादिति** ॥ अयते गच्छति अय पय गताविति धातोः। आस्याय इति भवितव्ये अयास्य इति धातोः पूर्वनिपात इति भावः। मन्त्रद्वयाभ्यामनतिरिक्तार्थत्वात्तृतीयमन्त्रस्याव्याख्येयत्वमाह– मृत्योरितीति कश्चित्। तदसत् । तथात्वे तृतीयमन्त्रजपवैयर्थ्यापत्तेरित्यभिप्रेत्य 'नात्र तिरोहितमिवास्ति' इत्युक्तौ निमित्तमाह– **प्रसिद्धेति** ॥ मृत्य्वमृतशब्दार्थयोः मरणमोक्षरूपप्रसिद्धमृत्युअमृतत्वादित्यर्थः । अस्तीत्युक्तमिति शेषः । य एवंवित् उक्तप्रकारेण प्राणवित् । स एष उद्गातेत्युद्गातुः प्राणादन्यत्वप्रतीति-निरासायाह– **एष इति** ॥ उच्यत इति शेषः। पवमानशब्दवाच्यवायुत्वयोग्यानामेव तेषु वरं वृणीतेत्युद्गातृत्वेन प्रकृतत्वादेवंविदित्यस्य पूर्वोक्तमन्त्रार्थविदित्येवार्थो नतु प्राणस्वरूपविदिति । अत एव प्रमाणे मन्त्रत्रयव्याख्यानानन्तरमेव एवंविदिति वायुपदयोग्यानामेव विशेषणमुक्तमिति भावः । ननु 'तस्मादु तेषु वरं वृणीत' इत्यत्र 'अथ यानीतराणि' इत्यादिनोक्तस्य हेतुत्वायोगेन तस्मादित्युक्तो हेतुः क इत्यतः स एष एवंविदित्यादिकमेव हेतुप्रतिपादकमित्यभिप्रेत्येतिशब्दाध्याहारेण योजयति– **तद्धैतदिति** ॥ इतिशब्दः प्रकारार्थः । एवंरूपात् । तस्माद्धेतोरित्यर्थः । यद्वा, इति हेतोस्तस्माद्

वायुपदयोग्याद् वराभियाचनं कर्तव्यमित्यर्थः । अत एव स एष इत्यस्य वाक्यस्यान्यपरत्वे तेषु पवमानेषु सत्सु वरं वृणीतेत्यत्र हेतुप्रतिपादकत्वं न स्यादिति भावेनैष उद्गातेति वायुत्वयोग्य इत्युक्तम् ॥

**अथ खण्डार्थः**

प्रजापतेरिमे प्राजापत्याः ब्रह्मसुताः देवाश्चासुराश्चेति द्वयाः द्विप्रकाराः । ततः तत्र देवासुरभागयोः देवाः कानीयसाः कनीयांस एव । असुराः ज्यायसा ज्यायांसः । ते देवासुराः एषु लोकेषु बहुवचनमाद्यर्थे लोकाद्यर्थम् । अस्पर्धन्त स्पर्धया युद्धं कृतवन्तः । बहुत्वादसुरैर्देवा जिता इति वक्तव्यम् । ते पराजिताः देवाः परस्परमूचुर्हं किमिति हन्तेत्यास्वादने । विष्णुपूजात्मके यज्ञे उद्गीथेन उद्गातुरुद्गानबलेन । आसुरान् अत्ययाम जयामेति ॥ १ ॥ ते देवाः ह निश्चयेन वाचमग्निमूचुः । किमिति । नोऽस्मदिष्टसिद्ध्यर्थं उद्गायेति औद्गात्रं कर्म कुर्विति । तथेति तदुक्तमङ्गीकृत्य तेभ्यो देवेभ्यः तदभिमतसिद्ध्यर्थं वागुदगायत् । तदेवाऽह– **यो वाचीति** ॥ यो वाचि भोगो वेदपाठादिः तं तज्जनितं पुण्यं देवेभ्यः आगायद् उद्गानेन प्रापयामास । उद्गानं न केवलं यजमानार्थमेव किन्त्वात्मार्थमपीत्याह– **यदिति** ॥ यत्कल्याणं तदतिरिक्तं वदति तत् तज्जनितं पुण्यम् आत्मने आगायदिति सम्बन्धः । ते असुराः अनेनैवाग्निनैव उद्गात्रा नोऽस्मान् देवाः अत्येष्यन्ति जेष्यन्तीति विदुः । एवं ज्ञात्वा तमुद्गातारम् अभिद्रुत्य वेगेनाभिगम्य पाप्मना पापेन अविध्यन् वेधितवन्तः । अग्नेरसुरकृतपापवेधः कथं ज्ञेय इत्यत आह– **स य इति** ॥ योऽसुरप्रक्षिप्तः पाप्मा सः । स एवेति कः यदेव यस्मादेव पापात् इदमप्रतिरूपम् अनृतं शास्त्रप्रतिषिद्धं वा वदति स एव पाप्मा स इति योजना । यद्वा, स असुरप्रक्षिप्तः स पाप्मा । यः कः । 'यतश्चोदेति सूर्यः' इत्यादेर्यच्छब्दस्य किंशब्दार्थकत्वात् । इदमप्रतिरूपं वदतीति यत् स स पाप्मेति वा योजना ॥ २ ॥ 'अथ ह प्राणमूचुः'इत्यादेः 'यदेवेदमप्रतिरूपं सङ्कल्पयति स एव स पाप्मा'इत्यन्तस्य ग्रन्थस्यैवमेव

योजना द्रष्टव्या अथाग्रेः पापवेधानन्तरम्। एवमुत्तरत्रापि। प्राणं नासिक्यवायुम्। प्राणे भोग ईश्वरसमर्पितगन्धाघ्राणनम् । यत्कल्याणं तदितरशुभगन्धम् ॥ ३ ॥ चक्षुः सूर्यं चक्षुषि भोगो विष्णुप्रतिमादिदर्शनरूपः कल्याणं तद्व्यतिरिक्तं शुभरूपादिकम् ॥ ४ ॥ श्रोत्रं दिग्देवताः श्रोत्रे भोगो हरिकथादिश्रवणरूपः कल्याणं तदितरशुभशब्दम् ॥ ५ ॥ मनश्चन्द्ररुद्रादीन् मनसि भोगः विष्णु-स्मरणादिरूपः कल्याणं तद्व्यतिरिक्तशुभकार्यं न केवलमुक्तानामेवासुरकृतपापवेधः किन्तु त्वगाद्यभिमानिनां सर्वेषामपीत्याह– **एवमिति** ॥ एवम् उ एवमेव एताः त्वगाद्यभिमानिनीः देवताः पाप्मभिः उपासृजन् संयोजितवन्तः । निगमयति– **एवमिति** ॥ एवमुक्तप्रकारेणैनाः मुख्यप्राणव्यतिरिक्ताः सर्वा देवताः पाप्मना अविध्यन्निति ॥ ६ ॥ इमं समर्थत्वेन प्रसिद्धम् आसन्यम् आस्ये भवं मुखान्तर्गतं प्राणं मुख्यवायुम्। स वक्ष्यमाणो दृष्टान्तो यथा लोष्टः पांसुपिण्डः अश्मानं वज्रशिलाम् ऋत्वा प्राप्य विध्वंसेत नश्यत्येव एवमेव ह खलु प्राणं वेद्धुमीप्सन्तः असुराः विध्वंसमानाः विस्रंसमानदेहाः सन्तः विष्वञ्चः सर्वत्र विनेशुः अदर्शनं प्राप्ताः। ततोऽनन्तरं देवाः प्राप्तपदा इति शेषः । अभवन् असुराः पराभवन्। योऽधिकारी एवमुक्तप्रकारेण प्राणं वेद । अस्य द्विषन् शत्रुः आत्मना परमात्मना तत्प्रसादेन पराभवति। भ्रातृव्यः भ्रातृवत्सह स्थितः पाप्मा च पराभवति ॥ ७ ॥ ते देवाः यः इत्थम् असुरविध्वंसनादिकार्यकर्तृत्वेन नोऽस्मान् असक्त प्राप्तवान् स भगवान् क नु भूत् क स्थितः इति ऊचुर्ह । आस्ये अन्त इति अयं प्राणः उवाच । प्रकारान्तरेण वायोर्महिमानमाह– **स इत्यादिना** ॥ सः प्राणः आस्यादयत इत्ययास्यशब्दवाच्यः। आङ्गिरसशब्दं निर्वक्ति– **अङ्गानामिति** ॥ ८ ॥ हि यस्माद् अस्याः प्राणाख्यदेवतायाः मृत्युः पापरूपः दूरं दूरे तस्माद्दूरिति ख्यातेति सम्बन्धः ॥ ९ ॥ एषा विष्णुबलाश्रया सा प्राणाख्या देवता यत् यस्माद् एतासां देवतानां रुद्राद्यानां सकाशात् पाप्मानं मृत्युं पापाख्यं मृत्युम् अपहत्य मोचयित्वा यत् यस्मात् तासां प्रसिद्धानां

दिशां अन्तस्तत् तत्र गमयाञ्चकार । आसां देवतानां पाप्मनः पापानि तत्तद्दिगन्तस्थितजने विन्यदधात् विशेषेण स्थापितवती । तस्मादहं पाप्मानं मृत्युं नेत् नैवान्ववायानि प्राप्नवानीति मन्वानोऽधिकारिलोकः जनं पापाश्रयं नेयात् न गच्छेत् अन्तं पापजननिवासस्थानं दिगन्तरं नेयादिति ॥ १० ॥ मृत्युविमोचनानन्तरं किमकरोद् इति जिज्ञासायाम् उक्तानुवादपूर्वकमाह– **सेति** ॥ अथ मृत्युविमोचनानन्तरम् एनाः रुद्रादिदेवताः मृत्युमति मृत्युमतिक्रम्य वर्तमानं तत्तद्देवतास्वामिकमूर्ध्वलोकम् अवहत् प्रापयामास ॥ ११ ॥ एतदेव विवृणोति– **स इत्यादिना** ॥ स वै मुख्यप्राणः प्रथमां पूर्वमेवोद्गातृत्वेन स्वीकृतां वाचमग्निमेव मृत्युम् अत्यवहत् । सा वाक् यदा मृत्युम् अत्यमुच्यत तदा सोऽग्निरभवत् । स्वपदे स्थितः । स्वव्यापारं चाकरोदित्याह– **सोऽयमिति** ॥ परेण प्राणेन एवमुत्तरत्रापि ॥ १२-१४ ॥ अतिक्रान्ताः स्वव्यापारं कुर्वन्तीति शेषः ॥ १५ ॥ अनेन देवा अभवन्निति प्रागुक्तमेव विवृतं भवति । य एवमुक्तमहिमाविशिष्टं प्राणं वेद एनम् एषा प्राणाख्यदेवता एवं वा एवमेव अग्न्यादिदेवता इव मृत्युं पापं अति अतिक्रामयित्वा तद्योग्योर्ध्वलोकं वहति प्रापयति ॥ १६ ॥ अथ देवताकार्यसाधनानन्तरं आत्मने स्वार्थम् अन्नं च तत् अद्यम् अन्नाद्यम् अन्नमिति यावत् । उद्दिश्यागायत् गानफलं लब्धं चेत्याह– **यदिति** ॥ यत्किञ्चान्नमद्यते प्राणिभिरिति शेषः । तत्सर्वमन्नम् अनेन प्राणेनैवाद्यते । कथं प्राणिभिरद्यमानमन्नम् अनेनाद्यत इत्युक्तिरित्यत आह– **इहेति** ॥ इह प्राणिषु प्रतितिष्ठति प्राणः ॥ १७ ॥ ते देवा अब्रुवन् । किमिति? यदिदं प्राणिभिरद्यमानम् एतावद्वा एतावदेवान्नम् इतोऽतिरिक्तमन्नं नास्ति तत्सर्वम् आत्मने आत्मार्थमेव त्वमागासीः । वयमप्यन्नं विना स्थातुं न शक्नुम इति । अनु त्वदनन्तरम् अस्मिन्नन्ने नः अस्मान् आभजस्व भागिनः कुर्विति ते देवाः अब्रुवन्निति सम्बन्धः । ते अन्नार्थिनो यूयं मा माम् अभि समन्ततः संविशत प्राणिदेहमिति शेषः । इति प्राणोऽब्रवीदिति शेषः । देवास्तथेति तदुक्तमङ्गीकृत्य तं

योजना द्रष्टव्या अथाग्रेः पापवेधानन्तरम्। एवमुत्तरत्रापि। प्राणं नासिक्यवायुम्। प्राणे भोग ईश्वरसमर्पितगन्धाघ्राणनम् । यत्कल्याणं तदितरशुभगन्धम् ॥ ३ ॥ चक्षुः सूर्यं चक्षुषि भोगो विष्णुप्रतिमादिदर्शनरूपः कल्याणं तद्व्यतिरिक्तं शुभरूपादिकम् ॥ ४ ॥ श्रोत्रं दिग्देवताः श्रोत्रे भोगो हरिकथादिश्रवणरूपः कल्याणं तदितरशुभशब्दम् ॥ ५ ॥ मनश्चन्द्ररुद्रादीन् मनसि भोगः विष्णु-स्मरणादिरूपः कल्याणं तद्व्यतिरिक्तशुभकार्यं न केवलमुक्तानामेवासुरकृतपापवेधः किन्तु त्वगाद्यभिमानिनां सर्वेषामपीत्याह– **एवमिति** ॥ एवम् उ एवमेव एताः त्वगाद्यभिमानिनीः देवताः पाप्मभिः उपासृजन् संयोजितवन्तः । निगमयति– **एवमिति** ॥ एवमुक्तप्रकारेणैनाः मुख्यप्राणव्यतिरिक्ताः सर्वा देवताः पाप्मना अविध्यन्निति ॥ ६ ॥ इमं समर्थत्वेन प्रसिद्धम् आसन्यम् आस्ये भवं मुखान्तर्गतं प्राणं मुख्यवायुम्। स वक्ष्यमाणो दृष्टान्तो यथा लोष्टः पांसुपिण्डः अश्मानं वज्रशिलाम् ऋत्वा प्राप्य विध्वंसेत नश्यत्येव एवमेव ह खलु प्राणं वेद्धुमीप्सन्तः असुराः विध्वंसमानाः विस्रंसमानदेहाः सन्तः विष्वञ्चः सर्वत्र विनेशुः अदर्शनं प्राप्ताः। ततोऽनन्तरं देवाः प्राप्तपदा इति शेषः । अभवन् असुराः पराभवन्। योऽधिकारी एवमुक्तप्रकारेण प्राणं वेद । अस्य द्विषन् शत्रुः आत्मना परमात्मना तत्प्रसादेन पराभवति। भ्रातृव्यः भ्रातृवत्सह स्थितः पाप्मा च पराभवति ॥ ७ ॥ ते देवाः यः इत्थम् असुरविध्वंसनादिकार्यकर्तृत्वेन नोऽस्मान् असक्त प्राप्तवान् स भगवान् क नु भूत् क स्थितः इति ऊचुर्ह । आस्ये अन्त इति अयं प्राणः उवाच । प्रकारान्तरेण वायोर्महिमानमाह– **स इत्यादिना** ॥ सः प्राणः आस्यादयत इत्ययास्यशब्दवाच्यः। आङ्गिरसशब्दं निर्वक्ति– **अङ्गानामिति** ॥ ८ ॥ हि यस्माद् अस्याः प्राणाख्यदेवतायाः मृत्युः पापरूपः दूरं दूरे तस्माद्दूरिति ख्यातेति सम्बन्धः ॥ ९ ॥ एषा विष्णुबलाश्रया सा प्राणाख्या देवता यत् यस्माद् एतासां देवतानां रुद्राद्यानां सकाशात् पाप्मानं मृत्युं पापाख्यं मृत्युम् अपहत्य मोचयित्वा यत् यस्मात् तासां प्रसिद्धानां

दिशां अन्तस्तत् तत्र गमयाञ्चकार । आसां देवतानां पाप्मनः पापानि तत्तद्दिगन्तस्थितजने विन्यदधात् विशेषेण स्थापितवती । तस्मादहं पाप्मानं मृत्युं नेत् नैवान्ववायानि प्राप्नवानीति मन्वानोऽधिकारिलोकः जनं पापाश्रयं नेयात् न गच्छेत् अन्तं पापजननिवासस्थानं दिगन्तरं नेयादिति ॥ १० ॥ मृत्युविमोचनानन्तरं किमकरोद् इति जिज्ञासायाम् उक्तानुवादपूर्वकमाह– **सेति** ॥ अथ मृत्युविमोचनानन्तरम् एनाः रुद्रादिदेवताः मृत्युमति मृत्युमतिक्रम्य वर्तमानं तत्तद्देवतास्वामिकमूर्ध्वलोकम् अवहत् प्रापयामास ॥ ११ ॥ एतदेव विवृणोति– **स इत्यादिना** ॥ स वै मुख्यप्राणः प्रथमां पूर्वमेवोद्गातृत्वेन स्वीकृतां वाचमग्निमेव मृत्युम् अत्यवहत् । सा वाक् यदा मृत्युम् अत्यमुच्यत तदा सोऽग्निरभवत् । स्वपदे स्थितः । स्वव्यापारं चाकरोदित्याह– **सोऽयमिति** ॥ परेण प्राणेन एवमुत्तरत्रापि ॥ १२-१४ ॥ अतिक्रान्ताः स्वव्यापारं कुर्वन्तीति शेषः ॥ १५ ॥ अनेन देवा अभवन्निति प्रागुक्तमेव विवृतं भवति । य एवमुक्तमहिमाविशिष्टं प्राणं वेद एनम् एषा प्राणाख्यदेवता एवं वा एवमेव अग्न्यादिदेवता इव मृत्युं पापं अति अतिक्रामयित्वा तद्योग्योर्ध्वलोकं वहति प्रापयति ॥ १६ ॥ अथ देवताकार्यसाधनानन्तरं आत्मने स्वार्थम् अन्नं च तत् अद्यम् अन्नाद्यम् अन्नमिति यावत् । उद्दिश्यागायत् गानफलं लब्धं चेत्याह– **यदिति** ॥ यत्किञ्चान्नमद्यते प्राणिभिरिति शेषः । तत्सर्वमन्नम् अनेन प्राणेनैवाद्यते । कथं प्राणिभिरद्यमानमन्नम् अनेनाद्यत इत्युक्तिरित्यत आह– **इहेति** ॥ इह प्राणिषु प्रतितिष्ठति प्राणः ॥ १७ ॥ ते देवा अब्रुवन् । किमिति? यदिदं प्राणिभिरद्यमानम् एतावद्वा एतावदेवान्नम् इतोऽतिरिक्तमन्नं नास्ति तत्सर्वम् आत्मने आत्मार्थमेव त्वमागासीः । वयमप्यन्नं विना स्थातुं न शक्नुम इति । अनु त्वदनन्तरम् अस्मिन्नन्ने नः अस्मान् आभजस्व भागिनः कुर्विति ते देवाः अब्रुवन्निति सम्बन्धः । ते अन्नार्थिनो यूयं मा माम् अभि समन्ततः संविशत प्राणिदेहमिति शेषः । इति प्राणोऽब्रवीदिति शेषः । देवास्तथेति तदुक्तमङ्गीकृत्य तं

प्राणमनु समन्तं समन्ततः परिवारतया न्यविशन्त । तस्माद्देवानन्नभागिनः कृत्वा प्राणिषु निवेशितत्वात् । अनेन देवतापरिवृतेन प्राणेन प्रेरितः प्राणी यदन्नमत्ति तेनान्नेनैता देवताः तृप्यन्ति । य एवमुक्तमहिमानं प्राणं वेद यथा देवाः प्राणमभिसंविशन्ति एवं ह एनं वेत्तारं स्वाः ज्ञातयः अभिसंविशन्ति आश्रयन्ते । आश्रितानां स्वानां भर्ता पोषकः तेषां मध्ये श्रेष्ठः सन् पुरः पुरतः एता गन्ता अन्नादो भोक्ताऽधिपतिश्च भवति । प्राणविद्-विद्वेषिणोऽनिष्टमाह– **य इति** ॥ एवंविदं प्रति स्वेषु ज्ञातिषु मध्ये द्रव्यविषये वा य उ यः कश्चित्प्रति प्रतिकूलो बुभूषति भवितुमिच्छति सभार्येभ्यो भर्तव्येभ्यः तद्भरणार्थमिति यावत् । अलं समर्थो नैव भवति ह । प्राणविदनुकूलस्येष्टमाह– **अथेति** ॥ एतं प्राणविदं य एवानुभवति अनुकूलो भवति यो वा यश्चैतं प्राणविदमन्वेवानुवर्तयन्नेव भार्यान् भर्तव्यान् बुभूषति भर्तुमिच्छति स एव भार्येभ्योऽलं भवति ह ॥ १८ ॥ 'सोऽयास्यः आङ्गिरसोऽङ्गानां हि रसः' इत्युक्तं प्राण एवोपपादयितुम् अनुवदति– **स इति** ॥ उपपादयितुं प्रतिजानीते– **प्राणो वा इति** ॥ वैशब्दोऽवधारणार्थे । 'अङ्गानां रसः' इति प्रागुक्तः प्राण एवेत्यर्थः । कुत इत्यतस्तत्प्रसिद्धमित्याह– **प्राणो हीति** ॥ प्राण एवाङ्गानां शरीरावयवानां रसो नियामक इति प्रसिद्धमित्यर्थः । तन्नियामकत्वमेव कुत इत्यतस्तदुपपादनपूर्वकं हेतुसिद्धिं दर्शयति– **तस्मादिति** ॥ प्राणो यदा यस्मात्कस्माच्चिदङ्गादुत्क्रामति तदेव तदैव तदङ्गं शुष्यति हि यस्मात्तस्माद् एष प्राण एवाङ्गानां नियामक इत्यर्थः । यद्वा, तामेव प्रसिद्धिं व्यतिरेकेण दर्शयति– **तस्मादिति** ॥ तस्मादेव प्राणस्यैवाङ्गानां रसत्वादेव प्राणो यदा यस्मात्कस्माच्चाङ्गादुत्क्रामति । तदेव तदैव । तदङ्गं शुष्यति । अन्यथा तन्न स्यादित्यर्थः । निगमयति– **एष इति** ॥ १९ ॥ प्राणस्य महिमाधिक्यलाभाय तत्र बृहस्पत्यादिशब्दान् प्रतिज्ञापूर्वकं निर्वक्ति– **एष इति** ॥ उशब्दश्चशब्दार्थे । बृहस्पतिश्चेति सम्बन्धः । वाग्वै वागेव सरस्वती स्त्रीगुणैर्बृंहितत्वाद् बृहती ॥ २० ॥

वाक् अनन्तवेदाभिमानित्वाद् विष्णुना बृंहितत्वाद्वा **ब्रह्म** ॥ २१ ॥ वाग्वै सा स्त्रीषु सारत्वात् । एष प्राण अमः अमेयत्वात् । सा चामश्चेति यदर्धनारीनरात्मकत्वं तत्साम्नः सामशब्दवाच्यस्य वायोः सामत्वं सामशब्द-प्रवृत्तिनिमित्तम् । प्रकारान्तरेण सामशब्दं निर्वक्ति– **यद्वेवेति** ॥ यद् उ एवेति पदच्छेदः । उशब्द एवार्थः यस्मादेव प्लुषिणा सम एव । तदन्तर्गतरूपेण तत्तुल्यपरिमाणक एवेत्यर्थः । एवमुत्तरत्रापि । तस्माद् उ एवेति पदच्छेदः । उशब्दो वाशब्दार्थः । तस्मादेव वा साम सामशब्दवाच्यः । य एवम् उक्तनिर्वचनपूर्वकं साम सामनामकम् एतदर्धनारीनरात्मकं वायुरूपं वेद स साम्नो वायोः सायुज्यमश्नुते तद्योग्यः अन्यस्तु सलोकतामश्नुते ॥ २२ ॥ एष उ एवेत्यादिपूर्ववद् व्याख्येयम् ॥ २३ ॥ अर्धनारीनरात्मकस्य वायोः विश्वसृग्यज्ञोद्गात्रयास्यादिप्रेरकत्वरूपमहिमानमाख्यायिकयाऽऽह – **तदिति** ॥ तद् अयास्यादिप्रेरकत्वं हापि प्रसिद्धमपि ब्रह्मदत्तो नामतः चैकितानेरपत्यं चैकितानेयः राजानं सोमं भक्षयन्नुवाच लताभिमानित्वेनेयमुक्तिः । विश्वसृग्यज्ञे अयास्य आङ्गिरसश्च ऋषिः इतः प्राणाद् अन्येन प्रेरितः सन् उदगायदिति यदि स्यात् तदाऽयं राजा मया भक्ष्यमाणसोमाभिमानी चन्द्रः अस्य प्राणेनैव प्रेरित उदगायदिति वदतः मे मूर्धानं शिरः विपातयताद् विस्पष्टं पातयतु इत्युवाच । श्रुतिः शपथकरणे हेतुमाह– **वाचा चेति** ॥ चशब्दावितरेतरयोगे । सोऽयास्यादिर्हि यस्माद् वाचा च प्राणेन चार्धनारीनरात्मकवायुनैव प्रेरितः सन् उदगायदिति ॥ २४ ॥ अर्धनारीनरात्मकस्य वायोः गृहकोशसुवर्णाभिमानि-रूपेणोद्गातृस्वरस्थितत्वलक्षणं महिमान्तरं वक्तुं तात्पर्यद्योतनाय वेत्तुः फलमाह– **तस्येति** ॥ तस्य 'एष उ एव साम' इत्यादिना प्रकृतस्यैतस्यायास्याद्युद्गातृप्रेरकत्वेनो-क्तस्य साम्नोऽर्धनारीनरात्मकस्य वायोः स्वं गृहकोशाद्यभिमानिरूपविशेषं यो वेद अस्य स्वं गृहकोशादिकं भवति ह । यत् स्वं गृहकोशाद्यभिमानिरूपं तत् तस्योद्गातुः स्वर एव स्थितं वै । यस्मादुद्गातृस्वरे वायुरूपं स्थितं तस्मादार्त्विज्यं ऋत्विग्भावम् उद्गातृत्वं करिष्यन् वाचि स्वरम् इच्छेत इच्छेत्

तस्मादेव वायुरूपस्योद्गातृस्वरे स्थितत्वादेव यज्ञे उद्गातारं कर्तुमिति शेषः। स्वरवन्तं दिदृक्षन्ते यजमानाः। वायुरूपस्य स्वरे स्थितत्वेऽपि तद्वन्तं कुतो दिदृक्षन्त इत्यत उक्तम्– **अथो इति**॥ यस्माद् यस्य स्वरशब्दवाच्य-गृहकोशाद्यभिमानिवायुरूपाधिष्ठितस्वरवदुद्गातुः सकाशात् स्वं गृहकोशादिकं भवति यजमानस्य अथो तस्मात् तं दिदृक्षन्त इत्यर्थः। उक्तमेव फलं निर्धारयति– **भवतीति** ॥ २५ ॥ सुवर्णं भूषणस्वर्णाभिमानिरूपम्। शिष्टं पूर्ववत्। अनेनायास्यादीनामभावे प्राणस्वरवानेवोद्गाता कर्तव्य इत्युक्तं भवति ॥ २६ ॥ प्रतिष्ठां पीठं वाग् वागिन्द्रियं हि यस्माद्गीयते यदेति शेषः। एतदेतस्मिन् गानकाले एषः प्राणः वाचि प्रतिष्ठितः तस्माद्वागेव प्रतिष्ठेति सम्बन्धः। अन्यदा तु एष प्राण अन्ने प्रतिष्ठित इत्येके आहुः ॥ २७ ॥ अतः पूर्वोक्तमहिमाविशिष्टत्वादकारवाच्यविष्णुप्रसादाद्वा अथ मुक्त्यनन्तरं पवमानानामेव मुख्यवायुत्वयोग्यानामेव अभ्यारोहः सर्वाधिक्यारोहणं स्वसहमुक्तसर्वनियमनादि। अयास्यादीनां तत्प्रेरणयैवोद्गातृत्वात्स वै वायुत्वयोग्य एव प्रस्तोता प्रस्तोतुं योग्य इति स एव साम प्रस्तौति। स प्रस्तोता यत्र यदा। प्रस्तूयात् प्रस्तावमारभेत तत् तदा प्रस्तावकाले एतानि वक्ष्यमाणानि विष्णुप्रार्थनरूपाणि यजूंषि स्तोत्राणि जपेत्। तान्युदाहरति– **असत इति**॥ तिरोहितार्थत्वादुदाहृतमन्त्रमनूद्य व्याचष्टे– **स इति** ॥ स मन्त्रो यदाह तत्र मृत्युर्वा असदित्यादि योजना। मृत्युः दुःखात्मकः अमृतम् आनन्दात्मकम्। पदार्थमुक्त्वा वाक्यार्थमाह– **मृत्योरिति** ॥ तात्पर्यमाह– **अमृतमिति** ॥ तद्वाक्यमित्येवाऽहेत्यर्थः। एवमुत्तरत्रापि। मृत्युरज्ञानात्मकः अमृतं ज्ञानात्मकम्। तिरोहितमिव तिरोहितमेव नैवेति वाऽन्वयः। अतो न व्याख्येयमिति भावः। इतराणि उदाहृतमन्त्रव्यतिरिक्तानि उद्गाने वायुना विनियुक्तानि आत्मने आत्मार्थम्। वायुपदयोग्यस्यैवाभिमतफलसाधकत्वेन वरार्थं स एव प्रार्थनीय इत्याह– **तस्मादिति** ॥ एवंवित् उदाहृतमन्त्रार्थवित्। अत एव वायुपदयोग्य उद्गाता यजमानाय वा आमने वा। यं कामं काम्यं फलत्वेन कामयते

तमुद्दिश्य गायति । तत् वायुपदयोग्यकृतमेतदुद्गानं लोकजिदेव कामितलोकादिफलसाधनमेव ह निश्चितम् । यस्मात्तस्मात्तेषु वायुपदयोग्येष्वेवोद्गातृषु सत्सु यजमानो यं कामं कामयते तं वरं वृणीतेति सम्बन्धः । य एवमुक्तप्रकारेण सामनामकं वायुं वेद तस्य वेत्तुः अलोक्यतायाः लोकस्यायं लोक्यः न लोक्यः अलोक्यः तस्य भावस्तथा । लोकराहित्यस्येति यावत् । आशा नास्ति अरिणा न कार्येति भावः ॥ २८ ॥

इति उद्गीथब्राह्मणम् ॥ ३ ॥

उपनिषत्—

## अथ प्राजापतिब्राह्मणम्

[चतुर्मुखब्रह्मणि अहम् इत्यादिनामनिर्वचनम्, सृष्टिवर्णनं च]

**आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहं नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥**

भाष्यम्—

इदमग्रे एतस्याग्रे परमात्मैवाऽसीत् । ततः पुरुषविधो ब्रह्माऽऽसीत् । पुरुषो विष्णुस्तद्विधत्वात्पुरुषविधः ।

एतस्य जगतो ह्यग्र आसीन्नारायणः परः ।
एक एव श्रिया सार्धं तमात्मा पुरुषेत्यपि ॥
आहुस्तस्मात्पुरुषविधो ब्रह्मा समभवद् विभोः ।
ब्रह्मादेश्च श्रियश्चैव नित्यं विष्णुर्गुणात्मकः ॥

**यथा तथैव रुद्रादेर्ब्रह्मा यस्माद् गुणाधिकः ।**
**एतस्मात्पुरुषविधता ब्रह्मणः सम्प्रकीर्तिता ।।**
**स तु सर्वा दिशो दृष्ट्वा नान्यद् दृष्ट्वा पितामहः ।**

**टिप्पणी—**

**अथ भाष्यार्थः**

'स तया वाचा तेनाऽत्मनेदं सर्वमसृजत' इत्युक्तसृष्टिप्रकारं दर्शयति– **आत्मैवेत्यादिना** ।। तद्वाक्यं परैरिदं दृश्यमानं शरीरभेदजातम् अग्रे शरीरान्तरोत्पत्तेः प्राग् आत्मैव प्रजापतिरेवासीदिति व्याख्यातम् । तदसत् । शरीरान्तरोत्पत्तेरित्यध्याहारप्रसङ्गात् । शरीरभेदजातस्य तस्य जडस्य प्रजापतिमात्रत्वायोगाच्चेति भावेन तद्वाक्यं व्याचष्टे– **इदमिति** ।। एतस्येति वदता षष्ठ्यर्थे द्वितीयेत्युक्तं भवति । पुरुषविध इत्येदात्मनो विशेषणम् इति परेषां व्याख्यानमप्रामाणिकमिति भावेन तद्व्याचष्टे– **तत इति** ।। अनेनाऽसीदित्यस्योत्तरत्रापि सम्बन्धः । तत इत्यध्याहार इत्युक्तं भवति । पुरुषविधः पुरुषाकारशिरःपाण्यादिलक्षण इत्यन्यथाप्रतीतिनिरासायाऽह– **पुरुष इति** ।। अप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च न परकीयं व्याख्यानं युक्तमिति भावेन ब्राह्मणं प्रमाणेन व्याचष्टे– **एतस्येति** ।। आत्मैवेत्येवकाराभिप्रायमाह– **एक एवेति** ।। तर्हि श्रिया सार्धमित्युक्तिः कथमित्यत उक्तम्– **पर इति** ।। सर्वोत्तम इत्यर्थः । ननु श्रुतावात्मेति श्रवणान्नारायण इत्युक्तिः कथमित्यत आह– **तमिति** ।। पुरुषेत्यपीति पुरुषविधशब्दगतपुरुषशब्दार्थकथनम् । तस्मात्प्रभोरिति सम्बन्धः । ननु पुरुषसादृश्यस्य सर्वसाधारण्याद् विशिष्य किमुच्यते पुरुषविधो ब्रह्मेतीत्यत आह– **ब्रह्मादेरिति** ।। एतस्मादेवेति सम्बन्धः । यथा विष्णुश्चेतनवर्गे उत्तमस्तथाऽधिकारिवर्गे ब्रह्मोत्तम इत्यनेन प्रकारेण सर्वोत्तमतैव ब्रह्मणः पुरुषविधतेति भावः । 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्' इत्येतद् व्याचष्टे– **स इति** ।। दिग्दर्शनस्यान्यादर्शनपूर्वकालीनत्ववद् अन्यादर्शनस्यापि व्याहरणपूर्वकालीनत्वात् नान्यद् दृष्ट्वेत्युक्तम् ।।

**भाष्यम्——**

**अब्रवीदमहमस्मीति स्वाहेयत्वमनुस्मरन् ॥**
**हातुं शक्यमिदं सर्वमासीदेकोऽभवं यतः ।**
**अहेयत्वं स्वरूपस्य स एवं समचिन्तयत् ॥**
**ततोऽभवदहंनामा स चाभूत्पुरुषाभिधः ।**
**ओषणात्सर्वपापानां पूर्वः पुरुष उच्यते ॥**
**नारायणप्रसादेन य एवं पुरुषाभिधम् ।**
**वेद स्वाभिमतं यस्तु पूर्वं प्राप्तुमभीप्सति ॥**
**ओषेत् स्वयमतुष्टः सन् ब्रह्मविष्णुप्रसादतः ॥ १ ॥**

**टिप्पणी——**

'स विराडात्माहमस्मि सर्वात्मेत्यग्रे प्रथमं व्याहरत् ज्ञातवान्' इति व्याख्यानमसत् । विशिष्टैक्यानङ्गीकारात् चैतन्यैक्यस्य च प्रमाणविरुद्धत्वाद् इति भावेन 'सोऽहमस्मि' इति वाक्यं व्याचष्टे— **अब्रवीदिति** ॥ स्वसम्बन्धिनोऽन्यस्याप्यहेयत्वात् किं विशिष्योच्यते स्वाहेयत्वमितीत्यतस्तदेव विशदयति— **हातुमिति** ॥ किं स्वसम्बन्धिदेहेन्द्रियादिकं वा स्वाहेयमुत पुत्रवित्तादिकं वा नाऽद्य इत्याह— **हातुं शक्यमिति** ॥ अस्वाभाविकत्वादिति भावः । नेतरः तेषामधुनाप्यनुत्पन्नत्वाद् इत्याह— **एक इति** ॥ उत्पत्स्यमानमपीदं पुत्रादिकं हातुं शक्यमेवेत्याह— **हातुमिति** ॥ ततः स्वरूपस्यैव स्वाहेयत्वं समचिन्तयदिति सम्बन्धः । स एवमिति पाठे एवमित्यस्य तत इत्यर्थः । 'ततोऽहंनामाऽभवत्' इत्येतद् व्याचष्टे— **तत इति** ॥ यतोऽब्रवीत्तत इति सम्बन्धः । स यत्पूर्व इत्येतद्वाक्योक्तः क इति न ज्ञायते अत आह— **स चेति** ॥ न केवलं नारायणः पुरुषाभिधः ब्रह्मा चेति समुच्चयार्थश्चशब्दः । पुरुषाभिधश्चेति वा । तद् व्याचष्टे— **ओषणादिति** ॥ पुरु इत्यस्यार्थः— **पूर्व इति** ॥ अथवा पुरु इत्यस्यार्थः– **स चेति** । उष इत्यस्यार्थः— **ओषणादिति** ॥ नारायणप्रसादेनौषणादिति सम्बन्धः । तेनोक्तप्रवृत्तिनिमित्तेन पुरुषशब्दाभिधेयत्वं नारायणस्यैव मुख्यत इति सूच-

यति । ओषति ह वै इति फलवाक्यं व्याचष्टे– **य एवमिति** ।। पुरुषाभिधं ब्रह्माणमिति शेषः । स वेत्ता यस्तु शत्रुः स्वाभिमतम् अधिकार्यभिमतं पूर्वं प्राप्तुमभीप्सति तं ब्रह्मा विष्णुप्रसादतः स्वयमतुष्टः सन् ओषेत् ओषतीति योजना ।। १ ।।

उपनिषत्—

[भयजनकविरोध्यभावाद् ब्रह्मणः भयं नास्ति]

**सोऽबिभेत्तस्मादेकाकी बिभेति सहायमीक्षाञ्चक्रे यन्मदन्य-न्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभैष्यद् द्वितीयाद्वै भयं भवति ।। २ ।।**

भाष्यम्—

तस्य त्वेकस्य सहसा यतो भीः समजायत ।
तस्मादद्यापि चैकस्य निर्विवेकं भयं भवेत् ।।
विममर्श ततो ब्रह्मा यस्मान्मद्बाधको नहि ।
मया सृज्या यतः सर्वे इतः पश्चात्तनो हरः ।।
अतः कस्माद्बिभेमीति तस्य भीतिरपोहिता ।
विष्णोरतिप्रियत्वात्तु तदन्येषां पितृत्वतः ।।
कस्माद्भयं भवेत्तस्य समानाद्धि भयं भवेत् ।
विरोधिनोऽधिकाद्वाऽपि हीनाद्वा पारवश्यतः ।।
हीनमेव यतस्तस्य सर्वमेव जगद्वशे ।
नच जातं तदा सर्वं हरिरेव यतः परः ।। २ ।।

टिप्पणी—

अथ भाष्यार्थः

'सोऽबिभेत्तस्मादेकाकी बिभेति' इत्येतद् व्याचष्टे– **तस्येति** ।। निर्विवेकमिति क्रियाविशेषणम् । 'सहायमीक्षाञ्चक्रे' इत्येतद् व्याचष्टे– **विममर्शेति** ।।

यद् यस्मान्मत्तोऽन्यद्वस्त्वन्तरं किमपि नास्ति तस्मादहं प्रत्यक् चैतन्याद् द्वितीयब्रह्मरूपः कस्मान्नु बिभेमीति परकीयव्याख्यानमसत् । चैतन्यैक्यस्य अप्रामाणिकत्वादिति भावेन यन्मदन्यदित्यादि वीयायेत्यन्तं वाक्यं व्याचष्टे– **यस्मादिति** ॥ पञ्चममुखच्छेत्तृत्वेन हरस्यैव बाधकत्वं स्यादित्यत आह– **इत इति** ॥ द्वितीयाद् वै भयं भवति नतु स्वस्मात् । द्वितीयं चाविद्याकल्पितम् इति व्याख्यानमसत् । अविद्याकल्पितत्वस्याप्रामाणिकत्वादिति भावेन कस्मादिति वाक्यं व्याचष्टे– **विष्णोरिति** ॥ द्वितीयादित्येतत् त्रेधा व्याचष्टे– **समानादिति** ॥ विरोधिन इत्येतदत्रापि सम्बध्यते । पारवश्यतः हीनस्य स्वानधीनत्वतः । पारवश्यतः स्वस्य हीनाधीनत्वतो वेत्यर्थः । प्रकृते त्रयाणामप्यभावादिति पक्षधर्मता द्रष्टव्या । तत्राऽद्यस्योपपादनम्– **तदन्येषां पितृत्वत इति** । द्वितीयस्योपपादनम्– **विष्णोरिति** ॥ तस्येत्येतदत्रोभयत्रापि सम्बद्ध्यते । तृतीयमुपपादयति– **हीनमेवेति** ॥ यतः सर्वं हीनं जगत् तस्यैव वशे एव न पुनः स तद्वशः तद्वा एतदवशमित्यर्थः । एवं हीनसद्भावमभ्युपेत्य तस्य स्वानधीनत्वाभावेन भयहेतुत्वं नास्तीत्युक्तम् । इदानीं हीनं नास्त्येव तदाऽनुत्पन्नत्वादित्याह– **नचेति** ॥ जातं च नेति सम्बन्धः । अधिकस्य विष्णोरतिप्रियत्वेऽपि अन्यस्मादधिकाद्भयं किं न स्यादित्यत आह– **हरि-रेवेति** ॥ परः अधिकः ॥ २ ॥

**उपनिषत्—**

[ब्रह्मसरस्वतिकृता सृष्टिः]

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् स हैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ स इममेवाऽत्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥**

भाष्यम्—

> न रेमे स ततो ब्रह्मा तस्मादेकस्य नो रतिः ।
> [१]अथापि पत्नीमैच्छच्च स स्थूलत्वमुपागतः ॥
> दम्पती सहितौ यावद् ब्रह्मा चैव सरस्वती ।
> तावद्देहोऽभवद् ब्रह्मा तदा देहं द्विधाऽकरोत् ॥
> पातनात्पतिपत्नीत्वशब्द एनोरजायत ।
> तस्मात्तयोरेकसुखं भवत्येवार्धपात्रवत् ॥
> ततस्तस्यामुमेशादीन् देवान् सर्वान् मनूनपि ।
> जनयामास बोधस्य प्राधान्यं हि मनुष्यता ॥ ३ ॥

टिप्पणी—

'स वै नैव रेमे तस्मादेकाकी न रमते' इत्येतद्व्याचष्टे– **नेति** ॥ तत एकत्वात् । 'स द्वितीयमैच्छत्'इत्येतद्व्याचष्टे– **अथापीति** ॥ अथशब्दो हेत्वर्थे अपिशब्द एवार्थे । रत्यभावादेवेत्यर्थः । 'स हैतावानास यथा स्त्री-पुमांसौ सम्परिष्वक्तौ'इति वाक्यं व्याचष्टे– **स इति** ॥ पूर्वदेहं परित्यज्य तावद्देहोऽभवदिति प्रतीतिनिरासार्थं स स्थूलत्वमुपागत इत्युक्तम् । यत्किञ्चि-द्दम्पती देहद्वयसमपरिमाणकदेहेन सरस्वत्युत्पादनायोगाद् 'ब्रह्मा चैव सरस्वती'इत्युक्तम् । ब्रह्मा सरस्वती चेति दम्पती । स एव तद्देहवानेव स्थूलत्वमुपागतः सन्नित्यन्वयः । 'स इममेवाऽत्मानं द्वेधापातयत्'इत्येतद् व्याचष्टे– **तदेति** ॥ 'ततः पातनात्पतिर्मन्वाख्यः पत्नी शतरूपा चाभवतामिति परकीयव्याख्यानं अप्रामाणिकमिति भावेन ततः पतिश्च पत्नी चाभवताम्' इत्येतद् व्याचष्टे– **पातनादिति** ॥ द्वन्द्वात्परस्त्वप्रत्ययः उभयत्रापि सम्बद्ध्यते । शब्द इति जात्यपेक्षयैकवचनम् । पतित्वपत्नीत्वनिमित्तकः पतिरिति पत्नीतिशब्दः एनोरेतयोरजायतेत्यर्थः । पत्नी चेति पाठे पतिः पत्नी चेतिशब्द इत्यर्थः ।

---

१. 'अद्यापि' इति ह.ती. ।

अन्यव्याख्याने तु कथं नु माऽऽत्मन एव जनयित्वेत्युत्तरवाक्यविरोधः । प्रजापतिना शतरूपोत्पत्तिस्वीकारान्मनोश्च सम्भोगकर्तृत्वादिति भावः । 'तस्मादिदमर्धबृगलमिव स्व' इति वाक्यं व्याचष्टे– **तस्मादिति** ।। तस्मात् द्विधाभूतैकदेहत्वात् तयोर्जायमानं सुखम् । सप्तम्यर्थे वतिः । पात्रार्धद्वयस्थित-घृतवदित्यर्थः । 'ततो मनुष्या अजायन्त'इत्येतद् व्याचष्टे– **तत इति** ।। मनुष्यशब्दो मनुष्येषु प्रसिद्धः अतः कथं देवानित्यादिव्याख्यानम् इत्यत आह– **बोधस्येति** ।। मनुष्यता मनुष्यशब्दप्रवृत्तिनिमित्तम् । अन्यथा 'सैषा ब्रह्मणोऽतिसृष्टिर्यच्छ्रेयसो देवानसृजत' इत्युत्तरवाक्यविरोधः स्यादिति भावः ।। ३ ।।

उपनिषत्—

**सोहेयमीक्षाञ्चक्रे कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवत् वृषभ इतरस्ताꣳ समेवाभवत्ततो गावो अजायन्त बडबेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताꣳ समेवाभवत्तत एकशफ-मजायताजेतराऽभवद् बस्त इतरोऽविरितरा मेष इतरस्ताꣳस-मेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमा-पिपीलिकाभ्यस्तत्सर्वमसृजत ।। ४ ।। सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत् सृष्ट्याꣳहास्यैतस्यां भवति य एवं वेद ।। ५ ।।**

भाष्यम्—

सर्वज्ञाऽपि तु सा देवी विरिञ्चे भक्तिमत्यपि ।
तद्भार्यतामात्मनश्च नितरां धर्ममीक्षती ।।

**अनाद्यनन्तसम्बन्धमुभयोरपि जानती।**
**स्त्रीस्वभावं दर्शयन्ती साऽधर्ममिव चैक्षत॥**
**नानासृष्टिप्रसिद्ध्यर्थं सा गोत्वादिकमाव्रजत्।**
**ऋषभादिरूपतां सोऽपि प्राप्य सृष्ट्वेदमञ्जसा॥**
**सर्जनात्सृष्टिनामाऽभूत्तद्वित्तत्पुत्रतां व्रजेत्।**
**पिपीलिकान्तरुद्रादौ यथायोग्यत्वमात्मनः॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

'सोहेयमीक्षाञ्चक्रे कथं नु माऽऽत्मनः' इत्यत्र सरस्वत्या अज्ञानाभक्त्यादि प्रतीयते तां निवारयंस्तिरोभावस्य प्रयोजनमाह– **सर्वज्ञाऽपीति** ॥ पुरुषे आगते स्त्रियस्तिरोभवन्तीति स्त्रीस्वभावं दर्शयन्ती । ब्रह्मसृष्टायाः स्वस्याः तत्सम्भोगमधर्ममिवेत्यर्थः । सरस्वती ब्रह्मणोर्गोत्वादिभावे प्रयोजनमाह– **नानेति** ॥ ४ ॥ 'सोऽवेदहं वाव सृष्टिरस्म्यहं हीदं सर्वमसृक्षि' इति वाक्यं व्याचष्टे– **सर्जनादिति** ॥ 'सृष्ट्यां हास्य' इति फलवाक्यं व्याचष्टे– **तद्विदिति** ॥ तत्पुत्रतां साक्षात्पुत्रतां परम्परया पिपीलिकादिजन्मनो ज्ञानफलत्वायोगात्। एतस्यामित्यस्यार्थः पिपीलिकान्तरुद्रादाविति ॥ ५ ॥

**उपनिषत्—**

[अग्न्यन्नयोः सृष्टिः]

**अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतो अलोमका हि योनिरन्तरत-स्तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिर्यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः**

**सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥**

इति चतुर्थं प्राजापत्यब्रह्मणम्

भाष्यम्—

अथान्नादमथाप्यन्नं स्रक्ष्यामीति विचिन्तयत्।
ओष्ठद्वयं ममन्थान्तर्हस्तौ चैव परस्परम्॥
तन्मुखाच्चैव हस्ताभ्यामन्तरग्निरजायत।
एवं सर्वस्य हेतुत्वात्सर्वस्यापि पतित्वतः॥
सर्वे देवा एष एवेत्याहुर्वेदविदो जनाः।
स्वतन्त्रेषु यतः शब्दा वर्तेयुः सर्व एव च॥
स रेतसः पुनः सोममसृजद्ब्रह्मविद्धरः।
सर्वाधिकोऽपि योग्यत्वान्मर्त्यधर्मतया पुरा॥
अवमो योग्यताहीनानप्यायुर्मात्रतोऽधिकान्।
यतोऽस्रागतिसृष्टिस्तदेवं यो वेद पूरुषः॥
विष्णोः प्रसादतः सृष्टिं देवलोके स जायते।
आत्मयोग्यानुसारेण सुखज्ञानादियुक्तता॥ इति ब्रह्मतर्के॥
भगवदुपासनामाहात्म्यमेतदिति दर्शयितुं तद्यदिदमाहुरित्याद्यारम्भः॥ ६ ॥

इति प्राजापत्यब्राह्मणम्

टिप्पणी—

अथ भाष्यार्थः

अथेतीति पदद्वयमपेक्षितपूरणेन व्याचष्टे– **अथेति** ॥ अन्नमपीति सम्बन्धः। अभ्यमन्थदित्येतच्छेषं पूरयन् व्याचष्टे– **ओष्ठद्वयमिति** ॥ अन्तरेवेति सम्बन्धः। चशब्देन योनेरपि समुच्चयः। एवमेव मुखाच्चैवेत्येवकारच शब्दयोरर्थौ ज्ञेयः। स मुखाच्चेत्यादि व्याचष्टे– **तन्मुखादिति** ॥ 'एतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः' इति वाक्यस्य हि यस्माद्यः सर्वोऽपि देवभेद एतस्यैव

प्रजापतेः सा विसृष्टिस्तस्मादेष एव हिरण्यगर्भः सर्वे देवाः नान्यद्देवतान्तरमस्तीति परव्याख्यानम् असत्। विशिष्टैक्यस्यानङ्गीकारात् चैतन्यैक्यस्य बाधितत्वादिति भावेन सामानाधिकरण्यव्यपदेशे निमित्तमाह– **एवमिति** ।। अनेन श्रौतो हिशब्दो हेत्वर्थ इत्युक्तं भवति। नन्वेवं सति सर्वे देवा इति प्रयोगस्यामुख्यत्वं स्यात् मुख्ये सत्यमुख्यग्रहणायोगादित्यत आह– **स्वतन्त्रेष्विति** ।। स्वतन्त्रेष्वेवेति सम्बन्धः । अथ यत्किञ्चेत्यादि सोम इत्यन्तं वाक्यं व्याचष्टे– **स इति** ।। श्रेयस इति देवानां श्रेयस्त्वोक्त्या अर्थाच्चतुर्मुखस्यावमत्वं सूचितम् । तदुभयं च न परस्परावधिकं किन्तु कयाचन विवक्षयेति वक्तुम् अथ यन्मर्त्यः सन्निति वाक्यं प्रवृत्तमित्यभिप्रेत्य तद्वाक्यद्वयं व्याचष्टे– **सर्वेति** ।। पुरा पूर्वं सरस्वत्या मिथुनीभावादिमर्त्यधर्मतयाऽवम इत्यनेन श्रुतौ मर्त्यः सन्नित्येतत् पूर्ववाक्यसूचितावमत्वोपपादकमिति। आयुर्मात्रतोऽधिकानित्यनेनामृतानित्येतत् श्रेयस इत्युक्तश्रेयस्त्वोपपादकमित्युक्तं भवति। अन्यथा यच्छ्रेयसो देवानसृजतेत्यनेनैव अतिसृष्टत्वस्योपपादितत्वाद् अस्य वाक्यस्य वैयर्थ्यं स्यादिति भावः । ननु परस्परावधिकत्वेनैव ब्रह्मणो देवानां चावमत्वश्रेयस्त्वे किं न स्याताम् इत्यत उक्तम् 'सर्वाधिकोऽपि योग्यत्वात्'इति । 'योग्यताहीनान्'इति च । अतिसृष्ट्यामिति फलवाक्यं व्याचष्टे– **एवमिति** ।। यः पुरुषः एवं सृष्टिं वेद स विष्णुप्रसादतः देवलोकेऽजायत इति सम्बन्धः । देवलोके जननमात्रेण देववत् तस्य सुखमित्याह– **आत्मेति** ।। यद्वा, तदयोग्यानां फलमाह– **आत्मेति** ।। ननु 'ततो मनुष्या अजायन्त'इत्यस्य ततस्तस्यामुमेशादीन् देवान् सर्वान् मनूनपि जनयामासेति व्याख्यानमयुक्तम् । तथा सति 'तद्यदिदमाहुः'इत्याद्युत्तरग्रन्थस्य देवतासृष्टिप्रतिपादकस्य वैयर्थ्यापत्तेरित्यतस्तस्य प्रयोजनमाह– **भगवदिति** ।। एतत्प्रागुक्तं सृष्टिकर्तृ त्वम् तथाचैतस्यैव सा विसृष्टिरिति पूर्वोक्तमेव सृष्टिकर्तृत्वमनूद्य तत्तस्माद्भगवदुपासनादिति तस्य भगवदुपासनानिमित्तकत्वमुच्यते नतु देवसृष्टिः पुनरुच्यत इति न वैयर्थ्यमिति भावः ।। ६ ।।

### अथ खण्डार्थः

इदमग्रे एतस्याग्रे परमात्मैवाऽसीत् । ततः पुरुषविधो ब्रह्मासीत् । स ब्रह्मा स्वरूपस्य स्वाहेयत्वं स्मरन् अहमस्मीति अग्रे पूर्वं व्याहरत् ततोऽहंनामाऽभवत् । यस्मादेवं तस्मात्तत्सृष्टोऽपि लोकः एतर्हि एतस्मिन् काले आमन्त्रितः कस्त्वमिति पृष्टोऽहमयमित्येव अग्रे प्रथममुक्त्वाऽथानन्तरम् अन्यत्पिण्डविषयं यदस्य पुरुषस्य मातापितृकृतं भवति तन्नाम प्रब्रूते कथयति । स ब्रह्मा यद् यस्मात् सर्वस्मादस्मादधिकारिवर्गात् पूर्वो मुख्यः सन् सर्वान् पाप्मनः औषद् ददाह तस्मात्पुरुषः पुरुषशब्दवाच्यः । य एवमुक्तप्रकारेण पुरुषाभिधं ब्रह्माणं वेद सः तम् ओषति दहति । तं कं योऽस्मादधिकारिणः पूर्वः सन् बुभूषति भवितुमिच्छति तदभिमतं स्वयं प्राप्तुमिच्छतीति यावत् । तमिति सम्बन्धः ॥ १ ॥ स ब्रह्माऽबिभेद् भीतवान् एकाकित्वाद् यस्मादेवं तस्माद् अद्यतनो यः कोऽपि एकाकी निर्विवेकं बिभेति । सोऽयं ब्रह्मा ईक्षां विमर्शं चक्रे ह । किमिति? यद् यस्मादन्यत् मद्बाधकं नास्ति अतः कस्माद् बिभेमीति । तत एव विमर्शनादेव अस्य भयं वीयाय विस्पष्टं गतवत् । तत्रोपपत्तिाह– **कस्मादिति** ॥ हि यस्माद् द्वितीयाद्विरोधिनः समानाद्विरोधिनोऽधिकात् स्वानधीनहीनाद्वा भयं भवति तच्चात्र नास्ति अतः कस्मादभेष्यत् इति ॥ २ ॥ स वा इत्येतत्पूर्ववद् व्याख्येयम् । स ब्रह्मा एकस्य रमणाभावाद् द्वितीयं पत्न्याख्यमैच्छत् । स्त्रीपुमांसौ सरस्वतीब्रह्माणौ सम्परिष्वक्तौ सहितौ यथा यावत् तद्देहद्वयं मिलितं यावत्परिमाणकं एतावान् एतद्देहवानास । स इममेव स्थूलमेवाऽत्मानं देहं द्वेधाऽपातयत् । ततः पातनाद् ब्रह्मसरस्वत्यौ पतिश्च पत्नी च पतिपत्नीशब्दवाच्यौ अभवताम् । तस्मादेतयोरेकदेहविभक्तदेहवत्त्वात् । इदम् एतद्देहद्वयनिमित्तकम् अनयोर्जायमानं स्वः सुखम् अर्धबृगलमिव एकपात्रार्धद्वयस्थितघृतवत् । अत्राभियुक्तसम्मतिमाह– **इतीति** ॥ तस्मादर्धाङ्गित्वादेव अयं पुरुषदेहसन्निहितः आकाशः प्रदेशः स्त्रिया पूर्यत एव । तां सरस्वतीं समभवत् । ततः सम्भोगानन्तरं मनुष्या

बोधप्रधानका देवाद्याः अजायन्त ॥ ३ ॥ सा उ ह इयम् इति पदच्छेदः। याऽनादिकालतो ब्रह्मणः स्त्री सैवेयम् । सरस्वती इक्षां विचारं चक्रे ह। किमिति? । मा माम् आत्मनः स्वस्मादेव जनयित्वा कथं नु सम्भवति सम्भोगं करोति । हन्तेत्याश्चर्ये । तिरोसानीति तिरोभूतासानीति । एवं लौकिकस्त्रीस्वभावं दर्शयित्वा गवादिनानासृष्ट्यर्थं सा सरस्वती गौरभवत्। इतरश्चतुर्मुखः वृषभः सन् तां समभवत् । ततो गोवृषसंयोगेन गावोऽजायन्त। इतरा सरस्वती वडवाऽश्वा अभवत् । इतरः अश्ववृषः अश्वश्रेष्ठः । तां समभवदिति सम्बन्धः । इतरा गर्दभी अभवत् । इतरो गर्दभः तामेव गर्दभीमेव समभवत् । ततो वडवा श्ववृषादिसम्भोगेन एकशफम् अश्वगर्दभाद्येक-शफोपेतजातीयमजायत । बस्तः च्छागः शिष्टं पूर्ववत् । एवमेवोक्तप्रकारेण सन् ब्रह्मा आपिपीलिकाभ्यः पिपीलिकापर्यन्तं यदिदं किञ्च मृगकीटादिकं मिथुनं मिथुनसृष्टियोग्यं तत्सर्वमसृजत ॥ ४ ॥ स ब्रह्माऽवेत् व्यजानात्। किमिति? अहमेव सृष्टिः सृष्टिनामकोऽस्मि । कुतः हि यस्मादहम् इदं देवादिपिपीलिकान्तं सर्वम् असृक्षि सृष्टवान् इति । ततः सृष्टिकर्तृत्वेन प्रवृत्तिनिमित्तेन सृष्टिरस्मीति ब्रह्मणो ज्ञानात्सृष्टिः सृष्टिनामकोऽभवदिति वेदपुरुषः स्वयमाह । यो योग्यः एवमुक्तनिमित्तेन सृष्टिनामानं ब्रह्माणं वेद सोऽस्य चतुर्मुखस्य, कर्तरि षष्ठी । एतस्यां रुद्रादिपिपीलिकान्तविषयायां सृष्ट्यां भवति । साक्षाद् ब्रह्मसृष्टानामेतेषां मध्ये स्वयोग्यतानुसारेण तत्पुत्रो भवतीत्यर्थः ॥ ५ ॥

भोक्तृसृष्टिमुक्त्वा पाचकसृष्टिमाह– **अथेति** ॥ अथ भोक्तृसृष्ट्यनन्तरम् । अन्नमन्नादं च स्रक्ष्यामीति चिन्तयन् मुखस्य ओष्ठद्वयं हस्तद्वयं योनिं च अन्तः परस्परमभ्यमन्थत् । स मुखाद्योनेश्च हस्ताभ्यां चाग्निमसृजत। तस्माद्दाहकाग्न्युत्पत्तिस्थानत्वात् हस्तद्वयं मुखं चेत्येतदुभयम् अन्तरतः अलोमकम्। योनिः अन्तरतः अलोमका हीति प्रसिद्धम् । पूर्वोक्तदेवतास्रष्टृत्वं किं स्वसामर्थ्यादित्यतो भगवदुपासनाजनितप्रसादादित्याह– **तद्यदिदमिति** ॥

एकैकं देवमुद्दिश्य अमुं रुद्रं अमुम् इन्द्रं यजेति यत् सा विसृष्टिः विशिष्टसृष्टिः। एतस्यैव चतुर्मुखस्यैव हि यस्माद् उ तस्मादेव सर्वे देवा एष एवेति यदाहुर्वेदविदः इदं तत्तस्मात् भगवदुपासनाजनितप्रसादादिति । अथ पाचकसृष्ट्यनन्तरं यत्किञ्चेदम् आर्द्रं द्रवात्मकम् अन्नं तत् रेतसोऽसृजत। तदार्द्रं सोम एव सोमाभिमन्यमानकमेव। स्रष्टव्यान्तरशङ्कां वारयति– **एतावद्वा इति** ॥ इदं सृज्यं सर्वम् एतावद् वा एतावदेव । कियदित्यत आह– **अन्नमिति** ॥ प्रजाश्चेत्यपि ग्राह्यम् । किमन्नं कोऽन्नाद इत्यत आह– **सोम एवेति** ॥ यद्वा, अन्नान्नादयोः सृष्टेः प्रागनुक्तत्वात्कथमेतदित्यत आह– **सोम एवेति** ॥ सैषा प्रागुक्ता ब्रह्मकर्तृकदेवसृष्टिः अतिसृष्टिः । कथं? यद् यस्माद् अवमो ब्रह्मा श्रेयसः अधिकान् देवानसृजत तस्माददतिसृष्टिरिति सम्बन्धः । देवोत्तमस्य ब्रह्मणः कथमवमत्वं देवानां च कथं श्रेयस्त्वम् इत्यभिप्रेत्य शङ्कते– **अथेति** ॥ ब्रह्मणो देवानां च यदवमत्वं श्रेयस्त्वं च न तत्परस्परावधिकं किन्तु कयाचन विवक्षयेति भावेनोत्तरमाह– **यदिति** ॥ यद् यस्मान्मर्त्यः सन् मर्त्यधर्मोपेतः सन् अमृतान् अमृता इवामृतान् बहुकालं जीवतः असृजत तस्माच्छ्रेयसो देवानसृजतेति सम्बन्धः । तथाच ब्रह्मा मर्त्यधर्मत एवावमो नतु स्वरूपयोग्यतया । देवाश्चाऽयुर्मात्रत एवाधिका न तु स्वरूपेणेति भावः । वेत्तुः फलमाह– **अतिसृष्ट्यामिति** ॥ योऽधिकारी एवमुक्तप्रकारेण अतिसृष्टिं वेद सोऽस्य ब्रह्मणः एतस्याम् अतिसृष्ट्यां देवसम्बन्धिन्यां सृष्ट्यां भवति देवलोके जायत इति यावदिति ॥

इति प्राजापतिब्राह्मणम्

**उपनिषत्—**

## अथ अव्याकृतब्राह्मणम्

[सर्वगुणानां आत्मशब्दार्थे अन्तर्भावाद् आत्मनाम्ना सर्वगुणपूर्णत्वोपासनं कार्यम्]

**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौ**

नामायमिदꣳ रूप इति । तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौ नामायमिदꣳरूप इति स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये तन्न पश्यन्त्यकृत्स्नो हि स प्राणन्नेव प्राणनामा भवति वदन् वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदात्कृत्स्नो ह्येषोऽत एकैकेन भवत्या-त्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳश्लोकं विन्दते य एवं वेद ॥ १ ॥

भाष्यम्—

विश्वम्भरो वायुः । 'अकृत्स्नो हि स' इत्यस्याभिप्रायः 'स योऽत एकैक-मुपास्ते न स वेद' इत्यादि । प्राण इत्यादिनामानि परमेश्वरस्य न सर्वगुणसम्पूर्णतां वदन्ति । किन्तु प्राणनादिकर्मकर्तृत्वमेव वदन्ति । आत्मशब्द एव सर्वगुणपरिपूर्णत्वं वदति । अस्य सर्वस्य गुणजातस्यायमाऽत्मैव पदनीय आश्रयो यस्मादतस्तं सर्वगुणवाचकेनाऽत्मशब्देनैवोपासीत । अनेन ह्येतत्सर्वं वेद यस्मात्सर्वज्ञानप्रदस्तस्मा-त्सर्वगुणसम्पूर्णः इत्येवोपासनं तस्य युक्तम् । तदुपासनादेव सर्वज्ञत्वादयो भवन्ति किमु तस्येति । पद्यते अनेनेति पदं साधनम् । यथा तत्तत्साधनेन तत्तत्फलं प्राप्नुयादेवं सर्वगुणयुक्तत्वेन भगवदुपासनात्कीर्तिं श्लोकं च विन्दते । शं लोकः श्लोकः परमानन्दं परमं ज्ञानं चेत्यर्थः । लुकृ प्रकाश इति धातोः ।

टिप्पणी—

अथ भाष्यार्थः

'आत्मैवेदमग्र आसीत्' इत्युक्तस्य आत्मनः तद्यदिदमाहुरित्यनेन या उपासना

उक्ता तस्याः प्रकारं दर्शयन् प्रागुक्तां चतुर्मुखात्सृष्टिं प्रपञ्चयत्यनेनाव्याकृतब्राह्मणेन। अत्र विश्वम्भर इत्येतद् विश्वम्भरोऽग्निः जाठरत्वेन सर्वम्भरणादित्यग्निपरत्वेन परैर्व्याख्यातं तदसत्। अग्नेर्जाठरत्वेन पाचकत्वेऽपि भरणहेतुत्वाभावात्। वायोस्तु 'सप्तस्कन्धगतो लोकान् यो बिभर्ति महाबलः'। 'वायुना वै गौतम सूत्रेण' इत्यादिश्रुत्या भरणहेतुत्वस्य प्रमितत्वादिति भावेनाऽह– **विश्वम्भर इति** ॥ एतेन विश्वम्भरशब्दस्य भगवति प्रसिद्धत्वात्कथं तस्यैव 'स एष इह प्रविष्टः' इत्यत्र दृष्टान्तत्वमुच्यते अभेदादित्येतदपि परास्तम्। ननु शरीरान्तः प्रविष्टस्य भगवतो पूर्णत्वाभावात्कथम् 'अकृत्स्नो हि सः' इत्युक्तमित्याशङ्कापरिहारकत्वेन 'स योऽतः' इत्येतद्वाक्यं प्रवृत्तमित्याऽह– **अकृत्स्न इति** ॥ इत्यादि वाक्यम्। अभिप्रायः अभिप्रायप्रदर्शकम्। तथाच प्राणनाद्येकैकभागमात्रोपासकस्याकृत्स्नोपासकत्वेन तदुपासनाविषयत्वाभिप्रायेणैव 'अकृत्स्नो हि सः' इत्युक्तम्, नत्वपूर्णत्वाभिप्रायेणेति भावः। तान्येतान्यस्याऽत्मनः कर्मनामान्येव नतु वस्तुमात्रविषयाणीति परेषां व्याख्यानमसत्। आत्मशब्दस्यापि वस्तुमात्रविषयकत्वाभावाद् इत्यभिप्रायेण 'तान्यस्यैतानि कर्मनामान्येव'इति वाक्य एवकारव्यावर्त्यं प्रदर्शयन् व्याचष्टे– **प्राण इत्यादीति** ॥ कस्तर्हि गुणसम्पूर्णत्ववाचक इत्यतोऽत्र ह्येत इति वाक्यतात्पर्यमाह – **आत्मशब्द एवेति** ॥ आत्मेत्येवेत्यादिवाक्यस्य आत्मेत्येवोपासीत न केनचिद्विशेषणेन विशिष्टतया। तत्र हेतुमाह– **अत्रेति** ॥ अत्रास्मिन्निरुपाधिके आत्मनि एते सर्वे प्राणाद्युपाधिकृता विशेषाः एकमभिन्ना भवन्ति तस्मादात्मेत्येवोपासीत। अनात्मनोऽपि विद्यमानत्वात्कथमात्मोपासने नियमविधानमित्यत आह– **तदेतदिति** ॥ तदेतत् तदेव पदनीयं गमनीयं किन्तत् अस्य सर्वस्य निर्धारणे षष्ठी। अनात्मपदार्थेषु यदयमात्मेति परेषां व्याख्यानमसत्। ब्रह्मणो निर्विशेषत्वस्य एकीभावस्य च निराकरिष्यमाणत्वादिति भावेन तद्वाक्यत्रयं व्याचष्टे– **अस्येति** ॥ ननु आत्मशब्दस्य गुणसम्पूर्णत्ववाचकत्वेऽपि तेन शब्देन परमात्मोपास्तिः कुतः? अन्योपास्तिः

कुतो न स्यादित्यत उक्तम्– **अस्येति** ।। आत्मनः सर्वगुणाश्रयत्वेऽपि आत्मशब्देनैव तदुपासनं कुतः? प्राणादिशब्देन कुतो नेत्यत उक्तम्– **सर्वगुणवाचकेनेति** ।। अत्र हीति वाक्यार्थस्य हेतुत्वेनानुवादोऽयम् । 'अनेन ह्येतत्सर्वं वेद'इति वाक्यं तस्यैव पदनीयत्वे हेतुमाह । अनेनाऽत्मज्ञानेन हि यस्मादेतत्सर्वम् अनात्मजातं वेद जानातीति परेषां व्याख्यानं तदसत् । एकविज्ञानेन सर्वविज्ञानस्य तदभिप्रेतस्य दूष्यमाणत्वाद् इति भावेन तद्वाक्यम् अनूद्य पूर्ववाक्यार्थे हेतुत्वेन व्याचष्टे– **अनेनेति** ।। हिशब्दार्थः– **यस्मादिति** ।। उपासकस्येति शेषः । यस्मात्सर्वज्ञानप्रदः तस्मात्सर्वगुणः यस्मात्सर्वगुणः तस्मात्सर्वगुण इत्येवोपासनं तस्य युक्तमिति योज्यम् । ननु भगवतः सर्वज्ञानप्रदत्वेऽपि सर्वगुणवत्त्वं कुतः? तेन सर्वज्ञमात्रलाभेऽपीतरगुणाना-मलाभादित्यतो हेतुहेतुमद्भावं स्पष्टयति– **तदुपासनादेवेति** ।। अनेनोत्तरफल-वाक्यानुसारेण श्रुतौ 'सर्वं वेद'इत्येतदुपलक्षणमित्युक्तं भवति । यथा ह वै लोके पदेन गवादिखुराङ्कितेन देशेनान्विष्यमाणो नष्टं विवक्षितं गोसुवर्णादिवस्तु विन्देत् लभेत एवं श्रुत्यादिनाऽऽत्मनि लब्धे तु सर्वं लभेत इति 'यथा ह वै पदेन'इति वाक्यं पूर्ववाक्यान्वितत्वेन परैर्व्याख्यातम् । तदसत् । यथैवंशब्दाभ्यां यथेत्यादेः फलवाक्येनान्वयस्य स्पष्टं प्रतीतेः पदशब्दस्य खुराङ्कितप्रदेशार्थकत्वे लाक्षणिकत्वापत्तेश्चेति भावेन पदशब्दस्यार्थं वदन् यथेत्यादिवाक्यं व्याचष्टे– **पद्यत इति** ।। एवं वेदेत्यत्र ज्ञानमात्रं विवक्षितम् आत्मेत्येवोपासीतेत्युपक्रमानानुगुण्यादिति भावेनोक्तम्– **भगवदुपासनादिति** ।। पुनरुक्तिपरिहाराय श्लोकमिष्टैः सह सङ्घातमिति श्लोकशब्दो व्याख्यातः । तदसत् । अपदार्थत्वादिति भावेन विग्रहप्रदर्शनपूर्वकं श्लोकशब्दार्थमाह– **शमिति** ।। शकारस्थाकारलोपो निर्वचनत्वात् । सुखज्ञानयोरात्मानुपासकानामपि सत्त्वात्कथं तत्फलमित्यत उक्तम्– **परमेति** ।। लोकशब्दस्य ज्ञानार्थत्वे धातुं पठति– **लुगिति** ।। धातोर्धातुव्याख्यानात् ।

भाष्यम्——

आसीदेको हरिः पूर्वं देवी नारायणी तथा ।
अन्यदव्यक्ततां यातं तद् व्यक्तमकरोद्धरिः ॥
सृष्ट्वा जगदिदं सर्वं सृष्ट्वा देहांश्च सर्वशः ।
आकेशादानखाग्रेभ्यः प्रविष्टः पुरुषोत्तमः ॥
यथा प्राणः शरीरेषु क्षुरो यद्वत्क्षुरस्तुके ।
प्रविष्टमपि तं विष्णुं न पश्यन्ति पृथग्जनाः ॥
प्रविष्ट इति जानंश्च नैनं जानाति सर्वशः ।
यस्मात्तद्गुणभागोऽयं प्रवेशः प्राणनादि च ॥
तस्मात्प्राणादिनाम्ना य उपास्ते हरिमव्ययम् ।
अकृत्स्नोपासकः स स्याद् यस्मात्तद्गुणभागवित् ॥

टिप्पणी——

स्वकृतं व्याख्यानं द्रढयन् खण्डद्वयं प्रमाणेन व्याचष्टे– **आसीदित्यादिना** ॥ 'आत्मैवेदमग्रे' इति 'ब्रह्म वा इदमग्रे' इति पूर्वोत्तरवाक्यानुरोधेन तावद् आदिवाक्यं व्याचष्टे– **आसीदिति** ॥ तर्हीत्यस्यार्थः– **पूर्वमिति** ॥ तदिदमव्याकृतं विकाररहितमित्यस्य हरिरिति देवीति चार्थद्वयम् । तदेव वाक्यं प्रकारान्तरेण व्याचष्टे– **अन्यदिति** ॥ तदिदमित्यस्यार्थः–**अन्यदिति** ॥ अव्याकृतमित्य-स्याव्यक्ततां यातमिति । तन्नामरूपाभ्यामेवेत्येतत् तदव्याकृतं नामरूपाभ्यां स्वयमेव व्याक्रियतेति प्रतीतिनिरासाय व्याचष्टे– **तद् व्यक्तमिति** ॥ 'स एष इह प्रविष्टः' इत्येतद् व्याचष्टे– **सृष्ट्वेति** ॥ आनखाग्रेभ्य इति वाक्यानु-रोधाद्देहांश्चेत्युक्तम् । **देवांश्चेत्यपि क्वचित्पाठः** । अनेन इह इति सृष्टे जगतीति व्याख्यातं भवति । यथा क्षुर इत्यादिवाक्यद्वयं व्याचष्टे– **यथेति** ॥ यद्यपि श्रुतौ क्षुरस्य क्षुरधाने अव्याप्यवर्तमानत्वात् परमात्माऽप्यव्याप्य वर्तते किमित्याशङ्कापरिहाराय विश्वम्भर इत्यनन्तरं प्राणदृष्टान्तोक्तिः । तथाऽपि प्राधान्यज्ञापनाय अत्राऽऽदौ तदुक्तिरिति ज्ञेयम् । सर्वे तं न पश्यन्तीत्यन्यथा-

प्रतीतिनिरासाय तं न पश्यन्तीत्येतद्व्याचष्टे– **प्रविष्टमिति** ॥ पृथग्जनाः मूर्खाः । 'अकृत्स्नो हि सः' इत्यस्य स योऽत इत्युत्तरवाक्यानुसारेण तात्पर्यमाह – **प्रविष्ट इति** ॥ प्राणनादिकर्तेत्यपि वक्तव्यम् । तस्मादयं प्रवेशः प्राणनादि च तद्गुणभागस्तस्माज्ज्ञानंश्च जानन्नपि प्रविष्ट इत्यादिकमेव जानन् । सर्वशः साकल्येन न जानातीति सम्बन्धः । अनेनाकृत्स्नविद्वेदन-विषयत्वादकृत्स्नो हीत्युक्त इत्युक्तं भवति । 'तान्यस्यैतानि कर्मनामान्येव' इत्येतद्व्याचष्टे– **प्राणादीति** ॥ तुशब्द एवार्थे । कर्मनामान्येवेति सम्बन्धः । 'अकृत्स्नो ह्येषो त एकैकेन भवति'इति वाक्यं व्याचष्टे– **तस्मादिति** ॥ यस्मात्प्राणादिनामानि कर्मनामान्येव तस्मादित्यर्थः । अनेन हिशब्दातःशब्दावुक्तार्थौ भवतः । प्राणादिनाम्नोपासकोऽकृत्स्नोपासकः कुत इत्याशङ्कापरिहारकत्वेन 'स योऽत एकैकमुपास्ते न स वेद'इति वाक्यं व्याचष्टे– **यस्मादिति** ॥ अनेन न वेदेत्यत्र सर्वश इति शेष इति सूचितम् ।

**भाष्यम्—**

**पूर्णत्वेऽपि परेशस्य यस्तु तद्गुणभागवित् ।**
**अकृत्स्नवित् स्यात् कृत्स्नस्य वेत्ताऽऽत्मेतिविदेव यः ॥**
**चिदानन्दादयो यस्य गुणा आप्ताः सदैव तु ।**
**स आत्मेति प्रविज्ञेयो गुणनामाप्तितो हरिः ॥**
**प्राणनादीनि कर्माणि चाऽत्मशब्दोदितानि तु ।**
**तदेतदात्मरूपं हि गुणानामाश्रयत्वतः ॥**
**पदनीयमिति प्रोक्तं यतस्तज्ज्ञोऽपि सर्ववित् ।**
**सार्वज्ञ्यादिगुणास्तस्य किमुताऽत्मेश्वरस्य तु ॥**
**एवं सर्वगुणैर्युक्तं सर्वजीवेश्वरं हरिम् ।**
**यो वेद तत्तत्साध्यं तु यथा तैस्तैस्तु साधनैः ॥**

**प्राप्नुयादेवमेवासौ कीर्तिं च परमं सुखम् ।**
**ज्ञानं च परमं विन्देन्मुक्तः सन्नात्र संशयः ॥**

**टिप्पणी—**

ननु परमात्मनः प्राणनादिमात्रगुणकत्वे कथं तद्वेत्ता तद्गुणभागविदिति स्यादित्यत आह– **पूर्णत्वेऽपीति** ॥ अत एवैकैकमिति एकैकेनेति चोक्तमिति भावः । कस्तर्हि कृत्स्नवेत्तेत्यत उत्तरवाक्यानुसारेणाऽह– **कृत्स्नस्येति** ॥ आत्मेत्येवेत्येवशब्दसम्बन्धः। यच्छब्दश्रवणात्स इति ग्राह्यम् । तेन च एवशब्दसम्बन्धः । 'आत्मेत्येवोपासीत' 'अत्र ह्येते सर्व एकं भवन्ति' इति वाक्यद्वयं व्याचष्टे– **चिदिति** ॥ यस्माच्चिदानन्दादयो गुणाः यस्य सदैवाप्ताः स हरिः तस्माद् गुणनामाप्तित आत्मेति प्रविज्ञेय इति सम्बन्धः । प्रवीत्युपसर्गाभ्यां ज्ञानविशेषरूपोपासनोक्ता । यथा प्राणादिशब्दस्य चिदानन्दादिसर्वगुणानभिधायित्वं तथाऽऽत्मशब्दस्यापि प्राणनादिकर्मानभिधायित्वे तत्प्रहाण्यात्मेत्युपास्तौ किं नियामकमित्यत आह– **प्राणनादीनीति** ॥ चिदानन्दादिगुणसमुच्चयार्थश्चशब्दः । प्राणनत्वादिविशेषरूपेणेति विशेषार्थकस्तुशब्दः । अनेनात्र ह्येत इति वाक्यं प्रकारान्तरेणोक्ततात्पर्यम् । 'तदेतत्पदनीयम्' इत्येतद् व्याचष्टे– **तदिति** ॥ 'अनेन ह्येतत्सर्वं वेद' इति वाक्यं व्याचष्टे– **यत इति** ॥ हिशब्दार्थः– **यत इति** ॥ सर्वविदित्युपलक्षणम् । यत इति श्रवणात्तत इति ग्राह्यम् । तस्य ज्ञेयस्य आत्मनामीश्वरः आत्मा चासावीश्वरश्चेति वा । प्रग्रहीत्रपेक्षया दातरि विशेषद्योतनाय तुशब्दः । 'यथा ह वै पदेन' इत्यादिफलवाक्यं व्याचष्टे– **एवमिति** ॥ वेद उपास्ते आत्मेत्येवोपास्तौ तु सर्वेषामप्यधिकारः । नचैवं ब्रह्मादिव्यतिरिक्तानां सर्वगुणोपास्त्ययोग्यानाम् उपास्त्यभावापत्तिः । आत्मशब्दस्य तत्तद्योग्यतानुसारेणैव गुणाभिधायकत्वात् । अत एवोत्तममन्दाधिकारिविवक्षया 'सर्वगुणैर्युक्तं सर्वजीवेश्वरम्' इति चोक्तम् ॥ १ ॥

उपनिषत्—

[सर्वप्रियो विष्णुरित्युपास्यः]

तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मा-
दन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्
प्रियꣳ रोत्स्यतीतीश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत
स य आत्मानमेव प्रियमुपास्ते नहास्य प्रियं प्रमायुतं भवति
॥ २ ॥

भाष्यम्—

स एष विष्णुर्भगवान् पुत्राद् वित्तात्तथाऽऽत्मनः ।
अन्यस्मादपि सर्वस्मात् प्रेष्ठ एव स्वभावतः ॥
आत्मनोऽपि प्रियत्वं तु तेनैव कृतमञ्जसा ।
आत्मनो निरयायैव कुर्यात् कर्माणि नित्यशः ॥
यतोऽतः स्वात्मनश्चापि स्वाप्रियत्वमुदाहृतम् ।
स चेदप्रियकृद् विष्णुर्नाऽत्माऽपि प्रियतां व्रजेत् ॥
अस्मिन् प्रिये प्रियं सर्वं तस्मादेकः प्रियो हरिः ।
स चाऽत्मशब्देनोद्दिष्टो यस्मादाप्तगुणः प्रभुः ।
अतो विष्णोः प्रियं ब्रूयाद् यः स्वात्माद्यं दुरात्मवान् ॥
प्रियरोधं करोषीति तं ब्रूयाद् वैष्णवो महान् ।
एवं वदन् वैष्णवस्तु समर्थः प्रियरोधने ॥
तस्य स्याच्च विशेषेण तदुक्त्यैवापि दुःखिनः ।
तस्मात्सर्वप्रियो विष्णुरित्युपास्ते सदा प्रियः ॥
नास्य प्रियमनित्यं स्यादस्य प्रीतिः सदा भवेत् ।
तस्मात्सर्वप्रियं विष्णुमुपासीतैव नित्यशः ॥
नित्यप्रियकरो विष्णुर्भवेत्तस्याप्यजः स्वयम् ॥ इत्यध्यात्मे ॥

## टिप्पणी——

**अथ भाष्यार्थः**

'तदेतत्प्रेयः' इत्येतद्वाक्यं स्वात्मनो जीवस्य प्रियत्वमुच्यत इति प्रतीतिं निवारयन् व्याचष्टे– **स इति** ॥ स प्रलयाग्रवर्ती एषः सर्वत्र प्रविष्ट इत्यर्थः । अनेन तदेतदित्युक्तार्थम् । यद्यपि श्रुत्यनुसारेणान्यस्मादित्यनेनैवात्मनोऽपि सङ्ग्रहः तथाऽपि उत्तरग्रन्थोपक्षेपाय तथाऽऽत्मन इति पृथगुक्तम् । ननु पुत्रवित्तादीनामात्मार्थत्वेन स्वभावतः प्रेष्ठत्वाभावेऽपि स्वस्यैव स्वभावतः प्रेष्ठत्वाद् विष्णुः कथं स्वभावतः प्रेष्ठ इत्यत आह– **आत्मनोऽपीति** ॥ पुत्रादिभ्यः आत्मनः प्रियत्वे विशेषद्योतनार्थस्तुशब्दः । ननु स्वात्मनः प्रियत्वं तेन कृतमिति तदा स्यात् यद्यप्रियत्वं कदाचित्स्यादित्यपेक्षायामाह– **आत्मन इति** ॥ कुर्यात्करोति स्वाप्रियत्वं चेति सम्बन्धः । निरयाय कर्माणि करोतीत्युक्त्या प्राप्तां स्वाप्रियत्वस्य स्वाधीनत्वशङ्कां परिहरति– **स चेदिति** ॥ आत्मानमप्रियं करोतीत्यप्रियकृत् । नन्वेवं स्वात्मादेः प्रियत्वस्य विष्णुकृतत्वेनास्वाभाविकत्वेऽपि विष्णोः स्वभावतः प्रेष्ठत्वं कुत इत्यत आह– **अस्मिन्निति** ॥ यस्मादिति शेषः । अस्मिन् हरौ एको मुख्यः स्वभावत इति शेषो वा । ननु अयमात्मेति मूलानुसारात् स एष आत्मा भगवानिति वक्तव्यं विष्णुरिति कथमुक्तमित्यत आह– **स चेति** ॥ 'स योऽन्यमात्मनः' इत्यादि व्याचष्टे– **अत इति** ॥ विष्णोरेव निरुपाधिकप्रियत्वादित्यर्थः । विष्णोरन्यमिति शेषः । प्रियरोधं त्वदीयसुखनाशम् । ईश्वरो हेत्येतदपेक्षितं पूरयन् व्याचष्टे– **एवमिति** ॥ ननु विष्ण्वन्यस्वात्मादिप्रियत्वोक्त्यैव नरकादिदुःखप्राप्तेः शापः किमर्थः इत्यत आह– **तस्येति** ॥ तदुक्त्यैव दुःखिनोऽपि तस्य तदुक्त्या वैष्णवशापरूपोक्त्या विशेषेण च दुःखं स्यादिति योजना । अनेन तथा स्यादित्येतदुक्तार्थम् । 'स य आत्मानमेव प्रियमुपास्ते' इत्यादि वाक्यं व्याचष्टे– **तस्मादिति** ॥ हरेर्निरुपाधिकप्रियत्वात्प्रियः सन् । विष्णोरिति शेषः । इदानीं 'स य आत्मानमेव प्रियमुपास्ते' इति पूर्ववाक्यं

व्याचष्टे– **तस्मादिति** ॥ विष्णुमेवेति सम्बन्धः । अन्योऽपि फलार्थीति शेषः ॥ २ ॥

**अथ खण्डार्थः**

तर्हि तदा प्रलये तत्पूर्वोक्तमिदम् अव्याकृतं विकारशून्यं नारायणाख्यं परं ब्रह्म लक्ष्मीश्चाऽसीत् । हेति प्रसिद्धिमाह । तदव्यक्तं नामरूपाभ्यामेव व्याक्रियत हरिणा व्यक्तमकारि । तदेव विवृणोति– **असौ नामेति** ॥ अयं ब्रह्मादिर्महत्तत्वादिश्च पदार्थः । अदो हिरण्यगर्भो महानित्यादि नाम वाचकं यस्य स असौनामा । इदं चतुर्मुखत्वादि अहङ्काराद्यपेक्षया परिमाणविशेषोपेतत्वादिरूपं यस्य स इदंरूप इति व्याक्रियत इति सम्बन्धः । तत्तस्माद् विष्णुना ब्रह्मादेर्महदादेश्च नामरूपाभ्यामेव व्याकृतत्वादेव एतर्ह्यपि इदानीमपि इदं देवदत्तघटादिवस्तु अदो देवदत्तो घट इत्यादिनाम यस्यासावसौनामा इदंशिरःपाण्यादिकं पृथुबुध्नोदराकारादि रूपं यस्यासाविदंरूप इति नामरूपाभ्यामेव व्याक्रियते । स प्रलयाग्रवर्ती एष जगत्सर्जकः परमात्मा इह स्वसृष्टे देवादौ आनखाग्रेभ्यः, उपलक्षणमेतत् । आकेशात्सर्वशरीरादिकम् अभिव्याप्येति यावत् । प्रविष्टोऽन्तर्गतः यथा क्षुरः क्षुरधाने क्षुरस्तुके यथा विश्वम्भरो वायुः विश्वम्भरकुलाये स्ववासस्थले शरीरे अवहितः प्रविष्टः स्यात्तथा स एष इह प्रविष्ट इति सम्बन्धः । तं स्वशरीरप्रविष्टमपि न पश्यन्ति पृथग्जना इति शेषः । स प्रविष्टो हरिः अकृत्स्न इत्युच्यते हि भगवतोऽकृत्स्नत्ववचने निमित्तं वक्तुमाह– **प्राणन्नेवेति** ॥ प्राणनक्रियामात्रं कुर्वन्नित्यर्थः । एवमुत्तरत्रापि । तान्येतानि प्राण इत्यादिनामानि अस्य कर्मनामान्येव प्राणनादिकर्म-कर्तृत्वमात्रवाचकानि न सर्वगुणपरिपूर्णताभिधायकानि । ततः किमित्यतो भगवतो कृत्स्नत्वोक्तौ निमित्तं लब्धमित्याशयेनाऽह– **स इति** ॥ हि यस्मात्प्राणादिनामानि कर्मनामान्येव अतः एकैकेन प्राणादिनाम्ना तं य उपास्ते एष अकृत्स्नः अकृत्स्नोपासको भवति । कुतः? यतः स प्रसिद्धो य एकैकं प्राणनादिकमेवोपास्ते सः साकल्येन न वेद अतोऽकृत्स्नोपासक

इति सम्बन्धः । तथाचाकृत्स्नोपासकोपास्तिविषयत्वादकृत्स्नो हीत्युक्तमित्युक्तं भवति । तर्हि कः कृत्स्नोपासक इति जिज्ञासायामात्मत्वोपासक एवेति भावेनाऽह– **आत्मेतीति** ॥ प्राण इत्याद्युपासनाव्यावृत्त्यर्थमेवकारः । नन्वात्मशब्दस्यापि स्वामित्वमात्रार्थकत्वे प्राणादिशब्दसमानयोगक्षेमत्वात् तथैवोपास्तिः कुत इत्यत आह– **अत्रेति** ॥ अत्र आत्मशब्दार्थे एते चिदानन्दादयो गुणाः प्राणनादिकर्माणि च एकं भवन्ति अन्तर्भवन्ति हि यस्मात्तस्मात्तथैवोपासीतेति सम्बन्धः । आत्मशब्दस्य सर्वगुणवाचकत्वेऽपि परमात्मनः सर्वगुणाभावे तथोपास्तिर्मिथ्योपास्तिः स्यादित्यत आह– **तदेतदिति** ॥ यदयं योऽयमुपास्यत्वेनोक्तः आत्मा तदेतदात्मरूपम् अस्य आत्मशब्दार्थस्य सर्वस्य गुणजातस्य पदनीयमाश्रयः कुतः सर्वगुणाश्रय इत्यत आह– **अनेनेति** ॥ हि यस्मादनेनोपासितेन परमात्मना एतत् स्वयोग्यं सर्वं वेद आनन्दादिकं च प्राप्नोतीत्यपि ग्राह्यम् । तस्मात्सर्वगुणाश्रय इति । तात्पर्यद्योतनाय वेत्तुः फलमाह– **यथेति** ॥ यथापदेन तत्तत्साधनेन तत्तत्फलमनुविन्देत् प्राप्नुयादेवं योऽधिकारी एवं सर्वगुणयुक्तमात्मानं वेदोपास्ते स कीर्तिं शंलोकः श्लोकः तं परमानन्दं परमज्ञानं च विन्दते ॥ १ ॥ आत्मत्वेनोपासनं प्रेमयुक्तं चेत्पुरुषार्थहेतुरिति वक्तुमाह– **तदेतदिति** ॥ तदेतदन्तरतरं शरीरान्तर्गत-जीवान्तःप्रविष्टं सर्वान्तःप्रविष्टं वा पुत्रात्प्रेयः अतिशयेन प्रियम् । अतिशयश्च निरुपाधिकत्वम् । अन्यस्मात्सर्वस्मात्स्वात्मादेः किं तत् यदयमात्मा यश्चासावयं चेति यदयम् आत्मा सर्वगुणवाचकात्मशब्दवाच्यः । यो वैष्णवः आत्मनः परमात्मनोऽन्यं स्वात्माद्यं प्रियं ब्रुवाणं दुरात्मानं प्रति प्रियं त्वदीयं सुखं रोत्स्यति नाशयति भवानिति ब्रूयात् । एवं ब्रुवन् स वैष्णवः तस्य प्रियरोधने ईश्वरो ह समर्थ एव । कुतः? यतस्तदुक्त्या तथैव स्यात् । यदर्थमेतदुक्तं तदाऽह– **आत्मानमेवेति** ॥ प्रियत्वेनात्मोपासकस्य फलमाह स यः प्रसिद्ध इति ॥ प्रमायुक्तं विनाशयुक्तम् ॥ २ ॥

**उपनिषत्—**

[अहं ब्रह्मास्मीत्येतद् भगवतः गुणपूर्णत्वोपपादकम्]

**तदाऽऽहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद् यस्मात्तत् सर्वमभवदिति ॥ ३ ॥**

**भाष्यम्—**

**ब्रह्मविद्यया सर्वं भविष्यन्त आत्मयोग्यतापूर्तिमाप्नुवन्तो महान्तो यदाहुः ब्रह्मविद्यया स्वयोग्यं सर्वं प्राप्यत इति ।**

**टिप्पणी—**

**अथ भाष्यार्थः**

भगवज्ज्ञानादेव परमसुखज्ञानप्राप्तिर्भवतीत्युक्तम् । तदेतदाक्षेपपरिहाराभ्यां समर्थितमित्याह– **तदाऽऽहुरिति** ॥ इदं वाक्यजातं मायावादिन एवं व्याचक्षते । ''तद् वक्ष्यमाणं नित्यनिरतिशयश्रेयःप्रतिपित्सवः आहुः किं तत् यद् ब्रह्मविद्यया ब्रह्मस्वात्मतादात्म्यविद्यया सर्वं निरवशेषं भविष्यन्तो भविष्यामः इत्येवं मनुष्याः मन्यन्ते सम्भावयन्ति । तत्किं ब्रह्म । किं वा अवेत् । को वा सर्वभावः इति पृच्छति– **किमिति** ॥ यस्माद्विज्ञानात्तद् ब्रह्म सर्वमभवत् तद् ब्रह्म किमु किमात्मस्वरूपमतिरिक्तं वा । किं वाऽवेत् स्वरूपं तदतिरिक्तं वा । यस्मात्तत्सर्वमभवदिति सर्वभावापत्तिरपि किं विद्यमानैवाभिव्यज्यते किं नूतनैवोत्पद्यते इत्यर्थः । तत्राऽऽद्यस्योत्तरमाह– **ब्रह्म वा इति** ॥ अग्रे शास्त्रजन्यप्रबोधादपि प्राग् इदं शरीरस्थं प्रमात्रादिसाक्षिभूतं त्वंपदलक्ष्यं ब्रह्मैवाऽसीदित्यर्थः । द्वितीयस्योत्तरमाह– **तदात्मानमिति** ॥ तदविद्याविशिष्टा-धिकारिस्वरूपभूतं ब्रह्म नासि त्वं संसारी किन्तु सकलसंसारधर्मरहितं चिदानन्दैकरसं ब्रह्मैवाऽसीति दयालुनाऽऽचार्येण बोधितमात्मानमेव अहं ब्रह्म प्रमात्रादिसाक्ष्यशनायाद्यतीतादिलक्षणमस्मि भवामीत्येवमवेदित्यर्थः । तृतीयस्योत्तरमाह– **तस्मादिति** ॥ तस्मादहं ब्रह्मास्मीति विज्ञानादेव ।

तत् ब्रह्म सर्वमभवत् । ब्रह्मात्मापरोक्षेणाविद्यापगमात् तत्कार्यस्यासर्वत्वस्य निवृत्तौ स्वाभाविकं सर्वत्वं प्राप्तमिति यावदिति'' । तदेतदसत् । आदिवाक्ये प्रतिपित्सव इत्यध्याहारप्रसङ्गात् । किमाहुरित्यस्योत्तरत्र परिहारानुपलम्भाच्च । नहि यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्त इत्यत्रेदमाहुरिति प्रतीयते । ब्रह्मविद्ययेत्यस्य ब्रह्मणः स्वात्मतादात्म्यसाक्षात्कारेणेति व्याख्यानमसत् । अपदार्थत्वाद् वक्ष्यमाणरीत्याऽप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च । अत एव सर्वं निरवशेषमित्येतदप्ययुक्तम् । निराकरिष्यते चैतत् । भविष्यन्त इत्यस्य भविष्याम इति विपरिणामायोगाच्च । प्रश्नवाक्यस्य सङ्गत्यभावाच्च । किमु तद् ब्रह्मावेत् यस्मात्तत्सर्वमभवदित्यस्यैकवाक्यत्वेनैव स्पष्टमन्वयप्रतीतेः उक्तरीत्या वाक्यभेदायोगाच्च । तृतीयप्रश्नवाक्यस्य सर्वथाऽप्यश्रुतस्यैव कल्पनीयत्वाच्चेति भावेन तद्वाक्यजातं यथावद् व्याकुर्वन् 'आहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तः' इत्येतद्वाक्यमन्वयं दर्शयन् व्याचष्टे– **ब्रह्मविद्ययेति** ॥ परब्रह्मापरोक्षज्ञानेन । सर्वमित्यस्यार्थः– **पूर्तिमिति** । निरुपचरितपूर्तेर्बाधादात्म-योग्यतेत्युक्तम् । महान्तो देवाद्या इति विशेष्याध्याहारः । यदाहुः किन्तदिति जिज्ञासानिवर्तकत्वेन 'ब्रह्मविद्यया सर्वम्' इत्येतदेवापेक्षिताध्याहारेण व्याचष्टे– **ब्रह्मविद्ययेति** ॥

**भाष्यम्—**

**नित्यनिर्दुःखानन्दानुभवरूपो हि स्वत उत्तमो जीवः । तादृशं रूपमज्ञानात्तिरोहितं ब्रह्मविद्ययाऽभिव्यज्यते एव । नचान्यथाऽभिव्यज्यत इति सन्तो यदाहुः । तत्तत्र केचिन्मनुष्या इति मन्यन्ते । स्वरूपमपि ब्रह्मविद्ययाऽभिव्यज्यते चेत्तद् ब्रह्मापि यस्मात् सर्वमभवत् परिपूर्णम-भवत्तस्मात् स्वरूपं ज्ञात्वैवाभवत् किमिति ॥ ३ ॥**

**टिप्पणी—**

ननु मुक्तावागन्तुकसुखाद्यभावात् कथं सर्वं प्राप्यत इत्युक्तिरित्यतः तदेव विवृणोति– **नित्येति** ॥ अभिव्यक्तिः सत एव नत्वसत इत्यत इदमुक्तम् ।

आनन्दश्चानुभवश्चेति द्वन्द्वः । नित्यौ निर्दुःखौ दुःखासम्भिन्नौ आनन्दानुभवौ रूपं स्वरूपं यस्य तथोक्तः । अहं दुःखीत्याद्यनुभवविरोधपरिहारायोक्तं स्वतः स्वभावत इति । दुःखादिकमविद्याकामकर्मनिमित्तकं न स्वाभाविकमिति भावः । उत्तम इति तमोयोग्यादिव्यावृत्त्यर्थः । अनुपलम्भबाधपरिहारायोक्तम् अज्ञानात्तिरोहितमिति । अभिव्यज्यत एव न नूतनं प्राप्यत इत्यर्थः । ब्रह्मविद्ययैवेत्यपि एवशब्दसम्बन्धः । तद्व्यावर्त्यमाह– **नचेति** ।। अन्यथा कर्मादिमात्रेण । तत्तत्रेत्यस्य सम्बन्धप्रतीत्यर्थं यदाहुरिति पुनरनुवादः । नन्वेवं व्याख्यानेऽपि महान्त इत्यध्याहारः ब्रह्मविद्यया सर्वमित्यस्याऽऽवृत्तिः प्राप्यत इत्यध्याहारश्च कर्तव्य इति चेत् तथाऽपि त्वत्पक्षवद् बहुदोषाभावात् । एतावान्मात्राध्याहारादेरपि यदाहुर्ब्रह्मविज्ञानादित्युदाहरिष्यमाणप्रमाणसिद्धत्वेन त्वद्व्याख्यानवदप्रामाणिकत्वाभावाच्च । तदाहुरिति तच्छब्दस्य अभवदितीति-शब्दस्य च मनुष्या मन्यन्त इत्यनेन सम्बन्धं दर्शयन् किञ्चिद् व्याचष्टे– **तत्तत्रेति** ।। इतिशब्दार्थं स्फुटयन् किमु तद् ब्रह्मेत्येतद् व्याचष्टे– **स्वरूप-मिति** ।। ब्रह्मापीत्यनेन उशब्दोऽप्यर्थक इत्युक्तं भवति । यदि जीवस्वरूपा-भिव्यक्तिर्ब्रह्मज्ञानसाध्या तर्हि ब्रह्मणः परिपूर्णत्वाद्यभिव्यक्तिरपि किं ब्रह्मज्ञानसाध्येति प्रश्नाभिप्रायः ।। ३ ।।

**उपनिषत्**——

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् तद् यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳसमभवत्यथ योऽन्यां देवतामुपास्तेऽ-न्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳस देवानां**

**यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्त्येकस्मिन्नेव पशावादीयमाने प्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ ४ ॥**

**भाष्यम्—**

**सत्यम् । तदपि स्वरूपं नित्यापरोक्षज्ञानेन सर्वदा जानात्येव । अत एव सर्वदा परिपूर्णमिति तेषां परिहारः । तदात्मानमेवावेत्तस्मात् तत्सर्वमभवदिति ॥**

**'आत्मा वा इदमेक एवाग्र आसीत्' 'सदेव सोम्येदमग्र आसीत्' इत्यादिवत्सदातनज्ञानं पूर्णभावं चाऽह ।**

**टिप्पणी—**

ब्रह्मणः परिपूर्णत्वाद्यभिव्यक्तेः ब्रह्मज्ञानसाध्यत्वाभावेऽपि ज्ञानाविनाभावोऽस्त्येवेत्यभिप्रायकं 'तदात्मानमेवावेत्' 'तस्मात्सर्वमभवत्' इत्येतद्व्याचष्टे– **सत्यमित्यादिना** ॥ जानाति विषयीकरोति नित्यापरोक्षज्ञानेनापि विषयीकरणं न कादाचित्कमिति भावेन सर्वदेत्युक्तम् । जानात्येवेत्यनेनावेदेवेति सम्बन्धो दर्शितः । अत एवेत्यनेन ज्ञानस्याभिव्यक्तिव्यापकत्वमाऽह– **परिपूर्णमिति** ॥ अभिव्यक्तानन्दादिपरिपूर्णमित्यर्थः । कादाचित्काभिव्यक्तिजन्यापरोक्षज्ञानयोरेव साध्यसाधनभाव इति भावः । एतेनैतदपि परास्तम् । यत्केनचित्प्रलपितं 'मनुष्या अधिकारिणो ब्रह्मविद्यया ब्रह्मणः स्वात्मतादात्म्यलक्षणब्रह्मसाक्षात्कारेण सर्वं निखिलं भविष्यन्तो भविष्यामः इति यन्मन्यन्ते मननं कुर्वन्ति तत् दुर्घटमित्याहुः विचारकाः ब्राह्मणाः । तद्दौर्घट्योपपादनायोत्तरत्र प्रश्नः क्रियते' इति । अत्रापि दुर्घटमित्यस्याध्याहारप्रसङ्गात् । किञ्च अधिकारिकृतमननप्रकारो वा तत्वं विचारकब्राह्मणोक्तं दौर्घट्यं वा । नाऽद्यः । अधिकारिमतार्थे दौर्घट्यापादकानां ब्राह्मणानां विचारकत्वायोगात् । न द्वितीयः । मननकर्तृणाम् अधिकारित्वासम्भवात् । दौर्घट्योपपादनाय कृतप्रश्नानां 'ब्रह्म वा इदमग्र

आसीत्'इत्यादिना परिहारे दौर्घट्याभावाच्चेति । नन्ववेदभवदिति प्रयोगेण ज्ञानस्य पूर्णत्वाभिव्यक्तेश्च कादाचित्कत्वप्रतीतेः कथं नित्यापरोक्षज्ञानेनेति सर्वदा परिपूर्णमिति चोक्तमित्यत आह– **तदात्मानमिति** ॥ ब्रह्मसत्तासदातनत्वस्य प्रमितत्वेनाऽसीदिति लङः सदातनसत्ताप्रतिपादकत्ववदवेदित्यादेरपि सदातनज्ञानादिप्रतिपादकत्वमित्यर्थः । यथोक्तं– 'प्रयोग एककालीनः सर्वकालेऽनुषज्यते । ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः' इति । अत एव जानातीति क्रियाप्रबन्धविहितलट्प्रयोगः ।

**भाष्यम्**——

**['अहं ब्रह्मास्मि' इत्येतन्नाभेदबोधकम्]**

**इदमग्रे अस्याग्र इति षष्ठ्यर्थे द्वितीया । अहम् अहेयं, ब्रह्म परिपूर्णम् । अस्मि सर्वदाऽस्तीति मेयमित्येतैर्विशेषणैरात्मानं स्वरूपमेवावेत् । यद्यहंशब्दोऽस्मच्छब्दार्थवाची अस्मिशब्दश्चोत्तमपुरुषे तदाऽऽत्मानमिति व्यर्थं स्यात् । अतोऽहमस्मिशब्दावुक्तार्थाविव । अग्रे अनादि-कालत एव विद्यमानमात्मानं जानाति च तद् ब्रह्मेत्यर्थः । सर्वनियन्तृ-त्वेन सर्वगतत्वादहेयम् ।**

**टिप्पणी**——

इदं त्वंपदलक्ष्यं चैतन्यं ब्रह्मैवाऽसीदिति व्याख्यानमसदिति भावेन व्याचष्टे– **इदमग्र इति** ॥ इदमित्यस्य अस्येति व्याख्यानं कथमित्यत उक्तम्– **षष्ठ्यर्थ इति** ॥ 'तदाऽत्मानमेवावेदहं ब्रह्मास्मि'इत्यस्य तदधिकारिस्वरूपभूतं ब्रह्म आचार्योपदिष्टमात्मानम् अहं ब्रह्मास्मीत्यवेदिति व्याख्यानं दूषयितुम् अहं ब्रह्मास्मीत्यवेदित्येतद् व्याचष्टे– **अहमिति** ॥ मेयत्वे प्रकारप्रदर्शनायास्तीतिशब्दः । अन्यथा सर्वदाऽस्ति मेयमितीत्येव वक्तव्यम् । कुत एवं व्याख्येयं परोक्तरीत्या प्रसिद्धार्थविवाहमस्मिशब्दौ किं न स्यातामित्यतस्तद् व्याख्यानं दूषयति– **यदीति** ॥ अस्मच्छब्दार्थवाची प्रत्यगर्थवाची । अहं

ब्रह्मास्मीत्यनेनैवाऽत्मानं ब्रह्मत्वेनावेदित्यस्यार्थस्य लाभात्किमिति कर्माकाङ्क्षाभावेन तद्वैयर्थ्यमिति भावः। विपर्यये पर्यवसानं सूचयन् स्वव्याख्यानं निगमयति– **अत इति** ॥ अर्थान्तरस्यायोगादित्यर्थः । उक्तार्थाविव नत्वर्थान्तरपरौ । अहमस्मिंशब्दयोः अहेयत्वाद्यर्थकत्वे तु एतैर्विशेषणैः कमवेदिति कर्माकाङ्क्षा-निवर्तकत्वेनाऽत्मानमित्येतदावश्यकमिति भावः । किञ्चाऽचार्योपदेशोऽप्यश्रुत एव कल्पनीयः । तत्परित्यागे च बाधितार्थकत्वापत्तेः । नहि तादृशोपदेशाभावे अहं ब्रह्मास्मीति वेदनमस्ति । नन्वत एव तदध्याहारः क्रियत इति चेदन्यथोपपत्तेरुक्तत्वात् । ननु भवद्व्याख्यानेऽपि 'ब्रह्म वा इदमग्र आसीद्' इति व्यर्थम्। किमु तद्ब्रह्मेत्यादिप्रश्नस्य तदात्मानमेवावेदित्यादिनैव परिहारात्। अतोऽस्मद्व्याख्यानमेवाऽश्रयणीयमित्यत आह– **अग्र इति** ॥ अग्र आसीदि-त्युक्तानादिकालविद्यमानत्वसमुच्चयार्थो जानाति चेति चशब्दः। सर्वभवनसमुच्चयार्थो वा । ब्रह्मण एवानादित्वाभावेऽवेदित्यस्याभवदित्यस्य च सदातन-ज्ञानसदातनपूर्णभाववाचकत्वानुपपत्तिरिति शङ्कापरिहारार्थं ब्रह्मणोऽनादित्वमनेन कथ्यत इति भावः । नन्वहमहेयमित्यत्र स्वाहेयत्वं सर्वाहेयत्वं वा । नाऽद्यः । सर्वसाधारण्येनावक्तव्यत्वात् । न द्वितीयः । विशेषहेत्वभावादित्यत आह– **सर्वेति** ॥ अहेयं सर्वैरिति शेषः। सर्वनियन्तृराजादिवत्परिच्छिन्नत्वे सर्वाहेयत्वं न सिद्ध्यतीत्यतः सर्वगतत्वादित्युक्तम्। सर्वगतत्वमात्रस्य हातुमशक्यत्वरूपाहेयत्वे हेतुत्वं न सम्भवति । अप्रयोजकत्वादित्यतः सर्वनियन्तृत्वेनेत्युक्तम् । अनेन नियन्तृहाने व्यापारमात्रोच्छेद इति विपक्षे बाधकं सूचितम् ।

**भाष्यम्—**

**'तद्योऽहं सोऽसौ योऽसौ सोऽहं योऽसावसौ पुरुषः सोऽहमस्मि' इत्यादिष्वप्यहंशब्दोऽन्तर्यामित्वेनाहेयत्ववाची। 'तत्सत्यं स आत्मा तत्त्वमसि इति भेदस्य नवकृत्वोऽभ्यासात्।**

**टिप्पणी—**

किञ्च, स्यादेव 'ब्रह्म वा इदमग्रे' इत्यादेः परकृतव्याख्यानं यदि जीवब्रह्मैक्य-मेव प्रामाणिकं स्यात् । नच तत्र प्रमाणमस्ति । 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादिवाक्यमेव ब्रह्मात्मैक्यप्रतिपादकमस्तीति चेत्तत्राऽह— **तद्य इति** ।। नैतद्वाक्यबलेन जीवेश्वरैक्यमङ्गीकर्तुं शक्यम् । एतद्वाक्यस्य तद्यः स यो बृहतीसहस्रसंस्थितो द्वासप्ततिसहस्ररूपः विष्णुः पुरुषे स्थितः अन्तर्यामित्वेन पुरुषैरहेयत्वादहंनामकः । स एवासौ सूर्यसंस्थः । योऽसौ सूर्यगतो विष्णुः द्वासप्ततिसहस्ररूपः सोऽप्यन्तर्यामित्वेन सूर्यादिभिरहेयत्वादहंनामक इत्यर्थत्वात् । अन्यथा योऽहं सोऽसावित्येतावता पूर्णत्वेन योऽसौ सोऽहमित्यस्य वैयर्थ्यात् । नच योऽहं सोऽसावित्यनेन सूर्यस्य पुरुषाभेदबोधनेऽपि पुरुषस्य सूर्याभेदबोधनाय योऽसौ सोऽहमिति वाक्यमिति वाच्यम् । सूर्यस्य पुरुषाभेदे पुरुषस्य सूर्यभेदशङ्काया एवानुदयेन वैयर्थ्यानिस्तारात् । नचायमभ्यास इति युक्तम् । प्रयोगद्वैविध्यदर्शनात् ।एकप्रकारासकृदुक्तेरेवाभ्यासत्वात् । अस्मत्पक्षे तु नराहेयत्वं सुराहेयत्वं चोच्यत इति न वैयर्थ्यमिति । योऽसावसौ पुरुष इति वाक्यं सप्तमाध्याये व्याख्यास्यते । नन्वथापि 'तत्सत्यं स आत्मा तत्वमसि' इति वाक्यमेव जीवब्रह्मैक्यप्रतिपादकमस्ति तथाचैतद्वाक्यबलेन 'ब्रह्म वा इदमग्र आसीद्' इत्यादेः तद्योऽहं सोऽसावित्यादेश्चैक्यपरत्वं वक्तुं शक्यमित्यत आह— **तत्सत्यमिति** ।। 'स आत्माऽतत्वमसि' स एव परमात्मा त्वन्तु अतत् तस्मादन्यद्भस्त्वसीत्युद्दालकेन पित्रा पुत्रं श्वेतकेतुं प्रति भेदस्यैवोपदिष्टत्वेन नैतद्वाक्यबलेनापि जीवेश्वरैक्यसिद्धिरिति न तेषामप्यैक्यपरत्वं प्रत्युत एतद्वाक्यविरोधेन तेषामुक्तार्थत्वमिति भावः । नचास्य स्वार्थे तात्पर्याभावः शङ्कनीयः । नवकृत्वोऽभ्यासात् । अभ्यासस्य तात्पर्य-लिङ्गत्वादिति भावेनोक्तम्— **नवकृत्वोऽभ्यासादिति** ।। तथाच निश्चिततात्पर्यकत्वेन प्राबल्यात्तद्विरोधेन तद्योऽहमित्याद्यन्तर्याम्यैक्यपरमेवेति भावः । यद्यप्यसन्दिग्धानि जीवेश्वरभेदवाक्यानि सन्ति तथाऽप्यैक्यस्याऽगमप्रमाणासिद्धत्वं तद्विरुद्धत्वं चोपपादयितुम् अस्य वाक्यस्योदाहरणम् ।

भाष्यम्—

['अतत्वमसि' इत्येतदभेदनिराकरणपरम्]

'तद्योऽहं सोऽसौ' 'अहं ब्रह्मास्मि' इत्यादिवाक्यानां सम्यगर्थापरिज्ञानाद् भ्रान्तिप्राप्तोऽभेदोऽतत्त्वमसीति नवकृत्वो निराक्रियते। 'तद्धैक आहुरसदेवेदमग्र आसीत्' एकमेवाद्वितीयं कुतस्तु खलु सौम्यैवं स्यात्कथमसतः सज्जायेत' इत्यादिना 'असद्वा इदमग्र आसीदसतः सदजायत' इत्यादि श्रुत्यर्था-परिज्ञानोत्थभ्रमो यथा निवार्यते। एवमतत्त्व-मसीति वाक्येनापि। स आत्मेति शब्दाच्च । आत्मशब्दस्य परमात्मनि मुख्यत्वेऽपि जीवे भ्रान्तिरुपपद्यते । तन्निवृत्त्यर्थं चातत्त्वमसीत्याह ।

यच्चाऽऽप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति भण्यते ॥

इत्यादिना [1]आस्यादिकम् 'ऐतदात्म्यमिदं सर्वम्' इत्यनेनोच्यते ।

पूर्णत्ववाच्यात्मशब्द आत्मा पूर्णत्वतो हरिः ॥

—इत्यादिना स आत्मेति पूर्णत्वमभिधीयते।

टिप्पणी—

ननु यद्यस्य वाक्यस्यातत्वमसीति पदच्छेदेन भेदप्रतिपादकत्वं तर्हीदम् ऐक्यप्रतिषेधपरमित्युक्तं स्यात् । नचैवं युक्तम् । जीवेश्वरैक्यस्याप्राप्तत्वेन प्रतिषेधानुपपत्तेरित्यतः प्राप्तिं दर्शयति– **तद्य इति** ।। सम्यगर्थः श्रुतितात्पर्य-विषयीभूतः । तदपरिज्ञानाद् या उत्पन्ना भ्रान्तिः तया प्राप्त इत्यर्थः । श्रुतितात्पर्यापरिज्ञानोत्थभ्रमप्राप्तं श्रुत्यैव निराक्रियत इत्येतत् कुत्र दृष्टमित्यत आह– **तद्धैक इति** ।। 'एकमेवाद्वितीयम्' इत्यस्यानन्तरं यस्मादसतः सदजायतेति वाक्यमुदाहर्तव्यम् । एवमनूदितं मतं दूषयति– **कुत इति** ।। एवमासीदिति कुतस्तु स्यान्न कुतोऽपि । व्याहतत्वात् । कथमसतः सज्जायेत असतः

---

१. 'व्यास्यादिकं' इति ह.ती. ।

कारणत्वादर्शनादित्यर्थः । 'ब्रह्म वा असत् सद्वाव प्राणः' इत्यादिश्रुत्युक्तो ब्रह्मणः प्रलयाग्रवृत्तित्वं प्राणस्य तज्जातत्वमित्येवंरूपो योऽर्थः तदपरिज्ञानोत्थभ्रमो भ्रमप्राप्तमसतः प्रलयाग्रवर्तित्वं सतः तज्जन्यत्वं चेत्यर्थः । निरन्तरवाक्येनाप्यभेदप्राप्तिं दर्शयति– **स इति** ।। 'स एषोऽणिमैतदात्म्यम्' इत्यत्र प्रकृतो यः स आत्मा जीव इति आत्मशब्दाच्च । भ्रान्तिप्राप्तस्त्वभेद इति पूर्वेण सम्बन्धः । नन्वात्मशब्दस्य परमात्मनि मुख्यत्वात् कथं ततो जीवब्रह्मैक्यभ्रान्तिरित्यत आह– **आत्मशब्दस्येति** ।। आत्मशब्दस्य परमात्मनि मुख्यत्वेऽपि तदप्रतीतिदशायां जीवे एतद्वाक्यगतात्मशब्दवाच्यत्वभ्रान्तिरुपपद्यते । जीवस्याप्यमुख्यत आत्मशब्दवाच्यत्वादित्यर्थः । अस्त्वेवं निरन्तरवाक्येनाप्य-भेदप्राप्तिः किं तत इत्यत आह– **तन्निवृत्त्यर्थमिति** ।। नन्वैतदात्म्यमिदं सर्वमिति जीवेश्वरैक्यं प्रतीयते एतत्सत् आत्मा यस्य सर्वस्य तदेतदात्म तस्य भाव ऐतदात्म्यम् इति । तत्कथमतत्वमसीति अभेदनिराकरणं युक्तमित्यत आह– **यच्चेति** ।। यद् यस्मादाप्नोति व्याप्नोति । सर्वमिति शेषः । आदत्ते स्वीयतया सर्वान् सर्वाधिपतिरित्यर्थः । भावः सत्ता सन्ततो नित्यः आङ्पूर्वाभ्यां तनु विस्तारे माङ् माने इति धातुभ्यां डन् । तथाचाङोऽर्थः– **समिति** । तनु विस्तार इत्यस्य कालतो विस्तृतिमभिप्रेत्य तत इत्युक्तम् । उत्पादनं च संस्थानमित्युदाहृतवचनानुसारेण मानं सत्तेत्यभिप्रेत्य भाव इत्युक्तम् । इत्यादिनाऽऽत्मशब्दस्य व्याप्त्याद्यभिधायकत्वावगमादिति शेषः । आप्त्यादिकं व्याप्त्यादिकम् । ऐतदात्म्यमित्येतदन्तर्गतात्मशब्देनेत्यर्थः । तथाचैष चासावात्मा चैतदात्मा । 'विचित्रा हि तद्धितगतिः' इति एतदात्मन इदम् इत्यर्थे तद्धितोऽयमिति भावः । स आत्मा जीव इत्यर्थो न चेत्कस्तदर्थ इत्यत आह– **पूर्णत्ववाचीति** ।। आत्मशब्दः पूर्णत्ववाची हरिश्च पूर्णः अतः पूर्णत्वतो हरिरात्मेति योजना । इत्यादिना आत्मशब्दस्य पूर्णत्वाभि-धायकत्वावगमादिति शेषः ।

**भाष्यम्——**

**[मृत्पिण्डादिदृष्टान्ताश्च भेदानुकूलिनः भवन्ति]**

**'यथा सोम्यैकेन मृत्पिण्डेन' इति सदृशविज्ञानेन सदृशान्तरं विज्ञातं भवतीत्युक्तम् । लोहमणिनेति मणिशब्दात्प्रधानविज्ञानेना-प्रधानं सर्वं विज्ञातं भवतीति ।**

**टिप्पणी——**

स्यादेतत् । 'सर्वं खल्विदं ब्रह्म' इति सर्वस्य प्रपञ्चस्य ब्रह्मात्मैकत्वमुक्त्वा तत्कथमित्याकाङ्क्षायां, 'तज्जलान्' इति 'शान्त उपासीत' इति 'तज्जत्वात्तल्लत्वा-त्तदनत्वात्' इति सर्वस्य ब्रह्मोपादानत्वं प्रागुक्तम् । उपादानत्वं च न परिणामित्वेन । निर्विकारत्वश्रुतिविरोधात् । किन्तु जगदारोपाधिष्ठानत्वेन । यथा शुक्तिकायाः रजतारोपाधिष्ठानत्वम् । तद्वज्जगतो ब्रह्मोपादानत्वं प्रपञ्चयितुं षष्ठस्य पूर्वार्धः प्रवृत्तः । तत्र श्वेतकेतुं प्रत्युद्दालकेन उत 'तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतम् अविज्ञातं विज्ञातम्' इत्येकस्य ब्रह्मणो ज्ञानेन सर्वस्य ज्ञानं भवतीत्युक्तम् । न तद्युक्तं अन्यज्ञानेनान्यज्ञानस्य क्वाप्यदर्शनाद् इत्यभिप्रायेण 'कथं नु भगवः स आदेशो भवति' इति श्वेतकेतुनाऽऽक्षिप्ते कार्यस्य उपादानादनन्यत्वान्नानुपपत्तिरित्याशयवतोद्दालकेन मृत्पिण्डादिदृष्टान्ताः कथिताः । तस्य चायमर्थः । एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटादिकं मृदात्मकत्वाविशेषाद् विज्ञातं भवेदित्यादि । तथाच ब्रह्मातिरिक्तस्य जगतो मिथ्यात्वं षष्ठाद्यार्धस्य निश्चितम् । तत्कथं पूर्वार्धविरुद्धभेदपरत्वं उत्तरार्धस्योच्यते । किन्नाम तस्मादुहैवं वित् यद्यपि चण्डालयोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतं स्यात् इत्युक्तार्थस्योपपत्तये सर्वजीवानां ब्रह्मणाऽभेद एवोत्तरार्धेन प्रतिपाद्यत इति युक्तमिति । मैवम् । सादृश्यप्राधान्याभ्यामेवैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्रैव मृत्पिण्डादिदृष्टान्तानामुक्तत्वेन उत्तरार्धस्य भेदपरत्वाङ्गीकारे पूर्वार्ध-विरोधाभावात् । ननु सादृश्यस्यैवात्र हेतुत्वेन विवक्षितत्वे दृष्टान्तत्रयं व्यर्थमिति

चेत्, विकारमिथ्यात्वस्य हेतुत्वेन विवक्षायामपि वैय्यर्थ्यं सममेव । दुर्गमत्वात्तत्वस्यानेकदृष्टान्तोपादानमिति चेत् सममस्मन्मतेऽपि । अस्ति चात्र विवक्षाविशेष इत्याह– **यथेत्यादिना** ।। विकारविकारिणोरभेदाभावेऽपीत्यपिशब्देन द्योतयति । ननु प्रधानवाचक-पदाभावात्प्रधानविज्ञानेनेति कथमुक्तम् इत्यत उक्तम्– **मणिशब्दादिति** ।। लोहप्रधानसुवर्णविज्ञानेनाप्रधानं सर्वं तदन्यत् लोहमयमित्यर्थः– **भवतीतीति** ।। उक्तमित्यनुवर्तते ।।

**भाष्यम्—**

**'मणिर्मुखं प्रधानश्चेत्युत्तमस्य वचो भवेत्' इति वचनाच्च ।।**

**'यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' इति पुनरपि सदृशेन विज्ञातेन सदृशान्तरं विज्ञातं भवतीत्यभ्यासस्तात्पर्यार्थः ।**

**उपादानविवक्षायामेकत्वविवक्षायां चैकेनेति विशेषणं पिण्डेनेति एकेन मणिनेति पुनरेकेनेति च विशेषणानि व्यर्थानि भवेयुः । तस्मिन् पक्षे मृदा विज्ञातया लोहेन विज्ञातेन कार्ष्णायसेन च विज्ञातेन सर्वं विज्ञातं भवतीति वक्तव्यम् । नह्येकमृत्पिण्डविकारभूतं सर्वं मृन्मयम् । नच तेनैक्यं सर्वस्य विद्यते । नचैकलोहमणिकार्यं सर्वलोहमयम् । नच तेनैकीभूतम् । नचैकनखनिकृन्तनकार्यं सर्वं कार्ष्णायसम् ।**

**टिप्पणी—**

मणिशब्दस्य प्रधानवाचकत्वं कुत इति चेत् मणिप्रधानशब्दयोः पर्यायत्वात् । तदपि कुत इत्यत आह– **मणिरिति** ।। **अभ्यासस्तात्पर्यार्थ इति** ।। अभ्युपेत्य चेदमुदितम् । 'अत्यल्पेऽपि हि विज्ञाते सदृशे तादृशं बहु । ज्ञायते नखकृन्तन्या यथा सर्वमयोमयम् । किमु विष्णोर्बहोर्ज्ञानादत्यल्पं जगदीदृशम् ।' इति छान्दोग्यभाष्येऽत्रापि विवक्षाविशेषस्योक्तत्वात् । ननु दृष्टान्तवाक्यत्रये अधिष्ठानत्वादिरूपोपादानत्वादिकमेव विक्षितमिति किं न स्यात् । उपादानो-पादेययोरेकत्वेन तद्विज्ञाने तद्विज्ञानस्य सम्भवादित्यतस्तदनूद्य तत्रानुपपत्तिमाह–

**उपादानेति** ॥ **एकत्वेति** ॥ उपादानोपादेययोरिति शेषः । व्यर्थानि विगतप्रयोजनानि विरुद्धार्थानि चेत्यर्थः । विगतप्रयोजनकत्वं तावदुपपादयति– **तस्मिन्निति** ॥ विरुद्धार्थत्वं चोपपादयति– **नहीत्यादिना** ॥ **नच तेनेति** ॥ सर्वमृण्मयस्यैकमृत्पिण्डविकारत्वाभावादेवेत्यर्थः । एवमुत्तरत्रापि 'सर्वं कार्ष्णायसम्'इत्यनन्तरं 'नच तेनैकीभूतम्'इत्यपि वक्तव्यम् ॥

**भाष्यम्—**

**[वाचारम्भणवाक्यं जगत्सत्यत्वबाधकं न भवति]**

**'वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्यादि प्रधानपरिज्ञाने गुणभूतं परिज्ञातमिव भवतीत्यत्र दृष्टान्तान्तरम् । वाचा नाम्ना आरम्भणं विकारः । विविधत्वेन कर्तुं योग्यमिति विकारः । सत्यं सर्वदा विद्यमानं नामधेयं मृत्तिकेत्येव । सङ्केतरूपेण नानाविधानि नामानि कर्तुं शक्यन्ते ।**

**तथापि शास्त्रप्रयोगसिद्धमृत्तिकादिनामपरिज्ञानात् तत्तन्नामविद् भवति । एवं नित्यासाम्यातिशयसर्वगुणपरिपूर्णपरमेश्वरपरिज्ञानात्सर्वविद् भवतीति ।**

**टिप्पणी—**

नन्वेतद्दृष्टान्तत्रयोपपादनाय त्रयाणामपि वाक्यानां शेषाः सन्ति । 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम् । वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यम्' इति । तत्र विकारस्य मिथ्यात्वमुच्यते । वाचारम्भणं वागालम्बनं विकारो नामधेयं नामैव केवलम् । न विकारो नाम वस्त्वस्ति परमार्थतो मृत्तिकेत्येव मृत्तिकैव सत्यं वस्तु । अतः कारणव्यतिरिक्तस्य कार्यस्य मिथ्यात्वाद् यथा सोम्येत्युक्तमुपपन्नमिति । एवं श्रुत्या स्वयमेव विकार-मिथ्यात्वस्यैकविज्ञानेन सर्वविज्ञानहेतुत्वेनोक्तत्वात् कथं सादृश्यादेर्हेतुत्व-मुच्यते । श्रुत्यभिप्राये निश्चिते पदवैयर्थ्यादिकं न दोष इत्यतस्तद्वाक्यत्रय-

तात्पर्यमाह– **वाचारम्भणमिति** ।। प्रधाने परिज्ञाते गुणभूतं सर्वं विज्ञातं भवतीत्यनुपपन्नम् । प्रधानभूतराजादिपरिज्ञानेऽपि भृत्यादीनामविज्ञानादित्यत उक्तम्– **ज्ञातमिवेति** ।। ज्ञातफलकं भवतीति भावः । 'यथा सोम्य' इति दृष्टान्तस्योक्तत्वाद् दृष्टान्तान्तरमित्युक्तम् । दृष्टान्तान्तरप्रतिपादकमित्यर्थः । ननु कथमुक्तार्थे दृष्टान्तप्रतिपादकमिदं वाक्यम् अप्रतीतेः इत्यत उपलक्षणत्वेन प्रथमवाक्यं व्याचष्टे– **वाचेति** ।। वाचा वागिन्द्रियेण नाम्नां संस्कृतातिरिक्तानां यदारम्भणमुत्पादनं तद् विकारः । विकारशब्दार्थमाऽह– **विविधत्वेनेति** ।। साङ्केतिकनामोत्पादनस्य पुरुषेच्छाधीनत्वादिति भावः । तत एव साङ्केतिकनाम्नां विनाशश्चेति लभ्यते । सत्यशब्दार्थं वदन् नामधेयं मृत्तिकेत्येव सत्यमित्येतद् योजयति– **सत्यमिति** ।। नन्वस्तु साङ्केतिकनाम्नामुत्पत्तिविनाशवत्त्वं संस्कृत-नाम्नामनादिनित्यत्वं च । तथाऽपि कथमेतद्वाक्यं प्रधानविज्ञाने दृष्टान्ता-न्तरप्रतिपादकमित्यत आह– **सङ्केतरूपेणेति** ।। शक्यन्त इत्यनन्तरं तथाच नानाविधतत्तन्नामपरिज्ञानाद् विद्वद्व्यवहारगोचरत्वादिकं भवति यद्यपीति वाक्यशेषः । तथाऽपीत्यनन्तरं साङ्केतिकनामापरिज्ञानेऽपि यथेति शेषः । तत्तन्नामविद्भवति तत्तन्नामवेदनप्रयोजनवान् भवतीत्यर्थः । प्राधान्योपपादनार्थं नित्यासाम्येत्यादि । सर्ववित्सर्वज्ञानफलवान् । अत एव वक्ष्यति सर्वं ज्ञातमिवेति । अनेन श्रुतौ यथा सोम्य तेन तद्विज्ञातं स्यादिति प्रकृतमनुवर्तनीय-मित्युक्तं भवति । तथाचाप्राकृतत्वादनित्यत्वाच्च परापेक्षत्वेन साङ्केतिकं नाम अप्रधानम् । अनादिनित्यत्वात्परानपेक्षत्वेन संस्कृतं प्रधानम् । तत्र यथा प्राधान्यात्संस्कृतज्ञानमात्रेण साङ्केतिकं ज्ञातफलं भवति । एवमनित्यत्वादिना प्रधानस्य देवताकर्मादिमिश्रस्य सकलस्यापि जगतो ज्ञाने यत्फलं तत्समस्तमपि नित्यत्वादिना प्रधानस्य परमात्मनो ज्ञानाल्लभ्यते तत्फलेऽन्तर्भवतीति भावः ।।

**भाष्यम्**——

**यथैकस्मिन् जनपदे प्रधानपुरुषेषु परिज्ञातेष्वाहूतेष्वागतेषु विनाशितेषु रक्षितेषु वा सर्वो जनपदः परिज्ञात आहूत आगतो विनाशितो रक्षित इत्युच्यते**

**। यथा वा राजसु नाशितेषु । 'नाशिता पृथिवी सर्वा धार्तराष्ट्रेण दुर्नयैः' इति । यथाच केषाञ्चित्पुरुषाणां रक्षणेन 'शशास पृथिवीं सर्वां सशैलवनकाननाम्' इति । एवं सर्वोत्तमस्य परमेश्वरस्य विज्ञानात्सर्वं विज्ञातमिव भवति । नच मृन्मात्रविज्ञानाद्धटशरावादिसंस्था विज्ञाता भवन्ति मुख्यतः । तथा सति दृष्टमृदः पुरुषस्य घटशरावादिजिज्ञासा न स्यात् ।**

**टिप्पणी—**

नन्वेवं तर्हि येनाश्रुतमित्यत्रोपचार इत्युक्तं स्यात् । विज्ञातशब्दस्य विज्ञाते सति यत्फलं तदर्थत्वाङ्गीकारात् । तथाचोपचारप्रयोगे प्रयोजनं वक्तव्यमित्यतो निरूढत्वादस्य प्रयोगस्य न प्रयोजनापेक्षेति भावेन तादृशलौकिकवैदिक-प्रयोगप्रदर्शनपूर्वं प्रकृते योजयति— **यथेत्यादिना** ।। नाशितेत्यत्र शशासेत्यत्र च प्रधानपुरुषनाशरक्षणयोरप्रतीतेस्तदुदाहरणं प्रकृतानुपयुक्तमित्यतः स्वयमुभयत्र यथा चेत्यादि पूरितम् । नन्वेकविज्ञानेन सर्वविज्ञाने मुख्ये सम्भवत्यमुख्यग्रहणं किमर्थं कार्यमित्यतो मुख्यत्वे बाधकमाह— **नचेति** ।। एतदेवोपपादयति— **तथा सतीति** ।। ज्ञाते जिज्ञासाविरहादिति भावः ।

**भाष्यम्—**

**[श्रीहरिसर्वोत्तमत्वज्ञापनार्थं सृष्टिनिरूपणम्]**

**सृष्टिकथनं च प्राधान्यार्थम् । त्रीणि रूपाणीत्येव सत्यमित्यपि प्राधा-न्यार्थमेवाभिमानिदेवतापेक्षया।**

**टिप्पणी—**

ननु यदि विकारमिथ्यात्वमत्र न प्रतिपाद्यं स्यात्तदा 'सदेव सोम्येदमग्र आसीत् तत्तेजोऽसृजत सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इत्यादिना यदादौ ब्रह्ममात्रावस्थानं तस्मादेव जगतः सृष्टिः सदायतनत्वमित्याद्युक्तं तदसङ्गतं स्यात् । तद्धि जगतो ब्रह्मविवर्तत्वोपपादनेन कार्यस्य पृथगसत्वपरं भवतीत्यत आह— **सृष्टीति** ।। आदौ ब्रह्ममात्रावस्थानादिसमुच्चयार्थश्चशब्दः । अवधारणार्थकः

प्राधान्यार्थमेवेति वा सम्बद्ध्यते । प्राधान्यज्ञापनार्थमित्यर्थः । स्यादिदमसङ्गतं सृष्ट्यादिकथनमस्मन्मते यदि ब्रह्मविवर्तादिपरं तत्स्यात् । नचैवम् । किं नाम? यद्वाचारम्भणादिदृष्टान्तेन प्राधान्याद् ब्रह्मज्ञानेनाप्रधानप्रपञ्चज्ञानमुक्तं तत्र कथं जगदपेक्षया ब्रह्मणः प्राधान्यमित्यपेक्षायां जगन्निमित्तकारणत्वादिना तज्ज्ञापनार्थमेवेति कथमसङ्गतिरिति भावः । ननु 'अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' इत्युत्तरवाक्ये विकारमिथ्यात्वमुक्त्वोपादानभूततेजोबन्नानां त्रयाणामेव सत्यत्वोक्त्या कारण-व्यतिरेकेण कार्याभावावगमात् । तदनुसारेण वाचारम्भणमिति पूर्ववाक्यत्रयस्यापि तदर्थत्वमेव युक्तम् । नतु प्रधाने परिज्ञाते गुणभूतं ज्ञातमिव भवतीत्यत्र दृष्टान्तकथनपरत्वमित्यत आह– **त्रीणीति** ।। यद्वा, प्राधान्यज्ञापनार्थं सृष्टिकथनमिति न युक्तम् । 'अपागादग्नेरग्नित्वम्' इत्युत्तरवाक्ये विकारमिथ्यात्व-मुक्त्वोपादानभूततेजोबन्नानां त्रयाणामेव सत्यत्वोक्त्या 'तत्तेजोऽसृजत' इत्यादि-कथनस्य कारणव्यतिरेकेण कार्यासत्वे तात्पर्यावगमादित्यतस्तद्वाक्यस्य तात्पर्यमाह– **त्रीणीति** ।। किमपेक्षया विष्णोः प्राधान्यज्ञापनार्थमिदं वाक्यमित्यत उक्तम्– **अभिमानिदेवतापेक्षयेति** ।।

**भाष्यम्—**

**तेजोऽभिमानवान् ब्रह्मा वायुश्चाबभिमानवान् ।**
**रुद्रः क्षित्यभिमानी चाप्येतन्मयमिदं जगत् ।।**
**अभिमन्यमानसहितास्त्रय एतेऽभिमानिनः ।**
**विष्णोर्जाताः क्रमेणैव पूर्वस्मादुत्तरोत्तरम् ।।**
**तेजोऽबन्नाभिधा तस्मादेषामेव प्रकीर्तिता ।**
**एते च त्रीणि रूपाणीत्यभिधागोचराः सुराः ।।**
**ब्रह्मवायुगिरीशेभ्यस्तेभ्यो जातमिदं जगत् ।**
**अतोऽग्निसूर्यसोमानामपि रूपं तदुद्भवम् ।।**

**अतोऽग्निसूर्यसोमानां नामाप्येषां प्रकीर्तितम् ।**
**सादनाद्यमनाच्चैव सत्यमेषां त्रयः सुराः ॥**
**तेषां सत्यं हरिः साक्षाद्यतस्तेषां नियामकः ।**
**प्रधाने सत्यशब्दोऽयं श्रुतिभिः समुदाहृतः ॥**

**टिप्पणी—**

स्यादेतदेवं यदि त्रीणि रूपाणीति उपादानभूततेजोबन्नान्युच्येरन् । नचैवम् । तथा सतीतिशब्दवैयर्थ्यात् । किन्तु 'तत्तेजोऽसृजत' 'तदपोऽसृजत' 'ता अन्नमसृजन्त' इति परमात्मसृष्टत्वेनोक्तानां तेजोबन्नाभिमानिदेवतानां त्रीणि रूपाणीति नामधेयम् । उपलक्षममेतत् अग्न्यादिनामधेयं च सत्यं मुख्यमिति त्रीणि रूपाणीत्यादिशब्दमुख्यार्थत्वोक्त्या तत्स्रष्टुर्भगवतः तदपेक्षया प्राधान्यलाभेनेदमपि वाक्यं प्राधान्यज्ञापनार्थमेव प्रवृत्तमित्यर्थः । प्रतीतार्थपरित्यागेनोक्तार्थपरत्वं वाक्यानां कुत इत्यतस्तत्तेजोऽसृजतेत्येदिव्याख्यानरूपं प्रमाणं पठति— **तेज इत्यादिना** ॥ कास्ता अभिमानिदेवता इत्यत आह— **तेज इति** ॥ अनेन 'तत्तेजोऽसृजत' 'तदपोऽसृजत' 'ता अन्नमसृजन्त'इति वाक्यत्रयगततेजोबन्नशब्दा व्याख्याताः । तेजोभिमानवान् ब्रह्मेत्यवान्तराभिमानिव्यपेक्षया । तेन 'सोऽसृजत्प्रथमं देवीं तेज आख्यां श्रियं सतीम्' इत्यनेन न विरोधः । 'तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति अण्डजं जीवजमुद्भिज्जम्'इत्येतद्वाक्यतात्पर्यमाह— **अपीति** ॥ जगदप्येतत्कारणकमित्यर्थः । न केवलं तेजआदिशब्देन तदभिमानिन एव ग्राह्याः किन्तु भूतमपीति भावेन 'तत्तेजोऽसृजत'इति वाक्यत्रयं व्याचष्टे— **अभिमन्यमानेति** ॥ 'तदपोऽसृजत' 'ता अन्नमसृजन्त' इति अबन्नयोस्तेजोब्जन्यत्वोक्तेः कथं विष्णोर्जाता इत्यत उक्तम्— **क्रमेणैवेति** ॥ साक्षाद्विष्णोरेव क्रमेण जातत्वे कथमुक्तशङ्कानिरास इत्यतस्तदेव विशदयति— **पूर्वस्मादिति** ॥ जातमिति सम्बन्धः । अभिमान्यभिमन्यमानयोः किं समप्रधानभावेन

तेजआदिशब्दवाच्यत्वं नेत्याह– **तेज इति** ।। तस्मादभिमानित्वाद् एषामेव मुख्येति शेषः । 'नामधेयं त्रीणि रूपाणीत्येव सत्यम्'इत्येतद् व्याचष्टे– **एत इति** ।। चोऽवधारणे । मुख्यत इति शेषः । तेन त्रीणि रूपाणीति नामधेयं सत्यं मुख्यमिति व्याख्यातं भवति । 'सेयं देवतेमास्तिस्रो देवता अनेन जीवेनाऽत्मनानुप्रविश्य नामरूपे व्याकरोत्' इति वाक्यतात्पर्यमाह– **ब्रह्मेति** ।। 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं' 'यदादित्यस्य रोहितं रूपं' 'यच्चन्द्रमसो रोहितं रूपं' 'यद् विद्युतो रोहितं रूपम्' इत्यादिवाक्यचतुष्टयं व्याचष्टे– **अत इति** ।। अग्न्यादिरूपाणां जगदन्तर्गतत्वात् इत्यर्थः । अपिशब्देन विद्युतो ग्रहणम् । तेभ्य उद्भवो यस्य रूपस्येति व्यधिकरणबहुव्रीहिः । अग्निसोमसूर्यविद्युतां रोहितं रूपं ब्रह्मोद्भवं शुक्लं रूपं वायूद्भवं कृष्णं रूपं रुद्रोद्भवमित्यर्थः । 'अपागादग्नेरग्नित्वम्'इत्यादिवाक्यचतुष्टयतात्पर्यमाऽह– **अत इति** ।। अग्न्यादिरूपाणां ब्रह्मादिजन्यत्वेनाग्न्यादिशब्दप्रवृत्तिनिमित्ताग्नित्वादिकम् अग्न्यादिषु मुख्यतो नास्ति ब्रह्मादिष्वमुख्यतो वर्तते यत इत्यर्थः । एषामेव मुख्यत इति शेषः । यथोक्तं छान्दोग्यभाष्ये 'अतो यल्लोहितं रूपं श्रियस्तद्रूपसम्भवम् । यच्छुक्लं वायुजं विन्द्यात् कृष्णं चैव शिवोद्भवम् । तस्मादग्नेर्यदत्तृत्वं अग्निनामप्रवर्तकम् । लक्ष्म्यादिदेवतानां तन्नैवाग्नेरग्निता ततः' इत्यादि । कुतोऽग्न्यादिशब्दप्रवृत्तिनिमित्तमग्नित्वादिकम् अग्न्यादितोऽपगतं ब्रह्मादावेव वर्तते इत्याशङ्कापरिहारकत्वेन ' त्रीणि रूपाणीत्येव सत्यम्'इत्येतद्वाक्यं प्रकारान्तरेण व्याचष्टे– **सादनादिति** ।। इत्येवेत्यस्यार्थः– **सादनाद् यमनाच्चेति** । एतेषामग्न्यादीनां सादनादिति सम्बन्धः । यद्वाऽत इत्युक्तमेव हेतुं दर्शयितुं त्रीणि रूपाणीत्येतद्वाक्यं व्याचष्टे– **सादनादिति** ।। ननु 'यो देवानां नामधाः' इत्यग्न्यादिनाम्नां विष्णावेव मुख्यत्वोक्तेः कथं ब्रह्मादीनां तन्मुख्यमित्यत आह– **तेषामिति** ।। एते च त्रीणि रूपाणीत्यत्र सत्यशब्दो मुख्यार्थोऽभिप्रेतः तत्कथमित्यत आह– **प्रधान इति** ।।

भाष्यम्—

[मृत्पिण्डादिदृष्टान्तानां अभिप्रायः]

यथैव सर्वलोहानां प्रधानं काञ्चनं स्मृतम् ।
यथा मृत्पिण्डसदृशा मृण्मयाः सर्व एव च ॥
यथा कार्ष्णायसं सर्वं समं कार्ष्णायसान्तरे ।
एवं सर्वस्य जगतः सदृशः श्रेष्ठ एव च ॥
हरिस्तेन तु तज्ज्ञानाज्जगज्ज्ञातमिवाखिलम् ।
स स्रष्टा चैव संहर्ता नियन्ता रक्षिता हरिः ॥
तेन व्याप्तमिदं सर्वमैतदात्म्यमतो विदुः ।
स आत्मा पूर्णगुणतः स सूक्ष्मः सर्वगः सदा ॥
सर्वोत्तमत्वात्सत्यं तज्जीवाभिन्नं तदासुराः ।
विदुर्न त्वं तथा विद्धि श्वेतकेतो कदाचन ॥

टिप्पणी—

यथा सोम्यैकेन 'लोहमणिना' इति वाक्यं व्याचष्टे– **यथैवेति** ॥ एवकारः प्रसिद्ध्यर्थकः । 'यथा सोम्यैकेन मृत्पिण्डेन' 'यथा सोम्यैकेन नखनिकृन्तनेन' इति वाक्यद्वयं व्याचष्टे– **यथेति** ॥ यथैवेति सम्बन्धः । कार्ष्णायसान्तरे कार्ष्णायसान्तरेण । दार्ष्टान्तिकमाह– **एवमिति** ॥ एवमेवेति सम्बन्धः । श्रेष्ठ एव नत्वभिन्न इति वा । किं तत इत्यतो 'येनाश्रुतं श्रुतं भवति' इत्यादि व्याचष्टे– **तेन त्विति** ॥ तुशब्दोऽवधारणे । नतु जगतो ब्रह्मण्यारोपितत्वेन । सन्मूला इत्यादि व्याचष्टे– **स इति** ॥ संहर्तेत्यनेन सत् आयतनं प्रलये यासां ताः सदायतना इत्यर्थ उक्तो भवति । नियन्तेत्यनेन सत आयतना नियम्यतयाऽधिष्ठानभूता इत्यर्थ उक्तो भवति । रक्षितेत्यनेन सत् प्रतिष्ठा रक्षकं यासां ताः सत्प्रतिष्ठा इत्यर्थ उक्तो भवति । 'ऐतदात्म्यमिदं सर्वम्' इत्येतद् व्याचष्टे– **तेनेति** ॥ स आत्मेत्येदनूद्य व्याचष्टे– **स इति** ॥ 'स एषोऽणिमा' इत्यणिमशब्दार्थमाऽह– **स सूक्ष्म इति** ॥ सूक्ष्मत्वे तेन व्याप्तमिति

विरुद्धमित्यत आह– **सर्वग इति** ।। परिमाणद्वयस्यापि सद्भावेन न विरोध इति भावः । यद्वाऽऽत्मशब्दस्यार्थान्तरमाह– **सर्वग इति** ।। 'तत्सत्यम्'इत्येतद् व्याचष्टे– **सर्वोत्तमत्वादिति** ।। अप्राप्तप्रतिषेधस्यायोगादादौ जीवाभेदस्य वादिप्राप्तिं दर्शयति– **जीवाभिन्नमिति** ।। तद् ब्रह्म । अतत्वमसीत्यस्य तत् त्वं नासीत्यर्थमभिप्रेत्य तदभिप्रायमाऽह– **न त्वमिति** ।।

**भाष्यम्**——

**[जीवब्रह्मभेदज्ञानमेव मोक्षसाधनम्]**

**किन्तु विष्णुः पृथक् सर्वदेवदेवेश्वरः प्रभुः ।**
**पृथगेवाहमत्यल्पशक्तिज्ञानसुखादिकः ॥**
**इत्येव विद्धि सततमतो मोक्षमवाप्स्यसि ।**
**सर्वोत्तम इति ज्ञातो विष्णुर्मोक्षमिमं नयेत् ॥**
**जीवरूपतया ज्ञातस्तमोऽन्धं प्रापयेत् प्रभुः ।**
**विष्णोर्दासतया विष्णोः सामीप्यं मोक्ष उच्यते ॥**
**न विष्णुत्वं तु मोक्षः स्यादेषोऽहमिति वा स्मृतेः ।**
**संसारसागरात्तीर्णो मुक्तोऽहमिति वा स्मृतिः ॥**
**यदा तदा विमोक्षेण किं फलं ज्ञानिनो भवेत् ।**
**यथा मधुकरैर्नानाविधपुष्परसः सह ॥**
**मधुत्वं प्रापितः संविदभावान्न सुखी भवेत् ।**

**टिप्पणी**——

तर्हि कथं ज्ञेयमिति पृच्छति– **किन्त्विति** ।। तदुत्तरत्वेन त्वमतत् तस्मादन्योऽसीत्यर्थमभिप्रेत्य तदभिप्रायमाह– **विष्णुरिति** ।। कुतो भेदः प्रतिपत्तव्य इत्यतः सर्वेति अत्यल्पेति च भेदकधर्मोक्तिः । पृथगेवेति भेदाभेदनिरासायैवकारः । किमर्थम् एवं ज्ञातव्यमित्यत आह– **अत इति** ।। सर्वदेवेश्वरत्वादिना भेदज्ञानादित्यर्थः । एवं सति मोक्षसाधने ज्ञानस्यैव

स्वातन्त्र्यं न मन्तव्यमित्याह– **सर्वोत्तम इति** ।। इमं ज्ञातारं न त्वं तथा विद्धीत्युक्तं तथा ज्ञानेऽनिष्टमाह– **जीवेति** ।। ननु विष्णुत्वप्राप्तिरूपो मोक्षः कथं भेदज्ञानात् स्यादित्यत आह– **विष्णोरिति** ।। सुप्तेरपि मोक्षत्व-परिहारायोक्तम्– **दासतयेति** ।। दासत्वज्ञानेनेत्यर्थः । इत्थम्भावलक्षणे तृतीया । मुक्तियोग्यसंसारिणामपि विष्णुदासत्वज्ञानस्य मोक्षत्वप्रसङ्गपरिहाराय विष्णोः सामीप्यमित्युक्तम् । विष्णुत्वमेव कुतो न मोक्ष इत्यत आह– **एषोऽहमिति** ।। यदि विष्णुत्वं मोक्षः स्यात् तदैष विष्णुरहमिति मुक्तेन प्रतिसन्धीयेत । नच तत्प्रतिसन्धानमस्ति । अतो न विष्णुत्वं मोक्ष इत्यर्थः । वाशब्दः प्रमाणान्तरसमुच्चयार्थः । ननु विद्यमानमपि विष्णुत्वं न ज्ञायत इति चेत् न । तथा सति इष्टत्वाविशेषेण प्रतिबन्धकाभावाविशेषेण च संसारतीर्णत्व-मुक्तत्वयोरपि ज्ञानाभावप्रसङ्गात् । अस्तु तदपीति चेत्तत्राऽह– **संसारेति** ।। विमोक्षेण किं फलं तदनुभवस्यैव पुरुषार्थत्वादिति भावः । ननु विशिष्टवस्तुत्वा-पत्तेरेव पुरुषार्थत्वोपपत्तौ किं तज्ज्ञानेनेत्यत आह– **यथेति** ।। तथा विष्णुत्वं प्राप्तोऽपि न सुखी भवेदिति शेषः । अनेन 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति' इति खण्डतात्पर्यमुक्तम् ।।

**भाष्यम्**—

> **यथा नद्यो न मुक्ता हि समुद्रं प्रापिता अपि ।**
> **इयमस्मीति चाज्ञानाद् यथा सुप्तो न मुच्यते ।**
> **प्रलयेऽपि हरिं प्राप्तः पृथक्त्वज्ञानवर्जनात् ।।**
> **एवं जीवेशयोर्भेदज्ञानाद्विष्णोः सदोच्चताम् ।**
> **ज्ञात्वैव मुच्यते तस्मादेवं जानीहि पुत्रक ।। इति ब्रह्माण्डे ।।**
> **मग्नस्य हि परेऽज्ञाने किन्न दुःखतरं भवेत् ।। इति च मोक्षधर्मे ।।**

**टिप्पणी**—

ननु माऽस्तु विशिष्टवस्तुत्वं मोक्षः किन्तु विशिष्टप्राप्तिरेव । तथाच तत्प्राप्तेरेव पुरुषार्थत्वोपपत्तौ किं तत्र ज्ञानेनेति चेन्न । किं विशिष्टयत्किञ्चिद्वस्तुप्राप्तिर्मोक्ष

उत विष्णुप्राप्तिरेव । नाऽद्य इत्याह– **यथेति** ।। अज्ञानादित्येव वक्तव्ये इयमस्मीति चाज्ञानादिति यदुक्तं तद्व्यतिरेकेण भेदज्ञानस्य मोक्षसाधन-त्वोपपादनार्थम् । अनेन 'इमाः सोम्य नद्यः' इति खण्डतात्पर्यमुक्तम् । न द्वितीय इत्याह– **यथा सुप्त इति** ।। हरिं प्राप्तोऽपीति सम्बन्धः । पृथक्त्वज्ञानवर्जनादित्यस्य पूर्वोक्त एवाभिप्रायः । अनेन 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्यतात्पर्यमुक्तम् । भेदज्ञानाभावे मोक्षाभाव इति व्यतिरेकमुक्त्वाऽन्वयमाह– **एवमिति** ।। सदोच्चतामेवेति सम्बन्धः । उपसंहरति– **तस्मादिति** ।। न केवलं ज्ञानाभावे मोक्षस्य पुरुषार्थत्वाभावः किन्त्वनिष्टरूपत्वं च स्यादित्याह– **मग्नस्येति** ।। परे अज्ञाने मग्नस्य । सर्वथा मुक्तस्य ज्ञानाभावाङ्गीकार इति यावत् । दुःखतरं दुःखातिशयो न भवेत्किं? भवेदेव । अन्धादौ दर्शनादित्यर्थः ।

**भाष्यम्—**

[भेदस्य मोक्षेऽपि नियतत्वात् सत्यत्वम्]

**'तस्मै स्वलोकं भगवान् सभाजितः सन्दर्शयामास' ।। इत्युक्त्वा**

**'न वर्तते यत्र रजस्तमस्तयोः**
**सत्त्वं च मिश्रं नच कालविक्रमः ।**
**न यत्र माया किमुतापरे हरे-**
**रनुव्रता यत्र सुरासुरार्चिताः' ।। इति च भागवते ।।**

**अदर्शयत् स्वकं लोकं ब्रह्मणे विष्णुरव्ययः ।**
**यस्मात् पदात् परं नास्ति यत्र मुक्ता उपासते ।। इति हरिवंशेषु ।।**

**अतः 'परं न यत्पदम्' इत्यत्रापि यच्छब्दस्य यस्मादित्यर्थः । 'यत्तदि-त्यादयः शब्दाः पञ्चम्यर्थाश्च कीर्तिताः' इति च ।**

**टिप्पणी—**

ननु भेदश्रुतीनामाविद्यकभेदपरत्वान्न तद्विरोधेन 'अहं ब्रह्मास्मि' 'तद्योऽहम्' इत्यादीनाम् अद्वैतश्रुतीनाम् अन्यार्थता व्याख्येयेत्यतो न भेदस्याऽविद्यकत्वं

मुक्तावप्यनुवर्तमानत्वोक्तेरित्याह– **तस्मा इति** ॥ यत्रेत्यस्य मुक्तस्थानपरत्व-प्रदर्शनायोक्त्वेत्यन्तम् उक्तम् । नच समानकर्तृकत्वाभावः । भागवते उक्तत्वादि-त्यध्याहारात् । 'यत्र' लोके, सत्वशब्दोऽनेकार्थः क्वचित्प्रकृतिपरिणामविशेषस्य वाचकः 'क्वचित्साधुभावस्य' तत्र सत्वं च न विद्यत इत्युक्ते न ज्ञायते कस्य प्रतिषेध इति । अतस्तयो रजस्तमसोर्मिश्रं सहचरितमित्युक्तम् । रजआदिप्रकरणाद् ज्ञास्यत इति चेत्, श्रुत्यभावे प्रकरणाद्यन्वेषणात् । रजःप्रभृतीनामप्रवृत्तिर्नाम प्रतिबन्धकतया व्यापाराभावः । कालविक्रमः कालसामर्थ्यकृतो भावविकारः । माया प्रकृतिः । अपरे महदादयो न वर्तन्ते इति किमु वक्तव्यं हरेरनुव्रता यत्र वर्तन्ते । असुराः साधवः सन्ति । एवम्भूतं लोकं सन्दर्शयामासेति पूर्वेणान्वयः । अत्र 'हरेरनुव्रताः' इति जीवेशभेदोक्तिः । ननु 'तस्मै स्वलोकम्' इत्यस्य यत्परमुत्तमं नेति वाक्यशेषबलेन गौणमोक्षपरत्वप्रतीतेः कथं नु परममुक्तौ भेदसद्भाव इति प्रतिपादनाय तद्वाक्योदाहरणमित्यतः समाख्यारूपप्रमाणमुदाहृत्य वाक्यशेषं व्याचष्टे– **अदर्शयदिति** ॥ हरिवंशेषु उक्तं यत इति शेषः । यदित्यस्य यस्मादित्यर्थत्वे अभिधानं च वक्ति– **यत्तदिति** ॥ न केवलं प्रथमार्थाः पञ्चम्यर्थाश्च ।

**भाष्यम्—**

**'विद्याऽऽत्मनि भिदाबोधः' । 'क्ष्माम्भोऽनलानिलवियन्मन इन्द्रियार्थ-भूतादिभिः परिवृतः प्रतिसञ्जिघृक्षुः अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परः स्वयम्भूः ॥**

**एवं परेत्य भगवन्तमनुप्रविष्टा**
**ये योगिनो जितमरुन्मनसो विरागाः।**
**तेनैव साकममृतं पुरुषं पुराणं**
**ब्रह्म प्रधानमुपयान्त्यगताभिमानाः ॥**

**भेददृष्ट्याऽभिमानेन निःसङ्गेनापि कर्मणा ॥ इत्यादि च ॥**

**आधिपत्यमृते चैव आनन्देनापि कर्मणा ।**
**सर्वे ते ब्रह्मणस्तुल्या भोगेन विषयेण च ॥**
**नानात्वेनापि सम्बद्धास्तदा तत्कालभाविना ।**
**प्रकृतौ करणातीताः स्वांत्मन्येव व्यवस्थिताः ॥**
**प्रदर्शयित्वा ह्यात्मानं प्रकृतिस्तेषु सर्वशः ।**
**पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते ॥**
**प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते ।**
**संयोगः प्रकृतेर्नैव मुक्तानां तत्त्वदर्शनात् ॥**
**समा दुःखनिवृत्तिस्तु मुक्तानामपि सर्वशः ।**
**मानुषादिविरिञ्चान्तं सुखं मुक्तौ शतोत्तरम् ॥ इत्यादि वायुप्रोक्ते**

**टिप्पणी—**

ननु भेदज्ञानस्य मिथ्याज्ञानत्वात् कथं श्रुतीनां ऐक्यपरत्वाभाव इत्यत आह– **विद्येति** ॥ नच 'भिदाया अबोध' इति व्याख्येयम् । अज्ञानस्य विद्यात्वाभावात् । इतोऽपि न श्रुतीनामैक्यपरत्वमित्याह– **क्ष्मेति** ॥ भूतानामादिर्भूतादिः क्ष्मादिपदैः पञ्चानां भूतानां मनसो दशानामिन्द्रियाणां पञ्चानां विषयाणां भूतादिपदोपलक्षितस्य त्रिविधस्याप्यहङ्कारस्याभिमानिनो देवा उच्यन्ते। अव्याकृतं परमेश्वरं यर्हि यदा गुणत्रयस्याऽत्माऽभिमानी परम्परसङ्घ्चोपेतं परः क्ष्मादिभ्यः । एवं तदा भगवन्तमिति तदीयं लोकम् । अगताभिमानाः अगतजीवभावाः । अत्राव्याकृतं विशति प्रधानं ब्रह्मोपयान्तीति भेदोक्तिः । आदिपदेन 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभ । स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना । जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥' इति वाक्यशेषग्रहणम् । तस्य चायमर्थः । आद्यः स्थिरचराणां यो वेदगर्भः सहऋषिभिर्योगेश्वरैर्भेदज्ञानेनाभिमानेनेश्वरमूर्त्या सृष्टिकाले जाते सति अगुण्यव्यतिकरे सत्वादिगुणविक्रियाहीने विष्णुलोके पूर्ववत् सर्वमुक्ताधिपतिर्जायत इति । अत्र मुक्तौ भेदः स्फुट एव । हिरण्यगर्भमुक्तित्वादेव परममुक्तित्वं च सिद्धम् । मुक्तौ

भेदप्रतिपादकप्रमाणान्तरमाह– **आधिपत्यमिति** ॥ सर्वेऽपि ते मुक्ता आधिपत्यं जगद्व्यापारादिकमृते स्वरूपभूतेनाऽनन्देन कर्मणा च विषयेण च विषय-निमित्तकभोगेन ब्रह्मणस्तुल्या एव नत्वभिन्ना इति योजना। तदा मुक्तिदशायां तत्कालभाविना मुक्तावप्यनुवर्तमानेन नानात्वेन भेदेन अभिसम्बद्धाः सम्यग्युक्ता बभूवुः। प्रकृतौ करणातीताः प्रकृतिनिमित्तेन्द्रियरहिताः स्वात्मन्येव स्वरूप-भूतदेहादावेव व्यवस्थिताः ये मुक्तास्तेषु प्रकृतिः सर्वशो न प्रवर्तते। कुतः हि यस्मादात्मानं परमात्मानं प्रदर्शयित्वा स्वयं च प्रतीता। प्रकृतिपुरुष-विवेकज्ञानादिति यावत्। तर्हि प्रकृतिर्निर्व्यापारा किम्? नेत्याह– **सा पुरुषान्यबहुत्वेन सर्गे प्रवर्ततीति** ॥ सा प्रकृतिर्मुक्तेभ्योऽन्येषां संसारिणां पुरुषाणां बहुत्वेन कारणेन सर्गे सृष्टिकाले सृष्ट्यर्थं वा प्रवर्तति प्रवर्तत इत्यर्थः। तेषां मुक्तानां प्रकृतिबन्धाभावः कुत इत्यत आह– **समेति** ॥ यदि केषाञ्चिन्मुक्तानां प्रकृतिबन्धः स्यात्तर्हि प्रकृतिबन्धनिमित्तकं दुःखं स्यात्। तथा सति 'दुःखाभावः परानन्दो लिङ्गभेद समा मता' (गी.भा. २.५२) इत्यादिविरोधः। अतः प्रकृतिबन्धाभावः सर्वेषामपि सम इति भावः। तर्हि तारतम्यश्रुतिविरोध इत्यत आह– **मानुषादीति** ॥

**भाष्यम्—**

[ऐक्यं न शास्त्रप्रतिपाद्यम्]

**ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः।**
**शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः॥**
**कामक्रोधाभिभूतत्वादहङ्कारवशं गताः।**
**याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः॥**
**ब्रह्मस्तेना निरानन्दाः अपक्वमनसोऽशिवाः।**
**वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते॥**
**तेषां तमःशरीराणां तम एव परायणम्॥**

**आधिपत्यमृते चैव आनन्देनापि कर्मणा ।**
**सर्वे ते ब्रह्मणस्तुल्या भोगेन विषयेण च ॥**
**नानात्वेनापि सम्बद्धास्तदा तत्कालभाविना ।**
**प्रकृतौ करणातीताः स्वात्मन्येव व्यवस्थिताः ॥**
**प्रदर्शयित्वा ह्यात्मानं प्रकृतिस्तेषु सर्वशः ।**
**पुरुषान्यबहुत्वेन प्रतीता न प्रवर्तते ॥**
**प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते ।**
**संयोगः प्रकृतेर्नैव मुक्तानां तत्त्वदर्शनात् ॥**
**समा दुःखनिवृत्तिस्तु मुक्तानामपि सर्वशः ।**
**मानुषादिविरिञ्चान्तं सुखं मुक्तौ शतोत्तरम् ॥ इत्यादि वायुप्रोक्ते**

**टिप्पणी—**

ननु भेदज्ञानस्य मिथ्याज्ञानत्वात् कथं श्रुतीनां ऐक्यपरत्वाभाव इत्यत आह– **विद्येति** ॥ नच 'भिदाया अबोध' इति व्याख्येयम् । अज्ञानस्य विद्यात्वाभावात् । इतोऽपि न श्रुतीनामैक्यपरत्वमित्याह– **क्ष्मेति** ॥ भूताना-मादिर्भूतादिः क्ष्मादिपदैः पञ्चानां भूतानां मनसो दशानामिन्द्रियाणां पञ्चानां विषयाणां भूतादिपदोपलक्षितस्य त्रिविधस्याप्यहङ्कारस्याभिमानिनो देवा उच्यन्ते । अव्याकृतं परमेश्वरं यर्हि यदा गुणत्रयस्याऽत्माऽभिमानी परम्परसङ्घ्चोपेतं परः क्ष्मादिभ्यः । एवं तदा भगवन्तमिति तदीयं लोकम् । अगताभिमानाः अगतजीवभावाः । अत्राव्याकृतं विशति प्रधानं ब्रह्मोपयान्तीति भेदोक्तिः । आदिपदेन 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभ । स सङ्गत्य पुनः काले कालेनेश्वरमूर्तिना । जातेऽगुणव्यतिकरे यथापूर्वं प्रजायते ॥' इति वाक्यशेषग्रहणम् । तस्य चायमर्थः । आद्यः स्थिरचराणां यो वेदगर्भः सहऋषिभिर्योगेश्वरैर्भेद-ज्ञानेनाभिमानेनेश्वरमूर्त्या सृष्टिकाले जाते सति अगुण्यव्यतिकरे सत्वादि-गुणविक्रियाहीने विष्णुलोके पूर्ववत् सर्वमुक्ताधिपतिर्जायत इति । अत्र मुक्तौ भेदः स्फुट एव । हिरण्यगर्भमुक्तित्वादेव परममुक्तित्वं च सिद्धम् । मुक्तौ

भेदप्रतिपादकप्रमाणान्तरमाह— **आधिपत्यमिति** ॥ सर्वेऽपि ते मुक्ता आधिपत्यं जगद्व्यापारादिकमृते स्वरूपभूतेनाऽनन्देन कर्मणा च विषयेण च विषय-निमित्तकभोगेन ब्रह्मणस्तुल्या एव नत्वभिन्ना इति योजना । तदा मुक्तिदशायां तत्कालभाविना मुक्तावप्यनुवर्तमानेन नानात्वेन भेदेन अभिसम्बद्धाः सम्यग्युक्ता बभूवुः । प्रकृतौ करणातीताः प्रकृतिनिमित्तेन्द्रियरहिताः स्वात्मन्येव स्वरूप-भूतदेहादावेव व्यवस्थिताः ये मुक्तास्तेषु प्रकृतिः सर्वशो न प्रवर्तते । कुतः हि यस्मादात्मानं परमात्मानं प्रदर्शयित्वा स्वयं च प्रतीता । प्रकृतिपुरुष-विवेकज्ञानादिति यावत् । तर्हि प्रकृतिर्निर्व्यापारा किम्? नेत्याह— **सा पुरुषान्यबहुत्वेन सर्गे प्रवर्ततीति** ॥ सा प्रकृतिर्मुक्तेभ्योऽन्येषां संसारिणां पुरुषाणां बहुत्वेन कारणेन सर्गे सृष्टिकाले सृष्ट्यर्थं वा प्रवर्तति प्रवर्तत इत्यर्थः । तेषां मुक्तानां प्रकृतिबन्धाभावः कुत इत्यत आह— **समेति** ॥ यदि केषाञ्चिन्मुक्तानां प्रकृतिबन्धः स्यात्तर्हि प्रकृतिबन्धनिमित्तकं दुःखं स्यात् । तथा सति 'दुःखाभावः परानन्दो लिङ्गभेद समा मता' (गी.भा. २.५२) इत्यादिविरोधः । अतः प्रकृतिबन्धाभावः सर्वेषामपि सम इति भावः । तर्हि तारतम्यश्रुतिविरोध इत्यत आह— **मानुषादीति** ॥

**भाष्यम्—**

[ऐक्यं न शास्त्रप्रतिपाद्यम्]

**ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः ।**
**शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः ॥**
**कामक्रोधाभिभूतत्वादहङ्कारवशं गताः ।**
**याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ॥**
**ब्रह्मस्तेना निरानन्दाः अपक्वमनसोऽशिवाः ।**
**वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते ॥**
**तेषां तमःशरीराणां तम एव परायणम् ॥**

अन्य ईशस्तथाऽन्योऽहमिति ज्ञानं विपश्चिताम् ।
आधिक्यज्ञानमीशस्य यतोऽन्यत्वेन युज्यते ।।
'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः ।।'

टिप्पणी—

ऐक्यज्ञानिनां निन्दितत्वाच्च न जीवेश्वरैक्यं श्रुत्यर्थ इत्यभिप्रेत्याऽह— **ऐकात्म्यमिति** ।। एकश्चासावात्मा च एकात्मा तस्य भाव ऐकात्म्यं सर्वात्मनां ब्रह्मैक्यमिति यावत् । यदैकात्म्यं नामेदम् अनैपुणा अविद्यमाननैपुणाः केचिद्ब्रूयुः । एवं वचने किं मूलम् इत्यत आह— **शास्त्रेति** ।। अहं ब्रह्मास्मीति शास्त्राणां तत्वम् अभिप्रेतार्थम् अविज्ञाय ब्रूयुः । कथमविज्ञानमात्रेण तदुक्तिरित्यत उक्तम्— **तथेति** ।। ऐक्यप्रतिपादकसदृशो यो वादः एकविभक्तिमत्त्वादिरूपः सः बलमेषां ते तथोक्ताः । अहं ब्रह्मास्मीति वाक्यानाम् अभिप्रेतार्थमविज्ञाय आपाततः प्रतीत एवार्थे भ्रान्ता इत्यर्थः । सर्वेषामविद्यमानं शास्त्रतत्वाज्ञानादिकमेतेषामेव किन्निमित्तमित्यत उक्तम्— **कामेति** ।। यथोक्तम् 'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत' इति । ननु 'द्वा सुपर्णा' इत्यादिषु शास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह— **याथातथ्यमिति** ।। भेदपराणां शास्त्राणां याथातथ्यमविज्ञाय शास्त्रदस्यवः तानि शास्त्राण्यतत्वावेदकानि इति मन्यमाना इत्यर्थः । एवमैक्यं मन्यमानाः ब्रह्मस्तेनाः । कामादीनामागन्तुकत्वात् मूलकारणमाह— **निरानन्दा इत्यादि** ।। एतेनाधमस्वरूपयोग्यतां लक्षयति । तथाऽपि सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धमैक्यं कथं ब्रूयुरित्यत आह— **वैगुण्यमेवेति** ।। जीवब्रह्मणोस्तत्वतो निर्गुणत्वमेव पश्यन्तो गुणानि सार्वज्ञादिगुणान् न नियुञ्जते तत्स्वरूपेण न योजयन्ति । एवम्भूतानां फलमाह— **तेषामिति** ।। तमोगुणप्रचुरशरीराणां तमो नरकविशेषः परायणं प्राप्यम् । ऐकात्म्यं न चेत् किन्तर्हि तत्वमित्यत उक्तम्— **अन्य इति** ।। ननु विष्णुसर्वोत्तमत्वज्ञानस्य मोक्षहेतुत्वाद् भेदः कुतो ज्ञेय इत्यत

आह– **आधिक्यज्ञानमिति** ।। अन्यत्वेन अन्यत्वज्ञानेनेत्यर्थः । नन्वहं ब्रह्मास्मीत्यादिना स्फुटमैक्यं प्रतिभासते अतस्तद्बलाद् भेदशास्त्रादेरतत्वावेदकत्वादिकल्पनं युक्तमेवेत्यत आह– **यत इति** ।। स्वरूपतः परिमाणभेदतः जातितो जीवत्वादिजातिभेदतः श्रुतितो द्वा सुपर्णेत्यादेः अर्थतः प्रयोजनभावाभावाभ्यां यतः स भगवानन्यः प्रतीयते। अतः सोऽस्मीति सम्बन्धोऽन्वयोऽसंहितो योग्यः कथमेव स्यात्? । अहं ब्रह्मास्मीत्यादीनां वाक्यानामैक्यपरत्वे निश्चिते अन्येषामतत्वावेदकत्वकल्पनं युक्तं स्यात्। नचैवम्। अनुमानागमविरोधेन प्रतीतान्वययोग्यताविरहात् । 'सिंहो देवदत्तः' इत्यादौ योग्यताविरहस्य आकाङ्क्षासन्निधिबाधकत्वस्योपलम्भात्। अन्यथाऽन्योन्याश्रयात्। भेदवाक्यादेरतत्वावेदकत्वादौ सिद्धे योग्यतादिसम्पत्त्याऽहमादिवाक्यानाम् ऐक्यार्थतानिश्चयः । सति तस्मिन्नतत्वावेदकत्वादिनिश्चय इति ।

**भाष्यम्**—

> **'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।**
> **को ह्यत्र पुरुषश्रेष्ठस्तं भवान् वक्तुमर्हति ।।'**

**वैशम्पायन उवाच**—

> **नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह।**
> **बहूनां पुरुषाणां हि यथैका योनिरुच्यते ।।**
> **तथा तं पुरुषं विश्वमाख्यास्यामि गुणाधिकम् ।। इति च मोक्षधर्मे**

> **'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
> **क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**
> **उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।**
> **यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।**
> **यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।**
> **अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।।**

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद् भजति मां सर्वभावेन भारत ॥**
**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात्कृतकृत्यश्च भारत' ॥ इति च ॥**

**टिप्पणी—**

एवम् 'अहं ब्रह्मास्मि' 'तद् योऽहं सोऽसौ' इत्यादिवाक्यमन्तर्यामिपरत्वेन व्याख्याय विशिष्टैक्यार्थतया च स्मृत्या व्याख्याति– **बहव इति** ॥ यद्वा, भेदस्य मीमांसया समर्थितत्वाच्च नैक्यं श्रुत्यर्थ इत्यभिप्रेत्याह– **बहव इति** ॥ उभयविधप्रमाणोपलम्भादिति भावः । बहव इति पक्षेऽपि सर्वेषां समत्वायोगादेकः श्रेष्ठो वक्तव्यः । स च कः? । कथं च श्रैष्ठ्यमित्याशयेन पृच्छति– **को हीति** ॥ अत्र बहूनां पुरुषाणां मध्ये । आद्यप्रश्नोत्तरमाह– **नैतदिति** ॥ एतदित्यस्य विवरणम्– **पुरुषमेकमिति** ॥ यद्वा, एतस्मिन् जगति । सकलश्रुत्यादिविरुद्धत्वादिति भावः । किन्तु बहव इत्यर्थः । एवं पुरुषैक्यं निराकृत्याद्वैतश्रुतिविरोधपरिहाराय तदर्थत्वेन विशिष्टैक्यं वदन् द्वितीयप्रश्नोत्तरमाह– **बहूनामिति** ॥ तेषां बहूनां पुरुषाणां मध्ये या योनिः यः कारणभूतः श्रेष्ठो यथा च श्रेष्ठस्तं पुरुषं तथाऽऽख्यास्यामि । विश्वं व्याप्तम् । गीतायामपि जीवभिन्नस्य विष्णोः सर्वोत्तमत्वस्यैव सर्वसच्छास्त्रप्रतिपाद्यतयाऽभिहितत्वात्तदेव वेदादिप्रतिपाद्यं नाऽत्मब्रह्मैक्यमित्याह– **द्वाविमाविति** ॥ द्वावेवेति सम्बन्धः । इमौ प्रमितौ पुरुषौ चेतनौ । लोके पर्यालोचने सति । अथवा द्वावेवेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । ईशितव्यवर्ग इत्यर्थः । सर्वाणि भूतानि ब्रह्मादयो जीवाः क्षराः शरीरक्षरणात् । कूटस्थो महालक्ष्मीः । अक्षरः अक्षरदेहत्वात् । यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह– **उत्तम इति** ॥ अन्यः क्षराक्षराभ्याम् । न पुनरेतयोरेव मध्ये कश्चित्पुरुषोत्तमः कल्पनीयः । तत्र श्रुत्यादिसम्मतिमाह– **परमात्मेति** ॥ आत्मशब्दो हि चेतनपर्यायः । युक्तिमप्याह– **य इति** ॥ लोकत्रयमिति सर्वोपलक्षणम् । यो हि यस्य

धारणपोषणकर्ता स तस्मादुत्तमो युक्तः । तदाविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम्– **अव्यय इति** ।। तत्कथम्? ऐश्वर्यादित्याह– **ईश्वर इति** ।। स च क इत्यपेक्षायाम् अहमेवेति सप्रमाणकमाह– **यस्मादिति** ।। क्षरं चेत्यन्वयः । लोके पौरषेयागमे । अत्राऽऽत्मनस्तात्पर्यद्योतनाय वेत्तुः फलमाह– **यो मामिति** ।। एवं नत्वश्वकर्णादिशब्दवत् सञ्ज्ञात्वेन । एतच्च पुरुषोत्तमत्वम् अपारमार्थिकमिति सम्मोहवर्जितः । सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । एतच्च नायोग्याय वाच्यमिति भावेनाऽऽह– **इतीति** ।। सर्वविदित्युक्तं ततः किमित्यत आह– **एतदिति** ।। बुद्धिमानपरोक्षज्ञानी । कृतकृत्यो मुक्तः । अत्र सर्वविदित्युक्तत्वात् सर्वेषां पौरुषेयापौरुषेयागमानां विष्णोः सर्वोत्तमत्व एव तात्पर्यं स्फुटं प्रतीयते ।।

**भाष्यम्**—

**[भगवतः तद्गुणानाञ्च भेदज्ञाने अनर्थोक्तिः]**

**ब्रह्मणस्तद्गुणानां च भेददर्श्यधरं तमः ।**
**भेदाभेदप्रदर्शी च मध्यमं तु तमो विशेत् ।।**
**ईषद्भेदप्रदर्शी च तम एवोत्तरं व्रजेत् ।**
**विजानीयात्ततो ब्रह्म सदा सर्वगुणात्मकम् ।।**
**गुणानां च विशेषोऽस्ति न विभेदः कथञ्चन ।**
**ते च सर्वे गुणाः पूर्णास्तच्छरीरः परः स्मृतः ।।**
**आनन्दज्ञानशक्त्यादिदेहं विष्णुं तु ये जनाः ।**
**अदेहं भूतदेहं वा विदुस्ते चाधरं तमः ।।**
**तथा प्रकृतिदेहज्ञाः कर्मदेहविदोऽपि वा ।**
**तस्मादानन्दचिद्देहं चिदानन्दशिरोमुखम् ।।**
**चिदानन्दभुजं ज्ञानसुखैकपदसाङ्गुलिम् ।**
**आकेशादानखाग्रेभ्यः पूर्णचित्सुखशक्तिकम् ।।**

**प्रत्येकं तु गुणांस्तांस्तु सदा सर्वगुणात्मकान् ।**
**ज्ञात्वा विमुच्यते विष्णोः प्रसादान्मानुषोऽपि सन् ॥**

**टिप्पणी—**

ऐक्यज्ञानिनामनर्थोक्तेर्विष्णुसर्वोत्तमत्वादिज्ञानिनां मोक्षोक्तेश्च नैक्यं श्रुत्यर्थ इति भावेन पैङ्गिश्रुतिं पठति– **ब्रह्मण इत्यादिना** ॥ 'महातमस्त्रिधा प्रोक्तम् ऊर्ध्वं मध्यं तथाऽधरम्' इत्युक्तेरिति भावः । तुशब्द एवार्थे । ईषद्भेदप्रदर्शी ब्रह्मगुणा द्विविधाः स्वरूपभूता भिन्नाश्चेति प्रदर्शीत्यर्थः । तर्हि कथं ज्ञेयमित्यत आह– **विजानीयादिति** ॥ ततोऽन्यथाज्ञानेऽनर्थसद्भावात् । ननु गुणात्मकत्वे ब्रह्मणः 'आनन्दं ब्रह्मणः' इत्यादिव्यवहारो गुणगुणिभावश्च कथमित्यत आह– **गुणानामिति** ॥ तच्छरीरो गुणात्मकशरीरः । भूतदेहं भौतिकदेहम् । अधरं तमो 'विशेयुः'इति शेषः । तथा अधरं तमो विशेयुरित्यर्थः । प्रकृतिदेहज्ञाः प्राकृतदेहज्ञाः कर्मनिर्मितदेहविदः । आनन्दचिद्देहमित्युक्तमेव विशदयति– **चिदानन्देति** ॥ गुणानामपि परस्परभेदं निवारयति– **प्रत्येकमिति** ॥ सन् उत्तमः ॥

**भाष्यम्—**

**[जीवब्रह्मणोः ऐक्यचिन्तनम् अनर्थसाधनम्]**

**जीवाभेदं तथाऽभेदं जगता ये विदुः प्रभोः ।**
**तेऽपि यान्ति तमो घोरमधरं ब्रह्मतस्कराः ॥**
**भेदाभेदं विदुर्ये च जीवैस्तु जगताऽपि वा ।**
**परस्य ब्रह्मणो यान्ति तमस्तेऽप्युत्तरं सदा ॥**
**अभेदज्ञाः प्रकृत्याऽपि भेदाभेदविदस्तथा ।**
**तेऽपि यान्ति तमो घोरमधरं चोत्तरं क्रमात् ॥**
**तस्मात् सर्वोत्तमं विष्णुं पूर्णसर्वगुणोच्छ्रितम् ।**
**विजानीयाद् विमुक्त्यर्थं सर्वतश्च विलक्षणम् ॥**

अन्धन्तमः प्रविशन्ति ये देहं परमात्मनः ।
भिन्नं विजानते विष्णोर्भिन्नाभिन्नविदोऽपि वा ॥
अन्धन्तमः प्रविशन्ति प्रादुर्भावांस्तु येऽपि वा ।
सर्वभूतस्थितान् वाऽपि भिन्नान् जानन्ति येऽखिलान् ॥
भिन्नाभिन्नविदो वाऽपि शिरःपाण्यादिकं तथा ।
भिन्नं मिथो विजानीयुर्भिन्नाभिन्नविदोऽपि वा ॥
तेऽपि यान्ति तमो घोरं यतो नैवोत्थितिः क्वचित् ।
प्रादुर्भावतया ये च तदन्यान् जानते विभोः ॥
तेऽपि यान्ति तमो घोरं तस्मान्नैवंविदो विदुः ।
मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ॥
कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः ।
पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा ॥
यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः ।
नारायणो हरिः कृष्ण उपेन्द्रः सर्व एव च ॥
एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः ।

**टिप्पणी——**

प्रकृतमाह— **जीवाभेदमिति** ॥ जगता जडजगता । प्रकृत्या लक्ष्म्या । ततः किमित्यत आह— **तस्मादिति** ॥ चिदानन्दात्मकस्यापि देहस्य तस्माद्भेदादिज्ञानेऽनर्थमाह— **अन्धन्तम इति** ॥ प्रादुर्भावान् मत्स्यादीन् सर्वभूतस्थितान् अन्तर्यामिरूपविशेषान् भिन्नाभिन्नविदोऽपि चान्धन्तमः प्रविशन्तीति पूर्वेणान्वयः । तदन्यान् पृथ्वादीन् । तर्हि के प्रादुर्भावाः येषां ज्ञानेनान्येषां प्रादुर्भावत्वाभावज्ञानं सुकरमिति जिज्ञासायामाह— **मत्स्येति** ॥ धन्वन्तरिश्चैवेति एवशब्द उत्तरेणान्वितः । तापसो मनुः तापसाख्यो मनुः । चशब्दोऽपिशब्दार्थः । एवमाद्या एव हरेः साक्षादेव प्रादुर्भावा इति सम्बन्धः ॥

भाष्यम्—

[श्रीब्रह्मादिदेवतास्वरूपनिरूपणपूर्वकं तारतम्यप्रतिपादनम्]

श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा ॥
सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता ।
प्रकृतिस्तेन चाऽविष्टा तद्वशा न हरिः स्वयम् ॥
ततोऽनन्तांशहीना च बलज्ञप्तिसुखादिभिः ।
गुणैः सर्वैस्तथाऽप्यस्य प्रसादाद्दोषवर्जिता ॥
सर्वदा सुखरूपा च सर्वदा ज्ञानरूपिणी ।
प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः ॥
स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम् ।
मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ॥
ऋजुः समानो विज्ञाता महाध्याता महागुरुः ।
हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ॥
हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ।
सर्वे विष्णुवशा नित्यं विमुक्तेरप्यनन्तरम् ॥
एभ्यः श्रीस्तु विमुक्तेभ्यो गुणैः कोटिगुणोत्तरा ।
ज्ञानानन्दबलादिभ्यः सर्वेभ्यः सर्वदैव हि ॥
भिन्ना, भिन्नाश्च ते सर्वे ब्रह्माणस्तु परस्परम् ।
अभिमानः पृथक्तेषामानन्दः सह भुज्यते ॥
ते तु भिन्ना हरेर्नित्यं श्रियोऽन्येभ्यस्तथैव च ।
आविष्टो विष्णुरेतेषु न विष्णुस्तत्स्वरूपकः ॥
विष्णोरतिप्रियत्वात्ते ह्यध्यर्धा इति चोदिताः ।
विष्णोः केवलभेदेऽपि शेषादिभ्यः प्रिया यतः ॥

**टिप्पणी—**

नन्वेतेषामेव विष्णोः प्रादुर्भावत्वे कथं प्रकृत्यादेः प्रादुर्भावत्वोक्तिः इत्यतस्तस्याः गतिं वदन् यदुक्तमभेदज्ञाः प्रकृत्या चेति यच्चोक्तं जीवाभेदमिति तदुभयसिद्ध्यर्थं प्रकृतिजीवस्वरूपमाह— **श्रीरित्यादिना** ।। तेन चाऽविष्टेत्यनेन कचिदवतारत्वोक्ते-र्गतिरुक्ता भवति । एवमुत्तरत्रापि । हरिः स्वयं तद्वशो न भवति । यद्वा, स्वयं साक्षाद्धरिर्नेत्यर्थः । एवं तर्हि श्रियोऽत्यन्तनीचतया नित्यमुक्तत्वमपि न स्याद् इत्यत आह— **तथाऽपीति** ।। तद्वशत्वादौ सत्यपि दोषवर्जिता बन्धादिदोषरहिता । सर्वदाऽऽविर्भूतसुखरूपा सर्वदा सर्वात्मनाऽविर्भूतज्ञान-रूपिणीत्यर्थः । महान् महत्तत्त्वाभिमानिनी । चित्तमित्यादिना तदभिमानि-रूपमुच्यते । ब्रह्मवाय्वोः स्वरूपेण समानत्वाद् इत्यादिबहुरूपिणो हिरण्यगर्भाः इत्युक्तम् । विमुक्त्यनन्तरं विष्णुवशाः ब्रह्माणः किं श्रीसमानाः? नेत्याह— **एभ्य इति** ।। कोटिगुणेति गुणशब्दो गणनार्थः । ज्ञानानन्दबलादिभ्य इति पञ्चमी तृतीयार्थे । तुशब्दश्चशब्दार्थः । सर्वेभ्यो हिरण्यगर्भेभ्यो भिन्ना चेति । ते तु सर्वे ब्रह्माणः परस्परं च भिन्नाः । कुत इत्यत आह— **अभिमान इति** ।। कचित्तेषां ब्रह्मणाऽभेदोक्तेर्गतिमाह— **आनन्द इति** ।। विभक्तिविपरिणामेन तैरित्यनुवर्तते । आनन्दः स्वस्वरूपभूतः ब्रह्मणः सहभोगनिमित्ताभेदोक्तिरिति भावः । नन्वभेदोक्तेः सहभोगनिमित्तत्वमेव कुतः? अभेद एवार्थः किं न स्यादित्यत आह— **ते त्विति** ।। भिन्ना एवेति सम्बन्धः । नित्यं संसारे मोक्षे च । प्रसङ्गादाह— **श्रियोऽन्येभ्य इति** ।। **शेषादिभ्य इति** ।। तथाचशब्दौ परस्परसमुच्चये । यद्वा, ते तु ब्रह्माणः परस्परं भिन्ना अभिन्नाश्च कचिदुदिताः तन्निमित्तमाह— **अभिमान इति** ।। तेषामभिमानः पृथगिति भिन्नाः । परमात्मनि प्रविश्य स्वस्वरूपभूत एवाऽनन्दः सर्वैः सह भुज्यते इत्यभिन्नाश्चेत्युच्यन्ते इत्यर्थः । ते तु भिन्ना इत्यादिकं तत्स्वरूपकथनम् । कचिद्विष्ण्ववतारत्वोक्तेर्गतिमाह— **आविष्ट इति** ।। एतेषु हिरण्यगर्भेषु । विष्णुना हिरण्यगर्भाणाम् अत्यन्तभेदे कतमोऽध्यर्ध इति

योऽयं पवत इत्यादावध्यर्धत्वोक्तिः कथमित्यत आह– **विष्णोरिति** ॥ हिशब्दः प्रसिद्धिद्योतकः । तेषां श्रियोऽप्यतिप्रियत्वप्रतीतिनिरासार्थमाह– **शेषादिभ्य इति** ॥ कुत इत्यत आह– **विष्णोरिति** ॥ यत इत्यत्राप्यनुषज्यते ॥

**भाष्यम्**—

**विष्णोः प्रियत्वे तद्भक्तौ तज्ज्ञाने च श्रियस्तु ते ।**
**मुक्ता अप्यवरा नित्यं सर्वे कोटिगुणेन च ॥**
**सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥**
**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ॥**
**चन्द्रेत्यादिस्वरूपायास्तेभ्यः शतगुणावराः ।**
**विष्णुभक्तौ च तत्प्रीतौ ज्ञानानन्दादिकेष्वपि ॥**
**मुक्तेः पश्चादपि गुणैः सर्वैर्ब्रह्मभ्य ईरिताः ।**
**शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ॥**
**नरोऽपटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ।**
**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ॥**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकाः ।**
**पूर्वोक्तैश्च गुणैः सर्वैस्ताभ्यः शतगुणावराः ॥**
**मुक्तेः पश्चादपि सदा अतीतानागताश्च याः ।**
**अतीतानागता ये च सर्वशोऽप्यवराः सदा ॥**
**एवं सुपर्णाः सर्वेऽपि समाः शेषैः सदैव तु ।**
**सर्वैर्गुणैस्तथा मुक्तौ तद्भार्यास्तच्छतावराः ॥**
**ताभ्यः शतावरास्त्विन्द्राः पुरन्दर इतीरिताः ।**
**तेभ्यः शतावरास्त्वन्ये इन्द्राश्चान्याश्च देवताः ॥**

**द्वित्रिपञ्चादिगुणतः परस्परविशेषिणः।**
**सनत्कुमारास्तु सदा पुरन्दरसमा मताः ॥**

**टिप्पणी—**

ते ब्रह्माणः विष्णोः प्रियत्वे श्रियोऽवराः कुत इत्यत उक्तम्– **तद्भक्तौ तज्ज्ञाने चावरा इति** ॥ आद्येति मूर्त्यन्तरं प्रथमोत्पन्नेति वा। प्रीतिरित्यादिशब्देन तदभिमानिन्युच्यते। या अतीतानागतवर्तमानाः सरस्वत्यस्तास्तेभ्यश्च सर्वब्रह्मभ्यः शतगुणावरा ईरिता इति सम्बन्धः । अहङ्कारोऽङ्काराभिमानी ताभ्यः सरस्वत्यादिभ्यः । न केवलं वर्तमानसरस्वत्यादिभ्यः एव वर्तमानशेषादय एवावराः किन्त्वित्यत आह– **अतीतेति** ॥ ताभ्य इत्येतदत्राप्यनुवर्तते । अतीतानागताश्च ये शेषादयः ते सर्वशोऽप्यवरा इति सम्बन्धः । एवं सरस्वत्या शतावराः कुत इत्यत आह– **समा इति** ॥ तद्भार्याः शेषसुपर्णसदाशिवभार्याः। ननु विष्णुवाय्वोः उत्तमयोः यमप्रभृतीनाम् अत्यवराणां च इन्द्रपदे स्थितत्वेन इन्द्रत्वात्ताभ्यां शतावरास्त्विन्द्रा इति कथमुक्तमित्यत आह– **पुरन्दर इति** ॥ अन्ये विष्णुवायुपुरन्दरव्यतिरिक्ताः इन्द्राः अन्याश्च देवताः पर्जन्यमित्राद्याः । शतशब्दो बह्वर्थः । अन्या देवताः परस्परं समाः किन्नेत्याह– **द्वीति** ॥ अत्र विशेषः 'पर्जन्यमित्रशिखिनो भूतवायुस्तथैव च। द्विगुणा एवानिरुद्धोऽनिलात्पञ्चगुणाधिकाः। पादोनो वरुणादग्निरध्यर्धोनः स सोमतः ॥' इत्यादि प्रमाणविशेषादवगन्तव्यः । अन्याश्च देवता इत्युक्तस्यापवादमाह– **सनत्कुमारा इति** ॥

**भाष्यम्—**

**सनकाद्या नारदश्च दक्षभृग्वादयोऽपि च।**
**देवावरा यथा तद्वन्मनवोऽपि प्रकीर्तिताः ॥**
**त्रिचतुर्भागभेदेन तेऽप्यन्योन्यविशेषिणः।**
**वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ॥**

सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।
सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥
स्वायम्भुवो मनुर्दक्षो वायुः स्पर्शाधिपस्तथा ।
बृहस्पतिश्चानिरुद्ध एते सूर्यादितोऽधिकाः ॥
सूर्यश्च चन्द्रमाश्चैव यमश्चैते त्रयः सुराः ।
प्रोक्तेभ्यस्त्ववराश्चान्यदेवेभ्योऽपि सदाऽधिकाः ॥
कार्तवीर्यः पृथुश्चैव दौष्यन्तिर्भरतस्तथा ।
शशबिन्दुश्च मान्धाता ककुत्स्थाद्यास्तथाऽपरे ।
सर्वे ते विष्णुनाऽऽविष्टा विष्णोर्भिन्नाः सदैव तु ।
शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः ॥
तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि ।
विश्वामित्रब्रह्मपुत्रानृते चाप्यृषयोऽखिलाः ॥
सूर्यादिभ्योऽधमाश्चैव मन्वादिभ्यस्तथैव च ।
वैवस्वतो मनुर्नित्यं विष्ण्वावेशी ततोऽधिकः ॥
कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः ।
आजानदेवास्ते प्रोक्तास्तेभ्यश्च पितरश्चिराः ।
पितॄणां सप्तकं यत्तत्कर्मदेवसमं मतम् ।

**टिप्पणी—**

सनत्कुमारप्रसङ्गात् सनकादिस्वरूपमाह— **सनकाद्या इति** ॥ देवावराः पुरन्दरावराः । मनवस्तापसव्यतिरिक्ताः । तेष्ववान्तरविशेषमाह— **त्रीति** ॥ इन्द्रकामस्वरूपविशेषानाह— **वालीति** ॥ इत्येक एव व्यवस्थित इत्येत्पुरन्दर इत्येतदनन्तरमपि योजनीयम् । 'सनकाद्या नारदश्च' इत्यत्र दक्षादीनामिन्द्रावरत्वमुक्तं तत्सूर्यादिसाधारण्येन न भवतीत्याह— **स्वायम्भुव इति** ॥ स्पर्शाधिपो वायुरुक्तेभ्योऽवरो ज्ञातव्यः । प्रोक्तेभ्यः स्वायम्भुवादिभ्यः । अन्यदेवेभ्यो वरुणादिभ्यः परस्परं समाश्चेति शेषः । कार्तवीर्यादीनां विष्ण्ववतारत्वोक्तेर्गतिं

वदन् तत्स्वरूपमाह– **कार्तवीर्य इति** ।। देवेभ्यः अग्न्यादिभ्यः कार्तवीर्याद्य-नन्तरकक्ष्यामाह– **तुम्बुरुप्रमुखा इति** ।। ब्रह्मपुत्रान् मरीच्यादीन् अखिला अपीति सम्बन्धः । ये च तुम्बुरुप्रमुखा गन्धर्वाः तथा उर्वश्यादिका अपि अप्सरसो विश्वामित्रब्रह्मपुत्रव्यतिरिक्ता अखिला अपि ऋषयश्च देवभृत्याश्च सूर्यादिभ्यस्तथा मन्वादिभ्यश्च कार्तवीर्यादिराजभ्यश्च शतावरा एवाधमा इति योजना । तापसो मनुर्विष्णुः स्वायम्भुवो मनुः सूर्यादधिक इत्युक्तं तर्हि तदन्यमनूनामेकप्रकारत्वं किम् इत्यत आह– **वैवस्वत इति** ।। तत इतरमनुभ्यः देवभृत्याः क इत्यत आह– **आजानदेवा इति** ।। देवकुलोत्पन्नाः अनाख्यातदेवा इत्यर्थः । तेभ्यः आजानदेवादिभ्यः पितरः शतावरा इति सम्बन्धः । तत्रापवादमाह– **पितॄणामिति** ।। कर्मदेवाः कार्तवीर्यादयः ।।

**भाष्यम्—**

**विश्वामित्रो ब्रह्मपुत्रैः समो मुनिरुदाहृतः ।।**
**आचार्यः पितॄणां चासौ पितृभिः सह पठ्यते ।**
**आजानेभ्यस्तु पितरो ह्यष्टभ्योऽन्ये शतावराः ।।**
**कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम् ।**
**आजानदेवास्तेभ्योऽन्ये पितृभ्यश्च शतावराः ।।**
**स्वमुखेनैव देवैर्य आज्ञाप्याः सर्वदा गणाः ।**
**आख्याता देवगन्धर्वा ये त्वन्यमुखगोचराः ।।**
**मानुषास्ते तु गन्धर्वास्तेभ्यस्ते च शतावराः ।**
**तेभ्यः शतावराश्चैव मनुष्येषूत्तमा गणाः ।।**
**देवादिष्वेषु सर्वेषु प्रोक्ता अपि विशेषिणः ।**
**पञ्चांशतो दशांशाद् वा स्वस्वजात्यां परस्परम् ।।**
**देवस्त्रियो दशांशोनाः स्वपतिभ्यस्तथाऽपराः ।**
**अष्टांशोनाः प्रविज्ञेया यासां मुक्तौ सह स्थितिः ।।**

अनादिश्च विशेषोऽयं सर्वेषां मानुषादिनाम् ।
इयं नीचोच्चता क्वापि न केनापि ह्यपोदितुम् ॥
शक्यते योऽन्यथाकर्तुमिच्छेत्सोऽपि तमो व्रजेत् ।
योऽपि वेद समत्वेन सर्वान्नीचोच्चतः स्थितान् ॥
सोऽपि याति तमो घोरं यश्च साम्यमुदीरयेत् ।
मानुषोत्तममारभ्य ब्रह्मान्तानां प्रयत्नतः ॥
विष्णोर्भक्तिज्ञानपूर्वं भवेन्मुक्तिः प्रसादतः ।
भक्तिज्ञानादयः सर्वे सर्वेषामप्यनादयः ॥
अनादिकालादारभ्य वृद्धानामुत्तरोत्तरम् ।
तत्तद्योग्यतया पूर्तौ विष्णोर्दृष्टिः प्रजायते ॥
यथोदञ्चनकुम्भादेः सरित्सागरयोरपि ।
अल्पेन महता वाऽपि पूर्तिर्योग्यतया भवेत् ॥
एवं नरादिब्रह्मान्तजीवानां साधनैरपि ।
अनादिसिद्धैर्भक्त्याद्यैः पूर्तिर्योग्यतया भवेत् ॥
अल्पैः पूर्तिस्तथाऽल्पानां महद्भिर्महतामपि ।
भक्त्याद्यैर्जायते तेषां साधनैर्नान्यथा क्वचित् ॥

**टिप्पणी—**

विश्वामित्रस्य ब्रह्मपुत्रसमत्वे क्वचित्पितृभिः सह पाठः कथमित्यत आह— **आचार्य इति** ॥ यद्वा, चिरपितृषु अपवादोक्त्यवसरे विश्वामित्रस्य ब्रह्मपुत्र-समत्वोक्तिरसङ्गतेत्यत आह— **आचार्य इति** ॥ एवं सति पितरः कति वर्जयित्वाऽजानेभ्योऽवरा इत्यत आह— **आजानेभ्य इति** ॥ सप्तपितरः विश्वामित्र इत्यष्टभ्य इत्यर्थः । तुम्बुरुप्रमुखा इति देवगन्धर्वाणां कर्मदेवावरत्वमुक्तम् । तत्रापवादं वदन् पित्रनन्तरकक्ष्यामाह— **कर्मदेवेति** ॥ अष्टगन्धर्वाः कर्मदेवगणाः तत्समाः । तत्परे तेभ्योऽष्टभ्यः परे । शतं गन्धर्वाः आजानदेवाः तत्समाः । तेभ्योऽष्टोत्तरशतगन्धर्वेभ्योऽन्ये ये गणाः देवैः सर्वदा स्वमुखेनैवाऽज्ञाप्यन्ते

अत एव देवगन्धर्वाः इत्याख्याताः । ते पितृभ्यः शतावरा इति योजना । देवगन्धर्वानन्तरकक्ष्यमाह– **ये त्विति** ॥ तेभ्यो देवगन्धर्वेभ्यः । तदनन्तरकक्ष्यमाह– **तेभ्य इति** ॥ 'शतावराश्च देवेभ्यः कर्मदेवा इति स्मृताः' इत्यादिना गणशस्तारतम्यमुक्तम् । तत्र तत्र गणेष्ववान्तरवैचित्र्यमाह– **देवादिष्विति** ॥ एषु पूर्वोक्तेषु सर्वेषु देवादिषु मध्ये समत्वेन प्रोक्ता अपि स्वस्वजात्यां पञ्चांशतो दशांशाद्वा परस्परं विशेषिण इति सम्बन्धः । देवादिस्त्रीणां स्वपतिभ्यस्तारतम्यमाह– **देवस्त्रिय इति** ॥ परा गन्धर्वादिस्त्रियः । देवादीनामवतारेषु अत्यन्तनिकृष्टस्त्रीणामपि श्रवणात्कथं दशांशोना इत्याद्युक्तमित्यत आह– **यासामिति** ॥ निरूपिततारतम्यमागन्तुकं नेत्याह– **अनादिश्चेति** ॥ मानुषादिनां मानुषादीनाम् । अनादिरपि केनचिन्निमित्तेन कदाचिदपोहितुं शक्यं किन्नेत्याह– **इयमिति** ॥ न केवलं तारतम्यमन्यथाकर्तुमिच्छंस्तमो व्रजेद् अपि तर्हीत्यत आह– **योऽपीति** ॥ यश्च मानुषोत्तममारभ्य ब्रह्मान्तानां साम्यमुदीरयेत् सोऽपि तमो यातीत्यन्वयः । 'यासां मुक्तौ सह स्थितिः' इत्यत्र प्रकृता मुक्तिः केन स्यादित्यत आह– **मानुषेति** ॥ ब्रह्मान्तानामधिकारिणां विष्णोर्भक्तिज्ञानपूर्वं प्रयत्नतो निवृत्तकर्मानुष्ठानश्रवणादिलक्षणाद् उत्पन्नभक्तिज्ञानपूर्वं विष्णोः प्रसादतो मुक्तिर्भवेदिति योजना । ननु श्रवणादिरूपप्रयत्नसाध्यभक्तिज्ञानादेः कथं तत्साधनत्वम् अन्योन्याश्रयादित्यत आह– **भक्तीति** ॥ ननु भक्त्यादेरनादित्वे कथं श्रवणादिसाध्यत्वम् इतः पूर्वमेव कुतः सर्वे न मुक्ताश्चेत्यत आह– **अनादीति** ॥ तत्तद्योग्यतयोत्तरोत्तरं वृद्धानां भक्तिज्ञानादीनां पूर्ताविन्यन्वयः । तत्तद्योग्यतयेत्येतद्दृष्टान्तकथनपूर्वकं विवृणोति– **यथेत्यादिना** ॥ अल्पेन महता वा उदकेनेति शेषः । भक्त्याद्यैः पूर्तिर्योग्यतया भवेदित्युक्तमेवाल्पेन महता वेति दृष्टान्तवाक्यानुसारेण विशदमाह– **अल्पैरिति** ॥ यद्वा, यद्युक्तरीत्योत्तरोत्तरेषां पूर्वपूर्वापेक्षया शताद्यवरत्वं तर्हि नीचानामपूर्तिप्रसङ्गेन मोक्षस्यापुरुषार्थत्वप्रसङ्ग इत्याशङ्कां दृष्टान्तोक्तिपूर्वकं परिहरति– **यथेति** ॥ जीवानामपीत्यपिशब्दसम्बन्धः । पूर्तिः स्वरूपानन्दादिलक्षणफलेनेति शेषः । पूर्ववदेव विशदयति– **अल्पैरिति** ॥

अल्पैर्महद्भिः भक्त्याद्यैः साधनैस्तथा अल्पैर्महद्भिश्चाऽनन्दादिभिः अल्पानां च महतामपि पूर्तिर्जायित इति योजना ।

भाष्यम्—

[मोक्षसाधननिरूपणम्]

श्रवणं मननं चैव ध्यानं भक्तिस्तथा दृशिः ।
ज्ञानश्चोक्तविशेषाणां सर्वेषां साधनं भवेत् ॥
त्यक्त्वैतानि न कस्यापि भवेन्मोक्षः कदाचन ।
सर्वोत्तमतया ज्ञानपूर्वकः स्नेह एव तु ।
भक्तिर्विष्णौ समुद्दिष्टा तदन्येषां च योग्यतः ॥
विष्णुभक्तिर्देवभक्तिर्गुरौ भक्तिस्तथैव च ।
तत्तच्छ्रैष्ठ्यानुसारेण मुक्तौ नियतसाधनम् ॥
भक्तिपूर्तौ भवेन्मुक्तिस्तदभावे च नो भवेत् ।
भक्तिर्ज्ञानं तथा ध्यानं मुक्तानामपि सर्वशः ॥
नियमेन न हीयन्ते मुक्तानां ते स्वरूपकाः ।
साधनानि तु सर्वाणि भक्तिज्ञानप्रवृद्धये ॥
नैवान्यसाधनं भक्तिः फलरूपा हि सा यतः ।
स्वात्मोत्तमेषु विद्वेषात्तमो नियमतो व्रजेत् ॥
गुणानामल्पताज्ञानं तत्स्त्रीरागस्तथैव च ।
तत्प्रतीपे च या बुद्धिस्त्रिविधो द्वेष उच्यते ॥
द्वेषोज्झिता च या भक्तिः सा मोक्षं नियमान्नयेत् ।
निर्दुःखं तु सुखं नित्यं मोक्ष इत्यभिधीयते ॥
चिदानन्दशिरोदेहपाणिपादात्मकाः सदा ।
सर्वदोषविनिर्मुक्ताः मुक्ताः क्रीडन्ति नित्यशः ॥
अनादिकालादारभ्य या भार्यास्ताः सदैव तु ।
ब्रह्मादीनां विमुक्तौ च भार्याः स्युर्नियमात्सदा ॥

**न कदाचिद् विमुक्तानां भार्याः काश्चित्स्युरन्यगाः ।**
**न कदाचिद् वियोगश्च न विद्वेषो न वाऽरतिः ॥**
**मोदन्ते सहिताः सर्वे सदा विष्णुपरायणाः ॥ इत्यादि पैङ्गिश्रुतिः**

**टिप्पणी—**

साधनैरित्युक्तसाधनान्याह– **श्रवणमिति** ॥ उक्ता विशेषा देवत्वादयो येषां ते उक्तविशेषाः । तेषां सर्वेषामधिकारिणाम् । उक्ता ये विशेषास्तारतम्योपेतानन्दादयस्तेषां ज्ञानं च साधनं मोक्षस्येति शेषः । यद्वा, सर्वेषां 'ब्रह्म सदा सर्वगुणात्मकम्' इत्यादिना पूर्वोक्तानां विशेषाणां ज्ञानमित्यर्थः । कारणताग्राहकव्यतिरेकमाह – **त्यक्त्वेति** ॥ भक्तिस्वरूपमाह– **सर्वोत्तमतयेति** ॥ योग्यतो योग्यत्वतः उत्तमतया ज्ञानपूर्वकः स्नेह एव तदन्येषां भक्तिरिति सम्बन्धः । भक्तेः श्रवणादिसाम्यनिरासायाऽह– **विष्ण्विति** ॥ अनादिकालतो भक्तेः सद्भावेऽपि मुक्त्यनुदयात्कथं सा तत्र साधनम् इत्याशङ्कां परिहरन्नियतत्वोपपादकावन्वयव्यतिरेकावाह– **भक्तीति** ॥ भक्त्यादेः साधनत्वोक्त्या फलप्राप्त्यनन्तरं अभावशङ्कां निवारयति– **भक्तिरिति** ॥ कुतो न हीयन्त इत्यत आह– **मुक्तानामिति** ॥ ननु भक्तेरिव श्रवणादेरपि मुक्तौ नियतसाधनत्वात्को विशेषो भक्तेरित्यत आह– **साधनानीति** ॥ श्रवणादिवद्भक्तेरप्यन्यसाधनत्वे पुनस्तदवस्थो दोष इत्यत आह– **नैवेति** ॥ यतोऽन्यसाधनानां फलरूपाऽतोऽन्यसाधनं नैवेत्यर्थः । भक्तेर्मोक्षसाधनत्वे इत्थम्भावान्तरं वक्तुमाह– **स्वात्मेति** ॥ द्वेषस्वरूपमाह– **गुणानामिति** ॥ यदर्थमेतदुक्तं तदाह– **द्वेषोज्झितेति** ॥ मोक्षस्य पुरुषार्थत्वं दर्शयितुं वादिविप्रतिपत्तेः मोक्षस्वरूपं दर्शयति – **निर्दुःखमिति** ॥ सुखस्य वैषयिकत्वशङ्कानिरासाय नित्यमित्युक्तम् । मोक्षस्य नित्यसुखाभिव्यक्तिरूपत्वमङ्गीकुर्वद्भिरपि मुक्तानां निराकारत्वाङ्गीकारात्तन्निरासायाह– **चिदानन्देति** ॥ क्रीडन्तीत्युक्त्या स्त्रिया क्रीडनं सूचितम् । तत्किं सर्वेषां सर्वाभिरित्याशङ्कां परिहरति– **अनादीति** ॥ नियममेव दर्शयति– **नेति** ॥ अरतिः सम्भोगराहित्यम् ॥

भाष्यम्—

[एकमेवाद्वितीयमित्यादिश्रुतयः नाभेदपराः]

'एकमेवाद्वितीयम्' 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्। मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति। एकधैवानुद्रष्टव्यं नेह नानास्ति किञ्चन। मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति।

एवं धर्मान् पृथक्पश्यंस्तानेवानुविधावति ॥ इत्यादि च ॥

इहेति परमेश्वररूपेषु अवयवेषु धर्मेषु च किञ्चन नाना नास्तीत्यर्थः। एकमेवाद्वितीयमिति तत्समोऽधिको वा तदनधीनो वा नास्तीति सतात्पर्यं निषिध्यते।

यथैकमुत्तमं पुरुषमपेक्ष्य तस्मिन् पुरे एक एव नान्योऽस्तीत्युक्तेऽपि तत्सदृशस्तदधिको वाऽन्यो नास्तीत्युक्तं भवति।

'एक एवाद्वितीयोऽसौ तदतन्त्रस्य वर्जनात्।

तत्समस्याधिकस्यापि ह्यभावात्पुरुषोत्तमः ॥ इति ब्राह्मे ॥

स्वगतभेदाविवक्षायामिहेति विशेषणं व्यर्थं स्यात्। नानेवेति भेदाभेदनिराकरणार्थम्। 'विरुद्धोभयसंयोग इव शब्दः प्रदिश्यते' इति शब्दतत्त्वे। पर्वतेषु दुर्गेपर्वताग्रे वृष्टं यथाऽधो विधावति एवं पृथग् दृष्टान् धर्मानन्वेव तदनन्तरमेवाधोऽन्धे तमसि विधावति।

भेदेन दर्शनाद्वाऽपि भेदाभेदेन दर्शनात्।

विष्णोर्गुणानां रूपाणां तदङ्गानां मुखादिनाम् ॥

तथा दर्शनकालात्तु क्षिप्रमेव तमो व्रजेत् ॥ इति ब्रह्माण्डे ॥

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' 'द्वा सुपर्णा सयुजा सखाया'। 'यो वेद निहितं गुहायां परमे व्योमन्'। 'सोऽश्नुते सर्वान् त्कामान् सह ब्रह्मणा विपश्चिता' इति 'एतमानन्दमयमात्मानमुपसङ्क्रम्य

**इमांल्लोकान्कामान्नी कामरूप्यनुसञ्चरन्' 'अथात आनन्दस्य मीमांसा भवति' इत्यारभ्य मानुषादिब्रह्मान्तानां मुक्तानामानन्दे शतगुणविशेषश्चोच्यते।**

**टिप्पणी—**

यदुक्तं जीवात्मैक्यस्याप्रामाणिकत्वात् 'ब्रह्म वा इदमग्र आसीत्' 'तदात्मानमेवावेत्' इत्यादेरैक्यपरतया व्याख्यानमयुक्तमिति तन्न । एकमेवेत्यादिश्रुतेर्विद्यमानत्वाद् इत्यत आह– **एकमेवेति** ॥ 'एकमेवाद्वितीयम्' इति छान्दोग्यवाक्यम्। नेह नानेत्यारभ्य ध्रुवमित्यन्तमेतदुपनिषद्गतम् । 'मृत्योः स मृत्युम्' इत्यादि काठकवाक्यम् । तत्र 'एकधैवानुद्रष्टव्यम्' इत्येतन्माध्यन्दिनशाखागतम् । 'मृत्योः स मृत्युम्' इत्यादिशाखान्तरगतं वा । इत्यादि च न जीवब्रह्मैक्ये मानमिति शेषः । नन्विह ब्रह्मणि किञ्चन किञ्चिदपि नाना भेदः परमार्थतो नास्तीति सर्वभेदप्रपञ्चनिषेधः श्रूयते । अतः कथं जीवब्रह्मैक्ये इयं श्रुतिर्न मानम् इत्यतस्तद्वाक्यं यथावद् व्याचष्टे– **इहेति** ॥ इहेत्यस्य वाक्यस्य इत्यर्थ इति सम्बन्धः । निर्धारणसप्तमी । किञ्चन रूपावयवधर्मादिकं नाना भिन्नं ब्रह्मणि नानावयवगुणकर्मादिनिषेधेन नानात्वमेव निषिद्धं भवति ।'स विशेषणे हि' इति न्यायात् । उभयनिषेधे गौरवात् । विशेषणस्य प्रथमप्राप्तत्वात्। अन्यथा तदुपादानवैयर्थ्यात् । 'न जीर्णमलवद्वासाः स्नातकः स्याद्' इत्यादेर्दर्शनाच्चेति भावः। ननु 'एकमेवाद्वितीयम्' इत्यत्र सजातीयविजातीयस्वगतभेदनिषेधः प्रतीयते। यथोक्तं 'वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः। वृक्षान्तरात्सजातीयो विजातीयः शिलादितः । तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते । ऐक्यावधारणद्वैतप्रतिषेधैस्त्रिभिः क्रमात् ॥' इति । तथाच कथमिदं नैक्ये मानम् इत्यतस्तदनूद्य व्याचष्टे– **एकमेवेति** ॥ एकमेवेत्युक्तसर्वोत्तमत्वमुख्यत्वलक्षणस्वतन्त्रत्वरूपार्थद्वयोपपादकत्वेन अद्वितीयशब्दस्य अर्थद्वयकथनमित्येदिति ज्ञेयम् ॥ **सतात्पर्यमिति** ॥ सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्म । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति छान्दोग्ये च अभ्यासात् । एक

एवाद्वितीयोऽसाविति वक्ष्यमाणसमाख्यानाच्च । अभ्यासादेश्च तात्पर्यलिङ्गत्वादिति भावः । कुतः श्रुतेरेवमर्थत्वमिति चेत् । सदृष्टान्तं स्मृतौ तथा व्याख्यातत्वादित्याह– **एक एवेति** ॥ वाशब्दः उपमायाम् । दृष्टान्तवाक्यत्रयेऽपि योजनीयः । लौकिकप्रयोगाच्चोक्तार्थत्वं श्रुतेरित्याह– **यथेति** ॥ द्वितीयपुरुषाभावाभिप्रायेण प्रयुक्तैवंविधवाक्यस्यैतदर्थत्वालाभाद् उक्तमेकमुत्तममिति । अत्राद्वितीय इति वक्तव्ये नान्योऽस्तीतीत्युक्तेऽपीत्युक्त्या एवं स्पष्टप्रयोगेऽपि तात्पर्यलिङ्गबलाद् उक्तार्थत्वमवसीयते किमु अद्वितीय इति साधारणशब्दप्रयोगे इति कैमुत्यं सूचितम् । सतात्पर्यमित्युक्ततात्पर्यनिश्चायकसमाख्यामाह– **एक एवेति** ॥ कुतो नेह नानेति श्रुतेरुक्तार्थत्वम्? नानात्वमात्रनिषेध एवार्थः किं न स्यादित्यत आह– **स्वगतेति** ॥ परमेश्वररूपावयवधर्मप्रतियोगिकपरमेश्वरधर्मिकेत्यर्थः । नानात्वमात्रनिषेधविवक्षायां चेत्यपि ग्राह्यम् । सर्वात्मनाऽविद्यमानार्थ-निषेधेऽधिकरणविशेषोक्तिर्व्यर्था । नहि भूतले शशविषाणं नास्तीति निषिध्यत इति भावः । उपलक्षणं चैतत् । भावप्रधानत्वकल्पना चेत्यपि ग्राह्यम् । ननु 'मनसैवेदमाप्तव्यम्' इति पूर्ववाक्येन द्रष्टृद्रष्टव्यादिभावोक्त्या भेदशङ्कायां तन्निषेधार्थमिदं वाक्यम् । तत्रेदंशब्देन द्रष्टव्यत्वेनोक्तं ब्रह्म इहेत्यधिकरणत्वेन निर्दिश्य तत्र भेदमात्रं निषिध्यत इति न वैयर्थ्यमिति चेन्न । इह घटो नास्तीतिवदधिकरणविशेषसम्बन्धित्वेन भेदनिषेधेऽन्यत्र भेदसत्वावश्यम्भावेन सर्वथा भेदनिषेधपरत्वे इहेति विशेषणवैयर्थ्यानिस्तारात् । ब्रह्मणः जगदुपादानत्वं जगदारोपाधिष्ठानत्वं वा असिद्धमेवेति य इह ब्रह्मणि नानेव भेदं पश्यति मृत्योर्मृत्युं गच्छतीति सर्वथा भेददर्शिनिन्दापरत्वेन परकीयव्याख्याननिरासाय तां श्रुतिं व्याचष्टे– **नानेवेतीति** ॥ इवशब्दप्रयोगात्कथमेतल्लब्धमित्यत आह– **विरुद्धेति** ॥ यदुक्तं पूर्वपदेन तद्विरुद्धद्वितीयसंयोग इत्यर्थः । अत्र च नानोक्त्या प्रयुक्तइवशब्दः तद्विरुद्धानानात्वं सङ्गृह्णातीति भेदाभेदाख्यमुभयं निराकृतं भवतीति भावः । ननु 'यथोदकं दुर्गे वृष्टम्' इति वाक्यं भगवद्भेदा-दिधर्मदर्शिनामनर्थोक्त्या भेदनिराकरणपरमिति चेत् न । इदमपि वाक्यं

न जीवब्रह्मभेदनिराकरणपरं किन्तु भगवद्गुणादीनां भगवता भेदनिराकरण-परम् । भगवद्गुणानां भेददर्शिनामनर्थोक्तेरिति भावेन यथोदकमिति वाक्यं दुर्गमार्थत्वादन्वयं दर्शयन् व्याचष्टे– **पर्वतेष्विति** ॥ तानित्यस्यार्थः– **पृथग्दृष्टान् धर्मानिति** ॥ पृथग्दृष्टधर्मानन्तर्यं कथमधो विधावनस्येत्यतस्तात्पर्यमाह– **तदनन्तरमेवेति** ॥ धर्माणां पार्थक्यदर्शनानन्तरमेवेत्यर्थः । परोक्तार्थे पृथगित्यस्य वैयर्थ्यापत्तेरिति भावः । श्रुतेः स्वोक्तार्थे प्रमाणमाह– **भेदेनेति** ॥ मुखादिनां मुखादीनाम् । एवमैक्यस्याप्रामाणिकत्वान्न तत्परतया 'ब्रह्म वा' इत्यादेर्व्याख्यानं युक्तमित्युक्तम् । इदानीं प्रमाणविरुद्धत्वाच्च न तत्परतया व्याख्यानं युक्तमित्याह– **जुष्टमिति** ॥ यद्वा ननु समाख्याबलेन 'एकमेव' इत्यादि श्रुतेर्भवदुक्तार्थत्वेऽपि अनेकार्थत्वाच्छ्रुतेरस्मदुक्तोऽप्यर्थः किं न स्यादित्यतस्तस्य प्रमाणबाधितत्वाद् इत्यभिप्रायेण भेदे श्रुत्यादिप्रमाणमाह– **जुष्टमिति** ॥ इति तदेतत्सत्यमित्यादि प्रागुक्तप्रकारेण । अस्य महिमानं यदा पश्यति तदा मुक्तो भवतीत्यर्थः । संयुक्तौ सखायौ द्वौ सुपर्णरूपौ जीवेशौ देहाख्यपिप्पलम् आलिलिङ्गतुः । तयोः सुपर्णयोर्मध्ये अन्यो जीवोऽश्वत्थफलरूपं देहजनितं कर्मफलं अस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरः तदनश्नन् अभितः प्रकाशत इत्यर्थः । नन्विदं वाक्यद्वयं सांसारिकभेदपरमित्याशङ्कानिरासाय मुक्तावपि भेदप्रतिपादकं प्रमाणं पठति– **य इत्यादिना** ॥ ब्रह्मणा सहेति उपसङ्क्रम्येति च भेदोक्तिः । साहित्यस्य समीपप्राप्तेश्च भेदसापेक्षत्वात् । आरभ्य स एको ब्रह्मण आनन्द इत्यन्तेनेति शेषः । तारतम्यस्य भेदसापेक्षत्वादिति भावः ।

**भाष्यम्—**

**[मुक्ततारतम्यविषये प्रमाणानि]**

**मुक्तानां चायं विशेषः । 'श्रोत्रियस्य चाकामहतस्य' इति विशेषणात् । नहि ब्रह्मादीनामनधिगतः श्रुत्यर्थः केषाञ्चिदस्ति । नच ब्रह्माण एव केचन कामहताः केचनाकामहताः इत्यत्र प्रमाणमस्ति । तस्माच्छ्रोत्रिय इति प्राप्तश्रुतिफलत्वान्मुक्त उच्यते । अकामहतत्वं च मुख्यं मुक्तस्यैव ।**

**प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिणः ।**
**त एव चाऽप्तकामत्वात्तथाऽकामहताः श्रुताः ॥ इति च भारते ॥**
**ब्रह्मणोऽपि ह्यमुक्तस्य नाकामहतता परा ।**
**यतस्तस्यापि कामस्य क्षणव्यवहितिर्भवेत् ॥ इति च ॥**

**कामहतता कामेनोपद्रवः ।**

**टिप्पणी—**

नन्वस्याः सांसारिकजीवतारतम्यप्रतिपादिकाया मुक्तौ भेदे कथं प्रमाणतयोदाहरणमित्यत आह– **मुक्तानां चेति** ॥ न केवलं संसारिणामिति चशब्दः । कुत इत्यत आह– **श्रोत्रियस्येति** ॥ अत्र केचिद् वदन्ति न श्रोत्रियत्वादिविशेषणबलादयं विशेषो मुक्तानाम् इति वक्तुं शक्यम् । श्रोत्रियस्येत्यस्य पुरुषान्तरविषयत्वेन मुक्तविषयत्वाभावात् । तथाहि । मनुष्येभ्यो मनुष्यगन्धर्वाणां शतगुणस्तावदानन्दः । यश्चापरः श्रोत्रियो कामहतः मनुष्यगन्धर्वपदे कामरहितश्च तस्यापि मनुष्येभ्यः शतगुणो मनुष्यगन्धर्वसमान एवाऽनन्दो भवतीत्येवं तेषु तेषु पदेषु कामहतस्य तत्तत्समानानन्दत्वमत्रोच्यते । नच वाच्यं विरक्तानां सर्वत्र कामाभावात् कथमियं तारतम्योक्तिरिति । तदतिरिक्तपदेषु कामसद्भावस्य विवक्षितत्वात् । यो यो यावदायासान्मुक्तोऽसावसौ तावदानन्दवानित्यर्थो ह्यत्र प्रतिपाद्यत इति । तदसत् । श्रोत्रियत्वादिगुणविशिष्टास्ते किं ब्रह्मादिविजातीयास्ततस्ततो हीनाः उत ब्रह्मादिसमास्तत्तन्नामान एवेति विकल्पं निधायाद्यपक्षं दूषयति– **नहीति** ॥ हिशब्दो हेतौ । उपलक्षणं चैतत् । अविद्यमानमकामहतत्वं चेति ग्राह्यम् । केषाञ्चिदधिगत इति शेषः । श्रोत्रियत्वं हि अधिगतश्रुत्यर्थत्वम् । तच्चेदपरस्य विशेषणं तर्हि प्रकृतब्रह्मादीनां तन्नास्तीत्यर्थादुक्तं स्यात् । अन्यथा तद्व्यावर्तकत्वासिद्धेः । तच्च बाधितमिति भावः । द्वितीयं दूषयति– **नचेति** ॥ अकामहताः श्रोत्रिया इत्यपि ग्राह्यम् । पूर्वोक्त एवाभिप्रायः । किमतो यद्येवमित्यत आह– **तस्मादिति** ॥ अन्ये तु न श्रोत्रियस्य चाकामहतस्येति मुक्तसङ्ग्रहार्थम् । किन्नाम? प्रकृतब्रह्मादिविषयमेव ।

नच तत्रासम्भवः । 'श्रोत्रियंश्छन्दोऽधीते' इति स्मरणात् श्रोत्रियशब्दस्य च्छन्दोऽधिगतिनिमित्तत्वात् । ब्रह्मादीनां च सर्वज्ञकल्पत्वात् । विषयवैराग्योपेत-त्वेनाकामहताश्च भवन्तीति व्याचक्षते । तन्निरासाय प्राप्तश्रुतिफलत्वादिति मुख्यमिति चोक्तम् । श्रोत्रियाकामहतशब्दावुक्तार्थाविव किं न स्यातामित्यत आह – **प्राप्तेति** ।। तुशब्द एवार्थः । प्राप्तमोक्षिण इति कर्मधारयात् प्रशंसायामिनिः । चशब्द एवार्थः । आप्तकामत्वादेवेति सम्बन्धः । तथाशब्दः समुच्चये । संसारिषु मुख्यमकामहतत्वं नास्तीत्यत्र प्रमाणं पठति– **ब्रह्मणोऽपीति** ।। परा मुख्या । अपिशब्देनान्येषां नास्तीति किमु वक्तव्यमित्याह । ननु केयं कामहतता यदभावो मुक्तेष्वेव मुख्यो न ब्रह्मणोऽपीत्यत आह– **कामेति** ।। उपद्रवो दुःखम् ।।

**भाष्यम्—**

**ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः ।**
**नास्त्यात्मसम्बद्धतया भोगाभावात् कथञ्चन ।। इति च ।।**

**नचान्यस्य कस्यचिच्छ्रोत्रियस्याकामहतस्य च ब्रह्मणा समं सुखं युज्यते ।**

**ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ।**
**ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ।।**

**इत्यादिना श्रोत्रियत्वादिगुणैस्तस्यैवान्येभ्य आधिक्यात् । नचेन्द्रपदाद् विरक्त-स्येन्द्रसमं सुखं ब्रह्मपदाद्विरक्तस्य तत्सममित्यत्र किञ्चिन्मानमस्ति । दृष्टवस्तुनि विरागे आयासाभावात् कश्चित्सुखविशेषो दृश्यते । अन्यत्र ब्रह्मपदाद् विरक्तस्य न कश्चिद्विशेषो दृश्यते । अतोऽनुभव-विरुद्धत्वाद् यत्किञ्चिदेतत् ।**

**नरादिब्रह्मपर्यन्तं विमुक्तानां शतोच्छ्रयः ।**
**निःशेषदुःखहीनानां नित्यानन्दैकभोगिनाम् ।।**
**अप्यानन्दे मिथोऽप्युक्तस्त्वध्वर्यूणां श्रुतौ पृथक् ।। इति हरिवंशेषु**

**'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुत' इत्यत्राप्येतस्मिन्निति विशेषणा-त्स्वगतभेदनिषेध एव ।**

**अभेदमीशरूपाणां भेदं जीवेशयोरपि।**
**यः पश्येत्स्थिरया बुध्द्या भक्तिमान् स विमुच्यते ॥**
**इति भविष्यत्पुराणे॥**

**टिप्पणी——**

ननु ब्रह्मणः कामेनोपद्रवः कुतः सिद्ध इत्यत आह– **ब्रह्मण इति** ॥ दुःखहीनतया प्रसिद्धस्यापीत्यर्थः । व्याघातपरिहारायाऽह– **तदपीति** ॥ अल्पमपीत्यर्थः । अनभिमानतः कथञ्चन कष्टेन भोगाभावाद् दुःखासम्पीडितत्वाद् आत्मसम्बद्धतया नास्तीति सम्बन्धः । यदुक्तं श्रोत्रियस्येत्यस्य पुरुषान्तरविषयत्वमिति तत्र दूषणान्तरमाह– **नचेति** ॥ कुत इत्यत आह– **ज्ञानमिति** ॥ जगत्परमेवेति सम्बन्धः । तेनान्येभ्य आधिक्यं सिद्ध्यति । सह सिद्धं स्वभावसिद्धम् । तथाच श्रोत्रियत्वादिनिमित्तं सुखमपि तस्यैवान्येभ्योऽधिकमिति न तत्समं सुखमन्यस्येति भावः । यदुक्तं तेषु तेषु पदेष्वकामस्य तत्तत्समानानन्दत्वमत्रोच्यत इति तद्दूषयति– **नचेति** ॥ तत्समं सुखमित्यनुवर्तते । ननु 'इन्द्रपदाकाम इन्द्रसुखसमसुखवान् तत्पदे विरक्तत्वात् यो यत्र विरक्तः स तत्साधकसुखसमसुखवान् यथा कर्षणसाध्यदृष्टधान्यादौ विरक्तः कृषीवलसुखसमसुखवानुपलब्धः' इत्यनुमानस्यैव मानत्वात्कथं मानाभाव इत्यतोऽसम्प्रतिपन्नो दृष्टान्त इत्याह– **दृष्टेति** ॥ कश्चिदेव नतु कृषीवलसुखसम इत्यर्थः । ननु नास्माभिः तत्पदविरक्तस्य तत्समसुखवत्त्वं साध्यते येन दृष्टान्तस्य साध्यवैकल्यं स्यात् । किं नाम पूर्वस्मादानन्दोत्कर्षमात्रम् । श्रुतेरपि तत्रैव तात्पर्यमित्यत आह– **अन्यत्रेति** ॥ दार्ष्टान्तिक इत्यर्थः । यदि तत्तत्पदे विरक्तस्य पूर्वस्मादानन्दोत्कर्षः साध्यः स्यात्तर्हि इन्द्रपदाद्विरक्तस्य सकाशाद् ब्रह्मपदाद्विरक्तस्य सुखविशेषः स्यात् । नच सोऽस्ति । लोके राजपदाकामस्यामात्यपदाकामस्य च सुखविशेषादर्शनात् । तथाच बाध इति भावः । न केवलं प्रमाणाभावः किन्तु प्रमाणविरोधश्चेति वदन्नुपसंहरति– **अत इति** ॥ मानाभावादित्यर्थः । राज्यमकामयमानस्य राजसमानसुखानुभूते-

रनुभवबाधितत्वस्य स्पष्टत्वादिति भावः । एतच्छ्रुतिव्याख्यानरूप-स्मृतिबलाच्चास्मदुक्त एव श्रुत्यर्थ इत्याह– **नरादीति** ॥ नित्यानन्दैकभोगिना-मपीत्यन्वयः। ननु यदा हीति श्रुतौ भेदज्ञानिनोऽनर्थोक्त्या तन्निषेधावगमात्कथं मुक्तावपि भेदसत्त्वेन पारमार्थिकत्वमित्यतस्तस्यार्थमाह– **यदा हीति** ॥ यदि सर्वात्मना भेदनिषेधे तात्पर्यं तदान्तरं भेदं कुरुत इत्येतावता पूर्तेः एतस्मिन्निति अदृश्यत्वादिना प्रकृतस्य परमात्मनोऽधिकरणत्वेनोक्तिर्व्यर्था स्यादिति भावः। ननु स्वगतभेदपरत्वेऽपि उदरमिति विशेषणं व्यर्थं स्यादित्याशङ्कापरिहारं सूचयन् श्रुत्यर्थनिश्चायिकां स्मृतिमुदाहरति– **अभेदमिति** ॥ भेदमपीति सम्बन्धः। जीवेशयोर्भेदमित्यनेनोदरशब्दार्थ उक्तः । 'अ इत्युक्तः परो विष्णुर्येभ्य उच्चः स एव तु । त उदाजीवसङ्घाः स्युरुदरं तद्गतान्तरम्' इति वचनात् । एष यदा यस्मादुदरं जीवगतमीश्वरप्रतियोगिकमन्तरं भेदमेतस्मिन् परे विष्णौ करोति जानाति अथ तस्मादेव तस्य भयं भवति हीति श्रुत्यर्थः ॥

**भाष्यम्—**

**'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' स उत्तमः पुरुषः। 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा' ।**

**'यस्य लोकं समासाद्य स्वरूपमभिपद्यते।**
**जीवः पर्येति विष्णोश्च समीपे तत्प्रसादतः ॥**
**यत्प्रसादात्स पर्येति स विष्णुः पुरुषोत्तमः ॥'**

**'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।**
**आदघ्नास उपकक्षास उत्वे हृदा इव स्नात्वा उ त्वे ददृश्रे ॥'**

**दुग्धसागरगाः केचित् केचिदश्वत्थकक्षगाः ।**
**अमृतहृदेषु केचिच्च पिबन्ति स्नातवत्सदा ॥**
**केचित्पश्यन्ति तं देवं सदा केचित्समीपगाः ॥**

**'आणिं न रथ्यममृताऽधितस्थुरिह ब्रवीतु य उ तच्चिकेतत् ।'**

**रथ्यमाणिमिवाऽश्रित्य मुक्ताः सर्वे व्यवस्थिताः ।**
**यं विष्णुं देवदेवेशं नमस्तस्मै स्वयम्भुवे ॥ इत्यादि ॥**

**टिप्पणी—**

मुक्तौ भेदप्रतिपादकं श्रुत्यन्तरमाह– **परमिति** ॥ यद्यपि स तत्रेत्याद्ये वोदाहर्तव्यं तस्यैव मुक्तौ भेदप्रतिपादकत्वात् । तथाऽपि तस्य मुक्तपरत्वज्ञापनायादिवाक्योदाहरणम् । अन्यथा स्वरूपाविर्भावोक्त्यनुपपत्तेरिति । ननु पूर्ववाक्यबलादपि स तत्रेत्यस्य न मुक्तपरत्वम् । तत्र निर्गुणोपासकस्य स्वरूपाविर्भावाभिधानात् । स तत्रेति दहरविद्योपासकस्यामुक्तस्यैव भोगोक्तेरिति चेन्न । एकप्रकरणत्वेन प्रतीतस्य कारणं विना भिन्नप्रकरणत्वकल्पनायोगादिति भावेन तद्वाक्यं प्रमाणेन व्याचष्टे– **यस्येति** ॥ लोकं श्वेतद्वीपम् । स तत्र पर्येतीत्यस्य व्याख्यानम्– **जीव इति** ॥ तत्रेत्यस्यार्थः– **विष्णोः समीप इति** ॥ स उत्तमः पुरुष इत्यस्य व्याख्या– **यत्प्रसादादिति** ॥ मुक्तौ भेदप्रतिपादकं श्रुत्यन्तरम् उदाहृत्य उत्तरार्धव्याख्यानरूपां स्मृतिं पठति– **अक्षण्वन्त इति** ॥ समग्रश्रुतिव्याख्यानं श्रुतेर्मुक्तविषयत्वं च 'श्रुत्वा विष्णुं कर्णफलं' इत्याद्यागमान्तरादवगन्तव्यम् । 'आदघ्नास उपकक्षास' इत्यस्य व्याख्या– **दुग्धेति** ॥ अनेन त्व इत्येतत् अत्र उभयत्रापि सम्बद्ध्यते इत्युक्तं भवति । उत्वे ह्रदा इव स्नात्वेत्यस्यार्थः– **अमृतेति** । अनेनोशब्दश्चशब्दार्थः । स्नात्वा इवेति सम्बन्धः । तच्चामृतपानबाहुल्यसूचनाय । ह्रदा इति प्रथमा सप्तम्यर्थे । अर्थादमृतेत्यस्य लाभः । पिबन्तीति शेष इत्युक्तं भवति । उत्वे ददृशे इत्यस्यार्थः केचिदिति । केचिद्देवा एव सदेत्युक्त्या दुग्धसागरगाद्याः कदाचिदेव पश्यन्तीति सूचयति । उप त्व इत्यपि सम्बन्धमभिप्रेत्याऽऽह– **सदा केचिदिति** ॥ अनेन श्रुतौ 'मनोजवेष्वसमा बभूवुः'इत्येतदादघ्नास इत्यादिना विवृतमित्युक्तं भवति । मुक्तौ भेदप्रतिपादकश्रुत्यन्तरमुदाहृत्य तद्व्याख्यानरूपां स्मृतिमुदाहरति– **अणिमेति** ॥ रथ्यं रथसम्बन्धिवस्तुजातं रथस्याणिं न यद्वत्सर्वदैव संश्रितमेवम् अमृता अमृतानि मुक्तभूतानि अब्जजेशपूर्वाण्यधितस्थुराश्रितानि वर्तन्ते ।

नैतत्प्रशंसामात्रं किन्त्वयमर्थः सकलवेदतात्पर्यगोचरः । कुतः । य उ य एव तदुक्तं प्रमेयं चिकेतत्पश्चमो लकारः अभिपश्येत् । अन्यथेति शेषः । स इह मम पुरतो ब्रवीत्वित्यर्थः । इत्यादि च भेदे प्रमाणमिति शेषः ॥

**भाष्यम्—**

['स यश्चायमशरीरः' इति वाक्यमपि न जीवेश्वराभेदे प्रमाणम्]

**'तौ यत्र विहीयेते' इत्यत्रापि परमात्मैव ।**

**'शरीरानभिमानी यो हृदि संस्थो जनार्दनः ।**
**अभिमानवतो देहे जीवस्य स नियामकः ॥**
**स एव सूर्यसंस्थश्च हंसः सोऽहमिति श्रुतः ।**
**हन्तृत्वाद्धंसनामाऽसौ सोऽहं चासावहेयतः ॥**
**स एव सूर्यसंस्थेन रूपेणैवाक्षिणि स्थितः ।**
**सूर्यसंस्थाद्धि रूपात्स विभक्तोऽक्षिणि संस्थितः ॥**
**गच्छतो म्रियमाणस्य तावुभावपि देहतः ।**
**तयोर्देहविहाने तु भवेतारिष्टदर्शनम् ॥'**
**तदा सञ्चिन्तयेद्देवं तमेव पुरुषोत्तमम् ॥ इत्यादि हरिवंशेषु ॥**

**टिप्पणी—**

यदुक्तं जीवेशाभेदे प्रमाणाभाव इति तदसत् । 'स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतदित्यवोचाम' इत्यभेदे प्रमाणस्य सत्वात् । नचेदमपि शरीरसूर्यान्तर्गतविष्णोरेवाभेदप्रतिपादकमिति वाच्यम् । तथात्वे तौ यत्र विहीयेते इति द्विवचनानुपपत्तेरित्यतः तदुदाहृत्य तात्पर्यमाह— **ताविति** ॥ परमात्मैव द्विरूपः परामृश्यत इति शेषः । कुत इत्यतः स यश्चायमित्यादिश्रुत्यर्थनिश्चायिकां स्मृतिं पठति— **शरीरेति** ॥ हृदिसंस्थश्चेत्कथम् अशरीर इत्यत उक्तम्— **शरीरानभिमानीति** । प्रज्ञात्मेत्यस्यार्थः— **अभिमानवत इति** । अनेन प्रज्ञस्य शरीराभिमानवत आत्मेति व्याख्यातम् । यश्चासावादित्ये एकमित्येतद्

व्याचष्टे– **स एवेति** ।। य इत्युक्तः । 'तद्योऽहं सोऽसौ'इति पूर्ववाक्योक्तत्वं दर्शयति– **हंस इति** ।। तस्यैक्यपरत्वशङ्काव्युदासायैवं पदच्छेदः प्रदर्शितः । हंसः सोऽहमिति पदद्वयस्यार्थमाह– **हन्तृत्वादिति** ।। सारत्वादित्यपि ग्राह्यम् । ननु सूर्यगतरूपस्य देहगतत्वाभावेन ततो विहानायोगात्कथं तौ यत्र विहीयेते इत्युक्तमित्यत आह– **स एवेति** ।। सूर्यसंस्थितेनैव रूपेणात्रावस्थानं कथं इत्यत आह– **सूर्यसंस्थादिति** ।। एवं च तयोर्देहाद्गमनमुपपन्नमित्याह– **गच्छत इति** ।। 'तौ यत्र विहीयेते चन्द्रमा इवाऽदित्यो दृश्यते' इत्यादेस्तात्पर्यमाह– **तयोरिति** ।। 'स यत्करणीयं मन्येत तत्कुर्वीत' इत्यस्य तात्पर्यमाह– **तदेति** ।।

**भाष्यम्**——

**'क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचिता अनित्याः ।**
**आविर्हिताश्चापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्तुः ।।'**
**'क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः ।**
**नारायणो भगवान् वासुदेवः स्वमाययाऽऽत्मन्व्यवधीयमानः ।।'**

**इति भागवते ।।**

**स्वेच्छयैवावृतो विष्णुर्जीवे तिष्ठति सर्वदा ।**
**योऽसौ नियामयन् जीवं क्षेत्रज्ञ इति शब्दितः ।। इति हरिवंशेषु ।।**

**अशरीरः प्रज्ञात्मा इति विशेषणाच्च परमात्मा । नहि जीवस्याशरीरत्व-ममुक्तस्य । 'एष त आत्माऽन्तर्याम्यमृतः अतोऽन्यदार्तम्' इति च । नहि जीवादन्यस्यार्तिरुपपद्यते ।**

**'सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ।।'**

**इत्यादिश्रुतिभ्यश्च ।**

**'ब्रह्मादयो हि भूतानि तेषामन्तर्गतो हरिः ।**
**समः स सर्वभूतेषु य एवं वेद तत्त्ववित् ।।' इति भारते ।।**

**टिप्पणी—**

अभिमानवतो देह इत्यनेन प्रज्ञात्मेत्येतत्प्रज्ञस्य जीवस्यात्मा विनियामकमिति व्याख्यातम् । तत्र प्रमाणान्तरमाह– **क्षेत्रज्ञ इति** ॥ शुद्धः क्षेत्रज्ञोऽविशुद्धकर्तुर्जीवस्य मायारचिताः निमित्तभूतस्वेच्छानिर्मिताः अत एवानित्याः आविर्हिताः स्पष्टाः तिरोहिताश्चास्पष्टाः मनसो विभूतीः विक्रिया एताः सुखदुःखाद्याः विचष्ट इति सम्बन्धः । कः क्षेत्रज्ञ इत्यत आह– **क्षेत्रज्ञ इति** ॥ स्वमायया स्वाविद्ययाऽत्मन् स्वस्मिन् व्यवधीयमानो भिद्यमान इत्यन्यथाप्रतीतिनिरासाय तत्प्रमाणेन व्याचष्टे– **स्वेच्छयैवेति** ॥ स्वमाययेत्यस्यार्थः– **स्वेच्छयेति** ॥ आत्मन्नित्यस्यार्थः– **जीव इति** ॥ व्यवधीयमान इत्यस्यावृत इति । तिष्ठतीति शेषोक्तिः । यद्यपि भागवतवचने द्वितीयश्लोक एवोदाहर्तव्यः । तथाऽपि तत्र जीवस्थत्वोक्तावपि तन्नियामकत्वस्यानुक्तत्वात्प्राचीनश्लोकोदाहरणम् । यदुक्तं 'तौ यत्र विहीयेते' इत्यत्र द्विरूपः परमात्मैव परामृश्यत इति तन्न । यश्चासावादित्य इत्यस्य परमात्मपरत्वेऽपि 'स यश्चायमशरीरः प्रज्ञात्मा' इत्यस्य जीवपरत्वात् । अत एव 'एकमेतदित्येवोचाम' इत्यनेन जीवेशाभेदः प्रतिपाद्यत इति चेन्न । स यश्चायमिति वाक्यस्य परमात्मपरत्वे प्रमाणस्योक्तत्वात् । युक्तिं चाऽह– **अशरीर इति** ॥ अशरीरत्वविशेषणेऽपि जीवः किं न स्यादित्यत आह– **नहीति** ॥ मुक्तजीवस्याशरीरं वा व सन्तमित्यशरीरत्वावगमा-दमुक्तस्येत्युक्तम् । स यश्चायमित्युक्तस्य जीवत्वाङ्गीकारे 'तौ यत्र विहीयेते' इत्युत्तरवाक्यपर्यालोचनयाऽमुक्तत्वमङ्गीकार्यमिति भावः । अमुक्तस्यापि शरीरमिथ्यात्वेनाशरीरत्वोक्तिरित्ययुक्तम् । प्रपञ्चसत्यत्वस्य समर्थितत्वादिति भावः । ननु प्रज्ञात्मत्वविशेषणेऽपि परमात्मा कुत इति चेत् प्रज्ञात्मत्वं हि जीवनियामकत्वं तच्च विष्णोरेव लिङ्गमिति भावेन तत्र श्रुतिमाह– **एष इति** ॥ अतोऽन्तर्यामिणोऽन्यज्जीवजातम् अतः परमात्मन एव आर्तं दुःखीत्यर्थः । यद्यन्तर्यामिणोऽन्यज्जीवादन्यज्जडं स्यात्तर्हि जीवजातस्यान्तर्यामि-नियम्यत्वेनेदं मानं स्याद् इत्यत आह– **नहीति** ॥ आर्तिर्दुःखम् । सर्वजीव-

नियामकत्वे उपसंहारवाक्यं चाऽह– **सर्वेषामिति** ॥ भूतशब्दस्य जडभूतपरत्व-प्रतीतिनिरासार्थमाह– **ब्रह्मादय इति** ॥ सः मे मम आत्मा रूपमित्यर्थ-प्रतीतिनिवारणाय तद् व्याचष्टे– **सम इति** ॥ अनेनाऽत्मा सम इति विद्यादित्यर्थ उक्तो भवति ॥

**भाष्यम्—**

**नच मुख्ये सति लक्षणा नाम युज्यते । नच मुख्यत एव जीवेशयोरैक्यं युक्तम् । प्रत्यक्षविरोधादेव । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते' इत्यादेः । सहस्रशीर्षत्वादिसर्वेशत्वसर्वज्यायस्त्वादिज्ञानादेव मोक्षः प्रतीयतेऽनन्ययोगेन । नचात्रैक्यज्ञानमुक्तम् । 'पुरुष एवेदं सर्वम्' इत्यत्रापि सर्वेशितृत्वमेवोक्तम् । 'उतामृतत्वस्येशानः' इति वाक्यशेषात् ।**

**टिप्पणी—**

यदपि 'एकमेतदित्यवोचाम' इत्यनेन जीवेशाभेद उच्यत इति तदप्येतेन परास्तम् । तस्य जीवेशाभेदपरत्वे 'क्षेत्रज्ञ एता' इत्यादिभेदप्रतिपादक-प्रमाणविरोधात् । तथाहि । क्षेत्रज्ञ एता इत्यत्राविशुद्धकर्तुः शुद्ध इति च भेदोक्तिः । क्षेत्रज्ञ आत्मेत्यत्र आत्मनि तिष्ठतीत्युक्त्या भेदोक्तिः । एष त आत्मेत्यादौ तु स्फुट एव भेदः । उपपत्तिविरोधश्च । तथाहि 'स यश्चायमशरीरः प्रज्ञात्मा' 'यश्चासावादित्ये' इत्यस्य भागत्यागलक्षणया चैतन्यमात्रपरत्वमङ्गीकृत्य तदैक्यम् एकमेतदित्यनेन बोध्यत इत्युच्यते अथवा तस्य विशिष्टजीवेशपरत्वमङ्गीकृत्य तदैक्यं वा । नाऽद्य इत्याह– **नचेति** ॥ सर्वात्मना मुख्यार्थासम्भवे हि लक्षणाऽङ्गीकार्या । अन्यथाऽतिप्रसङ्गात् । तथा-चोक्तरीत्यास्मदुक्ते मुख्येऽर्थान्तरे सम्भवति सति न लक्षणा युज्यत इत्यर्थः । द्वितीयं दूषयति– **नचेति** ॥ कुत इत्यत आह– **प्रत्यक्षेति** ॥ 'यः सर्वज्ञः सर्वविद्' इत्यादि श्रुत्या सार्वज्ञादिगुणविशिष्टमीश्वरमवगम्य तद्विरुद्धाल्पज्ञत्वादिगुणविशिष्टमात्मानं च पश्यतः तत्प्रतियोगिकभेदस्य

प्रत्यक्षसिद्धत्वेन तद्विरोधादित्यर्थः। एवकारेण प्रत्यक्षविरोधस्यापरिहार्यत्वमाह। ईश्वरस्य जीवाद् भेदसाधकसर्वेश्वरत्वादिधर्मज्ञानस्य मोक्षहेतुत्वोक्तेश्च न जीवेशैक्यमित्याह– **तमेवमिति** ॥ इत्यादेः प्रतीयत इति सम्बन्धः। एवमिति पूर्वोक्तप्रकारः परामृश्यते स च सहस्रशीर्षेत्यादिनोक्तः सहस्रशीर्षत्वादिरेवेति भावेनोक्तम्– **सहस्रेति** ॥ प्रथमादिपदेन सहस्राक्षत्वादेर्ग्रहणम्। पुरुष एवेत्यादेरर्थः– **सर्वेशत्वेति** ॥ ततो ज्यायांश्च पुरुष इत्यस्य सर्वज्यायस्त्वेति। आदिपदेन भूतपादत्वद्युस्थत्वादेः सङ्ग्रहः। नान्यः पन्था इत्यस्यार्थमाह– **अनन्येति** ॥ नत्वैक्यज्ञानेनेत्यर्थः। ननु 'पुरुष एवेदं सर्वम्'इति पूर्वं ब्रह्मणो जीवैक्यस्योक्तत्वेन तमेवमित्येवं शब्देन तदैक्यपरामर्शे ऐक्यज्ञानमेव मोक्षहेतुत्वेनोच्यत इति कथमेतदैक्यबाधकमित्यत आह– **नचेति** ॥ ऐक्यस्य पूर्वमनुक्तत्वादिति भावः ॥

**भाष्यम्**—

[पुरुष एवेदं सर्वं इत्यपि भेदपरम्]

**पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत्।**<br>
**इत्युच्यते तदीयत्वान्नतु सर्वस्वरूपतः॥**<br>
**भूतभव्यादिजातस्य मुक्तानामपि चेश्वरः।**<br>
**इत्युच्यते श्रुतौ विष्णुः सर्वदा पुरुषोत्तमः॥ इति भारते॥**

**टिप्पणी**—

ननूक्तं 'पुरुष एवेदं सर्वम्'इत्यत्रैक्यमुक्तमिति तत्राऽऽह– **पुरुष इति** ॥ यद्भूतं यच्च भव्यं यच्च भवदमुक्तमिदं सर्वं पुरुष एव पुरुषाधीनमेवेति पुरुषस्यामुक्तसर्वेशितृत्वमेवोक्तं नतु सर्वैक्यमित्यर्थः। कुत इत्यत आह– **उतेति** ॥ उत्तरार्धे मुक्तेशानत्वस्योक्तत्वात् पूर्वार्धेऽमुक्तसर्वेशितृत्वमेवोच्यते नतु सर्वत्वम्। नहि कोऽपि वादी मुक्तौ भेदममुक्तावभेदमङ्गीकरोति। नापि युज्यते। पूर्वमभिन्नस्य पश्चाद्भेदायोगात्। किञ्च, यदि पूर्वार्धे सर्वत्वमुक्तं

स्यात्तर्ह्युत्तरार्धे उतशब्दो व्यर्थः स्यात् । अमुक्तसमुच्चयार्थो हि उतशब्दः । नच द्वयोरीशत्वस्यानुक्तौ तत्समुच्चयोक्तेरवकाशोऽस्तीति भावः । अर्थान्तरस्यासम्भवात् । ईशानश्चेत्यन्वये भिन्नक्रमत्वप्रसङ्गात् । अत एवामृतत्वस्येशान इत्येवोदाहर्तव्ये उतशब्दसाहित्येन तदुदाहरणम् । न केवलमुक्तयुक्त्या पुरुष एवेदमित्यस्योक्तार्थत्वं किन्तु भारते तथा व्याख्यातत्वादपीत्याह – **पुरुष इति** ॥ अपि चेति चशब्दो यस्मादित्यर्थे । यस्माद् भूतभव्यादिजातस्यामुक्तवर्गस्येश्वरः तस्मान्मुक्तानामपीश्वर इति । संसारे स्वाधीनं जगद्यदि मुक्तौ स्वाधीनतां जह्यात् तदा प्रेक्षावान्न मोचयेत् । अतो मुक्तावपि तदधीनमेव । श्रुतौ 'उतामृतत्वस्येशानो यदन्नेनातिरोहति' इत्यस्याम् अनेन यद्यस्मादेवमन्नेनान्नम् अदनीयम् अमुक्तवर्गमतिरोहत्यतिक्रामति अमुक्ताधिपतिरिति यावत् । तस्मादमृतत्वस्योत भावभवित्रोरभेदेन मुक्तवर्गस्यापि ईशान इति श्रुतिर्व्याख्याता भवति ।

**भाष्यम्—**

[भक्तेरेव मोक्षसाधनत्वनिरूपणम्]

**सर्वस्मादुत्तम इति सम्यक् स्नेहयुता मतिः ।**
**सुस्थिरा भक्तिरुद्दिष्टा तया मोक्षो नचान्यतः ॥**
**तया मोक्षो भवत्येव सा चेत्पूर्णा स्वयोग्यतः ।**
**अपरोक्षदृशा युक्ता सा पूर्णेत्यभिधीयते ।**
**अपरोक्षदृशिश्चापि महाचार्योक्तदर्शनम् ॥**
**सोऽपि यन्मोक्षनियतं मनसा समुदीरयेत् ।**
**तस्य दर्शनतो याति मुक्तिं नास्त्यत्र संशयः ॥**
**ध्यानं च गुरुशुश्रूषा नित्यनैमित्तिकाः क्रियाः ।**
**तीर्थदानजपाद्याश्च स्वाध्यायो हरिकीर्तनम् ॥**
**द्वादश्यादिव्रतं चैव तुलस्याद्यैरथार्चनम् ।**
**सर्वं भक्त्यर्थमुद्दिष्टं निष्फलन्तु तया विना ॥**

विष्णुभक्तियुतो मुक्तिं याति नान्यः कथञ्चन ।
एतदन्यत्तु यच्छास्त्रं न तच्छास्त्रं कुवर्त्म तत् ॥
विष्णोर्भक्तिमृते मुक्तिर्जीवाभेदो हरेरपि ।
शिवब्रह्मादिसाम्यं च हरेर्मोहार्थमुच्यते ॥
दैत्यानां मोहनार्थाय विष्णोरन्यसमानता ।
हीनता चोच्यते शास्त्रैर्न तद्ग्राह्यं मनीषिभिः ॥
विष्णुवायुगिरीशेन्द्रदेवविप्राः क्रमात् सदा ।
सामर्थ्यतो विहीनास्तु गुणैः सर्वैस्तथैव च ॥
हीनो विष्णुर्न कस्यापि सर्वतश्चोत्तमो मतः ।
एतदन्यत्तु यच्छास्त्रं तदासुरविमोहनम् ॥
तस्मात्सर्वोत्तमं विष्णुं निश्चित्य परमं व्रजेत् ॥ इति हरिवंशेषु ॥

**टिप्पणी—**

इतोऽपि नैक्यज्ञानं मोक्षसाधनमित्याह– **सर्वस्मादिति** ॥ ननु भक्तेरनादित्वादितः पूर्वमेव कुतो न मुक्ता इत्यत आह– **तयेति** ॥ केयं भक्तेः पूर्णता इत्यत आह– **अपरोक्षेति** ॥ स्नेहपूर्वकं रामकृष्णाद्यवतारदर्शिनां कुतो न मुक्तिरित्यत आह– **अपरोक्षेति** ॥ महाचार्यः शिष्ययोग्यताभिज्ञः । महाचार्योक्तकामसाधनगुणविशिष्टगोपालादिरूपदर्शनस्य मोक्षहेतुत्वाभावादाह– **सोऽपीति** ॥ मनसा सुप्रसन्नधिया । ननु 'तस्याभिध्यानाद् योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' इत्यादिश्रुतौ 'सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः । मुक्तिभागी' इत्यादिस्मृतौ च ध्यानादेरेव मोक्षसाधनत्वोक्तेर्नचान्यत इति कथमुक्तमित्यत आह– **ध्यानं चेति** ॥ ननु भवतु विष्णुभक्तिव्यतिरिक्तमोक्षसाधनाद्यर्थप्रतिपादकपाशुपतादिशास्त्रं कुवर्त्म, वैष्णवपुराणेष्वेव तथोक्तेः का गतिरित्यत आह– **विष्णोर्भक्तिमिति** ॥ तदेव विशदयति– **दैत्यानामिति** ॥ कुतो न ग्राह्यमित्यत आह– **विष्ण्विति** ॥ विप्राः ऋषयः । हेतुमुक्त्वा साध्यमाह– **एतदिति** ॥ उपसंहरति– **तस्मादिति** ॥

भाष्यम्—

तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः।
वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये॥
गयाश्राद्धादिभिः पित्र्यैर्वेदपाठादिभिर्जपैः।
तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः॥
गुरुशुश्रूषणैः सत्यैः धर्मैर्वर्णाश्रमोचितैः।
ज्ञानध्यानादिभिः सम्यक् चरितैर्जन्मजन्मभिः[१]॥
न यान्ति तत्परं श्रेयो विष्णुं सर्वेश्वरेश्वरम्।
सर्वभावैरनाश्रित्य पुराणपुरुषोत्तमम्॥ इति पाद्मे॥
भावो भक्तिः समुद्दिष्टस्तद्वान् भावुक उच्यते॥ इति नारसिंहे॥
मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामते॥

—इति भागवतवचनम्॥

'परायणः' इति विशेषणान्न नारायणायनत्वं विना मुक्तिद्योतकम्॥

टिप्पणी—

ध्यानादीनां भक्तिव्यतिरेकेण मोक्षसाधनत्वाभावे प्रमाणान्तरमाह– **तुलेति**॥ सर्वभावैरित्यस्य सर्वात्मकत्वेनेत्यन्यथाप्रतीतिनिरासायार्थमाह– **भाव इति**॥ नचैवं सर्वभावैरिति बहुवचनानुपपत्तिः। 'भजनं भक्तिरित्याद्या द्वितीया स्तुतिरूपिणी। तृतीया परिचर्या स्याच्चतुर्थी प्रेमलक्षणा' इत्युक्तेर्भावैर्भक्तिभिरित्यर्थाङ्गीकारात्। यद्वा, श्रवणादिनवविधभक्तिविवक्षया भावैरित्युक्तम्। भक्तेरेव मोक्षसाधनत्वे प्रमाणान्तरमाह– **मुक्तानामपीति**॥ मुक्तानां शरीराद्यभिमानरहितानां सिद्धानां ज्ञानिनां कोटिष्वपि नारायणपरायणः प्रशान्तात्मा सुदुर्लभ इति भागवतवचनं नारायणायनत्वं विना न मुक्तिरित्यस्य द्योतकम्। कुतः प्रशान्तात्मनो मुक्तस्य च नारायणपरायणत्वविशेषणान्नारायणपरायणः प्रशान्तात्मा मुक्तः सुदुर्लभ इत्युक्त्या सर्वेषामपि मुक्तानां

नारायणायनत्वमस्तीति ज्ञायते। अन्यथा केषाञ्चिन्नारायणायनत्वाभावे नारायणायनः सुदुर्लभ इत्येव वक्तव्यतया परायण इति परत्वविशेषणवैयर्थ्यापत्तेः। तथाच नारायणायनत्वं विना मुक्तिर्नास्तीति लभ्यत इति भावः ॥

**भाष्यम्—**

[कार्यतावादनिराकरणम्]

**नच सिद्धे तात्पर्याभावो वक्तुं युक्तः। अस्त्यत्र तव पिता राजेत्यादिषु सिद्ध एव तात्पर्यदर्शनात्।**

**टिप्पणी—**

अत्र प्राभाकरा वदन्ति । यदुक्तं तत्वमस्यादिवाक्यानां जीवेशभेदादिप्रतिपादकत्वमिति तदयुक्तम्। समस्तस्यापि वेदस्य कार्यपरत्वेन सिद्धस्वरूपे जीवेशभेदादौ तात्पर्याभावात् । तथाहि । यज्ज्ञानात्पुरुषः प्रवर्तते तत्र हि तात्पर्यं शब्दस्य कल्प्यम् । तादृशं च कृतिसाध्यत्वे सति कृत्युद्देश्यत्वरूपं कार्यत्वमेव । तत्र लिङादिप्रत्ययः कार्यस्वरूपमेवाभिधत्ते । प्रकृतिस्तद्विषयं पदान्तराणि च प्रकृत्यर्थं तद्विशेषणं कारकं नामधेयं नियोज्यं चाभिदधति कार्यप्रतीतावेव व्याप्रियन्ते। यद्यपि सन्निपत्योपकारकाङ्गवाक्यानि कार्यान्तरशून्यानि । तथाऽपि प्रधानकार्यान्वितस्वार्थाभिधायकतया कार्यप्रतीतावेव तात्पर्यवन्ति । मन्त्रा अपि कार्याङ्गभूतार्थस्मारकतया तत्रैव विनियुक्ताः कार्य एव व्यापारवन्तः। अर्थवादा अपि तत्रैव रुचिमुत्पादयन्तः उपयुज्यन्ते। वेदान्तानामपि कर्तृस्वरूपप्रतिपादकत्वेन देवताप्रतिपादकत्वेन वा कार्यपरतैवेति कृत्स्नस्यापि वेदस्य कार्ये तात्पर्यमिति । तदेतत्प्रतिषेधति– **नचेति** ॥ सिद्धे कार्यातिरिक्तेऽर्थे जीवेशभेदादावित्यर्थः । कुत इत्यत आह– **अस्तीति** ॥ इत्यादिषु प्रयोगेषु। आदिशब्देनास्त्यत्र तव माता सुरूपोऽसीत्यादेर्ग्रहणम्। यो बाल्य एव कुतश्चित्कारणान्मातापितृभ्यां वियुक्तो मातापितृमतोऽन्यानवलोक्य स्वात्मनोऽपि तथाभावमनुमाय का मे माता? को मे पिता? कीदृशौ? कुत्र वर्तेते? इति जिज्ञासते तं प्रति कश्चिद् ब्रवीति । अत्र

पाटलिपुत्रे तव पिता राजा भद्रसेनोऽस्ति । ते माता भद्रसेनस्य महिषी लीलावतीति । तत्र कार्योपदेशाभावेऽपि सिद्ध एव तात्पर्यदर्शनादित्यर्थः ।

**भाष्यम्—**

**नच तत्र कार्ये तात्पर्यं कल्पयितुं युक्तम् । सुखसाधनत्व[१]विज्ञानेनैव प्रवृत्त्युपपतेः । वाक्यस्य स्वार्थमात्रे तात्पर्यपर्यवसानात् । अधिककल्पनाया-मश्रुतकल्पनाप्रसक्तिः ।**

**टिप्पणी—**

ननु यथा 'द्वारम्' इत्यादौ 'अस्तङ्गतः सविता' इत्यादौ च 'पिधेहि' 'न गच्छ' इत्यध्याहृतकार्ये तात्पर्यम् । तथाऽत्रापि त्वं तत्र याहीत्यध्याहृते कार्ये तात्पर्यं कल्प्यते । कार्यबोधमन्तरेण नैराकाङ्क्ष्यलक्षणस्य पर्यवसानस्याभावात् । नच गौरश्वः पुरुषो हस्तीति वा देवदत्तः पचतीति वा पदजातं पर्यवसितमनुभूयते । किन्तु तृप्तिकामौदनं पचेति । पर्यवसानहीनस्य च न्यूनतया वाक्याभासत्वं स्यादिति चेत्तत्राऽह– **नचेति** ॥ तर्हि कथं वाक्यस्य पर्यवसानमित्यत आह– **सुखेति** ॥ **पर्यवसानादिति** ॥ तावतैव श्रोतुर्निराकाङ्क्षत्वादिति भावः । ननु यदि वाक्यस्य स्वार्थमात्रे तात्पर्यपर्यवसानेन लिङादिरहितस्थले कार्ये तात्पर्याभावस्तर्हि ततः प्रवृत्तिनिवृत्त्यभावेन वाक्यप्रयोगो व्यर्थः स्यात् । परप्रवृत्तिनिवृत्त्यभिप्रायेणैव वाक्यप्रयोगात् । प्रवृत्त्यादिहेतु-कार्यताज्ञानस्य ततोऽजननात् । सिद्धज्ञानमात्रस्य प्रवृत्त्याद्यजनकत्वादिति चेत् । न । प्रवृत्त्याद्यर्थमेव वाक्यप्रयोग इति नियमाभावात् । यत्र वाक्यार्थज्ञानमात्रेण सुखदुःखावाप्तिहानी भवतः तत्र प्रवृत्त्याद्यभावात् । यत्रापि प्रवृत्तिनिवृत्त्यभिप्रायेण वाक्यप्रयोगस्तत्रापि सिद्धपरत्वं युक्तमेवेत्याशयेनोक्तम्– **सुखेति** ॥ सुखपदमिष्टपरम् । दुःखाभावसाधनताज्ञानस्यापि प्रवर्तकत्वात् । उपलक्षणमेतत् । अनिष्टसाधनताज्ञानेनैव निवृत्त्युपपत्तेरित्यपि ग्राह्यम् । एवशब्दः कार्यताज्ञानव्यावृत्त्यर्थः । यद्यपि सिद्धमात्रज्ञानं न प्रवृत्त्यादिहेतुः । तथाऽपि

सिद्धविशेषेष्टानिष्टसाधनत्वज्ञानं तु भवत्येव । बालस्य स्तनपानादाविष्ट-साधनताज्ञानेनैव प्रवृत्तेर्दंशमशकदंशनादावनिष्टसाधनताज्ञानेनैव निवृत्तेश्च दर्शनात् । नच तस्य कार्यताज्ञानमेव प्रवर्तकम् । इष्टसाधनताज्ञानन्तु कार्यताज्ञानस्य कारणमिति वाच्यम् । इष्टसाधनतातिरिक्तायां कार्यतायां प्रमाणाभावादिति भावः । नन्वेवं चन्द्रमण्डलादावपि प्रवृत्तिप्रसङ्गः । नच कृत्यसाध्यताज्ञानं प्रवृत्तिप्रतिबन्धकमतो न प्रवृत्तिरिति वाच्यम् । साक्षादविरोधिनो ज्ञानस्य जनकीभूतज्ञानविघटकतयैव प्रतिबन्धकत्वनियमेन कृतिसाध्यताज्ञानस्य प्रवृत्त्यजनकत्वे कृत्यसाध्यताज्ञानस्य तत्प्रतिबन्धकत्वायोगात् । अन्यथा इष्टसाधनताज्ञानस्यापि प्रवृत्त्यहेतुत्वापत्तिरिति चेत् । मैवम् । कृतिसाध्येष्ट-साधनताज्ञानस्यैव प्रवर्तकत्वाङ्गीकारात् ।

ननु तथाऽपि कृतिसाध्यत्वबोधकं किं लिङादिकम् उत प्रमाणान्तरम् । नाऽद्यः । लिङाद्यर्थोऽपि सुखसाधनत्वमेवेति लिङादेरिष्टसाधनत्वमात्रार्थकत्वस्य वक्ष्यमाणत्वात् । नान्त्यः । प्रवर्तकज्ञानविषयस्यापि प्रमाणान्तरबोध्यत्वे इष्ट-साधनस्यापि तथात्वप्राप्त्या विधिप्रत्ययस्य प्रवर्तकत्वाभावप्रसङ्गादिति चेन्न । इष्टसाधनत्वमात्रस्यैव लिङादिबोध्यत्वेऽपि कृतिसाध्यत्वस्य कृत्यन्वयव्यतिरेकलक्षणप्रमाणान्तरगम्यत्वात् । नचैवं इष्टसाधनताया अपि प्रमाणान्तरबोध्यत्वे लिङाद्यनभिधेयत्वं स्यादिति वाच्यम् । स्वर्गापवर्गादीष्टं प्रति क्रियाया अन्वयव्यतिरेकयोर्दुर्ग्रहत्वेन तदिष्टसाधनत्वस्य मानान्तरागोचरत्वेन तत्र लिङादिशक्तेरावश्यकत्वात् । क्रियां प्रति कृतेरन्वयव्यतिरेकयोः सुग्रहत्वेन क्रियायाः कृतिसाध्यत्वस्य मानान्तरलभ्यतया तत्र लिङादेः शक्तेरकल्पनात् । अनन्यलभ्यस्यैव शब्दार्थत्वात् । नहि विधिप्रत्ययः स्वर्गकामस्य यागः कृतिसाध्य इत्याह । किन्त्विष्टसाधनमित्येव । तस्मिंस्तु बोधिते शक्तः प्रवर्तते अशक्तस्तु नेत्येवानुभवसिद्धम् । अन्यथा स्वर्गकामकृत्यसाध्यस्यापि तस्य तत्कृतिसाध्यतया बोधने विधिप्रत्ययस्य बाधितार्थत्वप्रसङ्गात् । नचैवं यत्प्रवर्तकं कृतिसाध्येष्ट-साधनताज्ञानं न तद्विधिप्रत्ययजन्यम् । यच्च विधिप्रत्ययजन्यमिष्टसाधनताज्ञानं

न तन्मात्रं प्रवर्तकमिति कथं लिङादेः प्रवृत्तिपरत्वमिति वाच्यम् । लिङादि-जन्येष्टसाधनताज्ञानस्यापि प्रवृत्त्युपयोगितया लिङादेः प्रवृत्तिपरत्वाव्याकोपात् । नहि यावान् प्रवर्तकज्ञानविषयः तावान्विधिप्रत्ययशक्य इति शक्यमङ्गीकर्तुम् । इदानीं ममेदं इष्टसाधनमिति प्रवर्तकज्ञानविषययोरपि कालस्वांशयोर्लिङाद्यर्थ-त्वाभावात् । नचैवं कृतिसाध्यताज्ञानस्यापि प्रवर्तकत्वाङ्गीकारे कृतिसाध्यता-विशेषणस्य व्यर्थत्वादिति सुधाग्रन्थविरोध इति वाच्यम् । तद्ग्रन्थस्यातीतादौ प्रवृत्तिप्रसङ्गस्येदानीं ममेष्टसाधनताभावादेव कृतिसाध्यत्वविशेषणेऽप्यावश्य-केनेदानीन्तनत्वविशेषणेनैव परिहारे तदर्थं कृतिसाध्यत्वविशेषणं न देयमित्येवंपरतया चन्द्रमण्डलादौ कृत्यसाध्ये प्रवृत्तिप्रसङ्गवारणाय तद्विशेषणदानानिषेधकत्वात् । अत एव तत्वनिर्णयटीकायां चन्द्रमण्डलादौ प्रवृत्तिप्रसङ्ग इति चेन्न । कृतिसाध्येष्टसाधनतायाः कार्यतापरपर्यायत्वस्वीकारादित्युक्तम् ।

नन्वेमपि सविषान्नभोजनादौ निषिद्धे अगम्यागमनादौ च प्रवृत्तिः स्यादिति चेन्न । विकल्पासहत्वात् । तथाहि किमगम्यागमनादिजन्ये सुखे रागौत्कट्येन तज्जन्ये दुःखे यस्य द्वेषोऽस्ति तस्य प्रवृत्तिरापाद्यते यस्य तज्जन्ये दुःखे द्वेषौत्कट्येन तज्जन्ये सुखे नेच्छा तस्य वा । नाऽद्यः । रागान्धस्य प्रवृत्तिदर्शनेनेष्टत्वात् । न द्वितीयः । इष्टसाधनत्वस्यैवाभावात् । इष्टसाधनत्वं हीच्छाविषयसाधनत्वं तत्कथं तज्जन्यसुखे इच्छाविरहे भवेत् । नचैवमिच्छाज्ञानस्यापि प्रवर्तकत्वापत्तिः । नह्यत्रेच्छाविषयसाधनमेतदिति ज्ञानं प्रवर्तकम् । येनोक्तदोषः स्यात् । किन्नाम? स्वरूपसती यत्रेच्छा तत्साधनताज्ञानं प्रवर्तकमिति । अगम्यागमनादेर्निषिद्धस्येष्टसाधनत्वाभावः आचार्याणामभिप्रेत एव । कथमन्यथा 'कार्यं नहि क्रियाव्याप्यं निषिद्धस्य समत्वतः' इत्यादिना क्रियाव्याप्यत्वा-देर्निषिद्धसाम्येन कार्यतारूपत्वं निराकृत्य स्वयं 'तदिष्टं साधनं तथा । कार्यम्' इतीष्टेष्टसाधनत्वयोः कार्यतारूपत्वमुक्तमिति दिक् । एवमप्युप-पत्तावध्याहृतकार्य एव तात्पर्यकल्पने दोषमाह— **अधिकेति** ।। अध्याहृत-कार्यकल्पनायामित्यर्थः । अध्याहारो ह्यश्रुतकल्पनम् । तच्च कल्पकसद्भावे

न दोषः । अन्यथा तु दोष एव। कल्पिका चान्यथानुपपत्तिरेव । प्रकृते च सुखसाधनत्वविज्ञानेनैव प्रवृत्त्युपपत्तेरित्यन्यथोपपत्तेरुक्तत्वात्कल्पकाभाव इति भावः ॥

**भाष्यम्—**

**यजेतेत्यादिष्वपि यजनादेः सुखसाधनतामात्रं प्रतीयते । न शब्दस्य प्रेरकता । वाक्यमात्रस्य प्रेरकत्वे सर्वैर्विहितमनिष्टसाधनमपि क्रियेत ।**

**टिप्पणी—**

ननु यत्र 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ लिङादिः श्रूयते तत्र तावन्नियोगापरपर्यायकार्य एव तात्पर्यं सिद्धम् । अन्यथा लिङादिप्रत्ययस्य प्रवर्तकत्वासम्भवात् । तथाच तद्वदन्यत्रापि कार्यपरलिङाद्यध्याहारः कर्तव्य इति चेन्न । स्यादेतदेवम् । यदि यजेतेत्यादावेव नियोगापरपर्यायकार्ये तात्पर्यं सिद्धं स्यात् । नचैतदस्तीत्याह– **यजेतेत्यादिष्वपीति** ॥ लिङादिनेति शेषः । यजनादेर्धात्वर्थस्य । मात्रपदव्यावर्त्यमाह– **नेति** ॥ शब्दस्य लिङादिरूपस्य । प्रेरकता प्रवर्तकज्ञानविषयीभूतकार्यताबोधकता । न प्रतीयत इत्यर्थः । यद्वा यदि यजेतेत्यादिषु लिङादिना यजनादेर्धात्वर्थस्य सुखसाधनतैव प्रतीयते नतु कार्यता तर्हि लिङादेः प्रवर्तकत्वं न स्यात् । प्रवर्तकीभूतकार्यताज्ञानस्य ततो जननादित्यत इष्टापत्तिमाह– **नेति** ॥ शब्दस्य लिङादेः कार्यताबोधकत्वेन प्रवर्तकता नेत्यर्थः । इष्टसाधनताबोधकत्वेनैव प्रवर्तकत्वं नतु कार्यताबोधकत्वेनेति भावः । कार्यताबोधकत्वेन लिङादेः प्रवर्तकत्वाङ्गीकारे किं बाधकमिति चेन्न । विकल्पासहत्वात् । तथाहि । किं लिङादिः इष्टसाधनतां बोधयन् कार्यतां बोधयेत् अबोधयन् वा । द्वितीयं तावद्दूषयति– **वाक्यमात्रस्येति** ॥ यदि लिङाद्युपेतवाक्यस्येष्टसाधनतामबोधयतः कार्यमात्रबोधकत्वेन प्रवर्तकत्वं तर्हि विषं भुङ्क्ष्वेत्यादिना विहितमनिष्टमरणादिसाधनं विषभोजनमपि सर्वैः क्रियेत । अतः परेण तत्रेष्टसाधनताज्ञानाभावेन कार्यताबोध एव न जायत

इति वक्तव्यम् । अत एव परेण 'किन्तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् । फलसाधनता तत्र कारणं तेन कार्यता ।' इति कार्यताज्ञानं प्रतीष्ट-साधनताज्ञानस्य कारणत्वमुक्तम् । नचेष्टसाधनताज्ञानस्य कार्यताज्ञान-कारणत्वेऽपि नेष्टसाधनत्वे लिङादिशक्तिः कल्पनीया । प्रमाणान्तरेणापि तज्ज्ञानसम्भवादिति वाच्यम् । तदसम्भवस्य प्रागुक्तत्वात् । तत एव कार्यता-बोधसम्भवे लिङादेरनुवादकताप्रसङ्गाच्च । तस्मादाद्य एवाङ्गीकार्यः । नचासौ युक्तः । लिङादेः सम्प्रतिपन्नप्रथमप्राप्तेष्टसाधनत्वार्थत्वेनैव चारितार्थ्ये तदन्यकार्यताबोधकत्वकल्पने कल्पनागौरवादिति भावः ।

**भाष्यम्—**

**व्युत्पत्तिरपि सिद्धे साङ्गुलिनिर्देशादिना युज्यते ।**

**टिप्पणी—**

ननु वाच्यवाचकभावसम्बन्धज्ञानलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थं बोधयति । नान्यथा । अन्वयव्यतिरेकाभ्यां तथाऽवगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव भवति । वृद्धव्यवहारश्च कार्यप्रतिपत्तिनिबन्धन इति कार्यप्रतिपादकतैव युक्ता । तथाहि । 'चैत्र जलमाहर' इति प्रयोजकवृद्धवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य जलाहरणविषयां प्रवृत्तिं दृष्ट्वा पार्श्वस्थो बाल एवमाकलयति । अस्येयं प्रवृत्तिर्बुद्धिपूर्वा स्वतन्त्रप्रवृत्तित्वात् । मदीयस्तनपानादिप्रवृत्तिवदिति । पुनश्चास्य प्रवृत्तिहेतुभूता बुद्धिः किंविषयेति जिज्ञासायामेवमवधारयति । वृद्धस्य प्रवृत्तिहेतुर्बुद्धिः मदीयप्रवृत्तिहेतुभूतबुद्धिसमानविषया प्रवृत्तिहेतुबुद्धित्वात् । मदीयप्रवृत्तिहेतुबुद्धिवदिति । पुनरेवं निश्चिनोति । यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता तद्वस्त्वनेन शब्देन बोधितम् । तद्भावभावित्वात् । मम तु प्रमाणान्तरेणेत्यावयोर्विशेषः । तेन यद्बोधान्मम प्रवृत्तिस्तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थबोधकतेति । पुनः कोऽसौ प्रवृत्तिहेतुभूतः शब्दबोध्योऽर्थ इत्यवधारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुमर्थमनुसन्धत्ते ।

तत्र न तावदहं क्रियामात्रं फलमात्रं क्रियाफलसम्बन्धमात्रं वा बुद्ध्वा प्रवृत्तः किन्तु कार्यमेव । ममेदं कार्यमिति प्रतीत्या हि स्तनपानादावहं प्रवृत्त इति स्वप्रवृत्तेः कार्यताबोधपूर्वकतां निश्चित्यायमपि कार्यताबोधादेव प्रवृत्त इत्यनुमाय वाक्यस्य तावत्सामान्यतः कार्यपरतामवधारयति । ततो लिङाद्यावापे कार्यावगमदर्शनात् तदुद्धारे चादर्शनात्त एव कार्यावगतिं कुर्वन्ति । शब्दान्तराणि च तदन्वितांस्तानर्थानवगमयन्तीत्यावापोद्धाराभ्याम् अधिगच्छति । एवं लोके कार्य एव शब्दानां सङ्गतिग्रहणाद्वेदेऽपि तदेव शब्दात्प्रतीयते । तथाच यजेतेत्यादिष्वपि यजनादेः कथं सुखसाधनतामात्रं प्रतीयत इत्युक्तमित्यत आह– **व्युत्पत्तिरपीति** ।। अङ्गुलिशब्देन तत्प्रसारणं गृह्यते । अङ्गुलिसहितो निर्देशः साङ्गुलिनिर्देशः । 'अत्यपूपांस्तव भ्राता' इत्यादिरूपः । आदिपदेन च्छोटिकावादनभ्रूविक्षेपादेर्ग्रहणम् । न व्युत्पत्त्यनुसारेण लिङादिशब्दानां कार्यपरता कल्प्या । व्युत्पत्तेरपि सिद्ध एवार्थे सम्भवात् । तथाहि च्छोटिकावादनादिनाऽव्युत्पन्नं बालमभिमुखीकृत्याऽपूपानदन्तं तद्भ्रातरम् अङ्गुलिप्रसारणादिना प्रदर्श्य व्युत्पादयिता वाक्यं प्रयुङ्क्ते । बालक तवायं भ्राताऽपूपानत्तीति । तदा वृद्धव्यवहारदर्शनं विना तेन निर्देशेनैव शब्दसमुदायस्य कार्यान्वयरहित एव तस्मिन्नर्थसमुदाये विषयविषयीभावं तावदवगच्छति बालः इदमनेनायं बोधयतीति । पुनरयं 'ते पिताऽपूपं खादति' इत्यादिवाक्यान्तरेषु शब्दार्थयोरावापोद्धाराभ्यां शब्दविभागादिकम् अवगत्य भ्रात्रादिपदानां योग्येतरान्विते भ्रात्रादौ वाचकत्वमाकलयतीति किमनुपपन्नम् । एतेनेदमपि निरस्तम् । यावती सिद्धार्थपरादपि वाक्याद् व्युत्पत्तिः सा सर्वा प्रथमभाविकार्यव्युत्पत्त्यनन्तरभावित्वात्कार्यव्युत्पत्तिरेवेति । प्रथमव्युत्पत्तेरेव सिद्धार्थे समर्थितत्वादिति ।।

**भाष्यम्—**

**नच कुत्रचित्सुखसाधनं विना कार्यान्वितं विद्यते । लिङाद्यर्थोऽपि सुखसाधनत्वमेव ।**

**टिप्पणी—**

एवं सिद्धे व्युत्पत्तिं प्रसाध्य कार्यान्विते व्युत्पत्तिरिति पक्षं दूषयति– **नचेति** ॥ विना कार्यमिति शेषः । कुत्रापि कार्यमेव न विद्यत इति कार्यान्वितं च नास्ति । अतः शब्दानां कार्यान्विते व्युत्पत्तिरित्यनुपपन्नमित्यर्थः । ननु त्रय एते धर्माः एकार्थसमवेताः । कृतिसाध्यत्वं कृत्युद्देश्यत्वम् इष्टसाधनत्वं चेति । तत्राऽद्यौ द्वौ सम्भूतौ कार्यतासञ्ज्ञौ । विषभक्षणादौ चन्द्रमण्डलादौ च प्रत्येकं तयोः सत्वेऽपि कार्यताबुद्ध्यभावात् । इष्टसाधनत्वं तु कृत्युद्देश्यतायां निमित्ततयैवावतिष्ठते । तथाच कथं कार्याभाव इत्यत उक्तम्– **सुखसाधनं विना कार्यं न विद्यत इति** । यद्यपि कृतिसाध्यत्वमिष्टसाधनतातिरिक्तमेव । तथाऽपि तदुद्देश्यत्वमिष्टसाधनत्वं विनाऽन्यन्नास्ति । प्रमाणाभावात् । तथाच निमित्तनैमित्तिकभाव एवासिद्ध इति भावः । ननु यागादेरिष्टसाधनत्वा-तिरिक्तकृत्युद्देश्यत्वरूपकार्यतासत्वे लिङादिशब्द एव मानम् । तस्य तत्र शक्तत्वादित्यत आह– **लिङाद्यर्थोऽपीति** ॥ यन्मानत्वेनोच्यते तस्यापि लिङादेरिष्टसाधनत्वमेवार्थो नतु कार्यत्वम् । अतोऽतिरिक्तकार्यतासद्भावेनेदं मानमित्यर्थः । नच विमता प्रवृत्तिः इष्टसाधनत्वातिरिक्तकार्यताबोधपूर्विका स्वतन्त्रप्रवृत्तित्वादित्यनुमानं मानमिति वाच्यम् । अप्रसिद्धविशेषणत्वात् । नहि कस्याञ्चित्प्रवृत्ताविष्टसाधनत्वातिरिक्तकार्यबोधपूर्वकत्वं दृष्टम् । नच गवानयनादिप्रवृत्त्यन्यथानुपपत्तिर्मानम् । कृतिसाध्यतैकार्थसमेवेतेष्टसाधनताज्ञानादेव प्रवृत्त्युपपत्तेरतिरिक्तकार्यताभावेनोपपत्त्यभावादिति ॥

**भाष्यम्—**

**नच कार्यान्वित एव तात्पर्यमित्यत्र किञ्चिन्मानम् ।**

**सुखसाधनमेवैकं नृणां वेदः प्रदर्शयेत् ।**
**न कुर्विति नरं क्वापि प्रेरयत्यत्र कश्चन ॥**
**सुखसाधनताज्ञानात्सुखप्राप्त्यर्थमिच्छया ।**
**प्रवर्तते ततो वेदः सिद्धस्यैव प्रदर्शकः ॥**

**नतु कारकतां क्वापि वेदः प्राप्नोति कस्यचित् ॥ इति ब्राह्मे ॥**
**अतस्तद्विरोधिकथनं मोहत एव ।**

**टिप्पणी—**

एवं कुत्रापीष्टसाधनत्वातिरिक्तकार्याभावात्कार्यान्वितमेव न विद्यत इति न कार्ये व्युत्पत्तिरित्युक्तम् । इदानीं यदुक्तं प्रकृतिस्तद्विषयं पदान्तराणि चेत्यादिना सर्वस्यापि वेदस्य कार्यान्वित एव स्वार्थे तात्पर्यमिति तद्दूषयति— **नचेति** ॥ न केवलं प्रमाणाभावात्कार्यान्विते तात्पर्याभावः किन्तु प्रमाणविरुद्धत्वाच्चेति भावेन प्रमाणमाह— **सुखसाधनमिति** ॥ वेदो नृणाम् उत्तमाधिकारि-व्यतिरिक्ताधिकारिणां सुखसाधनमेव प्रदर्शयेत् । तान् प्रति वेदार्थेश्वरस्य सुखसाधनत्वात् । इतरेषां तु एकं प्रधानमिष्टमेव प्रतिपादयेत् । उत्तमाधिकारिणः प्रति वेदार्थभूतस्य भगवतः इष्टरूपत्वादिति भावः । एवकारव्यावर्त्यमाह— **नेति** ॥ नरं प्रति कुर्विति लोट्प्रत्ययादिबोध्यं कार्यं न बोधयतीत्यर्थः । यद्वा कुर्विति कार्यताबोधकतया नरं क्वापि न प्रवर्तयतीत्यर्थः । तर्हि कथं प्रवृत्तिरित्यत आह— **सुखेति** ॥ इष्टसाधनताज्ञानादित्यर्थः । न केवलमिष्ट-साधनताज्ञानं प्रवर्तकं किन्तु फलेच्छाऽपीत्याह— **सुखेति** ॥ एवञ्च निषिद्धे अगम्यागमनादौ इष्टसाधनत्वाङ्गीकारेऽपि तज्जन्ये दुःखे द्वेषौत्कट्येन तज्जन्ये सुखे इच्छाभावादेव न प्रवृत्तिरिति भावः । ननु फलेच्छाया न प्रवृत्तिहेतुत्वं युक्तम् । स्वरूपसती यत्रेच्छा तत्साधनताज्ञानस्यैव प्रवर्तकत्वाङ्गीकारेण फलेच्छाया इष्टसाधनताज्ञानहेतुतावच्छेदकतया अन्यथासिद्धत्वादिति चेन्न । यत्र यत्साध्यताज्ञानं तत्र तदिच्छा प्रवर्तिका । तथा चेष्टसाधनताज्ञानस्यापि फलेच्छाप्रवृत्तिहेतुतावच्छेदकतया अन्यथासिद्धत्वेन प्रवृत्त्यहेतुत्वापत्तेः । तस्माद् विनिगमनाविरहादुभयोरपि दण्डचक्रादिवद्धेतुत्वम् । ननु फलेच्छा भिन्नविषयिणी इष्टसाधनताज्ञानं तु प्रवृत्तिसमानविषयकमिति विनिगमकसत्त्वादिष्टसाधनताज्ञानमेव प्रवर्तकं नतु फलेच्छेति चेन्न । प्रमाणबलेन भिन्नविषयिण्या अपीच्छायाः प्रवृत्तिहेतुत्वाङ्गीकारे बाधकाभावात् । नचातिप्रसङ्गः । इच्छाविषयप्रवृत्तिविषययोः

साध्यसाधनभावस्यातिप्रसङ्गभञ्जकत्वात्। इच्छायाः प्रवृत्तिसमानविषयतानियमस्तु फलेच्छाव्यतिरिक्तस्थल एवास्तु । उक्तविनिगमनेन फलेच्छाया इष्टसाधनताज्ञानप्रवृत्तिहेतुतावच्छेदकत्वमेव । इदन्तु वचनं फलेच्छायाः प्रवृत्तिं प्रति प्रयोजकत्वमात्रपरमित्याहुः । उपसंहरति– **तत इति** ।। सिद्धस्य सिद्धविशेषस्यैव । कारकतां कार्यताबोधकतया प्रवर्तकतामित्यर्थः । ननु सर्वस्यापि वेदस्य कार्यपरत्वे प्राभाकरवचनमेव प्रमाणमस्ति । अतः कथं मानाभाव इत्यत आह– **अत इति** ।। वेदस्य सिद्धार्थपरत्वे कार्यपरत्वाभावे च प्रमाणसद्भावात्तद्विरोधिकार्यपरत्वकल्पनं मिथ्याज्ञानादेव । तथाच तदीयवचनस्य मिथ्याज्ञानमूलत्वेनाप्रामाण्यात् । सर्वस्यापि वेदस्य कार्यपरत्वे तन्न मानमित्यर्थः ।

**भाष्यम्—**

**कार्यान्विते शक्तिरिति वदता सिद्धवाक्यानां प्रामाण्यमङ्गीकृतं च । अन्यथा 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ वसन्तादिलक्षणवाक्यानां स्थानान्तरस्थानां स्वार्थे प्रामाण्याभावाद् वसन्ताद्यसिद्धेर्यागाद्यसिद्धिः ।**

**टिप्पणी—**

एवम् अकार्यशेषतया स्वप्रधानेश्वरतद्भेदादौ तात्पर्यमित्युक्तम् । इदानीमस्तु वा कार्यपरत्वं वेदस्य तथाऽपि 'आत्मानमुपासीत' इत्याद्युपासनाकार्ये कर्मकारकतया प्रतीतस्येश्वरस्य तद्भेदादेश्च स्वरूपं प्रतिपादयतां 'सत्यं ज्ञानं' 'द्वा सुपर्णा' इत्यादिवाक्यानां तत्र प्रामाण्यसम्भव इति पक्षान्तरं समर्थयमानः सिद्धपरेभ्योऽपि वाक्येभ्यो वस्तुतत्वसिद्धिर्भवतीत्येतत्परेणाप्यङ्गीकर्तव्यमित्याह– **कार्यान्वित इति** ।। सिद्धवाक्यानां स्वार्थ इति शेषः । प्रामाण्यं तात्पर्यम् । सिद्धवाक्यानां स्वार्थे तात्पर्यानङ्गीकारे बाधकमाह– **अन्यथेति** ।। इत्यादौ वाक्ये विधेयस्य वसन्तादेर्लक्षणप्रतिपादकवाक्यानां मधुश्च माधवश्च वासन्तिका- वृतू इत्यादिवाक्यानामित्यर्थः । प्रथमादिपदेन 'यूपे पशून् बध्नाति' इत्यादिवाक्यग्रहणम् । द्वितीयादिपदेन 'खादिरो यूपो भवति यूपमष्टास्री-

करोति' इत्यादिलक्षणवाक्यप्रतिपाद्ययूपादिग्रहणम् । एवं तृतीयादिपदेनापि यूपादिग्रहणम्। चतुर्थादिपदेन पशुबन्धादिग्रहणम्। विधिवाक्यप्रकरणपठितानां वाक्यानां कथञ्चित्कार्यमात्रे तात्पर्योपपादनसम्भवेऽपि स्थानान्तरस्थानां तदुपपादनमशक्यमित्याशयेनोक्तम्– **स्थानान्तरस्थानामिति** ॥

**भाष्यम्**——

**कार्यान्विते शक्तिरित्युक्ते कार्यपदस्य कार्यान्वयाभावादशक्त्या विध्यादेरसिद्धिश्च ।**

**टिप्पणी**——

इतोऽपि सर्वपदानां कार्यान्विते शक्तिरित्याह– **कार्यान्वित इति** ॥ न सर्वेषां शब्दानां कार्यान्विते स्वार्थे व्युत्पत्तिरिति वक्तुं युक्तम् । एवं हि वदता लिङादिकार्यपदस्यापि कार्यान्विते स्वार्थे शक्तिरिति वक्तव्यम् । नच तद्युक्तम् । लिङादिकार्यपदस्य हि कार्यमेव स्वार्थः । नच तस्य कार्यस्य कार्यान्तरेणान्वयोऽस्ति । गुणप्रधानभावेन खलु पदार्थानामन्वयो भवति । कार्यं च प्रधानत एव शब्देन बोध्यते । नच कार्यद्वयस्य युगपद्गुण-प्रधानताभावः सम्भवति । अतः कार्यस्य कार्यान्वयाभावान्न लिङादिकार्यपदस्य कार्यान्विते स्वार्थे शक्तिः। तथाच विधेः कार्यस्यासिद्धिः स्यात्। तस्य प्रमाणान्तरागोचर-त्वात् । तथा सति लिङादेरनुवादकताप्रसङ्गात् । ततश्च प्रवर्तकाभावेन प्रवृत्तिविलोपापात इति भावः । प्रवृत्तिसङ्ग्रहार्थं विध्यादेरित्यादि पदम् । ननु लिङादिकार्यपदस्य स्वार्थे कार्यमात्रे शक्तिः । अन्येषां गवादिपदानां कार्यान्विते स्वार्थे शक्तिरित्यङ्गीकारान्नायं दोष इत्याशङ्क्याऽऽह– **कार्यपदस्येति** ॥ स्वत एव स्वार्थ एव । प्रयोजकद्वैविध्याङ्गीकारादिति भावः । किञ्च लिङादिकार्यपदस्य केवलस्वार्थे शक्त्यङ्गीकारे अन्विताभिधानवादपरित्यागेन अपसिद्धान्तः स्यात्।

**भाष्यम्**——

**कार्यपदस्य स्वत एव शक्तिरन्येषां कार्यान्वितत्वेनेत्यङ्गीकारे कल्पनागौरवम् ।**

**स्वार्थे शक्तिरित्यङ्गीकारे न कश्चिद्विरोधः । कर्तव्यतामात्रे वाक्यप्रामाण्याङ्गीकारे कर्मप्रयोजने प्रमाणाभावात्तत्रापि तात्पर्यमङ्गीकर्तव्यमेवेति सिद्धमेव सिद्धे तात्पर्यम् ।**

**टिप्पणी—**

ननु लिङादिकार्यपदस्य सिद्धान्विते स्वार्थे शक्तिरन्येषां कार्यान्विते स्वार्थे शक्तिरित्यङ्गीकारान्नापसिद्धान्त इत्यतोऽप्याह— '**कार्यपदस्येति** ।। स्वत एव सिद्धान्वित एव । एकप्रयोजकालाभादिति भावः । ननु सर्वेषामपि शब्दानां कार्यान्वयिनि स्वार्थे शक्त्यङ्गीकारान्न कल्पनागौरवम् । कार्येण सह योऽन्वयः तद्वत्त्वं कार्यस्य च सिद्धस्य चास्तीत्येकप्रयोजकलाभाद् इति चेन्न । अत्रापि कल्पनागौरवप्रसङ्गात् । कार्येण सह सिद्धस्य योऽन्वयः स गुणभाव एव । नच कार्यं प्रति गुणभावः कार्यस्यास्ति । नच गुणे प्रधाने चानुगतमन्वयमात्रं शब्देन बोध्यते । अतःशब्दमात्रमत्रैकं नार्थ इति । एतेन कार्यान्वयान्वयिनि शब्दानां शक्तिः । कार्यस्य योऽन्वयः तदन्वयवत्त्वं कार्ये इतरपदार्थे चास्तीत्येकप्रयोजकवर्णनमपि परास्तम् । कार्यपरपदार्थान्विते शब्दानां शक्तिरिति चेन्न । अत्रापि कल्पनागौरवात् । कार्यपरं यत्पदं तस्य योऽर्थः तेनान्वित इति ह्यस्यार्थः । नहि लिङादिकार्यपदस्य गवादिपदानां च कार्यपरत्वमनुगतम् । लिङादीनां कार्यपरत्वं कार्यवाचित्वं गवादिपदानां तु तदुद्देशित्वमात्रमिति द्वैविध्यात् । तथाच कार्यपदस्य कार्योद्देशिमात्रपदार्थान्विते स्वार्थे शक्तिरितरेषां कार्यवाचिपदार्थान्विते स्वार्थे शक्तिरित्यङ्गीकारापत्त्या कल्पनागौरवमेवेति । योग्येतरान्वितस्वार्थे शक्तिरित्यङ्गीकारे त्वेकप्रयोजकलाभाल्लाघवमित्ययमेव पक्षः समाश्रयणीय इत्याह— **स्वार्थ इति** ।। सर्वेषां शब्दानां योग्येतरान्वित इति शेषः । न केवलं स्थानान्तरस्थानां वसन्तादिलक्षणवाक्यानां विधिवाक्यस्थज्योतिष्टोमस्वर्गकामादिपदानामपि स्वार्थे ज्योतिष्टोमादियागरूपे कर्मणि स्वर्गादिरूपप्रयोजने तात्पर्यमङ्गीकार्यम् । अन्यथा तदसिद्धिप्रसङ्गादित्याह— **कर्तव्यतामात्र इति** ।। अस्त्वेवं स्थानान्तरस्थवसन्तादिलक्षणवाक्यानां

विधिवाक्यस्थज्योतिष्टोमादिपदानां च सिद्धे स्वार्थे तात्पर्यम् । किं ततः? नचापसिद्धान्तः । कार्येऽपि तात्पर्याङ्गीकारादिति चेद् एवं तर्हि उपासनाकर्मकारकात्मलक्षणप्रतिपादकानां स्थानान्तरस्थानां सत्यज्ञानादिवाक्यानां 'आत्मानमेव लोकमुपासीत' इत्यादिविधिवाक्यस्थात्मादिपदानां च सिद्धेऽपि स्वार्थे कार्ये चेत्युभयत्र तात्पर्यं सिद्धमिति ब्रूमः ॥

**भाष्यम्—**

**'चित्रादितारकाद्वन्द्वं यदा पूर्णेन्दुसंयुतम्। चैत्रादिमासा विज्ञेयाः' इत्यादौ वस्तुयाथार्थ्ये तज्ज्ञाने चोभयत्र तात्पर्यदर्शनात्। उपासनावाक्येष्व-प्युपासनायां वस्तुयाथार्थ्ये चोभयत्र तात्पर्यं युक्तम्।**

**उपासनायाः कार्यत्वे विष्णोरात्मत्व एव च।**
**उभयत्रापि तात्पर्यमात्मोपासादिके विधौ॥**
**तस्मादसत्यं न ध्यायेद् ध्यायेत्तत्सत्यता यथा।**
**विचार्य मतिमान्वाक्यैर्बहुभिः स्वार्थवाचकैः॥ इति हरिवंशेषु॥**

**तस्मादिष्टसाधनमेव[१] सर्ववाक्यार्थः।**

**टिप्पणी—**

ननु युक्तं स्थानान्तरस्थवसन्तादिलक्षणवाक्यानां विधिवाक्यस्थज्योतिष्टोमादिपदानां च सिद्धेऽपि स्वार्थे तात्पर्यम् । अन्यथा वसन्ताद्यसिद्ध्या यागाद्यसिद्धेः। नतु सत्यज्ञानादिवाक्यानामात्मादिपदानां च स्वार्थे तात्पर्यं युक्तम्। तदनङ्गीकारे बाधकाभावात्। नचोपासनासिद्धिः। असत्यस्यैवोपासनोपपत्तेरित्यत आह— **चित्रादीति** ॥ आदिपदेन विशाखादिफल्गुन्यन्ततारकाग्रहणम् । चित्रादितारकाणां हस्तस्वात्यादिपूर्वोत्तरतारकाभ्यां द्वन्द्वभावो ज्ञातव्यः । ततश्च चित्रादिविशाखाद्यव्यवहितपूर्वनक्षत्रं वोत्तरनक्षत्रं वा तन्नक्षत्रं वा यदा येषु मासेषु पूर्णेन्दुसंयुतं ते मासाश्चैत्रादिमासा विज्ञेया इत्यर्थः।

---

१. **'इष्टसाधनज्ञानमेव'** इति ह.ती. ।

इत्यादौ चित्रादिपदानामिति शेषः। वस्तुयाथार्थ्ये चित्रादितारकाद्वन्द्वस्य तत्तन्मासेषु पूर्णेन्दुसंयुतत्वस्याधुनापि ज्योतिःशास्त्रसिद्धत्वादिति भावः । तज्ज्ञाने ज्ञानकर्तव्यत्वे चेत्यर्थः। उपासनावाक्येष्वपि विद्यमानानाम् आत्मादि-पदानामिति शेषः । उपासनायामुपासनाकर्तव्यत्वे । उक्तार्थे प्रमाणमाह– **उपासनाया इति** ॥ तात्पर्यमस्तीति शेषः । तेनैवकारसम्बन्धः । विधौ विधिवाक्यस्थात्मादिपदानाम्। किं तत इत्यत आह– **तस्मादिति** ॥ यस्माद् विष्णोरात्मत्वे च तात्पर्यं वर्तत इत्यर्थः । असत्यं विष्णोरात्मत्वम्। असत्यध्यानस्यानर्थहेतुत्वादिति भावः । ननु 'नाम ब्रह्मेत्युपासीत' इत्यादौ नामादीनां ब्रह्मत्वेनोपासनं श्रूयते । नच नामादीनां ब्रह्मत्वं सत्यम् । अतो सत्यस्यैव ध्यानं कर्तव्यमित्यत आह– **ध्यायेदिति** ॥ तस्य नामब्रह्मत्वसत्यता यथा येन प्रकारेण स्यात्तथा ध्यायेदित्यर्थः । नाम्नो ब्रह्मत्वं कथं सत्यं स्यादित्यत आह– **विचार्येति** ॥ नाम्नो ब्रह्मत्वं नाम न तावत्तदभेदः। प्रमाणविरोधात् । किन्तु नामादिषु ब्रह्मणः स्थितत्वमेवेति । 'नामादि-प्राणपर्यन्तमुभयोः प्रथमात्वतः । ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति। नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते।' इत्यादिभिर्बहुभिर्वाक्यैर्विचार्येत्यर्थः। विचारश्च न स्थूलदृश्वनः सम्भवतीति मतिमानित्युक्तम् । ननु तेषामपि वाक्यानां स्वार्थे तात्पर्याभावे कथं तैरुक्तार्थसिद्धिरित्यत आह– **स्वार्थवाचकै-रिति** ॥ ननु यद्यात्मादिपदानामुपासनाकर्तव्यत्वे विष्णोरात्मत्वे चेत्युभयत्रापि तात्पर्यं तर्हि कार्याङ्गीकारप्रसङ्ग इत्याशङ्कां परिहरन्नुपसंहरति– **तस्मादिति** ॥ इष्टसाधनतातिरिक्तकार्यताभावादित्यर्थः ।

**भाष्यम्—**

**[तार्किकादीनाम् आगमविरोधोऽपरिहार्यः]**

**तार्किकाणां तूक्तवचनानां प्रामाण्यं सिद्धमेव। अतस्तद्विरोधिकथनं मोहत एव ।**

**टिप्पणी—**

**अत्र तार्किका वदन्ति**– यदुक्तमीश्वरो ज्ञानानन्दादिस्वरूपोऽप्राकृतविग्रहोऽनन्तगुणपरिपूर्णश्चेति तदयुक्तम् । ईश्वरस्य स्वतोऽशरीरत्वात् । नचाशरीरात्कथं वेदघटादिशब्दव्यवहारसम्प्रदाय इति वाच्यम् । सर्गादावदृष्टोऽपगृहीतभूतभेदात् मीनशरीरोत्पत्तावदृष्टवदात्मसंयोगाद् अदृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानाद् विवक्षासहितान्मीनकण्ठताल्वादिक्रियातज्जन्यसंयोगाद्वेदोत्पत्तिः । एवं कुलालादिशरीरावच्छेदेन अदृष्टसहकृतप्रयत्नवदीश्वरसंयोगात् तद्बुद्धीच्छासहिताचेष्टोत्पत्तौ सकलघटानुकूलव्यापाराद् घटोत्पत्तिः । एवं प्रयोज्यप्रयोजकभावाभिमतशरीरद्वयावच्छेदेनादृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः । ततस्तादृशीं बालो व्युत्पद्यते । सोऽयं भूतावेशन्यायः । स च कर्तृत्वोपयुक्तैर्ज्ञानेच्छाप्रयत्नैः सङ्ख्यादिपञ्चभिश्च विशिष्ट इति शिष्टषड्गुणायोग्यः कथमनन्तगुणः स्यात्? । यच्चोक्तं मुक्तानामपि ज्ञानानन्दादितारतम्यमिति तदप्ययुक्तम् । मुक्तेरशेषविशेषगुणोच्छेदरूपत्वेन तत्र ज्ञानानन्दादेरभावात् । नचैवमपुरुषार्थत्वापत्तिः । समानाधिकरणदुःखासमानकालीनदुःखध्वंसरूपत्वेन तस्य पुरुषार्थत्वादिति । तदसत् । उदाहृतश्रुत्यादिविरोधादिति भावेनाऽह– **तार्किकाणामिति** ।। ननु यथाऽशरीरत्वाद्यङ्गीकारे उदाहृतश्रुत्यादिविरोधस्तथा सशरीरत्वाद्यङ्गीकारेऽप्यक्षपादादिवचनविरोध इति चेन्न । उभयसम्प्रतिपन्नप्रमाणाभावश्रुत्यादिविरोधेन तद्वचनस्य भ्रममूलकत्वेन अप्रामाण्यादिति भावेनाऽह– **अत इति** ।।

**भाष्यम्—**

**अनुमाया विरोधश्चेत्प्रत्यक्षेणाऽगमेन वा ।**
**सैवाप्रमाणतां गच्छेदागमद्विट् तथाऽक्षजम् ।।**
**तस्मादागम एवैको मानानामुत्तमोत्तमः ।**
**धर्मार्थकाममोक्षाणां साक्षादेव प्रदायकः ।।**

**—इति वायुप्रोक्तवचनान्नानुमानविरोधो वक्तुं युज्यते ।।**

**सर्वत्रानिवार्यत्वाच्च प्रत्यनुमानस्य।**

**निर्णयस्त्वागमेनैव नानुमाऽऽगमवर्जिता।**

**क्वचिन्निर्णीतिहेतुः स्यादतः शास्त्राद् विनिर्णयः॥ इति भारते॥**

**नच वेदात्मकेतिहासपुराणोक्तन्यायं परित्यज्य येन केनचित्क्लृप्तन्यायो युज्यते।**

**टिप्पणी—**

ननु नोदाहृतश्रुत्यादीनां यथाप्रतीतार्थत्वं वक्तुं युक्तम् अनुमानविरोधात्। तथाहि । ईश्वरोऽशरीरः अजन्यज्ञानादिमत्त्वात् व्यतिरेकेण देवदत्तवत् । नचाप्रयोजको हेतुरिति वाच्यम्। ज्ञानजन्मन्येव शरीरस्योपयोगात् । ज्ञानस्येन्द्रियजन्यत्वात्। इन्द्रियाणां च शरीरसंयोगनियमात्। अजन्यज्ञानस्य चेश्वरस्य च शरीराङ्गीकरवैयर्थ्यापातादिति। तथा देवदत्तदुःखत्वं स्वाश्रयासमान-कालीनध्वंसप्रतियोगिवृत्ति भावकार्यमात्रवृत्तिधर्मत्वात्। एतत्प्रदीपसन्ततित्व-वदिति। एवं सुखत्वादावपि साध्यम्। तेन सकलोच्छेदो मोक्षः सिद्ध्यतीत्यत आह– **अनुमाया इति**॥ प्रत्यक्षागमयोः परस्परं विरोधे किं प्रमाणमित्यत आह– **आगमेति**॥ अप्रमाणतां गच्छेदित्यन्वयः। आगमद्विट् उपजीव्या-गमविरुद्धार्थग्राहकम् । यथा 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। आविरासीद्' इत्याद्यागमबाधितं विष्णुर्दोषवानिति प्रत्यक्षम्। तस्मादितरप्रमाणापेक्षया प्राबल्यात्। प्रकारान्तरेणोत्तमत्वमुपपादयति– **धर्मार्थेति**॥ अनुमादेरप्यागमार्थनिश्चायकत्वादिना पुरुषार्थहेतुत्वादित्यत उक्तम्– **साक्षादेवेति**॥ अनुमानविरोध आगमस्येति शेषः । प्रबलप्रमाणविरोधे हि दुर्बलस्य प्रतीतार्थप्रच्यावनं कार्यम्। नचानुमानस्याऽगमात्प्राबल्यं प्रत्युतागमस्यैवानुमानापेक्षया प्राबल्यात्तद्विरुद्धमनुमानमेव न मानमिति भावः। किञ्च यदि ज्ञानोत्पत्तावेव शरीरमुपयोगीत्यजन्यज्ञानस्य शरीरानङ्गीकारस्तर्हि प्रयत्नजन्मन्येवेच्छोपयोगिनीति नित्यप्रयत्नस्येच्छाऽपि न स्यात् । तथेच्छोत्पत्तावेव ज्ञानमुपयुज्यत इति नित्येच्छस्य ज्ञानमपि न स्यात् । अथ न प्रयत्नमात्रं कर्तृत्वम् अपि

तर्हि ज्ञानेच्छे अपि । परिदृष्टसामर्थ्यकारकप्रयोक्तृत्वं कर्तृत्वमिति हि बुद्धा इति चेत् । तथाऽपीच्छात्यागे बाधकाभावात् । कुतश्चैवं कल्पनीयम्। कुलालादौ तथा दृष्टत्वादिति चेत्, किं तत्र शरीरं न दृष्टं दृष्टमप्यनुपयुक्तमिति चेत् किं नियमाभावादेवमाश्रीयते अन्यत्रोपेक्षया वा। नाऽद्यः। व्यभिचाराभावात्। शरीरप्रेरणे परं शरीरं नास्तीति चेत्, न । तेनैव शरीरित्वात् । न द्वितीयः । निरस्तत्वात् । अन्यथा ज्ञानादीनामप्यनुपयोगप्रसङ्गः । कुतश्चास्य नित्यज्ञानत्वसिद्धिः । 'क्षित्यादिकं सकर्तृकं कार्यत्वात्' इत्यनुमानस्याऽगमासहकृतस्याप्रमाणत्वात्। आगमादेव तत्सिद्ध्यङ्गीकारे चान्योन्याश्रयात् । सिद्धे ह्यागमप्रामाण्ये नित्यज्ञानेश्वरसिद्धिः तत्सिद्धौ चाऽगमस्य तत्प्रणीतत्वेन तत्प्रामाण्यसिद्धिरिति। तथा दुःखत्वमात्रस्य पक्षत्वे नित्यदुःखस्यापि सत्वेन दुःखत्वे कार्यमात्रवृत्तित्वाभावादसिद्धिः । जन्यदुःखत्वस्य पक्षत्वे तस्य स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्तित्वेऽप्यजन्यदुःखाविरोधेन मोक्षे अजन्यदुःखापातात्। क्रममुक्तेरेवाऽगमिकत्वेन युगपत्सर्वमुक्त्यभावाद् बाधश्च। देवदत्तदुःखत्वस्य पक्षत्वेऽपि देवदत्तस्य मुक्त्ययोग्यत्वेऽसिद्धिः । तस्मिन्नित्यदुःखस्यापि सत्वात्। तदीयजन्यदुःखत्वस्य पक्षत्वेऽप्यजन्यदुःखाविरोधेन तत्र तत्सत्वापातात् । नच योग्यायोग्यविभाग एवासिद्धः । 'त्रिविधा जीवसङ्घाद्या' इत्यादिप्रमाणसिद्धत्वात् । नच मुक्तियोग्यदेवदत्तदुःखत्वमेव पक्ष इति वाच्यम् । तादृशदेवदत्तदुःखत्वस्य स्वाश्रयासमानकालीनध्वंसप्रतियोगिवृत्तित्वसाधने सिद्धसाधनत्वात् । अस्माभिरपि मोक्षे दुःखासमानकालीनदुःखध्वंसस्याङ्गीकारात्। यद्वक्ष्यति 'निःशेषदुःखमोकेन सुखैकानुभवस्तु यः । मोक्ष इत्युच्यते' इति । नन्वेवं सुखत्वादावपि साध्यम् । तेन सकलोच्छेदो मोक्षः सिद्ध्यतीत्युक्तमिति चेन्न। अस्मन्मते मुक्तौ सुखज्ञानेच्छादीनामङ्गीकारेण सुखत्वादीनां कार्यमात्रवृत्तिधर्मत्वाभावेनासिद्धेः। जन्यसुखत्वादीनां पक्षत्वेऽप्यजन्यसुखादिसिद्ध्यविरोधादिति । किञ्चेश्वरस्याप्राकृतविग्रहवत्त्वादेर्मोक्षस्य ज्ञानानन्दात्मकत्वादेश्च प्रतिपादकस्याऽगमस्य प्रतीतार्थे

प्रामाण्याभावः किं केवलानुमानविरोधाद् आगममूलकानुमानविरोधाद्वा । नाऽद्यः । तस्यैव प्रतिपक्षग्रस्तत्वेनाप्रामाण्यादित्याह– **सर्वत्रेति** ॥ अत्र प्रमाणमाह– **निर्णयस्त्विति** ॥ न द्वितीयः । वेदादिरूपस्य तस्याभावात् । नन्वशरीरत्वाद्यनुमानस्य वेदाद्यागममूलकत्वाभावेऽपि अक्षपादादिप्रणीतागम-मूलकत्वमस्तीति चेन्न । वेदादियुक्तानुमानस्यैव निर्णयाङ्गत्वेन ग्राह्यतया तत्परित्यागेनाक्षपादाद्यागममूलकानुमानस्य ग्रहणायोगादित्याह– **नचेति** ॥ वेदशब्दस्याऽवृत्तिः । 'इतिहासपुराणः पञ्चमो वेदानां वेदः' इति श्रुतेर्वेदात्मकत्व-मितिहासादेः । तच्च तत्प्रामाण्योपपादनार्थम् । कुतो न युज्यत इति चेद् अक्षपादाद्यागमानां दुरागमत्वेनाप्रमाणतया तन्मूलन्यायस्याप्रामाण्यात् ॥

**भाष्यम्—**

**[सदागमदुरागमविवेकः]**

**अक्षपादकणादौ च साङ्ख्ययोगार्हतास्तथा ।**
**शिवशक्तिमहायानलोकायतपुरःसराः ॥**
**गाणपत्याश्च सौराश्च सर्वे प्रोक्ता दुरागमाः ।**
**ऋग्यजुःसामाथर्वाश्चेतिहासपुराणकौ ।**
**स्वागमा इति सम्प्रोक्ता मीमांसा धर्म एव च ॥ इति पाद्मे ॥**
**पञ्चरात्रं भारतं च मूलरामायणं तथा ।**
**इतिहास इति प्रोक्तो ब्राह्माद्यं च पुराणकम् ॥**

इति प्रकाशिकायाम् ॥

**वेदाश्चैवेतिहासाश्च पुराणं भागवतं तथा ।**
**मूलप्रमाणमुद्दिष्टं मीमांसा च तथोत्तरा ॥**
**एतेषामविरोधे तु मानमन्यदुदीरितम् ।**
**एतेषां तु विरुद्धं यदप्रमाणं विदो विदुः ॥ इति व्यासस्मृतौ ॥**
**विष्णोः सर्वोत्तमत्वस्य ज्ञानार्थं शास्त्रमिष्यते ।**
**अतस्तत्साधकं शास्त्रं दुःशास्त्रं तद्विरोधि यत् ॥ इति ब्रह्माण्डे ॥**

**विष्णोः सर्वोत्तमत्वं च तद्भक्त्या मोक्ष एव च ।**
**शास्त्रार्थ इति निर्दिष्टः सर्वशास्त्रार्थनिर्णयात् ॥ इति पाद्मे ॥**

**टिप्पणी—**

वेदाद्यागमानां तु स्वागमत्वेन प्रामाण्यात्तन्मूलकन्यायस्यैव प्रमाणत्वादिति भावेनाऽह– **अक्षपादेति** ॥ अक्षपादादिपदेन तत्प्रणीतं शास्त्रं ग्राह्यम् । धर्मो धर्मशास्त्रम् । धर्मश्चेत्यत एव स्वागमा इत्यर्थः । कौ इतिहासपुराणकावित्यत आह– **पञ्चरात्रमिति** ॥ वेदादीनामेव सदागमत्वेऽन्येषां दुरागमत्वे च प्रमाणान्तरमाह– **वेदाश्चेति** ॥ भागवतं भगवद्विषयं पुराणमित्येत एव मूलप्रमाणं मुख्यप्रमाणमित्यर्थः । उत्तरा ब्राह्मी मीमांसा च । तथा मूलप्रमाणमित्यर्थः । तर्हि मन्वादिस्मृतीनामप्रामाण्यं स्यादित्यत आह– **एतेषामिति** ॥ वेदादीनां सदागमत्वमक्षपादाद्यागमानां दुरागमत्वं च युक्त्या प्रतिपादयत्प्रमाणं पठति– **विष्णोरिति** ॥ वेदादिकं विष्णोः सर्वोत्तमत्वसाधकम् अक्षपादादिशास्त्रं तु तद्विरोधीति पक्षधर्मता च वक्तव्या । अत्रैव प्रमाणान्तरमाह– **विष्णोरिति** ॥ एवञ्चाप्राकृतशरीरेणैवेश्वरेण वेदोपदेशाद्युपपत्तौ नाप्रामाणिकभूतावेशन्यायकल्पनं युक्तमिति भावः ॥

**भाष्यम्—**

**[बौद्धमतनिराकरणम्]**

**नचाऽगमस्याप्रामाण्यं वक्तुं युक्तं तत्प्रमाणाभावात् । स्वतः प्रामाण्याच्च ।**

**टिप्पणी—**

**सौगताद्यास्तु** शब्द एव तावदप्रमाणम् । कुतस्तद्विशेषो वेदादिरिति कथं तेनोक्तार्थसिद्धिः स्यादित्याहुः । तद्दूषयति– **नचेति** ॥ कुतो न युक्तमिति चेत् । किमागमाप्रामाण्यं तत्साधकप्रमाणसद्भावाद् उत तत्प्रामाण्यसाधक-प्रमाणाभावात् । नाऽद्य इत्याह– **तदिति** ॥ तत्तत्राऽगमाप्रामाण्य इत्यर्थः । ननु प्रत्यक्षादेरेवाऽगमाप्रामाण्ये प्रमाणत्वेन तत्प्रमाणाभावो सिद्धः । मानस-

प्रत्यक्षावसेयं हि ज्ञानानामप्रामाण्यमिति चेन्न । प्रत्यक्षादेरेव प्रामाण्ये प्रमाणाभावात्। तत्प्रामाण्यं स्वत एवेति चेत्तर्हि आगमप्रामाण्यस्यापि स्वतस्त्वेन न तदप्रामाण्यमित्याह– **स्वत इति** ॥

**भाष्यम्—**

**तदनङ्गीकारे चानवस्थानात् । आगमप्रामाण्यसाधकानुमानादेरप्यागमवदप्रामाण्यप्राप्तेश्च। विशेषप्रमाणाभावात्।**

**टिप्पणी—**

प्रत्यक्षादिप्रामाण्यस्य स्वतस्त्वानङ्गीकारे बाधकमाह– **तदनङ्गीकार इति** ॥ प्रामाण्यग्राहकपरम्परानवस्थानात् । कस्यापि व्यवस्थित्यभावादित्यर्थः । न द्वितीयः । तदसिद्धेरित्याह– **स्वत इति** ॥ सर्वेषामपि ज्ञानानां यथार्थत्वलक्षणप्रामाण्यस्य ज्ञानग्राहकमात्रग्राह्यत्वं स्वतस्त्वम् । प्रत्यक्षादिकरणानां तु ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वम्। तथाचाऽगमजन्यज्ञानस्य प्रामाण्ये ज्ञानग्राहकः साक्षी। आगमप्रामाण्ये च तदीयज्ञानजनकत्वग्राहकमेव मानमिति भावः । स्वतस्त्वानङ्गीकारे बाधकमाह– **तदनङ्गीकार इति** ॥ प्रामाण्यं तावदवश्यं केनचित्प्रमाणेन ज्ञातव्यम्। अन्यथा तदभावप्रसङ्गात्। नच ज्ञानग्राहकातिरिक्तेन तद्ग्रहणं सम्भवति। तत्प्रामाण्यस्याप्यन्येन ग्रहणाङ्गीकारेऽनवस्थानात्। तस्य स्वतस्त्वे प्रथमस्यैव तथाङ्गीकारोपपत्तेः । अतः परिशेषात्स्वतस्त्वसिद्धिः। अवश्यवेद्यत्वानभ्युपगमान्नानवस्थेति चेन्न । निःशङ्कप्रवृत्तौ अवश्यवेद्यत्वात्। तथाहि ज्ञानं तावदबुभुत्सितग्राह्यतया तीव्रसंवेदनम् । ज्ञाते च तस्मिन् प्रामाण्याप्रामाण्यानुपलब्धौ कथं संशयो न स्यात्। सति प्रामाण्यसंशयेऽर्थसंशयोऽपि कथं न स्यादिति । नच साक्षिवेद्यत्वेऽप्यनवस्थापातः । साक्षी स्वप्रकाशः स्वात्मानं स्वप्रामाण्यं च गोचरयतीत्यङ्गीकारात्। ज्ञानस्यैव तथाभावोऽभ्युपगम्यतामिति चेन्न। अन्तःकरणवृत्तेर्ज्ञानस्य जडत्वेन स्वयंप्रकाशत्वायोगादिति। यदुक्तं तत्प्रमाणाभावादिति तदयुक्तम् । अनुमानस्यैव सद्भावात् । तथाहि

प्रमाकरणं हि प्रमाणम् । प्रमाकरणं च तदुच्यते यस्मिन् सति प्रमा भवत्येव नासति। सत्यपि शब्दे न प्रमा जायते। तत्कथं प्रमाणं स्यात्? किञ्च, प्रमाणं हि विषयसद्भावेन व्याप्तम् । विषयश्च द्वेधा– अपरोक्षः परोक्षश्च । तत्रापरोक्षः प्रत्यक्षसिद्धः। परोक्षस्त्वनुमानवेद्य इति विषयाभावान्न प्रमाणं शब्दः । अपिच यत्प्रमाणं तद्विज्ञानात्मकं दृष्टं यथा धूमज्ञानम्। अविज्ञानात्मा शब्दोऽतो न प्रमाणम् । एवं बाह्यकरणप्रत्यक्षत्वात् आत्मन्यनाश्रितत्वाच्च घटवत् ।

किञ्च शब्दोऽर्थेन सम्बद्धस्तं बोधयति उतासम्बद्धः। आद्ये सम्बन्धस्तादात्म्यं संयोगः समवायो वा । नाऽद्यः। वह्न्यादिशब्दोच्चारणे मुखादिदाह-प्रसङ्गात् । वर्तमानशब्दस्यातीतादिनाऽर्थेन तादात्म्येऽर्थस्य वर्तमानत्वं शब्दस्यातीतादित्वं वा स्यात् । न द्वितीयः। गुणत्वात् । द्रव्यत्वेऽपि मूर्तस्य क्रिययाऽर्थसंयोगेऽन्तरावस्थितार्थविषयत्वापत्तिः। सर्वगत्वे तु सर्वार्थ-प्रतिपादकत्वप्रसङ्गः। सर्वथाऽतीतानागतादिना संयोगानुपपत्तौ तदप्रतिपादकत्वं स्यात् । न तृतीयः । आकाशगुणस्यान्यत्र समवायायोगात्। सर्वशब्दाना-माकाशार्थतापत्तेश्च । द्रव्यस्यापि मूर्तस्यामूर्तस्य च न घटादिना समवायो युज्यते । न द्वितीयः । असम्बद्धबोधकत्वे नियामकाभावात्सर्वोऽपि सर्वं बोधयेत् । किञ्च आप्तानाप्तप्रयुक्तयोः नद्यास्तीरे पञ्चफलानि सन्तीति वाक्य-योरस्ति कश्चिद्विशेषो न वा । नाऽद्यः । अनुपलम्भात् । पुरुषविशेषोऽस्तीति चेन्न । तस्य वाक्योच्चारण एवोपक्षीणत्वेन तदुत्पाद्यज्ञानेऽनुपयोगात् । द्वितीये तु कथमेकस्य संवादो परस्य विसंवादः । अतः सम्भावनामात्रेण शब्दात् कृष्यादाविव प्रवृत्तिरित्यत आह– **आगमेति** ।। आगमाप्रामाण्यसाधके-त्यनुमानविशेषणम्। एतच्च प्रकृतानुमानाभिप्रायेणैव। वस्तुतस्तु अनुमानादेरित्येव वक्तव्यम् । विशेषणकृत्यं तूत्तरत्र वक्ष्यते । आदिशब्देन प्रत्यक्षम् । यदि सत्यपि शब्दे प्रमानुदयादप्रमाणं शब्दस्तर्हि सत्यपि चक्षुषि रूपज्ञानानुत्पत्तेः सत्यपि धूमेऽग्निज्ञानानुदयात् आगमवत्प्रत्यक्षानुमानयोरप्यप्रामाण्यं स्यात् ।

प्रमाजनकत्वाभावाविशेषेऽपि प्रत्यक्षानुमानयोः प्रामाण्यमागमस्याप्रामाण्यमित्यत्र विशेषप्रमाणाभावात् । यदुक्तं विषयाभावान्न शब्दः प्रमाणमिति तदयुक्तम् । तथा सत्यागमवत् चाक्षुषप्रत्यक्षस्याप्रामाण्यप्रसङ्गात् । तस्यापि हि परोक्षोऽपरोक्षो वा विषयः । नाऽद्यः । तस्यानुमानविषयत्वात् । न द्वितीयः । तस्य श्रोत्रादिविषयत्वाद् इति वक्तुं शक्यत्वात् । विषयाभावाविशेषेऽपि चाक्षुषप्रत्यक्षस्य प्रामाण्यम् आगमस्याप्रामाण्यमित्यत्र विशेषप्रमाणाभावात् । यच्चोक्तम् अविज्ञानात्मकत्वाच्छब्दो न प्रमाणमिति तदपि न । तथा सत्यविज्ञानात्मकस्येन्द्रियस्य सन्निकर्षस्य वा प्रत्यक्षस्य धूमाद्यनुमानस्य चाऽगमवदप्रामाण्यप्रसङ्गात् । अविज्ञानात्मकत्वाविशेषेऽपि प्रत्यक्षानुमानयोः प्रामाण्यमागमस्याप्रामाण्यमित्यत्र विशेषप्रमाणाभावात् । यदपि बाह्यकरणप्रत्यक्षत्वादात्मन्यसमवेतत्वाच्छब्दो न प्रमाणमिति तन्न । तथा सति बाह्यकरणप्रत्यक्षस्य धूमाऽनुमानस्यात्मन्यसमवेतस्य प्रत्यक्षस्यानुमानस्य चाऽगमवदप्रामाण्यप्रसङ्गात् । तथात्वाविशेषेऽपि प्रत्यक्षादेः प्रामाण्यमागमस्याप्रामाण्यमित्यत्र विशेषप्रमाणाभावात् । यच्चोक्तं शब्दस्यार्थेन सम्बन्धोऽस्ति न वेत्यादि तन्न । तथा सत्यागमवदनुमानस्याप्यप्रामाण्य-प्रसङ्गात् । लिङ्गस्य धूमादेरसम्बद्धग्राहकत्वेऽतिप्रसङ्गात् । संयोगादे-रव्याप्त्यतिव्याप्त्यादिनाऽसम्भवात् । प्रसिद्धसम्बन्धाभावाविशेषेऽपि अनुमानस्य प्रामाण्यमागमस्याप्रामाण्यमित्यत्र विशेषप्रमाणाभावात् । यत्पुनरुक्तमाप्तानाप्त-प्रयुक्तयोरित्यादि तदप्यसारम् । आगमतवत् प्रत्यक्षानुमानयोरप्यप्रामाण्य-प्रसङ्गात् । यथार्थायथार्थयोः प्रत्यक्षयोरनुमानागमयोश्च विशेषोऽस्ति न वा । नाऽद्योऽनुपलम्भात् । न द्वितीयः । एकस्य संवादोऽपरस्य विसंवादः इत्यस्या-नुपपत्तेरिति वक्तुं शक्यत्वात् । न्यायसाम्येऽपि प्रत्यक्षादेः प्रामाण्यमागमस्या-प्रामाण्यमित्यत्र विशेषप्रमाणाभावादिति । अस्तु प्रत्यक्षादेरप्रामाण्यमिति चेन्न । अपसिद्धान्तापातात् । किञ्चानुमानाप्रामाण्ये आगमाप्रामाण्यसाधका-नुमानस्याप्यप्रामाण्यापत्त्या प्रमाणाऽभावेनागमप्रामाण्यासिद्धिः स्यात् । अत एवानुमानादेरित्येव वक्तव्ये आगमाप्रामाण्यसाधकेत्युक्तम् ॥

**भाष्यम्—**

**स्वीकृतत्वाच्च तैरपि स्वागमप्रामाण्यस्य। नह्यनुमानादिना सप्तमल-धारणचैत्यवन्दनादेः स्वर्गसाधनत्वं ज्ञातुं शक्यम्।**

**टिप्पणी—**

शब्दस्याप्रामाण्याङ्गीकारे स्वव्याहतिं चाऽह– **स्वीकृतत्वाच्चेति**।। नागमस्या-प्रामाण्यमित्यनेन सम्बन्धः । पूर्वोक्तहेतुसमुच्चयार्थश्चशब्दः । तैरपि आगमाप्रामाण्यवादिभिरपीति व्याहतिस्फोरणार्थम् । ननु तैरपि न स्वागमस्य प्रामाण्यमङ्गीक्रियते। किन्नाम? सम्भावनामात्रेण शब्दात्कृष्यादाविव प्रवृत्तिः। संवादेन च प्रामाण्याभिमानः। नचैवं तदुक्तार्थासिद्धिप्रसङ्गः। अनुमानदिनैव तत्सिद्धेरित्यत आह– **नहीति**।। स्वर्गस्याप्रत्यक्षत्वेन तत्प्रत्यन्वयव्यतिरेकयो-दुर्ग्रहत्वादिति भावः। देवदत्तशरीरादिकं देवदत्तविशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वात् । देवदत्तप्रयत्नजन्यवस्तुवदित्यनुमानादिना अदृष्टस्वरूपमात्रसिद्धावपि न साधनफलसम्बन्धरूपस्तद्विशेषोऽनुमानादिगोचरः। ततस्तत्साधकत्वेन स्वागमस्य प्रामाण्यं स्वीकार्यमिति भावः ।।

**भाष्यम्—**

**नच प्रत्यक्षमात्रप्रामाण्यवादिनस्तत्सिद्धमागमाप्रामाण्यम्।**

**टिप्पणी—**

किञ्च यदि स्वोक्तार्थे प्रमाणान्तरसंवादस्तर्हि अविसंवादिविज्ञानं प्रमाणमिति वदद्भिः स्वागमस्य प्रामाण्यमङ्गीकृतमेवेत्यनुमानप्रामाण्यवादिना सौगतेनाऽगम-प्रामाण्यं कथञ्चित् सम्भावयितुं शक्यते। तथाविधानुमानाभासोत्प्रेक्षासम्भवात्। तदप्रामाण्यवादिना चार्वाकेण तु तत्सम्भावयितुं अप्यशक्यमित्याह– **नचेति**।। तत्सिद्धं प्रत्यक्षसिद्धम्। अयथार्थज्ञानजनकत्वरूपाप्रामाण्यस्याप्रत्यक्षत्वादिति भावः ।।

**भाष्यम्—**

**अतस्तेषां प्रत्यक्षवदनुमानवच्चाङ्गीकर्तव्यमागमप्रामाण्यम्।**

**टिप्पणी—**

आगमप्रामाण्ये प्रमाणान्तरं सूचयन् नचाऽगमस्येत्यादिनोक्तमुपसंहरति– **अत इति** ।। चशब्द उक्तसमुच्चयस्यानुक्तसमुच्चयस्य च द्योतकः । तथाहि शब्दाज्ज्ञानमुत्पद्यते न वा । नेति पक्षे अनुभवविरोधः । स्वक्रियाविरोधश्च । न शब्दोऽर्थप्रत्यायक इति ब्रूते परप्रत्ययनार्थं शब्दमेव प्रयुङ्क्ते इति । आद्ये स बोधः संशयो विपर्ययो वा । नाऽद्यः । एकाकारनियतत्वात् । न द्वितीयः । बाधबोधविरहात् । सर्वत्रापि बाधाभ्युपगमे स्वप्रयुक्तवाक्यस्य तद्भावाभावयोः स्वव्याघातात् । एवं व्यवस्थिते प्रयुज्यते । शब्दः प्रमाणं संशयविपर्ययाजनकत्वे सति ज्ञानजनकत्वात् । प्रत्यक्षादिवदिति । नहि प्रत्यक्षादेरन्यत्प्रामाण्ये नियामकमस्ति । नन्विदमेव प्रामाण्यमिति साध्याविशिष्टता । मैवम् । निर्दोषज्ञानसाधनं मानमिति वक्ष्यमाणत्वात् । ननु शब्दो न प्रमाणम् आकाशगुणत्वात् । तत्परिमाणवदिति सत्प्रतिपक्ष इति चेन्न । असिद्धेः । वर्णात्मा हि शब्दः प्रमाणम् । नचासावाकाशगुणस्तत्वविदाम् । अत्र प्रत्यक्षवदित्यादिर्व्यतिरेकदृष्टान्तः । यथा प्रत्यक्षादेर्नाऽकाशगुणत्वं तथा शब्दस्यापीति नास्य प्रामाण्यं विहन्यत इति । यद्वा, आगमाप्रामाण्यसाधकेत्यनेनोक्तस्य तर्कस्य विपर्यये पर्यवसानं सूचयन्नचाऽगमस्येत्यादिनोक्तमुपसंहरति– **अत इति** ।। ननु यदुक्तं प्रमाजनकत्वाभावविशेषादागमवत् प्रत्यक्षानुमानयोरप्यप्रामाण्यं स्यादिति तन्न । स्यादेवं यदीन्द्रियमात्रं प्रत्यक्षं धूमादिमात्रमनुमानं स्यात् । नचैवम् । किन्नाम? अन्तःकरणाधिष्ठितं विषयसन्निकृष्टमिन्द्रियं प्रत्यक्षम् । व्याप्तिपक्षधर्मतावत्त्वेनानुसंहितं लिङ्गमनुमानमित्यभ्युपगमात् । नच तस्मिन् सति न प्रमोत्पद्यत इति चेत् । तर्हि वयमपि ब्रूमो न शब्दमात्रं प्रमाणम् । किन्तु श्रुतोऽनुस्मृतसम्बन्धश्च । नचैवंविधशब्दे सति न प्रमोत्पद्यते । तथाच शब्दमात्रपक्षीकरणे सिद्धसाधनम् ।

विशिष्टपक्षीकरणे चासिद्धिरिति । तदिदमुक्तम्– **प्रत्यक्षवदनुमानवच्चेति** ॥ अथ यदुक्तं विषयाभावाविशेषादागमवत् चाक्षुषप्रत्यक्षस्याप्रामाण्यमिति । तदयुक्तम्। रूपादेर्विषयस्य चापरोक्षत्वेऽपि श्रोत्राद्यविषयत्वात्तत्र चक्षुषः प्रामाण्यस्य युक्तत्वादिति चेन्न । शब्देऽप्यस्य समानत्वात् । अस्ति च परोक्षोऽपि स तादृशः कश्चिद्विषयो यो नानुमानस्य विषयः । एतदप्युक्तम्– **प्रत्यक्षवदिति** ॥ प्रत्यक्षविशेषवदित्यर्थः। किञ्चैवं विषयविकल्पेन शब्दनिराकरणे शब्दमुपादायानुमानमपाकुर्वन्तं प्रति किं वक्तव्यम्। अनुमानाप्रामाण्ये सकल-लोकव्यवहारोच्छेदप्रसङ्गात् । परचित्तवृत्त्याद्यसङ्कीर्णविषयदर्शनात् परोक्ष-विषयत्वेऽपि शब्दाद्भिन्नं तदङ्गीकरणीयमिति वाच्यमिति चेत्सममेतच्छब्देऽपि । एतदप्याह– **अनुमानवदिति** ॥ नन्वविज्ञानात्मकत्वाविशेषादागम-वदनुमानस्याप्रामाण्यमिति यदुक्तं तन्न । धूमादिज्ञानस्यैवानुमानत्वेन धूमादि-मात्रस्यानुमानत्वाभावात् । यथोक्तम्– लिङ्गपरामर्शोऽनुमानमितीति चेत्तर्हि शब्दमात्रं न प्रमाणम्। किन्तु तज्ज्ञानमेवेत्यसिद्धिः । एतदप्याह– **अनुमान-वदिति** ॥ ननु बाह्यकरणप्रत्यक्षत्वाविशेषाद् आत्मन्यसमवेतत्वाविशेषाच्च आगमवदनुमानस्याप्यप्रामाण्यं स्यादिति यदुक्तं तन्न। धूमादिज्ञानस्यैवानुमानत्वेन धूमादिमात्रस्याप्यनुमानत्वाभावाद् इति चेत्तर्हि शब्दमात्रं न प्रमाणम् । किन्तु तज्ज्ञानमेवेत्यसिद्धिः । इदमप्याह– **अनुमानवदिति** ॥ किञ्च यथा आत्मन्यसमवेतमपीन्द्रियम् इन्द्रियसन्निकर्षो वा प्रत्यक्षं प्रमाणं तथा शब्दोऽपि प्रमाणं भविष्यतीति काऽनुपपत्तिः? एतदप्युवाच– **प्रत्यक्षवदिति** ॥ अथ प्रसिद्धसम्बन्धाभावाविशेषात् आगमवदनुमानस्याप्यप्रामाण्यमिति यदुक्तं तन्न । प्रसिद्धसम्बन्धाभावेऽपि लिङ्गस्य लिङ्गिना व्याप्तिलक्षणसम्बन्धसत्त्वादिति चेत्तर्हि शब्दस्याप्यर्थेन वाच्यवाचकभावलक्षणसम्बन्धसत्वाद् उक्तदोषानवकाश इति तदप्याह– **अनुमानवदिति** ॥ ननु यदुक्तं यथार्थायथार्थयोः प्रत्यक्षयोरनुमानयोश्च विशेषोऽस्ति नवेति तत्राप्यस्त्येव दोषसदसद्भावकृतो विशेष इति चेन्न। शब्देऽप्याप्तानाप्तवक्तृसदसद्भावाभ्यां विशेषोपपत्तेः । वक्ता वाक्योच्चारण

एवोपयुक्त इति चेत् । यतस्तदेवाविषये प्रयुञ्जानो दुष्टं करोति । निशातं असिम् आकाशे प्रयुञ्जान इव । अन्यथाऽनुमानमप्यप्रमाणं स्यात् । कृतकत्वं हि शब्दनित्यत्वसाधने साधु । असाधु चाग्न्यनुष्णत्वसाधने । तत्कस्माद् विशेषात् । व्याप्तिपक्षधर्मताभावाभावाभ्याम् इति चेत्कालातीतत्वस्य पृथग्दूषणत्वाभावापातात् । ततो विषयवृत्तित्वतदभावरूप एव विशेषो वक्तव्यः । सच समानः शब्देऽपीति । तदिदमुक्तम्– **प्रत्यक्षवदनुमानवच्चेति** ॥

**भाष्यम्—**

**उक्तं च भविष्यत्पुराणे—**

**येनोक्तमागमाऽमात्वं कुतस्तदिति तं वदेत् ।**
**प्रत्यक्षादेर्यदि ब्रूयात्तन्मात्वं केति तं वदेत् ॥**
**तत्स्वतश्चेदागमस्य प्रामाण्यं न स्वतः कुतः ।**
**परतश्चेत्प्रमाणस्य न कस्यापि स्थितिर्भवेत् ।**
**अङ्गीकृतं च प्रामाण्यं सर्वैरप्यागमस्य तु ॥**
**यतः स्वपक्षप्रामाण्यं विरोधेऽप्यक्षजादिना ।**
**अङ्गीकुर्वन्ति तत्पक्षः प्रत्यक्षादिविरोधकः ॥**

**टिप्पणी—**

उक्तयुक्तीनाम् उत्प्रेक्षामूलकत्वशङ्कानिरासायोक्तार्थे प्रमाणमाह– **उक्तश्चेति** ॥ न केवलमस्माभिरेवोक्तं किन्तु भविष्यत्पर्वणि चोक्तमित्यर्थः । ननु आगमाप्रामाण्यवादिनां प्रति कथं तत्प्रामाण्यसाधनायाऽगमोपन्यासः । अन्योन्याश्रयादिति चेन्न । युक्तिभिरागमप्रामाण्यस्य साधितत्वात् । आगमस्य च दार्ढ्यार्थमुदाहरणात् । यद्वा शिष्यापेक्षया अयमुपन्यास इति न दोषः । कुतः प्रमाणात् । तथाच प्रमाणाभावात् नाऽगमामात्वमिति भावः । प्रत्यक्षादेरित्यनन्तरमिति शब्दोऽनुवर्तनीयः । आदिपदेनानुमानम् । क्व केन मानेन । प्रामाण्यग्राहकपरम्पराया अवस्थित्यभावेन कस्यापि प्रामाण्यस्य

स्थितिर्न भवेदित्यर्थः। स्वव्याहतिमप्याह– **अङ्गीकृतं चेति**॥ बौद्धादिभिरेवाऽगमस्य प्रामाण्यानङ्गीकारात् कथं सर्वैरित्युक्तमित्यत आह– **यत इति** ॥ ननु तर्ह्यागमाप्रामाण्ये स एवाऽगमो मानं स्यात् । तत्राऽगमाप्रामाण्यस्य कथित्वादिति चेन्न । स्वव्याहतत्वात्। वेदाद्यागमाप्रामाण्ये स्वयं मानमिति चेन्न । प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वेन तेषां वस्तुतोऽप्रामाण्यात् । तर्हि प्रत्यक्षादिविरुद्धार्थप्रतिपादकस्याऽगमप्रामाण्यं कथमङ्गीकुर्वन्तीत्यत उक्तम्– **विरोधेऽप्यक्षजादिनेति** ॥ आग्रहमूलकस्तदङ्गीकार इति भावः । ननु सति प्रत्यक्षादिविरोधे स्वपक्षप्रामाण्याभ्युपगम आग्रहमूलकः। वस्तुतश्चाप्रमाणमिति स्यात् । स एव कुत इत्यतस्तदुपपादयितुं प्रतिजानीते– **तत्पक्ष इति**॥ प्रत्यक्षादि विरोधकं यस्य सः प्रत्यक्षादिविरोधकः । आदिपदेनानुमानम्॥

**भाष्यम्——**

**[बौद्धादीनां प्रत्यक्षागमविरोधः]**

**शून्यता क्षणिकत्वं च ज्ञानमात्रत्वमेव च।**
**भावाभावात्मता साकं शरीरात्मत्वमेव च॥**
**प्रत्यक्षेण विरुध्यन्ते मद्देह इति दर्शनात्।**
**भावरूपस्थिरत्वादेः ज्ञानाद् भेदस्य दर्शनात्।**
**देहभेदो यद्यमुख्यो देहैक्ये मुख्यता कुतः॥**
**जातिस्मृतिप्रमाणाच्च न युक्ता देहरूपता।**
**अनुष्ठाय च शास्त्रार्थं फलभोगस्य दर्शनात्॥**

**टिप्पणी——**

प्रत्यक्षविरोधं तावदुपपादयति– **शून्यतेति** ॥ असत्वमित्यर्थः । जगत इति शेषः। साकं भावाभावात्मतेति स्याद्वादिमतम् । भावात्मतासत्वमभावात्मताऽसत्वम्। भावाभावात्मता सदसत्वमित्यर्थः। उपलक्षणमेतत्। सदसद्वैलक्षण्यं सत्वे सति सद्वैलक्षण्यम् असत्वे सत्यसद्वैलक्षण्यं सदसत्वे सति सदसद्वैलक्षण्यमित्यपि ग्राह्यम्। साकं युगपदित्यर्थः। सदसद्वैलक्षण्यादिपक्षचतुष्टयेन

साकं भावाभावात्मतेति वा । शरीरात्मत्वमेवेति चार्वाकमतम् । भेदाभेदनिवृत्त्यर्थमेवकारः। शरीरात्मत्वविरोधिप्रत्यक्षमाह– **मद्देह इति** ॥ शून्यताक्षणिकत्वभावाभावात्मताविरोधिप्रत्यक्षमाह– **भावरूपेति** ॥ भावरूपं सत्वम्। आदिपदेन केषाञ्चित् सत्वस्यैव केषाञ्चिदसत्वस्य केषाञ्चिद्देशकालादिभेदेन सदसत्वस्य ग्रहणम्। ज्ञानमात्रत्वविरोधिप्रत्यक्षमाह– **ज्ञानाद् भेदस्येति** ॥ घटादेरिति शेषः । घटं जानामीति ज्ञानाद्भेदेनार्थस्य दर्शनादित्यर्थः । ज्ञानार्थयोः क्षणिकत्वस्थायित्वोपलम्भादिति वाऽर्थः । यदुक्तं शरीरात्मत्वं मद्देह इति प्रत्यक्षविरुद्धमिति तदसत् । भेदप्रतीत्यसम्प्रतिपत्तेः । 'मम देह' इति व्यवहारस्य 'मम स्वरूपम्' इतिवदौपचारिकत्वोपपत्तेरित्याशङ्क्याऽह– **देहेति** ॥ देहभेदो देहात्मभेदव्यवहारः। स्यादेव देहात्मभेदव्यवहारस्यामुख्यत्वम्। यदि देहात्मैक्ये किञ्चित्प्रमाणं स्यात्। नच तदस्ति। कस्यापि देहोऽहमिति प्रतीत्यभावात् । देहात्मत्वप्रतीत्यभावेऽपि देहधर्माणां कार्ष्ण्यादीनाम् आत्मनिष्ठत्वप्रतीतिस्तावदस्त्येव। कृष्णोऽहमिति व्यवहारदर्शनाद् इति चेन्न। कर्दमलिप्ते वस्त्रे कृष्णं वस्त्रमित्यादिव्यवहारवत्तस्यौपचारिकत्वोपपत्तौ देहात्मैक्यव्यवहारे मुख्यत्वाभावादिति भावः । ननु देहात्मभेदव्यवहारस्य मुख्यत्वमभ्युपेत्य तदभेदव्यवहारस्यामुख्यत्वं वा कल्प्यम् । अथ देहात्मैक्यव्यवहारस्य मुख्यत्वमभ्युपेत्य तद्भेदव्यवहारस्यामुख्यत्वं वा । विशेषप्रमाणाभावादिति चेन्न। मद्देह इति दर्शनादिति देहात्मभेदे प्रत्यक्षस्योक्तत्वात्। प्रमाणान्तरं चाऽह– **जातिस्मृतीति** ॥ आत्मनो देहरूपत्वे साधनविशेषात्पूर्वजातिस्मृतिर्न स्यात् । पूर्वदेहहानौ तदात्मनो नष्टत्वात् । अस्य ततोऽन्यत्वात्। नह्येकस्यानुभवोऽपरस्य स्मृतिरिति युज्यत इति भावः । विप्रतिपन्ना जातिस्मृतिः स्वजनकानुभवसमानाधिकरणा स्मृतित्वात्सम्प्रतिपन्नस्मृतिवद् इति प्रयोगोऽभिहितः । आत्मनो देहरूपत्वाभावे प्रमाणान्तरमाह– **अनुष्ठायेति** ॥ भोगोपक्षयानुष्ठानस्य समानकर्तृत्वं 'स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् । सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्' इत्यादिशास्त्रार्थं

देवतार्चनादिकमेकस्मिन् जन्मन्यनुष्ठाय जन्मान्तरे स्वर्गसम्पदादिफलभोगस्य प्रमाणेन दर्शनान्न युक्ता देहरूपता । नह्येकस्य सम्पूर्णसाधनानुष्ठानमन्यस्य फलभोगः । कृतविप्रणाशाकृताभ्यागमप्रसङ्गादिति भावः । अत्रापि विप्रतिपन्नः फलभोगः साधनानुष्ठातृनिष्ठः फलभोगत्वात् सम्प्रतिपन्नफलभोगवदिति प्रयोगोऽभिमतः । तथाच देहात्मभेदसाधकैतत्प्रमाणानुरोधेन देहात्मैक्यव्यवहार एवौपचारिकोऽभ्युपगन्तव्य इति तात्पर्यम् । एतेन देहात्मभेदमङ्गीकुर्वाणा अपि तत्तद्देहनाशे तत्तद्देहपरिमाणकस्याऽत्मनोऽपि नाशावश्यम्भावात् पूर्वोत्तर-देहगतात्मनोः भेदमङ्गीकुर्वन्तोऽपि परास्ताः । उक्तप्रमाणद्वयेन पूर्वोत्तरदेहानुस्यूतस्यै-कस्यैवाऽत्मनः सिद्धेरिति । यद्वा तत्पक्षः प्रत्यक्षादिविरोधक इत्युक्तम् । तत्र शून्यतेत्यादिना प्रत्यक्षविरोधमुपपाद्येदानीमुपलक्षणत्वेन शरीरात्मत्वस्यानु-मानविरुद्धत्वमाह– **जातिस्मृतीति** ।। चशब्दः प्रत्यक्षसमुच्चायकः । अनुमानप्रामाण्यं तेनाङ्गीकारयित्वा इदमुपन्यस्तमिति न कश्चिद्दोषः । एवं ‘सन् घटस्तदेवेदम्’ इति प्रत्यक्षस्यापि बाधकाभावेन भ्रान्तत्वमुपपादनीयम् । एवं तत्पक्षेऽनुमान-विरोधोऽप्युपादनीयः ।।

**भाष्यम्—**

**प्रत्यक्षादेर्विरुद्धत्वात्सौगताद्या दुरागमाः ।**
**बह्वागमविरोधाच्च दुष्टत्वं तेषु संस्थितम् ।।**
**प्रामाण्यं स्वीकृतं यैस्तु वेदानामागमा हि ते ।**
**शतकोट्यः पञ्चरात्रं पुराणं तावदेव च ।।**
**रामस्य चरितं तावत्तावदन्यच्च सर्वशः ।**
**अनन्ताश्च तथा वेदाः साङ्गोपाङ्गाश्च सर्वशः ।।**
**सर्वाधिक्यं यत्र विष्णोस्तात्पर्यात्समुदीर्यते ।**
**विंशदेव सहस्राणि श्लोकानां समुदीरितम् ।।**
**बार्हस्पत्यं तथा बौद्धं भावाभावमतं तथा ।**

**शिवशक्त्यादिकं यच्च किञ्चित्प्रामाण्यसंयुतम् ॥**
**त्रिंशत्कोट्येव तत्सर्वमतो मानं न तत्स्मृतम् ॥**

**टिप्पणी—**

अस्तु तत्पक्षः प्रत्यक्षादिविरोधकः किं तत इत्यत आह– **प्रत्यक्षादेरिति** ॥ सौगताद्याः सौगताद्यागमाः । न केवलं प्रत्यक्षानुमानविरुद्धत्वाद्दुरागमाः किन्त्वागमविरुद्धत्वाच्चेत्याह– **बह्विति** ॥ ननु तेषामप्यागमत्वात् कथमेतद्विरुद्धत्वेन दुष्टत्वं तेष्वित्यत उक्तम्– **बह्विति** ॥ ननु सौगताद्यागमानां कथं बह्वागमविरोधः? तदागमविरुद्धत्वाभावात्तेषामित्यत आह– **प्रामाण्यमिति** ॥ यैः शास्त्रैर्वेदानां प्रामाण्यं स्वीकृतं ते आगमाः । हिशब्दस्तत्र प्रमाणप्रसिद्धिद्योतकः । बौद्धाद्यागमास्तु वेदाप्रामाण्यप्रतिपादका इति नाऽगमा इति भावः । कानि तानि स्वीकृतवेदप्रामाण्यानि शास्त्राणि कथं च तेषां बहुत्वमित्यत आह– **शतकोट्य इति** ॥ अन्यत् स्मृत्यादिकम् । अस्तु पञ्चरात्रादीनां बहुत्वं तद्विरोधः कथं बौद्धाद्यागमानामित्यतो विरुद्धविषयत्वादित्यभिप्रेत्य पञ्चरात्रादि-प्रतिपाद्यमाह– **सर्वेति** ॥ यद्वा अक्षपादाद्यागमैर्वेदप्रामाण्यं स्वीकृतमिति तेषामागमरूपमानत्वं स्यादित्यत आह– **सर्वेति** ॥ यत्रेत्यस्याऽगमा हि त इति पूर्वेण सम्बन्धः । प्रायिकत्वाभिप्रायेण प्राचीनमागमलक्षणम् । अत एव वक्ष्यति किञ्चित्प्रामाण्यसंयुतमितीति भावः । स्वागमस्य बहुत्वमुक्त्वा इतरागमस्याल्पत्वमाह– **विंशदेवेति** ॥ तथाशब्दद्वयस्य श्लोकानां विंशदेव सहस्राणीत्यर्थः । किन्तत इत्यत आह– **अत इति** ॥ बहुमानविरुद्धत्वादित्यर्थः । तत् बौद्धादिशास्त्रम् ॥

**भाष्यम्—**

**[प्रमाणेषु वेदस्य श्रेष्ठत्वम्]**

**बहुमानविरुद्धं यन्न तन्मानं विदो विदुः ।**
**गुणसाम्येऽपि किमुत गुणाधिकविरोधि यत् ॥**

**यथा बहूनां ज्ञानानां समानां गुणतोऽपि च ।**
**विरोध्येकं तु यज्ज्ञानं न मानत्वं गमिष्यति ॥**
**प्रत्यक्षादौ हि बहुभिः समैरेकमपोद्यते ।**
**तस्माद् वेदाः प्रमाणं स्युर्बाहुल्यादेव किं पुनः ॥**

**टिप्पणी**—

तत्र व्याप्तिग्राहकं दर्शयति– **बहुमानेति** ॥ अनेन व्याप्तौ ज्ञानिनां ज्ञानमेव प्रमाणमित्युक्तं भवति । ननु पञ्चरात्रादिविरोधेन सौगताद्यागामाप्रामाण्ये एतद्विरोधेन तदप्रामाण्यमेव किं न स्यात्। उभयोरप्यागमत्वादिगुणसाम्यादित्यत उक्तम्– **गुणसाम्येऽपीति** ॥ यथोक्तगुणसाम्येऽपि पञ्चरात्रादीनां बहुत्वेन प्रबलत्वात् तद्विरोधेन सौगताद्यागमानामेवाप्रामाण्यं वक्तव्यमिति भावः । अभ्युपगम्य चेदमुक्तम् । वस्तुतस्तु गुणसाम्यमेव नास्ति । पञ्चरात्रादीनां नितरां सर्वज्ञैर्विष्ण्वादिभिः प्रणीतत्वेन वेदानुसारित्वेन च वेदानां चापौरुषेयत्वेनादोषतया गुणाधिकत्वात् । एतेषां च तदभावात् । तथाच विप्रतिपन्नं शास्त्रं न मानं गुणाधिकविरोधित्वादित्यभिप्रेत्य तत्र कैमुत्येन व्याप्तिमुपपादयति– **गुणाधिकेति** ॥ यदा गुणसाम्येऽपि यद् बहुमानविरुद्धं तन्न मानम् । तदा यद्गुणाधिकविरोधि तन्मानं नेति किमु वक्तव्यमिति विदो विदुरित्यन्वयः । बहुत्वप्रयुक्तप्राबल्यापेक्षया स्वभावप्रयुक्तप्राबल्यस्य बलवत्त्वादिति भावः । अत्रापि व्याप्तौ ज्ञानिनां ज्ञानमेव प्रमाणमित्युक्तं भवति । तथाप्यस्माकं कथं व्याप्तिसिद्धिरित्यतोऽनुमानद्वयेऽपि दृष्टान्तमाह– **यथेति** ॥ ज्ञानत्वादिगुणतः समानानामपि निर्दोषज्ञानविरोधि सदोषज्ञानं यथेति । द्वितीयानुमानदृष्टान्तसमुच्चयार्थश्चशब्दः । यथेत्युक्तमेव व्यक्तिविशेषनिष्ठतयोपपादयति– **प्रत्यक्षादाविति** ॥ आदिशब्देनानुमानशब्दयोर्ग्रहणम् । यथेदं रजतमिति प्रत्यक्षं नेदं रजतमिति प्रत्यक्षेण दाहच्छेदादिलिङ्गेन तथाविधाप्तवाक्येन च विरुद्धम् अप्रामाणं, यथा वा 'विमतं मिथ्या दृश्यत्वात्' इत्यनुमानं सदिति प्रत्यक्षेण प्रमाणदृष्टत्वाद्यनुमानेन 'विश्वं सत्यम्' इत्याद्यागमेन च विरुद्धमप्रमाणं,

यथा वेदं रजतमिति भ्रान्तवाक्यं वा प्रपञ्चो मिथ्येति मायावादिवाक्यं वोक्तप्रमाणत्रयविरुद्धममानमिति। एवं सौगताद्यागमानां प्रत्यक्षादिविरुद्धार्थत्वेन वस्तुतोऽप्रामाण्यान्न तैर्वेदाद्यागमाप्रामाण्यसिद्धिरित्युक्तम् । न केवलं वेदाद्यागमाप्रामाण्ये प्रमाणाभावः किन्तु तत्प्रामाण्ये प्रमाणं चास्तीत्याह– **तस्मादिति** ।। आगमाप्रामाण्यसाधकशास्त्राणाममानत्वादित्यर्थः। परस्परविरोधिज्ञानानां मध्ये बहूनामेव प्रामाण्यदर्शनादिति भावः । एवशब्देन गुणाधिक्याभावेऽपीति सूचयति । कैमुत्येनापि तत्साधयति– **किं पुनरिति** ।। वाक्याप्रामाण्यं हि वक्तृदोषनिबन्धनम् । वेदस्य चापौरुषेयत्वेन तदभावः सिद्धः । तथाच वेदो नाप्रमाणं अप्रामाण्यकारणदोषशून्यत्वात् प्रत्यक्षादिवत् । तथाच ज्ञानकरणस्याप्रामाण्याभावे प्रामाण्यमेव सिद्धमिति भावः । पञ्चरात्रादेस्तदनुसारित्वेन प्रामाण्यसिद्धिरिति भावः ।।

**भाष्यम्—**

> **अदोषत्वाद् गुणाच्चैव बलवत्कार्यसाधनात्।**
> **वेदोक्तकर्मयुक्तानां तथा सिद्धिमतामपि ।।**
> **वेदबाह्यक्रियायोगान्न बाधः क्वापि दृश्यते ।**
> **वेदोक्तकर्मसिद्धानां न बाध्यं दृश्यते क्वचित् ।।**
> **असाध्यं वा ततो वेदाः प्रामाण्यं निश्चयाद् गताः ।। इति ।।**

**टिप्पणी—**

एवं यदाऽदोषत्वाख्यगुणादेव वेदाः प्रमाणं किं पुनर्हेत्वन्तरादिति भावेनाऽऽह– **बलवदिति** ।। चशब्दोऽत्रापि सम्बद्ध्यते। तदेवोपपादयति– **वेदोक्तेति** ।। वेदबाह्यानामाभिचारक्रियासम्बन्धाद् वेदोक्तकर्मयुक्तानां भविष्यत्फलस्य तथासिद्धिमतामपि सिद्धिफलस्य बाधो नास्तीत्यर्थः। ननु वेदोक्ताभिचारक्रियायोगेन वेदबाह्यकर्मसिद्धानामपि बाधाभावे साम्यं स्यादित्याशङ्कापरिहाराय उक्तमनुवदन्नधिकमप्याह– **वेदेति** ।। उक्तशङ्कापरिहारः– **असाध्यं वेति** ।। वेदोक्तकर्मानु-

ष्ठानेऽपि क्वचिद् दृष्टफलानुपलम्भस्तु कर्तृकरणादिवैगुण्यनिबन्धन एवेति भावः। ततो बलवत्कार्यसाधनात्। ननु कथमत्र प्रयोगः। वेदाः प्रमाणं बलवत्कार्यसाधनत्वादित्यत्र दृष्टान्ताभावेन व्याप्त्यभावात्। अप्रयोजकत्वाच्चेति चेन्न। वेदाः स्वविरुद्धशास्त्रापेक्षया बलवन्तः तदपेक्षया बलवत्कार्यसाधनत्वात्। यद्यतो बलवत्कार्यसाधनं तत्ततो बलवदिति सामान्यव्याप्तेः। एवञ्च विरुद्धशास्त्रापेक्षया प्राबल्ये प्रामाण्यं निश्चितमेवेति ॥

**भाष्यम्—**

**[प्रत्यक्षम्, अनुमानम्, शब्दश्चेति त्रीण्येव प्रमाणानि]**

**प्रत्यक्षमनुमानं च वाक्यं चेति त्रिधा प्रमा।**
**उपमाद्यं प्रमाणं यदेतेष्वन्तर्गतं हि तत्॥**
**निर्दोषेन्द्रियसंयोगः प्रत्यक्षमिति गीयते।**

**टिप्पणी—**

सौगताद्यागमाः प्रत्यक्षानुमानागमविरुद्धा इत्युक्तम्। तत्तेषां स्वरूपाज्ञानेन ज्ञातुं शक्यमिति प्रत्यक्षादिस्वरूपप्रदर्शनाय उत्तरो ग्रन्थसन्दर्भः। तत्र तावत् प्रस्तुतत्वादनुप्रमाणं विभागेनोद्दिशति— **प्रत्यक्षमिति** ॥ प्रमा अनुप्रमाणम्। प्रायेण आसन्नाव्यवहितवर्तमानकतिपयार्थग्राहकं प्रत्यक्षम्। अनासन्नातीतानागतव्यवहितार्थगोचरमनुमानम्। स्वातन्त्र्येणाशेषार्थविषय आगम इत्यर्थग्रहणक्रमेणोद्देशः। ननु कथं त्रीण्येव प्रमाणानि? उपमानार्थापत्त्यादीनां पृथक्प्रमाणत्वादित्यत आह— **उपमाद्यमिति** ॥ हि यस्मादन्तर्गतं तस्मात् त्रिधेति सम्बन्धः।

तत्र प्रत्यक्षलक्षणमाह— **निर्दोषेति** ॥ यद्यपि 'विषयान् प्रति स्थितं ह्यक्षं प्रत्यक्षमिति गीयते। प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता। आसमन्ताद् गमयति धर्माधर्मौ परं पदम्। यच्चाप्यतीन्द्रियं त्वन्यत्तेनासावागमः स्मृतः॥' इत्युक्तरीत्या सञ्ज्ञानिरुक्त्यैवैषां लक्षणसिद्धिः। तथाऽपि प्रत्यक्षे तस्यैव स्पष्टीकरणार्थमनुमानादौ शृङ्गग्राहिकया तज्ज्ञापनार्थं च पुनर्लक्षणारम्भः।

निर्दोषेन्द्रियार्थसन्निकर्ष इत्यर्थः । इन्द्रियशब्देन ज्ञानेन्द्रियमुच्यते । निर्दोषत्वमिन्द्रियार्थयोर्विशेषणम् । अर्थशब्देन तत्तदिन्द्रियविषय उच्यते । अत्रार्थग्रहणेनाऽकाशादीनां चक्षुरादिसन्निकर्षव्युदासः । निर्दोषत्वग्रहणेन अतिसामीप्यादिदोषयुक्तार्थानाम् इन्द्रियसन्निकर्षनिरासः । इन्द्रियग्रहणेनार्थानामेवान्योन्यं सन्निकर्षव्युदासः । तन्निर्दोषत्वग्रहणेन मनोऽनधिष्ठितत्वादिदोषवदिन्द्रियाणाम् अर्थसन्निकर्षव्यावृत्तिः । सन्निकर्ष इति इन्द्रियमात्रव्युदासः । गीयत इति स्वीयलक्षणस्य प्रामाणिकत्वोक्त्या अपरोक्षप्रमाव्याप्तं प्रत्यक्षमित्यादि परेषां लक्षणमयुक्तमित्युक्तं भवति । सर्वस्यापि प्रमेयस्येश्वरापरोक्षप्रमाव्याप्तत्वेनातिव्यापकत्वात् साधनाश्रययोरन्यतरत्वे सतीति विशेषणमिति चेन्न । साधनाश्रययोरेव प्रमाव्याप्तिः सम्भवतीत्येतावता तदुपादानम् । न लक्षणशरीरानुप्रवेशेनेति त्वदुक्त्ययोगात् । आश्रयग्रहणवैयर्थ्याच्च । ईश्वरस्यापि प्रत्यक्षत्वसिद्ध्यर्थमिति चेत् । कर्तरि ल्युडन्तस्य प्रमाणशब्दस्याननुशासनेनेश्वरप्रामाण्यस्यैवायुक्तत्वादिति ।

**भाष्यम्—**

**निर्दोषयुक्तिरनुमा......................॥**

**टिप्पणी—**

अनुमानलक्षणमाह– **निर्दोषयुक्तिरिति** ॥ अत्रोपपत्तिर्युक्तिः लिङ्गं व्याप्यमिति पर्यायः इति पद्धत्युक्तरीत्या यदि युक्तिशब्दो व्याप्यपरः तदाऽसिद्धिव्युदासार्थं निर्दोषग्रहणम् । यदा चोपपत्तिरिति लिङ्गमुच्यते साहचर्यबलेनार्थगमकं लिङ्गमिति प्रमाणलक्षणटीकारीत्या युक्तिशब्दो व्यभिचारादिसाधारणलिङ्गमात्रवचनः तदा तद्व्यावृत्त्यर्थं निर्दोषग्रहणं कृतमिति ज्ञातव्यम् । नचैवं 'अनुमा युक्तिरेवोक्ता' इत्यनुव्याख्यानेन, 'नतु निर्दोषत्वविशेषिता' इति सुधया च विरोध इति वाच्यम् । तत्र युक्तिशब्दस्य यथार्थानुमितिजनकत्वरूपमुख्यार्थस्य विवक्षितत्वात् । अत्र च तदभावात् । अत एवोक्तं सुधायाम् । अत्र पुनरन्तर्गतनिर्दोषत्वं मुख्यमेवार्थमुपादाय युक्तिरित्येवोक्तमिति युक्तिग्रहणं प्रत्यक्षादिव्युदासार्थम् ।

**भाष्यम्—**

**..............तादृशोक्तिस्तथाऽऽगमः ॥**

**टिप्पणी—**

आगमलक्षणमाह– **तादृशोक्तिरिति** ।। निर्दोषोक्तिरित्यर्थः । अत्र 'निर्दोषः शब्दः आगमः' इति प्रमाणलक्षणरीत्योक्तिशब्दः शब्दमात्रपरः । ततश्च निरभिधेयत्वेनान्वयाभावेन वा अबोधकत्वं विपरीतबोधकत्वं ज्ञातज्ञापकत्वम् अप्रयोजनत्वम् अनभिमतप्रयोजनत्वम् अशक्यसाधनप्रतिपादनं लघूपाये सति गुरूपायोपदेशनम् इत्यादिदोषयुक्तशब्दव्यावृत्त्यर्थं निर्दोषग्रहणम् । 'वाक्यमेवाऽगमः शुभम्' इति वक्ष्यमाणरीत्या वाक्यपरो वा । विभक्त्यन्ता वर्णाः पदम् । आकाङ्क्षासन्निधियोग्यतावतां पदानां समूहो वाक्यम् । तत्र यदि पद्धत्युक्तरीत्या पूर्वपदसञ्जाताकाङ्क्षापूरकत्वमात्रमाकाङ्क्षावत्त्वम् अविलम्बेनो-च्चरितत्वमात्रं सन्निहितत्वं प्रमाणाविरुद्धप्रतीतान्वयप्रतियोग्यर्थप्रतिपादकत्वं योग्यतेत्या-काङ्क्षादेर्लक्षणम्, तदा पदत्वेनानभिधेयत्वस्याऽकाङ्क्षासन्निधिभ्याम् अन्वया-भावस्य योग्यतया विपरीतबोधकत्वस्य च निरासेऽपि ज्ञातज्ञापकत्वाद्यशेष-दोषनिरासार्थं निर्दोषग्रहणम् । यदि प्रमाणलक्षणटीकोक्तरीत्या श्रोतुराकाङ्क्षि-ताभिधायकत्वं पूर्वपदसञ्जाताकाङ्क्षापूरकत्वं चाऽकाङ्क्षावत्त्वं सन्निहितार्थाभि-धायकत्वम् अविलम्बेनोच्चरितत्वं च सन्निहितत्वम् अन्योन्यान्वययोग्यतावदर्था-भिधायकत्वं योग्यतेत्याकाङ्क्षासन्निधियोग्यतानां लक्षणं तदा पदत्वेनानभि-धेयत्वस्यआकाङ्क्षयाऽनभिमतप्रयोजनत्वान्वयाभावयोः सन्निधिनाऽशक्यसाधन-प्रतिपादनान्वयाभावयोः योग्यतया विपरीतप्रतीतान्वयायोग्यार्थप्रतिपादकत्वस्य च निरासेऽपि आगमाभासव्युदासार्थं निर्दोषग्रहणमित्यवधेयम् । तथाशब्द उपमायाम् । प्रत्यक्षादिकमिवोक्तिरप्यदुष्टेति ।

**भाष्यम्—**

**मानं चैव विशेषेण निर्दोषज्ञानसाधनम् ।**

**टिप्पणी—**

उक्तानि लक्षणानि किंरूपाणीति जिज्ञासायामाह– **मानमिति** ।। विशेषेणैव मानं लक्षितमित्यर्थः । यद्यपि सामान्यलक्षणोक्तिपूर्वकं विशेषलक्षणाभिधानं

प्राप्तं प्रतिपत्तिसौकर्यात् । तथाऽपि सामान्यस्य व्यवहारेष्वनुपयोगाद्विशेषाणामेव तदुपयोगाद् विशेषलक्षणान्येवादावुदितानीति भावः । नन्वेष्वेवं परस्परविलक्षणेषु प्रत्यक्षादिष्वेकस्य प्रमाणशब्दस्य वृत्तिः कथमित्यतः सामान्यलक्षणप्रयोगादिति भावेनानुप्रमाणसामान्यलक्षणमाह– **निर्दोषेति** ॥ मानं चैवेत्येतदनुवर्तते । सामान्यतो मानं च निर्दोषज्ञानसाधनमेवेत्यर्थः । एवशब्देन 'प्रमाव्याप्तं प्रमाणम्' इत्यादिपरोक्तलक्षणानां दुष्टत्वमभिप्रैति । निर्दोषं च तज्ज्ञानं च निर्दोषज्ञानं तस्य साधनमिति विग्रहः । ननु यादृच्छिकसंवादिलिङ्गविभ्रमादिष्वतिव्याप्तिः । तस्यापि यथार्थज्ञानसाधनत्वादिति चेन्न । यज्जातीये सति नियमेन प्रमोत्पद्यत तस्यैवात्र साधनत्वेन विवक्षितत्वात् । यद्वा 'निर्दोषं तज्ज्ञानसाधनं च'इति निर्दोषत्वं साधनविशेषणम् । यथार्थज्ञानकरणस्यापि तस्य भ्रमत्वरूपदोषसत्वेन नातिव्याप्तिः । अनेन ज्ञातज्ञापकवाक्यादावपि प्रमाणलक्षणस्यातिव्याप्तिर्निरस्ता । यथार्थज्ञानकरणस्यापि तस्य ज्ञातज्ञापकत्वादिरूपदोषयुक्तत्वात् । ननु ज्ञातज्ञापकवाक्यादेरलक्ष्यत्वमेव नास्ति येन तत्रातिव्याप्तिशङ्का स्यात् । तथा सति स्मृत्यनुवादयोर्नाप्रामाण्यमित्यादिविरोधापत्तेरिति चेन्न । अयथार्थज्ञानसाधनत्वाभावमात्रस्य तत्र विवक्षितत्वात् । नच तावता वाक्यस्य प्रामाण्यम् । तज्जन्यज्ञानस्य यथार्थत्वनियमेऽपि वाक्यस्य दुष्टत्वेन भ्रान्तप्रतारकवाक्यवदप्रामाण्यात् । अत एव पद्धत्यादौ 'निर्दोषः शब्द आगमः' इत्यत्र निर्दोषग्रहणेन ज्ञातज्ञापकादिवाक्यम् आगमाद् बहिष्कृतम् । अत एव सुधायां पारिभाषिकसाधनत्वविवक्षयैव यादृच्छिकसंवादिषु अतिव्याप्तिपरिहारेऽपि ज्ञातज्ञापकवाक्यादेरपि व्यावर्त्यत्वाभिप्रायेण यदा निर्दोषतया साधनं विशिष्यत इति पक्षान्तरमुक्तम् । ननु प्रमाणलक्षणादौ तत्साधनमनुप्रमाणमिति यथार्थज्ञानसाधनत्वस्यैवानुप्रमाणत्वेनोक्तत्वात्कथमेतदिति चेन्न । तत्रापि निर्दोषतया साधनस्य विशेषणीयत्वात् । तथात्वे निर्दोषं ज्ञानसाधनमनुप्रमाणमित्येवास्तु । कृतं यथार्थेति ज्ञानविशेषणेनेति चेन्न । तत्फलितार्थस्यैव निर्दोषग्रहणेन वर्णितत्वात् । निर्दोषकरणजन्यं ज्ञानं याथार्थ्यं न व्यभिचरतीति स्वरूपकथनं

वा तदिति। एवं च निर्दोषत्वे सति ज्ञेयविषयीकारित्वमेव प्रमाणसामान्यलक्षणमिति न ज्ञातज्ञापकवाक्यादौ तस्यातिव्याप्तिरिति ।

**भाष्यम्—**

**अर्थापत्तिश्चोपमा च सम्भवाद्यनुमैव तु ॥**

**टिप्पणी—**

उपमाद्येतेष्वन्तर्गतमित्युक्तम्। तत्र कस्य कुत्रान्तर्भाव इति जिज्ञासायामाह– **अर्थापत्तिरिति** ॥ आदिशब्देन परिशेषोपक्रमादेर्ग्रहणम् । एवकारः पृथक् प्रमाणत्वव्यावृत्त्यर्थः। अनुपपद्यमानार्थदर्शनात्तदुपपादके बुद्धिरर्थापत्तिः। यथा जीवंश्चैत्रो गृहे नास्तीति ज्ञाने जाते सति बहिर्भावज्ञानम्। अत्र यद्यप्येकैकस्य बहिर्भावे लिङ्गत्वं नोपपद्यते । व्यभिचारात् । तथाऽपि चैत्रो बहिरस्ति जीवित्वे सति गृहेऽसत्वात्। यो जीवन् यत्र नास्ति स ततोऽन्यत्रास्ति यथाऽहम् । इति मिलितयोर्जीवनगृहभावयोर्लिङ्गत्वमुपपद्यत एव । विरुद्धयोर्विशेष्यविशेषणभावानुपपत्तिरिति चेन्न । सामान्यविशेषयोरविरोधस्य स्वस्मिन्नेव दृष्टत्वात् । आत्यन्तिकविरोधे त्वर्थापत्तिरपि न प्रवर्तते । किन्तु विप्रतिपत्त्या सन्देह एव भवतीति। सादृश्यज्ञानसाधनमुपमानमिति मीमांसकाः। तत्र तेनायं सदृश इति सदृशाविमाविति वा ज्ञानं प्रत्यक्षजम् । गोगवयौ सदृशाविति वाक्यजं त्वागम एवेति स्फुटमेव। गृह्यमाणे स्मर्यमाणगतसादृश्यं दृष्ट्वा स्मर्यमाणे यद्गृह्यमाणसादृश्यं प्रत्येति तदनुमानमेव। स गौरेतद्गवयसदृशोऽस्य गवयस्य तद्गोसदृशत्वात्। यो यत्सदृशः स तत्सदृशः यथा यमो यमान्तरेणेति प्रयोगात् । व्याप्तिसत्वे वैयधिकरण्यस्यादोषत्वात् । एतद्गवयगतसादृश्य-प्रतियोगित्वस्य वा लिङ्गत्वेन सामानाधिकरण्याच्च । बहुलज्ञानेऽल्पज्ञानं सम्भवः । यथा शतमस्यास्तीति ज्ञाने पञ्चाशज्ज्ञानम् । तदप्यनुमानमेव। देवदत्तः पञ्चाशद्वान् शतवत्त्वाद् इति प्रयोगोपपत्तेः। प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः। यथा देवदत्तयज्ञदत्ताविति ज्ञाने सति एकस्मिन्नायं यज्ञदत्त इति प्रतिषेधे देवदत्तत्वबुद्धिः । इयमप्यनुमानजन्या । अयं देवदत्तः

देवदत्तयज्ञदत्तयोरन्यतरत्वे सति अयज्ञदत्तत्वात्। व्यतिरेकेण यज्ञदत्तवत् इति प्रयोगोपपत्तेरिति। उपक्रमादीनामपि व्याप्तिसापेक्षतया तात्पर्यनिर्णायकत्वादनुमानत्वमेवेति।

**भाष्यम्—**

> **दुःखाद्यभावः प्रत्यक्षं बाह्यगश्चानुमा स्मृता।**
> **योग्यस्यानुपलब्ध्याख्या युक्तिरेव हि बाह्यगा॥**
> **मनसः सम्प्रयोगो यो दुःखादिरहितात्मनि।**
> **अभावरूपं प्रत्यक्षं......................॥**

**टिप्पणी—**

अभावप्रमितिसाधनमभावाख्यं प्रमाणम्। तस्य च नार्थापत्त्यादिवदनुमानमात्रेऽन्तर्भावः सम्भवतीति भावेन तस्य पृथगन्तर्भावमाह— **दुःखाद्यभाव इति**॥ दुःखाद्यभावविषयमित्यर्थः। बाह्यगः प्रत्यक्षयोग्यबाह्यार्थप्रतियोगिकाभावगोचरः। न केवलं प्रत्यक्षं किन्त्वनुमा च। पुरोवृत्तिघटाभावप्रमितिर्झटिति जायमाना प्रत्यक्षफलमेव। नत्वनुपलब्धिमात्रजन्या। अपरोक्षज्ञानत्वात्। अनुपलब्धिस्त्ववर्जनीयसन्निधिरेव। अनुमेत्युक्तमुपपादयति— **योग्यस्येति**॥ यत्रान्धकारे हस्तप्रसारणादिरूपपरामर्शेन घटाभावं प्रत्येति तदा भवत्येवानुपलब्धिः। बाह्यगा बाह्यार्थप्रतियोगिकाभावगोचरा। किन्तु युक्तिरेव न पृथक्। अत्र घटो नास्ति योग्यत्वे सत्यनुलभ्यमानत्वादिति प्रयोगसम्भवात्। यन्नोपलभ्यते तन्नास्तीत्यस्यातीन्द्रियेषु व्यभिचारादुक्तं योग्यस्येति। प्रत्यक्षयोग्यस्येत्यर्थः। अतीन्द्रियार्थप्रतियोगिकाभावज्ञानस्य अनुमानागमजन्यताया अविवादात्तन्नोक्तम्। दुःखाद्यभावग्राहकं प्रत्यक्षमित्युक्तं तद्विशदयति— **मनस इति**॥ अभावो दुःखाद्यभावः रूप्यते विषयीक्रियते येन तदभावरूपं प्रमाणं दुःखादिरहितात्मनो मनसो यः सम्प्रयोगः तद्रूपं प्रत्यक्षमित्यर्थः। ननु दुःखाद्यभावः प्रत्यक्षमित्यसत्। संयोगसमवाययोरसम्भवेनाभावस्येन्द्रियसन्निकर्षानुपपत्तेरिति चेन्न। मनस्संयुक्तात्मविशेषणतारूपसन्निकर्षसम्भवात्। अत एव दुःखादिरहितात्मनो मनसः

सम्प्रयोग इति दुःखाद्यभाव आत्मविशेषणतयोक्तः । अभ्युपेत्य चेदमुदितम् । भाववदभावस्यापि साक्षादिन्द्रियसन्निकर्षे बाधकाभावात् मनसो दुःखाभावेन संयोगोपपत्तेरिति ॥

**भाष्यम्—**

[मन आदीन्द्रियाणां द्वैविध्यम्]

**................मनश्च द्विविधं मतम् ॥**
**चेतनं च जडं चेति चक्षुराद्यं तथैव च ।**
**चेतनं त्विन्द्रियं ह्यात्मस्वरूपान्नापरं स्मृतम् ॥**
**मुक्तानां चेतनं त्वेव बद्धानामुभयं तथा ।**
**स्वरूपेणापि संयोगः स्वरूपस्यैव युज्यते ॥**
**यथा रत्नस्य संयोगस्तत्प्रकाशेन नित्यदा ।**
**रत्नस्य च प्रकाशस्य न भेदः कश्चिदिष्यते ॥**
**विशेषो नाम विज्ञेयो विशेषाद् दृष्टिगोचरः ।**

**टिप्पणी—**

नन्वेकं तत्रानुभव इत्यादौ दुःखाद्यभावस्य साक्षिवेद्यत्वोक्तेः कथं मनोवेद्यत्वमित्यतो न वयं तार्किकादिवत्साक्षिभिन्नमनोवेद्यत्वं ब्रूमो येनापसिद्धान्तः स्यात् । किन्तु चेतनात्मकमनोवेद्यत्वमित्याशयेन मनोद्वैविध्यमाह–**मनश्चेति** ॥ प्रसङ्गादाह– **चक्षुराद्यमिति** ॥ चक्षुराद्यं च तथैवोक्तरीत्या द्विविधमित्यर्थः । ननु जीवानामेव चेतनत्वात्कथं तद्भिन्नानामपीन्द्रियाणां चेतनत्वमित्यत आह– **चेतनमिति** ॥ किं द्विविधेन्द्रियवत्त्वं सर्वेषामस्ति? नेत्याह– **मुक्तानामिति** ॥ इन्द्रियमित्यनुवर्तते । मुक्तशब्देन संसारसंसर्गाभाववच्चेतना विवक्षिताः । तेनेश्वरादिसङ्ग्रहः । मन आदीन्द्रियाणामात्मस्वरूपत्वे मनसः सम्प्रयोगो यो दुःखादिरहितात्मन इत्ययुक्तम् । स्वेन स्वस्य संयोगानुपपत्तेरित्यत आह– **स्वरूपेणेति** ॥ तत्र दृष्टान्तमाह– **यथेति** ॥ रत्नतत्प्रकाशयोरपि भेदाङ्गीकारादेव संयोगोपपत्तिरिति कथमेतन्निदर्शनमित्यत आह– **रत्नस्येति** ॥ ननु दृष्टान्त-

दार्ष्टान्तिकयोरुभयत्र भेदाभावे तद्व्याप्तः संयोगः कथमित्यत आह– **विशेष इति** ॥ अभिन्नेऽपि भेदकार्यकारीति शेषः । ननु विशेषसद्भाव एव किं मानमित्यत आह– **विशेषादिति** ॥ व्यवहारविशेषाद् विज्ञेय इति सम्बन्धः । तत्र प्रत्यक्षं चाह– **दृष्टिगोचर इति** ॥

**भाष्यम्**—

**[विशेषसमर्थनम्]**

**विष्णोरेव स्वरूपाणां तद्गुणानां तथैव च ॥**
**तस्यैव शिरआदीनां नैव भेदोऽस्ति कश्चन ।**
**अभेदेऽपि विशेषेण व्यवहारः पृथग्भवेत् ॥**
**विष्णोर्जडेन जीवैश्च भेद एव श्रिया तथा ।**
**विष्णोः क्रियाश्च याः काश्चिदभेदस्तैरपि ध्रुवः ॥**

**टिप्पणी**—

विशेषादित्युक्तमेव व्यवहारान्यथानुपपत्तिरूपप्रमाणं दर्शयति– **विष्णोरेवेति** ॥ विष्णोरिति पञ्चम्यन्तं षष्ठ्यन्तं च । स्वरूपाणां मत्स्यादीनाम् । त्रयाणामेव शब्दानां स्वरूपाणामेव तद्गुणानामेव शिरआदीनामेवेति सम्बन्धः । तथाशब्द-स्समुच्चये । चशब्दः परस्परं चेत्यनुक्तसमुच्चये । कश्चन अभेदसहितस्तदसहितो वा । किं तत इत्यत आह– **अभेदेऽपीति** ॥ पृथग् व्यवहारः भेदव्यवहारः । विष्ण्वंशानां तद्गुणानां तदवयवानां च विष्णुना परस्परं च नास्ति भेदः । 'नेह नानाऽस्ति किञ्चन' इति श्रुतेः । अस्ति च भेदकार्यभूतो व्यवहारः । 'अवतारा महाविष्णोः', 'आनन्दं ब्रह्मणो विद्वान्' 'तस्य प्रियमेव शिरः' इत्यादिः । अतस्तदुभयान्यथानुपपत्त्या भेदप्रतिनिधिरूपो विशेषः स्वीकार्य इति भावः । स्वरूपाणामेवेत्याद्येवकारव्यावर्त्यं दर्शयति– **विष्णोरिति** ॥ यद्वा, यदि विष्णोस्तत्स्वरूपादिभिरभेदमङ्गीकृत्य भेदव्यवहारो विशेषबला-दुपपादनीयस्तर्हि विष्णोर्जडजीवादिभिरप्यभेदमङ्गीकृत्य तत्रापि भेदव्यवहारो विशेषबलादेव कुतो नोपपादनीय इत्यत आह– **विष्णोरिति** ॥ श्रियो

दुःखस्पृष्टत्वलक्षणजीवत्वाभावात्पृथग्ग्रहणम् । नह्यस्माभिः अकस्माद् विशेषोऽ-ङ्गीक्रियते । किन्तु भेदाभावेऽनुपचरितभेदव्यवहारे च प्रमिते सति । नच विष्णोर्जडजीवादिभिर्भेदाभावः प्रमितः । तत्वमसीत्यादिवाक्यानां सम्यग् व्याख्याततत्वात् । प्रत्युत प्रागुदाहृतप्रमाणैर्भेद एव प्रमितः । तथाच साक्षाद्भेदेनैव भेदव्यवहारोपपत्तौ भेदहीनेऽनुपचरितभेदव्यवहारनियामको विशेषो नाङ्गीकार्य इति भावः । व्यवहारान्तरान्यथानुपपत्तिमपि विशेषे प्रमाणमाह– **विष्णोः क्रिया इति** ।। तैस्ताभिः । अभेदेऽपि विशेषेणेत्येतदत्रापि सम्बद्ध्यते ।।

**भाष्यम्—**

**कादाचित्कत्वमप्यासां विशेषेणैव युज्यते ।**
**एवं विमुक्तजीवानां स्वरूपैः स्वगुणैरपि ।।**
**स्वक्रियाभिस्तथैवैक्यं नित्यं स्वावयवैरपि ।**
**भेदाभेदस्तु बद्धानां गुणैः स्वैः कर्मभिस्तथा ।।**
**अंशांशिनोर्गुणस्यापि गुणिनः कर्मतद्वतोः ।**
**कार्योपादानयोश्चैव व्यक्तिसामान्ययोरपि ।।**
**भेदाभेदः समुद्दिष्टो विनाशो यत्र दृश्यते ।**
**एकस्मिन् विद्यमानेऽपि तयोरेकस्य कस्यचित् ।।**

**टिप्पणी—**

अस्ति तावद् विष्णोः स्वक्रियादिभिरभेदः । 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः । अस्ति च 'विष्णोः क्रिया' इत्यादिभेदव्यवहारः । अतस्तदुभयान्यथानुपपत्त्या विशेषोऽङ्गीकार्य इत्यर्थः । किञ्चानादिनित्यविष्ण्व-भिन्नक्रियाणां 'स इदं सर्वमसृजत' इत्यादिकादाचित्कव्यवहारोऽस्ति । नह्ययं विशेषाङ्गीकारमन्तरेणोपपद्यते । नच शक्त्यात्मना अनादिनित्यानामपि क्रियाणां व्यक्त्यात्मना कादाचित्कव्यवहारोपपत्तिरिति वाच्यम् । शक्तिव्यक्त्योः परस्परं भेदे शक्तिरेव नित्या क्रिया त्वनित्येति प्राप्त्या तयोरभेदेऽङ्गीकार्ये

शक्त्या नित्यत्वव्यवहारो व्यक्त्या कादाचित्कव्यवहार इति भेदकार्यनिर्वाहार्थमपि विशेषस्याङ्गीकार्यत्वादित्यभिप्रेत्याऽह– **कादाचित्कत्वमपीति** ॥ न केवलं भेदव्यवहारः । किन्तु आसां क्रियाणां कादाचित्कत्वव्यवहारोऽपीत्यर्थः । एतद्व्यवहारविशेषेणापि विशेषमुपपादयितुं विष्णोरेव स्वरूपाणामित्यत्र क्रिया नोक्ता । उक्तन्यायमन्यत्राप्यतिदिशति– **एवमिति** ॥ ऐक्यं नित्यं नियतमेव अस्ति च पृथग्व्यवहारः । अतस्तत्रापि विशेषोऽङ्गीकार्य इति भावः । विमुक्तेति जीवविशेषणोक्तेः प्रयोजनमाह– **भेदाभेद इति** ॥ गुणैश्चिन्तादिभिः कर्मभिः धर्माधर्मलक्षणादृष्टैः ॥

भेदाभेदयोः कानि स्थलानीत्याशङ्कायां सङ्कलय्याऽह– **अंशांशिनोरिति** ॥ उपादानातिरिक्तांशाभावात्किमस्य पृथग्ग्रहणेनेति चेन्न । प्रत्यक्षत एव पटाद्यंशिनां तन्त्वाद्यतिरिक्तहस्तवितस्त्याद्यंशप्रतीतेः । किञ्चाऽकाशस्य तावदंशाः सन्तीत्यङ्गीकार्यम् । अन्यथाऽऽकाशे विहगशरीरभावाभावयोरवस्थानायोगात् । ननु संयोगः स्वात्यन्ताभावसमानाधिकरण इति निरंशेऽप्याकाशे विहगशरीरसंयोग-तदभावयोरवस्थानं युक्तमिति चेन्न । विरोधात् । अन्यथा सर्वत्र भावाभाव-विरोधाभावप्रसङ्गः । नचैकस्मिन्नेव वृक्षे यथा अग्रावच्छेदेन कपिसंयोगो मूलावच्छेदेन तदभावस्तथाऽत्राप्यवच्छेदकभेदेनाविरोध इति वाच्यम् । अवच्छेदकप्रदेशस्यैवांशत्वात् । नच स उपाधिकृत इति न स्वाभाविक इति वाच्यम् । उपाधेरपि विहगशरीरसमानयोगक्षेमत्वात् । नचाऽकाशस्योपादान-कारणमस्ति । तस्मात्कार्यकारणातिरिक्तांशांशिनावङ्गीकार्यावित्युपपन्नं पृथग् ग्रहणम् । कार्यमुपादेयं पटादि । केचित्परमाणव एव तथा तथा सन्निकृष्टाः पटादिषु बुद्धिविषयाः । नतु पटो नामात्रास्तीति ब्रुवते । अन्ये तु कार्यकारण-योरत्यन्तभेदम् । तदुभयनिरासायैवकारः । नन्वेतत्पूर्वोक्तविरुद्धम् । विष्णुमुक्तानां तत्तदंशगुणक्रियादिभिः अत्यन्ताभेदस्योक्तत्वादित्यतो भेदाभेदावच्छेदकमाह– **विनाश इति** ॥ तथाऽपि यत्रांशांश्यादीनां सहैव विनाशः तत्र भेदाभेदाभावाद् उक्तमनुपपन्नमित्यत उक्तम्– **एकस्मिन्निति** ॥ तयोरंशांशिप्रमुखयोर्मध्ये ।

एकस्मिन्नंश्यादौ विद्यमानेऽपि एकस्यांशादेः विनाशो यत्र दृश्यते तत्र भेदाभेद इति सम्बन्धः । देहाद्यंशिनि विद्यमानेऽपि हस्ताद्यंशस्य पटाद्यंशेषु हस्तवितस्त्याद्यात्मकखण्डपटेषु तन्तुषु वा सत्सु अंशिनः पटादेश्च विनाशदर्शनात् कस्यचिदित्युक्तम् । यथा देहाद्यंशिनो हस्ताद्यंशैः । सत्यपि देहादौ हस्ताद्यपगमात् । यथा चूतफलादेर्गुणिनः श्यामरूपादिभिः । सत्यपि तस्मिन् पाकावस्थायां तदपगमात् । यथा वा पटस्य चलनादिभिः । सत्यपि तस्मिंस्तदभावात् । यथा वा पटादेस्तन्त्वादिभिः । प्रागूर्ध्वं सत्स्वपि तन्तुषु पटस्याभावात् । यथाच ब्राह्मणस्य ब्राह्मणत्वेन । महापातकेन जातेरपायात् ।

**भाष्यम्—**

> **अविनाभावनियमो यत्राभेदस्तु तत्र च ।**
> **अभेदश्च स्वभिन्नेन भेदाभेदस्तु तत्र च ॥**
> **भेदाभेदो नतु क्वापि विष्णोरस्ति कदाचन ।**
> **भेद एव तु जीवाद्यैः केवलाभेद आत्मनि ॥**

**टिप्पणी—**

नन्वेवं सत्यत्यन्ताभेदः कुत्राङ्गीकार्य इति चेद् अंशांश्यादिष्वेवेति ब्रूमः । नच विरोधोऽवच्छेदकभेदेनाविरोधादिति भावेना-त्यन्ताभेदावच्छेदकमाह— **अविनाभावेति** ॥ श्यामरूपादीनां चूतफलादि-भिरविनाभावेऽपि अत्यन्ताभेदाभावात् नियमपदम् । तेन परस्पराविनाभावो लभ्यत इति नोक्तदोषः । अविनाभावश्चात्र कालिको विवक्षित इति न कश्चित् क्षुद्रोपद्रवः । यत्रांशांश्यादिषु परस्पराविनाभावस्तत्रात्यन्ताभेद इत्यर्थः । अत्रोदाहरणानि 'विष्णोरेव स्वरूपाणाम्' इत्यादिना प्रागुक्तान्येव । व्यक्तिसामान्ययोर्यथा घटघटत्वयोः । ननु स्वेनाभेदोऽन्येन भेद इति भेदाभेदस्य सर्वत्र सत्वात्किं विशिष्योच्यते 'विनाशो यत्र दृश्यते तत्र भेदाभेदः' इतीत्यतोऽभिप्रायमाह— **अभेदश्चेति** ॥ स्वेनाभेदोऽन्येन भेद इति न भेदाभेदशब्दार्थो विवक्षितः ।

येनोक्तदोषः । किन्तु यत्र स्वभिन्नेनाभेदश्च एकप्रतियोगिक एव भेदाभेदश्चेति यावत् । तत्रैव भेदाभेद इति नोक्तदोषः । ननु विष्णोः स्वरूपगुण-क्रियादिभिरत्यन्ताभेदेऽपि बद्धवत्कैश्चिद्गुणादिभिर्भेदाभेदोऽप्यस्ति किं नेत्याह– **भेदाभेद इति** ।। द्वित्वादिसमुदायं विना । कुतो नेति चेत् । विष्णोर्भेदाभेदः किं जीवजडप्रतियोगिको वा उत स्वस्वरूपगुणप्रतियोगिको वा । नाऽद्य इत्याह– **भेद एव त्विति** ।। द्वितीयं दूषयति– **केवलाभेद इति** ।।

**भाष्यम्——**

[भगवतः क्रियाः नित्याः]

**स्वरूपेषु विशेषो यः स्वरूपं तस्य सोऽपि तु ।।**
**क्रियाणां च न नाशोऽस्ति तच्छक्तेः पूर्वकालतः ।**
**विशेष एवोपरतिः क्रियायाः समुदीरिता ।।**

**टिप्पणी——**

ननु विष्णोः स्वरूपादिषु विद्यमानस्य विशेषस्य तदभिन्नत्वे विशेषविशेषिभाव-व्यवहारानुपपत्तेस्तद्भेदो वाच्यः । अतः कथं केवलाभेद आत्मनीत्युक्तमित्यत आह– **स्वरूपेष्विति** ।। नन्वथापि केवलाभेद आत्मनीत्ययुक्तम् । विष्णोः स्वक्रियादिभिरत्यन्ताभेदायोगात् । विष्णोर्नित्यत्वात्तत्क्रियाणां चानित्यत्वात् । नित्यानित्ययोश्च केवलाभेदायोगात् । तथाच तत्र भेद एवाङ्गीकार्य इति न क्वापीति कथमुक्तम् इत्यत आह– **क्रियाणां चेति** ।। विष्णुसमुच्चयार्थश्चशब्दः । विष्णुक्रियाणामित्यर्थः । नन्वीश्वरस्य परिस्पन्दरूपक्रियाया एवाभावेन तदनित्यत्वशङ्का तत्परिहारश्चेति द्वावप्यनुपपन्नौ । नच ज्ञानादिरूपधात्वर्थक्रियाणां विनाशाभावः साधनीयः । ईश्वरज्ञानादिनित्यत्वस्य परेणाप्यभ्युपगतत्वादिति चेन्न । ईश्वरस्य परिस्पन्दाभावे प्रमाणाभावात् । परममहत्परिमाणेन तत्साधनस्याणुमध्यमपरिमाणाभ्यां सत्प्रतिपक्षत्वात् । असिद्धिशङ्काया उभयत्रापि साम्यात् । 'महतो महीयान्' इति श्रुतत्वान्नासिद्धिरिति चेत् । 'अणोरणीयान्' इतीतरस्यापि श्रुतत्वात् । अणोरणीयस्त्वम् अप्रत्यक्षत्वोपलक्षकमिति चेत् ।

महतो महत्त्वमपि पूज्यत्वमिति किं न स्यात् । विरोधादुभयाङ्गीकारो नोचित इति चेत् । तर्हि प्रथमप्राप्तत्वाद् अणुत्वमेव ग्राह्यम् । परिहरिष्यते चायं विरोधः पञ्चमाध्याये । ननु ईश्वरक्रियाणां कुतो न विनाश इति चेत्, प्रमाणाभावात् । न तावत्तत्र प्रत्यक्षमस्ति । ईश्वरतत्क्रिययोरप्रत्यक्षत्वात् । नाप्यनुमानम् । लिङ्गाभावात् । क्रियात्वं लिङ्गमिति चेत्तद्यदि धात्वर्थत्वं तदा ज्ञानेच्छाप्रयत्नैः सत्तया च व्यभिचारात् । यदि च परिस्पन्दत्वं तदानी-मीश्वरपरिस्पन्दानामपि नित्यत्वेन व्यभिचारात् । विपक्षे बाधकाभावेनाप्रयो-जकत्वाच्च । अन्यथा ज्ञानत्वादिना ज्ञानाद्यनित्यतासाधनसौलभ्यात् । नच ज्ञानानित्यत्वे धर्मिग्राहकप्रमाणबाधः । केवलानुमानस्य तस्याप्रामाण्यात् । आगमस्य तत्रापि साम्यात् । कार्यत्वस्योपाधित्वाच्च । नच पक्षेऽपि तत्साधनीयम् । तदकार्यत्वस्य श्रुत्यादिसिद्धत्वेन बाधात् । ईश्वरक्रिया अनित्या असत्यावरणादौ प्रागूर्ध्वमनुलभ्यमानत्वात् । कदाचिदेवोलभ्यमानत्वाद्वा घटादिवदिति चेन्न । प्रत्यक्षेणानुपलम्भस्य आकाशादौ व्यभिचारात् । योग्यतया विशेषणेऽसिद्धेः । प्रमाणमात्रेणानुलम्भस्यासिद्धत्वात् । आगमादिनोपालम्भात् । अत एव द्वितीयहेतुरप्यसिद्धः । वर्णनित्यत्ववादेऽनैकान्तिकश्च । नाप्यागमः । तदभावात् । 'स इमाँ लोकानसृजत' इत्यादेः 'स ऐक्षत' इत्यादिवाक्यसमानयोगक्षेमत्वात् । नन्वथापि ईश्वरक्रियाविनाशाभावो न युक्तः । बाधकसद्भावात् । तथाहि । यदि सृष्टिसमये संहारादिक्रिया विद्येत तदा तथैव श्रुत्यादावुपलभ्येत । जननविनाशौ च घटस्य युगपत्स्याताम् । क्रियायाः संयोगविभागौ प्रति अनपेक्षकारणत्वेन तदुत्पत्तिसातत्यप्रसङ्गश्चेत्यत आह– **तच्छक्तेरिति** ॥ क्रियाशक्तेः पूर्वकालमारभ्य सत्वात् । अस्त्येव सृष्टिसमयेऽपि संहारक्रिया संहारसमयेऽपि सृष्टिक्रिया । नचोक्तदोषः । तत्कार्यजननशक्तेरेव क्रियात्वात् । तस्याश्च पूर्वकालमारभ्य सदा सत्वात् । अभिव्यक्ताया एव तस्यास्तत्तद्-व्यवहारविषयत्वतत्तत्कार्यजनकत्वाद्यङ्गीकारात् । तथाच संहारसमये सर्जनक्रिया-शक्तिसद्भावेऽपि न श्रुत्यादौ तथोपलम्भप्रसङ्गः । व्यक्तिरूपेणैव व्यवहारा-

लम्बनत्वात् । व्यक्त्यवस्थाया एव शक्तेर्जनकत्वेन जननविनाशयौगपद्यासम्भवः । अत एव न संयोगविभागसातत्यप्रसङ्गश्चेति भावः । ननु केयं शक्तेर्व्यक्तिर्नाम । न तावत्प्रतीतिः । ईश्वरापेक्षया नित्यसिद्धत्वेनोक्तदोषानुषक्तेः । परापेक्षया कदाऽप्यभावात् । भावेऽपि च कार्योत्पादनस्य तदनपेक्षत्वात् । अत एव नाऽवरणनिवृत्तिर्व्यक्तिरिति । मैवम् । व्यक्तिशब्देन शक्तेरेवावस्थाविशेषस्य विवक्षितत्वात् । ननु अभिव्यक्तायाः सर्जनक्रियाशक्तेः संहारसमये किमुपरतिरस्ति न वा । नो चेद् उक्तदोषानिस्तारः । आद्ये तु कथं क्रियाविनाशाभावः । उपरतेर्विनाशरूपत्वात् । नच व्यक्तेर्विनाशेऽपि क्रियाशक्तिनाशो नास्तीति वाच्यम् । तयोरभेदस्य वक्ष्यमाणत्वात् । लाघवेन क्रियाया एवानित्यत्वस्वीकारोपपत्तेश्च । 'केवलाभेद आत्मनि' इत्युक्तव्याघाताच्चेत्यत आह– **विशेष एवेति** ।। तच्छक्तेः पूर्वकालत इति अत्राप्यनुवर्तते । अस्त्येवाभिव्यक्तायाः सर्जनादिक्रियाया उपरतिः । नचैवमुक्तदोषः । यत उपरतिर्नामावस्थाविशेष एव । न विनाश इत्यङ्गीकारादित्यर्थः ।।

**भाष्यम्—**

**विशेषस्य विशेषोऽन्यो नचैवास्ति कथञ्चन ।**
**स्वस्यापि तु विशेषश्च स्वयमेव भविष्यति ।।**
**यथा जनेर्जनिर्नान्या तस्या वस्तुजनिर्जनिः ।**
**तथाऽपि तु जनित्वात्सा सत्वं वस्तुन आनयेत् ।।**
**एवमेव विशेषोऽसौ विशेषान्तरवर्जितः ।**
**करोति न करोतीति विशेषव्यवहारकृत् ।।**
**व्यक्तिभावं गता या तु करोतीति स्वरूपिणी ।**
**शक्तिरूपस्थिता सैव क्रिया शक्तिरितीर्यते ।।**

**टिप्पणी—**

नन्वयमपि विशेषः कदाचिदुपरतो न वा । नेति पक्षे पूर्वोक्तदोषानुषङ्गः । आद्ये तस्यैव विनाशप्रसङ्गः । नच विशेषस्याप्युपरतिर्विशेष एव न विनाश

इति वाच्यम् । तस्मिन्नपि विशेषे उक्तविकल्पप्रसरेणानवस्थापातादित्यत आह– **विशेषस्येति** ॥ प्रकृतत्वानुसन्धानार्थश्चशब्दः । यदि विशेषस्यान्योऽपि विशेषोऽङ्गीक्रियते तदाऽनवस्था स्यात् । नचैवमित्यर्थः । तर्हि विशेषस्योपरतिः कथमित्यत आह– **स्वस्यापीति** ॥ एतदुपपादनाय दृष्टान्तमाह– **यथेति** ॥ घटादिवस्तुवत्तज्जनेरप्यनादित्वाभावाज्जनेरपि जनिरङ्गीकार्या । सा यदि घटादि-वस्तुजनेरन्या स्यात्तदा साऽप्येवमित्यनवस्था स्यादित्यत उक्तम्– **जनेरिति** ॥ वस्तुजनेर्जनिरन्या न भवति तेन च नानवस्थेत्यर्थः । तर्हि कथं जनेर्जनिरित्यत आह– **तस्या इति** ॥ तस्याः जनेः तज्जनिरेव जनिरित्यर्थः । घटो जायते घटजन्म जायत इत्यनयोः एकार्थत्वस्यैव लौकिकपरीक्षकसम्मतत्वादिति भावः । तर्हि स्वयमनुपलब्धसत्ता जनिः कथं घटादिवस्तुनः सत्वं सम्पादयेत् । उत्पत्तिक्रियायां हि सत्यां वस्तुनः सत्वप्राप्तिरित्यत उक्तम्– **तथाऽपीति** ॥ यद्यपि जनेर्जनिः वस्तुजनेरन्या न भवति । तथाऽपि सा जनिर्जनित्वाद् उभयजनित्वात् वस्तुनः स्वाख्यस्य घटादेश्च युगपदेव सत्वमानयेदित्यर्थः । दार्ष्टान्तिकमाह– **एवमेवेति** ॥ संहारसमये संहारं करोति सृष्टिं न करोतीत्यादिव्यवहारकृदित्यर्थः । ननु शक्तिरूपक्रियायाः व्यक्तिरूपक्रिया किं भिन्नाऽभिन्ना वा । आद्ये शक्तिरेव नित्या क्रियात्वनित्येत्यापन्नम् । द्वितीये त्वनिवृत्तः सदा संहारव्यवहारादिप्रसङ्ग इत्यत आह– **व्यक्तिभावमिति** ॥ करोतीति स्वरूपिणी करोतीति व्यवहारविशेषहेतुभूता । व्यक्तिभावं गता या क्रिया सैव शक्तिरूपस्थिता क्रियाशक्तिरितीर्यत इति योजना । या शक्तिरूपेण स्थिता क्रियाशक्तिरितीर्यते सैव व्यक्तिभावं गता सती करोतीति स्वरूपिणीति वा सम्बन्धः । तथाच शक्तिव्यक्त्योरभेदाङ्गीकारान्न भेदपक्षोक्तदोषः ॥

**भाष्यम्**—

> **सा च व्यक्तिस्तु जनिवत्क्रियाया रूपमेव तु ।**
> **तथाऽपि तु विशेषेण स्वरूपेण विशेषिणी ।**
> **जनेर्जनिवदेवासौ ज्ञातव्या व्यतिरेकतः ॥**

**टिप्पणी—**

उक्तमेव दृष्टान्तेनोपपादयति— **सा चेति** ॥ क्रियायाः शक्तिरूपायाः जनिवत् जनिक्रियाया जनिर्वस्तुजनिस्वरूपं यथेत्यर्थः। इदानीमभेदपक्षोक्तदोषमुद्धरति— **तथाऽपीति** ॥ शक्तिव्यक्त्योरभेदेऽपि सा व्यक्तिर्विशेषेण विशेषिणी विशेषव्यवहारहेतुः। विशेषश्चाभिन्नेऽपि भेदकार्यकारीति भावः। ननु सोऽपि विशेषो यदि विशेषिभ्यां भिन्नः तदा शक्तिव्यक्त्योरेव भेदः किं न स्याद् इत्याशङ्कापरिहाराय स्वरूपेणेत्युक्तम्। विशेषिस्वरूपेणेत्यर्थः। व्यक्तिस्वरूप-क्रियायाः शक्त्यभिन्नत्वेऽपि विशेषबलादेव विशेषव्यवहारहेतुत्वं दृष्टान्तेनो-पपादयति— **जनेरिति** ॥ प्रथमान्तात्तसिः। यथा जनेर्जनिर्वस्तुजन्यव्यतिरिक्ताऽपि एकैव जनिर्विशेषबलेन घटो जातो घटजनिर्जातेति व्यवहारविशेषहेतुः तथाऽसौ व्यक्तिरूपक्रिया शक्त्यव्यतिरिक्ताऽपि विशेषव्यवहारहेतुर्ज्ञातव्येत्यर्थः। ननु विशेषस्य विशेषिस्वरूपत्वेऽयं विशेषोऽयं विशेषीति व्यवहारानुपपत्तिः। नच तत्र विशेषान्तरबलात्तदुपपत्तिः। तस्याप्यभिन्नत्वे विशेषविशेषिभावव्यवहाराय विशेषान्तराङ्गीकारेऽनवस्थापातादित्यतो वाऽऽह— **जनेरिति** ॥ ज्ञातव्येति लिङ्गव्यत्यासः। असौ विशेषो विशेष्यव्यतिरेकोऽपि जनेर्जनिवदेव ज्ञातव्यः। यथा वस्तुजनेर्जनिर्वस्तुजनेरन्या न भवति। किन्तु वस्तुजनिरेव जनेर्जनिः। एवं विशेषस्य नान्यो विशेषः। किन्तु स एव विशेषः स्वस्यापि विशेषः। तथाच स्वनिर्वाहकत्वाङ्गीकारान्नानुपपत्तिरिति भावः ॥

**भाष्यम्—**

[मुक्तानां क्रिया अपि नित्याः]

**एवं मुक्तक्रिया नित्या नान्येषां भ्रान्तिसम्भवात् ॥**
**मुक्तावुच्छेदतश्चैव निःशेषेणाखिलस्य च।**
**नैवं मुक्तक्रियायास्तु तस्याश्च पुनरुद्भवात् ॥**
**अमुक्तानां क्रिया याश्च मुक्तावपि समास्थिताः।**
**अभिन्ना इति ता ज्ञेया अभिव्यक्तेः पुनःपुनः ॥**

**चिन्तनादिक्रियाणां तु मुक्तावुच्छेदतः सदा ।**
**किं मया कार्यमादीनां भेदाभेद उदीरितः ॥**
**अचेतनेष्वस्वतन्त्राः क्रिया यस्मात्सदैव तु ।**
**भेदाभेदस्ततो ज्ञेयः सर्वत्र नियमेन तु ॥**
**ईश्वरः प्रकृतिर्जीवो जडं चेति चतुष्टयम् ।**
**पदार्थानां समुद्दिष्टं तत्रेशो विष्णुरुच्यते ॥ इत्यादि ब्रह्मतर्के ॥**

**टिप्पणी—**

एवमीश्वरक्रियानित्यत्वमुपपाद्य तेनैव न्यायेन मुक्तक्रियानित्यत्वमप्युपपादनीय-मित्याह– **एवमिति** ॥ तथाचेश्वरस्य मुक्तस्य च स्वक्रियाभिरैक्यमुपपन्नमिति भावः । 'भेदाभेदस्तु बद्धानाम्' इत्यमुक्तक्रियाणां भेदाभेदोऽभिहितस्तत्साधयितुं प्रतिजानीते– **नान्येषामिति** ॥ क्रिया नित्येत्यनुवर्तते । कुत इत्यत आह– **भ्रान्तीति** ॥ नामुक्तक्रिया नित्या तस्या भ्रान्त्योत्पत्तेरित्यर्थः । यद्यप्युत्पन्नत्वादित्येव वक्तव्यं तस्यैव नित्यत्वाभावे हेतुत्वात् । 'तथाऽप्युत्पत्तौ कारणप्रदर्शनार्थं भ्रान्तीत्युक्तम् । हेत्वन्तरमाह– **मुक्ताविति** ॥ अमुक्तकर्मणो मुक्तावेवोच्छेदतश्च न नित्यत्वमित्यर्थः । संसार एव जागरावस्थायां चिन्तनादिकर्मव्यक्तेरुच्छेदात् मुक्ताविति किमर्थमुक्तमित्यत आह– **अखिलस्येति** ॥ इदानीमेकैककर्म-व्यवच्छेदेऽपि अखिलस्य च कर्मणो न व्युच्छेद इत्यर्थः । सुषुप्तावखिलस्यापि चिन्तनादिकर्मण उच्छेदोऽस्त्येवेति किमर्थं मुक्तावित्युक्तमित्यत आह– **निःशेषेणेति** ॥ सुषुप्तौ तु न निःशेषेण तदुच्छेदः । वासनायाः सत्वात् । अन्यथा पुनरुद्भवानुपपत्तेः । वक्ष्यति च 'वासनाया हि पुनरुद्भवः' इति । मुक्तौ तु निःशेषेणैव तदुच्छेदः । पुनरुद्भवाभावेन वासनाया अप्यभावादिति भावः । नन्वेवं मुक्तक्रियाया अपि नित्यत्वमयुक्तम् । मुक्तो यदा क्रियान्तरं करोति तदा पूर्वक्रियोच्छेदावश्यम्भावादित्यत आह– **नैवमिति** ॥ मुक्तक्रियायाश्चैवममुक्तक्रियावद् उच्छेदो नास्तीत्यर्थः । क्रियान्तरकरणकाले क्रियान्तराभावात् कथं नोच्छेद इत्यत आह– **तस्याश्चेति** ॥ क्रियान्तर-

करणकालेऽपि न क्रियान्तरस्योच्छेदः । तस्या एव क्रियायाः पुनरुद्भवात् किन्तु शक्त्यात्मनाऽवस्थितिरेवेति भावः । नन्वमुक्तक्रियाणां मुक्तावुच्छेदेन नित्यत्वाभावे मुक्तक्रियाणामपि नित्यत्वं न युज्यते । अमुक्तक्रियाणामेव मुक्तौ भावात् । नहि मुक्तावागन्तुकक्रियाः सन्ति । नच तासां नित्यत्वं युक्तमित्यत आह– **अमुक्तानामिति** ।। तर्हि कासाममुक्तक्रियाणां मुक्तावुच्छेदो भेदाभेदश्चेत्यत आह– **चिन्तनादीति** ।। किं मया कार्यमित्येवमादिरूपाणां चिन्तनादिक्रियाणामिति सम्बन्धः । चिन्तनादिक्रियासद्भावदशायाम् अभेदः तदभावदशायां भेद इति प्रतीतिनिरासाय सदा भेदाभेद इत्युक्तम् । नन्वमुक्तानां यथा स्वक्रियाभिरत्यन्ताभेदो भेदाभेदश्च तथाऽचेतनानामपि स्वक्रियाभि-रप्यत्यन्ताभेदो भेदाभेदश्चेति द्वयमप्यस्ति किम् नेत्याह– **अचेतनेष्विति** ।। अस्वतन्त्राः परसापेक्षोत्पत्तिकाः इत्यर्थः । अत एव विनाशवत्यश्च । सर्वत्राचेतनेष्विति सम्बन्धः । नियमेन भेदाभेदो नत्वत्यन्ताभेद इत्यर्थः । ननु विष्णुमुक्तामुक्तजडानामेव धर्मा विचारिताः । तदतिरिक्तपदार्थधर्मविचारः कस्मान्न क्रियत इति चेत् तदभावादेवेत्याह– **ईश्वर इति** ।। प्रकृतिग्रहणं मुक्तोपलक्षणार्थम् । जीव इत्यमुक्तग्रहणम् । ननु विष्णुधर्म एवात्र विचारितो नत्वीशधर्म इत्यत आह– **तत्रेति** ।।

**भाष्यम्**—

**'पराऽस्य शक्तिर्विविधैव श्रूयते**
**स्वाभाविकी ज्ञानबलक्रिया च ।।' इत्यादिश्रुतयश्च ।।**

**शक्तिशक्तिमतोश्चैव विशेषस्य विशेषिणः ।**
**अविनाभाविता यत्र न भेदस्तत्र विद्यते ।।**

**टिप्पणी**—

ननु विष्णुमुक्तक्रियावदमुक्ताचेतनक्रियाणामपि नित्यत्वमेव कुतो नाङ्गीक्रियते । शक्तिव्यक्तिरूपेण व्यवहारविशेषोपपादनसम्भवात् । किमर्थमनित्यत्वं वाच्यमिति

चेत् । स्यादेवं यदि तन्नित्यतायां प्रमाणं स्यात् । सति निर्बाधप्रमाणे तद्विपरीतव्यवहारेषु च तदन्यथानुपपत्त्या कल्पनैषा प्रभवति । नच घटादिक्रियानित्यत्वे निर्बाधं प्रमाणमस्ति । अस्ति तु परमेश्वरक्रियानित्यत्वे तदित्याह– **परास्येति** ॥ स्वाभाविकी यावद्द्रव्य-भाविनी । आदिपदेन 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः' इत्यादिसङ्ग्रहः । मुक्त-क्रियानित्यताप्रतिपादकप्रमाणसङ्ग्रहश्च । प्रागनुक्तत्वेनात्यन्ताभेदस्थलं भेदाभेद-स्थलं चान्यद्दर्शयन् 'अविनाभावनियमो यत्राभेदस्तु तत्र हि' इत्युक्तार्थे प्रमाणमाह– **शक्तीति** ॥ यद्वा, 'पराऽस्य शक्तिः' इति शक्तिशक्तिमतोर्भेदव्यवहारेण भेदो न मन्तव्य इत्याह– **शक्तीति** ॥ विशेषस्य विशिष्टस्य विशेषिणोर्विशेष्यस्य यत्र परस्परमविनाभाविता तत्रैव न भेदः । अन्यत्र तु भेदोऽस्तीत्यर्थः । शक्तिशक्तिमतोर्विशिष्टविशेष्ययोश्चाभेदो वर्तत इति सिद्धवत्कृत्य भेदे विशेषोऽय-मुक्तः । ननु शक्तिशक्तिमतोर्विशिष्टविशेष्ययोश्च भेदाभावे कथं भेदव्यवहार इति चेत् । विशेषबलादेवेति ब्रूमः । सोऽपि विशेषः किं विशेषिणा भिन्नोऽभिन्नो वेति जिज्ञासायां चाऽह– **विशेषस्येति** ॥

**भाष्यम्—**

> **सर्वाधिकसुखत्वं च ज्ञानं सर्वाधिकं तथा ।**
> **सर्वाधिका सर्वशक्तिस्तेजः सर्वाधिकं तथा ॥**
> **इत्यादयो गुणास्सर्वे स्वरूपं वैष्णवं तथा ।**
> **भेदान्यत्वादयः शब्दा अतद्रूपत्ववाचकाः ॥**
> **क्वचिदन्तरशब्दश्च विशेषस्यैव वाचकः ।**
> **एकस्मिन्नेव शब्दानां यस्तु नानास्वरूपिणाम् ॥**
> **प्रयोजकत्वहेतुः स्यात्स विशेषः प्रकीर्तितः ॥ इति च ॥**

**टिप्पणी—**

विष्णुगुणानां तत्स्वरूपत्वे प्रमाणान्तरमाह– **सर्वेति** ॥ सर्वाधिकं सुखं यस्यासौ सर्वाधिकसुखः । तस्य भावः सर्वाधिकसुखत्वम् । सर्वविषया

करणकालेऽपि न क्रियान्तरस्योच्छेदः । तस्या एव क्रियायाः पुनरुद्भवात् किन्तु शक्त्यात्मनाऽवस्थितिरेवेति भावः । नन्वमुक्तक्रियाणां मुक्तावुच्छेदेन नित्यत्वाभावे मुक्तक्रियाणामपि नित्यत्वं न युज्यते । अमुक्तक्रियाणामेव मुक्तौ भावात् । नहि मुक्तावागन्तुकक्रियाः सन्ति । नच तासां नित्यत्वं युक्तमित्यत आह– **अमुक्तानामिति** ।। तर्हि कासाममुक्तक्रियाणां मुक्तावुच्छेदो भेदाभेदश्चेत्यत आह– **चिन्तनादीति** ।। किं मया कार्यमित्येवमादिरूपाणां चिन्तनादिक्रियाणामिति सम्बन्धः । चिन्तनादिक्रियासद्भावदशायाम् अभेदः तदभावदशायां भेद इति प्रतीतिनिरासाय सदा भेदाभेद इत्युक्तम् । नन्वमुक्तानां यथा स्वक्रियाभिरत्यन्ताभेदो भेदाभेदश्च तथाऽचेतनानामपि स्वक्रियाभि-रप्यत्यन्ताभेदो भेदाभेदश्चेति द्वयमप्यस्ति किम् नेत्याह– **अचेतनेष्विति** ।। अस्वतन्त्राः परसापेक्षोत्पत्तिकाः इत्यर्थः । अत एव विनाशवत्यश्च । सर्वत्राचेतनेष्विति सम्बन्धः । नियमेन भेदाभेदो नत्वत्यन्ताभेद इत्यर्थः । ननु विष्णुमुक्तामुक्तजडानामेव धर्मा विचारिताः । तदतिरिक्तपदार्थधर्मविचारः कस्मान्न क्रियत इति चेत् तदभावादेवेत्याह– **ईश्वर इति** ।। प्रकृतिग्रहणं मुक्तोपलक्षणार्थम् । जीव इत्यमुक्तग्रहणम् । ननु विष्णुधर्म एवात्र विचारितो नत्वीशधर्म इत्यत आह– **तत्रेति** ।।

**भाष्यम्—**

> **'पराऽस्य शक्तिर्विविधैव श्रूयते**
> **स्वाभाविकी ज्ञानबलक्रिया च ।।' इत्यादिश्रुतयश्च ।।**
>
> **शक्तिशक्तिमतोश्चैव विशेषस्य विशेषिणः ।**
> **अविनाभाविता यत्र न भेदस्तत्र विद्यते ।।**

**टिप्पणी—**

ननु विष्णुमुक्तक्रियावदमुक्ताचेतनक्रियाणामपि नित्यत्वमेव कुतो नाङ्गीक्रियते । शक्तिव्यक्तिरूपेण व्यवहारविशेषोपपादनसम्भवात् । किमर्थमनित्यत्वं वाच्यमिति

चेत् । स्यादेवं यदि तन्नित्यतायां प्रमाणं स्यात् । सति निर्बाधप्रमाणे तद्विपरीतव्यवहारेषु च तदन्यथानुपपत्त्या कल्पनैषा प्रभवति । नच घटादिक्रियानित्यत्वे निर्बाधं प्रमाणमस्ति । अस्ति तु परमेश्वरक्रियानित्यत्वे तदित्याह– **परास्येति** ॥ स्वाभाविकी यावद्द्रव्य-भाविनी । आदिपदेन 'ज्ञानं नित्यं क्रिया नित्या बलं शक्तिः परात्मनः' इत्यादिसङ्ग्रहः । मुक्त-क्रियानित्यताप्रतिपादकप्रमाणसङ्ग्रहश्च । प्रागनुक्तत्वेनात्यन्ताभेदस्थलं भेदाभेद-स्थलं चान्यद्दर्शयन् 'अविनाभावनियमो यत्राभेदस्तु तत्र हि' इत्युक्तार्थे प्रमाणमाह– **शक्तीति** ॥ यद्वा, 'पराऽस्य शक्तिः' इति शक्तिशक्तिमतोर्भेदव्यवहारेण भेदो न मन्तव्य इत्याह– **शक्तीति** ॥ विशेषस्य विशिष्टस्य विशेषिणोर्विशेष्यस्य यत्र परस्परमविनाभाविता तत्रैव न भेदः । अन्यत्र तु भेदोऽस्तीत्यर्थः । शक्तिशक्तिमतोर्विशिष्टविशेष्ययोश्चाभेदो वर्तत इति सिद्धवत्कृत्य भेदे विशेषोऽय-मुक्तः । ननु शक्तिशक्तिमतोर्विशिष्टविशेष्ययोश्च भेदाभावे कथं भेदव्यवहार इति चेत् । विशेषबलादेवेति ब्रूमः । सोऽपि विशेषः किं विशेषिणा भिन्नोऽभिन्नो वेति जिज्ञासायां चाऽह– **विशेषस्येति** ॥

**भाष्यम्**——

> **सर्वाधिकसुखत्वं च ज्ञानं सर्वाधिकं तथा ।**
> **सर्वाधिका सर्वशक्तिस्तेजः सर्वाधिकं तथा ॥**
> **इत्यादयो गुणास्सर्वे स्वरूपं वैष्णवं तथा ।**
> **भेदान्यत्वादयः शब्दा अतद्रूपत्ववाचकाः ॥**
> **क्वचिदन्तरशब्दश्च विशेषस्यैव वाचकः ।**
> **एकस्मिन्नेव शब्दानां यस्तु नानास्वरूपिणाम् ॥**
> **प्रयोजकत्वहेतुः स्यात्स विशेषः प्रकीर्तितः ॥ इति च ॥**

**टिप्पणी**——

विष्णुगुणानां तत्स्वरूपत्वे प्रमाणान्तरमाह– **सर्वेति** ॥ सर्वाधिकं सुखं यस्यासौ सर्वाधिकसुखः । तस्य भावः सर्वाधिकसुखत्वम् । सर्वविषया

शक्तिः सर्वशक्तिः । यद्वा, शक्तिशक्तिमतोर्विशिष्टविशेष्ययोश्चात्यन्ताभेदे उदाहरणमाह– **सर्वाधिकेति** ॥ अत्र सर्वाधिका सर्वशक्तिरित्येतत् शक्तिशक्तिमतोरभेदोदाहरणम् । अन्यद्विशिष्टविशेष्ययोरिति विवेकः । अत्र सर्वाधिकसुखत्वादिकं विशिष्टं द्रव्यम् । अत एव तत्वविवेकटीकायां 'विष्णोः सार्वज्ञस्य च' इति विशिष्टशुद्धयोरत्यन्ताभेदोदाहरणं तद्दर्शितम् । शक्तिशक्तिमतोर्भेदाभेदो यथा– देवदत्तस्य गमनादिशक्त्या । सत्यपि देवदत्ते तन्नाशात् । विशिष्टविशेष्ययोर्भेदाभेदो यथा– पर्वतस्याग्निमत्त्वेन । पर्वतसद्भावेऽप्यग्न्यभावात् । विशेषविशेषिणोश्चात्यन्ताभेदोदाहरणं स्वरूपेषु विशेषो यः स्वरूपं तस्येत्युक्तमेव । चूतफलपीतत्वाभ्यां तन्निष्ठविशेषस्य भेदाभेदौ । ननु यदि विशेषोऽपि भेदकार्यकारी तर्हि भेदाद्विशेषस्य किं वैलक्षण्यम्? येन भेदपरित्यागेन विशेषोऽङ्गीकार्य इत्यतः तयोर्वैलक्षण्यप्रदर्शनाय भेदशब्दार्थमाह– **भेदेति** ॥ आदिशब्देनान्तरादिशब्दग्रहणम् । ननु 'अन्योऽन्तर आत्मा प्राणमयः' इत्यादौ अन्यान्तरादिशब्दानाम् अतद्रूपत्ववाचकत्वं न युक्तम् । प्राणमयादीनामन्नमयादिपरमात्मस्वरूपत्वादित्यत आह– **क्वचिदिति** ॥ चशब्दादन्यशब्दश्च । यद्वा, भेदहीनेऽप्यवकाशे देशान्तरदेशभेदशब्दप्रयोगोऽस्तीति कथमेतदित्यत आह– **क्वचिदिति** ॥ चशब्दः भेदशब्दः । इदानीं विशेषस्वरूपमाह– **एकस्मिन्नेवेति** ॥ भेदहीन एवार्थे नानास्वरूपिणामपर्यायाणां शब्दानां प्रयोजकत्वहेतुः प्रयोगघटको यः स विशेष इति सम्बन्धः ॥

**भाष्यम्—**

**['अहं ब्रह्मास्मि' इत्यस्य ऐक्यपरत्वाभावे प्रमाणानि]**

**यदाहुर्ब्रह्मविज्ञानात्समग्रत्वं यियासवः ।**
**ब्रह्मज्ञानात्समग्रत्वं नान्यतश्चेति निश्चयात् ॥**
**तत्र केचिन्मनुष्यास्तु मन्यन्ते ब्रह्म किं मतेः ।**
**समग्रभावमगमदिति ब्रूयाच्च तानिति ॥**

**ब्रह्मापि सर्वदाऽऽत्मानमहेयं गुणबृंहितम् ।**
**सर्वदाऽस्तीति मेयं च विजानाति तथैव तु ॥**

**टिप्पणी**—

एवं जीवब्रह्मैक्यस्याप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च न तत्परत्वेन 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदहं ब्रह्मास्मि' इति वाक्यं व्याख्येयमित्युक्तम् । इदानीं तद्व्याख्यानरूपप्रमाणविरुद्धत्वान्न तद्व्याख्यानं युक्तमित्याशयेन 'तदाहुर्यद्ब्रह्मविद्यया' इत्यादिखण्डव्याख्यानरूपं प्रमाणमुदाहरति– **यदाहुरित्यादिना** ॥ तत्र 'तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्त' इति वाक्यमन्वयं दर्शयन् व्याचष्टे– **यदाहुरिति** ॥ सर्वमित्यस्यार्थः– **समग्रत्वमिति** ॥ स्वयोग्यतापूर्णत्वमित्यर्थः । भविष्यन्त इत्येतस्य यियासव इति । किमाहुरित्याशङ्का-निवर्तकत्वेन 'ब्रह्मविद्यया सर्वम्' इत्येतदेव व्याचष्टे– **ब्रह्मज्ञानादिति** ॥ समग्रत्वं स्वयोग्यतापूर्णत्वं प्राप्यत इति शेषः । ब्रह्मविद्ययेत्येतत्सावधारणमिति भावेनोक्तम्– **नान्यत इति** ॥ निश्चयाद् यदाहुरिति सम्बन्धः । तदाहुरिति तच्छब्दस्य मनुष्या मन्यन्त इत्यनेन सम्बन्धमभिप्रेत्य व्याचष्टे– **तत्रेति** ॥ किं मन्यन्त इत्याशङ्कानिवर्तकं 'किमु तद् ब्रह्मावेत्' इति वाक्यं व्याचष्टे– **ब्रह्मेति** ॥ मतेः स्वात्मज्ञानादित्यर्थः । इति मन्यन्त इति सम्बन्धः । 'तदात्मानमेवावेत्' इत्यादेः परिहारपरत्वप्रतीत्यर्थमपेक्षितमध्याहरति– **ब्रूयादिति** ॥ न केवलं स्वयमेव जानीयात् । किन्तु तान् प्रतीति वक्ष्यमाणप्रकारेण ब्रूयाच्च । चोऽवधारणे वा । इत्येवं ब्रूयादिति सम्बन्धः । तत्परिहारत्वेन 'तदात्मानमेवावेदहं ब्रह्मास्मि' इति वाक्यं व्याचष्टे– **ब्रह्मापीति** ॥ न केवलमधिकारी किन्तु ब्रह्मापीत्यर्थः । तथाशब्दः समुच्चये । गुणबृंहितं चेति सम्बन्धः । विजानात्येवेत्यन्वयः । अवेदिति प्रयोगाज्ज्ञानस्य कादाचित्कत्व-शङ्कापरिहाराय सर्वदा विजानातीत्युक्तम् ।

**भाष्यम्—**

**अत एव समग्रत्वं स्वत एवास्य सर्वदा ।**
**तदहेयं परं ब्रह्म यो योऽवेद् गुणबृंहितम् ॥**
**सर्वदाऽस्तीति मेयं च स स याति समग्रताम् ।**
**मुख्यं समग्रं तद् ब्रह्म ज्ञानस्यापि समग्रतः ॥**
**किञ्चित्समग्रतां देवास्तेषां ज्ञानं हि तादृशम् ।**
**आपुस्ततोऽधमां ज्ञानतादृक्त्वाद् ऋषयोऽपि तु ॥**
**ऋषिभ्योऽप्यधमां प्रापुर्मानुषाश्च समग्रताम् ।**

**टिप्पणी—**

'तस्मात्सर्वमभवत्' इति वाक्यं व्याचष्टे– **अत एवेति** ॥ अधिकारिसमग्रत्ववत् नेदं ब्रह्मज्ञानजन्यमिति भावेनोक्तम्– **सर्वदेति** ॥ अभवदिति प्रयोगेण सर्वभावस्य कादाचित्कत्वपरिहारोऽप्यनेन जातः । लक्ष्मीव्यावृत्त्यर्थं स्वत एवेति । तत्तत्र देवानां मध्ये यो यो देवः आत्मानं प्रत्यबुद्ध्यत । बोधनात् स एव देवः तद् ब्रह्माभवदित्यपव्याख्याननिरासाय 'तद्यो यः प्रत्यबुद्ध्यत स एव तदभवद्' इत्येतत्तावद् व्याचष्टे– **तदहेयमिति** ॥ तदित्यनुवादेनाहेयमित्यादि व्याख्यानम् । श्रुतौ यच्छब्दे वीप्सासत्वात्वादत्र तच्छब्देऽपि सा दर्शिता । तदभवदित्यस्यार्थः– **समग्रतां यातीति** ॥ नन्वहेयत्वादिप्रकारकब्रह्मज्ञानेन ब्रह्म यादृशं समग्रत्वं प्राप्तम् अन्योऽपि तादृशमेव प्राप्नोति किमित्यत आह– **मुख्यमिति** ॥ तत्र हेतुमाह– **ज्ञानस्यापीति** ॥ समग्रत्वतः । यद्यन्यस्याप्येतादृशमेव समग्रत्वं तर्हि को विशेष इत्यतः 'तद् यो यो देवानां तथर्षीणां तथा मनुष्याणाम्' इति क्रमोक्तेर्भावमाह– **किञ्चित्समग्रतामिति** ॥ तत्र हेतुः– **तेषामिति** ॥ ऋषयस्तु ततो देवेभ्योऽप्यधमा समग्रताम् आपुः । तत्र हेतुः– **ज्ञानतादृक्त्वादिति** ॥ अयं हेतुरुत्तरत्रापि सम्बद्ध्यते । अनेन श्रुतौ न केवलं तथाशब्दद्वयं समुच्चयार्थकम् । किन्तु यथा प्रत्यबुद्ध्यत तथा तदभवदित्यपि व्याख्यातं भवति ॥

**भाष्यम्—**

अहेयं च गुणैः पूर्णं नित्यास्तिज्ञानगोचरम् ॥
ब्रह्म पश्यन् वामदेवः सूक्तमेतद्ददर्श ह ।
अहं मनुः सूर्य इति स्वान्तर्यामिव्यपेक्षया ॥
अहंशब्दो यतो विष्णौ ततश्चोत्तमपूरुषाः ।
वर्तन्तेऽभवमित्याद्याः सर्वान्तस्थे जनार्दने ॥
मनुरेषोऽवबोधत्वान्मन्वन्तस्थो जनार्दनः ।
स ह्याचारानुवाचेशः प्रेरयन्मनुमानसम् ॥
स एव सूरिभिः प्राप्यः सूर्यान्तस्थो मुमुक्षुभिः ।
स एव कक्षगैः सेव्यः कक्षीवति समास्थितः ॥
स एव शुक्रसंस्थस्तु नीतीः कवयति स्वयम् ।
यतः कविः स कामस्य प्रेरणादुशना स्मृतः ॥
स एव शम्बरपुरो बिभेदेन्द्रे व्यवस्थितः ।
सर्वान्तर्यामकत्वात्तु सर्वकर्मा स एव हि ॥

**टिप्पणी—**

तद् ब्रह्मैतदात्मानमेवाहं ब्रह्मास्मीति पश्यन्निति व्याख्यानमसत् । पुल्लिङ्गात्मशब्देन प्रकृतस्याऽत्मनो नपुंसकलिङ्गैतच्छब्देन परामर्शायोगादिति भावेन 'तद्धैतत्पश्यन्' इत्यादिवाक्यं व्याचष्टे—**अहेयमिति** ॥ एतच्छब्दार्थः **अहेयमित्यादि** ॥ तच्छब्दार्थः— **ब्रह्मेति** ॥ इत्येतत्सूक्तमिति सम्बन्धः । नन्वत्र सूक्ते वामदेवस्य मन्वादिभाव एव प्रतिपाद्यते । नतु ब्रह्म । तत्कथम् अतदर्थं ब्रह्म पश्यन् तत्सूक्तं ददर्शेति युज्यते । तदर्थज्ञानस्यैव तत्प्रतिपादकशब्दस्मृतिहेतुत्वादित्यतः सूक्ततात्पर्यमाह— **स्वान्तर्यामीति** ॥ अन्यथा त्वत्पक्षेऽपि वामदेवस्य मन्वादित्वाभावादनुपपत्तिः । नचेदानीं विशिष्टैक्याभावेऽपि मोक्षे स्वरूपैक्यविवक्षया तथोक्तिरिति वाच्यम् । सर्वप्रवृत्तिहीने मोक्षे 'अहं भूमिमददाम् आर्याय' इत्यादिप्रवृत्तिवचनानुपपत्तेरिति भावः । ननु यदीदं सूक्तं स्वान्तर्यामिव्यपेक्षया

प्रवृत्तं तर्ह्यभवमस्मीत्याद्युत्तमपुरुषप्रयोगो न स्यात् । स हि वामदेवापेक्षया भवतीत्यत आह– **अहंशब्द इति** ।। सर्वान्तःस्थे विष्णाविति सम्बन्धः । अहंशब्दोऽस्मदादेशरूपः । अस्मद्युत्तम इति उत्तमपुरुषप्रयोगस्यास्मदादेशोपपदे विहितत्वादिति भावः । आदिपदेनास्मीत्यादेर्ग्रहणम् । ननु वामदेवान्तर्यामिणोऽपि मनुसूर्यादिभिः अभेदाभावात्कथं 'अहं मनुरभवम्'इत्याद्युक्तिरिति चेन्न । मनुसूर्यादिशब्दानामपि विष्णुपरत्वादिति भावेन 'अहं मनुरभवं सूर्यश्चाहं कक्षी वाँ ऋषिरस्मि विप्रः' इति वाक्यगतमनुसूर्यकक्षीवच्छब्दान् विष्णौ निर्वक्ति– **मनुरिति** ।। स्वायम्भुवादौ योगरूढिभ्यां प्रवर्तमानस्य मनुशब्दस्य तदन्तःस्थे योगमुक्त्वा रूढिमुपपादयति– **स हीति** ।। हिशब्दः प्रसिद्ध्यर्थः । यद्वा प्रकारान्तरेण मनुशब्दं निर्वक्ति– **स हीति** ।। हिशब्दो हेतौ । आचारश्चानुवाचा वेदानुसारिवाचा च आचारानुवाचे तयोरीशः । अनुवाचेति टाबन्तम् । 'टापं चापि हलन्तानां यथा वाचा निशा दिशा' इत्युक्तेः[१] । स्वायम्भुवादौ मनुशब्दप्रवृत्तावाचारानुवाचेशत्वं निमित्तम् । तच्च तदंशस्थेऽपि वर्तते । तत्कथमित्यत उक्तम्– **प्रेरयन्निति** ।। स एव सूर्य इति शेषः । कक्षं वनमेषामस्तीति कक्षिणः । ते यस्य सन्ति स कक्षीवान् ऋषिः तस्मिन् समास्थितः । स एव यतो मुमुक्षुभिः कक्षगैर्वनस्थैः सेव्यः अतः कक्षीवानित्यर्थः ।।

ततश्चायं श्रुत्यर्थः । अहं मदन्तर्यामी मनुर्बोधनादिना मनुनामको मन्वन्तः-स्थोऽभवम् । अहं सूर्यः सूरिप्राप्यत्वेन सूर्यनामकः सूर्यस्थश्चाभवम् । अहं कक्षीवान् ऋषिः कक्षगैः सेव्यत्वेन कक्षीवान्नामकः कक्षीवति ऋषौ समास्थितोऽस्मीति ।।

अहं कविरुशनेति वाक्यगतशब्दद्वयं व्याचष्टे– **स एवेति** ।। यतोऽत इति शेषः । उशं नयतीत्युशना । वश इच्छायामिति धातुः । वकारस्योकारः । तथाचाहं मदन्तर्यामी । उशना कामस्य प्रेरणाद् उशनानामकः । कविर्नीतीः कवयतीति कविनामकः शुक्रस्थोऽस्मीति श्रुतिवाक्यार्थ इति भावः । 'अहं

पुरो मन्दसानो व्यैरं नव साकं न वतीः शम्बरस्य' इत्यस्यार्थमाह– **स एवेति** ।। अहं मदन्तर्यामी इन्द्रे व्यवस्थितो मन्दसानः मन्देन मदेन हर्षेण सनोति भक्ताभिलषितं ददातीति मन्दसानः । नवा साकं नवतीः शम्बरस्य पुरो व्यैरं भेदितवानस्मीति श्रुत्यर्थ इति भावः । 'अहं कुत्समार्जुनेयं न्यृञ्जे' इत्यादेस्तात्पर्यमाह– **सर्वेति** ।। सर्वकर्मा सर्वकर्ता स्वान्तर्यामिणं मन्वाद्यन्तर्यामिणं च श्रियःपतिमुद्दिश्य तथाऽहं मनुरभवमित्याद्युवाचेत्यर्थः ।।

**भाष्यम्**——

**ततः सूक्ते तथोवाच वामदेवः श्रियः पतिम् ।**
**यो योऽहेयं परं ब्रह्म सदैवास्तीति मानगम् ।।**
**इदानीमपि जानाति स्वयोग्यां स समग्रताम् ।**
**प्राप्नोति तस्य देवाश्च नाभूतिं कर्तुमीशते ।।**
**आत्मा हि विष्णुर्देवानां तेषु व्याप्तो यतः सदा ।**
**नियोक्तृत्वेन कार्येषु तज्ज्ञो यस्माच्च साधकः ।।**
**यस्य प्रीतो हरिर्नित्यं तस्य प्रीताश्च देवताः ।**
**प्रीतियोगान्नैव तस्य विरुद्धं कर्तुमीशते ।।**

**टिप्पणी**——

'तदिदमप्येतर्हि य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति' इति वाक्यमन्यथाप्रतीतिनिरासाय व्याचष्टे– **य इति** ।। एतर्हीत्यस्यार्थः– **इदानीमिति** ।। 'तस्य ह न देवाश्च नाभूत्या ईशते' इति वाक्यं व्याचष्टे– **तस्येति** ।। चशब्दोऽपिशब्दार्थः । तेन च नेत्येतदुक्तार्थम् । अभूतिं विद्याफलविघातम् । कथमतिसमर्था देवा एतन्मात्रकरणेनेशत इत्याद्याशङ्कानिरासाय 'आत्मा ह्येषां सम्भवति' इति वाक्यं व्याचष्टे– **आत्मा हीति** ।। हिशब्दो हेत्वर्थः । आत्मशब्दस्य स्वरूपार्थत्वप्रतीतिनिरासायार्थमाह – **तेष्विति** ।। कार्येषु नियोक्तृत्वेन तेषु सदा व्याप्तो यतोऽतस्तेषामात्मेत्यन्वयः । नन्वस्तु विष्णुर्देवानामात्मा तथाऽपि कुतो देवास्तस्याभूतिं कर्तुं नेशत इत्यत आह– **तज्ज्ञ इति** ।।

यस्मात्साधको मोक्षसाधकः । तज्ज्ञो देवनियामकविष्णुज्ञानी । नन्वस्तु साधकस्य विष्णुज्ञानित्वं तथापि देवाः कुतः तदभूतिकरणासमर्थाः । नहि राजज्ञस्य यस्य कस्यचिदमात्यो नाभूतिकर्तेत्यत आह– **यस्येति** ।। ज्ञानिनः । ततश्च किम् । नहि राजप्रीतिविषयोऽपि कश्चिदमात्यबाध्यो न दृश्यते लोक इत्यत आह– **तस्येति** ।। देवाश्च न प्रसिद्धामात्यादिवत् स्वामिद्रोहकर्तार इति भावः । ततः किमित्यत आह– **प्रीतियोगादिति** ।। प्रीतियोगादेव नत्वसामर्थ्यादित्यर्थः ।।

**भाष्यम्**—

**एवं विलक्षणं देवमुपास्ते जीवरूपिणम् ।**
**अहेयोऽस्तीति मेयोऽन्योऽथान्योऽसौ हरिरित्यपि ।।**
**न स वेद परं विष्णुं जीवरूपेण वेत्ति यत् ।**
**नाहेयत्वं च वेदास्य तस्मात्पशुवदीरितः ।।**
**देवानां पशुवच्चासौ यो वेदाहेयरूपिणम् ।**
**पशवो बहवो यद्वत्पुरुषं भोजयन्त्युत ।।**
**तत्त्वज्ञः पुरुषस्तद्वदेकोऽपि बहुगा यथा ।**
**देवान् भोजयति ज्ञानसम्पत्त्या विष्णुसंश्रयात् ।।**
**स्वीकारे तु पशोः प्रीतिरेकस्यापि भविष्यति ।**
**बहूनां हि गवां लाभे परा प्रीतिश्च किं पुनः ।।**
**तस्मात्सुबहुगोरूपे देवानां तत्त्ववेदिनि ।**

**टिप्पणी**—

एवं परब्रह्माहेयत्वादिज्ञानिप्रशंसां कृत्वा मिथ्याज्ञानिनिन्दनाया 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः' इति वाक्यं प्रवृत्तम् । तत्परैर्व्याख्यातम्– यः कश्चिदब्रह्मवित् स्वात्मनोऽव्यतिरिक्तां देवतां अन्योऽहमुपास्य देवताया अन्योऽसौ मत्त उपासनीयो देव इत्येवं भेददृष्ट्योपास्ते स उपासकः उपास्योपासकयोः तत्वं न वेदेति । तदसत् । योऽन्यां

देवतामुपास्ते न स वेदेत्येतावता पूर्णत्वेनान्योऽसावित्यादिवाक्यवैयर्थ्यात्। अन्योऽसावन्योऽहमस्मीति य उपास्ते न स वेदेत्येतावता भेदज्ञाननिन्दा-लाभात्। पूर्ववाक्यवैयर्थ्याद्वा। 'विद्याऽऽत्मनि भिदा बोधः' इत्यादिप्रमाण-विरोधाच्चेति भावेन तद् व्याचष्टे– **एवमिति**॥ अथशब्दार्थः– **एवमिति**॥ देवनियामकत्वादिना। अन्यामित्यस्याऽवृत्तिमभिप्रेत्य विलक्षणमिति जीवरूपिण-मिति चोक्तम्। अथेत्यस्योत्तरत्रापि सम्बन्धमभिप्रेत्य अन्योऽसावन्योऽह-मस्मीत्यस्यार्थमाह– **अहेय इति**॥ अन्यः शबलब्रह्मरूप इति हरिः निर्गुण-ब्रह्मरूप इति। अथेत्यनुवादेन अपीति व्याख्यातम्। यद्वा अथशब्दश्चशब्दार्थः। तस्य चाऽवर्तितस्य मेयश्चेति हरिश्चेति सम्बन्धः। इत्युपास्त इति सम्बन्धः। ननु य उपास्ते स वेदेति कथम्? उपासनस्यैव ज्ञानत्वादित्यत उक्तम्– **परं विष्णुमिति**॥ परं विलक्षणमुत्तमं चेत्यर्थः। उभयत्रापि हेतुमाह– **जीवेति**॥ यथा पशुरित्यस्यार्थः– **तस्मात्पशुवदिति**॥ मनुष्यपशुवदित्यर्थः। 'एवं स देवानाम्'इति वाक्यं व्याचष्टे– **देवानामिति**॥ पशुवदित्यनेनैवं शब्दार्थ उक्तः। असौ क इत्यत उक्तम्– **यो देवेति**॥ यथाह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान् भुनक्तीति वाक्यं व्याचष्टे– **पशव इति**॥ भुञ्ज्युर्भुनक्तीत्येतदन्तर्णीतण्यर्थमिति भावेनोक्तम्– **भोजयन्तीति भोजयतीति च**॥ पशुशब्दो न हीनपशुपर इति भावेनोक्तमेव विवृतम्। बहुगा यथेति। गाः गावः। यद्वा एकस्य बहुदेवभोजकत्वं कथमित्यत आह– **एकोऽपीति**॥ बहुगा यथेति। एकैकस्मिन्नेव पशावादीयमाने प्रियं भवति किमु बहुष्विति वाक्यं व्याचष्टे– **स्वीकारे त्विति**॥ दार्ष्टान्तिके स्वयमुपपादयति– **तस्मादिति**॥ भोजकत्वादित्यर्थः।

**भाष्यम्—**

**भवेदभ्यधिका प्रीतिर्विष्णवहेयत्ववेदनात्॥**
**नित्याहेयस्तथैवान्यस्तदन्यो विष्णुरित्यपि।**
**देवानामप्रियं ज्ञानं नैवं विद्यादतः पुमान्॥**

**विष्णोरहेयतां चैव नित्यत्वं पूर्णतामपि ।**
**यो न वेद तथा यश्च जीवैरैक्यं हरेर्वदेत् ॥**
**यश्चासत्यं जगद् ब्रूयात्सर्वे ते तमसि स्फुटम् ।**
**निःशेषदुःखमोकेन सुखैकानुभवस्तु यः ॥**
**मोक्ष इत्युच्यते वेदैस्तेऽपि मुक्ता हरिं सदा ।**
**उपासते जगच्चैतत्सर्वदाऽऽद्यन्तवर्जितम् ॥**
**न कदाचिज्जगन्नाशो न कदाचित्तदन्यथा ।**
**जगत् प्रवाहरूपेण सर्वदैवं व्यवस्थितम् ॥**
**ज्ञानतः कर्मतो वाऽपि तपसा शक्तितोऽपि वा ।**
**न कस्याप्यन्यथा भाव्यं जगदेतत्कदाचन ॥**
**सत्यो विष्णुः श्रीश्च सत्या जीवाः सत्या जडं तथा ।**
**असत्यं नास्ति किञ्चिच्च सर्वेषां ज्ञानगोचरम् ॥**

**टिप्पणी—**

'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इति वाक्यं व्याचष्टे— **नित्याहेय इति** ॥ अपिशब्देन जीवाभिन्न इतीति समुच्चिनोति । देवानामप्रियत्वेऽपि कुतो नैवं ज्ञेयमिति चेत् तथा ज्ञानस्यानर्थहेतुत्वादित्याह— **विष्णोरिति** ॥ विष्णोरेवेति सम्बन्धः । यश्चासत्यमिति प्रसङ्गादुक्तम् । यद्वा, जगतः सत्यत्वेन तदन्तर्गताल्पज्ञत्वसर्वज्ञत्वादेरपि सत्यत्वात्कथं जीवैरैक्यं हरेरित्यत उक्तम्— **यश्चासत्यं जगदिति** ॥ यद्यप्येकस्यैव मायावादिनः उक्तं सर्वं विद्यते । तथाऽप्येकैकमपि तमःप्राप्तेर्हेतुः । किमु सर्वमिति भावेन यच्छब्दत्रयं ते सर्वे इति बहुवचनञ्चोक्तम् । ननु विष्णोः अहेयत्वादिगुणपूर्णत्वं यदि स्यात् तदज्ञानमनर्थहेतुर्भवेत् । तदेव कुतः? प्रमाणाभावादित्यत आह— **सर्ववेदैरिति** ॥ पूर्ण उच्यत इति वक्ष्यमाणमत्रापि सम्बद्ध्यते । हीति प्रसिद्धिमाह । यतः तस्मात्तदज्ञानमनर्थहेतुरित्यर्थः । ननु जीवब्रह्मैक्यज्ञानमनर्थहेतुरित्ययुक्तम् । तस्यैव सकलश्रुतितात्पर्यगोचरत्वेन तज्ज्ञानस्य अनर्थहेतुत्वायोगादित्यतः

श्रुतितात्पर्यविषयं वा दर्शयति– **सर्वेति** ॥ यद्वा, ननु यदि जीवब्रह्मणोर्भेदः स्यात्तर्हि भवेत्तदैक्यज्ञानमनर्थहेतुः । स एव कुत इति चेत् न । ब्रह्मणः पूर्णगुणत्वेन जीवस्य चापूर्णत्वेन श्रुतिसिद्धत्वादित्याह– **सर्वेति** ॥ अस्तु संसारदशायां विरुद्धधर्माध्यासेन भेदो न मुक्तावित्यत आह– **मुक्ता अपीति** ॥ ननु मुक्तानामपूर्णत्वे मुक्तेः पुरुषार्थत्वमेव न स्यादित्यत आह– **निःशेषेति** ॥ मुक्तेशयोः भेदकान्तरमाह– **तेऽपीति** ॥ उपासते इत्युच्यते वेदैरित्यनुवर्तते । यदि जगत्सत्यं स्यात्तर्हि तदसत्यत्वज्ञानमनर्थहेतुः स्यात् । एतदेव कुत इत्यतो जगत्स्वरूपमाह– **जगदिति** ॥ ननु जगतो विनाशात् कदाचिदन्यथाभावाद् एतज्जगदाद्यन्तवर्जितमिति कथमित्यत आह– **न कदाचिदिति** ॥ नाशो निवृत्तिर्बाध इति यावत् । आद्यन्तवर्जितत्वेऽपि नावान्तरवैचित्र्यमस्तीत्याह– **न कदाचित्तदिति** ॥ जगत आद्यन्तवर्जितत्वे भागे प्रत्यक्षादिविरोधः स्यादित्यत आह– **जगदिति** ॥ स्वतोऽन्यथाभावाभावेऽपि ब्रह्मज्ञानादिनान्यथाभावो भविष्यतीत्यत आह– **ज्ञानत इति** ॥ ननु विष्ण्वादीनामेवासत्यत्वाद् विष्ण्वहेयत्वाज्ञानादिकं कथमनर्थहेतुरित्यत आह– **सत्यो विष्णुरिति** ॥ सर्वस्यापि सत्यत्वे प्रत्यक्षमाह– **सर्वेषामिति** ॥

**भाष्यम्**—

**ज्ञात्वा विष्णुमतो मुक्तिं प्राप्नुयात्पुरुषोत्तमम् ॥**

**इति भविष्यत्पर्वणि ॥**

**इदमित्यात्मनो योग्यं सर्वं समग्रं भवति। निर्दुःखानन्दस्यापेक्षितत्वान्मनसि स्थितत्वेनेदमिति युज्यते । तत्सर्वमभवत्सर्वं भविष्यन्त इत्यादिना समग्रभावस्य प्रस्तुतत्वात् । ब्रह्म पश्यन् वामदेवो ब्रह्मणो मन्वादिजीवैरहेयत्वं प्रतिपेदे ।**

**ब्रह्म पश्यन् वामदेवो ब्रह्मणोऽहेयतां सदा।**
**मन्वादिभिः सर्वजीवैः प्रतिपेदे हि मन्त्रदृक् ॥ इति ब्राह्मे ॥**

**टिप्पणी—**

यद्येवं ज्ञानमनर्थहेतुः तर्हि कस्य ज्ञानं मोक्षहेतुरित्यत आह–**ज्ञात्वेति** ॥ अतः अन्यथाज्ञानस्यानर्थहेतुत्वात् । 'स इदं सर्वं भवति' इत्यस्य स्वयोग्यसमग्रतां प्राप्नोतीति व्याख्यानमयुक्तम् । तद्वाचकपदाभावादित्यतस्तद्दर्शयति– **इदमिति** ॥ आत्मनो योग्यमुच्यत इति शेषः । अन्वयप्रतीतिसौकर्याय भवतीत्यनुवादः । ननु पूर्वमप्रकृतत्वात्कथम् इदंशब्देनात्मयोग्यमुच्यत इत्यत आह– **निर्दुःखेति** ॥ स्वयोग्यस्येति शेषः । वक्तृश्रोतृपरिवर्तमानं हि साक्षात्प्रकृतमित्युच्यते । ग्रन्थोक्तत्वं तु तल्लिङ्गतयैव । आत्मनो योग्यमित्यस्य श्रोतृबुद्धौ परिवर्तमानत्वेन प्रकृतत्वादिदमिति निर्देशो युज्यत इत्यर्थः । सर्वं समग्रमिति व्याख्यानमुपपादयति– **तत्सर्वमिति** ॥ तद्धैतत्पश्यन्नित्यादेः 'अहेयं च गुणैः पूर्णं नित्यास्तिज्ञानगोचरम् । ब्रह्म पश्यन्नहं मनुरिति सूक्तं ददर्श ह ॥' इति व्याख्यानं कथम्? सूक्तगताहं-शब्दस्यास्मदादेशत्वेन अभवमस्मीत्यादेश्चोत्तमपुरुषत्वेन तत्र ब्रह्मणो-ऽहेयत्वादेरप्रतिपादनात् । नहि तदप्रतिपाद्यमर्थं पश्यंस्तत्सूक्तं ददर्शेति युक्तम् । इत्यतस्तद्धैतत्पश्यन्निति वाक्यं प्रकारान्तरेण व्याचष्टे– **ब्रह्मेति** ॥ तच्छब्दार्थः– **ब्रह्मेति** ॥ एतच्छब्दार्थः– **ब्रह्मण इत्यादि** ॥ अनेन मनुर्मनुनामको मन्वन्तर्यामी अहम् अहेयः सूर्य सूर्यनामकस्सूर्यान्तर्यामी अहम् अहेय इति सूक्तयोजना सूचिता । नचैवं सत्यभवमित्याद्यनुपपत्तिः । न विद्यते भव उत्पत्तिर्यस्य तदभवम् अस्तीति मेयमित्यस्मीति तस्यापि गुणान्तरवाचकत्वादिति भावः । प्राचीनव्याख्यानं तु अस्य सूक्तस्य प्रतीतार्थत्वेन ब्रह्मपरत्वमेव नास्तीति वदन्तं प्रति तत्परत्वसमर्थनार्थमिति न तस्य वैयर्थ्यमिति ध्येयम् । अत्रापि प्रमाणमाह– **ब्रह्मेति** ॥

**भाष्यम्—**

**['अहं ब्रह्मास्मि' इति श्रुत्यर्थः]**

**तदिदं ब्रह्म योऽहेयत्वादिगुणमेतर्ह्यपि वेद। अहंशब्दस्याहेयत्वानङ्गीकारे इदं-शब्दोऽपि व्यर्थः ।**

**टिप्पणी—**

तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मस्मीति वाक्यस्य 'यो योऽहेयं परं ब्रह्म सदैवास्ति' इति मानगम् । इदानीमपि जानातीति व्याख्यानमयुक्तम् । परं ब्रह्मेत्यस्य श्रौतब्रह्मशब्दानुवादपरत्वेन तदिदंशब्दयोर्वैयर्थ्यापातात् । प्रकार-समर्पकशब्दमध्यगतब्रह्मशब्दस्य विशेष्यपरत्वानुपपत्तेश्च । तस्मात्तदिदं यत्सर्वभूता-नुप्रविष्टं ब्रह्मैतर्हि एतस्मिन्नपि काले यः कश्चिद् व्यावृत्तबाह्यौत्सुक्य आत्मानमेवैवं वेदाहं ब्रह्मस्मीति सकलधर्मातीतब्रह्मैवाहमस्मि केवलमिति यो वेद स एतादृक्ब्रह्मज्ञानादविद्याकृतासर्वत्वनिवृत्त्या इदं सर्वं भवतीति व्याख्येयमित्यतः स्वयं तावत्तद्वाक्यं सम्यग्व्याचष्टे— **तदिदमिति** ।। तदिदमित्य-नुवादेन ब्रह्मेति व्याख्यातम् । अहं ब्रह्मास्मीत्यस्यार्थः— **अहेयत्वादिगुण-मिति** ।। तथाच प्रमाणवाक्ये परं ब्रह्मेत्येतदिदं शब्दार्थकथनपरं ब्रह्मशब्दयोगेन गुणपूर्णत्वार्थकश्चेति भावः । इदानीमपव्याख्यानं दूषयति— **अहंशब्दस्येति** ।। अर्थत्वेनेति शेषः । आत्मानमेवेत्यस्य समुच्चयार्थोऽपिशब्दः । तदत्र न श्रूयत इति चेत् । परेण 'तदात्मानमेवावेत्' इति पूर्ववाक्यानुसारेणात्राप्यात्मान-मेवेत्यध्याहृत्य व्याख्यानात् । यद्वा, न केवलं तदात्मानमेवावेदित्यत्र तदात्मान-मिति व्यर्थम् । अत्र वाक्ये इदंशब्दोऽपीति योज्यम् । तच्छब्दसमुच्चयार्थो वा । तथाच अहंशब्दस्याहेयार्थकत्वमनङ्गीकृत्य अस्मदादेशरूपत्वाङ्गीकारे एतर्ह्यपि एवं वेदाहं ब्रह्मास्मीत्येतावताअधिकारिणो ब्रह्मत्वानुसन्धानलाभेन आत्मानमेवेत्यध्याहारः तदिदंशब्दौ च व्यर्थाः स्युरित्यर्थः । अहेयत्वार्थकत्वे तु अहं ब्रह्मास्मीत्येतैर्विशेषणैः किं वेदेति विशेष्याकाङ्क्षानिवर्तकत्वेन तदिदंशब्दौ न व्यर्थाविति भावः ।।

**भाष्यम्—**

**सर्वस्वरूपत्वं हि दुर्विद्वद्भिरङ्गीरक्रियते ।**

**टिप्पणी—**

इदानीं 'स इदं सर्वं भवति' इत्यस्य स एतादृक्ब्रह्मज्ञानादविद्या-

कृताऽसर्वत्वनिवृत्त्येदं सर्वं भवतीति परकृतं व्याख्यानं दूषयति– **सर्वेति** ॥ हिशब्दः प्रसिद्ध्यर्थः । नाधिकारिणः सर्वस्वरूपत्वमङ्गीकर्तुं युक्तम् । मिथ्याभूत-जडपदार्थस्वरूपत्वाङ्गीकारेऽधिकारिचेतनस्यापि मिथ्यात्वापातात् । त्वयाऽनङ्गीकाराच्च । जडस्वरूपत्वं नाम तद्व्यतिरेकेण जडस्यासत्वमिति चेद् विशेषनिषेधस्य शेषाभ्यनुज्ञानार्थत्वेनाऽनन्दादिवत् जीवचैतन्यवच्च ब्रह्मचैतन्यात्मकतया सत्वापातात् । नापि जडस्य तत्राऽरोपितत्वं शुक्त्यादावारोपितरूप्ये तत्स्वरूपत्वव्यवहाराभावात् । उक्तवक्ष्यमाणन्यायैः प्रपञ्चस्य सत्यत्वाच्च । सर्वचैतन्यस्वरूपत्वमेव विवक्षितमिति चेन्न । तत्रापि प्रमाणाभावात् । न तावत्तत्र प्रत्यक्षमस्ति । तस्य तदभावावेदकत्वात् । विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वात् सम्प्रतिपन्नशरीरवदित्यस्य विमतानि कलत्राणि देवदत्तस्यैव भोगायतनानि कलत्रत्वात् सम्प्रतिपन्नकलत्रवदित्याभाससमानयोगक्षेमतया अपहास्यत्वात् । विमता आत्मानो देवदत्तात्परमार्थतो न भिद्यन्ते आत्मत्वाद्देवदत्तवदित्यनेन सर्वचैतन्याभेदसिद्धिरिति चेत्, न । आत्मत्वानिरुक्तेः । तथाहि । किं तदात्मत्वम्? न तावज्जातिविशेषः । तस्याऽत्मनि परेण वस्तुतोऽनभ्युपगमात् । नापि प्रमातृत्वम् । तस्यापि त्वयाऽनभ्युपगमात् । नापि ज्ञानरूपत्वम् । ज्ञातृज्ञेयशून्यतयाऽऽत्मनो ज्ञानरूपत्वासम्भवात् । नापि स्वप्रकाशत्वम् । स्वविषयप्रकाशत्वस्यासिद्धत्वात् । अवेद्यत्वं स्वप्रकाशत्वमिति चेत् । तर्हि अज्ञानासिद्धिः । अन्यथा स्वरूपासिद्ध्यापत्तेः । अनुमानवैयर्थ्याच्च । विमता घटाः एतद्धटान्न भिद्यन्ते घटत्वादेतत् घटवदित्याभाससमानयोगक्षेमत्वाच्च । आगमाश्च पूर्वमेव सम्यग्व्याख्याता इति सर्वस्वरूपत्वे न किञ्चित्प्रमाणम् । तथाचाप्रामाणिकं सर्वप्रमाणविरुद्धं चाधिकारिणः सर्वस्वरूपत्वं मिथ्याज्ञानित्वेनाऽग्रहवशादेवाङ्गीकुर्वाणा दुर्विद्वांस इति न तत्प्रेक्षावद्भिरादरणीयमिति भावः । एतेन 'तस्मात्सर्वमभवत्' इत्यस्य तस्माद् ब्रह्मात्मैकत्वज्ञानादविद्याकृताऽसर्वत्वनिवृत्त्या स्वाभाविकं सर्वत्वं प्राप्तमिति सर्वं भविष्यन्त इत्यस्य सर्वं निरवशेषं भविष्यन्त इति च व्याख्यानं परास्तम् ॥

**भाष्यम्—**

**इदंशब्देन परब्रह्मविवक्षायां ब्रह्मशब्दो व्यर्थः स्यात्। इदं योऽहमिति वेदेत्येव स्यात्। एवंशब्दश्च व्यर्थः।**

**टिप्पणी—**

यदुक्तमहंशब्दस्याहेयत्वानङ्गीकारे तदिदंशब्दौ व्यर्थाविति तदयुक्तम्। युष्माकमिवास्माकमपि तदिदंशब्दस्य ब्रह्मपरत्वात्। तदिदं यत्सर्वभूतानुप्रविष्टं ब्रह्मेति व्याख्यानादिति चेत्, न। त्वत्पक्षे 'तदात्मानमेवावेत्' इत्यत्र तच्छब्दवदत्र तदिदंशब्दस्य अविद्याविशिष्टाधिकारिस्वरूपभूतब्रह्मपरत्वं वोत सकलधर्मातीत-परब्रह्मपरत्वं वा। नाऽद्यः। अधिकारिप्रदर्शकस्य य इत्यस्य वैयर्थ्यापत्तेः। द्वितीयं दूषयति– **इदंशब्देनेति**॥ तदिदंशब्देनेत्यर्थः। उपलक्षणमेतत्। अस्मिशब्दश्चेत्यपि ग्राह्यम्। तदुपपादयति– **इदमिति**॥ योऽधिकारी तदिदं ब्रह्माहमिति वेदेत्येवोक्त्या अधिकारिणो ब्रह्मत्वानुसन्धानलाभेनाहं ब्रह्मास्मीत्यत्र ब्रह्मास्मिशब्दौ व्यर्थावित्यर्थः। अस्मत्पक्षे तु ब्रह्मास्मिशब्दयोर्गुणान्तरवाचकत्वेन न वैयर्थ्यम्। अत एवोक्तं प्रागहेयत्वादिगुणमितीति भावः। दूषणान्तरमाह– **एवंशब्दश्चेति**॥ एतदुपपादकत्वेनापि पूर्ववाक्यं योज्यम्। वेदनप्रकारस्येति-शब्देनैवोक्तत्वाद् एवशब्दश्च व्यर्थ इत्यर्थः। नन्वत्र वाक्ये इत्येवेत्यवधारणेनैतर्ह्यपीत्यस्य वैयर्थ्यमनुज्ञायते। नचैतत्सम्भवति। युष्मत्पक्षेऽपि साम्यात्। कालविशेषवाचकत्व-स्यास्माकमपि साम्यादिति चेत्, न। एवशब्दस्य ब्रह्मास्म्येवंशब्दव्यावर्तकत्वेन तदव्यावर्तकत्वात्॥

**भाष्यम्—**

**अस्मत्पक्षे तु तदात्मानमेवावेदित्यपि ज्ञातव्यमित्येवंशब्दार्थः। तत्पक्षे तदपि व्यर्थमेव। नहि तत्पक्षे तत्स्वात्मानं वेत्ति। व्याख्यान-व्याख्येयभावश्चागतिका गतिः।**

**टिप्पणी—**

ननु युष्मत्पक्षेऽपि एवंशब्दो व्यर्थः । अहं ब्रह्मास्मीत्यनेनैव वेदनप्रकारस्योक्तत्वादित्यत आह— **अस्मत्पक्षे त्विति** ।। नन्वस्मत्पक्षेऽपि तदात्मानमेवावेदित्युक्तार्थपरामर्शकतया न तद्व्यर्थमित्यत आह— **तत्पक्ष इति** ।। तदपि स्वस्वरूप-ज्ञत्वज्ञानमपि । जीवब्रह्मैक्यज्ञानमेव 'स इदं सर्वं भवति' इत्युक्तफलसाधनमिति पक्षे स्वस्वरूपज्ञत्वविज्ञानस्य अतत्साधनत्वादिति भावः । दूषणान्तरं चाऽह— **नहीति** ।। कर्मकर्तृविरोधादिति भावः । तथाच 'तदात्मानमेवावेत्' इत्यस्य परपक्षे स्वकर्मकज्ञानवत्त्वार्थकत्वाभावेन न अस्मत्पक्ष इव एवंशब्देन तत्परामर्शसम्भव इति भावः । यद्वा, तत्पक्षे तदात्मानमेवावेदित्यत्र तच्छब्दः अविद्याविशिष्टाधिकारिस्वरूपभूतब्रह्मपरः । नच जीवब्रह्मैक्यज्ञानमेवोक्तफलसाधनमिति पक्षे तस्य स्वस्वरूपज्ञत्वज्ञानमिदानींतनाधिकारिणः उक्तफलसाधनम् । स्वस्य ब्रह्मत्वानुसन्धानेनैवोक्तफलसिद्धेः । तथाच एवंशब्देन 'तदात्मानमेवावेत्' इत्युक्तार्थपरामर्शेऽपि तज्ज्ञानं व्यर्थमिति पूर्ववाक्यार्थः । ननु युष्माकमिवास्माकमपि तदात्मानमेवावेदित्यत्र तच्छब्दः परब्रह्मार्थक एवास्तु । तस्य स्वस्वरूपज्ञत्वज्ञानं तदधिकारिणः फलसाधनं भविष्यतीत्यत आह— **नहीति** ।। स्यादेतदेवम् । यदि तत्परं ब्रह्म स्वात्मानं वेत्तीत्येतदुपपन्नं स्यात् । नच तदस्ति । एकस्यैव कर्तृकर्मभावविरोधात् । नचास्माकमप्ययं दोषः । विशेषबलेनैकस्यैव कर्तृकर्मभावोपपत्तेः । निर्विशेषब्रह्मपक्षे तु तदनुपपत्तेरित्यर्थः । यथोक्तं सङ्करेण स्वभाष्ये 'तस्मादज्ञानाध्यारोपणनिवृत्तिरेवात्मानमेवावेदित्युक्तम् । नात्मनो विषयीकरणम्' इति । नन्वथापि नैवंशब्दो व्यर्थः । य एवं वेदेति सामान्यत उक्त्वा अहं ब्रह्मास्मीतित्यनेनैवंशब्दस्यैव व्याख्यानादित्यत आह— **व्याख्यानेति** ।। गत्यन्तराभावे हि व्याख्यानव्याख्येयभावोऽङ्गीकार्यः । गत्यन्तरं चात्रोक्तमेवेत्यर्थः ।।

भाष्यम्—

**अभावे पृथगर्थानां व्याख्यामभ्यासमेव वा।**
**कल्पयेन्नैव तद्भावे व्याख्याऽभ्यासश्च युज्यते॥ इति भारते॥**
**स्वरूपज्ञं तथाऽहेयं नित्यं च ब्रह्म वेत्ति यः।**
**समग्रभावं गच्छेत्स तत्प्रसादान्न संशयः॥ इति च॥**

**स ईश्वर एषां देवानामात्मा भवति। पुल्लिङ्गं च 'तत्सत्यं स आत्मा' इत्यादिवद्भवति।**

**देवानां व्यापकत्वात्तु तेषामात्मा हरिः सदा।**
**तज्ज्ञः प्रियस्ततस्तेषां तस्य नाभूतिदास्ततः॥ इति वामने॥**

टिप्पणी—

अत्र प्रमाणमाह– **अभाव इति**॥ ननु भवत्पक्षेऽपि ब्रह्मणः स्वस्वरूपत्वज्ञानं व्यर्थमेव। अहेयत्वादिगुणकब्रह्मज्ञानेनैव समग्रभाव-प्राप्त्युपपत्तेरित्यतस्तस्यापि तत्फलकत्वे प्रमाणमाह– **स्वरूपज्ञमिति**॥ नन्वात्मा ह्येषां स भवतीत्यस्यात्मा हि विष्णुर्देवानामिति व्याख्यानमयुक्तम्। नपुंसकलिङ्गतच्छब्देन प्रकृतस्य ब्रह्मणः स इति पुल्लिङ्गतच्छब्देन परामर्शायोगात्। अतः 'तस्य ह न देवाश्च नाभूत्या ईशते' इत्युक्तार्थहेतुतया स ब्रह्मवित् एषां देवानामात्मा शास्त्रस्वरूपप्रकाशितब्रह्मस्वरूपो भवतीति व्याख्येयमित्यतस्तद्वाक्यं स्वयं तावद् व्याचष्टे– **स इति**॥ ब्रह्मविदो ब्रह्मस्वरूपत्वं च प्रागेव निरस्तमिति भावः। अत्रोक्तदोषमुद्धरति – **पुल्लिङ्गं चेति**॥ यथा तत्सत्यमिति नपुंसकलिङ्गतच्छब्देन प्रकृतस्यापि आत्मशब्दापेक्षया स इति पुल्लिङ्गशब्देन परामर्शस्तथाऽत्रापीति भावः। प्रमाणविरुद्धत्वाच्च न परव्याख्यानमादरणीय-मित्याह– **देवानामिति**॥ एतस्य स्फुटं 'तस्य ह न देवाः' इति पूर्वोक्तार्थे हेतुत्वाप्रतीतेस्तद्दर्शयति– **तज्ज्ञ इति**॥ तुशब्दो यस्मादित्यर्थे। यस्मात्तेषामात्मा हरिः तज्ज्ञः तस्य हरेः प्रियस्ततस्तेषां प्रियः। ततस्तस्याधिकारिणो नाभूतिदा इत्यर्थः॥

**भाष्यम्—**

**सर्वेभ्योऽन्यां विलक्षणां देवतां स्वगुणेभ्योऽहेयत्वादिभ्यश्चान्यां य उपास्ते अहेयोऽस्मीति मेयश्चान्योऽन्यश्चासौ विष्णुरिति मत्वा यो विष्णोरन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेदेति वा ।**

**जीवादिभ्यो हरिर्भिन्नस्तं यः स्वगुणभेदतः ।**
**अहेयोऽन्यो हरिश्चान्य इति मत्वाऽन्यमेव वा ॥**
**य उपास्ते न स ज्ञानी मनुष्याणां पशुर्हि सः ।**
**सम्यग्ज्ञानी तु देवानां पशुरित्यभिधीयते ॥ इति च ॥**

**टिप्पणी—**

'अथ योऽन्यां देवतामुपास्ते' इति वाक्यं पूर्वं जीवब्रह्मैक्यवादिविष्ण्वहेयत्वाज्ञानिनिन्दापरत्वेन प्रमाणवचनेन व्याख्यातम् । इदानीं यस्तार्किकादिरीश्वरस्य जीवादिभ्यो भेदमङ्गीकृत्यापि तद्गुणेभ्योऽपि भेदमङ्गीकरोति यश्च विष्ण्वतिरिक्त एव हरहिंण्यगर्भादिरनन्तगुणपूर्ण इति मत्वा भगवदन्यामुपास्ते तन्निन्दापरत्वेनापि व्याचष्टे– **सर्वेभ्य इति** ॥ अनेनअन्यामित्यस्याऽवृत्तिर्योग्यतया सर्वेभ्यो जीवादिभ्यः स्वगुणेभ्यो हेयत्वादिभ्यश्चेति लाभ इत्युक्तं भवति । य उपास्ते न स वेदेति सम्बन्धः । 'अन्योऽसावन्योऽहमस्मि' इत्यस्यार्थमाह– **अहेय इति** ॥ अन्यो हरहिरण्यगर्भादिः । अथेत्यस्य चशब्दार्थकत्वमभिप्रेत्य मेयश्चेति । अन्यश्चेत्युक्तम् । मत्वेति शेषपूरणम् । 'योऽन्यां देवतामुपास्ते' इति वाक्यमत्रापि सम्बद्ध्यत इति भावेनोक्तम्– **यो विष्णोरिति** ॥ अन्यां देवतां हरहिरण्यगर्भादिरूपाम् । उपासनायाः ज्ञानसमानविषयकत्वलाभाय उपासनाप्रकारप्रदर्शकतया अन्योऽसाविति वाक्यमावर्तितम् । वाशब्दः प्रमाणवचनकृतव्याख्यानापेक्षया प्रकारान्तरद्योतकः । अत्रापि प्रमाणमाह– **जीवादिभ्य इति** ॥ यथा पशुरित्यस्यार्थः– **मनुष्याणां पशुर्हि स इति** ॥ एवं स देवानामित्यस्यार्थमाह– **सम्यग्ज्ञानीति** ॥

**भाष्यम्—**

**एवं स देवानामित्यत्र पूर्वः सम्यग्ज्ञानी परामृश्यते । एतन्मनुष्या विद्युरित्यत्रैतच्छब्देन विष्णोरन्यदेवतोपासनमुच्यते।**

**टिप्पणी—**

नन्वेतदयुक्तम् । सम्यग्ज्ञानिनः पूर्वमप्रकृतत्वेन स इति तत्परामर्शायोगात् । न स वेदेति सन्निहिताज्ञानिपरामर्शस्यैव स्वीकार्यत्वाच्च । तथाच 'यथा पशुरेव स देवानाम्'इत्यत्र न वाक्यभेदः । किन्तु एकमेव वाक्यमङ्गीकृत्य यथा पशुर्गवाश्वादिदोहनवाहनाद्युपकारैरुपयुज्यते । एवमेव सो विद्वान् देवानां मध्ये एकैकस्यापि देवस्य पशुवदिज्याद्यनेकैरुपकारैरुपभोग्यो भवतीति व्याख्येयमित्यतस्तावत्स इत्यन्यसम्यग्ज्ञानिपरामर्शकत्वे अप्रकृतत्वशङ्कां निवारयति– **एवमिति** ॥ पूर्वः 'तदिदमप्येतर्हि'इति वाक्यप्रकृत इत्यर्थः । ननु यद्येवं स देवानामित्यत्र सम्यग्ज्ञानिपरामर्शस्तर्हि सम्यग्ज्ञानिनो देवपशुरूपत्वे देवभोजकत्वेन तत्प्रीतिविषयकत्वं स्यात् । नच तद्युक्तम् । 'तस्मादेतेषां तन्न प्रियं यदेतन्मनुष्या विद्युः'इति वाक्यशेषे मनुष्या ब्रह्मणस्तत्वं विद्युरिति यदेतदेतेषां देवानां न प्रियमिति मनुष्यसम्यग्ज्ञानस्य देवाप्रियत्वोक्तेरित्यतस्तद्वाक्यं यथावद् व्याचष्टे– **एतदिति** ॥ मनुष्या विष्णोरन्यां देवतां विद्युरुपासीरन् इति यत् एतत् विष्णोरन्यदेवतोपासनमिति वाक्ययोजनाम् अनेन सूचयति । यथाच 'योऽन्यां देवतामुपास्ते' इत्युक्तमनूद्य तस्यैव देवाप्रियत्वमुच्यते न सम्यग्ज्ञानस्येत्यर्थः ॥

**भाष्यम्—**

**नह्यज्ञान्येव देवानां भोजकः । ज्ञानी हि विशेषेण भोजकः ।**

**टिप्पणी—**

नन्वथापि 'एवं स देवानाम्'इत्यत्र सन्निहिताज्ञानिपरामर्शसम्भवे तत्परित्यागेन किमिति दूरोक्तज्ञानिपरामर्शः क्रियत इत्यतः तावत्स्वपक्षे वाक्यार्थानुपपत्ति-

नास्तीत्याह– **नहीति** ॥ यद्यज्ञान्येव देवानां भोजकः स्यात्तर्हि एवं स देवानामित्यत्र **स** इति सम्यग्ज्ञानिपरामर्शे तस्य देवभोजकत्वाभावेन देवपशुत्वासम्भवाद् वाक्यार्थो बाधितः स्यात् । नचैवम् । किन्तूभावपि देवानां भोजकौ । ततश्च न वाक्यार्थानुपपत्तिरित्यर्थः । तर्ह्युभयत्रापि वाक्यार्थानुपपत्त्यभावात् किमिति सन्निहिताज्ञानिपरामर्शपरित्यागेन दूरोक्तज्ञानि-परामर्शः क्रियत इत्यत आह– **ज्ञानीति** ॥ सत्यमज्ञान्यपि कर्मकरणादिना देवानां भोजक इति । तथाऽपि न ज्ञानिवत् । ज्ञानिनो विशेषेण देवताभोजकत्वात् । तथाच मुख्ये सत्यमुख्यग्रहणायोगात् सन्निहितमप्यज्ञानिनं परित्यज्य पूर्वः सम्यग्ज्ञानी परामृश्यत इत्यर्थः ॥

**भाष्यम्——**

**'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः' इति वचनात् । स य एवंवित्सर्वेषां भूतानाम् । ब्रह्मविच्च तत्रोच्यते । प्रस्तुतत्वात् ।**

**टिप्पणी——**

स्यादेतदेवम् । यदि ज्ञानिनो देवभोजकत्वमेव स्यात् । तदेव कुत इत्यतः एतद्ब्राह्मणगतमेव वाक्यं प्रमाणयति– **अथो इति** ॥ सर्वेषां भूतानां देवादि-पिपीलिकान्तानाम् । लोकः तद्भोजकत्वेनाऽश्रयः । सप्तान्नब्राह्मणगतमपि वाक्यं प्रमाणयति– **स य इति** ॥ भूतानामात्मा भवतीति श्रुतिशेषः । इति वचनादित्यनुवर्तते । ननु ज्ञानिनो देवभोजकत्वे अथो अयं वा आत्मेति वाक्यं न प्रमाणम् । तत्रायमात्मेत्यनेन 'यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति' इति पूर्ववाक्यप्रकृतस्याविदुष एव कर्माधिकारिणो गृहस्थस्य ग्रहणात् । तथाचाज्ञानिन एव गृहस्थस्य देवादिपिपीलिकान्तसर्वभूतोपभोजकत्व-मुच्यत इत्यत आह– **ब्रह्मविच्चेति** ॥ अज्ञानिसमुच्चयार्थश्चशब्दः ब्रह्मविद् गृहस्थश्चेत्यर्थः । कुत इत्यत आह– **प्रस्तुतत्वादिति** ॥ 'आत्मानमेव लोकमुपास्ते' इति ज्ञानिनोऽपि प्रस्तुतत्वादित्यर्थः । नह्युभयोः प्रकृतत्वा-

विशेषेऽज्ञानिन एव ग्रहणे कश्चिद्विशेषहेतुरस्तीति भावः। कथं तर्हि परमात्मैव गृहस्थान्तर्यामित्वेन **सर्वेषां** लोक आश्रय इति भाष्यम्। यथाच नानुपपत्तिस्तथा तत्रैव वक्ष्यामः। ननु 'स य एवंवित्' इति वाक्ये सप्तान्नोपासको देव एवोच्यते। 'नह वै देवान् पापं गच्छति' इत्युत्तरवाक्यात्। आत्मा भवति व्यापको भवति सर्वेषु व्याप्तिमन्वेतीति स्ववचनप्रमाणाभ्यां देवतापरत्वेन व्याख्यास्यमानत्वाच्च। तथाच 'ज्ञानी हि देवानां भोजकः' इत्यत्र कथमिदं प्रमाणम्? नहि देवो देवानां भोजक इत्यत आह– **ब्रह्मविच्चेति**॥ न केवलं सप्तान्नस्रष्टृत्वेन ब्रह्मोपासको देव एव तत्र स 'य एवंवित्' इति वाक्ये उच्यते। किन्तु ब्रह्मविन्मात्रश्च। तथाच य एवंवित् सप्तान्नज्ञानमात्रवान् मनुष्यः स सर्वेषां देवपश्वादीनां भूतानां आत्मा प्रियो भवति। तत्तद्योग्यान्नभोजकत्वादित्यर्थ इति भावः। कुत इत्यत आह– **प्रस्तुतत्वादिति**॥ स देवानपि गच्छतीति। अयमेव स योऽयमेवंवित् पुरुष इति पूर्ववाक्ये सप्तान्नोपासकवत् सप्तान्नज्ञानिमात्रस्यापि प्रस्तुतत्वात्। नच तत्र विवादः। न नरा योग्याः एतदुपासने ज्ञानमात्रेण देवानां सामीप्यं प्राप्नुवन्ति ते स एवंविदुषि स्थित इति व्याख्यास्यमानत्वादित्यर्थः॥

**भाष्यम्**——

> **तत्त्वविद्देवगौः प्रोक्तो नरगौश्चाप्यतत्त्ववित्।**
> **तस्माद्देवास्तत्त्वविदे प्रियं कुर्वन्त्यतन्द्रिताः॥ इत्याग्नेये॥**

**तस्य ह न देवाश्च नाभूत्या ईशत इति देवानां तत्त्वज्ञानं प्रियमित्युक्तं च।**

**टिप्पणी**——

नन्वस्त्वेवं सम्यग्ज्ञानी देवानां भोजकः। तथाऽप्यज्ञान्यपेक्षया विशेषेण भोजक इत्यत्र किं मानमित्यत आह– **तत्वविदिति**॥ अपिशब्दोऽवधारणे। देवगौरेवेति सम्बन्धः। देवानामेव भोजकत्वात्। नरगौश्च नराणामपि भोजकत्वादित्यर्थः। अत्रैवान्तरोपपत्तिमप्याह– **तस्य हेति**॥ यद्वा 'एतन्मनुष्या

विद्युः' इत्यत्र तच्छब्देन विष्णोरन्यदेवतोपासनमुच्यत इति यदुक्तं तन्न । ज्ञानिनः सन्निहितत्वेन तत्परत्वेनाव्याख्याय दूरोक्तमिथ्याज्ञानिपरतया व्याख्याने कारणाभावादित्यत आह– **तस्येति** ॥ तथाच तद्विरोधः स्यादिति भावः । एवं सति 'क्रियावृद्ध्या हि कौन्तेय देवलोकः समावृतः । नचैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम्' इति वचनविरोधः स्यादिति चेन्न । नह्यत्र तत्वज्ञानं देवानामप्रियमित्युच्यते । येन विरोधः स्यात् । अयोग्यमर्त्यविषयं वा तदिति । अथवा 'एवं स देवानाम्'इत्यत्र सम्यग्ज्ञानी देवानां पशुरित्युच्यते इत्य-युक्तम् । असङ्गतत्वात् । नह्ययमर्थः पूर्वेण सङ्गत इत्यतः सङ्गतिं दर्शयति– **तस्य हेति** ॥ तथाच तदुपपादकत्वेनैवं स देवानामिति वाक्यं प्रवृत्तमिति भावः ।

**भाष्यम्—**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ इति ॥**
**यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ।**
**सत्यो जीवेशयोर्भेदः सत्या विष्णोर्गुणा अपि ।**
**सत्यं जगदिदं सर्वं सत्येशजगतोर्भिदिः ॥ इत्यादेश्च ॥**
**भेदेनैव जगत्सर्वं भेदेनेशं गुणैः सह ।**
**भेदेन जीवानन्योऽन्यं मुक्ताः पश्यन्ति सर्वशः ॥**
**निःशेषदुःखहीनाश्च केवलं सुखभोगिनः ।**
**जन्ममृत्युविहीनाश्च कालसम्बन्धवर्जिताः ॥**
**रजस्तमःसत्वहीनाः प्रकृत्यादिविवर्जिताः ॥**
**—इत्यादि गारुडवचनान्न ज्ञाननिवर्त्यता वक्तुं युक्ता ।**

**टिप्पणी—**

'स इदं सर्वं भवति'इत्यत्रैतादृक्ब्रह्मज्ञानादविद्याकृतासर्वत्वनिवृत्त्येदं सर्वं भवतीति व्यावर्तकव्यावृत्तिरूपासर्वत्वस्य ज्ञाननिवर्त्यत्वं परैरुक्तम् । तदसत् ।

ज्ञाननिवर्त्यत्वरूपासत्यत्ववादिनां निन्दनादिति भावेनाऽह– **असत्यमिति** ।। तत्सत्यत्वे प्रमाणसद्भावाच्च न तद्युक्तमिति भावेनाऽह– **यदिति** ।। स ईश्वरो यद्विश्वं चिकेत चकार तत्सत्यमित् सत्यमेव न मोघं न मिथ्या स्पार्हं स्पृहणीयं वसु बल्यादिभ्यो जेताऽथेन्द्रादिभ्यो दाताऽपीत्यर्थः । जीवधर्मा जडं चेतीदं सर्वं जगदित्यर्थः । ईशजगतोरीशजडयोरित्यर्थः । किञ्च विप्रतिपन्नं न ज्ञाननिवर्त्यं मुक्तैर्दृश्यमानत्वादित्यनुमानमभिप्रेत्यासिद्धिं परिहरति– **भेदेनैवेति** ।। गुणैः स्वातन्त्र्यादिभिः सह सहितम् ईशं गुणैरप्रधानैर्जीवादिभिर्भेदेन । ननु मुक्तैर्दृश्यमानमपि ज्ञाननिवर्त्यं किं न स्यादिति चेत्, तथात्वे मुक्तानां भ्रान्तत्वप्रसङ्गात् । नचेष्टापत्तिः । तेषां भ्रमकारणदोषशून्यत्वादिति भावेन मुक्तस्वरूपमाह– **निःशेषेति** ।। कालसम्बन्धकृतविकारवर्जिता इत्यर्थः ।।

**भाष्यम्**—

**[मोहार्थानि ऐक्यवाक्यानि]**

**तिर्यङ्मानुषदेवादिविष्णुरूपेष्वशक्तता ।**
**यस्मिन् कस्मिंश्च विषये दुःखित्वं भिन्नताऽपि वा ।**
**प्रकृतेर्विकारिता वाऽपि च्छेदभेदव्रणादि वा ।।**
**अज्ञानं नाशिता वाऽपि जन्म जीवैरभिन्नता ।**
**प्रकृत्यभिन्नता वाऽपि जीवाभेदः परस्परम् ।।**
**जडाभेदोऽथ वा विष्णोर्मिथ्यात्वं जगतोऽपि वा ।**
**अगुणत्वमदेहत्वमकर्तृत्वं तथा हरेः ।।**
**सम्यग्भक्तिमृते मुक्तिर्विष्णौ तद् द्वेषतस्तथा ।**
**मुक्तावभोगो जीवानां मुक्तौ साम्यं तथैव च ।।**
**अरूपत्वं च जीवानां मुक्तानां बन्धिनामपि ।**
**नामतीर्थादिभिर्मुक्तिस्तत्त्वज्ञानं विनाऽपि तु ।।**
**विष्णोः सकाशात्प्रकृतेर्ब्रह्मणोऽनन्तरुद्रयोः ।**
**गरुडेन्द्रसूर्यविघ्नादेरग्निसोमगुहादिनाम् ।।**

प्रद्युम्नस्यानिरुद्धस्य देवविप्रादिनामपि।
यैः कैश्चापि गुणैर्विष्णोः सकाशाद् वरता तथा ॥
यदा कदाऽपि यत्नैर्वा वरशापादिनाऽपि वा।
तपसा वाऽप्युपायैर्वा योगज्ञानादिनाऽपि वा ॥
साम्यं वा विष्णवधीनत्वादन्यथैषां स्थितिः कृतिः ।
असंसारित्वमेषां वाऽप्येषामीश्वरताऽपि वा॥
विना विष्णुप्रसादेन मुक्तिरेषां सकाशतः।
विष्णोः प्रयोजनावाप्तिर्विष्णोर्दोषश्च कश्चन॥
विष्णोः सर्वेषु रूपेषु सम्पूर्णगुणहीनता।
भेदो वा विष्णुरूपेषु विशेषो वा गुणेषु च ॥
श्रियः सकाशादाधिक्यं ब्रह्मादेः साम्यमेव वा ।
ब्रह्मवाय्वोरनन्तस्य रुद्रस्य गरुडस्य च॥
तेभ्यश्चैवेन्द्रसूर्यादेर्विप्रभूपादिनां ततः।
बद्धानां मुक्तिगानां वा दैत्यानां मोक्ष एव च ॥
सर्वं मोहार्थमुद्दिष्टं वेदेषु हरिणाऽपि वा।
ब्रह्मणा वाऽथ रुद्रेण देवैश्च मुनिभिस्तथा॥
यथा सुराणां सज्ज्ञाने तात्पर्यं सर्वदा श्रुतेः ।
तथा दुर्ज्ञानजनने तात्पर्यमसुरेषु च॥
एवमेव च देवानां विष्णुब्रह्मादिनामपि।
विष्णोः सर्वगुणैः पूर्तिरपि मत्स्यादिरूपिणः॥
अजेयत्वमभेद्यत्वमच्छेद्यत्वं च सर्वशः।
सर्वावताररूपाणामपि चित्सुखरूपता॥
श्रीब्रह्मरुद्रशक्रादेः क्रमेणैव निजा गुणाः।
सर्वदोषव्यपेतत्वं विष्णोः सर्वत्र सर्वदा॥
एतत्सर्वं सर्ववेदैर्विष्णवाद्यैर्देवतागणैः।

ऋषिभिः क्षत्रियाद्यैश्च सम्यक्तात्पर्यतः सदा ॥
उक्तं सर्वेषु शास्त्रेषु तस्माद्ग्राह्यं बुभूषुभिः ।
इदं सत्यमिदं सत्यमिदं सत्यं न संशयः ॥
कोटिभिः शपथैश्चापि निर्णीतं देवतागणैः ।
अनादिकालतश्चायं शास्त्रार्थो नान्यथा क्वचित् ॥
पुनश्चानन्तकालीन एष एव न संशयः ।
ज्ञातव्यश्चैष एवार्थः सर्वदैव बुभूषुभिः ॥
एवं तु स्थिरया बुद्ध्या ज्ञात्वा यास्यथ तत्परम् ।
एवं ते हंसरूपेण विष्णुना देवतागणाः ॥
ब्रह्माद्या बोधितास्सर्वे तथा ज्ञात्वा परं गताः ।
साक्षाद् विष्णुर्हंसरूप उक्त्वैवं तु दिवौकसाम् ॥
वासुदेवाख्यरूपेण तेन सर्वहृदि स्थितः ।
सङ्कर्षणाख्यरूपेण विवेशानन्तमेव च ॥
तं ध्यायति सदाऽनन्तस्तस्मान्मुक्तिपदेच्छया ।
प्रद्युम्नाख्येन रूपेण काममेव विवेश सः ॥
हंसस्तद्ध्यानतो मुक्तिं काम इच्छति सर्वदा ।
अनिरुद्धाख्यरूपेण सोऽनिरुद्धं विवेश ह ॥
हंसस्तद्ध्यानतो मुक्तिमनिरुद्धस्तथेच्छति ॥
—इत्यादि ब्रह्माण्डपुराणे तत्त्वनिर्णयगीतायाम् ॥ ४ ॥

टिप्पणी—

ननु 'अथ योऽन्यां देवतामुपास्ते' इति वाक्यस्य जीवब्रह्मैक्यादिवादि-निन्दापरत्वेन व्याख्यानमनुपपन्नम् । जीवेशाभेदो विष्णोरहेयत्वादिगुणकोऽभिन्नः विष्णोः स्वगुणादिभिर्भेदो जगन्मिथ्यात्वमित्यादिप्रमेयस्य वेदपुराणादिष्वेव तत्र तत्र दर्शनादित्यत आह– **तिर्यगिति** ॥ प्रकृतेर्विकारता तद्देहादेः । विष्णौ सम्यग्भक्तिमृते नामस्मरणतीर्थस्नानादिभिः । विप्राः ऋषयः । असंसारित्वं

नित्यमुक्तत्वम् । विशेषः हीनोच्चभावः । गुणेषु तद्गुणेषु च । भेदो वा विशेषो वेति वर्तते । साम्यमेव वा । श्रिय इत्यत्रापि सम्बद्ध्यते । ब्रह्मवाय्वोः सकाशादनन्तादेराधिक्यं साम्यं वा, तेभ्य अनन्तादिभ्य इन्द्रसूर्यादेराधिक्यं साम्यं वा, तत इन्द्रसूर्यादेर्बद्धानां मुक्तिगानां विप्रभूपादीनामाधिक्यं साम्यं वा बद्धानां मुक्तिगानां वेत्येतद्वचनविपरिणामेन ब्रह्मादेरित्यादौ सर्वत्र सम्बद्ध्यते । मोक्ष एव न तमः मोहार्थं दैत्यानाम् आपातप्रतीतार्थमपेक्ष्येदमिति बोध्यम् । हरिणा पुराणादौ ब्रह्मणेत्यादावपि तत्प्रणीतशास्त्र इति द्रष्टव्यम् । मोक्षप्रयोजनकवेदादौ किमर्थमेतदुच्यत इत्यत आह– **यथेति** ।। न केवलं श्रुतेः किन्तु पुराणादिकर्तॄणामपीत्याह– **एवमेवेति** ।। तर्हि वेदादावुक्तं तत्वं किमित्यत आह– **विष्णोरिति** ।। ऋषिभिर्याज्ञवल्क्यादिभिः क्षत्रियाद्यैर्जनकादिभिः । तात्पर्यद्योतनायाऽऽह– **इदमिति** ।। तथाऽपि नोत्तरत्रेति न मन्तव्यमित्याह– **पुनश्चेति** ।। नैतत्प्रमाणोक्तमप्यश्रद्धेयमिति भावेनाऽऽह– **एवमिति** ।। हंसोक्तमवश्यं ज्ञेयमित्याशयेन तन्माहात्म्यमाह– **साक्षाद् विष्णुरिति** ।। न पृथ्वादिवदित्यर्थः ।।

**अथ खण्डार्थः**

ब्रह्मविद्यया सर्वं भविष्यन्त आत्मयोग्यतया पूर्तिं प्राप्नुवन्तो महान्तो ब्रह्मविद्ययैव स्वयोग्यं सर्वं प्राप्यत इति यदाहुः । तत्र केचिन्मनुष्या मन्यन्ते । किमिति? यस्मात्तद् ब्रह्म सर्वं पूर्णमभवत् । तत्तस्माद् ब्रह्मापि अवेत् किमिति ।।१ ।।

तत्रोत्तरं वक्तुमाह– **ब्रह्मेति** ।। इदमग्रे अस्य जगतोऽग्रे ब्रह्मैवाऽऽसीत् । 'तद् ब्रह्म अहमहेयं ब्रह्म परिपूर्णम् अस्मि सर्वदाऽस्तीति मेयमित्येतैर्विशेषणैरात्मानं स्वरूपमेवावेत् । तस्मादेव तद् ब्रह्म सर्वदा सर्वं परिपूर्णमभवदिति परिहारः । देवानां मध्ये यो यो देवः तदहेयत्वादिगुणं ब्रह्म यथा प्रत्यबुद्ध्यत स स एव तथा तज्ज्ञानानुसारेण तदभवत् । तत्सर्वं समग्रं स्वयोग्यानन्दादिपूर्णमभवत् । तथा ऋषीणां मध्ये यो य ऋषिः यथा तत्प्रबुद्ध्यत तथा स एव तदभवत् ।

तथा मनुष्याणां मध्ये यो यो मनुष्यो यथा तत्प्रतिबुद्ध्यते। तथा तज्ज्ञानानुसारेण तदभवदिति सम्बन्धः । श्रुतिरुक्तार्थे प्रमाणमाह– **तदिति** ॥ तद् ब्रह्म पश्यन् वामदेवोऽहं मनुरभवं सूर्यश्चेति सूक्तप्रतिपाद्यमेतद् ब्रह्मणः प्रागुक्त-सर्वजीवाहेयत्वादिगुणजातं प्रतिपेदे व्यजानात् । न केवलं पूर्वमेव देवादीनां एतज्ज्ञानेनैव फलप्राप्तिः किन्तर्हीत्यत आह– **तदिदमपीति** ॥ य एतर्ह्यपि इदानीमपि । तदिदं परं ब्रह्म अहमहेयं ब्रह्म परिपूर्णम् अस्मि सर्वदाऽस्तीति मेयमित्युक्तविशेषणैरेवं तदात्मानमेवावेदित्युक्तस्वस्वरूपज्ञत्वरूपविशेषणेन च वेद । स इदं स्वयोग्यं सर्वं समग्रमानन्दादिपूर्णमभवत् । इदानींतनस्य देवकृतविघ्नसम्भवात्कथं विद्याफलप्राप्तिरित्यत आह– **तस्येति** ॥ तस्य ज्ञानिनो देवाश्च देवा अपि अभूत्यै विद्याफलविघाताय नेशते ह तद्विघातं न कुर्वन्तीति यावत् । किमसामर्थ्यादेव न कुर्वन्ति? नेत्याह– **आत्मेति** ॥ स ईश्वरः एषां देवानाम् आत्मा कार्येषु नियोक्तृत्वेन तेषु व्याप्तत्वात् । आत्मा हि यस्मात्तस्मादिति पूर्वेण सम्बन्धः । विष्णुज्ञानी हि विष्णुप्रियः । अतो देवानामपि स प्रियः । विष्णुर्हि देवानामात्मा ततः प्रीतियोगादेव न विघातं कुर्वन्तीति भावः । एवं सम्यग्ज्ञानिप्रशंसां कृत्वा मिथ्याज्ञानिनो निन्दयति– **अथेति** ॥ योऽन्यां जीवेभ्यो विलक्षणां विष्णुरूपां देवतामन्यां जीवरूपामुपास्ते स न वेद । अहमस्मीति अहेयत्वादिगुणविशिष्टोऽन्योऽसौ हरिर्निर्गुणरूपोऽन्य इत्यपि उपास्ते स न वेद। यद्वा, सर्वेभ्यो जीवादिभ्योऽन्यां विलक्षणां देवतामहेयत्वादिस्वगुणेभ्योऽप्यन्यां य उ उपास्ते स न वेद। अहमहेयोऽस्मि अस्तीति मेयोऽन्यो हरहिरण्यगर्भादिरसौ विष्णुरन्यस्तद्गुणरहित इति यावत्। इति मत्वा यो विष्णोरन्यां हरहिरण्यगर्भादिरूपाम् अन्योऽसावन्योऽहमस्मीत्युपास्ते स न वेद सोऽज्ञानी यथा पशुः मनुष्यभोजकज्ञानरहितपशुसदृशः । इदानीमात्मा ह्येषां सम्भवतीत्युक्तमेव ज्ञानिनो देवप्रियत्वमुपपादयितुमाह– **एवमिति** ॥ सः य एवं वेदेति पूर्वोक्तः सम्यग्ज्ञानी । देवानामेव पशुवदित्यर्थः । पशुवदित्युक्तेः तस्यापि

निन्दाप्रतीतिनिवारणार्थं तदेव विशदयति– **यथेति**॥ यथा बहवः पशवो गोरूपाः दोहनादिना मनुष्यं भुञ्ज्युः भोजयेयुरेवमेकैको ज्ञानी पुरुषो देवान् भुनक्ति भोजयति । ज्ञानिनो देवभोजकत्वेऽपि स तत्प्रिय इति कुत इत्यत आह– **एकस्मिन्निति** ॥ यस्माल्लोके एकस्मिन् भोजके पशावादीयमाने सति प्रियं भवति किमु बहुषु । तस्मात् सुबहुगोरूपे ज्ञानिनि देवानां परा प्रीतिर्भवतीति किमु वक्तव्यमिति भावः । न केवलमथ योऽन्या-मित्याद्युक्तार्थवेत्तुर्निन्द्यत्वान्न तथा विद्यात् किन्तु तज्ज्ञानस्य देवाप्रियत्वाच्चेत्याह– **तस्मादिति** ॥ यस्मात्तत्वज्ञानमेव देवानां प्रियं तस्मात् तद् एषां देवानां न प्रियम् । किन्तत्? मनुष्या विष्णोरन्यां देवतां विद्युः उपासीरन्निति यत् एतद् विष्णोरन्यदेवतोपासनम् ॥ ४ ॥

**उपनिषत्—**

[चतुर्मुखकृता क्षत्रजातिसृष्टिः]

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत्तच्छ्रेयो-रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात्क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद् ब्रह्म तस्माद् यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उप निःश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ ५ ॥**

**भाष्यम्—**

**विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः ।**
**इतोऽग्रे जगतस्तस्मात्क्षत्रजातिरजायत ॥**

**वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च ।**
**कामश्च वरुणश्चैव सोमसूर्यौ यमस्तथा ॥**
**एवमाद्याः क्षत्रियास्तु देवानां ब्रह्मनिर्मिताः ।**
**श्रेयसी सर्वजातिभ्यः क्षत्रजातिरिति श्रुतिः ॥**
**नैव क्षत्रात्परा जातिर्ब्रह्मजातिं विना क्वचित् ।**
**ब्राह्मणाच्च परो राजा राजसूयाश्वमेधयोः ॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

'आत्मैवेदमग्र आसीत् पुरुषविधः' इति विष्णोः सकाशाच्चतुर्मुखसृष्टिरुक्ता । सैव ब्राह्मणजातिसृष्टिरित्यभिप्रायेण तदनुवादपूर्वकं तस्माच्चतुर्मुखात् क्षत्रियादि-वर्णभेदेन देवानां सृष्टिमाह– **ब्रह्म वा इदमित्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्ति-निरासाय खण्डं प्रमाणेन व्याचष्टे– **विष्णोरित्यादिना** ॥ 'ब्रह्म वा इदमग्र आसीत्' इत्यत्र ब्रह्मपदं परब्रह्मपरमिति प्रतीतिनिरासाय व्याचष्टे– **विष्णोरिति** ॥ ब्रह्मशब्दार्थः– **ब्राह्मणजातिः सन्निति** ॥ तस्यैवार्थान्तरमाह– **ब्रह्मेति** ॥ नवब्रह्मणां सत्वाच्चतुर्मुख इत्युक्तम् । आसीदित्यस्यार्थः– **जज्ञ इति** ॥ इतो वक्ष्यमाणाज्जगतोऽग्रे । अन्यथा ब्रह्मशब्दस्य परब्रह्मपरत्वे ब्राह्मण-जातिसृष्ट्युक्तिर्न स्यादिति तदेतद् ब्रह्म क्षत्रं विट्शूद्र इत्यनुवादासम्भव इति भावः । 'तच्छ्रेयोरूपमत्यसृजत क्षत्रम्'इत्येतद्व्याचष्टे– **तस्मादिति** ॥ 'यान्येतानि देवक्षत्राणीन्द्रो वरुणः' इत्यादिवाक्यं व्याचष्टे– **वायुरिति** ॥ तत्रेशानशब्दस्यार्थः– **वायुरिति** ॥ रुद्रशब्दः सर्वरुद्रपर इति प्रतीतिनिरासाय सदाशिव इत्युक्तम् । मृत्युशब्दस्यार्थः– **अनन्त इति** ॥ इन्द्रशब्दस्यार्थः– **गरुड इति** ॥ पर्जन्यशब्दस्यार्थः– **शक्र इति** ॥ एतच्च स्वसमकामोपलक्षणमिति भावेन कामश्चेत्युक्तम् । सोमशब्दः स्वसमसूर्योपलक्षक इति भावेन सूर्यस्यापि ग्रहणम् । एवकारद्वयेनेशानादिशब्दानां प्रसिद्धार्थतां निवारयति । अन्यथा रुद्रेशानशब्दयोः यममृत्युशब्दयोश्च पुनरुक्तिः स्यात् । पर्जन्यस्य द्वादशा-

दित्यान्तर्गतस्योत्तरत्र वैश्यत्वस्य वक्ष्यमाणत्वेन क्षत्रियत्वानुपपत्तेश्च । पर्जन्यशब्देनेन्द्रग्रहणे च इन्द्रशब्देन पुनरुक्त्यापत्तेरिति भावः । एतदप्युपलक्षणपरमिति भावेनैवमाद्या इत्युक्तम् । यद्यपि श्रुतिरविवक्षितक्रमा तथाऽपि प्राधान्यक्रममनुसृत्यैव व्याख्यातम् । देवत्रेत्यस्यार्थः– **देवानां मध्य इति** ।। 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' इति सप्तम्यर्थेऽत्राप्रत्ययः । श्रेयोरूपमित्यस्यार्थमाह– **श्रेयसीति** ।। श्रुतिस्तच्छ्रेयोरूपमित्यादिका । क्षत्रजातिः सर्वजातिभ्यः श्रेयसीत्याहेत्यर्थः । 'तस्मात्क्षत्रात्परं नास्ति'इत्येतद् व्याचष्टे– **नैवेति** ।। ब्राह्मणजातेरेव सत्वात्कथमेतदित्यत आह– **ब्रह्मजाति-मिति** ।। 'तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये' इति वाक्यं व्याख्यातुं उक्तस्यापवादमाह– **ब्राह्मणाच्चेति** ।।

**भाष्यम्**——

**उपास्ते राजसूयेऽतो ब्राह्मणो राजसूयिनम् ।**
**आसीन आसनाधस्तात्तथाऽपि ब्राह्मणो गुरुः ।।**
**तस्मात्स राजसूयान्ते ब्राह्मणान् वन्दयीत च ।**
**यः क्षत्रियो ब्राह्मणहा पितृहा स प्रकीर्तितः ।।**
**पापीयानेव भवति हत्वा स्वपितरं यथा ।। इति वामने ।।**

**स्वतोऽधिकगुणं हत्वा साक्षाच्च पितरं पुनः ।**
**क्षत्रस्य ब्राह्मणं हत्वा तावान् दोषो भवेद् ध्रुवम् ।। इत्याग्नेये ।।**

**ईशानो मारुतः प्राणो वायुर्जिष्णुस्तथैव च ।**
**धृष्णुश्च पवमानश्च पवनश्चेति कथ्यते ।। इति शब्दतत्त्वे ।।**

**मृत्युः सङ्कर्षणः शेषः शेताऽनन्तस्तथैव च ।**
**बलिर्महाविषश्चेति भूधरश्चेति कथ्यते ।। इति च ।।**

**इन्द्रः सुपर्णो गरुडो महाभारो धुरन्धरः ।**
**विश्वजिच्चाप्यवध्यश्च वैनतेयश्च कथ्यते ।। इति च ।।**

**पर्जन्यो मघवांश्चैव पुरुहूतः पुरन्दरः ।**
**प्राचीनबर्हिर्हर्यश्वः सोमपो मेषभुक्तथा ।। इति च ।।**
**यशोनिधिर्ब्राह्मणस्तु तद्दातुं क्षत्रिये स्वयम् ।**
**अधो ब्राह्मण आसीनो राजसूये हि सेवते ।। इति प्रत्यये ।।**

**ऋच्छति विनाशयति । रीङ् क्षये इति धातोः ।। ५ ।।**

**टिप्पणी—**

इदानीं तद्वाक्यं व्याचष्टे– **उपास्त इति** ।। 'सैषा क्षत्रस्य योनिर्यद् ब्रह्म' इत्यादिवाक्यं योनिरुत्पत्तिकारणमिति प्रतीतिनिरासाय व्याचष्टे– **तथापीति** ।। यद्यपि राजसूयाश्वमेधयोः ब्राह्मणाच्च परो राजा तथाऽपीत्यर्थः । अनेन यद्यपि राजा परमतां गच्छति तथाऽपि यद् ब्रह्म ब्राह्मणः सैषा क्षत्रस्य योनिरुपदेशादिना ज्ञप्तिकारणमिति व्याख्यातं भवति । तस्माद् यद् यदि राजेत्यत्र तस्मादित्यस्य ब्रह्मैवान्तत उपनिःश्रयति स्वां योनिमिति वाक्येनान्वयमभिप्रेत्य तद् व्याचष्टे– **तस्मादिति** ।। अन्तत इत्यस्यार्थः– **राजसूयान्त इति** ।। ब्रह्मैवेत्यस्य ब्राह्मणानिति ।। उपनिःश्रयतीत्यस्य वन्दयीतेति ।। 'य उ एवं हिनस्ति स्वां स योनिमृच्छति' इति वाक्यं व्याचष्टे– **य इति** ।। एनं हिनस्तीत्यस्यार्थः– **ब्राह्मणहेति** ।। स्वां योनिमृच्छतीत्यस्य पितृहेति । 'स पापीयान् भवति यथा श्रेयांसं हिंसित्वा' इति वाक्यं व्याचष्टे– **पापीयानेवेति** ।। ननु यथा श्रेयांसमित्यस्य यं कञ्चन राजश्रेष्ठमिति प्रतीतेः स्वपितरमिति व्याख्यानं कथमित्यत आह– **स्वत इति** ।। 'जनिता चोपनीता च यस्तु विद्यां प्रयच्छति । अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ।' इति पितृत्वमनेकविधमित्यतः साक्षादित्युक्तम् । स्वतोऽधिकगुणं साक्षादेव पितरं हत्वा स्थितस्य यावान् दोषस्तावान् दोषो ब्राह्मणं हत्वा स्थितस्य क्षत्रस्य ध्रुवं भवेदित्यर्थः । ईशानशब्दो वायुपरतया व्याख्यातस्तत्राभिधानमाह– **ईशान इति** ।। मृत्युशब्दस्यानन्तपरत्वेऽभिधानमाह– **मृत्युरिति** ।। इन्द्रशब्दस्य गरुडपरत्वे तदाह– **इन्द्र इति** ।। पर्जन्यशब्दस्य

शक्रपरत्वेऽप्यभिधानमाह– **पर्जन्य इति** ॥ क्षत्र एव तद् यशो दधातीति वाक्यं प्रागव्याख्यातत्वाद् व्याचष्टे– **यशोनिधिरिति** ॥ तद्यशः स्वस्यैव तदभावे कथं तद्दानं स्यादित्यतो यशोनिधिरित्युक्तम् । ननु 'स्वां स योनिमृच्छति'इत्यस्य पितृहेति व्याख्यानं कथम्? स्वां योनिं स्वपितरं ऋच्छति गच्छतीत्यर्थप्रतीतेरित्यत आह– **ऋच्छतीति** ॥ तत्र धातुं पठति– **रीङिति** ॥ धातोः धातुव्याख्यानात् ॥ ५ ॥

उपनिषत्—

[चतुर्मुखकृता वैश्यशूद्रजातिसृष्टिः]

**स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ ६ ॥ स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च ॥ ७ ॥**

भाष्यम्—

विवस्वदिन्द्रवरुणविष्णुभ्योऽन्येऽदितेः सुताः ।
रुद्रादन्ये तथा रुद्रा वायोरन्ये च वायवः ॥
अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः ।
एक एव हरेर्जातः परिवारविवर्जितः ॥
वाय्वादीन् क्षत्रियान् सृष्ट्वा पुनरल्पपरिग्रहः ।
इच्छन् बहुपरीवारं वैश्यान् देवान् ससर्ज ह ॥
ततो बहुतरानिच्छन् शूद्रान् देवान् ससर्ज ह ।
अश्विनौ पृथिवी चैव काला मृत्यव एव च ॥
शूद्रदेवाः समुद्दिष्टा देववर्णा इति स्मृताः ।

टिप्पणी—

'वसवो रुद्रा आदित्या विश्वेदेवा मरुतः' इति वाक्यं यथाश्रुतार्थप्रतीतिनिरासाय व्याचष्टे– **विवस्वदिति** ॥ द्वादशादित्यानां मध्ये विवस्वदिन्द्रवरुणानां क्षत्रियत्वस्योक्तत्वाद् विष्णोश्च वर्णशून्यत्वादिदमुक्तम्। अदितेस्सुता आदित्याः। एकादशरुद्रेषु रुद्रस्य क्षत्रियत्वस्योक्तत्वादन्य इत्युक्तम् । मुख्यवायुसहितेषु पञ्चाशन्मरुत्सु मुख्यवायोः क्षत्रियत्वस्योक्तत्वाद् वायोरन्य इत्याह । अष्टवसुषु अग्नेर्ब्राह्मणत्वस्य वक्ष्यमाणत्वादग्नेरन्य इत्यभिहितम् । 'ब्रह्म वा इदमग्र आसीदेकमेव' इति वाक्यस्यार्थमाह– **एक एवेति** ॥ ब्रह्मेति वक्ष्यमाणमत्रापि सम्बद्ध्यते । एवकारव्यावर्त्यं दर्शयति– **परिवारविवर्जित इति** ॥ अनेन 'तदेकं सन्नव्यभवत्' इति वाक्यं व्याख्यातम् । ननु 'तच्छ्रेयोरूपमत्यसृजत क्षत्रम्' इत्यादिना परिवारभूतक्षत्रियदेवानामुत्पत्तेरुक्तत्वात्पुनः स नैव व्यभवदित्युक्तिः कथमित्यतस्तदभिप्रायमाह– **वाय्वादीनामिति** ॥ नैव व्यभवदित्यस्यार्थः– **अल्पपरिग्रह इति** ॥ स इत्यस्येच्छन् बहुपरिवारमिति । विशमसृजतेत्यस्यार्थः– **वैश्यानिति** ॥ तर्हि बहुपरिवारस्यापि जातत्वात्स नैव व्यभवत् स शौद्रं वर्णमसृजतेत्युक्तिः कथमित्यत आह– **तत इति** ॥ शूद्रांश्चेति सम्बन्धः। पूषणमियं वै पूषेयं हीदं सर्वं पुष्यतीति पृथिव्याः शूद्रदेवत्वमुक्तं तदुपलक्षणपरमिति भावेनाऽऽह– **अश्विनाविति** ॥ निर्ऋतिरपि ग्राह्यः । इत्युक्तप्रकारेण देववर्णाः देवेषु ब्राह्मणादिवर्णाः स्मृता उक्ता इत्यर्थः ॥

उपनिषत्—

[धर्माभिमानिनः मुख्यप्राणस्य सृष्टिः]

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयाꣳस-माशꣳसते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ ८ ॥**

भाष्यम्—

स्रष्टा स्वयं समुद्दिष्टः पालका देवता इमाः ॥
धारणं कथमस्य स्याद् गतिश्चास्य कथं परा ।
इति मत्वा हरेर्भक्तिर्धर्मरूपं पुनर्विभुः ॥
प्राणिनां धैर्यरूपं च वायो रूपान्तरं पुनः ।
ससर्ज मतिमान् ब्रह्मा विष्णोराज्ञापुरःसरः ॥
तस्माद् वायोः परो नास्ति ऋते विष्णुं सनातनम् ।
शेषादीनां क्षत्रियाणां वायुरेवाधिपः स्मृतः ॥
धारणाद्धर्म इत्याहुर्वायुर्धारयति प्रजाः ।
अवलोऽपि ततो वायोर्विष्णुभक्त्यादिरूपिणः ॥
प्राप्तुमिच्छति युक्तः सन् विष्णुं सुबलवत्तरम् ।
यथैव युवराजेन महाराजमभीप्सति ॥
प्राप्तुं धर्माभिमानी स वायुः सत्याभिमानवान् ।
तस्मादाहुर्धर्मविदं सत्यं वेत्तेति वेदिनः ॥
सत्यज्ञमथ धर्मज्ञं वायुर्देवो यतस्तयोः ॥ इति नारदीये ॥

टिप्पणी—

ननु बहुतरपरिवारस्याप्युत्पन्नत्वात्पुनः 'स नैव व्यभवत्' इत्युक्तिः कथमित्यतस्तदभिप्रायमाह– **स्रष्टेति** ॥ अस्य जगतो धारणं कथं केन स्यात् । अस्य सज्जनवर्गस्य गतिर्मोक्षश्च कथं केन स्यादिति मत्वेत्यर्थः । ननु स्वेन वा स्वसृष्टदेवैर्वा धारणं गतिश्च स्यादित्यत उक्तम्– स्रष्टेति ॥ 'तच्छ्रेयोरूपमत्यसृजत धर्मम्' इत्येतद् व्याचष्टे– **हरेरिति** ॥ भक्त्याख्यधर्माभिमानिरूपमिति गतिसाधनरूपोक्तिः । यद्वा, धर्मो निवृत्तधर्मः । तदुपलक्षणपरमित्यभिप्रायेण भक्तिधर्मरूपमित्युक्तम् । अत एव भक्त्यादिरूपिण इति वक्ष्यति । धैर्यरूपं धैर्याभिमानिरूपमिति धारकरूपोक्तिः । अनेन श्रौतधर्मशब्दो द्वेधा व्याख्यातः । उत्तरत्र रूपद्वयस्याप्युक्तत्वात् । क्षत्ररूपापेक्षया प्रथमः पुनःशब्दः ।

गतिसाधनरूपापेक्षया द्वितीयः । ननु वायोः स्वरूपेण समत्वात् कथं ब्रह्मा तं ससर्जेत्यत आह– **विष्णोरिति** ।। 'तस्माद्धर्मात्परं नास्ति' इत्येतद् व्याचष्टे– **तस्मादिति** ।। विष्णुरेवास्तीत्यत उक्तम्– **ऋत इति** ।। तस्मादित्युक्तं हेतुं दर्शयितुं तदेतत्क्षत्रस्य क्षत्रं यद्धर्म इति पूर्ववाक्यं व्याचष्टे– **शेषादीनामिति** ।। यस्मादिति शेषः । यद्धर्म इति धर्मशब्दो न पूर्वधर्मशब्दवदुभयार्थः । गतिसाधनरूपस्याथो बलीयानित्यादिना वक्ष्यमाणत्वादिति भावेन तस्यार्थमाह– **धारणादिति** ।। प्रजाः शेषाद्याः अतो वायुर्धर्मशब्दाभिधेय इति शेषः । 'अथोऽबलीयान् बलीयांसम् आशंसते धर्मेण' इति वाक्यं व्याचष्टे– **अबलोऽपीति** ।। यतो वायोः परो नास्ति तत इत्यर्थः । अनेनाथो इत्युक्तार्थम् । धर्मेणेति धर्मशब्दो न पूर्ववदुभयार्थः धारकरूपस्योक्तत्वादिति भावेनोक्तं विष्णुभक्त्यादि-रूपिण इति । युक्तो योगयुक्तः । 'यथा राज्ञैवम्' इत्येतद् व्याचष्टे– **यथैवेति** ।। महाराजं प्राप्तुम् इति सम्बन्धः । 'यो वै स धर्मः सत्यं वै तत्' इत्येतद् व्याचष्टे– **धर्माभिमानीति** ।। 'तस्मात्सत्यं वदन्तमाहुः धर्मं वदतीति धर्मं वा वदन्तं सत्यं वदति' इति इत्येतद् व्याचष्टे- **तस्मादिति** ।। सत्यवचनं धर्मवचनं वा विप्रलम्भादिमूलं न भवतीति भावेन धर्मविदमित्यादिना व्यवहार-कारणीभूतं ज्ञानं दर्शितम् । 'एतद्ध्येवैतदुभयं भवति' इति वाक्यं व्याचष्टे– **वायुरिति** ।।

उपनिषत्—

[ज्ञानरहितकर्मणः वैयर्थ्यम्]

**तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्रह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यश्शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वे-ताभ्याꣳ रूपाभ्यां ब्रह्माभवदथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो**

वाऽनूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्माऽनमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत् सृजते ॥ ९ ॥

भाष्यम्—

स नैव व्यभवदिति परिवारबहुत्वेन यद् विशिष्टत्वं तन्नाभवदित्यर्थः ।

बृहत्त्वात्सर्ववर्णानां ब्राह्मणः परिकीर्तितः ।
क्षतत्राणात् क्षत्रियश्च त्रिषूनत्वाद् विशः स्मृताः ॥
ऊनवाची हि विट्शब्दः शुभे दत्ते त्रिभिर्यतः ।
रमते स ततः शूद्रः स ब्राह्मण्याभिमानवान् ॥
ब्रह्माऽग्निना सहैवाऽऽस्ते देवेष्वथ नरेषु च ।
ब्राह्मणेन सहैवाऽऽस्ते ब्रह्मा शुभचतुर्मुखः ॥
क्षत्रजात्यभिमानी तु पवनो देवराजभिः ।
सुपर्णशेषरुद्राद्यैर्मानुषेषु च राजभिः ॥
वैश्यजात्यभिमानी च नासिक्यो वायुरूर्जितः ।
वस्वादिभिः सहैवाऽऽस्ते देवेष्वथ नरेषु च ॥
विड्भिः शूद्राभिमानी च निर्ऋतिर्देवतासु च ।
नासत्ययोः पृथिव्यां च शूद्रेष्वेव तु मानुषे ॥
यस्मादग्नौ विशेषेण ब्रह्मणः सन्निधिर्भवेत् ।
अतोऽग्नावेव देवानां सर्वेषां नियमाद्धविः ॥
हुत्वा लोकान् प्रार्थयन्ति तथा विप्रेषु मानुषे ।

टिप्पणी—

'स नैव व्यभवत्' इत्यस्य पुनरल्पपरिग्रह इति कथं व्याख्यानम् ।

ततस्तस्यार्थस्याप्रतीतेरित्यतस्तद्वाक्यं व्याचष्टे– **स नैवेति** ।। यद् विशिष्टत्वं तन्नाभवत् न प्राप्तवानित्यर्थः । यद्विशिष्टमिति पाठे यथाश्रुत एवार्थः । तथाचाल्प-परिग्रह इति तदर्थलब्धस्योक्तिरिति भावः । एवं 'स नैव व्यभवत्' इत्युत्तरवाक्यद्वयमपि परिवारबहुतरत्वेन यद् विशिष्टत्वं तन्नाभवदिति मोचकेन धारकेण च यद्विशिष्टत्वं तन्नाभवदित्यपि व्याख्येयम् । प्रागुक्तब्राह्मणादिवर्णेषु श्रेष्ठानां चतुर्मुखादीना-मग्न्याद्याविष्टत्वरूपमाहात्म्यं वक्तुं तदनुवदति श्रुतिः– तदेतत् ब्रह्म क्षत्रं विट् शूद्र इति । तत्र निर्देशक्रमे प्राधान्यक्रम एव निमित्तमिति भावेन ताञ्छब्दांस्तत्र निर्वक्ति– **बृहत्त्वादिति** ।। सर्ववर्णानां मध्ये बृहत्त्वाच्छ्रेष्ठत्वात् । ब्राह्मणाः ब्रह्मेति परिकीर्तिता इत्यर्थः । क्षत्रियाश्च क्षतत्राणात् क्षत्रमिति कीर्तिताः । वैश्या इति शेषः । वैश्यानां त्रिषूनत्वेन विट्शब्दवाच्यत्वं कथमित्यत आह– **ऊनेति** ।। **शुभे दत इति** ।। शू इत्यस्यार्थः– **शुभ इति** ।। दकारस्य दत्त इति । र इत्यस्यार्थः– **रमत इति** ।। शुभाधिक्यविवक्षयोकारदैर्घ्यम् । 'तदग्निनैव देवेषु ब्रह्माभवत्' इति वाक्यं व्याचष्टे– **स इति** ।। देवेषु अग्निनैव सहास्ते तदाविष्ट इति यावत् । एवमुत्तरत्रापि । 'ब्राह्मणो मनुष्येषु' इति वाक्यं व्याचष्टे– **अथ नरेष्विति** ।। अनेन 'ब्रह्माभवत्' इत्येतदत्राप्यनुवर्तनीयमित्युक्तं भवति । 'क्षत्रियेण क्षत्रियः' इति वाक्यं व्याचष्टे– **क्षत्रेति** ।। देवेषु राजानो देवराजानः तैः । समासान्तो विधिरनित्य इति भावः । स हैवास्त इत्यत्राप्यनु-वर्तते । 'वैश्येन वैश्यः' इति वाक्यं व्याचष्टे– **वैश्यजातीति** ।। देवेषु वस्वादिभिः । 'शूद्रेण शूद्रः' इत्येतद् व्याचष्टे– **शूद्राभिमानी चेति** ।। देवे तासु मध्ये नासत्ययोः पृथिव्यां चाऽस्ते । मानुषे तु शूद्रेष्वेवाऽस्त इति सम्बन्धः । अनेन क्षत्रियेणेत्यादिवाक्यत्रयेऽपि देवेषु मनुष्येष्वभवदिति पदत्रयस्य चानुवृत्तिः । तृतीयैकवचनं च जात्यभिप्रायेणेत्युक्तं भवति । 'तस्मादग्नावेव देवेषु लोकमिच्छन्तः' इति वाक्यं तस्मादित्युक्तहेतुं दर्शयन् व्याचष्टे– **यस्मादिति** ।। सर्वेषां देवानां मध्ये हविर्हुत्वेति शेषोक्तिः । 'ब्राह्मणे मनुष्येषु' इति वाक्यं व्याचष्टे– **तथेति** ।। विप्रेषु यस्माद् विशेषेण ब्रह्मणः

सन्निधिः भवेद् अतो मानुषे विप्रेषु हविर्हुत्वा लोकान् प्रार्थयन्तीति सम्बन्धः । ब्राह्मण इत्येकवचनं जातिविवक्षयेति भावेनोक्तम्–**विप्रेष्विति** ॥ मानुष इत्येकवचनं जातिविवक्षया। अत एव श्रुतौ मनुष्येष्वित्युक्तम् । अत्र यस्मादिति हेतुवाक्येनैताभ्यां हि रूपाभ्यां ब्रह्माभवदिति वाक्यं पूर्वत्र हेतुप्रतिपादकतया विवृतं भवति ॥

**भाष्यम्—**

> **सर्वजात्युत्तमो ब्रह्मा यतो विप्राग्निसंस्थितः ॥**
> **तस्माद् विप्रांस्तथैवाग्निं तर्पयेद् ब्रह्मतुष्टिकृत्।**
> **तुष्टे ब्रह्मणि विष्णुश्च तुष्टो लोकान् प्रदास्यति ॥**
> **अग्निविप्रार्चकोऽप्येवं यो न वेद हरिं परम्।**
> **आश्रयं सर्वजीवानां हरिस्तं नैव भोजयेत् ॥**
> **यथाऽनधीतो वेदस्तु यथा कर्माकृतं तथा।**
> **न सम्यक् फलदो विष्णुरज्ञातो जगदीश्वरः ॥**
> **यद्यवेत्ता महदपि हयमेधादिकं हरेः।**
> **कुर्यात् क्षयिष्णुफलवान् स भवेन्नात्र संशयः ॥**
> **आप्तकामतयाऽऽत्मेति यो विष्णुः समुदीरितः।**
> **सर्वाश्रयमुपासीत तमेव पुरुषः सुधीः ॥**
> **विष्णुं सर्वाश्रय इति सदोपास्ते य आत्मवान्।**
> **क्षीयन्ते नास्य कर्माणि शुभान्येव कदाचन ॥**
> **उपासनाबलान्मुक्तो भोगान् कर्मफलान् सदा।**
> **भुङ्क्ते विष्णोः समीपस्थः सर्वदोषविवर्जितः ॥ इति ब्रह्माण्डे ॥**

**एताभ्यां रूपाभ्यां सहितं हि ब्रह्माभवत्। स्वं लोकं स्वाश्रयम्।**

**टिप्पणी—**

एताभ्यां हि रूपाभ्यामित्येतदेव वाक्यं साध्यान्तराध्याहारेणापि व्याचष्टे–**सर्वेति** ॥ ब्रह्मतुष्ट्याऽपि किं फलं विष्णुतुष्टेरेव लोकप्राप्तिहेतुत्वेन सम्पाद्यत्वादित्यत

आह– **तुष्ट इति** ॥ लोकान् वैकुण्ठादीन् अग्निविप्रार्चनमात्रस्य ब्रह्मतुष्टिद्वारा मोक्षहेतुत्वमिति शङ्कानिरासाय 'अथ यो हवा अस्माल्लोकात्'इति वाक्यं व्याचष्टे– **अग्नीति** ॥ कर्माकरणेनैव भोजनाभावोपपत्तेरविदितो न भुनक्तीति कथमित्यत आह– **अग्निविप्रार्चकोऽपीति** ॥ नैव भोजयेत् लोकानित्यनुवर्तते । 'यथा वेदो वाऽनूक्तोऽन्यद्वा कर्माकृतम्'इति दृष्टान्तवाक्यं व्याचष्टे– **यथेति** ॥ ननु कथमयं दृष्टान्तः अनधीतस्य वेदस्याकृतस्य च कर्मणो न सर्वथा फलहेतुत्वम् । अज्ञकृतकर्मणस्तु स्वर्गादिफलहेतुत्वमिति वैषम्यादित्यत आह– **न सम्यगिति** ॥ अल्पफलदोऽपि मोक्षरूपसम्यक्फलदो न भवतीत्यर्थः । सर्वथा फलाजनकस्याप्यनधीतवेदादेः सम्यक्फलप्रदत्वाभावोऽस्तीति वैषम्यमिति भावः । नन्वल्पस्याग्निविप्रार्चनमात्रस्य मोक्षहेतुत्वाभावेऽपि महतोऽश्वमेधादेर्मोक्षहेतुत्वं भविष्यतीति किं ज्ञानेनेत्याशङ्कानिरासाय प्रवृत्तं यदि वा इति वाक्यं व्याचष्टे– **यदीति** ॥ 'आत्मानमेव लोकमुपासीत'इति वाक्यं व्याचष्टे– **आप्तेति** ॥ उपासीत जानीत च । 'स य आत्मानमेव'इति वाक्यं व्याचष्टे– **विष्णुरिति** ॥ उपास्ते जानाति च । नन्वेवं 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यनेन विरोधः स्यादित्यत आह– **शुभान्येवेति** ॥ अशुभकर्मनाशविषयं तत् । शुभहानेरपुरुषार्थत्वादिति भावः । 'अस्माद्ध्येवात्मनः' इति वाक्यं तात्पर्यतो व्याचष्टे– **उपासनेति** ॥ ननु 'एताभ्यां हि रूपाभ्यां ब्रह्माभवत्'इत्यस्यैताभ्यां हि ब्राह्मणाग्निरूपाभ्यां कर्मकर्ताधिकरणरूपाभ्यां ब्रह्माभवदित्यर्थप्रतीतेः । 'सर्वजात्युत्तमो ब्रह्मा यतो विप्राग्निसंस्थितः' इति व्याख्यानं कथमित्यतस्तद् व्याचष्टे– **एताभ्यामिति** ॥ सहयोगे तृतीयेति भावः । पूर्वोक्तं तु तात्पर्यकथनमिति हृदयम् । ऐक्यस्य दूषितत्वेन नार्थान्तरसम्भव इति भावः । ननु स्वं लोकमित्यस्य स्वाख्यं लोकं परमात्मानमित्यर्थप्रतीतेः कथमाश्रयं सर्वजीवानामिति व्याख्यानमित्यत आह– **स्वं लोकमिति** ॥ स्वस्याऽश्रयः स्वाश्रय इत्युक्त्या स्वमित्यस्य स्वीयार्थकत्वमुक्तम् । स्वाज्ञातय इति स्वशब्दस्य स्वीयेऽपि प्रयोगादिति भावः ॥ ९ ॥

उपनिषत्——

[सर्वजीवानाम् आश्रयः श्रीहरिः]

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद् यजते तेन देवानां लोकोऽथ यदनुब्रूते तेनर्षिणामथ यत्पितृभ्यो निमृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम् ॥ १० ॥

भाष्यम्——

योऽयं सर्वेषु जीवेषु नियामकतया स्थितः ।
स विष्णुराप्तकामत्वादात्मेत्येवोच्यते बुधैः ॥
स लोकः सर्वभूतानां सर्वजीवेषु संस्थितः ।
वैश्वदेवादिकान् होमान् यज्ञांश्च कुरुते विभुः ॥
कारुण्यात्सर्वदेवेषु तेन देवाश्रयो हरिः ।
ऋषीणामाश्रयश्चापि स्वाध्यायेष्वृषिसंस्मृतेः ॥
स हि जीवेषु संविष्टः पिण्डं पुत्रजनिं तथा ।
यत्करोति पितॄणां च संश्रयस्तत एव सः ॥
तृणोदकादिदानेन पशूनामन्नतो नृणाम् ।
उपकाराच्च सर्वेषां प्राणिनामाश्रयो हरिः ॥
यज्ञादीन् देवतादीनामन्नत्वेन पुरैव यत् ।
ब्रह्माद्यैरर्थितः प्रादात्क्षीराब्धेस्तट उत्तरे ॥

**अतश्च सर्वलोकानामाश्रयो विष्णुरेव सः ।**
**एवं यो वेत्ति विष्णोस्तु सर्वाधारत्वमुत्तमम् ॥**
**सर्वाण्यपि हि भूतानि तस्येच्छन्त्यविनाशिताम् ।**
**स्वाश्रयस्य यथा नित्यमनाशं प्रार्थयन्ति हि ॥**
**राजादेरपि तान्येवमुत्तमाश्रयवेदिनः ।**
**तदेतद् वासुदेवस्य सर्वाधारत्वमुत्तमम् ॥**
**विदितं सर्ववेदैश्च मीमांसाभिश्च निश्चितम् ॥ इति भविष्यत्पर्वणि**

**टिप्पणी—**

'आत्मानमेव लोकम्' इत्युक्तं भगवतः सर्वाश्रयत्वं प्रपञ्चयति– **अथो इति** ॥ तत्र 'अथो अयं वा आत्मा सर्वेषां भूतानां लोकः' इति वाक्यम् अयं प्रकृतो गृही कर्माधिकृतोऽविद्वानात्मा शरीरेन्द्रियविशिष्टः । सर्वेषां देवादीनां भूतानां लोको भोग्य इति व्याख्यातम् । तदसत् । 'आत्मानमेव लोकमुपासीत' इत्युपास्यत्वेन प्रकृतस्यैवाऽत्मनोऽयं वा आत्मेति परामर्शात् । नहि कर्माधिकृतो गृहस्थः पूर्वमात्मशब्देन प्रकृतः येन तत्परामर्शः स्यादिति भावेन खण्डं प्रमाणेन व्याचक्षाणः तावदयमात्मेत्यस्यार्थमाह– **योऽयमिति** ॥ 'सर्वेषां भूतानां लोकः' इत्येतद् व्याचष्टे– **स इति** ॥ सर्वभूतानां देवादीनाम् । 'स यज्जुहोति यद् यजते तेन देवानां लोकः' इति वाक्यं व्याचष्टे– **वैश्वेति** ॥ ननु किमर्थमेतत्करणं देवताप्रीतिसम्पादनार्थमिति चेन्न । आप्तकामस्य तेनापि प्रयोजनाभावादित्यत उक्तम्– **कारुण्यादिति** ॥ 'अथ यदनुब्रूते तेनर्षीणाम्' इति वाक्यम् अध्ययनकरणमात्रेण कथम् ऋषीणामाश्रय इति शङ्कां परिहरन् व्याचष्टे– **ऋषीणामिति** ॥ चशब्दः पूर्वत्र सम्बद्ध्यते– **ऋषिसंस्मृतेरिति** ॥ 'यो ह वा अविदितार्षेच्छन्दो दैवतब्रह्मणेन' इति श्रुतेः ऋषिपरिज्ञानाभावे अध्ययनस्य व्यर्थत्वादिति भावः । श्रुतौ पूर्ववाक्यात्स इत्येतदत्रानुवर्तत इति भावेन इत्यनुवादेन जीवेषु सन्निविष्ट इति तत्परामृष्टं दर्शितम् । 'अथ यत्पितृभ्यो निमृणाति यत्प्रजामिच्छते तेन पितॄणाम्' इति

वाक्यं व्याचष्टे– **पिण्डमिति** ।। 'अथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनाम्'इति वाक्यं व्याचष्टे– **तृणेति** ।। 'यदेभ्योऽशनं ददाति तेन मनुष्याणाम्'इति वाक्यं व्याचष्टे– **अन्नत इति** ।। उभयत्रापि आश्रयो हरिरिति वक्ष्यमाणेन सम्बन्धः । यदस्य गृहेष्विति वाक्यं व्याचष्टे– **उपकाराच्चेति** ।। 'अथो अयं वा आत्मा'इत्यादिजीवान्तर्गतो भगवान् यज्ञादिकर्तृत्वाद्देवाद्याश्रय इत्यर्थत्वेन व्याख्याय श्वेतद्वीपगतमूलरूपेणापि यज्ञादिकर्तृत्वाद्देवाद्याश्रय इत्यर्थत्वेनापि व्याकरोति– **यज्ञादीनिति** ।। सर्वलोकानां सर्वभूतानाम् । विष्णुरेव मूलरूप्येवेत्यर्थः । 'हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति'इति वाक्यं व्याचष्टे– **एवमिति** ।। 'यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेवम्'इति वाक्यं व्याचष्टे– **स्वाश्रयस्येति** ।। स्वाश्रयस्य राजादेरिति सम्बन्धः । तानि राजाद्याश्रितानि । एवमुक्तमस्य हरेः आश्रयत्ववेदिनः तस्याविनाशितामिच्छन्तीति पूर्वेण सम्बन्धः । 'तद्वा एतद् विदितं मीमांसितम्'इति वाक्यं व्याचष्टे– **तदेतदिति** ।।

**भाष्यम्**—

[भगवता ब्रह्मरुद्रादिदेवतापूजाकरणे निमित्तम्]

**किन्तु ब्रह्मादिभिर्देवैः पुरा दृष्ट्वा निरंहसः ।**
**निर्भयान् विष्णुनाम्नैव यथेष्टं पदमागतान् ।।**
**अलब्ध्वा चाऽत्मनः पूजां सम्यगाराधितो हरिः ।**
**मया चास्मादपि श्रैष्ठ्यं वाञ्छताऽहङ्कृतात्मना ।।**
**ततः साक्षाज्जगन्नाथः प्रसन्नो भक्तवत्सलः ।**
**अंशांशेनाऽत्मनैवैतान् पूजयामास केशवः ।।**
**देवान् पितॄन् द्विजान् हव्यकव्याद्यैः करुणामयः ।**
**ततः प्रभृति पूज्यन्ते त्रैलोक्ये सचराचरे ।। इति पाद्मे ।।**

टिप्पणी—

एवं 'अथो अयं वा आत्मा' इत्यादिवाक्यं जीवान्तर्गतरूपेण वा मूलरूपेण वा यज्ञादिकर्तृत्वाद् भगवान् देवाद्याश्रय इति व्याख्यातम्। इदानीं रामकृष्णाद्यवताररूपेणापि यज्ञादिकर्तृत्वाद् देवाद्याश्रय इत्यपि तद्वाक्यस्यार्थमभिप्रेत्य तत्र प्रमाणमाह— **किन्त्विति** ॥ हरिर्विधिबद्धतया रामकृष्णादिरूपेण देवादीन् पूजयामासेति न किन्त्वित्यर्थः । पुरा कृतयुगे विष्णुनाम्नैव विष्णोरेव [१]देवत्वेन पूजाकरणेन निरंहसो निर्गतपापान् अत एव नरकादिभयशून्यान् यथेष्टं पदमागतान् दृष्ट्वाऽऽत्मनो देवत्वेन स्वातन्त्र्येण पूजां च अलब्ध्वोत्तरयुगप्रवृत्तिमिच्छद्भिः ब्रह्मादिभिः देवैरसुरजनमोहनाय हर्याज्ञयैव सम्यगाराधित इत्यर्थः । न केवलं ब्रह्मादिभिः किन्तु अस्माद् विष्णोरपि श्रैष्ठ्यं दुष्टजनमोहनाय विष्ण्वाज्ञयैव वाञ्छताऽहङ्काराभिमानिना मया च सम्यगाराधितः। रुद्रवाक्यमिदम्। तत आराधनात्प्रसन्नः, अंशस्य पुरुषावतारस्य अंशेन रामकृष्णादिरूपेण ॥ १० ॥

उपनिषत्—

[भगवता नानावतारेषु आचरिताः गृहस्थधर्माः]

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान् वै कामो नेच्छꣳश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्योकृत्स्नता मन एवास्याऽत्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवं श्रोत्रेण**

१. 'देवत्वेन' इति मुद्रितग्रन्थे नास्ति ।

**हि तच्छृणोत्यात्मैवास्य कर्माऽत्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किञ्च तदिदꣳ सर्वमाप्नोति य एवं वेद ॥ ११ ॥**

इति अव्याकृतब्राह्मणम् ॥ ५ ॥

**भाष्यम्—**

**एको नारायणः पूर्वमासीज्जायां स ऐच्छत।**
**विद्यमानामपि सदा भोगार्थं पुरुषोत्तमः॥**
**नित्यत्वेऽप्युभयोर्देवोऽवियुक्तस्तु तया यदा।**
**एक इत्युच्यते देव्या रममाणः सुतं विभुः॥**
**ऐच्छद् ब्रह्मा ततो जज्ञे ततो देवांश्च सर्वशः।**
**जाते पुत्रे वित्तमैच्छद्भूतान्यण्डं ततोऽभवत्॥**
**अण्डस्यान्तस्त्विमे लोकाः कुर्यां कर्मेति चैच्छत।**
**ततस्तु कृतवान्यज्ञं स्वस्मै स पुरुषोत्तमः॥**
**आहुरात्मेति तं देवं पूर्णत्वाद् विष्णुमव्ययम्।**
**तस्मादद्यापि यः कामी स ह्येतावन्तमिच्छति॥**
**दैवं वित्तं सुखाद्यं हि मित्राद्यं मानुषं तु यत्।**
**इदानीमपि तस्माद्धि कामयेदेवमेव तु॥**
**यः कश्चित्पुरुषो वाऽपि तद्वैकल्यादकृत्स्नवान्॥**

**टिप्पणी—**

नन्वथो अयं वेत्यादेर्भगवान् मूलरूपेण यज्ञादिकर्तृत्वाद् देवाद्याश्रय इति व्याख्यानं तदा स्याद् यदि मूलरूपस्य भगवतो गृहस्थत्वं यज्ञादिकर्तृत्वं च प्रामाणिकं स्यात्। तदेव कुत इत्याशङ्कानिरासाय प्रवृत्तं 'आत्मैवेदमग्र आसीत्'इति खण्डं भगवतो गार्हस्थ्ययज्ञादिकर्तृत्वप्रतिपादकतया प्रमाणेन व्याचष्टे– **एक इति**॥ अनेनाऽत्मशब्देन ब्रह्मचारी कथ्यत इति परव्याख्यानं

प्रमाणविरुद्धमित्युक्तं भवति । 'सोऽकामयत जाया मे स्यात्'इति वाक्यं व्याचष्टे– **जायामिति** ॥ नन्वविद्यमानस्येच्छा दृष्टा । नहि नारायणस्य जायाऽविद्यमाना । महालक्ष्म्याः सदा विद्यमानत्वादित्यत आह– **विद्यमाना-मपीति** ॥ स्वरमणस्य तस्य तया भोगः कादाचित्क इति भावः । एवं तर्ह्यात्मैवेदमग्र आसीदेक एवेति कथम्? । नारायणवत्तज्जायाया अपि अनादिनित्यत्वादित्यत आह– **नित्यत्वेऽपीति** ॥ यदा यस्मात्तया वियुक्तः तस्मादेक इत्युच्यत इत्यर्थः । 'अथ प्रजायेय'इति वाक्यं व्याचष्टे– **देव्येति** ॥ अन्येच्छावद् विष्णोरिच्छा न मोघेति भावेन वाक्यशेषमाह– **ब्रह्मेति** ॥ 'अथ वित्तं मे स्यात्'इति वाक्यं व्याचष्टे– **जात इति** ॥ पूर्ववदत्रापि वाक्यशेषमाह– **भूतानीति** ॥ 'अथ कर्म कुर्वीय'इत्येतद् व्याचष्टे– **कुर्यामिति** ॥ अत्रापि वाक्यशेषमाह॥ **ततस्त्विति** ॥ जायादिकामनया यज्ञकरणेन च प्राप्तापूर्णत्वशङ्कानिरासायाऽत्मशब्दं नारायणे निर्वक्ति– **आहुरिति** ॥ 'तस्मादप्येतर्हि'इत्यादिवाक्यं व्याचष्टे– **तस्मादिति** ॥ नारायणेन कामितत्वादित्यर्थः । एतावन्तं जायादिचतुष्टयम् । नात्र वित्तशब्देन पूर्ववद्भूतादिकं विवक्षितम् । तस्याधुनातनपुरुषाकाम्यत्वादिति भावेनाऽह– **दैवमिति** ॥ सु सम्यक् खं ज्ञानम् आद्यशब्देन वेदादिशास्त्रम् । यद्वा सुखस्याऽद्यं सुखसाधनं वेदादिशास्त्रमित्यर्थः । मित्राद्यं मित्राद्यशब्देन हिरण्यादिग्रहणम् । 'स यावदप्येतेषाम्'इति वाक्यं स इति तच्छब्देनाऽत्मपरामर्श इति भ्रान्तिनिरासाय व्याचष्टे– **इदानीमपीति** ॥ तस्मान्नारायणेन जायादिचतुष्टयस्य कामितत्वादिदानी-मपि यः कश्चिदपि पुरुषः एवमेव नारायणवदेव जायादिचतुष्टयं कामयेत् । तत्र यदि कामितवैकल्यं तदाऽकृत्स्नवानपूर्णो हीत्यर्थः ॥

**भाष्यम्**—

**एकाकिनोऽप्यवैकल्यं यथैव स्यात्तथा शृणु ॥**
**स्वात्मनस्त्वपृथग् यत्तज्ज्ञानरूपं मनः परम् ।**
**मुक्तावपि न हेयं यत् तत् स्वाम्येत्येव चिन्तयेत् ॥**

हि तच्छृणोत्यात्मैवास्य कर्माऽत्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किञ्च तदिदꣳ सर्वमाप्नोति य एवं वेद ॥ ११ ॥

इति अव्याकृतब्राह्मणम् ॥ ५ ॥

भाष्यम्—

एको नारायणः पूर्वमासीज्जायां स ऐच्छत ।
विद्यमानामपि सदा भोगार्थं पुरुषोत्तमः ॥
नित्यत्वेऽप्युभयोर्देवोऽवियुक्तस्तु तया यदा ।
एक इत्युच्यते देव्या रममाणः सुतं विभुः ॥
ऐच्छद् ब्रह्मा ततो जज्ञे ततो देवांश्च सर्वशः ।
जाते पुत्रे वित्तमैच्छद्भूतान्यण्डं ततोऽभवत् ॥
अण्डस्यान्तस्त्विमे लोकाः कुर्यां कर्मेति चैच्छत ।
ततस्तु कृतवान्यज्ञं स्वस्मै स पुरुषोत्तमः ॥
आहुरात्मेति तं देवं पूर्णत्वाद् विष्णुमव्ययम् ।
तस्मादद्यापि यः कामी स ह्येतावन्तमिच्छति ॥
दैवं वित्तं सुखाद्यं हि मित्राद्यं मानुषं तु यत् ।
इदानीमपि तस्माद्धि कामयेदेवमेव तु ॥
यः कश्चित्पुरुषो वाऽपि तद्वैकल्यादकृत्स्नवान् ॥

टिप्पणी—

नन्वथो अयं वेत्यादेर्भगवान् मूलरूपेण यज्ञादिकर्तृत्वाद् देवाद्याश्रय इति व्याख्यानं तदा स्याद् यदि मूलरूपस्य भगवतो गृहस्थत्वं यज्ञादिकर्तृत्वं च प्रामाणिकं स्यात् । तदेव कुत इत्याशङ्कानिरासाय प्रवृत्तं 'आत्मैवेदमग्र आसीत्'इति खण्डं भगवतो गार्हस्थ्ययज्ञादिकर्तृत्वप्रतिपादकतया प्रमाणेन व्याचष्टे– **एक इति** ॥ अनेनाऽत्मशब्देन ब्रह्मचारी कथ्यत इति परव्याख्यानं

प्रमाणविरुद्धमित्युक्तं भवति । 'सोऽकामयत जाया मे स्यात्'इति वाक्यं व्याचष्टे– **जायामिति** ॥ नन्वविद्यमानस्येच्छा दृष्टा । नहि नारायणस्य जायाऽविद्यमाना । महालक्ष्म्याः सदा विद्यमानत्वादित्यत आह– **विद्यमाना-मपीति** ॥ स्वरमणस्य तस्य तया भोगः कादाचित्क इति भावः । एवं तर्ह्यात्मैवेदमग्र आसीदेक एवेति कथम्? । नारायणवत्तज्जायाया अपि अनादिनित्यत्वादित्यत आह– **नित्यत्वेऽपीति** ॥ यदा यस्मात्तया वियुक्तः तस्मादेक इत्युच्यत इत्यर्थः । 'अथ प्रजायेय'इति वाक्यं व्याचष्टे– **देव्येति** ॥ अन्येच्छावद् विष्णोरिच्छा न मोघेति भावेन वाक्यशेषमाह– **ब्रह्मेति** ॥ 'अथ वित्तं मे स्यात्'इति वाक्यं व्याचष्टे– **जात इति** ॥ पूर्ववदत्रापि वाक्यशेषमाह– **भूतानीति** ॥ 'अथ कर्म कुर्वीय'इत्येतद् व्याचष्टे– **कुर्यामिति** ॥ अत्रापि वाक्यशेषमाह॥ **ततस्त्विति** ॥ जायादिकामनया यज्ञकरणेन च प्राप्तापूर्णत्वशङ्कानिरासायाऽत्मशब्दं नारायणे निर्वक्ति– **आहुरिति** ॥ 'तस्मादप्येतर्हि'इत्यादिवाक्यं व्याचष्टे– **तस्मादिति** ॥ नारायणेन कामितत्वादित्यर्थः । एतावन्तं जायादिचतुष्टयम् । नात्र वित्तशब्देन पूर्ववद्भूतादिकं विवक्षितम् । तस्याधुनातनपुरुषाकाम्यत्वादिति भावेनाऽह– **दैवमिति** ॥ सु सम्यक् खं ज्ञानम् आद्यशब्देन वेदादिशास्त्रम् । यद्वा सुखस्याऽद्यं सुखसाधनं वेदादिशास्त्रमित्यर्थः । मित्राद्यं मित्राद्यशब्देन हिरण्यादिग्रहणम् । 'स यावदप्येतेषाम्'इति वाक्यं स इति तच्छब्देनाऽत्मपरामर्श इति भ्रान्तिनिरासाय व्याचष्टे– **इदानीमपीति** ॥ तस्मान्नारायणेन जायादिचतुष्टयस्य कामितत्वादिदानी-मपि यः कश्चिदपि पुरुषः एवमेव नारायणवदेव जायादिचतुष्टयं कामयेत् । तत्र यदि कामितवैकल्यं तदाऽकृत्स्नवानपूर्णो हीत्यर्थः ॥

**भाष्यम्**—

> **एकाकिनोऽप्यवैकल्यं यथैव स्यात्तथा शृणु ॥**
> **स्वात्मनस्त्वपृथग् यत्तज्ज्ञानरूपं मनः परम् ।**
> **मुक्तावपि न हेयं यत् तत् स्वाम्येत्येव चिन्तयेत् ॥**

**जायां तु तादृशीं वाचं बलं तादृक् स्वमात्मजम् ।**
**श्रोत्रं चक्षुश्च तादृग् यद् वित्तं दैवं च मानुषम् ॥**
**एवम्भूतं चिन्तनं यत्तत्कर्मेत्येव चिन्तयेत् ।**
**एतत्षट्कं च हरये सर्वेशाय समर्पयेत् ॥**
**एवमात्मा प्रिया पुत्रो वित्तं द्विविधमित्यपि ।**
**पञ्चभिः क्रियते यज्ञः पुरुषः पशुरेव च ॥**
**मातापितृभ्यामन्नेन तयोः पूर्वेण कर्मणा ।**
**जन्यस्य कर्मणा चैव साध्यः पञ्चभिरेव तु ॥**
**एवं हि प्राणिनोऽन्येऽपि जायन्ते नात्र संशयः ।**
**एतामुपासनां कुर्याद् यो ब्राह्मं पदमाप्य च ॥**
**सर्वस्यास्य पतिर्भूयाद् विष्णोरेव प्रसादतः ।**
**ब्राह्मे पदे त्वयोग्या ये ते देवपदमाप्नुयुः ॥**
**तस्याप्ययोग्या लोकस्य भवेयुरधिकं प्रियाः ।**
**क्रमान्मुक्तिं व्रजेयुश्च केशवस्य प्रसादतः ॥ इति माहात्म्ये ॥**

**टिप्पणी—**

तस्याकृत्स्नतेत्येतदपेक्षितं पूरयन् व्याचष्टे– **एकाकिन इति** ॥ तस्येत्यस्यार्थः– **एकाकिन इति** ॥ उशब्दार्थः– **अपीति** ॥ कृत्स्नतेत्यस्यार्थः– **वैकल्यमिति** ॥ 'मन एवास्यात्मा' इति वाक्यं जडमनःप्रतीतिं निवारयन् व्याचष्टे– **स्वात्मन इति** ॥ जडमनसः आत्मत्वचिन्तनं च बाधितमिति भावः । वाग्जायेति वाक्यं पूर्ववद् व्याचष्टे– **जायामिति** ॥ तादृशीं स्वरूपभूतां जडवाक् च न नित्यावियुक्तेति भावः । प्राणः प्रजेत्येतद् व्याचष्टे– **बलमिति** ॥ तादृक्स्वरूपभूतं स्वं स्वकीयं बलमात्मजं चिन्तयेदिति सम्बन्धः । 'चक्षुर्मानुषं वित्तं श्रोत्रं दैवम्' इति वाक्यं व्याचष्टे– **श्रोत्रमिति** ॥ तादृक्स्वरूपभूतं 'आत्मैवास्य कर्म' इत्येतद् व्याचष्टे– **एवम्भूतमिति** ॥ न केवलमेवं चिन्तनं फलहेतुः अपि तर्हीत्यत आह– **एतदिति** ॥ आत्मादिकर्मान्तं प्रागुक्तं

षट्कमित्यर्थः । समर्पयेच्चेत्यन्वयः । 'स एष पाङ्क्तो यज्ञः' इत्येतद् व्याचष्टे– **एवमिति** ॥ द्विविधमपि वित्तमित्येवं पञ्चभिरिति सम्बन्धः । पशुपुरुषयोरुक्त-पञ्चकसाध्यत्वाभावात् तत्साधनपञ्चकं दर्शयन् 'पाङ्क्तः पशुः पुरुषः' इत्येतद् व्याचष्टे– **पुरुष इति** ॥ 'पाङ्क्तमिदं सर्वं यदिदं किञ्च'इति वाक्यं व्याचष्टे– **एवं हीति** ॥ मात्रादिपञ्चकेनेत्यर्थः । जडस्योक्तपञ्चकसाध्यत्वाभावात् 'इदं सर्वम्'इत्येतत्प्राणिन इति व्याख्यातम् । 'तदिदं सर्वमाप्नोति य एवं वेद'इति वाक्यं व्याचष्टे– **एतामिति** ॥ य इति श्रवणात्स इति ग्राह्यम् । तदयोग्यानां फलप्रतिपादकतयाऽपि तद् व्याचष्टे– **ब्राह्मेति** ॥ अनेन सर्वशब्दो यथायोग्यार्थक इत्युक्तं भवति । तदयोग्यफलप्रतिपादकतयाऽपि तद् व्याचष्टे– **तस्यापीति** ॥ न केवलमैहिकं सर्वाधिपत्यादिमात्रफलं किन्त्वित्यत आह– **क्रमादिति** ॥ मुक्तिं चेति सम्बन्धः ॥

**भाष्यम्—**

**अविशेषेण ततोऽन्यत्स्यादितीच्छन्नपि न विन्देत् । ततोऽन्यस्याभावात् ।**

**आत्मा मनश्चिन्तनं च शेमुषी बुद्धिरित्यपि ।**
**एकार्थवाचका धीश्च मनीषा तप इत्यपि ॥ इति शब्दतत्त्वे ॥**
**सर्वाश्रयं च पितरं सर्वेषामधिकं गुणैः ।**
**अविदित्वा महत्पुण्यं कृत्वा न फलभाग्भवेत् ॥**
**तथा ज्ञात्वा हरिं यस्तु कुर्यात्कर्म सदोदितम् ।**
**अनन्तफलवान् स स्यात् प्राप्नोति च मनोगतम् ॥**

**—इति बृहच्छ्रुतौ ॥**

**टिप्पणी—**

नन्विच्छंश्च न विन्देदित्यस्य जायादिचतुष्टयमध्य एव जाया मे स्यादित्यादी-च्छन्नपि न विन्देदित्यर्थो वा ततोऽन्यत् स्यादिति इच्छन्नपीति वा । नाऽद्यः । जायापुत्रवित्तकर्मणां लब्धत्वात् । एतावान् वै काम इति हेतुवाक्यासङ्गतेश्च । न द्वितीयः । ततोऽन्यस्य काम्यस्यैवाभावेनेदं मे स्यादिति विशेषेणेच्छाया

एवासम्भवादित्यत आह– **अविशेषेणेति** ।। कुतो न विन्देदित्यतः 'एतावान् वै कामः' इति हेतुवाक्यं व्याचष्टे– **तत इति** ।। जायादिचतुष्टयादित्यर्थः । आत्मैवास्य कर्मेत्यात्मशब्द एवम्भूतं चिन्तनमिति चिन्तनार्थो व्याख्यातः । तत्राभिधानमाह– **आत्मेति** ।। 'यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति'इत्यादिकं प्रमाणेन व्याकृतमपि ज्ञानस्य मोक्षहेतुत्वे वादिविप्रतिपत्तेः श्रुत्याऽपि व्याचष्टे– **सर्वाश्रयमिति** ।। लोकशब्दार्थः– **सर्वाश्रयमिति** ।। स्वमित्यस्यार्थः– **पितरमिति** ।। स्वशब्दस्य ज्ञातिवाचकत्वात् । गुणपूर्णत्ववाचकात्मशब्दपर्यायो वा स्वशब्दः । अत एव श्रुतौ स्वं लोकमित्येतदात्मानमेव लोकमित्यनूद्य त इति भावेन स्वशब्दस्यार्थान्तरमाह– **अधिकं गुणैरिति** ।। पुण्यं पुण्यसाधनम् अग्निविप्रार्चनादि । महत् अश्वमेधादिकर्म । फलभाग् अनन्तफलभागित्यर्थः । अनेन 'यदि वा अप्यनेवंवित् महत्पुण्यम्' इत्येतदपि व्याख्यातम् । अत एव महत्पुण्यमित्युक्तम् । 'स य आत्मानमेव लोकमुपास्ते' इति वाक्यमुपासनामात्रपरत्वप्रतीतिनिरासाय व्याचष्टे– **तथेति** ।। अपरोक्षतो ज्ञात्वेत्यर्थः । उदितं वेदादिविहितम् । अस्माद्ध्येवात्मन इत्यस्य तात्पर्यं **प्राप्नोतीति** ।।

**भाष्यम्**——

**परमात्मैव गृहस्थान्तर्यामित्वेन सर्वेषां लोकः आश्रयः ।**

**गृहस्थान्तर्गतो विष्णुर्यज्ञैर्देवाश्रयो भवेत् ।**
**स्वाध्याये ऋषिसंस्मृत्या ऋषीणां च सदाऽऽश्रयः ।।**
**स्वाध्यायाच्छ्राद्धतश्चैव पितॄणामन्नदानतः ।**
**मनुष्यादेरतो वेत्ति य एवं सततं गृही ।।**
**स्वस्यान्तर्यामिणं विष्णुं सुरादीन् पूजयेत्तथा ।**
**तस्याविनाशमिच्छन्ति स्वाश्रयस्य यथा सुराः ।।**
**तदेतत्सर्वशास्त्रेषु ऋषिसङ्घैर्विचारितम् ।। इति नारायणश्रुतौ ।।**

**नराणामाश्रया देवा न देवानां नराः क्वचित् ।**
**नराणां च सुराणां च गतिरेको जनार्दनः ॥ इति च ॥**

**टिप्पणी—**

ननु 'अथो अयं वाऽत्मा'इति वाक्यस्य 'स लोकः सर्वभूतानां सर्वजीवेषु संस्थितः' इति व्याख्यानमसत् । पश्वादिजीवानां त्रिवर्णेतरेषां च कर्माधिकारस्यैवाभावेन त्रिवर्णेष्वपि यत्यादीनां वैश्वदेवादिकर्माभावेन तदन्तःस्थस्य परमात्मनो वैश्वदेवादिकरणेन सर्वभूताश्रयत्वाभावात् । अतोऽस्मदुक्तरीत्याऽविद्वद्-गृहस्थपरमेवेदमित्यङ्गीकार्यमित्यतस्तद् व्याचष्टे– **परमात्मैवेति** ॥ एवकारेण गृहस्थव्यवच्छेदः । गृहस्थस्यैव प्रतिपाद्यत्वे उपनिषदोऽब्रह्मविद्यात्वप्रसङ्गात् । अत्र गृहस्थशब्दो ज्ञान्यज्ञान्युभयपरः । उभयोरपि प्रकृतत्वात् । अत एव यो ह वा इत्यादिवाक्यव्याख्यानरूपं प्रमाणमुदाहृतम् । सर्वजीवेष्विति वचनं गृहस्थसर्वजीवपरमित्यवधेयम् । प्रमाणविरुद्धत्वाच्च न तद्गृहस्थमात्रपरमिति भावेन स यज्जुहोतीत्यादिवाक्यव्याख्यानरूपां श्रुतिं पठति– **गृहस्थेति** ॥ 'यदनुब्रूते तेनर्षीणाम्'इति वाक्यं व्याचष्टे– **स्वाध्याय इति** ॥ स्वाध्याये वेदे ऋषिसंस्मृत्या स्वाध्यायाध्ययनादित्यर्थः । 'अथ यत्पितृभ्यः' इत्यस्यार्थः– **श्राद्धत इति** ॥ यदेभ्योऽशनं ददातीत्यस्यार्थः–**अन्नदानत इति** ॥ अत्राऽदिपदमध्याहार्यम् । तेन तृणोदकादिसङ्ग्रहः । मनुष्यादेरित्यादिपदेन पश्वादिग्रहणम् । तेन यत्पशुभ्यस्तृणोदकं विन्दतीत्यादि व्याख्यातम् । 'यथा ह वै स्वाय लोकाय'इति फलवाक्यं व्याचष्टे– **अत इति** ॥ स्वस्यान्तर्यामिणमेवं वेत्तीति सम्बन्धः । न केवलमेतावत् किन्तु सुरादीन् पूजयेच्च । यथा लोकाः स्वाश्रयस्य राजादेरविनाशमिच्छन्ति तथासुराः सुराद्याः तस्याविनाशमिच्छन्तीति योजना । तद्वा एतदित्यस्यार्थमाह– **तदेतदिति** ॥ विष्णोः सर्वाश्रयत्वम् । किञ्चाथो यं वेत्यादिकं न गृहस्थमात्रपरमिति वक्तुं शक्यम् । गृहस्थस्य मनुष्यस्य देवाश्रयत्वासम्भवादिति भावेन तत्र प्रमाणमाह–

**नराणामिति** ।। नचैवं ब्रह्मविच्च तत्रोच्यत इति उक्तविरोधः । लोकशब्दस्य मुख्याश्रयत्वरूपार्थविवक्षया प्रवृत्तत्वात् । भोजकत्वरूपामुख्याश्रयत्वरूपार्थ-विवक्षया तस्य प्रवृत्तत्वात् । अत एवोक्तं 'गृही सुरादीन् पूजयेत्तथा' इति ।।

**भाष्यम्—**

[चतुर्मुखाचरिताः गृहस्थधर्माः]

**आत्मा ब्रह्मा ।**

**आत्मा तु जगतां ब्रह्मा तस्याऽत्मा भगवान् हरिः ।**
**स एव जातः प्रथमं वासुदेवाच्चतुर्मुखः ।।**
**सोऽकामयत भार्या मे स्यात्पुत्रस्तदनन्तरम् ।**
**ततो वित्तं मम स्याच्च कर्म कुर्यां ततो हरेः ।।**
**इति सोऽपि न तान् प्राप ततोऽपूर्णत्वमात्मनः ।**
**मत्वा पूर्णत्वसिद्ध्यर्थं भार्यां वाचमकल्पयत् ।।**
**प्राणं पुत्रं तथा वित्तं चक्षुर्बाह्यमथान्तरम् ।**
**ज्ञानाख्यं श्रोत्रमेवासौ कर्म स्वात्मानमेव तु ।।**
**एवं स मानसे यज्ञे त्वयजत्केशवं विभुम् ।**
**ततोऽस्य वाचः सम्भूता भार्या तस्य सरस्वती ।।**
**पुत्र प्राणादभूद् वायुर्दिशो लोका हिरण्मयाः ।**
**तस्यापरोक्षतां यातो भगवान् पुरुषोत्तमः ।।**
**सर्वविद्या ददौ ताश्च श्रोत्रेण जगृहे विभुः ।**
**आत्मना सर्वकर्माणि चकार भगवत्परः ।।**

**टिप्पणी—**

पूर्वमात्मैवेदमग्र आसीदित्यादिकमीश्वरपरतया व्याख्यातम् । इदानीं चतुर्मुख-परतयाऽपि व्याख्यातुम् आत्मशब्दार्थमाह— **आत्मेति** ।। कुत इत्यतस्त-त्प्रमाणमाह— **आत्मा त्विति** ।। स्वामीत्यर्थः । एवं सति 'आहुरात्मेति तं देवम्' इत्युक्तश्रुतिविरोधः स्यादित्यत आह— **तस्येति** ।। एवमात्मशब्दार्थमुक्त्वा

'आत्मैवेदमग्र आसीत्' इति वाक्यार्थमाह– **स एवेति** ।। इदमग्र इत्यस्यार्थः– **प्रथममिति** ।। आसीदित्यस्यार्थः– **जात इति** ।। वासुदेवादिति शेषोक्तिः । सोऽकामयतेत्यादि व्याचष्टे– **स इति** ।। तदनन्तरं भार्याप्राप्त्यनन्तरम् । तत उभयप्राप्त्यनन्तरम् । वित्तं मानुषं दैवं च । ततः त्रितयप्राप्त्यनन्तरम् । इत्यकामयतेति सम्बन्धः । 'स यावदप्येतेषाम्' इत्यादि वाक्यं व्याचष्टे– **सोऽपीति** ।। तस्य कृत्स्नतेत्यस्य तात्पर्यम्– **पूर्णत्वसिद्ध्यर्थमिति** ।। वाग्जायेत्यादि व्याचष्टे– **भार्यामिति** ।। प्राणं बलं चक्षुर्बाह्यं मानुषं वित्तं श्रोत्रं ज्ञानाख्यमान्तरं दैवं वित्तम् अकल्पयदिति सम्बन्धः । स्वात्मानं स्वदेहम् । देहान्तात्पञ्चकादित्युत्तरत्रानुवादात् । एवं कल्पनेन किं कृतवानत आह– **एवमिति** ।। स्वरूपभूतवागादिभिः बाह्यजायादिप्रतिनिधिभूतैः पञ्चभिर्मानसयज्ञे कृते बाह्यानि जायापुत्रमानुषदैववित्तकर्माणि च जातानीत्यर्थत्वेन च वाग्जायेत्यादिवाक्यं व्याचष्टे– **तत इति** ।। मानसयज्ञादित्यर्थः । अनेन वाक् प्राण इत्यादिप्रथमा पञ्चम्यर्था, जन्यजनकयोरभेदोपचारो वेत्युक्तं भवति । दिशश्चक्षुषः श्रोत्राज्ज्ञानमभूदिति ग्राह्यम् । तदुपपादयति– **तस्येति** ।। आत्मना देहेन चकार उत्पादयामास ।।

**भाष्यम्**—

**पुराऽऽसीन्मन एवास्य तेनेदं पञ्चकं विभुः ।**
**अवाप कर्मपर्यन्तं देहान्तात्पञ्चकात् स्वयम् ।।**
**तस्मादद्यापि यो विद्वानुपास्ते पञ्चकं तथा ।**
**विष्णूपकरणत्वेन स इदं सर्वमाप्स्यति ।।**
**मुक्तिश्चान्ते भवत्यस्य पञ्चानां देवतां हरिम् ।**
**नारायणं वासुदेवं तथा सङ्कर्षणं विभुम् ।।**
**प्रद्युम्नं चानिरुद्धं च स्मरतो नित्यमेव तु ।**
**सवनत्रयं तथा पूर्वमुत्तरं चेति पञ्चकम् ।।**

**यज्ञे मध्यं शिरः पक्षौ पुच्छं पशुषु पूरुषे ।**
**चतुर्दिशं तथा मध्यमिति सर्वत्र पञ्चकम् ।। इति च ।।**

**इति, अव्याकृतब्राह्मणम्**

**टिप्पणी—**

नन्वेवं तर्हि 'मन एवास्याऽऽत्मा' इति वाक्यं व्यर्थम् इत्यतो जायाद्युत्पत्तौ असाधारणकारणप्रतिपादनपरं तदिति भावेन तद् व्याचष्टे— **पुरेति** ।। अस्य ब्रह्मणो जायाद्युत्पत्तेः पुरा मानसयज्ञसङ्कल्पात्मकं मन एवाऽऽसीन्न जायादिकमित्यर्थः । किं तत इत्यत आह— **तेनेति** ।। तेन मनसा मानसयज्ञेनेति यावत् । इदं पूर्वमपेक्षितं जायादिकर्मपर्यन्तं पञ्चकमवापेति सम्बन्धः । पूर्वोक्तप्रातिस्विकं कारणमाह— **देहान्तादिति** ।। वाक् प्राणचक्षुःश्रोत्रदेहरूपा-त्पञ्चकाज्जायादिकर्मपर्यन्तं पञ्चकमवापेति सम्बन्धः । अत्र देहशब्दः स्वरूपभूतचिन्तनात्मकमनोलक्षणदेहपरः । एवं कर्मस्वात्मान-मित्यत्राऽऽत्मना सर्वकर्माणीत्यत्र चाऽऽत्मशब्दः पूर्ववत् चिन्तनार्थ इत्याहुः । 'तदिदं सर्वमाप्नोति य एवं वेद' इति फलवाक्यं व्याचष्टे— **तस्मादिति** ।। पञ्चकं वागादिपञ्चकम् । तथा जायादित्वेन कल्पनया उपास्ते मानसयज्ञं करोतीत्यर्थः । इदं सर्वं जायादिकम् । न केवलमेवमुपासकस्यैहिकजायादिप्राप्तिः फलं किन्तर्हीत्यत आह— **मुक्तिश्चेति** ।। न केवलमेवं मानसयज्ञमात्रेण मुक्तिः किन्तर्हीत्यत आह— **पञ्चानामिति** ।। वागादीनामित्यर्थः । नित्यं स्मरत एवास्य मुक्तिरिति सम्बन्धः । न केवमुक्तप्रकारेण वागादिपञ्चको-पासकस्योक्तफलप्राप्तिः किन्त्वित्यतः 'स एष पाङ्क्तो यज्ञः' इत्येतद् व्याचष्टे— **सवनत्रयमिति** ।। यज्ञे इति पञ्चकं यो विष्णूपकरणत्वेनोपास्ते स इदं सर्वमाप्स्यति मुक्तिश्चान्ते भवत्यस्येति सम्बन्धः । एवमुत्तरत्रापि पाङ्क्तः पशुरित्येतद् व्याचष्टे— **मध्यमिति** ।। पक्षौ पार्श्वभागौ पुच्छं चेति पञ्चकमिति सम्बन्धः । 'पाङ्क्तः पुरुषः' इत्येतद् व्याचष्टे— **पुरुष इति** ।। दिक्चतुष्टयवृत्तिचतुर्भागमित्यर्थः । 'पाङ्क्तमिदं सर्वं यदिदं किञ्च' इत्यस्यार्थकथनाय सर्वत्रेत्युक्तम् । पञ्चानां देवतां हरिमित्याद्यत्रापि सम्बद्ध्यते ।।

**अथ खण्डार्थः**

ब्रह्मा चतुर्मुखाख्यं ब्रह्म ब्राह्मणजातिविशिष्टं सदिदमग्रे एकमेवासीत् जज्ञे विष्णोरिति शेषः । तद् ब्रह्म एकं सत् न व्यभवत्परिवारविशिष्टं नाभवत् । तद् ब्रह्माऽत्मनः परिवारमिच्छन् श्रेयोरूपं सर्वजात्युत्तमं क्षत्रं क्षत्रजातिम् अत्यसृजत् । तदेव व्यक्तिभेदेन दर्शयति– **यानीति** ॥ देवत्र देवेषु । यान्येतानि प्रसिद्धानि क्षत्राणि । एतानि कानीत्यपेक्षायामाह– **इन्द्र इति** ॥ इन्द्रो गरुडः वरुणः प्रसिद्धः सोमः सूर्यश्च ग्राह्यः । रुद्रः सदाशिवः पर्जन्य इन्द्रः कामोऽपि ग्राह्यः । यमः प्रसिद्धः । मृत्युः शेषः ईशानो वायुरिति यस्मात् क्षत्रं श्रेयोरूपं तस्मात् क्षत्रात्परमुत्तमं ब्राह्मणजातिं विना नास्ति । क्वचित्समये ब्राह्मणादप्युत्तमः क्षत्रियः किमु वैश्यादेरिति भावेन ब्राह्मणात् क्षत्रियस्योत्तमत्वे लिङ्गमाह– **तस्मादिति** ॥ यस्मात् क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः स्वयं गुरुरपि आसीनं क्षत्रियम् आसनाधस्तात् राजसूये उपास्ते किमर्थम् इत्यत आह– **क्षत्र एवेति** ॥ यशोनिधिर्ब्राह्मणस्तत्स्वामी यं यशः तत्तेनाधस्तात् उपासनेन क्षत्र एव दधाति स्थापयति । तस्मै यशो दातुं तथोपास्त इत्यर्थः । स्वयमुत्तमो यशो दातुम् अधस्तादुपास्त इति कुतः अपकृष्टत्वादेव तथोपास्त इति किं न स्यादित्यत आह– **सैषेति** ॥ यद्यपि राजा तस्माद् राजसूयकर्तृत्वोपाधेः परमतां गच्छति तथाऽपि यद् ब्रह्म यो ब्राह्मणः सैषा क्षत्रस्य योनिरुपदेशादिना ज्ञप्तिकारणं गुरुरिति यावत् । गुरुत्वज्ञापकमाह– **ब्रह्मैवेति** ॥ तस्मादित्यनुवर्तते । तस्माद् ब्राह्मणस्य गुरुत्वादेव अन्ततो राजसूयान्ते राजा स्वां योनिं स्वगुरुभूतं ब्रह्म ब्राह्मणमुपनिःश्रयति वन्दयीत । इतोऽपि ब्राह्मणः क्षत्रियादुत्तम इति भावेनाऽह– **य इति** ॥ यः क्षत्रियः एनं ब्राह्मणं हिनस्ति सः स्वां योनिं स्वपितरम् ऋच्छति विनाशयति । ब्राह्मणहन्तुरपि क्षत्रियस्य पितृजीवन-दर्शनात्कथमेतदित्यतोऽभिप्रायमाह– **स इति** ॥ यथा श्रेयांसं गुणाधिकं स्वपितरं हिंसित्वा हत्वा पापीयान् भवति तथा ब्राह्मणहा क्षत्रियः पापीयानेव भवति नतु तद्धननेनैतद्धन्तेत्यर्थः ॥ ५ ॥

एवं क्षत्रियदेवोत्पत्त्यनन्तरं स चतुर्मुखो नैव व्यभवत् परिवारबहुत्वेन यद्विशिष्टं तन्नाभवत् । स बहुपरिवारमिच्छन् विशमसृजत । तदेव व्यक्तिभेदेन दर्शयति– **यानीति** ।। यानि देवजातानि देवत्वजातिमन्ति वसवोऽग्निव्यतिरिक्ताः सप्त रुद्राः सदाशिवव्यतिरिक्ताः दश आदित्याः विवस्वदिन्द्रवरुणविष्णुभिन्ना अष्टौ विश्वेदेवाः दश मरुतो वायुभिन्नाः एकोनपञ्चाशत्सङ्ख्याकाः इति गणश आख्यायन्ते एतान्यसृजतेति सम्बन्धः ।। ६ ।।

एवं क्षत्रियवैश्यदेवोत्पत्तावपि स चतुर्मुखो नैव व्यभवत् परिवारबहुपरत्वेन यद्विशिष्टं तन्नाभवत् । स बहुतरपरिवारेच्छुः शौद्रं वर्णमसृजत । किं तत् । पूषणं कः पूषेत्यत आह– **इयमिति** ।। इयं पृथिवी । केन निमित्तेनेत्यत आह– **इयं हीति** ।। पुष्यति पोषयति । उपलक्षणमेतत् । अश्विनिर्ऋत्यादयोऽपि ग्राह्याः ।। ७ ।।

एवं बहुतरपरिवारसम्पत्तावपि स नैव व्यभवत् । जगद्धारकेन मोचकेन च यद्विशिष्टं तन्नाभवदित्यर्थः । स्वस्य स्रष्टृत्वात् । उत्पन्नदेवानां च पालकत्वात् । कथमस्य धारणं मोक्षश्च स्यादिति विचिन्त्य तद् ब्रह्म चतुर्मुखाख्यं श्रेयोरूपं सर्वश्रेष्ठं धर्मं जगद्धारकं वायोः रूपान्तरमत्यसृजत । तथा श्रेयोरूपं मोक्षसाधनं धर्मं विष्णुभक्त्यादिधर्माभिमानिभूतं वायोरेव रूपान्तरमत्यसृजत । ननु शेषादिष्वपि विद्यमानं धारकत्वं मोचकत्वं च वायोरेव कुत इत्यतस्तावद्धारकत्वमुपपादयति– **तदेतदिति** ।। यद्धर्मो यो धारकस्तदेतत् क्षत्रस्य क्षत्रियस्य शेषादेः क्षत्रमधिपतिर्यस्मात्तस्माद् धर्माद् वायोः परमुत्तमं विष्णुमृते नास्ति । तथाच तस्यैव धारकत्वमिति भावः । इदानीं मोचकत्वमुपपादयति– **अथो इति** ।। यस्माद् धर्माद् वायोः परमुत्तमं नास्ति । अथो तस्मादेवाबलीयान् स्वयमेव विष्णुं प्रति गन्तुमसमर्थः धर्मेण विष्णुभक्त्यादिधर्माभिमानिवायुरूपेण बलीयांसं विष्णुं प्राप्तुम् आशंसते इच्छति । अत्र दृष्टान्तमाह– **यथेति** ।। यथा लोके कश्चिदबलीयान्स्वयमेव राजानं प्रति गन्तुमसमर्थो राज्ञा युवराजेन बलीयांसं महाराजं प्राप्तुमाशंसते एवमित्यर्थः।

धर्माभिमानिनो वायोः रूपान्तरमाह– **य इति** ।। स प्रसिद्धो यो वै य एव धर्मो धर्माभिमानी एतत्सत्यं वै सत्याभिमान्येव तयोरैक्ये लोकप्रसिद्धिं प्रमाणयति– **तस्मादिति** ।। हि यस्माद्धर्मः सत्यं चेत्युभयमेतदेव प्रकृतवाय्वभि-मन्यमानम् एव भवति तस्मात् सत्यं वदन्तं पुरुषमयं धर्मं वदतीत्याहुः । धर्मं वदन्तं च सत्यं वदतीत्याहुः । ज्ञानिन इति योजना ।। ८ ।।

प्रागुक्तब्राह्मणादिवर्णेषु श्रेष्ठानां चतुर्मुखादीनाम् अग्न्याद्याविष्टत्वरूपं माहात्म्यं वक्तुं तदनुवदति– **तदेतदिति** ।। ब्रह्म क्षत्रं विट् शूद्र इति यत्तदेतत्प्रागुक्तमित्यर्थः । तत् तत्र ब्रह्म ब्राह्मणजात्यभिमानिचतुर्मुखाख्यं देवेषु मध्येऽग्निनैव सह अभवत् आस्ते । तदन्तर्गतमिति यावत् । मनुष्येषु मध्ये ब्राह्मणोऽभवद् ब्राह्मणान्तर्गतोऽभवत् । देवेषु मनुष्येष्वभवदिति पदत्रयमुत्तरत्राप्यनुवर्तते । क्षत्रियः क्षत्रजात्यभिमानी वायुः देवेषु क्षत्रियेण सुपर्णशेषादिना सह मनुष्येषु क्षत्रियेण राज्ञा सह अभवद् आस्ते तदन्तर्गत इति यावत् । वैश्यः वैश्यजात्यभिमानी नासिक्यो वायुः देवेषु वैश्येन वस्वादिना सह मनुष्येषु वैश्येन सह अभवत् तदन्तर्गतोऽभवदित्यर्थः । शूद्रः शूद्राभिमानी निर्ऋतिर्देवेषु शूद्रेण अश्विपृथिव्यादिना मनुष्येषु शूद्रेण सह अभवत् तदन्तर्गतोऽभवदि-त्यर्थः । देवेष्वग्नौ मनुष्येषु ब्राह्मणे चतुर्मुखः सन्निहित इत्यतो ज्ञापकमाह– **तस्मादिति** ।। हि यस्माद् ब्रह्म चतुर्मुखाख्यम् एताभ्यामेवाग्निब्राह्मणरूपाभ्यां सहितमभवत् । अग्नौ ब्राह्मणे च सन्निहितमिति यावत् । तस्माद्देवेषु मध्येऽग्नावेव मनुष्येषु ब्राह्मणा एव हविर्हुत्वा लोकमिच्छन्ति प्रार्थयन्ते । अग्निब्राह्मणयोर्ब्रह्मणः स्थितत्वात् तौ ब्रह्मणस्तुष्टिद्वारा लोकप्राप्तिकामः सर्वोऽपि जनस्तर्पयेदिति भावेनाप्याह– **एताभ्यामिति** ।। अग्निब्राह्मणपूजयैव किं मोक्षोऽपि भवति? नेति भावेनाऽह– **अथेति** ।। यद्वा केचिदग्निब्राह्मणपूजयैव मोक्षो भवतीत्याहुः तान्प्रत्याह– **अथेति** ।। अथशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यो वै योऽग्निविप्रार्चकोऽपि स्वं स्वकीयं लोकमाश्रयं हरिम् अदृष्ट्वा अनपरोक्षीकृत्यास्माल्लोकात् देहात्प्रैति । एनम् अग्निविप्रार्चकं सः हरिरविदितोऽदृष्टो

न भुनक्ति नामृतत्वं भोजयति । अत्र दृष्टान्तमाह– **यथेति** ।। यथा वेदोऽननूक्तो अनधीतो ईश्वरज्ञानादिजननेन न भुनक्ति अन्यद्वा कर्माकृतं स्वकीयफलदानेन न भुनक्ति तथेति । तथाऽप्यश्वमेधादिमहत्कर्मानुष्ठानान्मोक्षो भविष्यतीत्यत आह– **यदि हेति** ।। यदि अनेवंवित् परमात्मानपरोक्षज्ञानी महदपि पुण्यं पुण्यसाधनं कर्माश्वमेधादिकं करोति अस्याज्ञानिनः तत् कर्म अन्ततः स्वर्गादिफलभोगावसाने क्षीयत एव ह निश्चितं न पुनरक्षयमोक्षसाधनम् । तस्मात् मुमुक्षुर्लोकसर्वाश्रयं आत्मानमेवाऽप्तकामं विष्णुमेव उपासीत जानीत च । ज्ञानिकृतकर्मणोऽप्यज्ञकर्मवत् क्षये किं ज्ञानसम्पादनेनेत्यत आह– **स य इति** ।। उपास्ते जानाति च कर्म शुभम् अशुभस्य क्षयात् । ननु कर्मण आशुतरविनाशित्वान्न क्षीयन्त इति कथमुक्तमित्यत आह– **अस्मादिति** ।। हि यस्मादेवमुपासनापरोक्ष-ज्ञानाभ्यामुक्तो यद्यत्कामयते तत्तदस्मादेवापरोक्षीकृतादात्मनस्तत्प्रसादात् कर्म सृजते तस्मान्न क्षीयत इत्युक्तमिति ।। ९ ।।

'आत्मानमेव लोकम्' इति यद् भगवतः सर्वाश्रयत्वमुक्तं तत्साधयितुं प्रतिजानीते– **अथो इति** ।। अयं प्रकृतगृहस्थान्तर्यामी मूलरूपो वा रामकृष्णादिगृहस्थावताररूपो वा आत्मा परमात्मा सर्वेषां भूतानां देवादि-पिपीलिकान्तानां लोकः आश्रयः । तत्कथमित्यत उपपादयति– **स इत्यादिना**।। सः गृहस्थान्तर्गतो मूलरूपो वा रामकृष्णाद्यवताररूपो वा परमात्मा यज्जुहोति वैश्वदेवादिकं करोति यद् यजते अश्वमेधादियज्ञांश्च कुरुते तेन होमादिना देवानां लोकः आश्रयः देवानुद्दिश्याऽहुतिप्रक्षेपात् । यदनुब्रूते स्वाध्यायमधीते तेन ऋषीणां लोकः अध्ययनकाले वेदद्रष्टृऋषिसंस्मरणात् । यत्पितृभ्यो निमृणाति पिण्डं प्रयच्छति यत्प्रजां पुत्रमिच्छते उत्पादयतीति यावत् तेन पितॄणां लोकः अथ यन्मनुष्यान् गृहभूम्यादिदानेन वासयते यच्चैभ्यो वसद्भ्यः अर्थिभ्यो दानमन्नं ददाति तेन मनुष्याणां लोकः । अथ यत्पशुभ्यस्तृणं चोदकं विन्दति लम्भयति तेन पशूनां लोकः । अस्य

पूर्वोक्तरूपत्रयस्य परमात्मनो गृहेषु श्वापदाः मार्जारादयो वयांसि पक्षिणः किं बहुनाऽऽपिपीलिकाभ्यः पिपीलिकां मर्यादीकृत्य वर्तमानाः सर्वेऽपि प्राणिनो यत्करणबलिपिण्डसाधनाद्युपजीवन्ति तेन तेषां लोकः । एवं स्वान्तर्यामिणो मूलरूपस्यावताररूपस्य वा हरेः सर्वाश्रयत्ववेत्तुर्गृहस्थस्य फलमाह– **यथेति** ।। यथा लोके **स्वाय** स्वकीयाय लोकाय आश्रयाय राजादये अरिष्टिम् अविनाशमिच्छन्ति एवं ह एवमेवैवंविदे उक्तप्रकारेण स्वान्तर्यामिणः सर्वाश्रयत्वविदे गृहस्थाय सर्वाणि भूतानि देवादीन्यरिष्टिमिच्छन्ति । परमात्माधिष्ठानभूत-गृहस्थपरत्वेनापीदं योज्यम् । तदा लोकशब्दो भोजकत्वार्थो ज्ञेयः । एवं विष्णोर्मुख्यतः सर्वाश्रयत्वमुपपाद्य स्वोक्तार्थे प्रमाणमाह श्रुतिः– **तद्वा इति** ।। तदेतद् विष्णोर्मुख्यतः सर्वाधारत्वं सर्वैर्वेदैर्विदितं प्रतिपादितं मीमांसितं मीमांसाभिर्निश्चितं च ऋषिसङ्घैर्विचारितमिति वा ।। १० ।।

ननु यदि मूलरूपस्य भगवतो गार्हस्थ्यं यज्ञादिकर्तृत्वं च स्यात्तदा पूर्वोक्त-मुपपन्नं स्यात् तदेव कुत इत्यत आह– **आत्मैवेति** ।। इदमग्रे अस्याग्रे आत्मा परिपूर्णो नारायण एवाऽसीत् । किमन्यन्नाऽसीत् बाढमित्याह– **एक एवेति** ।। स नारायणोऽकामयत । किमिति? जाया मे स्यादिति सर्वदा विद्यमानामपि जायां रमाम् । भोगार्थम् ऐच्छत् । अथ तया सह भोगानन्तरं प्रजायेय पुत्रं जनयिष्यामीत्यकामयत । ततो ब्रह्मा ततो देवाद्या जाता इति ग्राह्यम् । अथ पुत्रसम्पत्त्यनन्तरं वित्तं पञ्चमहाभूतादिरूपं स्यादित्यकामयत । ततः तज्जातमिति ग्राह्यम् । अथ वित्तसम्पत्त्यनन्तरं कर्मस्वात्मानमुद्दिश्य यज्ञं कुर्वीयेत्यकामयत कृतवांश्च । जायाद्यतिरिक्तमपि कुतो न कामनया लब्धवानित्यत आह– **एतावानिति** ।। काम्यत इति कामो विषयः एतावानेव यतोऽतो नेच्छत्येव । भूयः पुनस्ततोऽन्यत्स्यादित्यविशेषेणेच्छन्नपि न विन्देदित्यर्थः । तस्मान्नारायणेनैवं कामितत्वादेतर्ह्यपि इदानीमप्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं दैवं मानुषं च मे स्यादथ

न भुनक्ति नामृतत्वं भोजयति । अत्र दृष्टान्तमाह– **यथेति** ।। यथा वेदोऽननूक्तो अनधीतो ईश्वरज्ञानादिजननेन न भुनक्ति अन्यद्वा कर्माकृतं स्वकीयफलदानेन न भुनक्ति तथेति । तथाऽप्यश्वमेधादिमहत्कर्मानुष्ठानान्मोक्षो भविष्यतीत्यत आह– **यदि हेति** ।। यदि अनेवंवित् परमात्मानपरोक्षज्ञानी महदपि पुण्यं पुण्यसाधनं कर्माश्वमेधादिकं करोति अस्याज्ञानिनः तत् कर्म अन्ततः स्वर्गादिफलभोगावसाने क्षीयत एव ह निश्चितं न पुनरक्षयमोक्षसाधनम् । तस्मात् मुमुक्षुर्लोकसर्वाश्रयं आत्मानमेवाऽप्तकामं विष्णुमेव उपासीत जानीत च । ज्ञानिकृतकर्मणोऽप्यज्ञकर्मवत् क्षये किं ज्ञानसम्पादनेनेत्यत आह– **स य इति** ।। उपास्ते जानाति च कर्म शुभम् अशुभस्य क्षयात् । ननु कर्मण आशुतरविनाशित्वान्न क्षीयन्त इति कथमुक्तमित्यत आह– **अस्मादिति** ।। हि यस्मादेवमुपासनापरोक्ष-ज्ञानाभ्यामुक्तो यद्यत्कामयते तत्तदस्मादेवापरोक्षीकृतादात्मनस्तत्प्रसादात् कर्म सृजते तस्मान्न क्षीयत इत्युक्तमिति ।। ९ ।।

'आत्मानमेव लोकम्' इति यद् भगवतः सर्वाश्रयत्वमुक्तं तत्साधयितुं प्रतिजानीते– **अथो इति** ।। अयं प्रकृतगृहस्थान्तर्यामी मूलरूपो वा रामकृष्णादिगृहस्थावताररूपो वा आत्मा परमात्मा सर्वेषां भूतानां देवादि-पिपीलिकान्तानां लोकः आश्रयः । तत्कथमित्यत उपपादयति– **स इत्यादिना**।। सः गृहस्थान्तर्गतो मूलरूपो वा रामकृष्णाद्यवताररूपो वा परमात्मा यज्जुहोति वैश्वदेवादिकं करोति यद् यजते अश्वमेधादियज्ञांश्च कुरुते तेन होमादिना देवानां लोकः आश्रयः देवानुद्दिश्याऽहुतिप्रक्षेपात् । यदनुब्रूते स्वाध्यायमधीते तेन ऋषीणां लोकः अध्ययनकाले वेदद्रष्टृऋषिसंस्मरणात् । यत्पितृभ्यो निमृणाति पिण्डं प्रयच्छति यत्प्रजां पुत्रमिच्छते उत्पादयतीति यावत् तेन पितॄणां लोकः अथ यन्मनुष्यान् गृहभूम्यादिदानेन वासयते यच्चैभ्यो वसद्भ्यः अर्थिभ्यो दानमन्नं ददाति तेन मनुष्याणां लोकः । अथ यत्पशुभ्यस्तृणं चोदकं विन्दति लम्भयति तेन पशूनां लोकः । अस्य

पूर्वोक्तरूपत्रयस्य परमात्मनो गृहेषु श्वापदाः मार्जारादयो वयांसि पक्षिणः किं बहुनाऽऽपिपीलिकाभ्यः पिपीलिकां मर्यादीकृत्य वर्तमानाः सर्वेऽपि प्राणिनो यत्करणबलिपिण्डसाधनाद्युपजीवन्ति तेन तेषां लोकः । एवं स्वान्तर्यामिणो मूलरूपस्यावताररूपस्य वा हरेः सर्वाश्रयत्ववेत्तुर्गृहस्थस्य फलमाह– **यथेति** ।। यथा लोके स्वाय स्वकीयाय लोकाय आश्रयाय राजादये अरिष्टिम् अविनाशमिच्छन्ति एवं ह एवमेवैवंविदे उक्तप्रकारेण स्वान्तर्यामिणः सर्वाश्रयत्वविदे गृहस्थाय सर्वाणि भूतानि देवादीन्यरिष्टिमिच्छन्ति । परमात्माधिष्ठानभूत-गृहस्थपरत्वेनापीदं योज्यम् । तदा लोकशब्दो भोजकत्वार्थो ज्ञेयः । एवं विष्णोर्मुख्यतः सर्वाश्रयत्वमुपपाद्य स्वोक्तार्थे प्रमाणमाह श्रुतिः– **तद्वा इति** ।। तदेतद् विष्णोर्मुख्यतः सर्वाधारत्वं सर्वैर्वेदैर्विदितं प्रतिपादितं मीमांसितं मीमांसाभिर्निर्श्चितं च ऋषिसङ्घैर्विचारितमिति वा ।। १० ।।

ननु यदि मूलरूपस्य भगवतो गार्हस्थ्यं यज्ञादिकर्तृत्वं च स्यात्तदा पूर्वोक्त-मुपपन्नं स्यात् तदेव कुत इत्यत आह– **आत्मैवेति** ।। इदमग्रे अस्याग्रे आत्मा परिपूर्णो नारायण एवाऽसीत् । किमन्यन्नाऽसीत् बाढमित्याह– **एक एवेति** ।। स नारायणोऽकामयत । किमिति? जाया मे स्यादिति सर्वदा विद्यमानामपि जायां रमाम् । भोगार्थम् ऐच्छत् । अथ तया सह भोगानन्तरं प्रजायेय पुत्रं जनयिष्यामीत्यकामयत । ततो ब्रह्मा ततो देवाद्या जाता इति ग्राह्यम् । अथ पुत्रसम्पत्त्यनन्तरं वित्तं पञ्चमहाभूतादिरूपं स्यादित्यकामयत । ततः तज्जातमिति ग्राह्यम् । अथ वित्तसम्पत्त्यनन्तरं कर्मस्वात्मानमुद्दिश्य यज्ञं कुर्वीयेत्यकामयत कृतवांश्च । जायाद्यतिरिक्तमपि कुतो न कामनया लब्धवानित्यत आह– **एतावानिति** ।। काम्यत इति कामो विषयः एतावानेव यतोऽतो नेच्छत्येव । भूयः पुनस्ततोऽन्यत्स्यादित्यविशेषेणेच्छन्नपि न विन्देदित्यर्थः । तस्मान्नारायणेनैवं कामितत्वादेतर्ह्यपि इदानीमप्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं दैवं मानुषं च मे स्यादथ

कर्म कुर्वीयेति । स एवं कामयमानः कश्चित्पुरुषः एतेषां जायादीनां मध्ये एकैकमपि यावन्न प्राप्नोति तावदहमकृत्स्नो पूर्ण एवेति स्वात्मानं मन्यते। तस्य उ कृत्स्नस्यापि कृत्स्नता पूर्णता वक्ष्यमाणप्रकारेण भवति । यद्वा, यथा स्यात्तथा शृण्विति शेषः । सूर्यादीन् प्रति चतुर्मुखादिवाक्यमिदम्। मनः स्वस्वरूपभूतमस्याऽत्मा स्वात्मेति चिन्तयेत्। वाक्स्वरूपभूतवागिन्द्रियं जायेति चिन्तयेत् । प्राणः स्वरूपभूतं बलं पुत्र इति चिन्तयेत् । चक्षुर्मानुषं वित्तमिति चिन्तयेत्। कुतः? चक्षुषा हि तन्मानुषवित्तं हिरण्यादिकं विन्दते लभते। श्रोत्रं दैववित्तमिति चिन्तयेत्। कुतः? श्रोत्रेण तद्दैवं वित्तं विद्यारूपं शृणोति । अस्यैवं चिन्तकस्याऽत्मैवंभूतं चिन्तनमेव कर्मेति विचिन्तयेत्। कुत? आत्मना चिन्तनेन हि कर्म करोति । कुतो मनआदीनाम् आत्मत्वादिचिन्तनं कार्यमिति चेत् । प्रसिद्धयज्ञस्यापि आत्मादिपञ्चक-साध्यत्वादिति भावेनाऽह– **स इति** ॥ स एषः प्रसिद्धो यज्ञः पाङ्क्तः आत्मप्रियापुत्रद्विविधवित्तरूपपञ्चकसाध्यः। न केवलं यज्ञ एव पाङ्क्तः किन्तु यज्ञाङ्गः पशुः पुरुषश्चेति प्रसङ्गादाह– **पाङ्क्त इति** ॥ पशुपुरुषयोः पाङ्क्तत्वं मातापितृभ्यामित्युक्तप्रकारेण द्रष्टव्यम्। न केवलं यज्ञाङ्ग एव पुरुषः पाङ्क्तः। किन्तु सर्वोऽपीत्याह– **पाङ्क्तमिति**॥ यदिदं किञ्चेदं सर्वं प्राणिजातं पाङ्क्तं पुरुषवदेव पञ्चकसाध्यमित्यर्थः । एवमुपासकस्य फलमाह– **तदिदमिति** ॥ यो ब्रह्मपदयोग्यः। एवं मन आदीनां स्वात्मत्वादिकं वेदोपास्ते चिन्तयति। स यदिदं किञ्च जगत्। तदिदं सर्वमाप्नोति सर्वस्याधिपतिर्भवतीत्यर्थः । ब्रह्मपदायोग्यस्य तु स्वयोग्यं फलं भवतीति द्रष्टव्यम्। यद्वा, पूर्वं चतुर्मुखस्य सरस्वतीवायूत्पादकत्वं यज्ञकर्तृत्वं चोक्तम्। तत्राऽख्यायिकामाह– **आत्मैवेति** ॥ इदमग्रे अस्याग्रे प्रथममेवाऽत्मा सर्वजगतां स्वामी चतुर्मुख एव वासुदेवाद् आसीज्जातः । स ब्रह्मा मे जाया स्यात् । अथ जायाप्राप्त्यनन्तरं प्रजायेय प्रजामुत्पादयिष्यामि। अथ तत्प्राप्त्यनन्तरं वित्तं दैवं मानुषं चेति द्विविधमपि

मे स्यात् । अथ तत्प्राप्त्यनन्तरं कर्मेश्वरमुद्दिश्य यज्ञादिरूपं कुर्वीयेत्यकामयत। एतावानित्यादेः कुर्वीयेत्यन्तस्य पूर्वोक्त एवार्थः । सोऽपि ब्रह्माऽप्येतेषां जायादीनां मध्ये एकैकं यावन्न प्राप्नोति न प्राप तावदकृत्स्न एवापूर्ण एवाहमिति मन्यते। तस्य उ अकृत्स्नत्वं मन्यमानस्यापि ब्रह्मणः कृत्स्नता पूर्णता। एवं भवति। कथम्? अस्य ब्रह्मणः पूर्वमात्मा स्वरूपभूतं मन एवाऽसीत् मानसयज्ञं करिष्यामीति समकल्पयदित्यर्थः । तत्र मानसयज्ञे वाक् वागिन्द्रियं जायेत्यकल्पयत् । प्राणो बलं प्रजा पुत्र इत्यकल्पयत्। चक्षुर्मानुषं वित्तमित्यकल्पयत् । तत्र हेतुः– **चक्षुषा हीति** ॥ श्रोत्रं दैवं वित्तमित्यकल्पयत् । तत्र हेतुः– **श्रोत्रेणेति**॥ अस्य स्वस्याऽत्मैव देह एव चिन्तनं वा कर्मेत्यकल्पयत् । तत्र हेतुः– **आत्मनेति**॥ एवं कल्पनेन विष्णुमुद्दिश्य मानसयज्ञे कृते । तेन वागित्यादि प्रथमा पञ्चम्यर्थे । वाचो जाया सरस्वती। प्राणात्प्रजा वायुश्चक्षुषो मानुषं वित्तं हिरण्मया लोकाः। श्रोत्राद्दैवं विद्यारूपम्। अस्याऽत्मनो देहाच्चिन्तनाद्वा कर्मसम्भूतमिति योज्यम्। न केवलं वागादीनां विष्णूपकरणतया जायात्वादिकल्पनेन जायादिप्राप्तिः। किन्तु वक्ष्यमाणानुसन्धानेन चेति भावेनाऽह– **स एष इति** ॥ स एष यज्ञः पाङ्क्तः । सवनत्रयं पूर्वमुत्तरं चेति पञ्चकोपेतः। पाङ्क्तः पशुः मध्यं शिरः पक्षौ पुच्छं चेति पञ्चकोपेतः। पाङ्क्तः पुरुषः चतुर्दिशं मध्यमिति पञ्चकोपेतः । न केवलमयमेव पुरुषः किन्तु यदिदं किञ्च प्राणिजातम् इदं सर्वमित्युक्तप्रकारेण पाङ्क्तम्। अत्र वागादिपञ्चकस्य सवनत्रयादिपञ्चकस्य च नारायणादिदेवताकत्वमप्यनुसन्धेयम् । तस्मादद्यापि योऽधिकारी एवं स्ववागादिपञ्चकं विष्णूपकरणतया जायादित्वेन नारायणादिदेवताकत्वेन तथा यज्ञादौ सवनत्रयादिपञ्चकं नारायणादिदेवताकत्वेन वेद उपास्ते । सः तदिदं सर्वं जायादिकर्मान्तपञ्चकम् अवाप्स्यति अन्ते मुक्तिश्चास्य भवतीत्यर्थः ॥ ११ ॥

इति अव्याकृतब्राह्मणम् ॥ ५ ॥

उपनिषत्——

## अथ सप्तान्नब्राह्मणम्

[भगवता सृष्टं सप्तविधान्नम्]

**यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता एकमस्य साधारणं द्वे देवानभाजयत् त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात् तानि न क्षीयन्तेऽद्यमानानि सर्वदा यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥**

भाष्यम्——

पिता विष्णुः। यत् यदा। तपसा प्राणिनां कर्मभिः। मेधया स्वेच्छया।
'स हीदमन्नं धिया धिया जनयते कर्मभिः' ॥ इति वचनात् ॥

टिप्पणी——

एवं चतुर्मुखादिदेवतास्रष्टृत्वेन प्रकृतस्य परमात्मनः सप्तान्नस्रष्टृत्वरूपं महिमान्तरमाह– **यत्सप्तेत्यादिना** ॥ अयं मन्त्रः पिता क्षेत्रज्ञो ज्ञानकर्माधिकारी मेधया तपसा पाङ्क्तेन कर्मणा। सप्तान्नानि यत्प्रसिद्धमन्नमजनयत्। तन्मध्ये एकमस्य साधारणमिति परेण व्याख्यातः। तदसदिति भावेन तावत्पितृशब्दार्थमाह– **पितेति**। 'यो नः पिता' इति श्रुतेः। देवतास्रष्टृत्वेन परमात्मन एव प्रकृततया पितृशब्देन तस्यैव ग्राह्यत्वाच्च न तद्व्याख्यानं युक्तमिति भावः। यदित्यस्य यत्प्रसिद्धमिति व्याख्यानमप्यसत्। एकवचनान्तयच्छब्दस्य बहुवचनान्तान्नशब्दसामानाधिकरण्यायोगादिति भावेन तदर्थमाह– **यदिति** ॥ तपसेत्यस्य सन्तापार्थकताप्रतीतिनिरासाय तपःशब्दार्थमाह– **तपसेति** ॥ यद्वा, पाङ्क्तेन कर्मणेत्यपि व्याख्यानमसत्। प्राणिनां कर्ममात्रस्य सप्तान्नोत्पत्तौ निमितत्वेन तद्विशेषोपादाने नियामकाभावाद् इति भावेन तपसेत्यस्यार्थमाह–

**तपसेति** ॥ मेधयेत्यस्य ज्ञानकर्माधिकारिमेधयेत्यपि व्याख्यानमसत् । मेधाशब्दस्य कर्मार्थत्वे तपसेत्यनेन पौनरुक्त्यापातात् । पाङ्क्तोपासनयेत्यर्थ इति न युक्तम् । नहि ज्ञानकर्माधिकारिणो जीवस्य पाङ्क्तोपासनं सप्तान्नोत्पत्तौ कारणमित्यत्र नियामकमस्तीति भावेन मेधाशब्दार्थमाह– **मेधयेति** ॥ तपो मेधाशब्दयोरुक्तार्थत्वं कुत इत्यतः उत्तरब्राह्मणेनैव तथा व्याख्यानादिति भावेनाऽऽह– **स हीति** ॥ धिया स्वेच्छया ॥

उपनिषत्—

**यत् सप्तान्नानि मेधया तपसाऽजनयत्पितेति मेधया हि तपसाऽजनयत् पितैकमस्य साधारणमितीदमेवास्य तत् साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रꣳह्येतत् ॥ २ ॥ द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद् देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपूर्णमासाविति तस्मान्नेष्टियाजुकः स्यात् ॥ ३ ॥ पशुभ्य एकं प्रायच्छदिति तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात् कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनुधावन्त्यथ वत्सं जातमाहुरतृणाद इति ॥ ४ ॥ तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳसर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न तद्यदिदमाहुः संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति न तथा विद्याद् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् सर्वꣳहि देवेभ्योऽन्नाद्यं प्रयच्छति ॥ ५ ॥ कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते ॥ ६ ॥ अथो वै तामक्षितिं वेदेति ।**

पुरुषो वा अक्षितिः । स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत ह ॥ ७ ॥ सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनात्त्येतत्स देवानपि गच्छति स ऊर्जमुपजीवतीति प्रशंसा ॥ ८ ॥ त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि नः प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ९ ॥

भाष्यम्—

समान्नानि यदा विष्णुः परमः पुरुषो विभुः ।
ससर्ज तेषां स्वार्थानि चकार त्रीणि केशवः ॥
मनो वाचं तथा प्राणं तस्मात्तैस्तुष्टिमेति सः ।
तस्मात्तद्भक्तिकामः स्यात् सङ्कल्पं तत्कृतिं प्रति ॥
कुर्यात्तद्वेदनेच्छां च श्रद्धां तस्य गुणोन्नतौ ।
अश्रद्धामन्यसाम्ये चाऽप्यन्येषामुन्नतौ ततः ॥
अन्येषां तत्स्वरूपत्वे प्राकृतत्वादिकेऽस्य च ।
धृतिं तन्निन्दिवागादौ प्राप्ते तत्रैव चाधृतिम् ॥
तन्मतस्य विसर्गार्थे ह्रियं तद्भक्तिवर्जने ।
तद्विवेके धियं चैव तदज्ञाने भियं तथा ॥

**वाचं नित्यं तद्गुणोक्तौ प्राणं तत्कर्मणि स्फुटम् ।**
**तदन्यकर्मसन्त्यागे चापानं व्यानमस्य च ॥**
**विरोधिनां निरासित्वेऽथोदानं योगधारणे।**
**मनोवागादीन्द्रियाणां समानं नियमेऽत्र तु॥**
**अन्नमुक्तेषु सुस्थैर्ये नरः कुर्यात्सदैव हि ।**

**टिप्पणी—**

प्रमाणविरुद्धत्वाच्च न परकीयं व्याख्यानं युक्तमिति भावेन ब्राह्मणं प्रमाणेन व्याचष्टे– **सप्तान्नानीति** ॥ ससर्ज । तदेति शेषः । 'त्रीण्यात्मने कुरुत'इति 'मन्त्रः प्रतीकग्रहणपूर्वकं मनोवाचं प्राणं तान्यात्मने कुरुत'इति ब्राह्मणेन व्याख्यातः । देवाद्यपेक्षया विष्णोर्हुतादिदेवान्नापेक्षया तदन्नस्य प्राधान्यादादौ तद्ब्राह्मणं व्याचष्टे– **तेषामिति** ॥ तेषामन्नत्वादेवेत्यर्थः । ननु कथं मन आदीनां विष्णुतुष्टिहेतुत्वेन तदन्नत्वम्? तदन्यविषयकमनआदेः तत्तुष्टिहेतुत्वा-सम्भवाद् इत्यतो न वयमन्यविषयकमनआदीनां विष्ण्वन्नत्वं ब्रूमः । किन्तु तद्विषयकाणामेव। अतः 'कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृति-र्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' इत्युक्तमनोवृत्तीनां यः कश्चन शब्दो वागेवेत्युक्तवाचश्च प्राणोऽपानोव्यान उदानः समान इत्युक्तप्राणवृत्तीनां च विष्णुविषयकत्वमेव कर्तव्यमित्याह– **तस्मादिति** ॥ तद्रेद नेच्छामीत्यनेन विचिकित्साशब्दः इच्छार्थक इत्युक्तं भवति ॥ **तन्निन्दीति** ॥ विष्णुगुणोन्नतिनिन्दकवागादौ प्राप्तेऽपि तत्रैव तद्गुणोन्नतावेव धृतिं कुर्यादित्यर्थः । तन्मतस्य विसर्गार्थे अधृतिमिति सम्बन्धः । मनोवागादीन्द्रियाणाम् अत्र परमात्मनि नियमे नियमने समानं कुर्यादिति सम्बन्धः । कदाचित्तद्विषयकमनआदेर्न विष्ण्वन्नत्वं किन्त्वित्यत आह– **अन्नमिति** ॥ मनआदेरुक्तेषु विष्णुभक्त्यादिषु सदैव सुस्थैर्ये सति नरस्तन्मन आदिकं विष्ण्वन्नं कुर्यात्। तस्यैव विष्णुप्रीतिहेतुत्वादिति भावः ॥

भाष्यम्—

अनेकगोचरेच्छा स्यात् काम एकाश्रये स्थितः ॥
प्राणः प्रवृत्तिहेतुः स्यादपानस्तु निवर्तने ।
बलकर्मा तथा व्यान उदानो योगकर्मकृत् ॥
देहेन्द्रियमनोनेता समानो नः स्थितिप्रदः ।
मनोवाक्प्राणसान्निध्यप्राधान्याज्जीव उन्नतिः ।
मनोवाक्प्राणरूपोऽसौ भगवान् पुरुषोत्तमः ॥
मनोवाक्प्राणतस्तस्य जाता अन्येऽभिमानिनः ।
ब्रह्मा सरस्वती वायुर्मनआद्यभिमानिनः ॥
सर्वस्यान्तः स्थितं विष्णुमायत्ता वाग्धि नः सदा ।
सर्ववाचश्च घोषाश्च विष्णोर्नामेति कीर्तिताः ॥
तज्ज्ञानां तत्फलं च स्यादज्ञानां तत्फलं न तु ।
सर्वेन्द्रियगतं ज्ञानं मनआयत्तमीरितम् ॥
पृष्टे स्पृष्टोऽप्यनेनाहं स्पृष्ट इत्येव वेत्त्यतः ।
मनस्यव्याकुलेऽन्यत्र नैव वेत्ति कथञ्चन ॥

टिप्पणी—

ननु विचिकित्साशब्देनेच्छाग्रहणे कामशब्देन पुनरुक्तिः स्यादित्यतस्तयोरर्थभेदमाह– **अनेकेति** ॥ प्राणादीनां भगवत्कर्मादौ विनियोगः कर्तव्य इत्युक्तम् । तत्कुत इत्यतः प्राणादीनां व्यापारमाह– **प्राण इति** ॥ निवर्तने हेतुः बलकर्मा बलरूपकर्मकृत् नोऽस्मदादीनामित्यर्थः । न इत्येतत् प्रवृत्तिहेतुरित्यादावपि सम्बद्ध्यते । मनोवाक्प्राणानां विष्ण्वन्नत्वोपपादनाय तत्प्रशंसापरम् 'एतन्मयो वा अयमात्मा' इत्यादिवाक्यम् आत्मशब्दस्य जीवपरत्वं मयटः प्राधान्यार्थकत्वं चाभिप्रेत्य व्याचष्टे– **मन इति** ॥ मनोवाक्प्राणाभिमानिसान्निध्यप्राधान्यादित्यर्थः । ननु के ते मनोवाक्प्राणाभिमानिनः यत्सान्निध्यप्राधान्येन

जीवे उन्नतिरित्याशङ्कापरिहारकत्वेनापि 'एतन्मयो वा अयमात्मा' इति वाक्यं व्याचष्टे– **ब्रह्मेति** ।। अनेनायमात्मा ब्रह्मादिरेतन्मय एतदभिमानीति व्याख्यातम् । ननु ब्रह्मादीनां मनआद्यभिमानित्वमेव कुत इति चेत् । विष्णुमनोवाक्प्राणैस्तेषां जातत्वादिति भावेन तदेव वाक्यं व्याचष्टे– **मनोवाक्प्राणत इति** ।। तस्य भगवतः । अनेनायमात्मा विरिञ्चादिरेतन्मयो विष्णुमनआदिजन्य इति व्याख्यातम् । ननु विष्णोर्मनोवाक्प्राणानामेवाभावे कथं ब्रह्मादीनां तज्जन्यत्वमित्याशङ्कापरिहारकतयाऽपि तदेव वाक्यं व्याचष्टे– **मनोवाक्प्राणरूप इति** ।। अनेनायमात्मा परमात्मा एतन्मयो मनोवाक्प्राणस्वरूप इति व्याख्यातम् । 'एषां ह्यन्तमायत्तैषा हि नः' इति वाक्यद्वयं व्याचष्टे– **सर्वस्येति** ।। आयत्ता प्रतिपादयित्रीत्यर्थः । न यस्य कस्यापि वाग् विष्ण्वायत्ता । किन्तु नोऽस्माकमिति वेदद्रष्टृवचनम् । ननु 'यः कश्चन शब्दो वागेव' इति वाचः सर्वशब्दात्मकत्वमुक्तं तत्कथं तस्याः विष्ण्वायत्तत्वम्? नहि लौकिकवाचो घोषात्मिकायाश्च विष्ण्वायत्तत्वम् इत्यत आह– **सर्वेति** ।। ननु ध्वनिवर्णात्मकसर्वशब्दस्य विष्णुनामकत्वे तदुच्चारयितॄणां सर्वेषामपि विष्णुनामोच्चारणफलम् । 'मनसा ह्येवाभिपश्यति मनसा शृणोति' इति चाक्षुषश्रौत्रज्ञानं प्रति मनसः करणत्वमुक्तम् । तदुपलक्षणपरमिति भावेनाऽह– **सर्वेति** ।। सर्वबाह्येन्द्रियजन्यमित्यर्थः । मनआयत्तं मनोजन्यमित्यर्थः । ननु विषयेन्द्रियसंयोगादेव ज्ञानोत्पत्तेः मनोजन्यत्वं कुत इत्याशङ्कापरिहारकत्वेन 'तस्मादपि पृष्ठतः उपस्पृष्टो मनसा विजानाति' इति वाक्यं व्याचष्टे– **पृष्ट इति** ।। विषयेन्द्रियसंयोगस्य प्रयोजकतासूचनाय स्पृष्टोऽपीत्यपिपदम् । अत एव सर्वेन्द्रियगतज्ञानस्य मनआयत्तत्वादेवेत्यर्थः । अव्याकुल एवेति सम्बन्धः । अन्यत्र मनसि व्याकुले सतीत्यर्थः । उपलक्षणमेतत् । चक्षुरादिसन्निकर्षेऽपि मनस्यव्याकुल एवेति व्याकुले तु नवेतीत्यपि ग्राह्यम् । अनेन 'अन्यत्रमना अभूवं नादर्शम्' इत्यादि व्याख्यातं भवति ।। ३-९ ।।

उपनिषत्—

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ १० ॥ त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेद प्राणः सामवेदः ॥ ११ ॥ देवाः पितरो मनुष्या एत एव वागेव देवाः मनः पितरः प्राणो मनुष्याः ॥ १२ ॥ पिता माता प्रजैत एव मन एव पिता वाङ् माता प्राणः प्रजा ॥ १३ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद् भूत्वाऽवति ॥ १४ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद् भूत्वाऽवति ॥ १५ ॥ यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद् भूत्वाऽवति ॥ १६ ॥**

भाष्यम्—

लोकवेदसुरज्ञातपित्रादेश्चाभिमानिनः ॥

टिप्पणी—

मन आदेर्लोकाद्यभेदप्रतीतिनिरासाय 'त्रयो लोका एत एव' 'त्रयो वेदा एत एव' 'देवाः पितरो मनुष्या एत एव' 'पिता माता प्रजैत एव' 'विज्ञातं विजिज्ञास्यमविज्ञातमेत एव'इति वाक्यानि व्याचष्टे– **लोकेति** ॥ सुरादेः ज्ञातादेः पित्रादेश्चेत्यर्थः । तत्र सुरादेरित्यादिपदेन पितृमनुष्यग्रहणम् । ज्ञातादेरित्यादिपदेन विजिज्ञास्याविज्ञातग्रहणम् । पित्रादेरित्यादिपदेन मातृप्रजाग्रहणम् । ब्रह्मा सरस्वती वायुर्मनआद्यभिमानिनः इत्येतदत्राप्यनुवर्तते ॥ १०-१६ ॥

उपनिषत्—

[सरस्वतीचतुर्मुखाभ्यां प्राणोत्पत्तिः]

तस्यै वाचः पृथिवी शरीरं ज्योती रूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ॥ १७ ॥ अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद् यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १८ ॥

[वाणीपतिवाय्वोरुपासनं मोक्षसाधनम्]

अथैतस्य प्राणस्याऽपः शरीरं ज्योतीरूपमसौ चन्द्रस्तद् यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समास्सर्वेऽनन्तास्स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्ते अनन्तꣳ स लोकं जयति ॥ १९ ॥

भाष्यम्—

द्युपृथिव्यग्निसूर्याणां सोमस्याप्यभिमानिनः ।
स इन्द्रः परमैश्वर्यादशत्रुः समवर्जनात् ॥
वायुरेते समा व्याप्तौ ब्रह्मेरौ गुणतोऽधिकौ ।
अनन्ताश्च गुणा ह्येषामन्यजीवव्यपेक्षया ॥
तेभ्योऽप्यनन्ता विष्णोस्तु तेषामेवमुपासकः ।
नित्यलोकोपभोगी स्यादनित्यस्यान्यथा भवेत् ॥

टिप्पणी—

'तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः' 'अथैतस्य मनसो द्यौः

शरीरं ज्योतीरूपमसावादित्यः' 'अथैतस्य प्राणस्याऽपः शरीरं ज्योतीरूपम् असौ चन्द्रः' इति वाक्यत्रयं व्याचष्टे– **द्युपृथिवीति** ॥ मनोऽभिमानी ब्रह्माद्युसूर्ययोर्वागभिमानी सरस्वती पृथिव्यग्न्योः । प्राणाभिमानी वायुः अपां सोमस्य चाभिमानीति विवेकः । 'स इन्द्रः स एषोऽसपत्नः' इत्येतद् व्याचष्टे– **स इन्द्र इति** ॥ असपत्न इत्यस्यार्थः– **शत्रुरिति** ॥ नन्वसुराणामेव शत्रूणां सत्वात्कथमशत्रुरित्याशङ्कापरिहारकतया 'द्वितीयो वै सपत्नः' इत्यस्याभिप्रायमाह– **समवर्जनादिति** ॥ विरोधिसमवर्जनादित्यर्थः । असुराणां च नीचत्वादिति भावः । ननु सरस्वत्याः ब्रह्मवायुभ्यां नीचत्वात्कथं 'त एते सर्व एव समाः' इत्युक्तमित्यतस्तदभिप्रायमाह– **एत इति** ॥ नच ब्रह्मवाय्वोरेव कथं व्याप्तिः? अणुश्चेति प्राणाणुत्वस्य समर्थितत्वादिति वाच्यम् । देहान्तर्गतरूपेणाणुत्वेऽपि देहाद्बहिर्वर्तमानेन मुख्यवायुरूपेण व्याप्तेरप्य-ङ्गीकारात् । तथाच श्रुतिः–'स वा एष प्राणोऽणुर्महान्नामान्तर्वा अणुर्बहि-र्महान्' इति । 'सर्वेऽनन्ताः' इत्येतद् व्याचष्टे– **अनन्ताश्चेति** ॥ किं निरुपचरितमानन्त्यम्? नेत्याह– **अन्येति** ॥ सावधारणमेतत् । कुत इत्यत आह– **तेभ्य इति** ॥ 'अथ यो हैताननन्तानुपास्ते' इत्यस्यार्थमाह– **तेषा-मिति** ॥ ब्रह्मसरस्वतीवायूनामित्यर्थः । एवमन्यनीचव्यपेक्षयाऽनन्तगुण-वत्त्वेन । 'स यो हैतानन्तवत उपास्ते' इत्यादेरर्थमाह– **अनित्यस्येति** ॥ अन्यथा तद्गुणवत्त्वेन । उपासक इत्यनुवर्तते । अनित्यस्य लोकस्योपभोगीति बुद्ध्या विवेकेन सम्बन्धः ॥ १७-१९ ॥

**उपनिषत्—**

[चन्द्रान्तर्गतप्राणोपासनम्]

**स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला ॥ २० ॥ स रात्रिभिरेवाऽच पूर्यते अप च क्षीयते सोऽमावास्याꣳ रात्रिमेतया षोडश्या**

**कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ २१ ॥**

**भाष्यम्—**

**वायुः प्रजापतिः सोऽसौ चन्द्रसंस्थो विशेषतः ।**
**रात्रौ रात्रौ क्षयादस्य पूरणाद्रात्रिनामकाः ॥**
**कलाः पञ्चदश प्रोक्ता ध्रुवैवास्य तु षोडशी ।**
**अकलोऽपि स चन्द्रस्य कलाभिः प्रोच्यते तथा ॥**
**सोऽमावास्यां यतो रात्रौ प्राणभृत्सु व्यवस्थितः ।**
**कल्यावेशादल्पदोषः कृकलासवधोऽपि सन् ॥**
**तस्यां रात्रौ महादोषो देवतावेशतो भवेत् ।**
**वायुः संवत्सरः प्रोक्तो वत्सो विष्णोरसौ यतः ॥**
**सम्यगेव रतिं याति.................. ॥**

**टिप्पणी—**

'स एष संवत्सरः प्रजापतिः षोडशकलः' इत्यत्र संवत्सरः प्रजापतिरित्यनुवादेन षोडशकलत्वं विधीयत इत्यनुपपन्नम् । प्रागनुक्तत्वेनानुवादासम्भवादिति भावेनात्र वाक्यभेदमङ्गीकृत्य 'स एष प्रजापतिः'इति वाक्यं व्याचष्टे– **वायुरिति** ॥ प्रजापतिः प्रजानां पालक इत्यर्थः । 'स एष षोडशकलः' इति वाक्यं चन्द्राभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **सोऽसाविति** ॥ अबपेक्षया विशेषत इत्यर्थः । रात्रीणामेव कलात्वमुच्यत इति प्रतीतिनिरासाय 'तस्य रात्रय एव पञ्चदश कलाः' इत्येतद् व्याचष्टे– **रात्रिनामका इति** ॥ अस्य वायोः पञ्चदश कला रात्रिनामकाः प्रोक्ता इति सम्बन्धः । तत्र निमित्तप्रदर्शनपरं 'स रात्रिभिरेवा च पूर्यते अप क्षीयते' इति वाक्यं व्याचष्टे– **रात्राविति** ॥ एकैकस्याः कलायाः एकैकस्यां रात्रौ क्षयपूरणे अभिप्रेत्य

रात्रौ रात्राविति वीप्सा । 'ध्रुवैवास्य षोडशी कला'इति वाक्यं व्याचष्टे– **ध्रुवैवेति** ।। षोडशी कला त्विति सम्बन्धः । ननु वायोरकलत्वात् कथं षोडशकलत्वोक्तिरित्यत आह– **अकलोऽपीति** ।। सः वायुः । चन्द्रस्य स्वाधिष्ठानस्य । तथा षोडशकल इति प्रोच्यते । यद्वा, वायोरागमापायिकला-शून्यत्वादध्रुवकलावत्त्वं कथमुच्यत इत्यत आह– **अकलोऽपीति** ।। अध्रुवकलारहितोऽपीत्यर्थः । 'सोऽमावास्याम्' इत्यादि 'तस्मादेतां रात्रिं प्राणभृतं प्राणं न विच्छिन्द्यात्' इत्यन्तं वाक्यं व्याचष्टे– **सोऽमावास्यामिति** ।। अतः प्राणिवधो न कर्तव्य इति शेषः । अपि कृकलासस्येत्यत्रापिपदोक्तकैमुत्यं स्पष्टयंस्तद्व्याचष्टे– **कल्यावेशादिति** ।। 'स एष संवत्सरः' इति वाक्यं व्याचष्टे– **वायुरिति** ।। २१ ।।

उपनिषत्—

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेत-न्नाभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद् यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाऽहुः ।। २२ ।।**

भाष्यम्—

..................स एवं विदुषि स्थितः ।
अध्रुवास्तु कला यद्वत्सौम्यास्तस्य तथा धनम् ।।
आगमापायवत्त्वात्तु ध्रुवावद् देह उच्यते ।
नाभिस्थानं शरीरं तु चक्रस्य प्रधिवद् धनम् ।।
सर्वस्वविजयेऽप्यस्मात् प्रधिमात्रं हि गच्छति ।
एवं महागुणान् देवानेवं यो वेद पूरुषः ।।
न चैभ्योऽतिप्रियः कश्चिद् विष्णोरस्ति कदाचन ।।

**चतुर्थं भोज्यमेवान्नं सर्वसाधारणं स्मृतम् ।**
**आत्मनोऽतिसमीपत्वं तस्य योऽन्नस्य मन्यते ॥**
**अक्षयं पापमस्य स्याद् देवब्रह्मस्वहारिणः ।**
**तदेव मन्त्रयुक्तत्वाद् बलिहोमात्मना द्वयम् ॥**
**देवानां प्रददौ विष्णुस्तस्मान्नैवेच्छया यजेत् ।**

**टिप्पणी—**

'यो वै संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषः' इति वाक्यं ज्ञानिना वायोरभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **स इति** ॥ स चन्द्रसंस्थो वायुः एवंविदुषि हरेः सप्तान्नस्रष्टृत्वज्ञानिनीत्यर्थः । 'तस्य वित्तमेव पञ्चदशकलाः' इत्येतद् व्याचष्टे– **अध्रुवा इति** ॥ तस्य ज्ञानिस्थ-वायोः धनं इति सम्बन्धः । कुत इत्यतः 'स वित्तेनैवा च पूर्यतेऽप च क्षीयते' इत्येतद् व्याचष्टे– **आगमापायवत्त्वादिति** ॥ 'आत्मैवास्य षोडशी कला' इति वाक्यं व्याचष्टे– **ध्रुवावदिति** ॥ ध्रुवकलावदित्यर्थः । 'तदेतन्नाभ्यम्' इत्यादिवाक्यं व्याचष्टे– **नाभिस्थानमिति** ॥ चक्रस्येति पूर्वेणोत्तरेण च सम्बद्ध्यते । प्रधिवत् अरनेम्यादिवदित्यर्थः । 'तस्माद् यद्यपि' इति वाक्यं व्याचष्टे– **सर्वस्वेति** ॥ सर्वज्यानिमित्यस्यार्थः– **सर्वस्वेति** ॥ सर्वस्य पराजयेऽपीत्यर्थः । अस्मात् पुरुषात् । प्रधिनागादित्यस्यार्थः– **प्रधिमात्रमिति** ॥ प्रधिस्थानीयं वित्तमात्रं गच्छति नतु शरीरमिति भावः । हिशब्देनाऽहुरित्युक्तप्रसिद्धिर्दर्शिता । त्रयो लोका एत एवेत्यादिनोक्तमनआदिमहिमज्ञानिनः प्रयोजनं स्वयमाह– **एवमिति** ॥ देवान् ब्रह्मसरस्वतीवायून् । 'एवं त्रीण्यात्मनेऽकुरुत' इति मन्त्रव्याख्यानरूपब्राह्मणं व्याख्याय इदानीं 'एकमस्य साधारणमन्नम्' इति मन्त्रव्याख्यानरूपं 'इदमेवास्य तत्साधारणमन्नं यदिदमद्यते' इति वाक्यं व्याचष्टे– **चतुर्थमिति** ॥ 'स य एतदुपास्ते न स पाप्मनो व्यावर्तते' इति वाक्यं साधारणान्नकृत्त्वेन भगवदुपासकस्य पापव्यावृत्तिः कथ्यत इति प्रतीतिनिरासाय व्याचष्टे– **आत्मन इति** ॥ स्वकीयमेवेत्यर्थः । अनेनोपास्त

इत्युपशब्दस्याऽवृत्तिः । ततश्च य एतदन्नम् उप स्वसमीपे वर्तमानं स्वकीयमेवेति यावत् । उपास्ते मन्यत इति व्याख्यातं भवति । पापव्यावृत्तिनिषेध-लब्धार्थकथनमक्षयमिति । कुत इत्यतो मिश्रं ह्येतदित्युक्तम् । नन्वेतदन्नस्य देवब्रह्मस्वत्वेन मिश्रत्वेऽपि कुतोऽयं 'न स पाप्मनो व्यावर्तते' इत्यत आह– **देवेति** ॥ 'द्वे देवानभाजयत्'इति मन्त्रो 'हुतं च प्रहुतं च'इति व्याख्यातः । तदनुपपन्नम् । हुतप्रहुतयोरात्माद्यन्नमनआदिवत्साधारणान्नात्पृथग-भावाद् इत्यतस्तद् व्याचष्टे– **तदेवेति** ॥ तस्मान्नेष्टियाजुकः स्यादित्येतद् व्याचष्टे– **तस्मादिति** ॥ मन्त्रपूतस्य साधारणान्नस्य देवान्नत्वादित्यर्थः ।

**भाष्यम्—**

**यदीच्छया यजेत्तेषामपहर्ता भविष्यति ॥**
**देवस्वं तेन येनैव काम्यार्थं विनियोजितम् ।**
**परकीयेन वित्तेन तस्मिन् विनिमये यथा ॥**
**चतुष्पाद्भ्यो द्विपद्भ्यश्च पशुभ्यः पयआत्मकम् ।**
**प्रायच्छत्सप्तमान्नं स गोक्षीरं मुख्यमत्र च ॥**
**आत्मने चैव देवानां तद्धोमार्थं प्रकल्पितम् ।**
**संवत्सरं गोपयसा येन होमो हरेः कृतः ॥**
**भगवत्तत्त्वविदुषा तस्य मुक्तिर्न संशयः ।**
**अदृष्टभगवद्रूपस्यैतद्दर्शनकारणम् ॥**
**भगवद्दृष्टिपूतस्तु विना होमेन मुच्यते ।**

**टिप्पणी—**

मन्त्रपूतस्य देवान्नत्वेऽपि फलेच्छया कुतो न यजेदित्यतोऽभिप्रायमाह– **यदीति** ॥ तेषां देवानामन्नस्येति शेषः । इच्छया यागे देवान्नापहर्तृत्वं कथमित्यत आह– **देवस्वमिति** ॥ येन कारणेन तेन याजकेन देवस्वमेव स्वकाम्यार्थं विनियोजितम् । तेन कारणेनापहर्तेति सम्बन्धः । ननु तेनापि देवस्वं देवेष्वेव विनियुज्यत इति कथं तस्यापहर्तृत्वमिति चेत् । इत्थम् । देवस्वं

हि देवेषु तत्प्रीत्यर्थम् । युष्मदीयमिदं युष्माभिर्ग्राह्यमेवेति विनियोजनीयम् । नतु स्वकाम्यार्थम्। तथात्वेऽपहर्तृत्वापरिहारादित्यत्र दृष्टान्तमाह– **परकीयेनेति** ।। परकीयेन वित्तेन तस्मिंस्तद्वित्तस्वामिनि ततो वस्त्रादिग्रहणेन विनिमयेन यथा तद्वित्तापहर्ता स तथेत्यर्थः । 'पशुभ्य एकं प्रायच्छत्'इति मन्त्रमनूद्य तदेकमन्नं किमित्याकाङ्क्षायां 'तत्पयः' इति व्याख्याय 'पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति'इति तदुपपादनं क्रियते तदनुपपन्नम् । उपपादकवाक्ये मनुष्यग्रहणस्यासङ्गतत्वादित्यतो मन्त्रगतपशुशब्दो न प्रसिद्धपशुमात्रपरो येनासङ्गतिः स्यात् । किन्तूभयपर इति भावेन तं मन्त्रं व्याचष्टे– **चतुष्पाद्भ्य इति** ।। यत्पय इत्यस्यार्थः– **पयआत्मकमिति** ।। पश्वन्नत्वेन प्रकृतस्य पयसः 'संवत्सरं पयसा जुह्वत्'इति होमसाधनत्वमुच्यते । तद्यत्किञ्चित्पयसो नेति वक्तुमाह– **गोक्षीरमिति** ।। अत्र पयसि । किं तत इत्यत आह– **आत्मन इति** ।। चतुर्थी षष्ठ्यर्थे । देवानां चेति तदेवेति च एवशब्दसम्बन्धः । 'तद्यदिदमाहुः संवत्सरम्'इत्यादिना मतान्तरमनूद्य 'न तथा विद्यात्'इत्यनेन तद्दूषितमिति व्याख्यानमसत्। मुनिमतस्य दूष्यत्वायोगेन तस्यापि परिग्राह्यत्वादिति भावेन 'संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयति'इति वाक्यं व्याचष्टे– **संवत्सरमिति** ।। पयोहोमस्य कथं मुक्तिसाधनत्वम्? 'तमेवं विद्वान्' इति श्रुतिविरोधादित्यत उक्तं– **भगवत्तत्त्वविदुषेति** । मुक्तिरानन्दाभिवृद्धिलक्षणा । भगवदपरोक्षज्ञानाभावे किमयं होमो व्यर्थः । नेत्याह– **अदृष्टेति** ।। नन्वेवं 'न तथा विद्यात्'इति कथं निषेध इति चेत् । न । पक्षान्तरस्यापि विद्यमानत्वेन तथैव न विद्यादित्यर्थत्वादिति भावेन स्वयं पक्षान्तरमाह– **भगवदिति** ।।

**भाष्यम्——**

**सप्तान्नसृष्टितत्वज्ञस्त्वेकहोमेन मुच्यते।।**<br>
**विशेषज्ञो यतः सोऽयं भगवत्तत्त्ववेदने।**<br>
**को नाम भगवान् विष्णुः परमानन्दरूपतः ।।**

प्राणिनां कर्मभिश्चैव स्वेच्छया च पुनःपुनः ।
सप्तान्नं सृजते यस्मादन्नानामक्षयस्ततः ॥
तस्मादक्षितिनामाऽसौ भगवान् पुरुषोत्तमः ।
य एवमक्षितिं वेद भगवन्तं सनातनम् ॥
अप्रयत्नेन भोगाः स्युर्यथेष्टास्तस्य सर्वदा ।
सप्तान्नोपासनं यस्माद्देवानां योग्यमुत्तमम् ॥
तस्माद्देवत्वमाप्नोति योग्यो देवपदस्य यः ।
ऊर्जं देवान्नमुद्दिष्टं ऊर्जितास्तु गुणास्तथा ॥
तदप्याप्नोति न नरा योग्या एतदुपासने ।
ज्ञानमात्रेण देवानां सामीप्यं प्राप्नुवन्ति ते'' ॥ इति नारायणीये

**टिप्पणी——**

'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्' इति पक्षान्तरप्रतिपादकं वाक्यं यस्मिन्नहनि पयो होमः कृतः तदहरेव मुक्त्यभावात् कथमेतदित्याशङ्कानिरासाय व्याचष्टे– **सप्तान्नेति** ॥ ननूभयोरपि भगवद्ज्ञानित्वाविशेषात्कस्यचित्संवत्सरकृतहोमेन मुक्तिः कस्यचिदेकहोमेनेति विशेषः कथमित्यत आह– **विशेषज्ञ इति** ॥ ज्ञानित्वाविशेषात्कस्यचिद्धोमेन मुक्तिः कस्यचिद् विना होमेन मुक्तिरिति कथमित्यतोऽप्याह– **विशेषज्ञ इति** ॥ सोऽयं भगवदिष्टिपूत इति । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति मन्त्रोऽन्नाक्षयहेतुप्रश्नपर इति व्याख्यानमसत् । मन्त्रे तत्परिहारादर्शनात् । 'पुरुषो वाऽक्षितिः' इति ब्राह्मणेन पुरुष एवान्नाक्षयहेतुरिति परिहारः कथ्यत इति चेन्न । पुरुषस्यान्नक्षयहेतुत्वेन तदक्षयहेतुत्वायोगात् । पुनःपुनरन्नस्रष्टृत्वायोगाच्चेति भावेन 'पुरुषो वा अक्षितिः' इति ब्राह्मणवाक्यस्य 'कस्मात्तानि न क्षीयन्ते' इति वाक्यव्याख्यानरूपत्वसिद्ध्यर्थं मन्त्रगतं कस्मादित्यस्यार्थमाह– **को नामेति** ॥ 'कस्मै देवाय हविषा विधेम' इत्यत्र हिरण्यगर्भवाचकशब्दस्य सर्वनामसञ्ज्ञावदत्रापि द्रष्टव्यम् । तथाच भगवानेवाद्यमानान्नाक्षयहेतुरिति मन्त्रार्थ इति भावः ।

ननु तर्हि 'पुरुषो वाऽक्षितिः' इति कथं व्याख्यानं तत्र पुरुषस्यानाशप्रतीतेरित्यतः 'पुरुषो वाऽक्षितिः सहीदमन्नं पुनःपुनर्जनयते' इति वाक्यद्वयमुपपाद्योपपादकभावप्रतीत्यर्थं व्यत्यासेन व्याचष्टे– **प्राणिनामिति**॥ 'स हीदमन्नं धिया धिया जनयते कर्मभिः' इत्युत्तरवाक्यानुसारेण प्राणिनां कर्मभिः स्वेच्छया चेत्युक्तम्। तस्मादन्नाक्षयहेतुत्वादेव। 'यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन' इति मन्त्रं व्याचष्टे– **य एवमिति**॥ एवमन्नाक्षयहेतुत्वेन। प्रतीकेनेत्यस्य मुखेनेत्यर्थ उक्तो ब्राह्मणे। तस्याभिप्रायमाह– **अप्रयत्नेनेति**॥ 'स देवानपि गच्छति स ऊर्जमुपगच्छति' इति वाक्यं यः कश्चित्सप्तान्नोपासको देवत्वमूर्जमपि प्राप्नोतीति निरासाय व्याचष्टे– **सप्तान्नेति**॥ गुणाः देवान्नस्य तदपि ऊर्जमपीति देवत्वसमुच्चयार्थोऽपिशब्दः। अनेन श्रुतौ देवानपीत्यपिशब्दः ऊर्जमित्यत्र सम्बद्ध्यत इत्युक्तं भवति। एतदुपासनया मनुष्यस्याप्युक्तफलप्राप्तिः किं न स्यादित्यत आह– **नेति**॥ ननूपासनाभावेऽपि ज्ञानमात्रं सम्भवतीति चेत्सत्यं तेनाप्युक्तफलाभावेऽपि फलान्तरं सम्भवतीति भावेन 'स देवानपि गच्छति' इति वाक्यं व्याचष्टे– **ज्ञानमात्रेणेति** ॥ २२ ॥

**उपनिषत्**—

[सप्तान्नोपासकस्य पुत्रात् प्रयोजनम्]

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्माद् विद्यां प्रशꣳसन्ति ॥ २३ ॥ अथातः सम्प्रत्तिर्यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माऽहं यज्ञोऽहं लोक इति यद् वै किं चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै के च यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषाꣳ सर्वेषां**

लोक इत्येकता एतावद् वा इदꣳ सर्वमेतस्मात्सर्वꣳ सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहु-स्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात् प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णया कृतं भवति तस्मादेनꣳ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठतीत्यथैनमेते देवाः प्राणाः अमृता आविशन्ति ॥ २४ ॥

भाष्यम्—

ब्रह्मेति वेदः। स्वाध्यायादिकर्तृत्वात्पुत्रः। त्वं ब्रह्मेत्याद्युच्यते। आत्मा भवति, व्यापको भवति।

पुनःपुनः कर्मकृतिर्मानुष्यजय उच्यते।
जन्मान्तरं विना नैव कर्मणा तत्तु युज्यते ॥
पुत्रेण विद्यया नित्यमेकैकेनापि युज्यते।
उभाभ्यां किमु वक्तव्यमष्टभागफलं सुतात् ॥
विद्यया त्वर्धमाप्नोति सर्वं सप्तान्नविल्लभेत् ।
पुत्रमाविश्य सामर्थ्यान्मुच्यतेऽच्छिद्रकर्मणः ॥
अक्ष्णं पुदिति च च्छिद्रं पुत्रस्तत्त्राणको भवेत्।

टिप्पणी—

'त्वं ब्रह्म' इत्यत्र पित्रा पुत्रस्य परब्रह्माभेद उच्यत इति प्रतीतिनिरासार्थं ब्रह्मशब्दार्थमाह— **ब्रह्मेतीति** ॥ उच्यत इति शेषः । अन्यथा 'यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्म' इत्येकतेत्युत्तरवाक्यविरोध इति भावः । तथाऽपि त्वं ब्रह्मेति कथं पुत्रस्य वेदाभेदाभावात् । अत एव त्वं यज्ञः त्वं लोकः इत्येतदप्यनुपपन्नमित्यत आह— **स्वाध्यायेति** ॥ 'स एवंवित्सर्वेषां भूतानामात्मा

भवति' इति वाक्ये ज्ञानिनः सर्वभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **आत्मेति** ।। ननु यथा पित्रादिलोकजयो नाम तल्लोकप्राप्तिः एवं मनुष्यलोकजयोऽपि तल्लोकप्राप्तिरेव । सा च स्वतःसिद्धेति कथं पुत्रेणैव साध्येत्यत आह– **पुनरिति** ।। नन्वस्मिन् जन्मनि कृतेन कर्मणा कर्मकरणयोग्यजन्मान्तरप्राप्तौ तत्राप्यनुष्ठितकर्मणा पुनःपुनस्तादृशजन्मान्तरप्राप्तौ स्वस्यैव पुनःपुनः कर्मकरण-लक्षणमानुष्यजयसम्भवेन 'पुत्रेणैव जय्यो नान्येन कर्मणा' इति कथमुच्यत इत्यतस्तदभिप्रायमाह– **जन्मान्तरमिति** ।। स्वस्यैव जन्मान्तरेण कर्मणा पुनःपुनः कर्मकरणसम्भवेऽपि जन्मान्तरं विना तत्पुनःपुनः कर्मकरणं कर्मणा नैव युज्यते । पुत्रेणोपदिष्टया विद्यया वा शिष्येणेति यावत् । जन्मान्तरं विनैव नित्यं तत्पुनःपुनः कर्मकरणं युज्यत इत्यर्थः । अनेन श्रुतौ पुत्रशब्दः शिष्यस्यापि सङ्ग्राहक इत्युक्तं भवति । किं पुत्रशिष्ययोः समुचितयोरेव पुनःपुनः कर्मकरणहेतुत्वम्? नेत्याह– **एकैकेनापीति** ।। ननु पुत्रशिष्ययोः स्वभिन्नत्वात्कथं ताभ्यां स्वस्य पुनःपुनः कर्मकरणमित्यतः स्वकृतकर्मणेव पुत्रादिकृतकर्मणाऽपि फलप्राप्तिरेवेत्याह– **अष्टभागेति** ।। सप्तान्नवित्पिता गुरुर्वा पुत्रकृतशिष्यकृतकर्मफलं सर्वं लभेदित्यर्थः । अनेन 'एतस्मात्सर्वं सन्नयमितो भुनजदति' इति वाक्यं व्याख्यातम् । 'अथैभिरेव प्राणैः सह पुत्रमाविशति' इत्यादि 'पुत्रो मुञ्चति' इत्यन्तं वाक्यं व्याचष्टे– **पुत्रमिति** ।। सप्तान्नविदिति वर्तते । अंशरूपसामर्थ्यादित्यर्थः । अक्ष्णयेत्यस्य च्छिद्रेति व्याख्यानमुपपादयति– **अक्ष्णमिति** ।। अक्ष्णं च्छिद्रमिति पर्यायो यस्मात्तस्माच्छिद्रेति व्याख्यानमुपपन्नमित्यर्थः । 'तस्मादेनं पुत्रो मुञ्चति तस्मात्पुत्रो नाम' इति वाक्यं व्याचष्टे– **पुत्र इति** ।। तत्तस्मादक्ष्णकर्मणः । नन्वक्ष्णकर्मणः त्राणतः पुत्रशब्दवाच्यत्वं कथमित्यत आह– **अक्ष्णं च पुदितीति** ।। अक्ष्णं पुदिति यतः पर्यायस्तस्मात् पुतस्त्राणतः पुत्र इत्युच्यत इत्यर्थः ।। २३-२४ ।।

उपनिषत्—

[वाणीब्रह्मणोः मुक्तनियामकत्वमस्ति]

पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ २५ ॥ दिवश्चैनमादित्याच्च दैवं मन आविशति तद् वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥ २६ ॥ अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति स य एवंवित् सर्वेषां भूतानामात्मा भवति यथैषौ देवतैवꣳ स यथैताꣳ देवताꣳसर्वाणि भूतान्यवन्त्येवꣳ हैवंविदं सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद् भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ॥ २७ ॥

भाष्यम्—

पृथिव्यादिस्थिता देवाः सरस्वत्यादिकास्त्रयः ॥
अधिकावेशतो देवेष्वतो देवा इति स्मृताः ।
यदावेशात्सर्वमुक्तं सत्यं दैवी तु वाग्घि सा ॥
यदावेशान्न दुःखी स्यादानन्दी दैवतं मनः ।
यदावेशात्सर्वकार्येष्वम्लानः प्राण एव सः ॥
सर्वसामर्थ्ययुक्तः स्यान्न म्रियेत कदाचन ।
एवं सप्तान्नविन्मुक्तस्त्रिभिराविष्ट एव तु ॥
सर्वेषु व्याप्तिमन्वेति न दुःखी प्राणिषु स्थितेः ।
सप्तान्नोपासनायोग्या देवा एकान्ततो हि यत् ।
देवांश्च पापं नाऽप्नोति तस्मात्पापं न तस्य तु ।
देवा मनुष्यतामंशैराप्ता ये पुत्रतः फलम् ॥

**स्यात्तेषामेव चामुक्तेर्मुक्तानां नतु किञ्चन ।**
**मुक्तानां दैववागादेरावेशः सम्प्रकीर्तितः ॥**
**प्राणज्ञानं यथाऽवन्ति रहस्यमिति सर्वदा ।**
**एवं मुक्तस्वरूपं चाप्यवन्त्येव रहस्यतः ॥**

**टिप्पणी**—

'अथैनमेते देवा आविशन्ति' इति वागादीनां देवत्वमुक्त्वा 'दैवी वाक् दैवं मनः दैवः प्राणः' इति देवसम्बन्धित्वमुच्यते तद्घटयति– **पृथिव्यादीति** ॥ आदिशब्देनाग्न्यादित्याप्चन्द्रमसां ग्रहणम् । अनेन 'पृथिव्यै चैनमग्नेश्च दिवश्चैनमादित्याच्च अद्भ्यश्चैनं चन्द्रमसश्च' इति वाक्यं व्याख्यातम् । संसारदशायां पृथिव्यादिस्थिताः सरस्वत्यादिका मुक्ताः । देवेषु सप्तान्नविन्मुक्तदेवेषु । यद्वा, पृथिव्यादिशब्देन मुक्ताः पृथिव्यादिदेवताः ग्राह्याः । अत्र मुक्तब्रह्मण एव रूपान्तरेणेतरमुक्तमनःप्राणप्रवेशापेक्षया त्रय इत्युक्तम् । 'सा दैवी वाग् यया यद् यदेव वदति तत्तद् भवति' इति वाक्यं व्याचष्टे– **यदावेशादिति** ॥ 'तद्वै दैवं मनो येनाऽनन्द्येव भवत्यथो न शोचति' इत्येतद् व्याचष्टे– **यदावेशान्नेति** ॥ मुक्तो दुःखी न स्याद् आनन्दी च स्यात् तदिति ग्राह्यम् । 'स वै दैवः प्राणः यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति' इत्येतद् व्याचष्टे– **यदावेशात्सर्वकार्येष्विति** ॥ अम्लानो मुक्तः । अम्लानत्वं कुत इत्यत उक्तम्– **सञ्चरणादिसर्वसामर्थ्ययुक्त इति** ॥ न रिष्यतीत्यस्यार्थः– **न म्रीयतेति** ॥ यदावेशादित्याद्युक्तमुपसंहरन्नथैनमेते देवा इति प्रतिज्ञावाक्यतात्पर्यमाह– **एवमिति** ॥ एवं त्रिभिराविष्ट इति सम्बन्धः । 'स य एवंवित्सर्वेषां भूतानामात्मा भवति' इति वाक्यं व्याचष्टे– **सर्वेष्विति** ॥ सप्तान्नविदित्यनुवर्तते । तर्हि सर्वेषां दुःखे तस्यापि दुःखं स्यादित्याशङ्कापरिहारकतया 'यदु किञ्चेमाः' इति वाक्यं व्याचष्टे– **न दुःखीति** ॥ अमुं सप्तान्नविद्योपासनेन प्रेरकतया सर्वप्राणिस्थितं प्राणिकृतं पुण्यमेव गच्छति न पापमित्यत्र 'न ह वै देवान्' इति कथं हेतुः देवानां पापास्पर्शेऽपि सर्वप्राणिस्थस्योपासकस्य

तत्स्पर्शोपपत्तेरित्याशङ्कां परिहरन् 'न ह वै' इति वाक्यं व्याचष्टे– **सप्तान्नेति** ॥ तस्योपासकस्य । पापं न त्विति पुण्यमेवेत्यवधारणार्थः । ननु यदि सप्तान्नोपासका देवा एव तर्हि तेषां मृत्यनन्तरं पुत्राणामेवानवस्थानेन तेभ्यः फलाभावात् कथं 'स यदैवंविदस्माल्लोकात् प्रेत्य' इत्यादिना पुत्रो मुञ्चतीत्यन्तेन तेषां मृत्यनन्तरं पुत्रतः फलमुच्यत इत्यत आह– **देवा इति** ॥ देवाः अंशैर्मनुष्यतामाप्ता ये तेषामेव पुत्रतः फलं स्यात्पुत्रे जीवति तेषां मरणसम्भवात् । नतु मूलरूपेण देवानामेव । पुत्रे जीवति तेषां मरणासम्भवादिति भावः । एतदपि न सर्वदेत्याह– **आमुक्तेरिति** ॥ कुत इत्यत आह– **मुक्तानामिति** ॥ पुत्रतः फलमिति वर्तते । यदि सप्तान्नोपासकस्य मुक्तौ पुत्रतः फलं न तर्हि किं तस्य मुक्तौ तद्विद्यासाध्यफलमित्यत आह– **मुक्तानामिति** ॥ सप्तान्नविद्याफलतयेति शेषः । ननु वायुरेव सर्वाणि भूतान्यवति नतु तानि वायुम् अवन्ति तत्कथमुच्यते 'स यथैतां देवतां सर्वाणि भूतान्यवन्ति' इति । किञ्च सप्तान्नविद्यावेत्तुरपि देवत्वेन सर्वभूतकर्तृकावनासम्भवादेवंविदं सर्वाणि भूतान्यवन्तीति च कथमुक्तमित्यतस्तस्याभिप्रायमाह– **प्राणज्ञानमिति** ॥ सप्तान्नविन्मुक्तस्वरूपज्ञानमित्यर्थः । चशब्देनामुक्तसप्तान्नवित्स्वरूपग्रहणम् । प्राणस्वरूपस्य दैववागाद्यावेशविशिष्टसप्तान्नविन्मुक्तस्वरूपस्य चायोग्येष्व-नुपदेशेनेत्यर्थः ॥ २५-२७ ॥

उपनिषत्——

[इन्द्रियमानिदेवानां स्पर्धा, मुख्यप्राणस्य विजयः]

**अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योऽन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग् दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्धत्तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति**

श्रोत्रमथेममेव नाऽप्नोद् योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरेऽयं वै नः श्रेष्ठो यः सञ्चरꣳश्चासञ्चरꣳश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवꣳस्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन् कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनु-शुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २८ ॥

[अधिदैवे(बाह्ये) देवानां स्पर्धा, प्राणस्य विजयः]

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तपस्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्यादेवता न वायुस्सैषा नास्तमिता देवता यद् वायुः ॥ २९ ॥ अथैष श्लोको भवति । यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मꣳ स एवाद्य स उ श्व इति यद्वा एतेऽमुं ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्युच्चरेत् समापिपयिषेत् तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥ ३० ॥

इति सप्तान्नब्राह्मणम् ॥ ६ ॥

**भाष्यम्—**

**उत्तमः सर्वदेवेषु प्राण एव हरेरनु ।**
**चतुर्मुखस्य प्राणस्य न विशेषोऽस्ति कश्चन ॥**
**तस्माद् विष्णोर्व्रतस्यानु नित्यं प्राणव्रतं चरेत् ।**
**हंसोपास्तिः श्वासरूपे तयोर्व्रतमुदीरितम् ॥**
**हंसरूपौ हि तौ देवौ श्वासोच्छ्वासप्रवर्तकौ ।**
**तस्मात् प्राण्यादपान्याच्च सद्रूपं संस्मरन् सदा ॥**
**नान्यस्योपासनं कुर्यात् तद्भृत्यत्वं विना क्वचित् ।**

**टिप्पणी—**

ननु तस्मादेकमेव व्रतं चरेदित्यत्र प्राणस्य सर्वोत्तमत्वादित्युक्तं तदनुपपन्नम् । विष्णोस्ततोऽप्युत्तमत्वादित्यत आह– **उत्तम इति** ॥ ननु चतुर्मुखस्यापि सत्वात्कथं प्राण एवेत्युक्तमित्यत आह– **चतुर्मुखस्येति** ॥ इदानीं तस्मादेकमेव व्रतं चरेदिति वाक्यं व्याचष्टे– **तस्मादिति** ॥ हरेरनुप्राणस्य सर्वदेवोत्तमत्वात् । ननु किं तद्विष्णुप्राणयोर्व्रतं यदाचरणीयमित्यतः प्राण्याच्चैवापान्याच्चेति वाक्यं व्याख्यातुं तावत्तयोर्व्रतमाह– **हंसोपास्तिरिति** ॥ श्वासरूपे जपे अधिष्ठाने वा या हंसोपास्तिः सा तयोर्विष्णुप्राणयोर्व्रतमुदीरितमिति सम्बन्धः । हंसोपास्तिः कथं तयोर्व्रतमित्यत आह– **हंसरूपाविति** ॥ ननु श्वासरूपाधिष्ठाने हंसरूपयोर्विष्णुप्राणयोरुपास्तिः कुत इत्यत आह– **श्वासेति** ॥ इदानीं प्राण्याच्चैवापान्याच्चेति वाक्यं व्याख्याति– **तस्मादिति** ॥ तयोः श्वासोच्छ्वास-प्रवर्तकत्वात् प्राण्यात् श्वासं कुर्यात् अपान्यादुच्छ्वासं कुर्यादित्यर्थः । ननु श्वासोच्छ्वासकर्तृत्वस्य प्राणभृन्मात्रेऽपि सत्वात्सर्वस्यापि हंसोपास्तिकर्तृत्वं किन्नेत्याह– **तद्रूपमिति** ॥ तस्मादेकमेवेत्येवकारव्यावर्त्यमाह– **नान्यस्येति** ॥ ननु यद्युच्चरेत्समापिपयिषेदित्यन्यदेवव्रतारम्भकस्यापि कर्तव्यत्वोक्तेः कथमेत-दित्यत आह– **तद्भृत्यत्वं विनेति** ॥

भाष्यम्—

इन्द्रियाणि ससर्जाऽदौ वासुदेवः प्रजापतिः ॥
अध्यात्ममिन्द्रियाण्याहुरधिदैवं तु देवताः ।
अध्यात्ममग्निर्वाङ्नामा चक्षुरादित्य उच्यते ॥
श्रोत्रं तु चन्द्रमा नाम मनः स्थूलं तु वासवः ।
येन यज्ञादिकं कुर्याच्छेषरुद्रविपास्तथा ॥
मनः सूक्ष्मं ज्ञानयोग्यं शेषो व्याख्यानगोचरम् ।
रुद्रस्तु मननाख्यं च गरुडध्यानगोचरम् ।
वायुः प्राण इति प्रोक्तो येन सर्वं नियम्यते ॥
त एते भगवत्सृष्टा व्यूदिरेऽध्यात्मसंस्थिताः ।
अधिदैवे ज्वलत्कर्मा वह्निः सूर्यस्तु तापकः ॥
सोमः कान्तौ वृष्टिकर्मा वासवः शेष एव तु ।
पञ्चरात्रप्रवृत्तीशो रुद्रस्तत्स्थक्रियापरः ॥
सर्वप्रवर्तको वायुर्ज्ञानमोक्षप्रदस्तथा ।
वेदप्रवत्तिकृद्धीन्द्रस्तेऽधिदैवे च पस्पृधुः ॥
अहं श्रेयानहं श्रेयानिति तानब्रवीद्धरिः ।
स्वकर्म यस्त्वविश्रान्तं कुर्याच्छ्रेयान् स वः स्मृतः ॥
इति श्रुत्वा ततश्चक्रुः कर्म स्वं स्वमनारतम् ।

टिप्पणी—

प्रजापतिर्हि कर्माणि ससृज इति वाक्यं प्रजापतिर्ब्रह्मेति प्रतीतिनिरासाय व्याचष्टे– **इन्द्रियाणीति** ॥ वागादीन्द्रियाभिमानिन इत्यर्थः । वह्न्यादिदेवताश्चेत्यपि ग्राह्यम् । नन्वध्यात्ममधिदैवं च वागादीन्द्रियाभिमानिनां अग्न्यादिदेवतानां च किं परस्परभेदो नेत्याह– **अध्यात्ममिति** ॥ तुशब्दोऽवधारणे । अधिदैवे अग्न्याद्या देवता एवाध्यात्ममिन्द्रियाणि इन्द्रियवाचकवागादिशब्दाभिधेया-न्याहुरित्यर्थः । को देवः किमिन्द्रियशब्दाभिधेय इत्यत आह– **अध्यात्ममिति** ॥

अधिदैवेऽग्निरध्यात्मं वाङ्नामेत्यादि योज्यम् । चन्द्रमा नामेत्यन्ते वदिष्याम्येवाहमिति वाग्दध्र इत्यादिवाक्यगता वाक्चक्षुःश्रोत्रशब्दा व्याख्याताः । प्राणस्य सर्वदेवोत्तमत्वसिद्ध्यर्थं इतरेन्द्रियाभिमानिषु मनोऽभिमानिनां प्राधान्यात्तदुत्तमत्वसिद्धौ रसनाद्यभिमानिवरुणाद्युत्तमत्वस्य कैमुत्येनैव सिद्धिरिति भावेनोपलक्षणतया मनोऽभिमानिपरतयैव मन्यानि कर्माणीति वाक्यं व्याचष्टे– **मन इति** ॥ किं स्थूलत्वमित्यत आह– **येनेति** ॥ तथा शेषरुद्रविपाः सूक्ष्मं मन उच्यन्ते । किं सूक्ष्मत्वमित्यत उक्तम्– **ज्ञानयोग्यमिति** ॥ तदेव विशदयति– **शेष इति** ॥ एवमन्यानि कर्माणीत्यत्र प्राणोऽपि विवक्षित इति भावेनाह– **वायुरिति** ॥ अधिदैवो वायुरध्यात्मं प्राण इति प्रोक्तः । किं तस्य कर्मेत्यत आह– **येनेति** ॥ तानि सृष्टान्यन्योन्येनास्पर्धन्तेति वाक्यं व्याचष्टे– **त एतदिति** ॥ व्यूदिरे विवादं कृतवन्तः । अथाधिदैवतं ज्वलिष्याम्येवाह-मित्यग्निर्दध्र इत्यादि एवमन्या देवता यथा दैवतमित्यन्तं वाक्यं व्याचष्टे– **अधिदैव इत्यादिना वीन्द्र इत्यन्तेन** ॥ कान्तौ प्रकाशने शक्तिमान् । तत्स्थक्रियापरः पञ्चरात्रोक्तविष्णुपूजादिक्रियाप्रवर्तकः । तानि सृष्टान्यन्योन्येनास्पर्धन्तेति वाक्यमधिदैवपरत्वेनापि व्याचष्टे– **तेऽधिदैवे चेति** ॥ अध्यात्मसमुच्चयार्थश्चशब्दः । अहं श्रेयानिति पस्पृधुः ।

**भाष्यम्—**

**तानेताञ्छ्रमरूपेण प्राप ब्रह्मा प्रजापतिः ॥**
**श्रान्ताः स्वं भगवत्कर्म न शेकुः सर्वदेवताः ।**
**वायुं तु समशक्तित्वात् नाऽप ब्रह्मा प्रजापतिः ।**
**तेनासौ भगवत्कर्म सर्वं च कृतवान् सदा ।**
**श्रमात्पापात्मको मृत्युर्भगवत्कर्मवर्जनात् ॥**
**अन्यान् देवानवापाशु नैव वायुं कदाचन ।**
**ते वायुं ज्ञातुमैच्छन्त श्रेष्ठोऽयमिति निश्चिताः ॥**

**तं ज्ञात्वा तेन चाविष्टास्तद्भृत्यत्वमुपागताः ।**
**तस्मात् प्राणाश्च मरुत इत्येषां नाम संस्थितम् ॥**
**वायोर्देवा हि जायन्ते लयमेष्यन्ति तत्र च ।**
**तस्मान्नित्यं तद्व्रताश्च तद्व्रतोऽतो भवेत्सदा ॥**
**अन्यदेवव्रतारम्भं यदि कुर्यात् समापयेत् ।**
**तेनासौ वायुना साकं भगवन्तमुपेष्यति'॥ इति नारायणश्रुतौ ॥**
**'आनन्द्येव भवति । न शोचति' इत्यतो मुक्त इत्यवगम्यते ॥**

**इति सप्तान्नब्राह्मणम् ॥ ६ ॥**

**टिप्पणी—**

यथाकर्मेत्यनन्तरं यथादैवमित्यनन्तरं च वक्तव्यमाह– **तानित्यादिनाऽनारतमित्यन्तेन** ॥ प्रजापतिरित्यनुवर्त्य तानि श्रमो भूत्वोपयेम इति वाक्यं व्याचष्टे– **तानेतानिति** ॥ तस्माच्छ्राम्यत्येव वागित्यादि वाक्यं व्याचष्टे– **श्रान्ता इति** ॥ श्राम्यत्येवेत्येवकाराभिप्रायमाह– **स्वं भगवत्कर्म कर्तुं न शेकुरिति** ॥ अथेममेव नाप्नोदिति वाक्यं किं प्राणस्य प्रजापत्यपेक्षयाधिकशक्तिमत्त्वान्नाप्नोदित्याशङ्कां परिहरन् व्याचष्टे– **वायुमिति** ॥ मध्यमः प्राण इत्यनन्तरं तस्मात्स नाश्राम्यदिति वक्तव्यमिति सूचयन्नाह– **तेनेति** ॥ श्रमरूपेण ब्रह्मणः प्रवेशतो देवानां किमनिष्टं जातमित्याशङ्कानिवर्तकत्वेन मृत्युरित्यस्यात्र सम्बन्धमभिप्रेत्य तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्धदिति वाक्यं व्याचष्टे– **श्रमादिति** ॥ श्रमान्निमित्तात् भगवत्कर्मवर्जनाद्धेतोः पापात्मको मृत्युरन्यान् देवानवाप । अनेन श्राम्यति श्रोत्रमित्यनन्तरं तान्याप्नोदित्यादिवाक्यं योजनीयमित्युक्तं भवति । अथेममेव नाप्नोदिति वाक्यं प्रकारान्तरेण व्याचष्टे– **नैवेति** ॥ तानि ज्ञातुं दध्रिर इति वाक्यं व्याचष्टे– **त इति** ॥ वायुमिति शेषोक्तिः । अयं वैनः श्रेष्ठः इत्यस्यार्थमाह– **श्रेष्ठोऽयमिति** ॥ त एतस्यैव सर्वे रूपमभवन्निति वाक्यमभेदप्रतीतिं निवारयन् व्याचष्टे– **तेन चेति** ॥ अनेन रूप्यते निरूप्यत इति रूपशब्दः प्रतिमार्थ इत्युक्तं भवति । प्रकारान्तरेण

तद्वाक्यं व्याचष्टे– **तद्भृत्यत्वमिति** ।। अनेन रूप्यते निरूप्यत इति रूपशब्दो भृत्यपर इत्युक्तं भवति । तस्मादेत एतेनाख्यायन्ते प्राणा इतीति वाक्यं व्याचष्टे– **तस्मादिति** ।। तदाविष्टत्वात् । मरुत इत्यधिदैवापेक्षया । म्लोचन्ति ह्यन्या देवता न वायुरित्यस्मिन्नर्थे सूर्यमात्रस्य प्राणादुत्पत्तिनाशप्रतिपादकं मन्त्रोदाहरणमसङ्गतमित्यतः सूर्यशब्दस्योपलक्षणपरत्वमभ्युपेत्य मन्त्रव्याख्यानरूपं प्राणाद्वा इति वाक्यं व्याचष्टे– **वायोरिति** ।। तं देवाश्चक्रिरे धर्ममित्येतद् व्याचष्टे– **तस्मादिति** ।। तद्विषयं व्रतं एषां ते तद्व्रताः । 'स एवाद्य स उ श्वः' इत्यस्यार्थः नित्यमिति । तस्मादेकमेव व्रतं चरेदित्यस्यार्थमाह– **तद् व्रत इति** ।। अतो देवानां तद्व्रतत्वात् । यद्युच्चरेत् समापिपयिषेदित्येतद् व्याचष्टे– **अन्येति** ।। विष्णुवायुभृत्यत्वेनेति शेषः । ते नो एतस्यै देवतायै सायुज्यं सलोकतां जयतीति वाक्यं व्याचष्टे– **तेनेति** ।। समापनेनेत्यर्थः । अथैवमेते देवाः प्राणा अमृताः आविशन्तीत्यादिप्रकरणं मुक्तपरतया प्रमाणेन व्याख्यातं तत्रान्तरोपपत्तिमप्याह– **आनन्द्येवेति** ।। मुक्तः एतत्प्रकरणप्रतिपाद्य इति शेषः । आनन्दित्वदुःखाभावयोर्मुक्तलिङ्गत्वादिति भावः ।। २८-३० ।।

**अथ खण्डार्थः**

विष्णोः सप्तान्नस्रष्टृत्व*प्रतिपादकमन्त्रानुदाहरति–**यत्सप्तेत्यादिना** ।। १ ।।

अप्रतीतेरुदाहृतमन्त्राननूद्य व्याचष्टे– **यत्सप्तान्नानीत्यादिना** ।। प्रसिद्धिद्योतकहिशब्देनायं मन्त्रभागो व्याख्यातः । मेधातपोभ्यां सप्तान्नजनकत्वं पितुः प्रसिद्धमिति । तथाच पिता विष्णुः सप्तान्नानि मेधया तपसा च यद् यदाऽजनयत् तदा तेषां मध्ये एकमस्य साधारणमित्याद्युत्तरत्र सम्बन्ध इति मन्त्रार्थ इति भावः । मेधातपःशब्दार्थौ श्रुतिः स्वयमेव वक्ष्यति । द्वितीयमन्त्रे अस्य सर्वस्यैकमन्नमकुरुत किं तत्साधारणमित्युक्तम् । तदप्रतीतेरनूद्य व्याचष्टे– **एकमिति** ।। अस्य मनुष्यवर्गस्य तच्छ्रुत्युक्तं साधारणमन्नं इदमेव । किं यदिदं प्रसिद्धं प्राणिभिरद्यत इत्यर्थः । सर्वसाधारणमिदमन्नमात्मीय-त्वेनासाधारणं कुर्वतो दोषमाह– **स इति** ।। उपास्त इत्युपशब्दस्यावृत्तिः ।

ततश्च य एतदन्नं उप स्वसमीप एव वर्तमानं स्वकीयमेवेति यावत् । उपास्ते मन्यते स पाप्मनो न व्यावर्तते । अक्षयपापवान् स्यादित्यर्थः । कुतः ? हि यस्मादेतदद्यमन्नं मिश्रं देवब्राह्मणादिसाधारणम् । तच्च केवलमात्मीयत्वेन मन्यमानो देवब्रह्मस्वापहारीत्यर्थः ॥ २ ॥

के ते द्वे देवान्ने इत्यतो द्वे देवानभाजयदिति मन्त्रमनूद्य व्याचष्टे– **द्वे इति** ॥ मन्त्रपूतं तदेवान्नं हुतं होम्यं प्रहुतं बलिं चाभाजयदित्यर्थः । यस्माद्धुतप्रहुते देवान्ने तस्मादिदानीन्तना अपि देवेभ्यो जुह्वति प्रजुह्वति च । न केवलं वैश्वदेवबलिहरणे देवानामन्ने अपि तर्हि अन्यदपि इति भावेन मुनिमतेनाह– **अथो इति** ॥ अथो इति पक्षान्तरे ये द्वे अन्ने देवानां विष्णुना दत्ते ते दर्शपूर्णमासावित्याहुर्ज्ञानिन इत्यर्थः । यस्माद्धुतादिर्देवान्नं तस्मादिष्टियाजुकः फलेच्छया यष्टा न स्यात् । तदीयस्यैव स्वफलोद्देशेन तेषु विनियोगे तदपहर्तृत्वप्राप्तेरिति भावः ॥ ३ ॥

'त्रीण्यात्मनेऽकुरुत' इति मन्त्रव्याख्यानस्य बहुत्वात्सूचीकटाहन्यायेन पशुभ्य एकमिति मन्त्रमादावनूद्य किन्तदेकमन्नमित्यतस्तद् व्याचष्टे– **पशुभ्य इति** ॥ यदेकमन्नं पुशभ्यः प्रायच्छत् तत्पय इत्यर्थः । पयसः पश्वन्नत्वमुपपादयति– **पयो हीति** ॥ हि यस्मात् मनुष्याः पशवश्चाग्रे प्रथमं शैशवे पय एवोपजीवन्ति तस्मात् पशुभ्यो दत्तमेकं पय इत्यर्थः । अनेन मन्त्रस्थः पशुशब्दोऽज्ञानित्वसाधारण्याद् बालकमनुष्यपरोऽपीत्युक्तं भवति । यस्मान्मनुष्या अग्रे पय एवोपजीवन्ति तस्मादद्यतना जना जातं कुमारं घृतं चैव घृतमेव पयः कार्यं अग्रे शैशवे प्रतिलेहयन्ति प्राशयन्ति अनु पश्चात् स्तनं वा धापयन्ति पाययन्तीत्यर्थः । यस्माच्च पयः पशवः उपजीवन्ति अथ तस्माज्जातं वत्समतृणादः तृणमत्तीति तृणादः न तृणादः अतृणादः किन्तु पयोद इत्याहुरित्यर्थः ॥ ४ ॥

'तस्मिन् सर्वं प्रतिष्ठितम्' इति मन्त्रे तच्छब्देन प्रकृतसप्तान्नेषु कस्य परामर्श इति न ज्ञायते । प्रकृतान्नसप्तकपरामर्श इति च प्रतीयते इत्यतस्तदनूद्य व्याचष्टे–

**तस्मिन्निति** ।। यच्च प्राणिति मनुष्यपश्वादि यच्च न प्राणिति वृक्षादिस्थावरमिदं सर्वं पयसि प्रतिष्ठितम् । उदकेनेव पयसाऽप्यङ्कुराभिवृद्धेर्दर्शनात् । पयो होमेनादृष्टद्वारा स्थावराद्युत्पत्तेर्वा । न केवलं जीवनहेतुत्वेनैव पयसि प्राणिजातं प्रतिष्ठितं किन्तु गोपयसो मोक्षादिहेतुत्वेनापीति भावेनाऽह– **तद्यदिदमाहुरिति** ।। संवत्सरं पयसा जुह्वद्धोमं कुर्वन् पुरुषो यदि भगवदपरोक्षज्ञानी तर्हि पुनर्मृत्युं मरणं संसारमिति यावत् । अपजयति मुक्तो भवति । यद्यदृष्टभगवत्तत्त्वः तर्हि पुनर्मृत्युं तत्साधनमज्ञानमपजयति भगवदपरोक्षज्ञानी भवतीति यदिदमाहुर्ज्ञानिनः तत्तथैव संवत्सरहोमेनैव मुक्त्यादिकमिति न विद्यात् । कुतः? यत एवं विद्वान् सप्तान्नसृष्टितत्त्वज्ञानी यदहः पयसा जुहोति तदहरेव पुनर्मृत्युमपजयति । एकहोमेनैव मुच्यत इति यावत् । कथमेकहोममात्रेण एवं विदुषो मुक्तिरित्यत आह– **सर्वं हीति** ।। यस्मात्सप्तान्नवित् पयो होमकरणेनैव देवेभ्यः सर्वमन्नाद्यं प्रयच्छति । गोपयसः प्रशस्तत्वेन सर्वान्नादिस्थानीयत्वादिति भावः । यद्वा, एवं विद्वान् हि यस्माद्यदहः पयसा जुहोति तदङ्गभूतं सर्वमन्नाद्यं च देवेभ्यः प्रयच्छति । तदहरेव पुनर्मृत्युमपजयति तस्मात् न तथा विद्यादित्यन्वयः ।। ५ ।।

नन्वद्यमानानामेतेषाम् अन्नानां क्षये कथं पुनर्मनुष्यादीनाम् अवस्थानमित्यतो-ऽक्षयत्वोपपादकं मन्त्रमनूद्य व्याचष्टे– **कस्मादिति** ।। पुरुषो वा परमात्मैवाऽ-क्षितिरन्नाक्षयहेतुः । कथं पुरुषोऽन्नाक्षयहेतुरित्यत आह– **स हीति** ।। हि यस्मात्पुरुषः इदं सप्तविधमन्नं पुनःपुनर्जनयते तस्मादक्षितिरिति सम्बन्धः । तथाच तानि साधारणादीनि सप्तान्नानि सर्वदाऽद्यमानान्यपि कस्मादानन्द-रूपाद्भगवतो न क्षीयन्ते भगवानेवान्नाक्षयहेतुरिति यावदिति मन्त्रार्थ इति भावः ।। ६ ।।

'यो वैतामक्षितिम्'इति मन्त्रमनूद्य एतामक्षितिमित्यस्यार्थमाह– **यो वा इति** ।। पुरुषो वा अक्षितिरन्नाक्षयहेतुः कुत इत्यतः प्रागुक्तमेव 'यो वै तामक्षितिम्'इति मन्त्रमनूद्य एतामक्षितिमित्यस्यार्थमाह– **यो वा इति** ।।

पुरुषो वा अक्षितिरन्नाक्षयहेतुः कुत इत्यतः प्रागुक्तमेव हेतुं कारणप्रदर्शनपूर्वकमाह– **स हीति** ॥ धिया धियेति पुनरुक्तिः पुनःपुनरन्नसर्जनापेक्षया । धिया स्वेच्छया प्राणिनां कर्मभिरित्युक्त्या प्रथममन्त्रगतं मेधया तपसेति पदद्वयं व्याख्यातं भवति । तदेव व्यतिरेकमुखेनोपपादयति– **यद्धैतदिति** ॥ यत् यदि एतत् सप्तविधमन्नं पुरुषो न कुर्यात् तर्हि सर्वदाऽद्यमानत्वात् ह निश्चयेन क्षीयतेत्यर्थः । अनेन यो वा अधिकारी एतां पुनःपुनरन्नजनिकामत एवाक्षितिमन्नाक्षयहेतुं भगवन्तं वेदेति मन्त्रार्थो व्याख्यातो भवति ॥ ७ ॥

'सोऽन्नमत्ति प्रतीकेन' इति मन्त्रमनूद्य प्रतीकेन देहेनेति प्रतीतिनिरासाय तद् व्याचष्टे– **स इति** ॥ प्रतीकं मुखं ततश्च प्रतीकेनेत्येतत् मुखेनेत्यर्थमाहेत्यर्थः । तथाच स भगवतोऽन्नाक्षयहेतुत्वज्ञानी प्रतीकेन मुखेन स्वमुखेनाप्रयत्नेनेति यावत् । अन्नमत्ति यथेष्टभोगाननुभवतीति मन्त्रार्थ इति भावः । स देवानपी-त्यादिमन्त्रद्वयमनूद्याक्षरार्थस्यातिरोहितत्वात्तात्पर्यमाह– **स देवानपीति** ॥ प्रशंसा भगवतः सप्तान्नसृष्टिकर्तृत्वज्ञानिन इति शेषः । सः सप्तान्नोपासको देवपदयोग्यत्वाद् देवान् देवत्वं गच्छति प्राप्नोति । स उपासक ऊर्जामपि देवान्नमपि उपजीवति । यद्वा, स सप्तान्नज्ञानी मनुष्यो देवान् गच्छति देवसमीपं प्राप्नोतीति मन्त्राक्षरार्थ इति भावः ॥ ८ ॥

एवं सूचीकटाहन्यायेन पशुभ्य एकमित्यादिमन्त्रान् व्याख्यायेदानीं 'त्रीण्यात्मने' इति मन्त्रमनूद्य कानि तानि त्रीणीत्याशङ्कापरिहाराय व्याचष्टे– **त्रीणीति** ॥ एवं त्रीणीति पदार्थमुक्त्वा वाक्यार्थमाह– **तानीति** ॥ तानि मनोवाक्प्राणरूपाणि त्रीण्यन्नानि आत्मने स्वार्थमकुरुतेत्यर्थः । साधारणाद्यन्नानामिव मनोवाक्प्राणानां भगवद्विषयकाणां भगवत्तुष्टिहेतुत्वेन भगवदन्नत्वं द्रष्टव्यम् । ननु चक्षुरादिषु ज्ञानकरणेषु सत्सु मन एव कस्मादात्मान्नमकुरुतेत्यतस्तस्य प्राधान्यादिति भावेन तत्प्राधान्यं व्यतिरेकेण समर्थयते – **अन्यत्रेति** ॥ पुरुषोऽवस्थितं गजं किं त्वं दृष्टवानसीति केनचित् पृष्ट आह । अन्यत्र विषयान्तरे गतं मनो यस्य सोऽहमन्यत्रमना अभूवमतो नादर्शम् । तथा इदं मदीयं

वचः किं श्रुतवानसीति पृष्ट आह । अन्यत्रमना अभूवम् अतो नाश्रौषमिति । एवमितरेन्द्रियेष्वपि मनोव्यतिरेकेण ज्ञानव्यतिरेको द्रष्टव्यः । मनसि व्याकुले चक्षुरादिभिर्ज्ञानं नोत्पद्यत इत्येतदुपपादयति– **मनसा हीति** ॥ हि यस्मान्मनस्यव्याकुल एव चक्षुषा पश्यति श्रोत्रेण शृणोतीत्यर्थः । ननु विष्णुभक्तिकामतत्पूजाकरणसङ्कल्पादीनामपि भगवत्तुष्टिहेतुत्वेन तदन्नत्व-सम्भवात् कथं मनोवाक्प्राणानामेव भगवदन्नत्वमुक्तमित्यतो मनोग्रहणेनैव कामसङ्कल्पादयोऽपि गृहीता इति भावेन कामसङ्कल्पादीनां मनोवृत्तित्वमाह– **काम इति** ॥ एकविषयेच्छा कामः । अनेकगोचरेच्छा विचिकित्सा । एतत्सर्वं मन एव मन उपादानमेकमेव । विषयेन्द्रिसंयोगादेव ज्ञानोत्पत्तौ किं मनसेत्यतो विषयेन्द्रियसंयोगस्याप्रयोजकत्वमाह– **तस्मादिति** ॥ बाह्येन्द्रियजन्यज्ञानस्य मनोऽधीनत्वात् पृष्ठत उपस्पृष्टोऽपि मनसा विजानाति । मनस्यव्याकुल एव अनेनाहं स्पृष्ट इति त्वचा विजानातीत्यर्थः । स्पृष्टोऽपीत्यपिपदेन विषयेन्द्रियसन्निकर्षमात्रस्याप्रयोजकत्वमभिप्रैति । ननु ध्वनिवर्णात्मकविष्णुनाम-रूपशब्दस्यैव भगवत्तुष्टिहेतुत्वाद् वाचः कथं तुष्टिहेतुत्वेनान्नत्वमित्यत आह– **यः कश्चेति** ॥ यः कश्चन शब्दो ध्वनिवर्णात्मकोऽसौ वागेव । तथा च वाचोऽन्नत्वोक्तौ सर्वस्यापि शब्दस्यान्नत्वमुक्तमेवेति भावः । यत्किञ्चिच्छब्दो-च्चारणहेतुभूतवाचः कथं विष्ण्वन्नत्वमित्यत आह– **सैषा हीति** ॥ हि यस्मात् सैषा सर्वशब्दोच्चारणहेतुभूता वाग् अनन्तं सर्वान्तःस्थं विष्णुमायत्ता विषयीकुर्वन्ती । सर्वेषामपि ध्वनिवर्णात्मकशब्दानां विष्णुनामत्वाद् अतो वाग् विष्ण्वन्नमित्यर्थः । केषां वाग् विष्णुमायत्तेत्यतो वेदद्रष्टार आहुः । **एषा हि न इति** ॥ नोऽस्माकम् एषा वाग् विष्णुमायत्ता हि प्रसिद्धमित्यर्थः । ननु विष्णुपूजादिसत्कर्महेतुप्राणस्येव तदन्यकर्मसन्त्यागादिहेत्वपानादेरपि तत्तुष्टिहेतुत्वेन तदन्नत्वात्कथं प्राणस्यैव तदन्नत्वोक्तिरित्यत आह– **प्राण इति** ॥ नोऽस्माकं विष्णुकर्महेतुभूतः प्राणः तदन्यकर्मसन्त्यागहेतुरपानः तद्विरोधिनिरासहेतुर्व्यानः तद्योगधारणहेतुरुदानः तद्विषयकमनोवागादीन्द्रिय-

नियमनहेतुः समानः इत्येतत्सर्वं प्राण एव प्राणप्रभेद एवेत्यर्थः । यस्य कस्यापि प्राणापानादेर्विष्ण्वन्नत्वं नास्तीति न इत्युक्तं वेदद्रष्टृभिः । मनोवाक्प्राणानां प्राधान्यं प्रकारान्तरेणाप्याह– **एतन्मय इति** ।। एतच्छब्दस्य अव्यवधानेन प्रकृतप्राणमात्रपरत्वप्रतीतिनिवारणाय विवृणोति– **वाङ्मय इत्यादिना** ।। अयमात्मोत्तमो जीवो वागादिप्रधानकः वाङ्मनःप्राणाभिमानिसान्निध्य-प्राधान्यनिमित्तकोत्कर्षवानित्यर्थः । कस्तदभिमानीत्यतोऽप्याह– **एतन्मय इति** ।। अयमात्मा सरस्वतीब्रह्मवायुरूपः एतन्मयः एतदभिमानीत्यर्थः । अनेन सरस्वत्याद्युत्तमाभिमन्यमानकत्वाच्च वागादिकमुत्तममित्युक्तं भवति । सरस्वत्यादयो वागाद्यभिमानिन इति कुतः? यतोऽयमात्मा सरस्वत्यादिरेतन्मयः प्रकृतपरमात्मवागादिजन्य इत्याह– **एतन्मय इति** ।। परमात्मनो वागादिसत्त्वे तज्जन्यत्वं तेषां स्यात् । तदेव कुतः यतोऽयमात्मा परमात्मा एतन्मयः वाङ्मनः प्राणस्वरूप इत्याह– **एतन्मय इति** ।। ९ ।।

वागाद्युत्तमत्वप्रयोजकसरस्वत्याद्युत्तमत्वसिद्धये तेषां महिमानमाह– **त्रयो लोका इत्यादिना** ।। एत एव प्रकृतवाङ्मनःप्राणाभिमानिसरस्वतीब्रह्मवायव एव । त्रयो लोकास्त्रिलोकाभिमानिनः । तदेव विशदयति– **वागेवेति** ।। वाक् वागभिमानिनी सरस्वत्ययं लोकः पृथिवीलोकाभिमानिनी । मनो मनोभिमानी ब्रह्मान्तरिक्षलोकाभिमानी प्राणः प्राणाभिमानी वायुरसौ लोकः स्वर्गलोकाभिमानीत्यर्थः ।। १० ।।

एवं 'त्रयो वेदा एत एव' इत्यारभ्य 'प्राण एनं तद्भूत्वाऽवति' इत्यन्तस्य ग्रन्थस्य व्याख्यानं द्रष्टव्यम् । यत्किञ्च विज्ञातं विज्ञानविषयः तद्वाचः तदभिमानिसरस्वत्या रूपं प्रतिमा । कुतः? हि यस्माद् वाग् विज्ञाताविज्ञाताभिमानिनी । वाङ्महिमज्ञानिनः फलमाह– **वागिति** ।। वाक् सरस्वती एनं वाग्विभूतिज्ञं तद्भूत्वा विज्ञाताभिमानिनी भूत्वाऽवतीति योजना । एवमुत्तरत्रापि । विजिज्ञास्यं जिज्ञासाविषयः अविज्ञातं विज्ञानाविषयः ।। ११-१६ ।।

सरस्वती ब्रह्मवायूनामेव पृथिव्याद्यभिमानरूपमहिमान्तरमाह– **तस्या इत्यादिना** ॥ तस्यैतस्या वाचः तदभिमानिसरस्वत्याः पृथिवी शरीरं ज्योतीरूपं प्रतिमा । किञ्ज्योतिरित्यत उक्तम्– **अयमग्निरिति** ॥ पृथिव्यग्नी सरस्वत्यभिमन्यमानावित्यर्थः । पृथिव्यग्न्योर्वागतिक्रमेण वृत्तौ कथं तच्छरीरत्वादिकमित्यत आह– **तद्यावत्येवेति** ॥ तत् तस्मात् पृथिव्यग्न्योः सरस्वत्यभिमन्यमानत्वाद् यावती वाक् तावत्येव पृथिवी तावानेवायमग्निः अभिमानिव्यतिरेकेणाभिमन्यमानाभावादित्यर्थः ॥ १७ ॥

अथ वागभिमन्यमाननिरूपणानन्तरं मनसोऽभिमन्यमानं निरूप्यत इत्यर्थः । एतस्य मनसो मनोऽभिमानिब्रह्मणः द्यौः शरीरं ज्योतीरूपं प्रतिमा । किं ज्योतिरित्यत उक्तम्– **असावादित्य इति** ॥ द्व्यादित्यौ मनोऽभिमानिब्रह्माभिमन्यमानावित्यर्थः । अभिमान्यभिमन्यमानयोः समपरिमाणकत्वमाह– **तद्यावदेवेति** ॥ तौ वाङ्मनोऽभिमानिनौ सरस्वतीब्रह्माणौ मिथुनं समेतां प्राप्तवन्तौ । ततो मिथुनीभावानन्तरं प्राणो वायुरजायत । तस्य प्राणस्य महिमानमाह– **स इति** ॥ स वायुरिन्द्रः परमैश्वर्यसम्पन्नः । स एष वायुरसपत्नोऽशत्रुः । कल्यादिशत्रुसद्भावेन कथमशत्रुरित्यत आह– **द्वितीय इति** ॥ द्वितीयः समबलो वै सपत्नः शत्रुर्भवति कल्पादयश्च न समबला इति भावः । वायोरसपत्नत्ववेत्तुः फलमाह– **नास्येति** ॥ योऽधिकारी एवं वायुरसपत्न इति वेदास्य सपत्नः शत्रुः कोऽपि न भवति ॥ १८ ॥

अथैतस्येत्यादेः पूर्ववदेवार्थः । त एते मनोवाक्प्राणाभिमानिनः सरस्वतीब्रह्मवायवः सर्व एव गुणतस्तारतम्योपेता अपि व्याप्त्या समाः सर्वे रुद्राद्यपेक्षया अनन्ता बहुगुणाः स यः कश्चिद् एतान् सरस्वत्यादीनन्तवतः इतरजीववदल्पगुणानुपास्ते सोऽन्तवन्तं नाशवन्तं लोकं जयति ह । नरकाद्यनर्थभोगानन्तरं तमःप्राप्तिर्भवतीति भावः । अथ योऽधिकारी एताननन्तानितरजीवापेक्षया बहुगुणानुपास्ते सोऽनन्तं नाशरहितं विष्णुलोकं जयति प्राप्नोतीत्यर्थः ॥ १९ ॥

चन्द्राभिमानिनो महिमानमाह– **स एष इति** ॥ स एष वायुः संवत्सरः विष्णोर्वत्सः सन् सम्यग् रमत इति संवत्सर इत्यर्थः । स एष वायुः प्रजापतिः प्रजानां पालनात् स एष वायुः षोडशकलः विशेषतः षोडशकलचन्द्रसंस्थ इत्यर्थः । तस्य चन्द्रस्थस्य वायोः पञ्चदशकलाः रात्रय एव रात्रिनामिका एव । अस्य चन्द्रस्थवायोः षोडशी कला ध्रुवैव ॥ २० ॥

पञ्चदशकलाः केन निमित्तेन रात्रिनामिकाः तत्राऽह– **स इति** ॥ स वायुः रात्रिभिः शुक्लपक्षप्रतिपदमारभ्य पौर्णमासीपर्यन्तं पञ्चदशरात्रिभिरेव पञ्चदशकलाभिरापूर्यते च। कृष्णपक्षप्रतिपदमारभ्यामावास्यापर्यन्तं पञ्चदशरात्रिभि-रपक्षीयते च । शुक्लपक्षकृष्णपक्षयोरेकैकस्यां रात्रौ कलानां पूरणात् क्षयाच्च कलाः रात्रिनामिका इत्यर्थः । अकलोऽपि वायुः स्वाधिष्ठानचन्द्रकलाभिरेव-मुच्यते । सः पञ्चदशकलारहितः अमावास्याम् अमावास्यायां रात्रिं रात्रौ एतया ध्रुवया षोडश्या कलया सर्वमिदं प्राणभृत् अनुप्रविश्य ततः प्रातः प्रतिपदि जायते द्वितीयकलायुक्तो भवति। तस्मादमावास्यारात्रौ चन्द्रस्थवायोः प्राणभृत्सु स्थितत्वादेतां रात्रिं एतस्यां रात्रौ प्राणभृतो जीवतः प्राणं न विच्छिन्द्यात् । महापापहेतुप्राणिवधो न कर्तव्य इति किमु वक्तव्यं कृकलासस्यापि अल्पदोषहेतुवधस्यापि प्राणं न विच्छिन्द्यात् । तस्यां रात्रौ कृकलासवधोऽपि महादोषहेतुरित्यर्थः । हिंसानिषेधस्य प्रयोजनमाह– **एतस्या इति** ॥ एतस्याः सर्वप्राणभृत्स्थायाः चन्द्रस्थवायुरूपदेवतायाः अपचित्या एव पूजार्थमेवेत्यर्थः । तदा प्राणिस्थं वायुं ज्ञात्वा तद्बधाकरणमपि वायुपूजैवेति भावः ॥ २१ ॥

चन्द्रस्थस्यैव वायोः सप्तान्नसृष्टितत्त्वज्ञानिस्थत्वरूपं महिमान्तरमाह– **य इति** ॥ स प्रसिद्धो यः संवत्सरः प्रजापतिः षोडशकलो वायुः सोऽयमेव तदन्तर्गत एव। अयं कः? यः एवंवित् सप्तान्नस्रष्टृत्ववित् पुरुषः तदन्तर्गतोऽयमित्यर्थः । चन्द्रस्थ एव वायुर्ज्ञानिसंस्थ इत्यर्थः । ननु चन्द्रस्थवायोः ज्ञानिनि विशिष्य स्थित्युक्तौ किं निमित्तमित्यतः चन्द्रवज्ज्ञानिनोऽपि षोडशकलत्वेन चन्द्रस्थवद्

ज्ञानिस्थस्यापि षोडशकलत्वमिति भावेन ज्ञानिस्थवायोः षोडशकलत्वमुपपादयति– **तस्येति** ।। तस्य ज्ञानिस्थवायोः वित्तमेव मानुषवित्तमेव हिरण्यादिकं पञ्चदशकलाः सौम्य पञ्चदशकलास्थानीयमित्यर्थः । अस्य ज्ञानिस्थवायोः आत्मा देहः स्वाधिष्ठानज्ञानिदेहः षोडशी कला तत्स्थानीयः । वित्तस्य पञ्चदशकलास्थानीयत्वमुपपादयति– **स इति** ।। स ज्ञानिस्थो वायुः वित्तेनैवाऽ-गतेनैवाऽपूर्यते च अपगतेन वित्तेनैवापक्षीयते च । आगमापायवत्त्वाद्वित्तस्य पञ्चदशकलास्थानीयत्वमित्यर्थः । शरीरस्य ध्रुवकलास्थानीयत्वं वित्तस्याध्रुव-कलास्थानीयत्वं चोपपादयति– **तदेतदिति** ।। यश्चासावयं चेति यदयमात्मा देहः तदेतत् नाभ्यं रथचक्रस्थानीयं वित्तं प्रधिः प्रधिस्थानीयम् अरनेम्यादिस्थानीय-मित्यर्थः । एवं सति फलितमाह– **तस्मादिति** ।। तस्मादात्मवित्तयो-र्नाभिप्रधिस्थानीयत्वात् । यद्यपि सर्वज्यानिं सर्वस्वं जीयते पराजीयते । तथापि आत्मना नाभिस्थानीयेन देहेन चेद् यदि जीवति तदा तर्ह्ययं प्रधिना तत्स्थानीयेन वित्तेनागाद् वित्तहीनो जात इति यावदित्येवाहुः ।। २२ ।।

सप्तान्नविद्यावेत्तुः फलं वक्तुं तदुपयुक्तमाह– **अथेत्यादिना** ।। के ते त्रयो लोका इत्यत आह– **मनुष्यलोक इति** ।। तेषां साधनमाह– **सोऽयमिति** ।। पुत्रेणैव औरसेन शिष्येण च । नान्येन कर्मणेति । यद्यपि पुनःपुनः कर्मकरणलक्षणो मनुष्यलोकजयः स्वेनैव कर्मणा जन्मान्तरं प्राप्य सम्पादयितुं शक्यः । तथाऽपि स्वस्य जन्मान्तरं विनोक्तमनुष्यलोकजयस्तु पुत्रेणैव पुत्रपौत्रादिकृतफलभाक्त्वात् स्वस्येति भावः । कर्मणा ज्योतिष्टोमादिना पितृलोकः स्वर्गादिः विद्यया देवलोको जनोलोको मोक्षश्च जेय इति सम्बन्धः । यथोक्तं 'ईयुस्त्रीन् कर्मणा लोकान् ज्ञानेनैव तदुत्तरान्'(भा.ता.) इति । ननु देवलोकस्य को विशेषः येन कर्मसाध्यविद्यासाध्यत्वमित्यत आह– **देव-लोक इति** ।। तस्मात् श्रेष्ठलोकसाधनत्वात् प्रशंसन्ति ज्ञानिनः ।। २३ ।।

पुत्रेण मनुष्यलोकजय इत्युक्तम् । स किं यादृशतादृशपुत्रेण भवतीत्यतः सुशिक्षितेनेति भावेनाऽह– **अथेत्यादिना** ।। अथ पुत्रादिसाधने साध्यविशेषसम्बन्ध-

कथनानन्तरम् अतः फलसद्भावात् । सम्प्रत्तिः सम्प्रदानम् उपदेशः पित्रा पुत्रं प्रति क्रियमाण उपदेशप्रकारो निरूप्यत इत्यर्थः । यदा पिता प्रैष्यन् अरिष्टादिदर्शनेन स्वयं मरिष्यन् मन्यते अथ तदा पुत्रं त्वं ब्रह्म यज्ञः त्वं त्वं लोक इत्याह । स एवमुक्तः पुत्रोऽहं ब्रह्माहं यज्ञोऽहं लोक इति प्रतिवचनमाह । ब्रह्मादिपदानां तिरोहितार्थत्वात् श्रुतिस्तद् व्याकरोति– **यद्वा इति** ।। यत्किञ्च वै प्रसिद्धमनूक्तम् अनुवचनं वेदादि 'त्रयी श्रुतिर्नित्यवाक्च वेदोऽनुवचनं तथा' इत्यभिधानात् । तस्य सर्वस्य ब्रह्मेत्येकता ब्रह्मशब्देन ग्रहणमित्यर्थः । ये के च वै 'द्रव्ययज्ञास्तपोयज्ञाः' इत्यादिप्रमाणप्रसिद्धयज्ञास्तेषां सर्वेषां यज्ञ इत्येकत यज्ञशब्देन ग्रहणमित्यर्थः । ये केचन वै प्रसिद्धा लोकाः स्वर्गादयस्तेषां सर्वेषां लोक इत्येकता लोकशब्देन ग्रहणमित्यर्थः । तथाच त्वं ब्रह्म वेदाध्ययनादिकर्ता भव तदनन्तरं त्वं यज्ञो यज्ञकर्ता भव तदनन्तरं त्वं लोको लोकसम्पादको भवेति वाक्यार्थ इति भावः । अन्यदपि कर्तव्यं पित्रा कस्मान्नोपदिष्टमित्यतः श्रुतिः स्वयमाह– **एतावद्वा इति** ।। इदं सर्वं कर्तव्यतयोपदेष्टव्यमेतावदेव वेदादिकमधीत्य तदुक्तप्रकारेण यज्ञादिकर्म कृत्वा तेन मोक्षादिलोकमापादयेत्येतावदेवेत्यर्थः । पिता किमर्थमेवं पुत्रम् अनुशास्तीत्यत आह– **एतस्मादिति** ।। सन्नुत्तमोऽयं मनुष्यत्वमंशेन प्राप्तः सप्तान्नोपासको देवः इतः प्राप्तः पुत्रमिति शेषः । पुत्रे स्थित इत्यर्थः । एतस्मादनुशिष्टात् पुत्रात् सर्वं तत्कृतवेदाध्ययनादिफलमभुनजद् अभुङ्क्त इति यस्मात्तस्मादनुशिष्टं पुत्रं लोक्यं लोकसाधनमाहुर्विद्वांसः । यस्माद् लोक्यमाहुः तस्मादेनं पुत्रं त्वं ब्रह्मेत्याद्यनुशास्ति पिता । ननु मृतस्य पुत्रेऽवस्थानाभावात् कथमेतदित्यत आह– **स इति** ।। एवंवित् सप्तान्नोपासकः स देवो मनुष्यत्वमाप्तः यदाऽस्माल्लोकात्प्रैति मृतो भवति अथ तदा एभिरेव प्राणैः स्ववाङ्मनोऽभिमानिभिः सरस्वत्यादिभिः सह स्वांशरूपसामर्थ्याच्च पुत्रमाविशति । सप्तान्नोपसकस्य पुत्रात् फलान्तरमाह– **स इति** ।। अनेन पित्रा सप्तान्नविदा यदि कदाचिदक्ष्णया च्छिद्रेण पापेन किञ्चित् कर्म कृतं भवति तदा स पुत्रः तस्मात्सर्वस्माच्छिद्रकर्मणः

एनं स्वपितरं मुञ्चति मोचयति । पापकर्मफलानुभवं परिहरतीत्यर्थः । तस्मादेव पुतः छिद्रकर्मणः त्राणाद्रक्षणात् पुत्रो नाम । एवं येन पुत्रतः फलमाप्तं तेनैव मनुष्यलोको जित इत्याह– **स इति** ।। पुत्रेणैव नतु स्वयं साक्षान्न केवलं सप्तान्नविदो मनुष्यलोकजयादिरेव फलं किन्तु मोक्षगतातिशयोऽपीत्याह– **अथेति** ।। अथ मुक्त्यनन्तरम् एनं सप्तान्नविदं मुक्तमेते प्राणाः पूर्वं वाङ्मनःप्राणाभिमानिनो देवाः सरस्वत्यादयः स्वरूपभूतवागादिनियामकत्वेन आविशन्ति । नन्वमुक्तानां कथं मुक्तप्रवेश इत्यत उक्तम्– **अमृता इति** ।। तेऽपि मुक्तास्सन्त इत्यर्थः । अत्र मुक्तजीवे प्राणप्रवेशो वायोरुच्यमानः चतुर्मुखस्यैव रूपान्तरेणेति ज्ञातव्यम् ।। २४ ।।

को देवः कुत्र प्रविष्ट इत्यतस्तद्विशदयन् तदावेशफलमाह– **पृथिव्यै चैनमित्यादिना** ।। चतुर्थी पञ्चम्यर्थे ल्यब्लोपनिमित्ता पञ्चमी । प्राक् स्वाविष्टां पृथिवीमग्निं च परित्यज्येत्यर्थः । दैवी सप्तान्नविन्मुक्तदेवेषु विशेषावेशाद्दैवीत्युक्ता वाक् सरस्वती आविशति मुक्तस्वरूपभूतवाचमिति शेषः । यद्वा पृथिव्याश्चाग्नेश्च मुक्तपृथिव्यग्न्योर्दैवयोर्विशेषावेशादिति यावत् । दैवी देवसम्बन्धिनीत्यर्थः । का सा दैवी वागित्यत आह– **सेति** ।।ययाऽऽविष्टया सरस्वत्या प्रेरितो मुक्तो यद्यद् वदति तत्तद् भवत्येव सैव दैवी वागित्यर्थः ।। २५ ।।

एवं दिवश्चैनमित्यादिकं योज्यम् । आनन्द्येवेत्यवधारणव्यावर्त्यं कथनमथो मुक्त्यनन्तरं न शोचतीति ।। २६ ।।

यो यत्प्रेरितो मुक्तः सञ्चरंश्चासञ्चरंश्च न व्यथते सर्वसामर्थ्ययुक्तत्वात् । अथो तस्मादेव न रिष्यति न म्रियत इत्यर्थः । सञ्चरन् व्यथते रिष्यति च मनुष्यो सञ्चरन् व्यथते रिष्यति चाश्च इति सञ्चरंश्चासञ्चरंश्चेत्युक्तम् । मरणानन्तरभाविफलकथनप्रसङ्गान्मुक्तेरपि मरणविशेषत्वेन तदुत्तरभाविफलमभिधायेदानीं सप्तान्नविदो मुक्तेः पूर्वं फलान्तरमप्याह– **स य इति** ।। यः एवंवित् सप्तान्नोपासको देवः स सर्वेषां भूतानामात्मा व्यापको भवति ।

तत्र दृष्टान्तमाह– **यथेति** ॥ यथा एषा प्राणरूपा देवता सर्वेषां भूतानामात्मैव-मित्यर्थः । तस्यैव फलान्तरमाह– **स इति** ॥ स वक्ष्यमाणो दृष्टान्तो यथा । एतां देवतां प्राणाख्यां सर्वाणि भूतान्यवन्ति तज्ज्ञानस्य रहस्यत्वेनायोग्येषु नोपदिशन्ति एवं ह एवमेव एवंविदं सप्तान्नवेत्तारं मुक्तममुक्तं च सर्वाणि भूतान्यवन्ति । ननु सप्तान्नोपासकस्य सर्वभूतव्यापकत्वे तद्देहेषु स्थित्वा भूतशोके शोकः स्यादित्यत आह– **यदु किञ्चेति** ॥ इमाः प्रजाः यदु किञ्च यत्किञ्चिदपि शोचन्ति तत् शोचनम् अमा देहनियामकदैत्यैस्सह आसां प्रजानामेव भवति । न तत्स्थसप्तान्नोपासकानाम् । कुतः? यतः प्राणिकृतपुण्यमेव अमुं सर्वप्राणिस्थं सप्तान्नोपासकं प्रति गच्छति न पापम् । तदपि कुतः? यतो नियामकतया प्राणिदेहस्थान् देवान् पापं न गच्छति । ह वा इति प्रमाणप्रसिद्धिकथनम् । सप्तान्नोपासकाश्च देवा इति भावः ॥ २७ ॥

सप्तान्नविद्योपासकस्य मुक्त्यवस्थायाममुक्त्यवस्थां च उक्तफलप्राप्त्यर्थम् अनुष्ठेयं व्रतमाह– **अथेति** ॥ अथ अधिकारिस्वरूपनिरूपणानन्तरम् । अत उक्तफलसद्भावात् । व्रतार्थं मीमांसा व्रतमीमांसा तस्मात् प्राण्याच्चैवापान्याच्चेति विष्णुप्राणविषयकव्रतं निरूपयितुं किमर्थं तद्विषयकं व्रतमनुष्ठेयमित्यतस्त-त्स्वरूपविचारः क्रियत इत्यर्थः । तत्राख्यायिकामाह– **प्रजापतिरिति** ॥ प्रजापतिर्वासुदेवः कर्माणि कर्मसाधनानि अध्यात्मं वचनादिक्रियासाधनवागादी-न्द्रियाभिमानिनो अधिदैवं ज्वलनादिक्रियाकर्त्रग्न्यादिदेवान् ससृजे ससर्ज । तानि सृष्टान्यग्न्यादीनि अन्योन्येनास्पर्धन्त । प्राणस्य आत्मभ्य आधिक्यम् आत्मनां तदवमत्वं जानमाना अपि प्राणोत्तमत्वनिर्णयायैवाध्यात्ममधिदैवतं च स्पर्धां कृतवन्त इत्यर्थः । तत्र तावदध्यात्मं तत्प्रकारमाह– **वदिष्याम्येवेति** ॥ अहमेवान्यापेक्षां विना वदिष्यामि वागिन्द्रियप्रेरणेन वचनक्रियां जीवेन कारयिष्यामीति वाग् वाङ्नामाऽग्निर्दध्रे । चक्षुरादित्यो दध्रे । श्रोत्रं चन्द्रमाः । एवमन्यानि कर्माणि कर्मसाधनानि मनआदीनि तदभिमानिशेषादयः । यथाकर्म व्याख्यानविषयकमनःप्रेरणादिरूपस्वस्वयोग्यं कर्म । करिष्याम इति दध्रिरे ।

तदा यः स्वकर्माऽविश्रान्तः कुर्यात् सः युष्मासूत्तम इति हरिणोक्तं श्रुत्वा ते देवाः स्वं स्वं कर्मानारतं चक्रुरिति ग्राह्यम् । तानीत्यत्र प्रजापतिरिति वर्तते । मृत्युरित्यस्योत्तरत्र सम्बन्धः । तदनन्तरं प्रजापतिर्ब्रह्मा तानि वागादीनि श्रमो भूत्वा श्रमकरो भूत्वोपयेमे प्राप्तवान् । तस्माद् ब्रह्मणा श्रमरूपेण प्राप्तत्वात् । वाग् वाङ्नामाऽग्निः श्राम्यत्येव न स्वकर्म चक्रे । करणशक्त्यभावात् । चक्षुरादित्यः श्राम्यत्येव श्रोत्रं श्राम्यत्येव श्राम्यति मन इत्याद्यपि ग्राह्यम् । अथेतरदेवानां श्रमप्राप्त्यनन्तरम् इममेव नाऽप्नोत् । कम्? योऽयं मध्यमः प्राणः सर्वे हि चेतनाः प्राणशब्दवाच्याः । तत्राज्ञानाभिभवास्पृष्टौ विष्णुर्वायुश्चेति द्वावेव । अन्ये तु तत्स्पृष्टा एव । तथाच प्राणशब्दवाच्येषु मध्ये विष्णोरुत्तमत्वाद् अन्येषामधमत्वाद् वायोर्मध्यमत्वात् मध्यम इत्युक्तम् । ब्रह्मणः वायुसम-शक्तित्वाच्छ्रमरूपेण तं नाऽपेत्यर्थः । ततो भगवद्विषयकं सर्वं कर्म कृतवान् । एवं देवानां श्रमप्राप्तौ को दोष इति चेत् । यतः श्रमाद्विष्णुपूजादिकर्मवर्जनेन मृत्युः पापात्मकः तान्यग्न्यादीन्याप्नोत् । तान्याप्त्वा मृत्युरवारुन्धत् अवरोधं कृतवान् । अथ तेषां पापात्मकासुरवेधानन्तरं योऽयं मध्यमः प्राणः इममेव नाऽप्नोत् । मृत्युरिति योज्यम् । तानि पापात्मकासुरवेधितान्यग्न्यादीनि तदविद्धं वायुं ज्ञातुं दध्रिरे । अयं वै वायुरेव नोऽस्माकं मध्ये श्रेष्ठ इति ज्ञातवन्तश्च । कुतः श्रैष्ठ्यमित्यत उक्तम्– **य इति** ॥ ततः किं चक्रुरित्यत उक्तम्– **हन्तेति** ॥ हन्तेत्यास्वादने । सर्वे वयमस्यैव वायोरेव रूपमसाम प्रतिमाः भवाम । तथा रूप्यते निरूप्यते इति रूपं भृत्या भवामेत्युक्त्वा ते सर्वे एतस्यैव वायोरेव रूपं प्रतिमाः भृत्याश्चाभवन् । तस्माद्देवानां प्राणप्रतिमात्वाद् एते देवाः एतेन प्राणनाम्ना आख्यायन्ते । तदेव विशिष्याऽह– **प्राणा इति** ॥ प्राणप्रविष्टत्वाद्देवाः प्राणशब्देनाऽख्यायन्त इति । वेत्तुः फलमाह– **तेनेति** ॥ योऽधिकारी एवं प्राणशब्देन देवा आख्यायन्त इति वेद जानाति स यस्मिन् कुले भवति तत्कुलं तेन तद्वाचकशब्देन आख्यायते अमुष्येदं कुलमित्याचक्षते । किञ्च य उ यः कश्चिदेवंविदा स्पर्धते प्रतिपक्षं करोति

सोऽनुशिष्य दीर्घकालं शेषं प्राप्यैवान्ततो म्रियते ह न सहसाऽनुपद्रुतो म्रियत इत्यर्थः । उपसंहरति– **इत्यध्यात्ममिति** ।। २८ ।।

अथाध्यात्मं प्राणस्य श्रैष्ठ्यकथनानन्तरम् । अधिदैवतं प्राणस्य श्रैष्ठ्यम् उच्यत इति शेषः । ज्वलिष्यामीत्यादि पूर्ववत् । एवमन्या देवताः शेषाद्याः यथादैवतं तत्तद्देवतायोग्यपञ्चरात्रप्रवृत्त्यादि करिष्याम इति दध्रिरे । अग्न्यादयः श्रमरूपेण प्रजापतिना प्राप्ताः मृत्युनाऽवरुद्धाः । वायुस्तु नेत्युक्तमत्राप्यतिदिशति– **स यथेति** ।। स वक्ष्यमाणो दृष्टान्तो यथा । एषां वागादीनां प्राणानां मध्ये मध्यमः प्राणः यथा श्रमरूपेण प्रजापतिना न प्राप्तः अत एव न मृत्युनावरुद्धोऽत एव श्रेष्ठश्च । तथैतासां देवतानाम् अग्न्यादीनां मध्ये वायुरित्यर्थः । अन्या देवताः मृत्युनावरुद्धत्वादेव म्लोचन्ति म्लाना भवन्ति । न वायुर्म्लोचति । कुतः? यद् वायुर्यो वायुः सैषा देवता नास्तमिता यद्यस्मादित्यर्थः । अत्र वायोरपि देवतावत्स्वरूपनित्यत्वदेहानित्यत्वयोः सत्वेऽपि स्वरूपातिरिक्तेश्वरविषयवृत्तिप्रवाहाविच्छेदापेक्षया आविर्भूतज्ञानातिरोभावापेक्षया चेदमुपपादनीयम् । यद्वा, शरीराभिमानाभावेन तदुत्पत्तिनाशाभ्यां नास्योदया-स्तमयाविति भावेनैतदुक्तम् । यथोक्तं 'ब्रह्मा निरभिमानित्वाच्छरीर्यप्यशरीरवान्' (भा.ता.११-७-१७.) इति ।। २९ ।।

देवानां वाय्वधीनत्वे मन्त्रोऽप्यस्तीत्याह– **अथेति** ।। तमुदाहरति– **यत इति** ।। सूर्यशब्दो देवतान्तरोपलक्षकः । मन्त्राभिप्रेतं ब्राह्मणं स्वयमाह– **प्राणाद्वा इति** ।। मन्त्रशेषमुदाहरति– **तमिति** ।। देवास्तमुद्दिश्य धर्महंसोपास्ति-लक्षणं चक्रिरे । स एव धर्मोऽद्यापि वर्तते । स एव श्वोऽपि वर्तिष्यत इत्यर्थः । मन्त्रं व्याचष्टे– **यद्वा इति** ।। एते देवाः । यद्वा, यदेव धर्मसाधनव्रतम् अमुर्हि अमुष्मिन् काले प्राणश्रेष्ठत्वनिर्णयकाले ध्रियन्तः धृतवन्तः । तदेव व्रतमद्य कुर्वन्ति अपिशब्देन श्वः करिष्यन्तीत्यस्य समुच्चयः । यदर्थं प्राणस्योत्तमत्वं प्रसाधितं तदाह– **तस्मादिति** ।। तस्माद्विष्ण्वनन्तरं प्राणस्य सर्वदेवोत्तमत्वात् मा मां पाप्मा मृत्युर्नेत् नैवाऽप्नुवदिति मन्वानोऽधिकारी

एकमेव प्राणमात्रविषयकमेव व्रतं चरेत् । किं तदित्यत उक्तम्– **प्राण्यादिति** ॥ प्राण्यात् श्वासं कुर्यात् । अपान्याद् उच्छ्वासं कुर्यात् । श्वासोच्छ्वासात्मकहंसो-पास्तिं कुर्यादित्यर्थः । आरब्धं प्राणव्रतं मध्ये न विसर्जनीयमित्याह– **यदीति** ॥ यद्युच्चरेत् प्राणव्रतं प्रारभेत तर्हि समापिपयिषेत् समापयेदित्यर्थः । प्राणभृत्यत्वेनान्यदेवताव्रतस्याऽरब्धत्वे वा कर्तव्यमाह– **यदिति** ॥ अन्यदेवता-व्रतमिति शेषः । तस्य फलमाह– **तेनेति** ॥ तेन प्राणव्रतसमापनेना-न्यदेवताव्रतसमापनेन वा एतस्यै देवतायै एतस्याः देवतायाः विष्णुरूपदेवतायाः सायुज्यं तेन वायुना जयति प्राप्नोति तदनधिकारी सलोकतां जयतीत्यर्थः ॥ ३० ॥

इति सप्तान्नब्राह्मणम् ॥ ६ ॥

**भाष्यम्**—

## अथ त्रयब्राह्मणम्

[भारतीप्राणरुद्रैः कृता प्रपञ्चसृष्टिः]

**त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थ-मतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥ अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्ति-ष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥ अथ कर्मणा-मात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येत-देषाꣳ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत् त्रयꣳ सदेकमयमात्माऽऽत्मैकः सन्नेतत् त्रयं तदेतदमृतꣳ सत्येन**

**च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥**

इति त्रयब्राह्मणम्

॥ इति बृहदारण्यके तृतीयोऽध्यायः ॥

**भाष्यम्—**

**सहैव माति जानातीति समम्। आत्मा प्राणः। नामरूपयोरपि प्राणाधीनत्वादेकमित्युच्यते।**

**'प्राणो वायुरिति प्रोक्तस्तत्पत्नी नाम भारती ।**
**रूपं तु तत्सुतो रुद्रो वशे प्राणस्य तद्द्वयम् ॥**
**अमृतो वायुरुद्दिष्टो नित्यज्ञानात्मकत्वतः ।**
**सत्यं यथार्थवक्तृत्वाद् भारती रुद्र एव च ॥' इति ॥**
**रुद्रे वेदेषु च प्राणः प्रविष्टश्छादितः सदा ।**
**सत्य इत्युच्यते नित्यं स्वरूपेणामृतः स्मृतः ॥ इति च ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमद्बृहदारण्यकोपनिषद्भाष्ये तृतीयोध्यायः ॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

प्राणस्यैव रुद्रभारत्युत्तमत्वरूपं महिमान्तरमाह– **त्रयं वा इति ब्राह्मणेन** ॥ तत्र 'एतद्धि सर्वैर्नामभिः सम्' इत्यादिवाक्यत्रयं परैरेतद् वाग्रूपशब्दसामान्यं सर्वैः स्वविशेषभूतैः देवदत्तादिनामभिः सममविशेषेणानुस्यूतमिति व्याख्यातम् । तदसत् । वात्तवरूपशब्दत्वस्य कथंचिच्छब्दविशेषानुस्यूतत्वेऽपि वागिति सामान्यशब्दस्य तदनुस्यूतत्वाभावात् । किञ्चैवं सति नामस्विति सप्तमी स्यान्नतु तृतीया । सामान्यशब्दस्य विशेषशब्दकारणत्वाभावेन 'अतो हि सर्वाणि नामान्युत्तिष्ठन्ति' इत्यस्यानुपपत्तेश्चेति भावेन खण्डत्रयगतसममित्यस्यार्थमाह–

**सहैवेति** ।। सहेत्यस्य सभावः माङ् मान इत्यत आतोऽनुपसर्गे क इति कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे मातीति ममित्यर्थः । आत्मेत्येतदित्यात्मशब्देनात्मशब्दवाच्यशरीरनिर्वर्त्यकर्मसामान्यमुच्यत इति व्याख्यानमसत् । तथात्वे आत्मशब्दस्य लाक्षणिकत्वापत्तेः । सर्वकर्मणां शरीरनिर्वर्त्यकर्मसामान्यत्वाभावाच्चेति भावेनात्मशब्दार्थमाह– **आत्मा प्राण इति** ।। आत्मशब्दोक्तमेव तदेतदमृतमिति तदेतच्छब्देन परामृश्य प्राणो वा अमृतमिति तद्व्याख्यानादिति भावः । तदेतत्त्रयं सदेकमयमात्मेति वाक् चक्षुरात्मनामभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **नामरूपयोरपीति** ।। अत्र नामरूपशब्दाभ्यां वाक्चक्षुषोर्ग्रहणं प्राणशब्दस्येन्द्रियादिपरत्वमपाकुर्वन् वाक्चक्षुःशब्दार्थौ वदन्नामरूपयोरपीत्युक्तार्थे प्रमाणमाह– **प्राण इति** ।। तत्पत्नी भारती नामेति वागिति प्रोक्ता । तत्सुतो रुद्रो रूपमिति चक्षुरिति प्रोक्त इत्यर्थः । प्राणो वा अमृतमिति वाक्यं व्याचष्टे– **अमृत इति** ।। नामरूपे सत्यमित्ये तद् व्याचष्टे– **सत्यमिति** ।। यथार्थवक्तृत्वा-देवेति सम्बन्धः । ननु वायोरेव सर्वाच्छादकत्वात्कथं ताभ्यामयं प्राणः छन्न इत्युक्तमित्यतस्तद् व्याचष्टे– **रुद्र इति** ।। यतः सत्ये रुद्रे सत्येषु वेदेषु तदभिमानिभारत्यां च सदा प्रविष्टः प्राणः तस्मात्सत्येनाच्छादित इत्युच्यत इत्यर्थः । ननु नित्यज्ञानात्मकत्वं सर्वसाधारणमिति कथं वायोरमृतत्वे तन्निमित्तमित्यत आह– **नित्यमिति** ।। यतः स्वरूपेणाविर्भूतस्वरूपज्ञानेन नित्यं स्थितोऽतो वायुरमृत इति सम्बन्धः । आविर्भूतज्ञानतिरोभावो नास्तीति भावः । यथोक्तं 'अतिरोहितविज्ञानाद्वायुरप्यमृतः स्मृतः' इति ।।

**अथ खण्डार्थः**

सरस्वतीरुद्राभ्यां वायोरुत्तमत्वं वक्तुं तदभिमन्यमानं जगत्तावद् विभजति– **त्रयमिति** ।। इदं जगत् त्रयं वै त्रिविधम् । त्रैविध्यमेव दर्शयति– **नामरूपं कर्मेति** ।। इतिशब्दोऽध्याहार्यः । नामाभिमानिस्वरूपमाह– **तेषामिति** ।। तेषां नामरूपकर्मणां मध्ये नाम्नां वाग् भारतीत्येतद्दैवतम् । तन्महिमानमाह– **एतदिति** ।। एषां नाम्नां वागित्येतदुक्थमुत्थापकम् । कुतः? हि यस्मादतो

वाचो भारत्याः सर्वाणि नामानि उत्तिष्ठन्ति उत्पद्यन्ते। वाचो महिमान्तरमाह– **एतदिति** ॥ वागित्येतदेषां नाम्नां साम । कुतः । हि यस्मादेतद्वागित्येतत् सर्वैर्नामभिः शब्दैः सहैव रूपाणि कर्माणि च माति जानातीति च समम्। महिमान्तरमाह– **एतदिति** ॥ वागित्येतद् एषां नाम्नां ब्रह्म । कुतः । हि यस्मात् वागित्येतत्सर्वाणि नामानि बिभर्ति ॥ १ ॥

रूपाभिमानिस्वरूपं दर्शयंस्तन्महिमानमाह– **अथेति** ॥ अथ नामाभिमानि-स्वरूपनिरूपणानन्तरम् । रूपाभिमानिस्वरूपमुच्यत इति शेषः । रूपाणां चक्षुश्चक्षुर्नामको रुद्र इत्येतद्दैवतं इतरत्पूर्ववत् । सर्वैः रूपैः सहैव नामानि कर्माणि च माति जनातीति सममित्यर्थः ॥ २ ॥

कर्माभिमानिस्वरूपं निरूपयंस्तन्महिमानमाह– **अथेति** ॥ कर्मणामात्मा प्राण इत्येतद्दैवतं एतदेषामित्यादि पूर्ववत् । सर्वैः कर्मभिः सहैव नामानि रूपाणि च माति जानातीति सममित्यर्थः। भारतीरुद्रवायूनां नामादित्रितयाभिज्ञ-त्वोक्त्या साम्यशङ्कां वारयति– **तदेतदिति** ॥ तदेतद्वागादित्रयं सदेकं द्वयोरेकाधीनत्वाद् एकमित्यर्थः । किं तदेकं यदधीनं द्वयमित्यत आह– **अयमात्मेति** ॥ तथाच वाक् चक्षुषोरात्माधीनत्वमिति भावः। तदुपपादयति– **आत्मेति** ॥ आत्मा प्राणः एको मुख्यः सन् एतत्त्रयं वागादित्रयमुच्यत इत्यर्थः । नन्वात्मनः श्रेष्ठत्वं वाक् चक्षुषोरश्रेष्ठत्वं च कथमित्यत आह– **तदेतदिति** ॥ तदेतदमृतमित्येतद् व्याचष्टे– **प्राणो वा इति** ॥ प्राणो वायुरमृतमतिरोहितविज्ञानादित्यर्थः । सत्येनेत्युक्तसत्यशब्दार्थमाह– **नामरूपे इति** ॥ वाक्चक्षुषी इत्यर्थः । इदानीं वाक्यार्थमाह– **ताभ्यामिति** ॥ ताभ्यां वाक्चक्षुर्भ्यां सरस्वतीरुद्राभ्याम् अयममृतः प्राणः छन्नः तयोर्नियामकत्वेन प्रविष्टत्वादित्यर्थः ॥ ३ ॥

इति त्रयब्राह्मणम्

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृतायां तृतीयोऽध्यायः**

# अथ चतुर्थोऽध्यायः

उपनिषत्—

[स्वहृदिस्थभगवद्रूपोपासनाया एव मोक्षजनकत्वसमर्थनम्]

**दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥ स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन् संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्ते अतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥ २ ॥**

भाष्यम्—

**अतीत्य जगद् धर्मवर्जितत्वेन स्थितत्वादतिष्ठाः। उत्तमत्वान्मूर्धा।**

टिप्पणी—

तृतीयाध्याये प्रायेण अश्वमेधब्राह्मणादिभिः बाह्याः ब्रह्मविद्या उक्ताः । प्रायेणान्तराः ब्रह्मविद्या अनेनाध्यायेनोच्यन्ते। तत्र प्रथमब्राह्मणेन न बाह्यब्रह्मविद्या साक्षान्मोक्षसाधिका अपि तर्हि स्वहृदिस्थब्रह्मविद्येत्याह । अतिष्ठाः सर्वेषां भूतानां मूर्धेत्यत्राप्रतीतेः सर्वेषां भूतानां मूर्धा शिर इत्यन्यथाप्रतीतेश्चातिष्ठा मूर्धशब्दार्थावाह– **अतीत्येति** ॥ जगदन्तर्गतस्य कथं जगदतिक्रम इत्यत आह– **जगद्धर्मवर्जितत्वेनेति** ॥ **उत्तमत्वान्मूर्धेति** ॥ मूर्ध्नः सर्वाङ्गेषूत्तमत्वादित्यर्थः ॥

उपनिषत्—

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा बृहत्पाण्डरवासाः**

**सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहः सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥ स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥ स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात् प्रजोद्वर्तते ॥ ५ ॥ स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥**

**भाष्यम्—**

**स्वयमेवापराजितबहुरूपत्वादपराजिता सेना भगवान् । जिष्णुरुत्तमः । अन्येषां जेता अन्यतस्त्यजायी ।**

**टिप्पणी—**

ननु अपराजितसेनेत्यस्य बहुव्रीहित्वेन भगवद्विशेषणत्वे स्त्रीलिङ्गानुपपत्तिः । देवादिरूपसेनायाः कदाचित्पराजयसम्भवेनापराजितत्वानुपपत्तिश्चेति कर्मधारय एवानुसर्तव्यः । तथाच कथमेतद् भगवद्विशेषणम् । स्वस्यैव स्वसेनारूपत्वायोगादित्यतस्तद् व्याचष्टे– **स्वयमेवेति** ॥ जिष्णुर्जेतेत्यर्थप्रतीत्याऽन्यतस्त्यजायीत्यनेनैकार्थत्वप्रतीतिं निवारयितुं तत्पदद्वयं व्याचष्टे– **जिष्णुरित्यादिना** ॥

उपनिषत्—

**स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥**

भाष्यम्—

**विषासहिरसह्यः।**

टिप्पणी—

विषासहिरित्यस्य सहत इति सासहिः विशेषेण सहत इति विषासहिरिति व्याख्यानमसत् । विष्णोर्दुर्जनादिषु सहनाभावात् इति भावेन तद् व्याचष्टे- **विषासहिरिति** ॥ अनेन विनिर्षिधार्थ इत्युक्तं भवति ॥

उपनिषत्—

**स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥ स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वाꣳस्तानतिरोचते ॥ ९ ॥ स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा असुरिति वा**

**अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳहैवास्मिन् लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥ १० ॥ स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद् गणश्छिद्यते ॥ ११ ॥ स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳहैवास्मिन् लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥ स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥**

**भाष्यम्—**

आत्मनि हिरण्यगर्भे। आत्मन्वी चित्तवान्। चित्ताभिमानित्वात् तस्य।

**टिप्पणी—**

य एवायमात्मनि पुरुष इत्यत्राऽत्मनीत्यस्य स्वात्मनीत्यर्थत्वे एतदुपासनस्यान्तरुपास्तित्वप्राप्त्या नैतावता विदितमित्युत्तरत्रास्यापि बहिरुपास्तित्वोक्तिर्विरुध्येतेत्यतस्तद् व्याचष्टे– **आत्मनीति**॥ 'आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते' इत्यभिधानादित्यर्थः। फलवाक्यगतमात्मन्वीत्येतदनूद्याऽप्रतीतेर्व्याचष्टे– **आत्मन्वीति**॥ ननूपासनेनानुरूपं हि फलं भवति। तथाच कथं हिरण्यगर्भे

भगवदुपास्तिं कुर्वतः चित्तवत्त्वं स्यादित्यत आह– **चित्तेति** ॥ अभिमान्युपास्तौ अभिमन्यमानवान् भवतीति न वैरूप्यमिति भावः ॥

उपनिषत्—

**स होवाचाजातशत्रुरेतावन्नू३ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥**

भाष्यम्—

**स्वहृदि स्थितं स्वनियामकं भगवद्रूपमुपास्यैव मोक्षो भवति । देवतासु भगवन्तमुपास्य तत्तद्देवतासमीपं प्राप्य पुनः स्वहृदिस्थमुपास्यैव मोक्षो भवतीत्यतो 'नैतावता विदितं भवति' इत्युक्तम् ।**

टिप्पणी—

ननु नैतावता विदितं भवतीत्युक्तिः किं पूर्वोक्तविद्यायाः ब्रह्मविद्यैकदेशत्वात्, अथवा मोक्षसाधनत्वाभावात् । नाद्यः । ब्रह्मणः केनाप्यनवशेषेण ज्ञातुमशक्यत्वात् । वक्ष्यमाणविद्याया अपि ब्रह्मविद्यैकदेशत्वाच्च । नान्त्यः । ब्रह्मोपास्तिमात्रस्यैव मोक्षसाधनत्वादित्यत आह– **स्वहृदिस्थमिति** ॥ तथाच न ब्रह्मोपास्तिमात्रं मोक्षसाधनमिति भावः । एवं तर्ह्युक्तोपासनानां वैफल्यान्नैतदिति वक्तव्यं नैतावतेति कथमुक्तमित्यतस्तदभिप्रायमाह– **देवतास्विति** ॥ उपास्यैव स्थितस्येति शेषः । तेन समानकर्तृता ॥

उपनिषत्—

**स होवाचाजातशत्रुः प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञापयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषँ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिना पेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥**

**भाष्यम्—**

**स्वहृदिस्थभगवद्रूपस्य स्वस्मिन् विशेषसम्बन्धज्ञापनार्थं बृहन् पाण्डरवास इत्याद्यामन्त्रणम् । तेभ्यो नामभ्योऽप्यस्य शरीरे विशेषसम्बन्ध इत्यतः पाणिपेषणेन जीवमुत्थापयामास भगवान् । येषां बहिरुपासनेन मोक्षस्तेषामपि हृद्युपासनं किञ्चित्कर्तव्यमेव ।**

**टिप्पणी—**

ननु यदि देवेषु भगवदुपासनं न मोक्षसाधनं किन्तु हृदिस्थोपासनमेवेति राज्ञोऽभिप्रायः तर्हि सुप्तं प्रति ऋषिं नीत्वा सोमान्तर्गतभगवद्वाचकैः बृहत्पाण्डरवासःसोमशब्दैः सुप्तामन्त्रणं किमर्थं क्रियते । तेन अभिप्रेतार्थासिद्धेरित्यत आह— स्वहृदिस्थेति ॥ भगवतः सर्वत्राविशिष्टत्वात् हृदिस्थोपासनमेव मोक्षसाधनं न देवतान्तर्गतभगवदुपासनमिति कथमिति मुनेराशङ्कापरिहाराय स्वस्मिन् स्वहृदिस्थभगवद्रूपस्य देवतान्तर्गतरूपापेक्षया विशेषसम्बन्धज्ञापनार्थमेतैः शब्दैः आमन्त्रणमित्यर्थः । नन्वेतैः शब्दैरामन्त्रणेन कथमयं विशेषो ज्ञापित इति चेदित्थम् । सुप्तजीवोत्थापनाय हि विष्णोरिदमामन्त्रणम् । ततश्च यदि देवान्तर्गतस्य स्वहृदिस्थस्य च विष्णुरूपस्य स्वस्मिन् सम्बन्धविशेषाभावः तर्हि देवगतभगवद्वाचकैः शब्दैरामन्त्रितः सुप्तहृद्गतो विष्णुर्जीवमुत्थापयेत् । देवस्थभगवदामन्त्रणस्यैव हृदिस्थभगवदामन्त्रणत्वात् । नचोत्थापयति । तेन ज्ञायते देवगतभगवद्रूपापेक्षया हृद्गतभगवद्रूपस्य स्वस्मिन् सम्बन्धविशेषोऽस्तीति । येन सम्बन्धविशेषेण देवस्थभगवदामन्त्रणं हृदिस्थभगवदामन्त्रणं न भवतीति भावः । ननु तर्हि हृदिस्थभगवद्रूपविशेषवाचकैरसाधारणनामभिरामन्त्रणं कर्तव्यम् । तस्यापि प्रबोधोपायत्वात् । पाणिपेषणं किमर्थमित्यत आह— **तेभ्य इति** ॥ सत्यमसाधारणनाम्ना आमन्त्रणमपि प्रबोधोपाय इति । तथाऽपि न तच्छीघ्रप्रबोधोपायः । बहुशस्तथोक्तेऽपि प्रबोधादर्शनात् । किन्तु पाणिपेषणमेव । तदनन्तरं शीघ्रप्रबोधदर्शनात् । किं तत्र निमित्तमिति चेत् तेभ्योऽसाधारणनामभ्योऽपि अस्य पाणिपेषणस्य शरीरे विशेषसम्बन्धसत्त्वात् अतः पाणिपेषणस्य

शीघ्रप्रबोधोपायत्वात् पाणिपेषणेन आमन्त्रितो भगवान् जीवमुत्थापयामासेत्यर्थः। ननु 'केषाञ्चित् सर्वगत्वेन केषाञ्चिद् हृदये हरिः। केषाञ्चिद् बहिरेवासावुपास्यः पुरुषोत्तमः' इत्युक्तेः कथं हृदिस्थं उपास्यैव मोक्ष इत्युक्तिरित्यत आह– **येषामिति** ॥

**उपनिषत्**—

[अवस्थात्रयनियामकभगवदुपासना]

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद् य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥ स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञान-मयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥**

**भाष्यम्**—

**स्वहृदिस्थेन भगवद्रूपेण विशेषसम्बन्धदर्शनार्थमेव 'यत्रैष एतत्सुप्तोऽभूत्' इत्यादि प्रश्नप्रतिवचनं समस्तम्। यत्र यस्मिन् परमेश्वरे विज्ञानमये एष जीवः सुप्तोऽभूत्। यत्रेत्यधिकरणभूत एव य एष विज्ञानमय इति परामृश्यते। 'अन्योऽन्तर आत्मा विज्ञानमयः' 'विज्ञानं ब्रह्म चेद् वेद' इत्यादि-श्रुतेः। तानि यदा परमात्मा गृह्णाति तदैतत्पुरुषो जीवः स्वपिति नाम।**

**टिप्पणी**—

ननु हृदिस्थोपासनमेव मोक्षसाधनमित्यभिप्रेतार्थेऽनुपयोगाद् यत्रैष एतत्सुप्तोऽभूत् इत्यादिप्रश्नः प्रतिवचनं च किमर्थम्। नच हृदिस्थस्य देवस्य परमात्मापेक्षया स्वस्मिन् विशेषसम्बन्धज्ञापनार्थं तदिति वाच्यम्। तस्य बृहन् पाण्डरवास इत्याद्या मन्त्रणेनैव कृतत्वादित्यत आह– **स्वहृदिस्थेनेति** ॥ सम्बोधनेनार्थाज्ज्ञापितो

विशेषसम्बन्धः । अत्र तु य एषोऽन्तर्हृदय आकाशः तस्मिन् शेत इत्यादिना मुखत एवेति विशेषः । अत एव तत्र ज्ञापनार्थमित्युक्त्वाऽत्र दर्शनार्थमित्युक्तम् । स यत्र स्वप्नया चरतीत्यादेः सङ्ग्रहार्थं समस्तमित्युक्तम् । य एष प्रसिद्धो विज्ञानमयः पुरुषः पुरि शेत इत्येषः यत्र यदा एतत् स्वपनं यथा भवति तथा सुप्तोऽभूत् तदा एष विज्ञानमयः काभूदिति व्याख्यानमसत् । यत्रेत्यस्य यदेत्यर्थत्वे एष विज्ञानमयः पुरुषो यदा सुप्तोऽभूत् तदा काभूदित्येतावता पूर्णत्वेन शेषवैय्यर्थ्यादिति भावेन यत्रैष एतत्सुप्तोऽभूदित्येतद् व्याचष्टे– **यत्रेति** ॥ वक्ष्यमाणपरामर्शसौकर्याय विज्ञानमय इत्याह । नन्वेवमपि एष विज्ञानमयः पुरुषो जीवः काभूदित्येतावता पूर्तेर्य एष इति व्यर्थम् । यत्रेत्यस्य परमेश्वर इत्यर्थत्वे क्वैष तदाऽभूदित्येतत्प्रश्नानुपपत्तिश्चेत्यतो य एष विज्ञानमय इत्येतद् व्याचष्टे– **यत्रेत्यधिकरणभूत एवेति** ॥ ततश्चैष परमात्मा काभूदिति प्रश्नवाक्यार्थत्वान्नानुपपत्तिरिति भावः । विज्ञानमयशब्दस्य परमात्मवाचकत्वे श्रुतिमाह– **अन्य इति** ॥ नन्वत्रापि विज्ञानमयशब्दस्य कोशपरत्वाङ्गीकारात् कथमेतद् विवक्षितार्थे मानमित्यत्यतस्तत्रोदाहृतश्लोके ब्रह्मशब्दश्रवणान्नैवं शङ्क्यमित्याह– **विज्ञानमिति** ॥

तानि यदा गृह्णाति अथैतत्पुरुषः स्वपिति नामेत्यत्र पुरुष इत्युक्तजीवस्यैव ग्रहणकर्तृत्वमिति व्याख्यानं निवारयंस्तद्वाक्यं व्याचष्टे– **तानीति** ॥ तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति इन्द्रियवृत्तिग्रहणकर्तृत्वेन परमात्मन एव प्रकृतत्वादिति भावः ॥

उपनिषत्—

**स यत्रैतत् स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जनपदान् गृहीत्वा स्वे जानपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥**

भाष्यम्—

**स यत्र परमात्मा स्वप्नया नाड्या चरति तदा जीव उच्चावचं निगच्छतीव। सर्वदा महाराजवत् प्राणान् गृहीत्वा परमात्मा परिवर्तते। जीवस्तु कदाचिदेव स्वप्ने राजवदात्मानं पश्यति कदाचिद् ब्राह्मणवच्छ्वमार्जारादिवद्वा।**

टिप्पणी—

स यत्रेत्यस्य स जीवो यत्र यस्मिन् काले स्वप्नया स्वप्नप्रवृत्त्या चरति वर्तत इति व्याख्यानमसत्। 'जीवं च चारयेत्तत्र' इति प्रमाणविरुद्धत्वेन स इति परमात्मन एव ग्राह्यत्वात्। नन्वेवं सति तस्यैवोच्चावचं निगच्छतीत्यत्रापि कर्तृत्वापत्तिः। तत्र कर्त्रन्तरानुक्तेरित्याशङ्कां परिहरंस्तद्वाक्यं व्याचष्टे– **स इति**॥ महाराजमहाब्राह्मणयोरपि उच्चपदेनैव ग्रहणसम्भवादुच्चावचमित्येवोक्तम्॥

ननु जीवेश्वरयोरुभयोरपि स्वप्नावस्थागतत्वे किं तयोर्वैलक्षण्यं इत्याशङ्कापरिहारकत्वेन तदुतेव महाराज इत्यादिकं स यथा महाराज इत्यादिकं च प्रवृत्तमिति भावेनाप्राधान्यज्ञापनाय तद्वाक्यद्वयं व्यत्यासेन व्याचष्टे- **सर्वदेति**॥ प्राणान्मनोव्यतिरिक्तान्। वास्तवमहाराजादिभवनादेर्बाधितत्वात् राजवदात्मानं पश्यतीत्युक्तम्। उच्चेत्यस्य राजवद् ब्राह्मणवच्चेत्यनेनैव व्याख्यातप्रायत्वात्। अवचमित्यस्यार्थः श्वमार्जारादिवद्वेति। एतेनोच्चावचं निर्गच्छतीत्युक्तस्य जीवस्यैव स यथेति महाराजदृष्टान्तेन प्राणग्रहीतृत्वोक्तेः कथं तानि यदा परमात्मा गृह्णातीत्युक्तमित्येतदपि परास्तम्॥ १॥

उपनिषत्—

[सुषुप्तौ हरिसान्निध्यादेव जीवः सुखी]

**अथ यदा सुषुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा**

**महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ १९ ॥**

भाष्यम्——

**आनन्दस्य परमात्मनोऽतिघ्नीं समीपम्। कुमारो रुद्रः। महाराजो वायुः। महाब्राह्मणो ब्रह्मा। नहि जीवो विज्ञानपूर्वकं प्राणानां विज्ञानमादत्ते। नच सर्वप्राणलोकदेवभूतानां स्रष्टा।**

टिप्पणी——

कुमारोऽत्यन्तबालो महाराजो महाब्राह्मणो वातिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्नी। आनन्दस्य सुखस्यावस्था तां गत्वा शयीतेति व्याख्यानमसत्। बालादीनां दुःखस्यापि सत्वेन दुःखासम्भिन्नसुखाभावादिति भावेनाऽऽनन्दातिघ्न्यादिपदार्थानाह– **आनन्दस्येति** ॥ 'कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्' इति श्रुतेः कुमारो रुद्रः। 'क्षत्रजात्यभिमानी तु पवनो' इत्युक्तेर्महाराजो वायुः। 'विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः' इत्युक्तेर्महाब्राह्मणो ब्रह्मा। एवं यत्रैष एतत्सुप्तोऽभूदित्यादि प्रकरणं परमात्मपरत्वेन व्याख्याय जीवपरतया परकीयव्याख्याने उपक्रमविरोधं तावदाह– **नहीति** ॥ श्रौतविज्ञानेनेत्यस्याभिप्रायः विज्ञानपूर्वकमिति। प्राणानां विज्ञानं इन्द्रियाणां ज्ञानजननशक्तिमित्यर्थः। अस्मादात्मनः सर्वे प्राणाः इत्युपसंहारविरोधमप्याह– **नचेति** ॥ ६ ॥

उपनिषत्——

**स यथोर्णनाभिस्तन्तुनोच्चरेद् यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति। तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥**

इति अजातशत्रुब्राह्मणम् ॥ १ ॥

भाष्यम्—

**स यत्र परमात्मा स्वप्नया नाड्या चरति तदा जीव उच्चावचं निगच्छतीव । सर्वदा महाराजवत् प्राणान् गृहीत्वा परमात्मा परिवर्तते । जीवस्तु कदाचिदेव स्वप्ने राजवदात्मानं पश्यति कदाचिद् ब्राह्मणवच्छ्वमार्जारा-दिवद्वा ।**

टिप्पणी—

स यत्रेत्यस्य स जीवो यत्र यस्मिन् काले स्वप्नया स्वप्नप्रवृत्त्या चरति वर्तत इति व्याख्यानमसत् । 'जीवं च चारयेत्तत्र' इति प्रमाणविरुद्धत्वेन स इति परमात्मन एव ग्राह्यत्वात् । नन्वेवं सति तस्यैवोच्चावचं निगच्छतीत्यत्रापि कर्तृत्वापत्तिः । तत्र कर्त्रन्तरानुक्तेरित्याशङ्कां परिहरंस्तद्वाक्यं व्याचष्टे– **स इति** ।। महाराजमहाब्राह्मणयोरपि उच्चपदेनैव ग्रहणसम्भवादुच्चावचमित्येवोक्तम् ।।

ननु जीवेश्वरयोरुभयोरपि स्वप्नावस्थागतत्वे किं तयोर्वैलक्षण्यं इत्याशङ्का-परिहारकत्वेन तदुतेव महाराज इत्यादिकं स यथा महाराज इत्यादिकं च प्रवृत्तमिति भावेनाप्राधान्यज्ञापनाय तद्वाक्यद्वयं व्यत्यासेन व्याचष्टे- **सर्वदेति** ।। प्राणान्मनोव्यतिरिक्तान् । वास्तवमहाराजादिभवनादेर्बाधितत्वात् राजवदात्मानं पश्यतीत्युक्तम् । उच्चेत्यस्य राजवद् ब्राह्मणवच्चेत्यनेनैव व्याख्यातप्रायत्वात् । अवचमित्यस्यार्थः श्वमार्जारादिवद्वेति । एतेनोच्चावचं निर्गच्छतीत्युक्तस्य जीवस्यैव स यथेति महाराजदृष्टान्तेन प्राणग्रहीतृत्वोक्तेः कथं तानि यदा परमात्मा गृह्णातीत्युक्तमित्येतदपि परास्तम् ।। १ ।।

उपनिषत्—

[सुषुप्तौ हरिसान्निध्यादेव जीवः सुखी]

**अथ यदा सुषुप्तो भवति तदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा**

**महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ॥ १९ ॥**

भाष्यम्—

**आनन्दस्य परमात्मनोऽतिघ्नीं समीपम् । कुमारो रुद्रः । महाराजो वायुः । महाब्राह्मणो ब्रह्मा । नहि जीवो विज्ञानपूर्वकं प्राणानां विज्ञानमादत्ते । नच सर्वप्राणलोकदेवभूतानां स्रष्टा ।**

टिप्पणी—

कुमारोऽत्यन्तबालो महाराजो महाब्राह्मणो वातिघ्नीमतिशयेन दुःखं हन्तीत्यतिघ्नी । आनन्दस्य सुखस्यावस्था तां गत्वा शयीतेति व्याख्यानमसत् । बालादीनां दुःखस्यापि सत्वेन दुःखासम्भिन्नसुखाभावादिति भावेनाऽनन्दातिघ्न्यादिपदार्थानाह– **आनन्दस्येति** ॥ 'कुमारश्चित्पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्' इति श्रुतेः कुमारो रुद्रः । 'क्षत्रजात्यभिमानी तु पवनो' इत्युक्तेर्महाराजो वायुः । 'विष्णोर्ब्राह्मणजातिः सन् ब्रह्मा जज्ञे चतुर्मुखः' इत्युक्तेर्महाब्राह्मणो ब्रह्मा । एवं यत्रैष एतत्सुप्तोऽभूदित्यादि प्रकरणं परमात्मपरत्वेन व्याख्याय जीवपरतया परकीयव्याख्याने उपक्रमविरोधं तावदाह– **नहीति** ॥ श्रौतविज्ञानेनेत्यस्याभिप्रायः विज्ञानपूर्वकमिति । प्राणानां विज्ञानं इन्द्रियाणां ज्ञानजननशक्तिमित्यर्थः । अस्मादात्मनः सर्वे प्राणाः इत्युपसंहारविरोधमप्याह– **नचेति** ॥ ६ ॥

उपनिषत्—

**स यथोर्णनाभिस्तन्तुनोच्चरेद् यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति । तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥**

इति अजातशत्रुब्राह्मणम् ॥ १ ॥

भाष्यम्—

आदित्यचन्द्रविद्युत्सु भूतेष्वादर्श एव च।
गच्छत्पाश्चात्यशब्दे च चक्षुश्छायागतं तथा।।
हिरण्यगर्भसंस्थं च सदोपास्य हरिं परम्।
तद्देवसार्ष्टितामेत्य हृद्युपास्य हरिं पुनः।।
मुक्तिमेत्यथ यो बाह्यान्मुक्तिमेष्यति सोऽपि तु।
हृदि किञ्चिदुपास्यैव विष्णुं मुक्तिमनुव्रजेत्।
यानि सूर्यादिनामानि विष्णोस्तानि न संशयः।।
तदुक्तान्येव सूर्यादेराकृष्यैवोपचारतः।
विशेषेण तु सम्बन्धो यतः स्वहृदि संस्थिते ।।
जीवस्यातो न सोमादिनाम्नाऽऽहूतो हरिः परः ।
जीवं च चारयेत्तत्र यदा विष्णुः सनातनः ।।
स्वप्नं पश्यति जीवोऽयं यदा विज्ञानरूपिणम् ।
सुषुम्नासंस्थितं विष्णुमेति तत्सुप्तिमेष्यति ।।
सम्यग्ज्ञानमयाद् विष्णोरुत्थानं चाप्ययं व्रजेत्।
प्राणानां चैव लोकानां देवानां प्राणिनामपि ।।
सत्यसत्यो हरिः स्रष्टा पाता विलयकृत्तथा ।
नियन्ता मोक्षदश्चैव विष्णुरेव सनातनः ।। इति नारायणश्रुतौ ।।

इति अजातशत्रुब्राह्मणम् ।। १ ।।

टिप्पणी—

नैतावता विदितं भवतीत्यस्य देवतासु भगवन्तमुपास्येत्यादिना यत्तात्पर्यमुक्तं तत्प्रमाणेन द्रढयति– **आदित्येत्यादिना** ।। अनेन य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इत्यादिखण्डद्वादशकगतगार्ग्यवचनानामपि तात्पर्यमुक्तं भवति । गच्छतः पश्चात्पृष्ठत उत्पन्नः शब्दो गच्छत्पाश्चात्यशब्दः । बुद्ध्या विवेकेन गतमित्येतत्पूर्वत्राप्यन्वितम्। सार्ष्णितां समीपम्। येषां बहिरुपासनेनेत्युक्तार्थे

प्रमाणमाह– **अथेति** ।। ननु बृहन् पाण्डुरवासः सोमादिशब्दानां चन्द्रपरत्वे तद्वाचकशब्दैः परमात्मामन्त्रणमयुक्तमित्यतस्तेषां परमात्मपरत्वमाह– **यानीति** ।। तर्हि प्रसिद्धिविरोध इत्यत आह– **तदुक्तान्येवेति** ।। तद्वाचकान्येव नामानि विष्णोराकृष्य सूर्यादि उपचारतो नामानीत्यर्थः। बृहत्पाण्डुरवास इत्याद्यामन्त्रणस्य स्वहृदिस्थभगवद्रूपस्येति यत्तात्पर्यमुक्तं तत्र प्रमाणमाह– **विशेषेणेति** ।। हराविति शेषः । सोमादिनाम्ना आहूतो हरिर्जीवमुत्थापयामासेति शेषः । स यत्र स्वप्नया चरतीत्यादेः उच्चावचं निगच्छतीत्यन्तस्य तात्पर्यमाह– **जीवं चेति** ।। न केवलं स्वयं चरति किन्तु जीवं च चारयेदिति चशब्दार्थः। यदा जीवं चारयेत् तत्र तदाऽयं जीवः स्वप्नं पश्यतीति सम्बन्धः। तत्र स्वप्ननाड्यामिति वा। अथ यदा सुषुप्तो भवतीत्यारभ्य य एष एतच्छेत इत्यन्तस्य तात्पर्यमाह– **यदेति** ।। जीवोऽयमित्यत्राप्यनुवर्तते तत् तदा । अस्मादात्मनः सर्वे प्राणा इत्यादि व्याख्यातुं तदर्थसिद्धमर्थमाह– **सम्यग्ज्ञानमयादिति** ।। अयं जीवो न केवलं सुप्तिमेष्यति किन्तु उत्थानं च व्रजेत्। अपिशब्दस्य लोकानामपीत्युत्तरत्र सम्बन्धः। अस्मादात्मन इत्येतद् व्याचष्टे– **प्राणानामिति** ।। इन्द्रियाणामित्यर्थः। सत्य सत्य इत्यनेन तस्योपनिषत्सत्यस्य सत्यमित्येतद्व्याख्यातम् । स्रष्टा पातेत्यादिना व्युच्चरेदित्येतदुपलक्षणपरमित्युक्तं भवति ।।

**अथ खण्डार्थः**

बलाकस्यापत्यं बालाकिः। गर्गस्य गोत्रापत्यं गार्ग्यः ब्राह्मणः। अनूचानो वेदाध्ययनादिसम्पन्नः । अत एव दृप्तोऽहङ्कारी । आस ह किल स गार्ग्यः। काश्यां भवं काश्यं अजातशत्रुं राजानमभिगम्य ते ब्रह्म ब्रवाणीत्युवाच ह एवमुक्तः स अजातशत्रुः । त्वं ब्रह्म ब्रवीतुमसमर्थ इति सूचयन्नुवाच। एतस्यां वाचि ब्रह्मोपदेशरूपायाम् । यदि त्वं ब्रह्म ब्रूयास्तर्हि तुभ्यं वयं सहस्रं दद्म इति भावः । कुत एव महापहास इत्यत आह– **जनक इति** ।। यदि त्वं ब्रह्म वक्तुं समर्थस्तर्हि ब्रह्म शुश्रूषवो जनाः समीपस्थं

ब्राह्मणं त्वां परित्यज्य जनको जनक इति क्षत्रियं प्रति धावनं न कुर्युः कुर्वन्ति च । अतो न तव सामर्थ्यमित्यर्थः ॥ १ ॥

एवमपहासितः स्वाभ्यस्ताः बह्वीः ब्रह्मविद्या आह– **स इत्यादिना** ॥ आदित्ये पुरुषो विष्णुः अस्तीति शेषः । राजा इतोऽधिकमपि तत्र जानामीति भावेनाह– **स होवाचाजातशत्रुरित्यादिना** ॥ मा माम् । एतस्मिन् विष्णोरादित्यस्थत्वे विषये । मा संवदिष्ठाः संवादं मा कार्षीः । ज्ञातज्ञापनं न कार्यमिति भावः । यद्वा गार्ग्यमतिविक्षेपार्थं मा मेति द्विर्निषेधः । अहमेतमादित्यस्थं पुरुषम् । अतिष्ठाः । जगद्धर्मवर्जितत्वेनातीत्य स्थितत्वादतिष्ठाः । सर्वेषां भूतानां मूर्धा उत्तमः । राजते दीप्यत इति राजेत्युपासे इत्युवाचेति सम्बन्धः । अतिष्ठात्वज्ञानेन फलाभावे तदुपासनं व्यर्थमित्यत आह– **स इति** ॥ य एतमादित्यस्थं एवमुक्तप्रकारेणोपास्ते स इत्यन्वयः । एवमुत्तरत्रापि योज्यम् ॥ २ ॥

बृहत् पाण्डुरं शुक्लं वासो यस्यासौ तथोक्तः । शुक्लाम्बरधरमिति वचनात् अस्योपासकस्य गृहे अहरहः प्रतिदिनं सोमः सुतो भवति प्रसूतो भवतीति निरन्तरं प्रकृतिविकृत्यात्मकयागानुवृत्तिर्भवतीत्यर्थः । अस्योपासकस्यान्नं भोग्यं न क्षीयते ॥ ३-४ ॥

न विद्यते प्रवृत्तिरुद्वर्तनं यस्य सः अप्रवृत्तिः । अस्य प्रजा सन्ततिरस्माल्लोकात् नोद्वर्तते नोन्मूल्यत इति सम्बन्धः ॥ ५ ॥

इन्द्रः परमैश्वर्यसम्पन्नः विगतं कुण्ठनं पराभवो यस्य स विकुण्ठः । विकुण्ठ एव वैकुण्ठः । स्वयमेवापराजितबहुरूपत्वादपराजितसेना जिष्णुरुत्तमः पराजिष्णुः पराजयशीलो न भवतीत्यपराजिष्णुः । अन्यतस्त्यजायी अन्येषां जेता भवतीत्यर्थः ॥ ६ ॥

न सह्यत इति विषासहिरसह्यः ॥ ७ ॥

प्रतिरूपोऽनुकूलः । एनं उपासकम् । सर्वं प्रतिरूपमेवानुकूलमेव उ

गच्छति। अवधारणव्यावर्त्यमाह– **नाप्रतिरूपमिति** ॥ अथोऽन्यच्च फलं अस्मादुपासकात्। प्रतिरूपः अनुकूलः पुत्रः । जायत इति ॥ ८ ॥

रोचिष्णुः प्रकाशनशीलः अथोऽन्यच्च फलम् । यैर्विद्वद्भिः सन्निगच्छति सङ्गतो भवति तान् सर्वानतिरोचते अतिक्रम्य प्रकाशते ॥ ९ ॥

यं तं गच्छन्तम् । अनु पश्चात् पृष्ठतः । शब्दः उदैति उत्पद्यते । तस्मिन् गच्छत्पश्चात्यशब्दे । य एवायं पुरुष इत्यर्थः । असुः आयुष्यप्रदः । सर्वमायुरेतीत्यस्याभिप्रायमाह– **नैनमिति** ॥ कालात् कालमृत्योः पुरा अपमृत्युं न प्राप्नोतीत्यर्थः ॥ १० ॥

द्वितीयः द्वितीयवान् सपरिवारः । अपगच्छतीत्यपगः न विद्यतेऽपगः परिवारो यस्य सः अनपगः अविच्छिन्नपरिवार इत्यर्थः । गणः परिवारः ॥ ११ ॥

छायामयः छायागतः मृत्युर्मारकः ॥ १२ ॥

आत्मनि हिरण्यगर्भे आत्मन्वी चित्ताभिमानिचतुर्मुखवानित्यर्थः । आत्मन्वी भवति चित्तवान् भवति चतुर्मुखस्य चित्ताभिमानित्वात् ॥ १३ ॥

एवं स्वाभ्यस्तविद्या उक्त्वा स गार्ग्यस्तूष्णीमास ह किल सः अजातशत्रुः तूर्ष्णीं स्थितं गार्ग्यं एतावन्नु एतावदेव ब्रह्म विदितं किमित्युवाच एतावद्धि एतावदेव ब्रह्म विदितमिति गार्ग्यः प्रत्युवाच एवमुक्तवन्तं गार्ग्यं प्रति अजातशत्रुर्नैतावता ब्रह्म विदितं भवतीत्युवाच एतावतादित्यादिगतपरमात्मोपासनमात्रेण मोक्षार्थं वेदितव्यं विदितं न भवति । स्वहृद्गतपरमात्मरूपविशेषोपासनस्यैव मोक्षसाधनत्वादिति भावः । स गार्ग्यो मोक्षसाधनविद्याश्रवणार्थं त्वा त्वां उपयानि शिष्यत्वेनोपयामीत्युवाच ॥ १४ ॥

एवमुक्तः स अजातशत्रुः उवाचाह क्षत्रियो मे ब्रह्म वक्ष्यतीति ब्राह्मणः क्षत्रियं शिष्यत्वेनोपेयादिति यत् एतत्प्रतिलोमं विपरीतं वै तस्मात् । वि एवेति पदच्छेदः । त्वा त्वां प्रति । ब्रह्म विज्ञापयिष्याम्येव विज्ञापनमेव

करिष्यामि। नोपदेशमित्यर्थः। सर्वत्र परमात्मनोऽविशिष्टत्वात्कथं हृद्गतोपासनमेव मोक्षसाधनं न देवाद्यन्तर्गतपरमात्मोपासनमित्यतः हृद्गतस्य परमात्मनः देवस्थरूपापेक्षया स्वस्मिन्विशेषसम्बन्धं ज्ञापितुकामः तं गार्ग्यं पाणावादाय हस्ते गृहीत्वोत्तस्थौ। तौ गार्ग्याजातशत्रू कचित्प्रदेशे सुप्तं पुरुषं प्रत्याजग्मतुः। पूर्वोक्तविशेषसम्बन्धज्ञापनार्थं तं सुप्तपुरुषान्तर्गतं परमात्मानं बृहन् पाण्डुरवासः सोमराजन्नित्येतैर्नामभिः आमन्त्रयाञ्चक्रे सः सुप्तान्तर्गतो नोत्तस्थौ नोत्थापयामास जीवं हृद्गतरूपविशेषवाचकासाधारणनामापेक्षया शरीरे पाणिपेषणस्य विशेषसम्बन्धसत्त्वेन शीघ्रप्रबोधोपायत्वात् तं सुप्तं पाणिना पेषं कृत्वा बोधयाञ्चकार स सुप्तस्थो हरिः पाणिपेषणेनोत्तस्थौ। ह किल पाणिपेषणेन जीवमुत्थापयामास भगवानिति यावत् ॥ १५ ॥

एवमर्थाद्विशेषसम्बन्धं ज्ञापयित्वा स्पष्टं दर्शयितुं पृच्छति– **स हेति** ॥ एष जीवः एतत् एतस्मिञ्शरीरे यत्र यस्मिन् परमेश्वरे सुप्तः। एष सुप्ताधारः पुरुषः परमात्मा विज्ञानमयः सम्यग् ज्ञानस्वरूपः य एषः प्रसिद्धो विज्ञानमयः पुरुषः। एषः तदा सुप्तिसमये काभूत् कुत्र स्थितः एतत् एतस्मिन् प्रबोधकाले। कुत आगादिति योजना। तत् सुप्तकालीनं परमात्मावासस्थानं तदागमनावधिं च गार्ग्यो न मेने ॥ १६ ॥

एवमप्रतिबुद्ध्यमानं प्रश्नकर्ता अजातशत्रुरुवाच। यत्रैष एतत्सुप्तोऽभूत् इत्याद्यनुवादः। य एष विज्ञानमयः पुरुषः परमात्मा। तदा सुप्तिकाले। एषां प्राणानामिन्द्रियाणाम्। विज्ञानं विज्ञानजननशक्तिम्। विज्ञानेन विज्ञानपूर्वकं आदाय। एष अन्तर्हृदये हृदयस्यान्तराकाशोऽस्ति तस्मिन् शते। य एषोऽन्तर्हृदय आकाश इत्यादिनैवोत्तरस्य जातत्वादेषां प्राणानामित्यादिकं व्यर्थमिति चेत्। न। यतः प्रकृतसुप्तिस्वरूपनिरूपणार्थं तदुक्तमिति भावेनाऽह– **तानीति** ॥ विज्ञानमयः पुरुषः परमात्मा। तानि विज्ञानजननशक्तिमन्ति इन्द्रियाणि। यदा गृह्णाति अथ तदा एष चासौ पुरुषश्चैतत्पुरुषः जीवः। यद्वा एतत् एतस्मिन् परमात्मनि शरीरे वा पुरुषः स्वपिति नाम। तानि

गृह्णातीत्युक्तं विवृणोति– **तद्गृहीत एवेति** ।। प्राणो घ्राणेन्द्रियं त्वगिन्द्रियं च । एवं काभूदित्यस्य परिहारोक्तौ कुत आगादित्यस्य परिहारः तत एवागादिति सुज्ञान एवेति पृथङ् नोच्यते ।। १७ ।।

स्वहृदिस्थस्य स्वस्मिन् विशेषसम्बन्धप्रदर्शनार्थमेव स्वप्नावस्थाप्रवर्तकत्वमप्याह– **स इति** ।। स परमात्मा यत्र यदा एतदेतस्मिंच्छरीरे स्वप्नया नाड्या चरति जीवं चारयति च । परमात्मा नाड्या कुतश्चरतीत्यत आह– **ते हेति** ।। ह यस्मात् । ते नाडीविशेषाः । अस्य परमात्मनो लोकाः । तस्मात्तया चरतीति सम्बन्धः । जीवेश्वरयोरुभयोरपि स्वप्नावस्थागतत्वे को विशेषस्तयोरित्यतस्तदा जीवव्यापारं तावदाह– **तदुतेवेति** ।। तत् तदा महाराज इव भवति तद्वदात्मानं पश्यति । महाब्राह्मण इव भवतीति सम्बन्धः । किं बहुना यदुच्चं गजादि यच्चावचं श्वमार्जारादि तद्वदात्मानं निगच्छति पश्यति । उतशब्दाः परस्परसमुच्चये । एवं जीवस्वरूपमुक्त्वा परमात्मस्वरूपं सदृष्टान्तमाह– **स इति** ।। जनपदान् देशान् गृहीत्वा स्ववशे कृत्वा एष परमात्मा । एतत्प्राणान् एतस्य जीवस्य । मनोव्यतिरिक्तेन्द्रियाणि । स्वे स्वाधीने शरीरे ।। १८ ।।

य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इत्युक्तं तत्र विशेषं वक्तुमाह– **अथेति** ।। प्रागुक्तसुप्तिस्वरूपं स्मारयन् यदा सुषुप्तो भवतीत्युक्तं विवृणोति– **यदेति** ।। यदा जीवः कस्यचन किञ्चन । न वेद तदा याः जीवस्य सुखहेतुत्वेन परमात्मना निहितत्वेन वा हिता नाम । द्वाभ्यां अधिका सप्ततिः द्वासप्ततिः सहस्राणि नाड्यः । हृदयात् हृदयमारभ्य वर्तमानं पुरीततं शिरःपर्यन्तं शरीरे व्याप्तम् । सुषुम्नाख्यनाडीविशेषम् । अभि परितः । प्रतिष्ठन्ते । ताभिर्नाडीभिः प्रत्यवसृप्य चरित्वा पुरीतति सुषुम्नाख्यनाडीविशेषे शेते परमात्मा । सदृष्टान्तं सुषुप्तिस्थितिप्रकारमाह– **स यथेति** ।। वक्ष्यमाणो दृष्टान्तो यथा कुमारो रुद्रः महाराजो वायुः । महाब्राह्मणो ब्रह्मा । आनन्दस्याऽनन्दरूपस्य परमात्मनोऽतिघ्नीं समीपं गत्वा शयीत सुखमासीत

एवमेवैष जीवः एतदेतस्मिन् सुषुम्नासंस्थिते परमात्मनि । शेते सुखमास्ते ॥ १९ ॥

न केवलं सुप्तप्राप्यत्वं परमात्मनः किन्तु तदुत्थानहेतुत्वं चेति भावेन हृद्गतस्य परमात्मनो माहात्म्यं सदृष्टान्तमाह– **स यथोर्णनाभिरिति** ॥ अत्रोर्णनाभिशब्देन तदुपभुक्तमन्नं ग्राह्यम् । तन्तुना तन्तुरूपेण । ऊर्णनाभेः व्युच्चरेत् उद्गच्छेत् । यथा वा क्षुद्राः विष्फुलिङ्गाः अग्नेर्व्युच्चरन्ति । एवमेवास्माद् विज्ञानमयादात्मनः परमात्मनः । सर्वे प्राणाः इन्द्रियाणि । सर्वे लोका भूरादयः । सर्वे देवाः चतुर्मुखादयः सर्वाणि तदन्यानि भूतानि प्राणिनो व्युच्चरन्ति उत्पद्यन्ते । उपलक्षणमेतत् । नश्यन्तीत्याद्यपि ग्राह्यम् । अन्तर्यामिणो गोप्यं नामधेयमाह– **तस्येति** ॥ तस्य हृद्गतस्य परमात्मनः सत्यस्य सत्यमिति उपनिषद्रहस्यं नाम तद् व्याचष्टे– **प्राणा इति** ॥ प्राणन्तीति प्राणाः इन्द्रियलोकदेवभूतानि । तेषामेष परमात्मा सद्भावमुत्पत्तिं यापयति इति सत्य इति ॥ २० ॥

इति अजातशत्रुब्राह्मणम् ॥ २ ॥

**उपनिषत्——**

## अथ शिशुब्राह्मणम्

[श्री-श्रीप्राणनाथोपासनया इन्द्रियजयः]

**यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणध्ययं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदं प्रत्याधानं प्राणः स्थूणा अन्नं दाम ॥ १ ॥**

**भाष्यम्——**

आधानमवस्थानं सूक्ष्मशरीरम् । प्रत्याधानं वितानं स्थूलशरीरम् । प्राणो नारायणः स्थूणा ।

'वायुर्गोवत्सरूपेण सर्वप्राणिषु संस्थितः ।
सूक्ष्मदेहो गृहं तस्य वितानं स्थूल उच्यते ॥

**अन्नं दामात्मकं तस्य स्थूणा तु भगवान् हरिः ।**
**ध्यायत्येवं हि यो वायुं श्रोत्रादीन् मनसा सह ॥**
**बुद्धिं च सप्तशत्रून् स विषयेष्वभिधावतः ।**
**असुरान् सन्निरुध्यैव वेत्ति नारायणं परम् ॥**

**टिप्पणी—**

**अथ भाष्यार्थः**

इन्द्रियजयाभावे विद्या न सिद्ध्यतीति भावेन काञ्चन विद्यामाह– **यो ह वा इत्यादिना** ॥ यद्वा अथेममेव नाऽप्नोद् योऽयं मध्यमः प्राणः इत्युक्तप्राणस्य महिमान्तरमाह– **यो ह वा इति** ॥ इदमेवाऽधानं इदमेव प्रत्याधानमिति श्रुतावाधानप्रत्याधानशब्दौ व्याख्यातौ । तत्राप्रतीतेराधानप्रत्याधानेदंशब्दार्थानाह– **आधानमिति** ॥ अवस्थीयते अस्मिन्नित्यवस्थानं गृहम् । वितानं गृहाश्रयभूतस्थलविस्तारः । सूक्ष्मशरीरं स्थूलशरीरमितीदंशब्दद्वयार्थकथनम् । प्राणशब्दस्य मध्यमप्राणपरत्वे स्वस्य स्वस्थूणात्वायोग इत्यतस्तद् व्याचष्टे– **प्राण इति** ॥ स्थूणा दामबन्धनस्तम्भ इत्यर्थः । समग्रब्राह्मणं प्रमाणेन व्याचष्टे– **वायुरित्यादिना** ॥ अयं वाव शिशुरिति वाक्यं व्याचष्टे– **वायुरिति** ॥ पुरुषरूपस्य वायोः दामस्थूणाद्यनपेक्षणाद् गोवत्सरूपेणेत्युक्तम् । शिशुशब्दार्थ-कथनं वत्सरूपेणेति । तस्येदमेवाधानं इदमेव प्रत्याधानमिति वाक्यं व्याचष्टे– **सूक्ष्मदेह इति** ॥ जीवस्येति शेषः । स्थूलदेह इत्यनुवर्तते । अन्नं दामेति वाक्यं व्याचष्टे– **अन्नमिति** ॥ अन्नं श्रीः 'अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा । साऽन्नमित्युच्यते' (गी.भा. २-२५) इत्युक्तेः । प्राणः स्थूणेति वाक्यं व्याचष्टे– **स्थूणेति** ॥ यो ह वा इत्यादि अवरुणद्धीत्यन्तं वाक्यं व्याचष्टे– **ध्यायत्येवमिति** ॥ भ्रातृव्यानित्यस्यार्थः शत्रूनिति । द्विषत इत्यस्यार्थः विषयेष्वभिधावत इति । स्वानभिमतविषयाभिधावनहेतुत्वादित्यर्थः । असुराञ्श्रोत्राद्यभिमानिनः इन्द्रियजयस्य स्वतःपुरुषार्थत्वाभावादाह– **वेत्तीति** ॥ १ ॥

उपनिषत्—

[दक्षिणाक्षिस्थः प्राणः]

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षँल्लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनिका तयाऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥**

भाष्यम्—

दक्षिणाक्षिस्थितं वायुं सप्तदेवा उपासते।
अक्षीणज्ञानमनसः सदाशिवपुरःसराः॥
उपास्यमानं तैर्देवैर्मोक्षार्थं वायुमीश्वरम्।
स्थूणया विष्णुना सार्धं यो विद्यात्सोऽन्नमश्नुते ॥
अक्षीणमेव मुक्तः सन् सर्वदुःखविवर्जितः।

टिप्पणी—

तमेताः सप्ताक्षितयः इत्येतद् व्याचष्टे– **दक्षिणाक्षिस्थितमिति** ॥ तद्या इमा अक्षँल्लोहिन्य इति वायूपासकरुद्रादीनां चक्षुःप्रदेशनिष्ठत्वोक्त्योपास्यस्यापि वायोः चक्षुःस्थितत्वमर्थलब्धमिति भावेनैतदुक्तं स्वरूपेणाक्षिस्थित्वं सर्वसाधारणमित्यतो व्याचष्टे– **अक्षीणेति** ॥ उपासनायां तदक्षयस्यैवोपयोगादिति भावः। नास्यान्नं क्षीयते य एवं वेदेति वाक्यं ऐहिकमात्रफलपरत्वप्रतीतिनिवारणाय व्याचष्टे– **उपास्यमानमिति** ॥ मोक्षार्थं आनन्दातिशयार्थम्। 'तमेवं विद्वान्' इति श्रुतिविरोधपरिहारायोक्तं स्थूणया विष्णुना सार्धमिति ॥ २ ॥

उपनिषत्—

**तदेष श्लोको भवति अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपं तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा**

**संविदानेत्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूप-मिति प्राणा वै यशो विश्वरूपं प्राणानेव तदाह तस्याऽऽसत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ता ॥ ३ ॥**

**भाष्यम्—**

**विश्वरूपं यशश्चेति नाम्ना विष्णू रमा तथा ॥**
**वायुश्च संस्थिता नित्यं सर्वेषां दक्षिणाक्षिगाः ।**
**पूर्णत्वाद् विश्वतो विष्णो रमायाः स्त्रीषु पूर्णतः ॥**
**वायोर्जीवेषु पूर्णत्वाद् यशोज्ञानसुखात्मकाः ।**
**प्राणाश्चैते प्रणेतृत्वादृषयो रुद्रपूर्वकाः ॥**

**टिप्पणी—**

तस्मिन् यशो निहितं विश्वरूपमिति मन्त्रं यशआदिशब्दानां प्रसिद्धार्थपरत्व-प्रतीतिं निवारयन् व्याचष्टे— **विश्वरूपमिति** ॥ सर्वेषां शिरसीति शेषः । ननु पूर्वं तमेताः सप्ताक्षितय इति वायोर्दक्षिणाक्षिस्थितत्वमित्युक्तं तेनैव तत्स्थूणा-भूतविष्णोस्तद्धामरूपरमाया अपि दक्षिणाक्षिस्थितत्वमुक्तप्रायमेव । तथाच विष्णुरमावायूनां दक्षिणाक्षिस्थितत्वे शिरःस्थितत्वप्रतिपादकमन्त्रोदाहरणं असङ्गतमित्याशंकां परिहरति— **सर्वेषां दक्षिणाक्षिगाः सन्तः शिरसि संस्थिता इति** ॥ अनेन श्रुतौ तस्मिन्नित्यस्य दक्षिणाक्षिरूपशिरोभागविशेष इत्यर्थ इत्युक्तं भवति । विष्ण्वादिषु विश्वरूपशब्दं निर्वक्ति— **पूर्णत्वादिति** ॥ गुणैरिति शेषः । निरुपचरितपूर्णताज्ञापनाय पूर्णत्वादित्येवोक्तम् । स्त्रीषु जीवेष्विति निर्धारणसप्तम्यौ । स्त्रीशब्दः परतन्त्रचेतनोपलक्षकः । तेष्वेव यशःशब्दं निर्वक्ति— **यश इति** ॥ एत इति वक्ष्यमाणमत्रापि सम्बद्ध्यते । यतो ज्ञानसुखात्मकाः अतो यश इति उच्यन्त इत्यर्थः । ननु प्राणा

वै यशो विश्वरूपमिति श्रोत्रादिप्राणानां यशो विश्वरूपत्वोक्तेः कथं विष्ण्वादिपरत्वेन व्याख्यानमित्यतः प्राणशब्दमपि विष्ण्वादिषु निर्वक्ति– **प्राणाश्चेति** ॥ प्राणा वा ऋषयः इति वाक्यगतऋषिशब्दस्य प्रसिद्धऋषिपरत्वप्रतीतिनिरासाय प्राणशब्दनिर्वचनपूर्वकं तदभिधेयमाह– **प्राणाश्चेति** ॥ एते रुद्रपूर्वकाः । प्रणेतृत्वात्प्राणाश्च ॥ ३ ॥

उपनिषत्——

**इमावेव गौतमभरद्वाजावयमेव गौतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव हि विश्वामित्रोऽयं जमदग्निरिमा-वेव वसिष्ठकश्यपावयवमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्रिर्ह वै नामैतद् यदत्रिरिति सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥**

इति शिशुब्राह्मणम् ॥ २ ॥

भाष्यम्——

**गौतमो नाम रुद्रस्तु सर्वज्ञत्वात् प्रकीर्तितः ।**
**भरद्वाजस्तु पर्जन्यो वाजमन्नं भरेद् यतः ॥**
**वृष्ट्यैव विश्वामित्राख्य आदित्यो यत्प्रकाशनात् ।**
**विश्वं विज्ञापयन्नित्यमग्निस्तु जमदग्निकः ॥**
**जातं मितं चात्ति यस्माद् वसिष्ठाख्यस्तु वासवः ।**
**वसतामुत्तमो यस्मात् पृथ्वी कश्यपनामिका ॥**
**मेघवृष्टं पिबेद्यत्कं शयानैव हि सा सदा ।**
**द्यौरत्रिरिति सम्प्रोक्ता तत्स्थैर्हि हुतमद्यते ॥**
**श्रोत्रदिङ्नासिकावाक्षुदक्षिणाक्षिषु संस्थिताः ।**
**द्वितीयेन तु रूपेण देवा एते शिवादयः ॥**

**एवमेषां तु नामानि वेत्ति यः सर्वभुग् भवेत् ।**
**सरस्वत्यष्टमी चैव वाचि संस्था विशेषतः ॥**
**उपास्ते वायुमेवैकं सस्थूणं ब्रह्मवेदिता ।**
**ब्रह्मनामा सदा वायुरेनां वेत्ति विशेषतः ॥**
**इति तां वेद यो विद्वान् सर्वात्ता स भविष्यति '॥ इति नारायणीये ॥**

**इति शिशुब्राह्मणम्**

**टिप्पणी——**

अयमेव गौतम इत्यादि वागेवात्रिरित्यन्तानि वाक्यानि रुद्रादिषु गौतमादि-शब्दनिर्वचनपूर्वकं व्याचष्टे– **गौतम इत्यादिना** ॥ रुद्रः पर्जन्य इत्यादिकं अयमिति श्रौतेदंशब्दार्थकथनम् । ताभिरेनं रुद्र इति तेषामेव प्रसक्तत्वादिति भावः । अतिशयिता गौर्ज्ञानं गोतमा तस्या अयमाश्रयो गौतम इति निर्वचनमभिप्रेत्य तत्तात्पर्यमुक्तम् ॥ **सर्वज्ञत्वादिति** ॥ वाजमित्यनेन भरत्पूर्यमाणमन्नं येनेति विग्रह उक्तो भवति । प्रकाशनाद् विज्ञापयेदिति सम्बन्धः । विश्वशब्दोपपदादन्तर्णीतण्यर्थात् आङुपसृष्टात् माङ्मान इत्यस्मात् कर्तरि कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे गत्यर्थादमतेरित्रप्रत्यये वा विश्वामित्र इति रूपसिद्धिरिति ज्ञेयम् ॥ **जातमिति** ॥ 'अन्येभ्यो दृश्यते' इति जनेः कर्मणि डप्रत्यये जायत इति जं निर्वचनत्वान्मकारगतेकारस्याकारे तकारगताकारलोपे तकारस्य दत्वे मितं परिमितं ज्ञातं वाम मद् । अत्तेः कर्तरि निप्रत्यये दस्य गत्वे अत्तीत्यग्निः ॥ **वसतामिति** ॥ वसतीति वसन् । तत इष्ठन्प्रत्यये टेरिति टिलोपे वसिष्ठ इति रूपम् । अगुणवचनत्वेऽपि इष्ठन्प्रत्ययः प्रयोगवशाद् ज्ञातव्यः ॥ **मेघेति** ॥ कमुदकं श्या शयाना पिबतीति कश्यपः । अप्यक्षरसाम्यान्निर्ब्रूयादिति शयानेत्यस्य श्यभावः । पा पान इत्यतः कप्रत्यय इति भावः । वाक्शब्दार्थो द्यौरिति उमेत्यर्थः । हि यस्मात्तस्थैर्द्युस्थैर्हुतमनयाऽद्यते तस्मादित्यर्थः । अनेन वाचा ह्यन्नमद्यत इत्येतद्व्याख्यातं भवति । अद भक्षण इत्यस्मात्कर्तरि औणादिके त्रिप्रत्यये

अत्रिरिति रूपमिति भावः । नन्वध्यात्मं शिवादीनां मनआदिषु स्थित्युक्तेः कथं दक्षिणाक्षिषु संस्थिता इति योजना । सर्वस्यात्ता भवति । श्रोत्रदिङ्नासिकावाक्चक्षुस्संस्थिता एते शिवादयो देवा द्वितीयेन रूपेण दक्षिणाक्षिषु संस्थिता इति योजना । सर्वस्यात्ता भवति सर्वमस्यान्नं भवति । य एवं वेदेति वाक्यं व्याचष्टे– **एवमिति** ॥ तमेताः सप्ताक्षितय इत्यादिस्वोक्तार्थ-प्रतिपादकमन्त्रव्याख्यानरूपं ब्राह्मणं प्रकरणशुद्ध्या व्याख्यायेदानीं श्रुत्यभिप्रेतार्थप्रतिपादकमन्त्रव्याख्यानरूपं वाग्घ्यष्टमी ब्रह्मणा संवित्तेति वाक्यं व्याचष्टे– **सरस्वतीति** ॥ भारतीत्यर्थः । उपास्त इत्यनेन वागष्टमीति मन्त्रे आसत इत्येतद्वचनव्यत्यासेनात्रापि सम्बद्ध्यत इत्युक्तं भवति । वागष्टमीत्यन्ते उक्तत्वात्तस्या रुद्राद्युपासकत्वप्रतीतिनिवारणायाऽऽह– **वायुमेवैकमिति** ॥ ब्रह्मणा संवित्तेत्यस्यार्थो ब्रह्म वेदितेति । तदेव विवृणोति– **ब्रह्मनामेति** ॥ विशेषतो रुद्राद्यपेक्षया सर्वस्यात्ता भवतीति वाक्यमेतच्छेषत्वेनापि व्याचष्टे– **इतीति** ॥ ४ ॥

**अथ खण्डार्थः**

साधानं सप्रत्याधानं सस्थूणं सदामं शिशुं उपासीतेति भावेन तथोपास्तौ फलमाह– **यो ह वा इति** ॥ योऽधिकारी साधानं सप्रत्याधानं सस्थूणं सदामं शिशुं वेदोपास्ते सः । द्विषतः विषयाभिधावानहेतून् अत एव भ्रातृव्यान् शत्रून् सप्तमनोबुद्धिसहितश्रोत्रादिज्ञानेन्द्रियरूपान् तदभिमान्य-सुरांश्चावरुणद्धि जितेन्द्रियो भवतीति यावत् । कः शिशुः किमाधानादिकमित्यत आह– **अयं वावेति** ॥ योऽयं प्रागुक्तः सर्वप्राणिषु संस्थितो मध्यमः प्राणो वायुः अयमेव शिशुः गोवत्सरूपः । तस्य सर्वप्राणिगतगोवत्सरूपवायोः । इदमेव प्रमाणप्रसिद्धं जीवसूक्ष्मशरीरमेवाधानम् । आधीयते अस्मिन्नित्याधानं अवस्थानं गृहमित्यर्थः । इदं जीवस्थूलशरीरमेव प्रत्याधानं वितानं गृहाश्रय-प्रदेशविस्तारः । प्राणो नारायणः स्थूणा वत्सबन्धनस्तम्भः । अन्नं श्रीः दामबन्धकरज्जुः । तथाच जीवस्थूलशरीराख्यप्रदेशविस्तारस्थतल्लिङ्गशरीररूपगृहे

नारायणाख्यस्थूणायामन्नाख्यश्रीरूपदाम्ना बद्धं गोवत्सरूपवायुं यो वेदेति पूर्ववाक्याभिप्राय इति भावः । अक्षिस्थवायूपास्तौ रुचिजननार्थं परकृति-रूपार्थवादमाह– **तमिति** ।। दक्षिणाक्षिस्थितं वायुं अक्षितयः अक्षीणज्ञानमनसः एताः वक्ष्यमाणाः रुद्राद्याः सप्तदेवता उपतिष्ठन्ते । कः किमधिष्ठायोपास्त इत्यत आह– **तद्या इति** ।। तत्तत्र सप्तसु मध्ये रुद्रः या इमाः प्रसिद्धाः अक्षन्नक्षिणि लोहिन्यो राजयो रेखाः ताभिरधिष्ठानभूताभिः ताः अधिष्ठायेति यावत् । एनमक्षिस्थं वायुम् । अन्वायत्तः अनुगत उपतिष्ठत इति यावत् । अथान्यत् अक्षन्याः आपो धूमादिसंयोगेनाभिव्यज्यमानाः ताभिः पर्जन्योऽन्वायत्तः । या कनीनिका चक्षुषि कृष्णवर्णवर्तुलमण्डलमध्यस्था तयाऽदित्योऽन्वायत्तः । यत्कृष्णं चक्षुषि तेनाग्निरन्वायत्तः । यच्छुक्लं तेनेन्द्रोऽन्वायत्तः । अधरया वर्तन्या चक्षुर्गतोदकादिनिस्सरणमार्गेणैनं वायुम् । पृथिव्यन्वायत्ता द्यौरुत्तरया वर्तन्या एनमन्वायत्ता । एवं वायुविदः फलमाह– **नास्येति** ।। योऽधिकारी एवं मोक्षार्थं रुद्राद्युपास्यमानमक्षिस्थं वायुं स्थूणाभूतविष्णुना सह वेद । अस्य वेत्तुः अन्नं न क्षीयते मुक्तः सन् अक्षयमेवान्नमश्नुत इत्यर्थः ।। २ ।।

दक्षिणाक्षिस्थं वायुं रुद्राद्या उपासत इत्युक्तार्थे मन्त्रमुदाहरति– **तदेष इति** ।। तत्तत्र दक्षिणाक्षिस्थवायोः रुद्राद्युपास्यत्वे । एष वक्ष्यमाणश्लोको भवति मन्त्रं पादश अनूद्याऽप्रतीतेर्व्याचष्टे– **अर्वाग्बिल इति** ।। इति मन्त्रभागे यदुक्तं तत् इदं प्रतीयमानं शिरः । कुतः हि यस्मात् एष शिरोलक्षणश्चमसः । अर्वाग्बिलः बिलं मुखादि तस्य बुध्नभागापेक्षयाऽर्वाक् स्थितत्वात् ऊर्ध्वबुध्नः । बुध्नाकारस्य शिरसः उपरिभागे दृश्यमानत्वात् तस्मात् शिर एवोक्तलक्षणश्चमसः । चमस विवक्षया एष इति पुल्लिङ्गः । दक्षिणान्नं वनुते यो न आत्मेतिवत् । 'तस्मिन् यशो निहितं विश्वरूपम्' इति । प्राणान् इति विष्णुरमावायूनाह । कुतः यतो दक्षिणाक्षिरूपशिरोभागस्थितं यशो ज्ञानसुखरूपत्वाद्यशःशब्द-वाच्याः । विष्णोर्निरुपचरितपूर्णत्वात् । रमायाः परतन्त्रचेतनेषु वायोस्तु जीवेषु पूर्णत्वात् विश्वरूपशब्दवाच्याः । प्राणा वै प्रणेतारो वै । तस्यासत

ऋषयः सप्ततीर इत्येतत्प्राणान् गौतमादीन् सप्तर्षीनाह । कुतः यतः ऋषयः गौतमाद्याः सप्तप्राणा स्वस्वयोग्यप्रणेतारो वै । तथाच सप्तऋषयः गौतमाद्या-स्तस्याक्ष्णः तीरे लोहितरेखादिरूपस्थानविशेषे । तस्य कर्मणि षष्ठी तं वायुम् । आसते उपासते । इति मन्त्रार्थ इति भावः । न केवलं सप्तऋष्युपास्यत्वमक्षिस्थवायोः किन्तु सरस्वत्युपास्यत्वमपीति भावेनोदाहृतमन्त्र-भागमनूद्य व्याचष्टे– **वागष्टमीति** ॥ वाक् सरस्वती अष्टमी । हीति प्रसिद्धिद्योतकहिशब्देन व्याख्यातम् । तं वायुमास्ते उपास्त इत्यर्थः । ब्रह्मणा ब्रह्मनामकेन वायुना संवित्ता सम्यक् ज्ञातेत्यर्थः ॥ ३ ॥

ननु अक्षिस्थवायो रुद्राद्युपास्यत्वमित्युक्तार्थे कथं सप्तऋष्युपास्यत्वप्रतिपादक-मन्त्रोदाहरणमित्यतो मन्त्रेऽपि ऋषिशब्देन रुद्रादय एव विवक्षिता इति भावेन ऋषिवाचकगौतमादिशब्दान् रुद्रादिपरतया व्याचष्टे– **इमावेवेति** ॥ तदेव विवृणोति– **अयमेवेति** ॥ अयं पूर्वोक्तो रुद्रो गौतमः अतिशयितज्ञानवत्त्वात् । अयं पर्जन्यो भरद्वाजः वृष्ट्या भरत् पूर्यमाणं वाजमन्नं येनेति व्युत्पत्तेः । पूर्ववत् सङ्गृह्याह– **इमावेवेति** ॥ तद् विशदयति– **अयमेवेति** ॥ अयमादित्यो विश्वामित्रः स्वप्रकाशेन विश्वज्ञापकत्वात् । अयमग्निर्जमदग्निः जं जातं मत् मितमत्तीति व्युत्पत्तेः । अयमिन्द्रो वसिष्ठः वसतामुत्तमत्वात् । अयं पृथिवीरूपः कश्यपः कमुदकं शयानैव पिबतीति व्युत्पत्तेः । वाक् वागभिमानिनी द्यौरुमाऽत्रिः । हि यस्माद् द्यौरित्युक्तया वाचान्नं द्युस्थैर्हुतमद्यते । तर्ह्यत्तीत्यत्तिरिति स्यात् नत्वत्रिरित्यत आह– **अत्रिर्हीति** ॥ अत्रिरिति यन्नाम एतत् अत्तिरिति ह वै प्रसिद्धं उभयोरप्येकार्थत्वमिति भावः । वायूपासकरुद्रादीनामुक्तनिमित्तेन गौतमादिशब्दवाच्यत्वं दक्षिणाक्षिस्थवायोः भारत्युपास्यत्वं च जानतः फलमाह– **सर्वस्येति** ॥ सर्वस्यात्ता भवति अदनक्रियाशक्तिमान् । अन्नं विना शक्तिमात्रं शक्तिं विनान्नं वा न पुरुषार्थ इत्युभयमुक्तम् ॥ ४ ॥

इति शिशुब्राह्मणम् ॥ २ ॥

उपनिषत्—

## अथ मूर्तामूर्तब्रह्मणम्

[भगवान् मूर्तामूर्तविलक्षणः]

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यश्च ॥ १ ॥**

भाष्यम्—

**विशरणावसादनयुक्तं सत्। ततं सर्वज्ञं च त्यम्।**

टिप्पणी—

पूर्वोक्तविद्यायां सस्थूणं सदामं शिशुं वेदेत्युक्त्या साम्यभ्रमनिरासाय स्थूणाशब्दोक्तभगवतो मूर्तामूर्तवैलक्षण्योक्त्याऽमूर्तसारत्वोक्त्या च अन्नशिशुशब्दोक्तरमावायूत्तमत्वमाह अनेन ब्राह्मणेन । नन्वमूर्तस्यापि सत्वात्कथमेतत्सदिति मूर्तस्यैव सत्त्वमुच्यत इत्यतस्तस्यार्थमाह– **विशरणेति** ॥ विशरणं शैथिल्यं अव्याप्तत्वमिति यावत् । अवसादनं प्रलयादौ ज्ञानविपरिलोपः । सदेः क्विबन्तस्य रूपमेतत्। वाय्वन्तरिक्षयोश्च नैतदस्तीति भावः। अप्रतीतेस्त्त्यमित्येतद् व्याचष्टे– **ततमिति** ॥ ततत्वात् तत् । ज्ञानरूपत्वात् यम् । तनु विस्तार इत्यस्मात् डप्रत्यये निर्वचनत्वेन प्रत्ययाकारलोपे त् । गत्यर्थाद् या प्रापण इत्यस्मात् कप्रत्यये 'आतो लोप' इत्याकारलोपे यम् । त् च तत् य् च त्यमिति रूपसिद्धिरिति भावः ॥ १ ॥

उपनिषत्—

**तदेतन्मूर्तं यदन्यद् वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत् स्थितमेतत् सत् तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥**

**भाष्यम्—**

**प्रलयेऽपि भगवदन्तरेव रता अक्षिताऽवस्थितेति श्रीरन्तरिक्षम् । 'य एष तपति' इत्यादित्यस्थो हिरण्यगर्भ उच्यते ।**

**टिप्पणी—**

नन्वेवं वायुरन्तरिक्षं चामूर्तमिति अन्तरिक्षशब्दोक्ताकाशस्य कथं त्यमित्येत-द्विशेषणमित्यतोऽत्रान्तरिक्षशब्देन रमैवोच्यत इति भावेन तं शब्दं तत्र निर्वक्ति— **प्रलयेऽपीति** ।। न केवलमिदानीं भगवता रता । किन्तु प्रलयेऽपि कथं भगवदन्तरेव प्रलयेऽपीत्येतदक्षितेत्यत्रापि सम्बद्ध्यते । अन्तशब्दोपपदाद् रमतेर्डिप्रत्यये क्षि निवासगत्योरित्यस्माड्डप्रत्यये चान्तरिक्षमिति रूपसिद्धिरिति भावः । अन्तशब्दोपपदात् रमतेर्डप्रत्यये प्रत्ययाकारलोपे अन्तर् । न विद्यते क्षं क्षयो यस्य तत् अक्षम् । तृतीयोऽतिशये इत्यकारस्येकारे इक्षं अन्तर् च इक्षं चेति अन्तरिक्षमिति वा बोध्यम् । य एष तपतीत्युक्तो मूर्तरसः सूर्यमण्डलमिति प्रतीतिं वारयन्नाह— **य इति** ।। २ ।।

**उपनिषत्—**

**अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद् यद् एतत् त्यं तस्यै-तस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम् ।। ३ ।।**

**भाष्यम्—**

**'मण्डले पुरुषः' इति भगवान् विष्णुः ।**

**टिप्पणी—**

मण्डले पुरुष इत्युक्तोऽमूर्तरसः आदित्य इति प्रतीतिं निवारयन्नाह— **मण्डल इति** ।।

उपनिषत्—

अथाध्यात्ममिदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥ अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद् यदेतत् त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य ह्येष रसः ॥ ५ ॥

भाष्यम्—

एवमेव चक्षुर्दक्षिणेऽक्षन् पुरुषश्च ।

टिप्पणी—

अध्यात्मं मूर्तरसत्वं चक्षुषः अमूर्तरसत्वं दक्षिणाक्षिगतपुरुषस्य सूर्यस्योच्यत इति प्रतीतिनिरासाय कृतं व्याख्यानं तत्राप्यतिदिशति— **एवमेवेति** ॥ चक्षुर्हिरण्यगर्भः । दक्षिणेऽक्षन् पुरुषो भगवानित्यर्थः ॥ ५ ॥

उपनिषत्—

तस्य हैतस्य पुरुषस्य रूपं यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्र्यर्चिर्यथा पुण्डरीकं यथा सकृद् विद्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति नह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥

इति मूर्तामूर्तब्राह्मणम्

**भाष्यम्—**

**तस्यैवामूर्तरसस्य भगवतो नेति नेतीत्यादेशः। अतस्तस्मादमूर्तसारत्वादित्यर्थः। अथेत्यानन्तर्यार्थे। इति न इति नेति मूर्तामूर्तविलक्षण इत्यर्थः। उभयसादृश्यनिषेधार्थं द्विवारम्। इति नेति निषिध्यमानमप्येतस्मादन्यत्परं नास्ति एष एव परः। मूर्तामूर्तं त्वपरमेवैतदपेक्षया।**

**टिप्पणी—**

अथात आदेश इति मूर्तामूर्तरसयोर्हिरण्यगर्भभगवतोरुपदेशः क्रियत इति प्रतीतिं निवारयति– **तस्यैवेति**॥ अमूर्तरसस्यैवेत्यन्वयः। हिरण्यगर्भस्यामूर्तवायुसमत्वेन तद्वैलक्षण्याभावादिति भावः। नन्वथात इत्यतःशब्दस्य प्रकृतमूर्तामूर्तरसत्वादित्यर्थत्वेन हिरण्यगर्भस्याप्ययमादेश इति कथं तस्यैवायमादेश इत्युक्तमित्यत आह– **अत इति**॥ ननु यद्यमूर्तरसत्वादमूर्तसारस्य भगवतः उपदेशः क्रियते तर्हि प्रकरणस्यासमाप्तत्वात् प्रकरणान्तरारम्भार्थकोऽथशब्दो न स्यात् इत्यतस्तदर्थमाह– **अथेति**॥ वैलक्षण्यप्रतियोगिमूर्तामूर्तस्वरूपनिरूपणानन्तर्येऽर्थे वर्तत इत्यर्थः। नेति नेति इत्यत्रेतिशब्दस्यादेशप्रकारार्थत्वे एकस्येतिशब्दस्य वैय्यर्थ्यं प्रतियोग्यनुक्तिप्रसङ्गश्चेति भावेन तद् व्याचष्टे– **इति नेति**॥ नेति नेतीति वीप्सया मूर्तामूर्ताविद्याया तत्कार्यं सर्वनिषेधावधित्वेन तत्साक्षित्वेन ब्रह्म निर्दिष्टं भवतीति व्याख्यानमसदिति भावेन वीप्साप्रयोजनमाह– **उभयेति**॥ अर्थान्तरस्याप्रामाणिकत्वादिति भावः। ननु इति नेति नेति निषिद्ध्यमानत्वं मूर्तामूर्तयोरप्यस्ति। मूर्तस्यामूर्तविलक्षणत्वाद् अमूर्तस्य च मूर्तविलक्षणत्वात्। तथाच कथमयममूर्तसारस्य भगवत एवोपदेश इत्याशङ्कापरिहारार्थं तर्ह्येतस्मादिति वाक्यं प्रवृत्तमिति भावेन तद् व्याचष्टे– **इति नेति निषिद्ध्यमानमपीति**॥ यद्यपि इति नेति निषिद्ध्यमानं मूर्तममूर्तं वा एतस्मादमूर्तसारात् भगवतोऽन्यदास्ते। तथापि एतस्मात्परमुत्तमं नास्तीत्यर्थः। परनिषेधेन लब्धमर्थमाह– **एष एवेति**॥ यद्वा ननु इति नेति नेति मूर्तामूर्तवैलक्षण्यं भगवतो यथाभिधीयते। तथा मूर्तममूर्तं च इति नेति मूर्तामूर्तयोर्विष्णुवैलक्षण्यं

वक्तुं शक्यत एव। तद्वैलक्षण्यस्यापि तत्र सत्त्वात्। अतः कथमयं विष्णोरेवोपदेश इत्यतः प्रवृत्तं नहीति वाक्यं व्याचष्टे– **इतीति** ॥ यद्यपि इति नेति विष्णुवन्नेति निषिद्ध्यमानमेतस्माद्विष्णोरन्यत् मूर्तामूर्तलक्षणमस्ति। तथापि एतस्मात्परमुत्तमं नास्तीत्यर्थः। नन्वेतावताप्यादेशस्य साधारण्यशङ्का कथं निवृत्तेत्यभिप्रायमाह– **एष एवेति** ॥ विष्णोर्मूर्तामूर्तसादृश्यनिषेधे एष विष्णुरेव पर इति लभ्यते। पारतन्त्र्यादिना तत्सादृश्यनिषेधे स्वातन्त्र्यादेरेव लाभात्। मूर्तामूर्तयोस्तु विष्णुसादृश्यनिषेधे मूर्तामूर्तं विष्ण्वपेक्षया अपरमनुत्तममेवेति लभ्यते। स्वातन्त्र्यादिना तत्सादृश्यनिषेधे पारतन्त्र्यादिरूपाऽपरत्वस्यैव लाभादिति भावः।

**भाष्यम्—**

**मूर्तामूर्तमेवाध्यात्मं प्राणा इत्युच्यन्ते। ब्रह्मणो वायोश्चामूर्तत्वात्।**

**'मूर्तामूर्तमिदं रूपं ब्रह्मणः प्रतिमात्मकम्।**
**नैव स्वरूपमेतत्स्यात्तद्धि सर्वपरं सदा॥**
**श्रियो वायोर्विरिञ्चाच्च येऽन्ये मूर्ता हि ते स्मृताः।**
**मूरं पापं हि तेनाप्तं मूर्तमित्यभिधीयते॥**
**विशीर्णं चावसन्नं च तदेवातः सदुच्यते।**
**पराधीनगतित्वाच्च स्थितमित्यभिधीयते॥**
**तस्य सारो विरिञ्चस्तु तद्विरुद्धस्वभावकः।**
**मूर्ताद् विरुद्धरूपत्वाच्छ्रीर्वायुश्चाप्यमूर्तकौ॥**

**टिप्पणी—**

ननु सत्यस्य सत्यमित्येतन्मूर्तामूर्तं सत्यं तयोरेष सत्यमिति व्याख्येयं 'प्राणा वै सत्यम्' इति कथं व्याख्यायते असङ्गतत्वादिति अत आह– **मूर्तामूर्तमेवेति** ॥ नन्वेवं प्राणा वै सत्यं तेषामेष सत्यमित्यनेन विष्णोर्मूर्तामूर्तात्मकप्राणसत्यत्वलाभेऽपि हिरण्यगर्भसत्यत्वं न लभ्यते। तस्य मूर्तसारत्वेन मूर्तामूर्ता-

त्मकत्वाभावादित्यत आह– **ब्रह्मण इति** ।। वायुग्रहणं दृष्टान्तार्थम् । वायोरमूर्तत्वात्तदविशिष्टस्य ब्रह्मणश्चामूर्तत्वादिति योज्यम् । मूर्तामूर्तस्यैतदपेक्षयाऽपरत्वेऽपि मूर्तरसस्य ब्रह्मणः परत्वं स्यादित्यतो वाऽऽह– **ब्रह्मण इति** ।। मूर्तामूर्तोभयसादृश्यनिषेधार्थं द्विवारमित्यसत् । मूर्तरसब्रह्मसादृश्यनिषेधार्थं इति नेति पुनरपि वक्तव्यत्वादित्यतो वाऽऽह– **ब्रह्मण इति** ।। तथाच द्वितीयनिषेधेनैव मूर्तरससादृश्यमपि निषिद्धमिति भावः । समग्रं ब्राह्मणं प्रमाणेन व्याचष्टे– **मूर्तामूर्तमित्यादिना** ।। द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चेति वाक्ये मूर्तामूर्तयोर्ब्रह्मस्वरूपत्वमुच्यत इति प्रतीतिं निवारयन् व्याचष्टे– **मूर्तामूर्तमिति** ।। प्रतिमात्मकं रूपमित्यन्वयः । स्वरूपत्वमेव रूपशब्दार्थः किन्न स्यादित्यत आह– **नेति** ।। एतत् मूर्तामूर्ते । एतस्य ब्रह्मणः स्वरूपं न । कुतः हि यस्माद् ब्रह्म सदा सर्वपरं सर्वोत्तममित्यर्थः । ननु तदेतत् मूर्तं 'यदन्यद्वायोश्चान्तरिक्षाच्च' इति वायुरमाव्यतिरिक्तस्य मूर्तत्वोक्तिः कथम् । तथात्वे हिरण्यगर्भस्यापि मूर्तत्वप्राप्त्या तस्य मूर्तसारत्वोक्तिविरोधादित्यत आह– **श्रिय इति** ।। एतत्त्रिकव्यतिरिक्तपरतन्त्रचेतनस्यैव मूर्तत्वं कुत इत्यतो मूर्तशब्दं निर्वक्ति– **मूरमिति** ।। तेनोक्तत्रिकव्यतिरिक्तपरतन्त्रचेतनेन । तेन पापेन वा । एतत्सदिति वाक्यं व्याचष्टे– **विशीर्णमिति** ।। तदेव मूर्तमेव विशीर्णमवसन्नं च यतोऽतः सदित्युच्यत इत्यर्थः । ननु मूर्तस्य स्थितत्वं कथं तस्य चेतनत्वेनान्यत्र गन्तुं शक्तत्वादित्यतः एतत्स्थितमित्येतद् व्याचष्टे– **पराधीनेति** ।। विष्णुव्यतिरिक्तपुरुषाधीनगतत्वादित्यर्थः । तस्यैतस्येत्यादि य एष तपतीत्याद्युक्तोऽधिदैवतमध्यात्मं च मूर्तरसः क इत्यत आह– **तस्येति** ।। रसशब्दार्थः सार इति 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' (अ.को. २-३-१३) इति वचनात् । कुत इत्यत आह– **तद्विरुद्धेति** ।। अथामूर्तं वायुरन्तरिक्षं चेति वाक्यं अमूर्तपदार्थं वदन् व्याचष्टे– **मूर्तादिति** ।।

**भाष्यम्**—

> **सर्वज्ञौ च ततौ चैव नियतौ हरिणैव तौ ।**
> **तयोः सारस्तु भगवान् हरिर्नारायणः परः ।।**

**आदित्यमण्डले चैव चक्षुष्यपि च स स्थितः ।**
**तत्रैव संस्थितो ब्रह्मा मूर्तसारोऽपि तस्य च ।**
**विष्णुरेव परः सारस्तस्य रूपाण्यनेकधा ।**
**महारजनवासोवत् पाण्ड्वाविकवदेव च ।**
**विद्युत् पद्मेन्द्रगोपादिवह्निवत् सुखभास्वरः ॥**
**नैवासौ मूर्तवद्विष्णुर्न च मूर्तरसोपमः ।**
**नचामूर्तोपमो देवः स एव परमः सदा ॥**
**तस्यान्यदपरं सर्वं सत्यसत्यः स एकराट् ।**
**मूर्तामूर्तात्मकाः प्राणास्तेषां सत्यः स एव हि ॥ इति नारायणश्रुतौ ॥**

**प्रथमनिषेधेनैव मूर्तरससादृश्यमपि निषिद्धम् ॥**

**इति मूर्तामूर्तब्राह्मणम् ॥ ३ ॥**

**टिप्पणी——**

एतत् त्यमिति त्यशब्दार्थमाह– **सर्वज्ञौ ब्रेति** ॥ यदित्यस्यार्थमाह– **नियताविति** ॥ हरिव्यतिरिक्तपुरुषानियम्यावित्यर्थः । एतस्यामूर्तस्येत्यादि पुरुष इत्यन्तं वाक्यम् अधिदैवाध्यात्मप्रकरणगतं व्याचष्टे– **तयोरिति** ॥ श्रीवाय्वोः हरिरेवेति सम्बन्धः । चशब्दौ परस्परसमुच्चये । अधिदैवमध्यात्मं चेत्युभयोरपि तयोरित्यपिशब्दान्वयः । तस्य सारो विरिञ्च इत्युक्तं तत्र स्थलविशेषानुक्तेः श्रुतौ य एष तपतीति यच्चक्षुरिति तस्योक्तत्वाच्च तदाह– **तत्रैवेति** ॥ मूर्तसारोऽपि ब्रह्मा । तत्रैवामूर्तसारहर्यावासस्थान एवाऽदित्यमण्डले चक्षुषि च स्थित इत्यर्थः । नन्वेवं तर्हि हरिब्रह्मणोः साम्यापत्तिरित्यत आह– **तस्य चेति** ॥ तस्य हैतस्य पुरुषस्य रूपमित्येतद् व्याचष्टे– **तस्येति** ॥ यथा महारजनं वास इत्यादि व्याचष्टे– **महारजनवासोवदित्यादि** ॥ अवेरिदमाविकं ऊर्णादि पाण्डु ईषच्छुभ्रमाविकं पाण्ड्वाविकं तद्वदित्यर्थः । महारजनापेक्षया इन्द्रगोपस्यातिरिक्तत्वेन पृथगुक्तिः । इन्द्रगोपः कीटविशेषः । विष्णुरूपाणां प्राकृतत्वादिशङ्कापरिहारायोक्तम्– **सुखभास्वर इति** ॥ सर्वत्रापि सुखरूपत्वं

ज्ञातव्यम् । रौग्मं कृष्णमित्युक्तकृष्णरूपादिसङ्ग्रहायाऽदिपदम् । नेति नेतीति वाक्यं व्याचष्टे– **नैवेति** ॥ यद्यपि ब्रह्मणो वायोश्चामूर्तत्वादित्युक्तरीत्या नचामूर्तोपम इत्यनेनैव मूर्तरसवैलक्षण्यं सिद्ध्यति । तथाऽप्यङ्गीकारवादोऽयमिति ज्ञातव्यम् । नह्येतस्मादित्यस्याभिप्रायमाह– **स एवेति** ॥ अथ नामधेयं सत्यस्य सत्यमित्यस्यार्थमाह– **सत्यसत्य इति** ॥ 'प्राणा वै सत्यं तेषामेष सत्यम्' इत्येतद् व्याचष्टे– **मूर्तेति** ॥ ननु मूर्तमूर्तरसामूर्तसाद्द्वयनिषेधार्थं श्रुतौ नेतीति त्रिवारं स्यादित्यत आह– **प्रथमेति** ॥ प्रथमनिषेधेनैव नतु द्वितीयनिषेधेन अङ्गीकारवादपक्षे मूर्तपरामर्शकेतिशब्देनैव तद्रसपरामर्शस्य योग्यत्वात्प्रथमनिषेधप्रतियोग्युपस्थापकेतिशब्देन मूर्तं मूर्तरसश्चेत्युभयं विवक्षित-मिति भावः ॥ ६ ॥

**अथ खण्डार्थः**

ब्रह्मणः परमात्मनो मूर्तममूर्तं चेति द्वे रूपे प्रतिमे । वावेति प्रसिद्ध्यर्थः । मूर्तामूर्तयोर्विशेषणानि सङ्कलय्याह– **मर्त्यं चेति** ॥ १ ॥

किं तन्मूर्तमित्यत आह– **तदेतदिति** ॥ वायोश्चान्तरिक्षात् श्रियश्च । यदन्यत् रुद्रादिकम् । तदेतत् मूर्तं मुरेण पापेनाप्तत्वात् मूर्तमित्युच्यते उक्तविशेषणानि कानीत्यत आह– **एतन्मर्त्यमिति** ॥ एतन्मूर्तं मर्त्यशरीराभिमानित्वेन तत्त्यागरूपमरणोपेतं एतत् स्थितं परमात्मव्यतिरिक्तपुरुषाधीनम् । एतत् सत् विशीर्णम् अवसन्नं च उक्तविशेषणानुवादपूर्वकं मूर्तसारं निरूपयति– **तस्येति** ॥ य एष आदित्यमण्डलगतस्तपति । एष एतदन्तर्गतश्चतुर्मुखः । रसः सारः सतः सदादिविशेषणचतुष्टयसम्पन्नस्यैष आदित्यमण्डलान्तर्गतविरिञ्चो रस इति हि प्रसिद्धमित्यर्थः ॥ २ ॥

अथ मूर्तकथनानन्तरम् । अमूर्तमुच्यत इति शेषः । वायुश्चान्तरिक्षं श्रीश्चामूर्तं पापाप्तत्वलक्षणमूर्तविरुद्धत्वाद् अमूर्तमित्युच्यते एतदमूर्तममृतम् । श्रियो नित्य-मुक्तत्वादेवामृतत्वम् । वायोस्तु शरीराभिमानाभावेन तत्त्यागो न मरणरूप

इत्यमृतत्वम्। एतदमूर्तम्। यत् हरिमात्रनियम्यम्। तद्व्यतिरिक्तपुरुषानियम्यमिति यावत्। एतदमूर्तं त्यं ततं सर्वज्ञं चेत्यर्थः। उक्तानुवादेनामूर्तरसं निरूपयति– **तस्येति** ॥ य एष प्रसिद्धः। एतस्मिन् परिदृश्यमाने आदित्यमण्डले। पुरुषः पूर्णषड्गुणः परमात्मा एष रस इत्यन्वयः। तस्य ह्येष रस इत्येतत् पूर्ववत् ॥ ३ ॥

अथाधिदैवतं मूर्तादिस्वरूपकथनानन्तरम्। अध्यात्मं मूर्तामूर्ततद्रसा उच्यन्ते इति शेषः। तं मूर्तस्वरूपमाह– **इदमेवेति** ॥ प्राणनाद्वायुरेवाध्यात्मं प्राण इत्युच्यते तस्मात् यश्चायं प्रसिद्धः अन्तरात्मन्नन्तरात्मनि आकाशस्तद-भिमानिश्रीतत्त्वम्। तस्माच्च यदन्यत् इदमेव मूर्तमिति सम्बन्धः। यच्चक्षुः चक्षुरन्तर्गतो विरिञ्चः ॥ ४ ॥

दक्षिणेऽक्षन् चक्षुषि। योऽयं पुरुषः पूर्णषड्गुणः परमात्मा। एष रसः ॥ ५ ॥

तस्याधिदैवतम् अमूर्तसारस्यैतस्याध्यात्मं अमूर्तसारस्य पुरुषस्य परमात्मनो रूपमनेकविधमिति शेषः। तदेव बुद्ध्यारोहाय दृष्टान्तेनाऽह– **यथेति** ॥ महारजनं हरिद्रामञ्जिष्ठा वा। तया रक्तं माहारजनं वासो यथेत्यर्थः। यथा पाण्डु आविकं ऊर्णानिर्मितं सूक्ष्मवस्त्रं तद्वदित्यर्थः। यथा इन्द्रगोपः कीटः तद्वर्णमित्यर्थः। सकृद्विद्युत्तं युगपदुत्पन्नविद्युन्मण्डलमित्यर्थः। सकृद्विद्युत्तमिव भगवद्रूपविदः फलमुपलक्षणयाह– **सकृद्विद्युत्तेवेति** ॥ य एवं सकृद्विद्युत्तमिव भगवद्रूपं वेदास्य वेत्तुः सकृद्विद्युत्तेव प्रकाशमाना श्रीर्भवति। ह वा इति प्रमाणप्रसिद्धत्वमाह। अथ मूर्तामूर्तस्वरूपकथनानन्तरं अतः भगवतः अमूर्तसार-त्वात् तस्य मूर्तसारस्यैव भगवत आदेशः उपदेशः क्रियते इति न इति नेति। मूर्तामूर्तविलक्षण इत्यर्थः। ननु भगवति मूर्तामूर्तवैलक्षण्यवत् मूर्तयोरपि भगवद्वैलक्षण्यमस्त्येवेति को विशेष इत्यत आह– **नहीति** ॥ यद्यपि इति नेति निषिद्ध्यमानमेतस्मादन्यत् मूर्तामूर्तरूपमस्ति। तथापि परं नास्तीत्यर्थः। तात्पर्यं भाष्य एवोक्तम्। अथ आदेशानन्तरम्। तस्यामूर्तसारस्य। नामधेयं

सत्यस्य सत्यमिति तद्व्याचष्टे– **प्राणा वा इति** ॥ प्राणन्तीति प्राणाः मूर्तामूर्तात्मकाः । सत्यम् । तेषामेष परमात्मा सत्यं सादयति विशरणादिकं प्रापयतीति सत् यमयति नियच्छतीति यम् । सच्च तद्यं चेति सत्यमित्यर्थः । तथाच श्रुतिः– 'तस्योपनिषत् सत्यस्य सत्यम्' इति 'एष ह्येव सादयति यमयति' चेति ॥ ६ ॥

इति मूर्तामूर्तब्रह्मणम् ॥ ३ ॥

**उपनिषत्——**

## अथ मैत्रेयीब्राह्मणम्

**[मैत्रेय्याः अध्यात्मनिष्ठा]**

**मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन् वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ १ ॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञ-वल्क्यो यथैवोपकरणवता जीवितं तथैव ते जीवितँ स्यादमृतत्वस्य नाशाऽस्ति वित्तेनेति ॥ २ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति ॥ ३ ॥ स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥**

[भगवतः सङ्कल्पादेव पत्यादिकं सर्वं प्रियं भवति]

**'ब्रवीतु भगवान्' रेति । स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय**

जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनः कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद९ँ सर्वं विदितम् ॥ ५ ॥

भाष्यम्—

आत्मा नारायणः । तस्यैव हि कामेन पत्यादिः प्रियो भवति ।

नहि पत्यादीनां जायादीनामहं प्रियः स्यामिति कामनामात्रेण प्रियत्वं भवति । भगवदिच्छयैव हि तद् भवति । अन्यथा जायार्थे पत्यर्थे इत्येव स्यात् । प्राधान्यादिदं सर्वं विदितम् । सर्वकारणत्वाच्च सर्वप्राधान्यं भगवतः । प्राधान्याप्राधान्ययोरपि स एव हि हेतुः ।

टिप्पणी—

अमूर्तसारत्वेन प्रकृतभगवतोऽमूर्तसारत्वमुपपादयितुं महिमान्तरमाह— मैत्रेयीत्यादिना ॥ पत्युर्भर्तुः कामाय प्रयोजनाय पतिर्भार्यायाः प्रियो न भवति किन्तु

आत्मनः स्वस्याः कामायैव भार्यायाः पतिः प्रियो भवतीति परकीयव्याख्याननिरासाय तावदात्मशब्दं व्याचष्टे– **आत्मेति** ।। कुत इत्यतस्तद्ग्रहणे वाक्यार्थघटनारूपं हेतुं दर्शयन्नात्मनस्त्विति वाक्यं व्याचष्टे– **तस्यैवेति** ।। प्रियो भवति जायादेरिति शेषः । अनेन तुशब्द एवार्थः कामायेति चतुर्थी तृतीयार्थेत्युक्तं भवति । जायादीनाम् अहं प्रियः स्यामिति पत्यादीनां कामनयैव पत्यादिर्जायादेः प्रियो भविष्यतीति किं नारायणस्यैव कामेनेत्युच्यत इत्याशङ्कानिरासकतया एवकारव्यावर्त्यप्रदर्शनपरत्वेन नवा इति वाक्यं व्याचष्टे– **नहीति** ।। वा इत्येतत्प्रसिद्धिद्योतकहिशब्देन व्याख्यातम् । प्रियं पत्यादिकमिति शेषः । जायादीनामित्येतदत्रापि सम्बद्ध्यते । प्रियत्वमिति क्वचित्पाठः । तत्र पत्यादीना-मित्येतदप्यनुवर्तनीयम् । भगवदिच्छानुसारिणी पत्यादीच्छापि प्रियत्वे हेतुरिति मात्रपदम् । अनेन पत्यादेः कामेन अहं जायादेः प्रियः स्यामितीच्छया पत्यादिर्जायादेः प्रियो न भवति । किन्तु आत्मनः स्वस्य जायादेः कामेन पत्यादिर्मम प्रियो भवत्विति कामनया पत्यादिर्जायादेः प्रियो भवतीति यथाश्रुतप्रतीतिरप्यपास्ता । यतः जायादीनामहं प्रियः स्यामिति पत्यादीनां कामनामात्रेणेव पत्यादिर्मे प्रियो भवत्विति जायादीनां कामनामात्रेणापि पत्यादिजायादेः प्रियं न भवत्यविशेषादिति । नारायणस्यैवेच्छया पत्यादिर्जायादेः प्रियो भवति नतु पत्यादीच्छयेत्येतत् कुत इत्यत आह– **भगवदिच्छयैवेति** ।। नारायणस्यैव ज्ञानविज्ञानादिसम्पन्नत्वेन तदिच्छाया अमोघत्वात्पत्यादीनां तदभावेन तदिच्छाया मोघत्वादिति भावः । अपव्याख्यानं दूषयति– **अन्यथेति** ।। अन्यथा आत्मनः कामायेत्यस्य जायायाः प्रयोजनायेत्यर्थत्वे जायार्थे पतिः प्रियः इत्येव स्यात् । पत्युः कामायेत्यस्य च पत्युः प्रयोजनायेत्यर्थत्वे च पतिः पत्यर्थे प्रियो न भवतीत्येव स्यात् । लाघवात् स्पष्टप्रतीतिकत्वाच्चेति भावः । आत्मनो दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवतीत्युक्तम् । ब्रह्मज्ञानेन सर्वविज्ञानं ब्रह्मव्यतिरेकेणान्यस्याभावादित्याहुः । तदसत् । तद्वचनस्य ब्रह्मव्यतिरिक्तजगतोऽत्यन्तासत्त्वादित्यर्थत्वे इदं सर्वं विदितं भवतीत्युक्ति-

विरोधात्। अपसिद्धान्तत्वाच्च। ब्रह्मण्यारोपितत्वादित्यर्थत्वेऽधिष्ठानयाथात्म्य-ज्ञानेनाध्यस्तज्ञानाभावात्। प्रत्युत तज्ज्ञानेनैतज्ज्ञानस्य निवृत्तेरेव जायमानत्वाच्चेति भावेन स्वयं यथावद् व्याचष्टे– **प्राधान्यादिति** ॥ ब्रह्मणो जगदपेक्षया प्राधान्यात्तद्दर्शनेनेदं सर्वं विदितं भवतीत्युक्तमित्यर्थः। प्राधान्यमेव भगवतः कुतः सिद्धमित्यत आह– **सर्वकारणत्वाच्चेति** ॥ चशब्देन सर्वस्य तदधीनत्वं समुच्चिनोति। ब्रह्मादीनामपि रुद्राद्यपेक्षया प्रधानत्वात्कथं सर्वप्राधान्यं भगवत इत्यत आह– **प्राधान्येति** ॥ हिशब्दः प्रमाणप्रसिद्धिद्योतकः। ब्रह्मरुद्रादि-गतप्राधान्याप्राधान्ययोरपि भगवन्निमित्तत्वेन भगवतः सर्वप्राधान्यमित्यर्थः।

उपनिषत्—

[सर्वमपीदं विश्वं भगवदधीनम्]

**ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद् योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्राऽत्मनो लोकान् वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद भूतानि तं परादु-र्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ६ ॥**

भाष्यम्—

अन्यत्राऽत्मनो ब्रह्म वेद भगवदधीनत्वेन न वेद। तदनाश्रितत्वेन स्थानान्तरे च वेद। परादात् परतो लोकालोकस्यान्धे तमसि।

इदं ब्रह्मादिकम्। यदयमात्मा। यत्रायमात्मा। अन्यत्र परिज्ञाने दोषोक्तेस्तत्र परिज्ञानं ह्युक्तं भवति। अन्यथा अन्यदात्मनो ब्रह्म वेदेति स्यात्। यदित्य-व्ययत्वाद् यत्रेत्यपि भवति। यथा यस्मादित्यर्थे। 'सप्तसु प्रथमा' इति च सूत्रम्।

**टिप्पणी—**

ननु यदि ब्रह्मव्यतिरेकेणान्यस्याभावादेकविज्ञानेन सर्वविज्ञानं न तर्हि ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेदेत्युत्तरवाक्ये यः कोऽपि आत्मनोऽन्यत्र पार्थक्येन ब्रह्म ब्राह्मणजातिं वेद तं ब्राह्मणजातिः पराकुर्यादिति ब्रह्मव्यतिरेकेणान्यस्याभावप्रतिपादनम् असङ्गतं स्यादिति चेत् । न । स्यादेतदेवं यद्यत्र ब्रह्मव्यतिरेकेणान्यस्याभावप्रतिपादनं स्यात् । नचैवम् । किन्नाम एकविज्ञानेन सर्वविज्ञाने हेतुभूतप्राधान्यसाधकं जगतस्तदधीनत्वमेवोच्यत इति भावेन तदनूद्यान्यत्रेत्येतत्सावधारणमिति भावेन तद्व्यावर्त्यमाह– **अन्यत्रेति** ।। ननु ब्राह्मणजात्याद्यभिमानिचतुर्मुखादेर्भगवदधीनत्वाज्ञाने कथं तमःप्राप्तिरित्यतो नात्र भगवदधीनत्वाज्ञानमात्रे तात्पर्यम् । किन्तु तदनाश्रितत्वज्ञाने चेति भावेन तद् व्याचष्टे– **तदनाश्रितत्वेनेति** ।। परादात् पराकुर्यादित्यल्पार्थत्वं निवारयंस्तदनूद्य परेत्यस्यापेक्षिताध्याहारेणार्थमाह– **परादादिति** ।। कथमनेनाप्यनर्थातिशयोक्तिरित्यत आह– **अन्धे तमसीति** ।। ननु योऽन्यत्रात्मनो ब्रह्म वेदेत्यस्योक्तार्थत्वे इदं ब्रह्मेत्याद्युपसंहारवाक्येन ब्रह्मक्षत्रादेरात्मानतिरिक्तत्वोक्तिरसङ्गता स्यात् । अस्माकं तु सुसङ्गतेत्यतस्तद्वाक्यं व्याचष्टे– **इदमिति** ।। यदयमात्मेत्यनुवादः । यदित्यस्यार्थो यत्रेति । अयमिति यत्रेत्यधिकरणभूतः परमात्मा परामृश्यते । तथाच नायमभेदोपसंहारः । किन्तु ब्रह्मादीनां परमात्माश्रितत्वोक्तिरिति भावः । ननु यश्चासावयं चेति यदयं इत्यभेदोपसंहार एव किन्न स्यादित्यत आह– **अन्यत्रेति** ।। तत्रापरिज्ञाने चेत्यपि ग्राह्यम् । तत्र परमात्मनि । हिशब्दो हेतौ । उक्तं भवति अर्थात् । परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिव्याप्तत्वादित्यर्थः । हि यस्मात्तत्र परिज्ञानमुक्तं भवति तस्मान्नाभेदोपसंहारः तद्विरुद्धत्वादित्यर्थः । ननु नेयमन्यत्र परिज्ञाने दोषोक्तिः किन्तु भेदज्ञान एवेत्युक्तम् । अतो न तद्विरोध इत्यतो योऽन्यत्रात्मन इत्यस्यापव्याख्यानं दूषयति– **अन्यथेति** ।। अन्यत्र परिज्ञाने दोषोक्तित्वानङ्गीकारे भेदपरिज्ञान एव दोषोक्तित्वाङ्गीकारे च यो ब्रह्मात्मनोऽन्यद्वेदेत्येव स्यात्

'सप्तम्यास्त्रल्' इति विहितप्रत्ययान्तत्वेनान्यत्रेति प्रयोगो स्यादित्यर्थः । ननु भवत्पक्षेऽपि यत्रायमात्मेति स्यात् नतु यदयमित्यत आह– **यदित्यव्ययत्वादिति** ।। तत्र दृष्टान्तमाह– **यथेति** ।। यद्वा यदिति प्रथमान्तमेव सप्तम्यर्थमिति भावेन प्रथमायाः सप्तम्यर्थत्वे नियामकमाह– **सप्तस्विति** ।।

उपनिषत्—

[उदाहरणत्रयनिरूपणपूर्वकं भगवतः सृष्टिकर्तृत्वनिरूपणम्]

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।। ७ ।।**

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ।। ८ ।।**

**स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ।। ९ ।।**

भाष्यम्—

दुन्दुभ्याघातादिदृष्टान्तोऽपि तदधीनत्वं तत्कारणत्वं च ज्ञापयति । नहि दुन्दुभ्यादिरेव तच्छब्दः । नच तदुपादानम् । स्थानान्तरे तदुपलम्भात् । नह्युपादानादुपादेयं स्थानान्तरे भवति । शब्दो हि स्थानान्तरे गत्वा प्रतिश्रुतित्वमुपैति । भगवदिच्छाया दृष्टान्तो दुन्दुभ्याघातादिः । नहि दुन्दुभिं पश्यन् पुरुषो दुन्दुभ्याघाते मुरजशब्दोऽयमिति गृह्णाति । एवं भगवन्तं जानन्नान्याधीनं जगदिति गृह्णाति । किन्तु भगवदिच्छाधीनमित्येव।

टिप्पणी—

ननु 'इदं ब्रह्म' इत्यादि 'यदयमात्मा' इत्यन्तं वाक्यं यदि जगतो ब्रह्मानतिरिक्तत्वोपसंहारपरं न स्यात्तर्हि दुन्दुभ्याघातादिदृष्टान्तकथनमसङ्गतं स्यात् । कथमुप-

संहारवाक्योक्तमवगन्तुं शक्यत इत्याशङ्कायां स्फुरणात्मस्वरूपव्यतिरेकेण किञ्चिदपि ग्रहीतं न शक्यत इति तु प्रसिद्धम् । यद्व्यतिरेकेण यस्याग्रहणं तस्य तदात्मकत्वमेवेति व्याप्तौ दृष्टान्तत्रयाभिधानादित्यत आह– **दुन्दुभ्याघातादीति** ।। स्यादेतत् यद्यत्रोक्तव्याप्तौ दृष्टान्तकथनं स्यात् । नचैवं किन्नाम प्राधान्यसाधकं जगतो ब्रह्माधीनत्वं ब्रह्मणश्च जगत्कारणत्वं ज्ञापयितुं दृष्टान्तत्रयाभिधानादित्यर्थः । ननूक्तव्याप्तावेव दृष्टान्ताभिधानं किन्न स्यादिति चेन्न । तथात्वे दुन्दुभ्यादिव्यतिरेकेण गृह्यमाणस्य दुन्दुभ्यादिजन्यशब्दस्य दुन्दुभ्यात्मकत्वापत्तेः । नच तदस्तीत्याह– **नहीति** ।। ननु दुन्दुभ्यादिजन्यत्वात्तच्छब्दस्य तयोरभेदो भविष्यतीति चेत् दुन्दुभ्यादेः तच्छब्दं प्रति निमित्तकारणत्वं आहोस्विदुपादानकारणत्वम् । नाद्यः । निमित्तकारणस्य कार्येणाभेदाभावात् । द्वितीयं दूषयति– **नचेति** ।। कुत इत्यत आह– **स्थानान्तर इति** ।। स्थानान्तरे शब्दस्योपलम्भेऽपि दुन्दुभ्याघातादिशब्दोपादानं किन्न स्यादित्यत आह– **नहीति** ।। मृदादिपरित्यागेन घटादेः स्थानान्तरे अदर्शनादिति भावः । ननु भेर्यादिप्रदेशोत्पन्नः शब्दः स्थानान्तरे उपलभ्यत इत्यसिद्धम् । शब्दश्रवसोः सन्निकर्षाभावात् । सहि न तावच्छ्रोत्रस्य गमनेन सम्भवति । तस्यामूर्तस्य गत्यभावात् । नापि शब्दस्या-गमनेन । सहि न तावच्छङ्खादिकमाश्रयं परित्यज्यागन्तुमलम् । गुणत्वात् । नापि शङ्खाद्यागमनेन श्रोत्रप्रत्यासत्तिः । तदनुपलम्भादित्यत आह– **शब्दो हीति** ।। स्थानान्तरं स्थानान्तरे गत्वा उत्पद्य श्रुतिं श्रुतिं प्रति प्रतिश्रुति तस्य भावः प्रतिश्रुतित्वं श्रोत्रविषयत्वम् । भेर्यादिप्रदेशोत्पन्नः शब्दः देशान्तरे शब्दान्तरमुत्पादयति स च शब्दान्तरमिति श्रोत्रप्रदेशोत्पन्नः शब्दः श्रोत्रविषयो भवतीति यावत् । यद्वा, दुन्दुभ्यादिप्रदेशोत्पन्न एव शब्दो देशान्तरं कर्णशष्कुल्यवच्छिन्नप्रदेशं गत्वा श्रुतिविषयत्वमुपैति । नच गुणत्वात्तदनुपपत्तिः । गन्धादिवदुपपत्तेरित्यङ्गीकारवादेनेदं व्याख्येयम् । ननु यदि भगवत एव जगत्कारणत्वे अयं दृष्टान्तस्तर्हि यथा दुन्दुभेरिति दुन्दुभेस्तु ग्रहणेनेत्यातावता पूर्तेर्हन्यमानस्याघातस्य वेति किमर्थमुक्तं इत्यत आह– **भगवदिच्छाया इति** ।।

भगवतो जगत्कारणत्वे दुन्दुभ्यादिदृष्टान्तः। तदिच्छायाः तत्कारणत्वे तदाघाता-दिदृष्टान्त इत्यर्थः । उक्तार्थे कथमयं दृष्टान्त इत्यतो दुन्दुभेर्हन्यमानस्य बाह्यान् शब्दान् शक्नुयात् ग्रहणायेति वाक्यं व्याचष्टे– **नहीति** ॥ दुन्दुभिं पश्यंन्नपि मुरजशब्दोऽयमिति गृह्णात्येव कदाचिदित्यत उक्तम्– **दुन्दुभ्याघात इति** ॥ दृश्यमान इति शेषः । अयं गृह्यमाणः शब्दः । बाह्यानित्यस्यार्थो मुरजशब्द इति । मुरजजन्यः तदधीनश्चेत्यर्थः । किन्तु दुन्दुभ्यादिजन्यः तदधीनश्चेति गृह्णातीति शेषः । एवं दृष्टान्तवाक्यं व्याख्याय दार्ष्टान्तिकं स्वयमाह– **एवमिति** ॥ भगवदिच्छां चेति शेषः । अन्याधीनं अन्यजन्यं चेत्यपि ग्राह्यम् । भगवदिच्छाधीनं तज्जन्यं चेत्यपि ग्राह्यम् ॥

उपनिषत्——

[भगवतः हयग्रीवस्य सकाशात् सकलशास्त्राणां आविर्भावः]

**स यथाऽऽर्द्रैधाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि ॥ १० ॥**

[सोदाहरणं भगवतः सर्वाश्रयत्ववर्णनम्]

**स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां**

**विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां वेदानां वागेकायनमेवम् ॥ ११ ॥**

**भाष्यम्—**

**तदेव दर्शयति । स यथाऽऽर्द्रैधाग्नेः स यथा सर्वासामपामित्यादिना । नह्यग्निरेव धूमः । नचाप एव समुद्रः । नह्यपामाप एवाश्रयः । किन्तु वरुणोऽपां खातो वा । स एव च समुद्र इत्युच्यते ।**

**टिप्पणी—**

मायावादिभिः 'उत्पत्तिकाले जगतो ब्रह्मात्मकत्वमवगमयितुं कार्याणामुत्पत्तेः प्राक् कारणादभिन्नत्वे दृष्टान्तमाह । स यथार्द्रैधाग्नेः' इति प्रलयकालेऽप्यस्य प्रपञ्चस्य ब्रह्मात्मकत्वमिति दृष्टान्तपूर्वकमाह– **स यथा सर्वासामपामिति** ॥ उत्तरप्रकरणतात्पर्यमुक्तम् । तदसदिति भावेन तत्तात्पर्यमाह– **तदेवेति** ॥ भगवज्जन्यत्वं भगवदधीनत्वं चेत्यर्थः । एवकारेण परोक्ततात्पर्यं व्यावर्तयति । कुतो व्यावर्तनीयमित्यत आह– **नह्यग्निरेवेति** ॥ ननूदकराशिरेव समुद्र इत्युच्यत इति नचाप एव समुद्र इति कथमुक्तमित्यत आह– **नहीति** ॥ यदि समुद्रशब्देनोदकराशिरेवोच्येत तर्हि सर्वासामपां समुद्र एकायनमिति समुद्रस्या-बाश्रयत्वोक्तिर्विरुद्ध्येत । अपामेव अबाश्रयत्वाभावादित्यर्थः कस्तर्ह्यपामाश्रय इति पृच्छति– **किन्त्विति** ॥ उत्तरमाह– **वरुण इति** ॥ वरुणस्य सर्वप्रत्यक्षत्वाभावात् सर्वप्रत्यक्षसिद्धमेवाऽश्रयं दर्शयितुमपां खातो वेत्युक्तं तर्हि श्रुतौ वरुण एकायनमित्याद्युक्तिः स्यादित्यत आह– **स एवेति** ॥

**उपनिषत्—**

[मोक्षेऽपि भगवान् सर्वाश्रयः]

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नहास्योद्ग्रहणायैव स्याद् यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदं महद् भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः**

**समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

भाष्यम्—

**एवमेव सैन्धवखिल्यस्य विलीनस्य समस्ताम्भसश्च वरुणोऽपां खातो वा समुद्राख्य आश्रयः। वरुणवदपां खातवद्वाऽनन्तोऽपारो भगवान् जीव एव विज्ञानघनाख्यो भूतसम्बन्धाज्जातः संस्तल्लयमनु भगवन्तमाप्नोति। समुद्रे प्रास्तसैन्धवखिल्यवत्।**

**समुद्रजलस्थानीया मुक्ताः बहव एकस्वभावाः। बहवो हि जलपरमाणवः। सामुद्रजलमेकाश्रयम्।**

टिप्पणी—

ननु एवं वा अरे इदं महद्भूतमनन्तमपारमिति दार्ष्टान्तिकवाक्योक्तस्य दृष्टान्तो नोपलभ्यते। नच स यथा सैन्धवखिल्य इत्युक्तसैन्धवखिल्यस्यैव तत्र दृष्टान्तत्वमिति वाच्यम्। तस्यानन्तापारत्वाद्यभावात्। अनुक्तेश्च। विज्ञानघन एवैतेभ्य इति तदुपमेयस्य वक्ष्यमाणत्वाच्च। नापि उदक इत्युक्तं जलमेव। तस्य वरुणाद्याश्रितत्ववत् परमात्मनोऽपि अन्याश्रितत्वप्रसङ्गादित्यतो वरुणापांखातयोरेव तत्र दृष्टान्तत्वं वक्तुमुक्तमर्थमतिदिशति– **एवमेवेति** ॥ अनेन लवणमेवेत्यनन्तरं सैन्धवखिल्यस्य विलीनस्य सर्वासामपां समुद्र एकायनमिति वाक्यमध्याहर्तव्यमित्युक्तं भवति। इदानीमनन्तमपारं इत्युक्तः क इति शङ्कां वारयन् एवं वा इति वाक्यं व्याचष्टे– **वरुणवदिति** ॥ एवमित्यस्याभिप्रायो वरुणवदित्यादि। स यथा सैन्धवखिल्य इत्युक्तसैन्धवखिल्यदृष्टान्तस्य दार्ष्टान्तिकप्रतिपादकतया विज्ञानघन एवैतेभ्य इति वाक्यं व्याचष्टे– **जीव एवेति** ॥ तल्लयमनु भूतसम्बन्धलयानन्तरमित्यर्थः ॥ **भगवन्तमाप्नोतीति** ॥ अनेन विज्ञानघनो जीव एवैतेभ्यः भूतेभ्यः समुत्थाय तान्येवानुविनश्यति तत इदं महद्भूतमनन्तमपारं भगवन्तं प्राप्नोतीति सम्बन्धः सूचितो भवति।

समुद्रे समुद्रोदके । प्रास्तः सैन्धवखिल्यः यथा समुद्रं प्राप्नोतीत्यर्थः । ननु यदि एवं वा अरे इदं महद्भूतमित्युक्तभगवतो वरुणोऽपां खातो वा दृष्टान्तत्वेनाभिप्रेतस्तर्हि वरुणाश्रितोदकस्थानीयं भगवदाश्रितं किमित्यत आह– **समुद्रेति** ॥ मुक्ताः पूर्वमुक्ताः । यतो यतस्त्वाददीत लवणमेवेति समुद्र-जलस्यैकस्वभावत्वोक्त्यनुरोधादुक्तम्– **एकस्वभावा इति** ॥ मुक्तस्यैकत्वेनैक-स्वभावत्वशङ्काभावादेकस्वभावत्वोक्तिर्व्यर्था स्यादित्यत उक्तम् ॥ **बहव इति** ॥ ननु तर्हि बहूनां मुक्तानां एकसमुद्रजलस्थानीयत्वं कथमित्यत आह– **बहव इति** ॥ ननु बहुत्वे सामुद्रं जलमित्येकवचनप्रयोगः कथमित्यत आह– **सामुद्रमिति** ॥ सामुद्रं जलमिति व्यवहारः एकाश्रयत्वनिमित्त इत्यर्थः । परमात्मरूपैकाश्रया मुक्ताः कथं समुद्रजलस्थानीया इत्यतो वाऽह– **सामुद्रमिति** ॥ एको वरुणः अपां खातो वाऽश्रयो यस्य तत्तथोक्तम् ॥

उपनिषत्—

[अमुक्तानां मुक्तदर्शनं नास्ति]

**सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य सञ्ज्ञाऽस्तीति स होवाच न वा अरे अहं मोहं ब्रवीम्यलं वा अर इदं विज्ञानाय ॥ १३ ॥ यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरं शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रेत् तत् केन कं पश्येत्तत्केन कं शृणुयात् तत् केन कमभिवदेत् तत् केन कं मन्वीत तत्केन कं विजानीयाद्येनेदं सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥**

इति मैत्रेयीब्राह्मणम् ॥ ४ ॥

भाष्यम्—

**मुक्तानां सञ्ज्ञाऽप्यन्यैर्न ज्ञायते शास्त्रं विना। सञ्ज्ञा नास्तीत्युक्त्वा अलं वा अरे इदं विज्ञानायेत्युक्तेर्न विजानातीत्युक्ते प्रतिज्ञाविरोधः।**

**नच सर्वाज्ञानं पुरुषार्थः।**

टिप्पणी—

न ह्यस्योद्ग्रहणायैव स्यादित्युक्तसैन्धवखिल्यस्थानीयमुक्तधर्मप्रतिपादकतया न प्रेत्य सञ्ज्ञाऽस्तीति वाक्यं व्याचष्टे– **मुक्तानामिति** ॥ अपिशब्देन मुक्तस्वरूपं समुच्चीयते। अन्यैरमुक्तैः। अमुक्तानामपि शास्त्रेण मुक्तस्वरूपादिज्ञानसद्भावादाह– **शास्त्रं विनेति** ॥ तथाच अन्यैरज्ञायमानत्वाभिप्रायेणैव सञ्ज्ञा नास्तीत्युक्तम्। नत्वभावाभिप्रायेण। तथा सति 'अनन्तं वै नाम' इत्यादिश्रुतिविरोधादिति भावः। ननु परोक्तरीत्या प्रेत्य मुक्त्यनन्तरं सञ्ज्ञा ज्ञानं मुक्तस्य नास्ति मुक्तो न विजानातीत्येवार्थः किन्न स्यादित्यतस्तत्रान्तरानुपपत्तिं तावदाह– **सञ्ज्ञेति** ॥ न विजानातीत्युक्ते। सञ्ज्ञा नास्तीत्यस्य न विजानातीत्यर्थत्वे। अलं वा अरे इदं विज्ञानायेत्युक्तेः न प्रेत्य सञ्ज्ञास्तीति मुक्तस्वरूपप्रतिज्ञया विरोधः स्यात्। कुतः? सञ्ज्ञा नास्तीति मुक्तस्य ज्ञानाभावमुक्त्वा इदं मुक्तजातं विज्ञानाय विज्ञातुमलं समर्थमिति मुक्तस्य ज्ञानसद्भावोक्तेरित्यर्थः। किञ्च तस्य वाक्यस्य मुक्तो न विजानाति इत्यर्थत्वे मोक्षस्यापुरुषार्थत्वं स्यादित्याह– **नचेति** ॥

भाष्यम्—

**मग्नस्य हि परेऽज्ञाने किन्न दुःखतरं भवेत्॥ इति च॥**

**नानात्वेनाभिसम्बुद्धास्तदा तत्कालभाविना।**
**संयोगः प्रकृतेर्नैषां मुक्तानां तत्त्वदर्शनात्॥**
**प्रवर्तति पुनः सर्गे तेषां सा न प्रवर्तते।**
**आनन्देन विना चैव भोगेन विषयेण च॥**
**सर्वे ते ब्रह्मणस्तुल्या आधिपत्येन चैव हि॥ इति वायुप्रोक्ते॥**

**इवशब्दस्त्वस्वातन्त्र्यार्थे। नहि तदधीनं पृथगित्येवोच्यते। तस्मादमुक्तैर्न ज्ञायत इति सञ्ज्ञा नास्तीत्युक्तम् ।**

**टिप्पणी—**

न केवलं पुरुषार्थत्वाभावः । किन्तु अनर्थरूपत्वं च स्यादित्याह– **मग्नस्य हीति** ।। ननु क्रियाकारकफलसम्बन्धस्यात्यन्तविच्छेदो हि मुक्तत्वमिति क्वास्ति मुक्तस्य ज्ञानमित्यतो मुक्तस्वरूपे प्रमाणमाह– **नानात्वेनेति** ।। व्याख्यातमेतत् । ननु सञ्ज्ञा नास्तीत्युक्तं विज्ञानाभावमेवा-न्वयव्यतिरेकाभ्यां दृढीकर्तुं यत्र हीत्यादि वाक्यं प्रवृत्तम् । यत्र यदा अविद्यायां स्थितायां द्वैतमिव भवति शरीरेन्द्रियादिरूपं स्वव्यतिरिक्तं किमप्यपारमार्थिकं भवति । तत् तदा इतरः कर्ता इतरं घटमितरेण चक्षुषा पश्यतीत्यादि युज्यते । यत्र वा मुक्तावविद्यायां निवृत्तायामस्य विदुषः सर्वं कारणादिकम् आत्मैवाभूत् स्वव्यतिरेकेण किमपि नाभूत् तत्तस्यामवस्थायां केन करणेन कं विषयं पश्येदिति । तथाच ज्ञानसद्भावाङ्गीकारे मुक्तस्येदं ज्ञानाभावोपपादनमयुक्तं स्यादिति चेत् । न। स्यादेतद्यदि मुक्तस्य ज्ञानाभावोपपादनायेदं प्रवृत्तं स्यात् । नचैवं किन्नाम अलं वा अरे इदं विज्ञानायेत्युक्तं मुक्तस्य ज्ञानसद्भावमुपपादयितुमेव। अद्वितीयचैतन्यमात्रावस्थानलक्षणं मोक्षमङ्गीकुर्वतामन्तेऽनिष्टप्रसङ्गं वक्तुं तस्य व्याप्तिसापेक्षत्वात्तदभिधानपूर्वकं प्रवृत्तत्वात्। नन्वापादनमनिष्टस्य भवति । नच भोगाभावादिकमनिष्टम् । अतः प्रसङ्गाभासोऽयमित्यतश्चाऽह– **नचेति** ।। सर्वस्य गन्धादेर्विषयस्य विज्ञानकरणस्य परमात्मनो विज्ञातुः स्वस्यान्येषां मुक्तानां चाज्ञानं पुरुषार्थो नच भवतीत्यर्थः। कुत इति चेत् । मोक्षे दर्शनादिभोगस्य प्रमितत्वेन तद्विरुद्धत्वादिति भावेनाऽह– **मग्नस्येति** ।। ननु किमर्थमिदं परमते अनिष्टप्रसङ्गाभिधानपरतया व्याख्यायते? मुक्तौ करणाद्यभावाद् दर्शनादिकं नास्तीति वस्तुस्थितिकथनमेव किन्न स्यादित्यतो मुक्तौ भेदभोगादेः प्रमितत्वादिति भावेन तत्र स्पष्टप्रमाणमाह– **नानात्वेनेति** ।। नन्वत्र इवशब्देन भेदमिथ्यात्वोक्तेः कथमुक्तार्थमिदं वाक्यं इत्यतस्तदर्थमाह– **इवशब्दस्त्विति** ।।

इवशब्दस्यास्वातन्त्र्यार्थत्वमुपपादयति– **नहीति** ॥ यद् यदधीनं तत्ततः पृथगित्येव इवशब्दाशिरस्कपृथगितिशब्देन नोच्यते । तदनधीनस्यैव तथोच्यमानत्वात् । किन्तु इवशब्दशिरस्केनैव राज्ञः पृथगिव भृत्य इति प्रयोगदर्शनादित्यर्थः । हिशब्देनानुभवप्रसिद्धिं दर्शयति । श्रुतिव्याख्यानमुपक्रम्य अपव्याख्यानं किमर्थं निराक्रियत इत्याशङ्कां परिहरन्नुपसंहरति– **तस्मादिति** ॥ ज्ञानाभावार्थत्वस्य निराकृतत्वादित्यर्थः । न ज्ञायते मुक्तस्वरूपं तत्सञ्ज्ञा चेति शेषः । तथाच अपव्याख्याननिरासस्य स्वव्याख्यानदाढ्यार्थत्वान्नासङ्गतिरिति भावः ।

**भाष्यम्—**

**पतिर्जाया प्रिया नैव स्वेच्छया तु भविष्यति ।**
**विष्णोरिच्छाबलेनैव स्वयं च स्वप्रियो भवेत् ॥**
**विष्णोरिच्छावशेनैव हन्ति ह्यात्मानमात्मना ।**
**स्वात्मानमप्रियं कृत्वा निरये पातयत्यपि ॥**
**प्राधान्येन हरेर्ज्ञानात्सर्वं विदितवद् भवेत् ।**
**ब्रह्मजात्यात्मकं वेत्ति नैव विष्णुवशं हि यः ॥**
**ब्रह्माणं तं ततो ब्रह्म पातयेत्तमसि ध्रुवम् ।**
**एवं क्षत्रात्मको वायुर्वित्तरूपश्च वित्तपः ॥**
**पञ्चभूतानि विश्वे च देवा लोकाभिमानिनः ।**
**सर्वाभिमानिनी देवी मूलप्रकृतिरेव च ॥**

**टिप्पणी—**

स्वकृतव्याख्यानदाढ्याय ब्राह्मणव्याख्यानरूपं प्रमाणमुदाहरति– **पतिरित्यादिना** ॥ नवा अरे पत्युः कामायेति वाक्यं व्याचष्टे– **पतिर्जायाप्रिय इति** ॥ स्वेच्छया पतीच्छया । एवं उत्तरवाक्यान्यपि व्याख्येयानि । आत्मनस्त्विति वाक्यं व्याचष्टे– **विष्णोरिति** ॥ तदेव कैमुत्येनोपपादयति– **स्वयं चेति** ॥ यदा विष्णोरिच्छावशेनैव स्वयमपि स्वप्रियो न स्वेच्छया तदा किमु वक्तव्यं स्वेच्छयाऽन्यप्रियो न भवतीति । स्वेच्छयैव स्वयं स्वप्रियः किन्न स्यादित्यत

आह– **हन्तीति** ।। स्वात्मानं स्वस्याप्रियं कृत्वाऽत्मना बुद्ध्या । बुद्धिपूर्वकमात्मानं हन्ति हि यस्मात्तस्मान्न स्वेच्छया स्वयं स्वप्रिय इत्यर्थः । हेत्वन्तरमाह– **निरय इति** ।। बुद्धिपूर्वं दुष्कर्माणि कृत्वेति शेषः । आत्मनो विज्ञानेनेदं सर्वं विदितं भवतीत्येतद् व्याचष्टे– **प्राधान्येनेति** ।। हरेरित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । विदितवद् विदितफलमित्यर्थः । 'ब्रह्म तं परादाद् योऽन्यत्राऽत्मनो ब्रह्म वेद' इति वाक्यं व्याचष्टे– **ब्रह्म जात्यात्मकमिति** ।। यः ब्रह्म जात्यभिमानिनं ब्रह्माणं विष्णुवशं नैव वेत्तीति सम्बन्धः । अन्यवशं च वेत्तीत्यपि ग्राह्यम् । उक्तव्याख्यानं क्षत्रं परादादित्यादावतिदिशति– **एवमिति** ।। वायुं क्षत्रात्मकं वायुं विष्णुवशं यो न वेत्ति तं तमसि पातयेदित्यर्थः । एवमुत्तरत्रापि । न वा अरे वित्तस्य कामायेत्यत्र जडवित्तस्य कामनाभावात् तदभिमानी चेतनो ग्राह्यः । स चान्यथाज्ञानिनः तमसि पातने समर्थ एवेति वित्तं परादात् योऽन्यत्रात्मनो वित्तं वेदेत्यपि वक्तव्यमित्यभिप्रेत्याऽह– **वित्तरूप इति** ।। पञ्चभूतानि तदभिमानिनः अत एव लोका इत्येतत् लोकाभिमानिन इति व्याख्यातम् । जडस्य मिथ्याज्ञानिनोऽनर्थदानासामर्थ्यात् । अत एव सर्वं तं परादादित्यत्र सर्वशब्दो न जडाजडपरः किन्त्वित्यत आह– **सर्वाभिमानिनीति** ।।

**भाष्यम्**—

**सर्वं विष्णौ स्थितं विष्णोर्जातं विष्णोर्वशे सदा ।**
**शङ्खशब्दो यथा शङ्खदेवतावशगः स्थितः ।।**
**तस्माद् वेदाः समुत्पन्ना विद्याख्या मूलिका श्रुतिः ।**
**सर्वोपनिषदश्चैव पञ्चरात्राख्यसंहिताः ।।**
**ब्रह्मसूत्राणि वेदानां व्याख्यास्तासां च विस्तरः ।**
**सर्वमेतज्जगच्चैव निःसृतं तुरगाननात् ।।**
**वरुणस्य वशे यद्वदाप एवं वशे हरेः ।**
**सर्वे बद्धाश्च मुक्ताश्च तारतम्यात्मना स्थिताः ।।**

**यदि मुक्तस्य विज्ञानं गन्धादिविषये न चेत् ।**
**तथैव भगवद्रूपे स्वरूपे च परस्परम् ॥**
**एवमज्ञानरूपां तां मुक्तिं को नाम वाञ्छति ।**
**तस्माद् विष्णोर्वशे सर्वे यथेष्टमुपभोगिनः ॥**
**मुक्तास्सदा तारतम्यात्तिष्ठन्त्याब्रह्मणोऽखिलाः ॥**

**——इति हयग्रीवसंहितायाम् ॥**

**टिप्पणी——**

इदं ब्रह्मेत्यादि यदयमात्मेत्यन्तं वाक्यं व्याचष्टे– **सर्वमिति** ॥ स यथा दुन्दुभेरित्यादिदृष्टान्तवाक्यतात्पर्यमाह– **विष्णोर्जातमिति** ॥ वशे स्थितमिति अत्राप्यनुवर्तते । शब्दस्य शङ्खाद्यधीनत्वं प्रकारान्तरेणाप्याऽह– **शङ्खशब्द इति** ॥ अस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेद इत्यादि व्याचष्टे– **तस्मादिति** ॥ वेदशब्देनात्रावान्तरऋगादीनां ग्रहणम् ऋगादिव्यतिरिक्तविद्याभावात्कथं पृथग् विद्याग्रहणमित्यत आह– **विद्याख्येति** ॥ यदवान्तरभेदा ऋगादयः सा मूलिका श्रुतिः विद्याख्या । श्लोका इत्यस्यार्थः– **पञ्चरात्रेति** ॥ अनुव्याख्यानानीत्यस्यार्थः तासां चेति । तासां व्याख्यानां विस्तर इति । एतानि सर्वाणीत्यस्य प्रागुक्तपरामर्शकत्वे वैयर्थ्यात्प्रकारान्तरेणार्थमाह– **सर्वमेतदिति** ॥ स यथा सर्वासामपां समुद्र एकायनम् एवं सर्वेषां स्पर्शानामित्यादि व्याचष्टे– **वरुणस्येति** ॥ सर्वे बद्धा हरेर्वश इत्यनेन सर्वेषां स्पर्शाभिमानिनां देवानां त्वक् त्वगिन्द्रियान्तर्गतपरमात्मरूपं परमात्मत्वगिन्द्रियं वा अयनम् आश्रय इत्यादि व्याख्यातं भवति । स यथा सैन्धवखिल्य इत्यादेस्तात्पर्यमाह– **मुक्ताश्चेति** ॥ वरुणस्य वशे यद्वदापः एवं वशे हरेरिति पूर्वेण सम्बन्धः । 'यत्र त्वस्य सर्वं आत्मैवाभूत् केन कं पश्येदित्यापादनस्य इष्टापादनत्वशङ्कापरिहाराय अनिष्टमाह– **यदीति** ॥ अव्ययत्वादस्तीत्यर्थे चेच्छब्दः । येनेदं सर्वं विजानातीत्यस्य तात्पर्यं भगवद्रूप इति । विज्ञातारमित्यस्य तात्पर्यं स्वरूपे चेति । एतदुपलक्षणमिति भावेनाऽह– **परस्परमिति** ॥ मुक्तानामिति

शेषः । विपर्यये पर्यवसानमाह– **तस्मादिति** ॥ मुक्तेः सर्वैरभिवाञ्छनीयत्वात् । तारतम्यादिति स्वरूपकथनार्थमुक्तम् ॥

**भाष्यम्**—

**सर्गे सर्गे तु यो नैव शब्दतोऽप्यन्यथा भवेत् ।**
**श्रुत्याख्यः स तु विज्ञेयः इतिहासादिरर्थतः ॥**
**भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यते यदि ।**
**ऋषिभेदस्तु तत्र स्याद्भेदो नाविष्णुनिर्गतः ॥**
**वेद इत्येव विष्णूक्तस्तपसा दृश्यते परैः ॥ इति च ॥**

**इति मैत्रेयिब्राह्मणम् ॥ ४ ॥**

**टिप्पणी**—

ननु निश्वसितमेतद् यद् ऋग्वेद इति वेदानामितिहासादीनां च विष्णुजन्यत्वोक्तेः वेदानामपौरुषेयत्वमितिहासादीनां पौरुषेयत्वमिति विशेषः कथमित्यत आह– **सर्गे सर्ग इति** ॥ वीप्सेयम् । यः शब्दसमूहः न केवलमर्थतः किन्तु शब्दतोऽपि अन्यथा नैव भवेदिति सम्बन्धः । अर्थतो वाऽन्यथा न भवेत् शब्दतस्तु भवेदेव । यदि सर्वे वेदाः विष्णुनिर्गताः तर्हि ब्रह्मादीनां ऋषित्वप्रसिद्धिर्न स्यादित्यत आह– **भगवद्दृष्टमेवेति** ॥ यदि यदा । तत्र तदा ब्रह्मादीनामपि वेदद्रष्टृत्वे को विशेषो विष्णोरित्यत आह– **वेद इति** ॥ विष्णूक्तो विष्णुनिर्गत एव वेदः । परैर्ब्रह्माद्यैरयं वेद इति तपसैव दृश्यते । नतु विष्णुवत्तपसा विनैवेति विशेष इत्यर्थः ॥

**अथ खण्डार्थः**

याज्ञवल्क्यो मैत्रेयीति स्वस्त्रियं सम्बोद्ध्य इत्युवाच किमिति अरे मैत्रेयि अहमस्मात् स्थानात् गृहस्थाश्रमात् उद्यास्यन्नस्मि प्रव्रजिष्यन्नस्मि । अहं ते तवानया कात्यायन्या अन्यया स्वभार्यया सह अन्तं निर्णयं विभागं करवाणीति । हन्तेत्यास्वादने ॥ १ ॥

सा एवमुक्ता मैत्रेयी उवाच ह किल । किमिति । हे भगोः भगवन्

यत् यदा मे इयं सर्वा पृथिवी वित्तेन पूर्णा स्यात्तदा तेन वित्तपूर्णपृथिवीरूपोपायेनामृता मुक्ता स्यां कथं किम् । नु वितर्के । इति पृष्टो याज्ञवल्क्यो नेति नानेन मुक्ता भविष्यसीति होवाच। किं तत्सर्वात्मना व्यर्थमित्यतोऽभिप्रायमुद्धाटयति– **यथैवेति** ॥ यथा लोके उपकरणवतां धनादिसाधनसम्पत्तिमतां सुखेन जीवितमेव स्यात् तथा ते वित्तेन जीवितमेव स्यात् नतु तेनामृतत्वस्याशास्ति ॥ २ ॥

एवमुक्ता सा मैत्रेयी उवाच । येन वित्तादिनाहममृता न स्यां तेनाहं किं कुर्याम् । ततो मोक्षसाधनत्वेन भगवान् यदेव वेद तदेव मे ब्रूहीति ॥ ३ ॥

एवं तयोक्तो याज्ञवल्क्य उवाच । अरे मैत्रेयि त्वं सती पतिव्रता । नः प्रिया प्रीतिविषया । नः प्रियं यथा भवति तथा भाषसे । एहि । आस्व उपविश । मोक्षसाधनं व्याख्यास्यामि । व्याचक्षाणस्य तु मे वचो निदिध्यासस्व व्यासङ्गं विहाय मनो धत्स्वेति ॥ ४ ॥

ब्रवीतु भगवानित्युवाच मैत्रेयीति ग्राह्यम् । स एवमुक्तो याज्ञवल्क्यो । वक्ष्यमाणमहिमाविशिष्टात्मापरोक्षज्ञानमेव मोक्षसाधनमिति भावेन तावत्पत्युर्यज्जायादिप्रियत्वं तद्धेतुत्वरूपमात्ममहिमानमुवाच। ननु पत्युः स्वेच्छयैव जायाप्रियत्वोपपत्तौ किमात्मेच्छयेत्यत आह– **न वा इति** ॥ अरे मैत्रेयि पत्युः कामाय चतुर्थी तृतीयार्थे कामेन । पतिः प्रियो जायाया इति शेषः। नैव भवति। अस्वतन्त्रत्वात्। किन्तु आत्मनस्तु परमात्मन एव कामायेच्छया पतिः प्रियो भवति । जायाया इति शेषः । तस्य स्वतन्त्रत्वादित्यर्थः। एवमुत्तरवाक्यान्यपि व्याख्येयानि। जायायै जायायाः वित्तस्य वित्ताभिमानिनः कुबेरस्य ब्रह्मणः ब्राह्मणजात्यात्मकचतुर्मुखस्य क्षत्रस्य क्षत्रात्मकस्य वायोः। लोकानां लोकाभिमानिनाम् । भूतानां पञ्चमहाभूताभिमानिनाम् । सर्वस्य सर्वाभिमानिन्याः लक्ष्म्याः। एवमुक्तगुणविशिष्टभगवदपरोक्षज्ञानमेव मोक्षसाधनमिति भावेनाह– **आत्मा वा अरे द्रष्टव्य इति** ॥ वैशब्दोऽवधारणे । दर्शनं कथं स्यादित्यत आह– **श्रोतव्य इति** ॥ दर्शनार्थं श्रवणमनननिदिध्यासनानि

शेषः । विपर्यये पर्यवसानमाह– **तस्मादिति** ।। मुक्तेः सर्वैरभिवाञ्छनीयत्वात् । तारतम्यादिति स्वरूपकथनार्थमुक्तम् ।।

**भाष्यम्**——

**सर्गे सर्गे तु यो नैव शब्दतोऽप्यन्यथा भवेत् ।**
**श्रुत्याख्यः स तु विज्ञेयः इतिहासादिरर्थतः ।।**
**भगवद्दृष्टमेवान्यैर्ब्रह्माद्यैर्दृश्यते यदि ।**
**ऋषिभेदस्तु तत्र स्याद्भेदो नाविष्णुनिर्गतः ।।**
**वेद इत्येव विष्णूक्तस्तपसा दृश्यते परैः ।। इति च ।।**

**इति मैत्रेयिब्राह्मणम् ।। ४ ।।**

**टिप्पणी**——

ननु निश्वसितमेतद् यद् ऋग्वेद इति वेदानामितिहासादीनां च विष्णुजन्यत्वोक्तेः वेदानामपौरुषेयत्वमितिहासादीनां पौरुषेयत्वमिति विशेषः कथमित्यत आह– **सर्गे सर्ग इति** ।। वीप्सेयम् । यः शब्दसमूहः न केवलमर्थतः किन्तु शब्दतोऽपि अन्यथा नैव भवेदिति सम्बन्धः । अर्थतो वाऽन्यथा न भवेत् शब्दतस्तु भवेदेव । यदि सर्वे वेदाः विष्णुनिर्गताः तर्हि ब्रह्मादीनां ऋषित्वप्रसिद्धिर्न स्यादित्यत आह– **भगवद्दृष्टमेवेति** ।। यदि यदा । तत्र तदा ब्रह्मादीनामपि वेदद्रष्टृत्वे को विशेषो विष्णोरित्यत आह– **वेद इति** ।। विष्णूक्तो विष्णुनिर्गत एव वेदः । परैर्ब्रह्माद्यैरयं वेद इति तपसैव दृश्यते । नतु विष्णुवत्तपसा विनैवेति विशेष इत्यर्थः ।।

**अथ खण्डार्थः**

याज्ञवल्क्यो मैत्रेयीति स्वस्त्रियं सम्बोध्य इत्युवाच किमिति अरे मैत्रेयि अहमस्मात् स्थानात् गृहस्थाश्रमात् उद्यास्यन्नस्मि प्रव्रजिष्यन्नस्मि । अहं ते तवानया कात्यायन्या अन्यया स्वभार्यया सह अन्तं निर्णयं विभागं करवाणीति । हन्तेत्यास्वादने ।। १ ।।

सा एवमुक्ता मैत्रेयी उवाच ह किल । किमिति । हे भगोः भगवन्

यत् यदा मे इयं सर्वा पृथिवी वित्तेन पूर्णा स्यात्तदा तेन वित्तपूर्णपृथिवीरूपोपायेनामृता मुक्ता स्यां कथं किम् । नु वितर्के । इति पृष्टो याज्ञवल्क्यो नेति नानेन मुक्ता भविष्यसीति होवाच। किं तत्सर्वात्मना व्यर्थमित्यतोऽभिप्रायमुद्धाटयति– **यथैवेति** ।। यथा लोके उपकरणवतां धनादिसाधनसम्पत्तिमतां सुखेन जीवितमेव स्यात् तथा ते वित्तेन जीवितमेव स्यात् नतु तेनामृतत्वस्याशास्ति ।। २ ।।

एवमुक्ता सा मैत्रेयी उवाच । येन वित्तादिनाहममृता न स्यां तेनाहं किं कुर्याम् । ततो मोक्षसाधनत्वेन भगवान् यदेव वेद तदेव मे ब्रूहीति ।। ३ ।।

एवं तयोक्तो याज्ञवल्क्य उवाच । अरे मैत्रेयि त्वं सती पतिव्रता । नः प्रिया प्रीतिविषया । नः प्रियं यथा भवति तथा भाषसे । एहि । आस्व उपविश । मोक्षसाधनं व्याख्यास्यामि । व्याचक्षाणस्य तु मे वचो निदिध्यासस्व व्यासङ्गं विहाय मनो धत्स्वेति ।। ४ ।।

ब्रवीतु भगवानित्युवाच मैत्रेयीति ग्राह्यम् । स एवमुक्तो याज्ञवल्क्यो । वक्ष्यमाणमहिमाविशिष्टात्मापरोक्षज्ञानमेव मोक्षसाधनमिति भावेन तावत्पत्युर्यज्जायादिप्रियत्वं तद्धेतुत्वरूपमात्ममहिमानमुवाच। ननु पत्युः स्वेच्छयैव जायाप्रियत्वोपपत्तौ किमात्मेच्छयेत्यत आह– **न वा इति** ।। अरे मैत्रेयि पत्युः कामाय चतुर्थी तृतीयार्थे कामेन । पतिः प्रियो जायाया इति शेषः । नैव भवति। अस्वतन्त्रत्वात्। किन्तु आत्मनस्तु परमात्मन एव कामायेच्छया पतिः प्रियो भवति । जायाया इति शेषः । तस्य स्वतन्त्रत्वादित्यर्थः। एवमुत्तरवाक्यान्यपि व्याख्येयानि। जायायै जायायाः वित्तस्य वित्ताभिमानिनः कुबेरस्य ब्रह्मणः ब्राह्मणजात्यात्मकचतुर्मुखस्य क्षत्रस्य क्षत्रात्मकस्य वायोः। लोकानां लोकाभिमानिनाम् । भूतानां पञ्चमहाभूताभिमानिनाम् । सर्वस्य सर्वाभिमानिन्याः लक्ष्म्याः। एवमुक्तगुणविशिष्टभगवदपरोक्षज्ञानमेव मोक्षसाधनमिति भावेनाह– **आत्मा वा अरे द्रष्टव्य इति** ।। वैशब्दोऽवधारणे । दर्शनं कथं स्यादित्यत आह– **श्रोतव्य इति** ।। दर्शनार्थं श्रवणमनननिदिध्यासनानि

कर्तव्यानीत्यर्थः । ननु देवतास्वरूपादिदर्शनादेरपि फलहेतुत्वेन सम्पाद्यत्वात् कथमात्मैवेत्युक्तमित्यत आह– **आत्मनो वा इति** ॥ आत्मनो दर्शनेन श्रवणेन मत्या मननेन विज्ञानेन निदिध्यासनेन इदं सर्वं देवतादिरूपं जगद्विदितं विदितवद् विदितफलं भवति । परमात्मनः प्राधान्येन तज्ज्ञाने सति तत्फलेऽप्रधानजगज्ज्ञानफलमन्तर्भवतीत्यर्थः । कुतः परमात्मनः प्राधान्यमिति चेत् । सर्वस्य जगतः परमात्माश्रितत्वादिति भावेन तद्विपरीतज्ञानिनोऽनर्थमाह– **ब्रह्म तमिति** ॥ यः पुमान् ब्रह्म ब्राह्मणजात्यात्मकं चतुर्मुखम् । आत्मनः परमात्मनोऽधीनत्वेन न वेद । किन्तु अन्यत्र तदनाश्रितत्वेन स्थानान्तरे च वेद तं वेत्तारम् । ब्रह्म चतुर्मुखः । परा लोकालोकस्य परतः अन्धे तमसि अदात् पातयेदित्यर्थः । एवमुत्तरत्रापि क्षत्रादिपदार्थस्तूक्त एव । वित्तं तं परादादित्यपि ग्राह्यम् । यत्किञ्चित्पतिजायापुत्राणामन्यथाज्ञानिनः तमःपातनासमर्थत्वात्तेषामसङ्ग्रहः । एवं ब्रह्मादीनां भगवदनाश्रितत्वज्ञानिनो-ऽनर्थोक्त्या यद्भगवदाश्रितत्वं सिद्धं तदाह– **इदं ब्रह्मेति** ॥ इदं ब्रह्मादिकम् । यत् यत्रायमाधारभूत एवात्मेत्यर्थः ॥ ५-६ ॥

परमात्मनो जगत्कारणत्वाज्जगतस्तदधीनत्वात्प्राधान्यमिति भावेन जगत्कारणत्वादौ दृष्टान्तमाह– **स यथेति** ॥ सः वक्ष्यमाणो दृष्टान्तो यथा । हन्यमानस्य दुन्दुभेर्दर्शने सति श्रूयमाणान् शब्दान् बाह्यांस्तत्तदन्यमुरजादिकारणजन्यांस्तद-धीनान् ग्रहणाय ग्रहीतुं न शक्नुयात् । किन्तु दुन्दुभेस्तदाघातस्य वा पूर्वभावितया ग्रहणेन स शब्दो गृहीतः । तज्जन्यतया तदधीनत्वेन वा । एवं भगवन्तं तदिच्छां च जानन् जगदन्यजन्यमन्याधीनं इति न गृह्णाति । किन्तु भगवदिच्छाजन्यं तदधीनमित्येव गृह्णातीति भावः । यद्वा, हन्यमानस्य दुन्दुभेः तदभिमानिदेवतायाः ग्रहणे सति श्रूयमाणान् शब्दान् बाह्यानन्याधीनान् ग्रहणाय न शक्नुयात् । दुन्दुभेस्तदाघातस्य वा तदभिमानिदेवताया वा ग्रहणेन दुन्दुभ्यादिशब्दो देवताधीनतया गृहीत इति योज्यम् । एवमुत्तरत्रापि । वीणायै वीणायाः वाद्यमानायै वाद्यमानायाः ॥ ७-९ ॥

ब्रह्मणः जगत्कारणत्वमेव दृष्टान्तेनाऽह– **स यथेति** ।। यथा आर्द्रैरेधोभिः काष्ठादिभिरिद्धोऽग्निः । तस्मादभ्याहितात् । अभितः प्रज्वलितात् । पृथक् नानाप्रकारं धूमाः । उपलक्षणमेतत् । विष्फुलिङ्गादयोऽपि विनिश्चरन्ति । एवं वा एवमेवैतत् वक्ष्यमाणमस्य महतो भूतस्य सदा विद्यमानस्य हयग्रीवरूपस्य ब्रह्मणस्सकाशात् निश्वसितं निर्गतम् । किं तदित्यत आह– **यदिति** ।। ऋगाद्याः अवान्तरवेदाः विद्या मूलश्रुतिः श्लोकाः पञ्चरात्रसंहिताः । यद्यपि इतिहासशब्देन श्लोका अपि गृहीताः । यथोक्तं पुरस्तात् । पञ्चरात्रं भागवतं च मूलरामायणं तथा । इतिहास इति प्रोक्त इति । तथापि भारतरामायणयोरेवात्रेतिहासशब्देन ग्रहणमिति न दोषः । सूत्राणि ब्रह्मसूत्राणि । व्याख्यानानि वेदव्याख्यानानि । अनुव्याख्यानानि तद्विस्तारभूतानि अनुव्याख्यानानीति यदित्यर्थः । शब्दप्रपञ्चस्य तज्जन्यत्वमुक्त्वा अर्थप्रपञ्चस्यापि तदाह– **अस्यैवेति** ।। एतानि प्रमाणप्रसिद्धानि सर्वाणि महदादीनि अस्यैव सकाशात् निश्वसितानि निर्गतानि । सृष्टावायासाभावसूचनाय निश्वसितमित्युक्तम् ।। १० ।।

इदानीममुक्तानां परमात्माधीनत्वमेव दृष्टान्तेनाऽह– **स यथेति** ।। स वक्ष्यमाणो दृष्टान्तो यथा । सर्वासामपां समुद्रो वरुणः अपां खातो वा । एकायनं मुख्याश्रयः । एवं सर्वेषां स्पर्शानां स्पर्शाभिमानिनाम् । त्वक् त्वगिन्द्रियान्तर्गतं भगवद्रूपम् । भगवत्त्वगिन्द्रियं वा एकायनम् । एवमुत्तरत्रापि । अध्वनां गतिरूपकर्मणाम् ।। ११ ।।

इदानीं मुक्ताश्रयत्वं भगवतः सदृष्टान्तमाह– **स यथा सैन्धवखिल्य इति** ।। सिन्धुः समुद्रोदकं तत्र भवः सैन्धवः । स चासौ खिल्यश्च सैन्धवखिल्यो लवणशकलं उदके वरुणापां खातरूपसमुद्राश्रितोदके प्रास्तः प्रक्षिप्तः सन्नुदकमनु खिल्यारम्भकत्वेन तदवयवभूतमुदकं विलीयमानमन्वेव । विलीयते कश्चिदपि अस्य विलीनस्य खिल्यस्योद्ग्रहणाय पूर्ववत् विशिष्य ग्रहीतुं नैव शक्तः स्यात् । हेति प्रसिद्धमाह । कुतः? यतो यतो यस्माद्यस्माद्देशात् ।

तद् उदकमाददीत गृहीत्वाऽस्वादयेत् । तत्र तत्र लवणमेव लवणरसोपेतमेव गृह्यते न खिल्यभाव इति । तथाच विलीनभावस्य सैन्धवखिल्यस्य सर्वासामपां च समुद्र एकायनमिति ग्राह्यम् । यथाऽयं दृष्टान्तः । एवं अरे मैत्रेयि विज्ञानघनो जीव एव तेभ्यो भूतेभ्य अबादिभ्यः । समुत्थाय तदुपादानकदेह-सम्बन्धेनोत्पद्य । तानि लीयमानानि देहारम्भकभूतानि अन्वेव विनश्यति सर्वथा देहवियोगलक्षणमुक्तिं प्राप्नोति । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' (ब्र.सू.भा. ३-१-१) इति वचनात् । ततश्चेदं महद्भूतं अनन्तमपारं भगवन्तं पूर्वमुक्ताश्रयं प्राप्नोति। अत्र वरुणवद् अपांखातवद्वा भगवान् समुद्रजलवत्पूर्वमुक्ताः सैन्धवखिल्यवत् मुच्यमानजीव इति विवेकः ॥ १२ ॥

न हास्योद्ग्रहणायेत्युक्तसैन्धवखिल्यसाम्यं मुच्यमानस्याऽह– **न प्रेत्येति** ॥ प्रेत्य मुक्त्यनन्तरं मुक्तानां सञ्ज्ञा नामधेयं उपलक्षणमेतत् । तत्स्वरूपं चामुक्तैः सम्यक् ज्ञायत इति सञ्ज्ञा शास्त्रं विना सम्यक् ज्ञानं नास्तीत्यरे अहं ब्रवीमीति याज्ञवल्क्य उवाच । सा एवमुक्ता मैत्रेयी मोक्षस्वरूपं सम्यक् ज्ञातुकामा सर्वथा ज्ञानाभावोऽनेनोक्त इत्यारोप्योवाच । भगवन् अत्रैवावश्यं वेदितव्य एव विषये मा मां अमूमुहत् अमोहयत् । कथं प्रेत्य मोक्षानन्तरं सञ्ज्ञा ज्ञानं नास्तीति । नचेदं सम्यग् ज्ञानम् । परमपुरुषार्थे मोक्षे ज्ञानाभावस्यासम्यक्त्वादिति । सः एवमुक्तो याज्ञवल्क्यः अहं मोहं मोहकवाक्यं न ब्रवीमि । त्वं तु मुक्तसञ्ज्ञाऽप्यमुक्तैर्न ज्ञायत इति मदभिप्रायमज्ञात्वा अन्यथा कल्पयसीत्युवाच । पुनस्तस्याः विशेषजिज्ञासां ज्ञात्वा मुक्तस्वरूप-मुपदिशति– **अलमिति** ॥ इदं मुक्तजातं विज्ञानाय यथायोग्यपरमात्मस्वरूपादिकं विशेषेण ज्ञातुमलं समर्थम् ॥ १३ ॥

निर्विशेषचैतन्यभावमापन्नस्य मुक्तस्य न विज्ञानादिकमस्तीति वदतां मायावादिनां मते अनिष्टप्रसङ्गं वक्तुं तस्य व्याप्तिसापेक्षत्वाद् व्यतिरेकव्याप्तिं तावदाह– **यत्र हीति** ॥ यत्र यदा । द्वैतं द्वयोर्भावो द्विता । भेद इति यावत् । तस्या इदं धर्मि । द्वैतं भिन्नं वस्त्वित्यर्थः । इवशब्दो भिन्नस्य वस्तुनः

पारतन्त्र्याभिप्रायेण तत् तदा । इतरः पुरुषः । इतरं घटादिकम् । पश्यतीत्यादि हिशब्देन यदा द्वैतसद्भावः तदैव दर्शनादिभोग इति व्याप्तौ प्रमाणप्रसिद्धिमाह । एवं प्रसङ्गाङ्गव्याप्तिमुक्त्वा प्रसङ्गमाह– **यत्रेति** ॥ यत्र मुक्तौ अविद्यायां निवृत्तायाम् । अस्य विदुषः । सर्वं करणादिकम् । आत्मैवाभूत् स्वव्यतिरेकेण किमपि नाभूत् । तत् तस्यामवस्थायां केन करणेन कं विषयं जिघ्रेत् । घ्राणादिभोगो न स्यादित्यर्थः । येनेश्वरेण इदं सर्वं जीवो विजानाति तं परमात्मानं केन विजानीयात् । तज्ज्ञानाभावश्च स्यात् । विज्ञातारं स्वात्मानं केन विजानीयात् । एवं मुक्तान्तरविषयकज्ञानमपि न स्यात् इति ग्राह्यम् । नचेष्टापत्तिः । सर्वाज्ञानस्यापुरुषार्थत्वादिति ॥ १४ ॥

इति मैत्रेयीब्राह्मणम् ॥ ४ ॥

**उपनिषत्**—

## अथ मधुब्राह्मणम्

[पृथिव्याद्यभिमानिदेवतान्तर्यामी, शरीराद्यभिमानिदेवतान्तर्यामी भगवान् हयग्रीवः]

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चाय-मध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽय-मात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १ ॥ इमा आपः सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं रेतसस्तेजोमयोऽ-मृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ २ ॥ अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्‌ यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेद-**

ममृतमिदं ब्रह्मेदं सर्वम् ॥ ३ ॥ अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ४ ॥ अयमादित्यः सर्वेषां भूतानां मध्वस्याऽदित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिद ब्रह्मेदं सर्वम् ॥ ५ ॥ इमा दिशः सर्वेपां भूतानां मध्वासां दिशां सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोममोऽमृतमयः पुरुषो यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ६ ॥ अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ७ ॥ इयं विद्युत्सर्वेषां भूतानां मध्वस्या विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तेजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ८ ॥ अयं स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन् स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं

ब्रह्मेदं सर्वम् ॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १० ॥ अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ ११ ॥ इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १२ ॥ इदं मानुषं सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ॥ १३ ॥ अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्ना-त्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्ममात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १४ ॥ स वा अयमात्मा सर्वेषां भूतानामधिपतिस्सर्वेषां भूतानां राजा तद्यथा रथनाभौ च रथनेमौ चारास्सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्व एत आत्मानः समर्पिताः ॥ १५ ॥

[मधुविद्या नारायणवर्म च दधीचिऋषेरुपदेशः]

इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् तद्वांनरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम् । दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥ इदं वैतन्मधु दध्यङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् आथर्वणायाश्विनादधीचेऽश्व्यं शिरः प्रत्यैरयतम् । स वा मधु प्रावोचदृतायं त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरस्स पक्षी भूत्वा पुरः पुरुष आविशदिति स वा अयं पुरुषः सर्वासु पूर्षु पुरि शयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम् ॥ १८ ॥

[सर्वजीवाः भगवतः प्रतिबिम्बाः]

इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभू-रित्यनुशासनम् ॥ १९ ॥ इति मधुब्राह्मणम्

भाष्यम्—

भगवतो रूपं रूपंप्रति जीवाख्यःप्रतिबिम्बो बभूव। बभूवेति 'सदेव सोम्येदमग्र आसीत्' इतिवदनादित्वार्थे।

'सुखदा सर्वभूतानां पृथ्वी मधुवदुच्यते ।
पृथिव्याश्चैव भूतानि तथा सर्वाश्च देवताः ॥
पृथिव्यादिषु देवेषु शरीरादिषु च स्थितः ।
एक एव परो विष्णुर्हयशीर्षस्वरूपधृक् ॥
अनन्ततेजा नित्यश्च स एव ब्रह्म सर्वगः ।
तदेव गुणपूर्णत्वाद् ब्रह्म सर्वमनूनतः ॥

**टिप्पणी—**

**अथ भाष्यार्थः**

स्वहृदिस्थोपासनमेव मोक्षसाधनं न बहिष्ठोपासनमित्युक्त्या प्राप्तां तयो रूपयोर्वैलक्षण्यशङ्कां तयोरभेदोक्त्या परिहरन्नस्य महतो भूतस्येत्युक्तहयग्रीवस्य महिमान्तरमाह– **इयं पृथिवीत्यादिना** ॥ स ईश्वरो रूपं रूपं देहं देहं प्रतिरूपो रूपान्तरं प्रतिबिम्बो बभूवेति रूपं रूपमित्यस्य परकीयव्याख्यानमसत् । ब्रह्मणो जीवरूपेण प्रतिबिम्बभवनस्य जीवब्रह्मैक्यनिरासेनैव निरस्तत्वादिति भावेन तद्व्याचष्टे– **भगवत इति** ॥ शृण्वे वीर इति पूर्वं त्रिविधजीवानां प्रस्तुतत्वात् जीवाख्य इत्युक्तम् । प्रतिबिम्बः । तदधीनत्वे सति तत्सदृश इत्यर्थः । बभूवेत्युक्त्या जीवस्य भगवत्प्रतिबिम्बत्वमिदानीं नास्तीति प्रतीयते तां निवारयति– **बभूवेतीति** ॥ व्याख्यातप्रायमेतत् । इयं पृथिवी सर्वेषां भूतानां ब्रह्मादीनां मधु कार्यम् । पृथिव्याश्च सर्वाणि भूतानि मधु कार्यम् । शरीराणां पृथिवीजन्यत्वादिति व्याख्यानमसत् । परमते विद्युत्स्तनयित्नुमानुषा-दिशब्दानां प्रसिद्धार्थत्वेन तेषां भूतकार्यत्वस्य भूतानां तत्कार्यत्वस्य चाभावात् । मधुशब्दस्य कार्ये प्रयोगाभावाच्च प्रमाणविरुद्धत्वाच्चेति भावेन ब्राह्मणं प्रमाणेन व्याचष्टे– **सुखदेति** ॥ मधुवदित्युक्तवत्यर्थसादृश्यं वक्तुं सुखदेत्युक्तम् । यथा प्रसिद्धं मधु सुखदं तथाऽऽश्रयत्वादिना पृथिवीभूतानां सुखदा । भूतानि च पृथिव्याः शुश्रूषादिना सुखप्रदानीत्यर्थः । परोक्तकार्यत्वव्यावृत्त्यर्थं सुखदैवेत्येवकारसम्बन्धः । नन्वेवं व्याख्यानेऽपि पृथिव्यादीनां भूतसुखदत्वसम्भवेऽपि

भूतानां पृथिव्यादिसुखदत्वं नोपपद्यते। पृथिव्यादीनां जडत्वेन सुखाभावादित्याशङ्कां परिहरन् कृतं व्याख्यानं इमा आप इत्यादावतिदिशति– **तथेति** ॥ सर्वा देवता अबाद्यभिमानिन्यो भूतानां सुखदाः । चशब्देन भूतानि तासां देवतानां सुखदानीति समुच्चिनोति । तथाच पृथिवीशब्देनापि देवतैव ग्राह्येति भावः । यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरः तेजोमयः अमृतमयः पुरुषोऽयमेव सः । योऽयमात्मेत्यादिचतुर्दशखण्डगतं वाक्यजातं व्याचष्टे– **पृथिव्यादिष्विति** ॥ तेजोमयोऽमृतमय इत्येतत् जीवपरमिति प्रतीतिनिरासाय व्याचष्टे– **अनन्तेति** ॥ इदं ब्रह्मेदं सर्वमिति पूर्वप्रकृतस्यात्मनो जीवस्य ब्रह्मत्वादिकमुच्यते इति प्रतीतिनिरासायाऽह– **ब्रह्मेति** ॥ तदेव हयशीर्षस्वरूपमेव । न जीवतत्त्वमित्यर्थः । तत्कुतो ब्रह्मेत्यत आह– **गुणेति** ॥ सर्वमित्यस्य सर्वगमिति व्याख्यानमुपपादयति– **सर्वमिति** ॥ अनूनतो देशतोऽनूनत्वात् ॥

**भाष्यम्—**

**आत्मनामा परो विष्णुः सर्वगो यः प्रकीर्तितः ।**
**स एव हयशीर्षाख्यस्त्वधिदैवादिषु स्थितः ॥**
**अराणामाश्रयौ यद्वद् बहिरन्तः प्रतिष्ठितौ ।**
**नाभिनेमी तथा विष्णुर्जीवानामाश्रयः स्थितः ॥**
**स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।**
**शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ॥**
**परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ।**
**भूताख्यः सर्वजीवानां विरिञ्चानां च सर्वशः ॥**
**आत्मनाम्नां स एवैको राजाऽधिपतिरेव च ॥**

**टिप्पणी—**

ननु श्रुतौ योऽयमात्मेति पृथिव्यादिषु शरीरादिषु च स्थितस्यात्माभेद उच्यते ।

तस्यैव चामृतत्वादिकमपि । तथाचैक एव परो विष्णुर्हयशीर्षस्वरूपधृगिति कथं व्याख्यायते इत्यतस्तदनूद्य तस्मिन्नात्मशब्दं निर्वक्ति– **आत्मेति** ॥ यः पृथिव्याद्यधिदैवादिषु स्थितः हयशीर्षाख्यः परो विष्णुः स एव यतः सर्वगोऽत आत्मनामा प्रकीर्तित इत्यर्थः । पृथिव्यादीनां शरीरादीनां चाधिदैवत्वाध्यात्मत्वप्रदर्शनार्थमेव पुनरनुवादः । तद्यथेत्यादि आत्मानः समर्पिता इत्यन्तं वाक्यं व्याचष्टे– **अराणामिति** ॥ अन्तःप्रतिष्ठितो नाभिः । बहिःप्रतिष्ठितो नेमिरिति यथायोग्यं सम्बन्धः । जीवानामिति भूतशब्दार्थः । आत्मनाम्नां विरिञ्चानां चेत्यपि ग्राह्यम् । अयं वै दश च सहस्राणि बहूनि चानन्तानि चेत्येतद्व्याचष्टे– **स एवेति** ॥ हरयः शता दशेति मन्त्रे शतशब्दग्रहणात् तद्व्याख्यानरूपब्राह्मणेऽपि चशब्देन शतानि चेत्येतद्ग्राह्यमिति भावेन तस्यार्थ उक्तः– **शतमिति** ॥ स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजेत्येतद् व्याचष्टे– **भूताख्येति** ॥ भूतशब्दोक्तानामपि विरिञ्चाना-माधिक्यविवक्षया यदाह श्रुतिः सर्व एते आत्मान इति । तदनुरोधेनात्र भूतानामित्येतदुपलक्षणमिति भावेनोक्तम्– **आत्मनाम्नां विरिञ्चानामिति** ॥

**भाष्यम्—**

**स्वामित्वाद्राजशब्दोऽयमाधिक्यात्पालनात्तथा॥**
**अधिपश्चेति सम्प्रोक्तः पुरुषः पुरुषस्थितेः ।**
**पुराख्येष्वेव देहेषु हृत्पुर्यपि वसत्यसौ ॥**
**नानेन किञ्चिदव्याप्तं नानेनाऽच्छादितं न च ।**
**नैवास्मात्पूर्वकं किञ्चिन्नैवास्मादपरं तथा ॥**
**सर्वस्माद्बाह्यतश्चासौ सर्वस्मादन्तरस्तथा।**
**व्याप्तेरात्मेति स प्रोक्तो ब्रह्मेति गुणपूर्तितः ॥**
**स सर्वस्यापरोक्षज्ञ इति वेदानुशासनम् ।**
**विरिञ्चस्त्वात्मशब्दोक्तो मानुषं मनुरुच्यते ॥**

**सत्यं च स्तनयित्नुश्च वायो रूपान्तरे स्मृते ।**
**एत एव स्वरे सत्ये जीवे चाध्यात्मसंस्थिताः ॥**
**तेषां नियामको विष्णुस्तत्र तत्रैव संस्थितः ।**

**टिप्पणी—**

राजाधिपतिशब्दयोरर्थभेदमाह— **स्वामित्वादिति** ॥ अयं विष्णुः राजेति शब्दो यस्य स राजशब्दः । सर्वासु पूर्षु पुरिशय इत्येतत् स वा अयं पुरुष इत्युक्तपुरुषशब्दनिर्वचनपरमिति ज्ञापयन् सवा इत्येतद्व्याचष्टे— **पुरुष इति** ॥ इति सम्प्रोक्त इत्येतदत्रापि सम्बद्ध्यते । उक्तमेव विवृण्वन् पूर्षु पुरीत्यनयोरर्थभेदकथनपूर्वकं सर्वासु पूर्षु पुरिशय इत्येतद्व्याचष्टे— **पुराख्येष्वेवेति** ॥ असावेवेति सम्बन्धः । असावेक एव विष्णुः देहेषु हृत्पुर्यपि रूपभेदेन वसतीत्यर्थः । नैनेन किञ्चनानावृतमित्येतद्व्याचष्टे— **नानेनेति** ॥ नैनेन किञ्चनासंवृतमित्येतद् व्याचष्टे— **नानेनेति** ॥ तदेतद् ब्रह्मापूर्वमनपरम-नन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनमित्येतद्व्याचष्टे— **नैवास्मादि-त्यादिना** ॥ एवेत्यस्यासावित्यत्रापि सम्बन्धः । असावेव सर्वस्मात् बाह्यतः सर्वस्मादन्तरं च । नत्वस्मात् तदन्यद्वाह्यमन्तरं चेत्यर्थः । अयमात्मा इदं मानुषं इदं सत्यमयं स्तनयित्नुरिति वाक्यचतुष्टयगतात्मादिशब्दाभिधेयमाह— **विरिञ्च इति** ॥ यश्चायमध्यात्मं शाब्दः सौवरः यश्चायमध्यात्मं सात्यः यश्चायमध्यात्ममात्मेति वाक्यगतसौवरसात्यशब्दान्तर्गतस्वरसत्यशब्दयोरात्मशब्दस्य चार्थमाह— **एत एवेति** ॥ वायुरूपद्वयं विरिञ्चश्चेत्येत एवेत्यर्थः । इदानीं सौवरादिशब्दाभिधेयमाह— **तेषामिति** ॥ सौवरादिशब्दाभिधेय इति शेषः ॥

**भाष्यम्—**

**जीवे स्थितस्त्वात्मनामा सौवरः स्वरगः स्मृतः ॥**
**सत्यगः सत्यनामाऽसौ धर्मगो धार्म एव च ।**
**मनोः स्वायम्भुवस्याख्या मानुषेत्येव देहिषु ॥**

**बहिश्च तद्गतो विष्णुर्मानुपेत्येव कीर्त्यते ।**
**प्रातिश्रुत्क इति श्रोत्रे तैजसो विद्युति स्थितः ॥**
**इति नानाविधैर्नामसमूहैर्विष्णुरिज्यते।**
**दध्यङ्ङाथर्वणोऽश्विभ्यामेतां विद्यामदात्पुरा॥**
**हयग्रीवब्रह्मविद्येत्येषा ब्रह्मादिभिर्धृता॥ इति च॥**

**टिप्पणी—**

तत्कथमित्यतस्तद्विवृणोति– **जीवे स्थित इत्यादिना** ॥ जीवे जीवस्थे विरिञ्चे । स्वरगः स्वरस्थवायुगः । सत्यग इत्येतदपि एवमेव व्याख्येयम् । यश्चायमध्यात्मं धार्म इति धार्ममाह– **धर्मग इति** ॥ धर्मगो यमगः । यश्चायमध्यात्मं मानुष इत्येतद्व्याख्यातुमाह– **मनोरिति** ॥ देहिष्वध्यात्मं बहिरधिदैवे च स्थितस्य स्वायम्भुवस्य मनोः मानुषेत्येव आख्या । किं तत इत्यतः इदानीं मानुष इत्यस्यार्थमाह– **तद्गत इति** ॥ देहिगतमनुगतः विष्णुरेवेति सम्बन्धः । मानुषेत्युभयत्राविभक्तिको निर्देशः । यश्चायमध्यात्मं श्रौत्रः प्रातिश्रुत्क इत्यस्य यश्चायमध्यात्मं तैजस इत्यस्य चार्थमाह– **प्रातिश्रुत्क इतीति** ॥ श्रोत्रे स्थितः सन् प्रतिशृणोतीति प्रातिश्रुत्कः । विद्युति शरीरगततेजसीत्यर्थः । सौवरादिशब्दनिर्वचनप्रकारं शरीरादिशब्देऽप्यतिदिशति– **इतीति** ॥ शरीरगतः शारीरः । रेतसि स्थितो रैतसः । वाचि स्थितो वाङ्मयः । हृद्याकाशस्तद्गतः । प्राणे स्थितः प्राणः । चक्षुषि स्थितश्चाक्षुषः । मनसि स्थितो मानस इत्येवं नानाविधैः शब्दैः विष्णुरिज्यत इत्यर्थः । इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाचेति वाक्यं व्याचष्टे– **दध्यङिति** ॥ एतां पूर्वोक्तमधुविद्यां अथर्वणगोत्रोत्पन्नो दध्यङ्नामाऽश्विभ्यामदादित्यर्थः । वंशब्राह्मणाभिप्रायमाह– **पुरेति** ॥

**भाष्यम्—**

**प्रत्यैरयतं प्रतिसमधत्तम् । ऋतायन् सत्यं कुर्वन् । कक्ष्यं नारायणकवचम् । त्वाष्ट्रं त्वष्टुः पुत्रेण विश्वरूपेणेन्द्रायोक्तम् । सनये लाभाय ।**

**दंसः कर्म । स्तनयित्नु र्वृ ष्टि मिव । तस्यां विद्यायां परस्योक्तायां तव शिरश्छेत्स्यामीतीन्द्रेण दधीचं प्रत्युक्ते सोऽश्विभ्यामावां ब्रूहीत्युक्त इन्द्रेणोक्तमाह । तदाश्विभ्यां पाव इत्युक्त्वा तच्छिरः छित्वाऽन्यत्र निधाय अश्वशिरः सन्धितम् । तेन विद्याया मुक्तायां तस्मिंन्निन्द्रेण छिन्ने पूर्वशिरः सन्धितम् । पूर्वं जानन्नपीन्द्रः पश्चाद्विश्वरूपाच्छुश्रावेति पुनर्नवत्वायेति न 'विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम्' इत्यनेन विरोधः ।**

**इति मधुब्राह्मणम् ॥ ५ ॥**

**टिप्पणी—**

अप्रतीतेः प्रत्यैरयन्त इत्येतदनूद्य व्याचष्टे– **प्रत्यैरयतमिति** ॥ ऋतायन् सत्यं परिपालयितुं इच्छन्निति व्याख्यानमसत् । ततस्तावदर्थाप्रतीतेरिति भावेन तदर्थमाह– **ऋतायन्निति** ॥ कक्ष्यं गोप्यमित्यन्यथाप्रतीतिनिरासायार्थमाह– **कक्ष्यमिति** ॥ त्वाष्ट्रं त्वष्टृदेवताकमित्यन्यथाप्रतीतिनिरासायानूद्य व्याचष्टे– **त्वाष्ट्रमिति** ॥ अत एव कक्ष्यं नारायणकवचमिति व्याख्यातम् । 'इमां विद्यामधिगतो विश्वरूपाच्छतक्रतुः' इति वचनात् । विश्वरूपेणेन्द्रं प्रति नारायणकवचस्यैवोपदिष्टत्वात् । अप्रतीतेः सनये इत्यस्यार्थमाह– **सनय इति** ॥ षण लाभ इति धातोरित्यर्थः । दंस इत्यस्याप्रतीतेरर्थमाह– **दंस इति** ॥ तन्यतुर्न वृष्टिमित्यस्यार्थमाह– **स्तनयित्नुरिति** ॥ नकारस्यार्थ इवेति । अश्विनौ दधीचे अश्व्यं शिरः किमर्थं प्रत्यैरयतम् । स दध्यङ् अश्वशीर्ष्णा किमर्थं मधुविद्यां अश्विभ्यामुवाचेत्यतस्तदुपयुक्तां कथामाह– **तस्यामित्यादिना** ॥ इन्द्रेण तस्यां विद्यायामित्याद्युक्तं अश्विनौ प्रत्याहेत्यर्थः । पावः रक्षावः त्वच्छिर इति शेषः । तच्छिरः तस्य दधीचेः प्राक्तनं शिरः । तेनाश्वशिरसा । तस्मिन्नश्वशिरसि । नन्वनया कथया अश्विभ्यां दधीचैतद्विद्याकथनात्पूर्वं इन्द्रः एतां विद्यां जानातीति लभ्यते । कथमन्यथा तस्यां विद्यायां परस्योक्तायां तव शिरःच्छेत्स्यामीति ब्रूयात् । तथा विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामित्यनेन वंशब्राह्मणगतवाक्येन विरोधः स्यात् । तत्र हि अश्विभ्यां विश्वरूपस्याध्ययनमुच्यते ।

स च विश्वरूपः इन्द्रस्य गुरुः। एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुरित्युक्तेः। तथाचेन्द्रेणाश्विभ्यां पूर्वमियं विद्या न ज्ञातेति प्राप्तेरित्यतस्तं विरोधं परिहरति– **पूर्वं जानन्निति** ॥ इतीमां विद्यां पूर्वं जानन्नपीति प्रथमेतिशब्दस्य सम्बन्धः। किमर्थं शुश्रावेत्युक्तम्। पुनर्नवत्वायेति। प्रागधीताया अपि विद्यायाः वृत्रहननार्थं पुनर्नवत्वायेत्यर्थः ॥ ५ ॥

### अथ खण्डार्थः

इयं पृथिवी तदभिमानिनी सर्वेषां भूतानां मधु मधुवत् आश्रयत्वादिना सुखदा। अस्यै पृथिव्यै अस्याः पृथिव्याः सर्वाणि भूतानि मधु शुश्रूषादिना सुखदानि। यश्चायमस्यां पृथिव्यां विद्यमानस्तेजोमयः अनन्ततेजः अमृतमयो नित्यः अपूर्णत्वादिना नाशरहितः। पुरुषः यश्चायं प्रमितः शारीरस्थः तेजोमयोऽमृतमयः पुरुषः। सः अयमेव। अयं कः। यः पूर्वोक्तः आत्मा सर्वगो हयशीर्ष इत्यर्थः। आत्मस्वरूपमाह– **इदमिति** ॥ इदममृतं नित्यं ब्रह्मगणपूर्णं सर्वमनूनं सर्वगमित्यर्थः। एवमुत्तरत्रापि व्याख्यानम् ॥ १ ॥

रैतसः रेतसि स्थितः ॥ २ ॥

वाङ्मयः। वाचि स्थितः ॥ ३ ॥

प्राणः त्वगिन्द्रियस्थितः ॥ ४ ॥

चाक्षुषः चक्षुःस्थः ॥ ५ ॥

श्रौत्रः श्रोत्रगतः सन् प्रतिशृणोतीति प्रतिश्रुत्कः ॥ ६ ॥

मानसो मनोगतः ॥ ७ ॥

तैजसः शरीरतेजोगतः ॥ ८ ॥

स्तनयित्नुः तद्गतो वायुः। शाब्दः शब्दगतः सन्। सौवरः स्वरगतः ॥ ९ ॥

हृद्याकाशः तद्गतः ॥ १० ॥

अयं धर्मो यमः । धार्मो धर्मगतः ॥ ११ ॥

सत्यम् । सत्यगतो वायुः । सात्यः सत्यगतः । अत्र शारीरो रैतसः इत्यादौ शरीरादिशब्दैस्तदभिमानिदेवता ग्राह्याः ॥ १२ ॥

इदं मानुषं स्वायम्भुवमनुः मानुषः । देहिगतस्वायम्भुवमनुगतः ॥ १३ ॥

अयमात्मा विरिञ्चः । अध्यात्ममात्मा जीवगतविरिञ्चगतः ॥ १४ ॥

तस्याऽत्मनो महिमानमाह– **स वा इति** ॥ सर्वेषां भूतानां जीवानाम् । उपलक्षणमेतत् । सर्वेषामात्मनां विरिञ्चानां च अधिपतिराधिक्यात्पालनात् । राजा स्वामी कथमित्यतः एतदेव सदृष्टान्तमुपपादयति– **तद्यथेति** ॥ तत् वक्ष्यमाणं निदर्शनं यथा । चशब्दौ परस्परसमुच्चये । विष्णोर्भूतादीनामन्त-र्बहिश्चाश्रयत्वप्रदर्शनाय नाभौ नेमौ चेति दृष्टान्तद्वयोपादानम् ॥ १५ ॥

इयं मधुविद्याऽतिप्रशस्ता पूर्वैरनुष्ठितत्वात् उपदिष्टत्वाच्चेत्याह– **इदमिति** ॥ दध्यङ्नामा आथर्वणगोत्रोत्पन्नो ब्राह्मणः इदं प्रमाणप्रमितम् । तत् मधु मधुविद्यामश्विभ्यामुवाच । वा इति अस्यार्थस्य प्रमाणसिद्धत्वमाह । पश्यन्वेदद्रष्टा ऋषिः । तदेतत् दध्यङाथर्वणोऽश्विभ्यामुवाचेत्येतत्प्रमेयमुवाच । तां ऋचं पठति– **तद्वामिति** । हे नरा नेतारौ । अश्विनौ वां युवयोर्यत् दधीचः पूर्वशिरच्छेदनाश्वशिरःसन्धानादिरूपं उग्रं क्रूरं दंसः कर्म यच्च दध्यङाथर्वणोऽश्वस्य शीर्ष्णाईं शीर्ष्णेव वां युवाभ्यां मधु मधुविद्यां प्रोवाचेति तदुभयं सनये मोक्षादिपुरुषार्थलाभाय । ह निश्चितमाविष्कृणोमि । कः किमिव तन्यतुः स्तनयित्नुः वृष्टिं न वृष्टिमिव । स्तनयित्नुर्यथा वृष्टिमाविष्कृणोति तथेत्यर्थः ॥ १६ ॥

अत्रैवागमान्तरं वक्तुमाह– **इदमिति** ॥ तदेतत् दध्यङाथर्वणोऽश्विभ्यां मधुवाचेत्येतत् । तां ऋचं पठति– **आथर्वणायेति** ॥ हे दस्रौ शत्रुभेदकौ अश्विना अश्विनौ युवामाथर्वणाय दधीचे अश्व्यं अश्वसम्बन्धिशिरः प्रत्यैरयतं प्रतिसमधत्तम् । सः सन्धिताश्वशिरा दध्यङ् ऋतायन् वां युवयोर्मधु वक्ष्यामीति पूर्वं प्रतिज्ञातं

सत्यं कुर्वन् वां युवाभ्यां मधु मधुविद्यां यत् त्वाष्ट्रं त्वष्टुः पुत्रेण विश्वरूपेणेन्द्रायोक्तं कक्ष्यं नारायणकवचं तदपि प्रवोचत् प्रावोचदित्यर्थः । अडभावश्छान्दसः ॥ १७ ॥

यश्चायमध्यात्मं शारीर इति सर्वेषु शरीरेषु भगवांस्तिष्ठतीति यदुक्तं तत्र मन्त्रं वक्तुमाह– **इदमिति** ॥ पश्यन् ऋषिः तदेतत् सर्वशरीरस्थत्वमुवाच । तं मन्त्रमुदाहरति– **पुर इति** ॥ स पुरुषो द्विपदः पुरः शरीराणि चक्रे चतुष्पदः पुरश्चक्रे । ततः पक्षी भूत्वा द्विपदः पुरश्चतुष्पदश्च पुर आविशत् । पुरुषो जीव इति प्रतीतिं निवारयन् पुरुषशब्दं निर्वक्ति– **स वा अयमिति** ॥ स एव परमात्मा पुरुष इति उच्यते । कुतः यतः सर्वासु पूर्षु देहेषु । पुरि हृत्पुर्यपि । शेत इति शयः । न केवलं पुरस्थितिमात्रं, किन्तु अन्तर्बहिर्व्याप्तिश्चास्तीत्याह– **नैनेनेति** ॥ एतेनानेनाऽत्मना । किञ्चनाऽनावृतमव्याप्तं न किन्तु व्याप्तमेव असंवृतमनाच्छादितम् ॥ १८ ॥

अयमेव स योऽयमात्मेत्युक्तपरमात्मरूपाणामभेदे मन्त्रं वक्तुमाह– **इदमिति** ॥ तदेतत् शरीरादिगतभगवद्रूपाणामभिन्नत्वम् । मन्त्रं पठति– **रूपं रूपमिति** ॥ जीवसमुदायः परमेश्वरस्य रूपं रूपं प्रतिरूपः प्रतिबिम्बो बभूव । तद्बिम्बरूपमस्य जीवस्य चक्षणाय साक्षात्काराय भवति मुक्त्यर्थं साक्षात्कारविषयो भवतीति यावत् । नन्वेकस्य भगवतः कथं विचित्रजीवबिम्बत्वमित्यत आह– **इन्द्र इति** ॥ स इन्द्रः परमेश्वरो मायाभिः स्वसामर्थ्येन पुरुरूपः अनन्तजीवबिम्बरूपः ईयते ज्ञायते । अस्य इन्द्रस्य हरयः हरिनामकानि रूपाणि दशशतानि युक्ताः संयुक्ताः व्यूहशः सन्तीति हि प्रसिद्धमित्यर्थः । नन्वत्र मन्त्रे परमात्मरूपाणामभेदाप्रतीतेः कथं तदुदाहरणमित्यतस्तस्याभिप्रायमाह– **अयं वा इति** ॥ हरयो हरिनामकाः दश मत्स्याद्याः अयं वै हयशीर्षः परमात्मैव चशब्दात् शतानि नारायणादीनि हरिनामकानि । अयं वै अनेन शता दशेत्येतत् पृथग्व्यूहपरत्वेनापि व्याख्याति– **सहस्राणीति** ॥ विश्वादीनि सहस्राणि हरयः अयं वा इति सम्बन्धः । शतमनन्तं भवतीति वचनात्

शतेत्येतदनन्तपर्यायमित्यभिप्रेत्य व्यूहान्तरपरत्वेनापि व्याचष्टे– **अनन्तानि चेति** ।। अजितादीनि । मत्स्यादिपरमात्मव्यूहानां यदभेद उक्तस्तन्महिमानमाह– **तदेतदिति** ।। अयं पूर्वोक्त आत्मा व्याप्तो ब्रह्म यत् तदेतत् ब्रह्म गुणपूर्णम् । न विद्यते पूर्वं यस्मात्तदपूर्वमनादीति यावत् । न विद्यते परमुत्तरं यस्मात्तदनपरं अनन्तमित्यर्थः । न विद्यतेऽन्तरमन्यत् यस्य तदनन्तरम् अयमेव सर्वस्मादन्तरः न विद्यते बहिरन्यद्यस्य तदबाह्यं अयमेव सर्वस्माद् बाह्यः सर्वमनुभवतीति सर्वानुभूस्सर्वज्ञ इति वेदानुशासनमित्यर्थः ।। १९ ।।

इति मधुब्राह्मणम् ।। ५ ।।

**उपनिषत्—**

## अथ वंशब्राह्मणम्

**अथ वंशः पौतिमाष्यो गौपवनाद् गौपवनः पौतिमाष्या-त्पौतिमाष्यो गौपवनाद् गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ।। १ ।। आग्निवेश्यादाग्निवेश्यः शाण्डिल्या-च्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद् गौतमः सैतवप्राचीनयोग्याभ्यां सैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायना-द्बैजवापायनः कौशिकायनेः कौशिकायनिः ।। २ ।। घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्यः आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपबन्धनेरौपबन्धनिरासुरे-रासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्**

गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारीतात्कुमारहारितो गालवाद् गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपादो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरसो आभूतेस्त्वाष्ट्रादा-भूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद् दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एक-ऋषेरेकऋषिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोस्सनारुः सनातनात् सनातनः सनकात् सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ३ ॥

इति वंशब्राह्मणम् ॥ ६ ॥

भाष्यम्—

'पाराशर्यो जातुकर्ण्यः पराशरसुतावुभौ।
विप्रायामेव भार्यायां तृतीयः कृष्ण एव च ॥ इति ब्रह्माण्डे ॥
परस्य ब्रह्मणो विष्णोर्हयशीर्षादधीतवान्।
ब्रह्मविद्यामिमां ब्रह्मा ततः सनक एव च ॥ इति गारुडे ॥

इति वंशब्राह्मणम् ॥ ६ ॥

टिप्पणी—

अथ भाष्यार्थः खण्डार्थश्च

न केवलमिमां ब्रह्मविद्यां दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच। किन्तु सा विरिञ्चादिभिरप्यधीता व्याख्याता चेत्याह— **अथ वंश इति**॥ पाराशर्यो जातूकर्ण्यादिति पराशरात्मजस्य वेदव्यासस्य जातूकर्ण्यादध्ययनं प्रतीयते। तच्चायुक्तमित्यतोऽयं पाराशर्यो न कृष्णः किन्त्वन्य इत्यत्र प्रमाणमाह— **पाराशर्य**

**इति** ।। परमेष्ठी विराट् ब्रह्मणो हिरण्यगर्भाद्विद्यां प्राप्त इति व्याख्यानमसत् । हिरण्यगर्भातिरिक्तस्य विराज अभावादिति भावेन तद् व्याचष्टे– **परस्येति** ।। वंशो द्विविधो विद्यया जन्मना चेति शिष्यादिपरम्परापि वंशपदेनोच्यते । अत्र प्रथमान्तशब्दवाच्याः शिष्याः । पञ्चम्यन्तशब्दवाच्या आचार्या इति बोद्धव्यम् । इतरवत्परब्रह्मणोऽप्यध्ययनशङ्कां वारयति– **ब्रह्म स्वयम्भ्विति** ।। स्वयमेव भवति जानातीति स्वयम्भु अध्यायान्ते मङ्गलमाचरति वेदपुरुषः– **ब्रह्मणे नम इति** ।। हयग्रीवाख्यब्रह्मण इत्यर्थः ।।

इति वंशब्राह्मणम् ।। ६ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तममुनिविरचितायां चतुर्थोऽध्यायः**

# अथ पञ्चमोऽध्यायः

उपनिषत्—

## अथ आश्वलब्राह्मणम्

[जनकस्य सभां प्रति याज्ञवल्क्यागमनम्]

जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानां अनूचानतम इति स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥ तान् होवाच 'ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजताम्' इति ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच 'एताः सौम्योदज सामश्रवा३' इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः 'कथं नो ब्रह्मिष्ठो ब्रवीत' इत्यथ ह जनकस्य वैदेहस्य होता आश्वलो बभूव स हैनं पप्रच्छ 'त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति' स होवाच 'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म' इति तं ह तत एव प्रष्टुं दध्रे होताऽश्वलः ॥ २ ॥

[मृत्युतरणोपायः]

याज्ञवल्क्येति होवाच 'यदिदं सर्वं मृत्युनाऽऽप्तं सर्वं मृत्युनाऽऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति' होत्रर्त्विजाऽग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ॥ ३ ॥

[कालकृतविकारपरिहारोपायः]

याज्ञवल्क्येति होवाच 'यदिदं सर्वमहोरात्राभ्यामाप्तं सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यते' इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः साऽतिमुक्तिः ॥ ४ ॥ याज्ञवल्क्येति होवाच 'यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तं सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत' इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥ ५ ॥

[मुक्तलोकप्राप्त्युपायः]

'याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्भणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत' इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षाः ॥ ६ ॥

भाष्यम्—

होतर्यग्नौ वाचि चैव यो विष्णुं मुक्तिदं स्मरेत् ।
नित्यं स मुच्यतेऽध्वर्युसूर्यचक्षुष्षु यः स्मरेत् ॥
अधिकः प्रकाश एवास्य मुक्तावन्येभ्य इष्यते ।
मुक्तेभ्योऽपि तथोद्गातृवायुप्राणेषु यः स्मरेत् ॥
पूर्णचन्द्रं सदा पश्येदधिकाह्लादसंयुतः ।
मनोब्रह्मनिशेशेषु यो विष्णुं सर्वदा स्मरेत् ॥

**अप्रयत्नेन लोकं स विष्णोर्याति न संशयः ।**
**होत्रग्न्यादीनि नामानि विष्णोः सर्वाणि मुख्यतः ॥**
**तत्सम्बन्धात्तदन्येषां स वै होत्रादिकर्मकृत् ।**

**टिप्पणी——**

भगवानेव सर्वोत्तमः सर्वगुणपरिपूर्णः सर्वमुमुक्षूपास्यो मोक्षद इत्यध्यायद्वयोक्त-मृषिभिर्मीमांसया समर्थितमित्याहानेनाध्यायेन । तत्राऽदौ मीमांसाप्रकारमेवाऽ-ख्यायिकयाऽह– **जनको ह वैदह इत्यादिना** ॥ अप्रतिपत्तिविप्रतिपत्तिनिरासाय ब्राह्मणं प्रमाणेन व्याचष्टे– **होतरीत्यादिना** ॥ केन यजमानो मृत्योराप्तिमतिमुच्यत इति प्रश्नस्य होत्रर्त्विजाग्निना वाचेति परिहारवाक्यं होत्रादिशब्दानां प्रतीतार्थपरत्वनिरासाय व्याचष्टे– **होतरीति** ॥ स मुक्तिरित्यस्याभिप्रायमाह– **मुक्तिदमिति** ॥ नित्यं सदा । अध्वर्युणा ऋत्विजा चक्षुषाऽदित्येनेति वाक्यं पूर्ववद् व्याचष्टे– **अध्वर्युसूर्यचक्षुष्विति** ॥ मुक्तिदं विष्णुं यो नित्यं स्मरेत् स मुच्यत इति पूर्वेण सम्बन्धः । खण्डद्वयगतसातिमुक्तिरित्येतस्य तात्पर्यमाह– **अधिक इति** ॥ एतदुपासनामकुर्वद्भ्योऽन्येभ्यो मुक्तेभ्योऽपि । अस्यैवाग्न्यादित्रिके आदित्यादित्रिके च विष्णूपासकस्यैव । मुक्तावधिकप्रकाश इष्यते प्रामाणिकैरित्यर्थः । उद्गात्रर्त्विजा वायुना प्राणेनेति वाक्यं व्याचष्टे– **तथेति** ॥ मुक्तिदं विष्णुमित्यनुवर्तते । तत्फलप्रदर्शनपरतया सातिमुक्तिरित्यस्य तात्पर्यमाह– **पूर्णचन्द्रमिति** ॥ तदेव विवृणोति– **अधिकाह्लादसंयुत इति** ॥ भवतीति शेषः । पूर्णचन्द्रं पूर्णसुखं विष्णुमिति वा । ब्रह्मणार्त्विजा मनसा चन्द्रेणेति वाक्यं व्याचष्टे– **मन इति** ॥ मुक्तिदमित्यत्राप्यनुवर्तते । सातिमुक्तिरित्यस्य तात्पर्यमाह– **अप्रयत्नेनेति** ॥ ननु होत्रादिशब्दानां प्रसिद्ध-होत्रादिपरत्वात्कथं होतर्यग्नावित्यादिव्याख्यानमित्यत आह– **होत्रिति** ॥ मुख्यतः परममुख्यतः । प्रसिद्धिविरोधं परिहरति– **तत्सम्बन्धादिति** ॥ जुहोतीत्यादिव्युत्पत्तिः प्रसिद्धहोत्रादिष्वेव न विष्णावित्यत आह– **स वा इति** ॥ [illegible]ब्दोऽवधारणे । होत्रादिषु स्थित्वेति शेषः ।

**भाष्यम्—**

**तस्माद्धोत्रग्निवागादेरैक्यं श्रुतिषु चोच्यते ॥**
**होत्रादिषु चतुर्ष्वेष वासुदेवादिरूपधृक् ।**
**व्यवस्थितो हि तज्ज्ञानादचिरान्मुक्तिमेष्यति ॥**
**मुक्तिनामा स भगवान् मोक्षदत्वात्प्रकीर्तितः ।**
**मनुष्येभ्योऽधिकसुखं देवेभ्यो यत्प्रयच्छति ॥**
**मुक्तावप्यतिमोक्षः स तेन देवः प्रकीर्तितः ।**
**एता ह्युपासना नित्यं नैव योग्या नृणां श्रुताः ॥**
**अतिमुक्तिप्रदा यस्माद्देवाद्यास्तासु योगिनः ।**

**टिप्पणी—**

होत्रादिशब्दानां विष्णुपरत्वे आन्तरोपपत्तिमप्याह— **तस्मादिति** ॥ होत्रादिशब्दानां विष्णुवाचकत्वादित्यर्थः । श्रुतिषु वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होतेत्यादिश्रुतिवाक्येषु । अन्यथा तद्विरोधः स्यात् । होत्रग्निवागादीनामैक्याभावादिति भावः । केन यजमानो मृत्योराप्तिमतिमुच्यत इत्यादिप्रश्ने होत्रर्त्विजाऽग्निना वाचेत्यादि परिहारवाक्ये होत्रादीनां मुक्तिसाधनत्वमुच्यते । तच्चोक्तरीत्या विष्णुग्रहण एव सम्भवति । न प्रसिद्धहोत्रादिग्रहण इति होत्रादित्रिकचतुष्टयस्थितविष्णुरूपविशेषप्रदर्शनपूर्वकमाह— **होत्रादिष्विति** ॥ वासुदेवादिरूपधृक् विष्णुरेवेति सम्बन्धः । हिशब्दः प्रसिद्ध्यर्थः । नत्वन्यज्ञानादिति भावः । किञ्च होत्रादिशब्दानां प्रसिद्धार्थपरत्वे स मुक्तिः सातिमुक्तिरित्येतदनुपपन्नं स्यादिति भावेन स मुक्तिरित्यस्य मुक्तिदमिति यत् तात्पर्यमुक्तं तत्पदारूढं करोति— **मुक्तिनामेति** ॥ अनेन मुच्यतेऽनेनेति मुक्तिरित्यर्थ उक्तो भवति । सातिमुक्तिरित्यस्यापि अधिकः प्रकाश इत्यादिना पूर्वोक्तं तात्पर्यं पदारूढं करोति— **मनुष्येभ्य इति** ॥ अनेनातिशयेन मुच्यतेऽनेनेत्यतिमुक्तिरित्यर्थ उक्तो भवति । श्रुतौ यजमान इति प्रमाणे च यः

स्मरेदिति सामान्यत एवोक्तत्वात्सर्वेषामप्युपासनायामधिकार इति न मन्तव्यमित्याह– **एता हीति** ।। कुत इत्यतस्तथात्वे इत्यतिमोक्षा इत्युपसंहारवाक्यविरोधः स्यादित्याह– **अतीति** ।। नृणां तदयोग्यत्वादिति भावः । तर्हि के तत्राधिकारिण इत्यत आह– **देवाद्या इति** ।। योगिनो योग्या इत्यर्थः । तेषां तद्योग्यत्वादिति भावः ।

उपनिषत्—

[देवपदवीप्राप्त्युपायः]

**अथ सम्पदो याज्ञवल्क्येति होवाच 'कतिभिरयमद्य ऋग्भिर्होताऽस्मिन् यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति ।। ७ ।।**

भाष्यम्—

याज्याशस्यापुरोवाक्यसंस्थितं यो हरिं स्मरेत् ।।
सर्वप्राणभृतामीशः स भवेन्नात्र संशयः ।

टिप्पणी—

किं ताभिर्जयतीत्यस्य प्रश्नस्य यत्किञ्चेदं प्राणभृदिति यत्परिहारवाक्यं तद् ऋचामेव फलसाधनत्वप्रतीतिनिरासाय व्याचष्टे– **याज्येति** ।।

उपनिषत्—

**याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन् यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्वलन्ति या हुता अतिनेदन्ते या हुता अतिशेरते किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति**

**दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यथ इव हि मनुष्यलोकः ॥ ८ ॥**

**भाष्यम्—**

**उज्ज्वलच्छब्दवद्द्राविष्वेकमेव हरिं स्मरेत् ॥**
**सर्वलोकाधिपत्यं स लभते पुरुषोत्तमात् ।**

**टिप्पणी—**

या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयतीत्यादि वाक्यं पूर्ववद्व्याचष्टे— **उज्ज्वलदिति** ॥ उज्ज्वलत्सु शब्दवत्सु द्राविषु अधो द्रवणवत्सु हविःषु ।

**उपनिषत्—**

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥**

**भाष्यम्—**

**मनसो देवता ब्रह्मा सर्वदेवेषु संस्थितः ॥**
**देवब्रह्ममनस्स्वेकं यो विष्णुं सर्वदा स्मरेत् ।**
**अनन्तनामकं तेन तल्लोकं नित्यमश्नुते ॥**
**निश्चयेन विमोक्ष्यत्वाद् विश्वेदेवा अनन्तकाः ।**
**अनन्तनामकं विष्णुमुपास्यापि ह्यनन्तकाः ॥**

**टिप्पणी—**

कतमा सा देवतेति प्रश्ने मन एवेति कथमुत्तरमुच्यत इत्यत आह— **मनस इति** ॥ अनन्तं वै मनोऽनन्ता विश्वे देवा इत्यस्याभिप्रायः सर्वदेवेषु

संस्थित इति। अनन्तमेव स तेन लोकं जयतीत्येतत् तेन मनसेति प्रतीतिनिरासाय तत्परामृश्यं दर्शयन् व्याचष्टे– **देवेति** ॥ तेन स्मरणेन विश्वेषां देवानां स्वरूपानन्त्यस्य सर्वसाधारण्यात् पदादेश्च नाशात्कथमनन्तत्वमित्यतः प्रकारद्वयेनोपपादयति– **निश्चयेनेति** ॥ तेषामपरोक्षज्ञानित्वादिति भावः । विमोक्ष्यत्वात् मोक्षस्वरूपानन्तफलभाक्त्वादित्यर्थः ।

उपनिषत्——

[सामगानेन अभीष्टलोकप्राप्तिः]

**याज्ञवल्क्येति होवाच 'कत्ययमद्योद्गाताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्या अपानो याज्या व्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होता आश्वल उपरराम ॥ १० ॥**

इत्याश्वलब्राह्मणम् ॥ १ ॥

भाष्यम्——

पुरोवाक्यादिषु प्राणादिषूपासां करोति यः ।
एकमेव हरिं लोकव्याप्तिमेव लभेदसौ ॥
अत्रापि वासुदेवाद्याश्चत्वारो देवताः स्मृताः ।
देवानां पदहेतुत्वात्सम्पन्नाम्य उपासनाः ॥
मुक्तौ भोगविशेषस्य हेतुत्वाच्च प्रकीर्तिताः ।
एताश्च देवतायोग्या न मनुष्येषु कुत्रचित् ।
मनुष्याणां ज्ञानमात्राद्गुणाधिक्यं भविष्यति ॥ इति परमश्रुतौ ॥

इत्याश्वलब्राह्मणम् ॥ १ ॥

**टिप्पणी——**

पृथिवीलोकमेव पुरोनुवाक्यया जयतीत्यादिवाक्यं तासामेव फलसाधनत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **पुरोवाक्यादिष्विति** ।। ऋगाहुतिमनस्तोत्रिया सुस्थिता मूर्तीराह– **अत्रापीति** ।। अथ सम्पद इत्येतद्व्याचष्टे– **देवानामिति** ।। अत्र सर्वेषामधिकारित्वे कथमुक्तसम्पच्छब्दनिर्वचनमित्यत आह– **एत इति** ।। उपासना इत्यर्थः । उपासनाभावेऽपि ज्ञानमात्रं मनुष्याणां स्यादेवेत्यत आह– **मनुष्याणामिति** ।।

**अथ खण्डार्थः**

विदेहानां वंशभवो वैदेहो जनको नाम ह किल बभूव । स च बहुदक्षिणेन यज्ञेन शाखान्तरे एतन्नाम्ना प्रसिद्धेन । बहुदक्षिणाविशिष्टेनाश्वमेधादिना वा । ईजे अयजत । तत्र तस्मिन् यज्ञे ह विद्वद्बाहुल्येन प्रसिद्धानां कुरूणां पाञ्चालानां च देशानाम् । ब्राह्मणा अभि समेता बभूवुः । तान् दृष्टवतस्तस्य ह जनकस्य वैदेहस्य । कःस्वित् को नु एषां ब्राह्मणानां मध्येऽनूचान-तमोऽतिशयेनानूचानो ब्रह्मिष्ठ इति विजिज्ञासाविशेषेण ज्ञातुमिच्छा बभूव । पश्चात्स जनको ह तद्विज्ञानोपायभूतं गवां सहस्रम् । गोष्ठे (यज्ञवाटसमीप इति स्वामिनः) अवरुरोधावरोधं कारयामास । तासामेकैकस्याः गोः शृङ्गयोः दश दश पादाः पलस्य चतुर्थभागः पादः । एवम्भूताः सुवर्णस्य दश दश पादाः आबद्धा बभूवुः । शृङ्गयोरिति द्विवचनात्प्रतिशृङ्गं पञ्च पञ्च पादाः आबद्धा इत्यर्थः । एवं गा अवरुद्ध्य जनकस्तान् ब्राह्मणान् ह किल उवाच । हे ब्राह्मणाः भगवन्तः पूजार्हा इति सम्बोद्ध्य । यो वो युष्माकं मध्ये ब्रह्मिष्ठोऽतिशयेन ब्रह्मज्ञः । स एता अवरुद्धा गा उदजतां स्वगृहं प्रत्युद्गमयत्वित्युक्ते । ते ब्राह्मणाः ह किल न दधृषुः धैर्यवन्तो नाभवन् । आत्मनो ब्रह्मिष्ठतां प्रतिज्ञातुमिति शेषः । अथानन्तरं याज्ञवल्क्यो ह किल स्वं स्वीयमेव ब्रह्मचारिणमन्तेवासिनमुवाच । किं हे सौम्य सामश्रवा३ इति प्लुतिर्दूरादाह्वानार्था । सामविधिं शृणोतीति

सामश्रवास्तत्सम्बोधनं सामश्रव । एता गा उदज अस्मद्गृहं प्रति उद्गमय। एवं गुरुवचनं श्रुत्वा ह किल ब्रह्मचारी । ता गाः उदाचकार उत्कलितवान् नीतवानाचार्यगृहं प्रति । एवं ब्रह्मिष्ठाय निर्दिष्टगवामपहरणात् याज्ञवल्क्येन स्वात्मनो ब्रह्मिष्ठत्वस्वीकरणादस्माकमब्रह्मिष्ठता प्रतिज्ञायत इति मन्वानास्ते ह ब्राह्मणाश्चुक्रुधुः क्रोधं कृतवन्तः । तेषां क्रोधाभिप्राये निमित्तमाह– **कथमिति** ।। नोऽस्माकं एकैकप्रधानानामग्रे ब्रह्मिष्ठोऽस्मीति कथमयं ब्रवीति कथयेत् । इतिशब्दोऽभिप्रायसमाप्तिद्योतकः । अथ क्रोधानन्तरं ह जनकस्याश्वलो नाम होता ऋत्विग् बभूव । स ब्रह्मिष्ठाभिमानी राजाश्रयात् धृष्टस्सन् एनं याज्ञवल्क्यं पप्रच्छ । कथम् । हे याज्ञवल्क्य नोऽस्माकमग्रे । त्वं नु खलु ब्रह्मिष्ठोऽसीति प्लुतिर्भर्त्सनार्था । अनौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचयन् स याज्ञवल्क्यो ह उवाच । वयं ब्रह्मिष्ठाय नमस्कुर्मः । किमिति तर्हि ब्रह्मिष्ठपणभूता गावः स्वगृहं प्रति प्रस्थापिता इत्यत आह– **गोकामा इति** ।। वयं गोकामा एव स्म । अतो गोग्रहणं कृतवन्त इति मुनिनोक्ते। ततो ब्रह्मिष्ठपणस्वीकरणादेव होताश्वलस्तं प्रष्टुं दध्रे धृतवान् मनः । याज्ञवल्क्येति सम्बोद्ध्योवाच । किम् । इदं सर्वं प्राणिजातं यत् येन मृत्युना आप्तं प्राप्तम् । न केवलमेतावत् । किन्तु मृत्युनाभिपन्नं ग्रस्तं च । तस्य मृत्योराप्तिं यजमानः केनोपायेनाति अतिक्रम्य मुच्यत इति पृष्टो याज्ञवल्क्य उत्तरमाह– **होत्रेति** ।।होत्रादिषु स्थित्वा तत्तत्कर्मकर्तृत्वेन निमित्तेन होत्रग्नि-वाक्शब्दवाच्येन वासुदेवेनोपासितेन । यजमानोऽतिमुच्यत इति सम्बन्धः । अधिष्ठानभेदेन परमात्मनो रूपस्य भेदो नाशङ्कनीय इति भावेन वाक् स्थितस्य होतृस्थस्य परमात्मरूपस्य चाभेदमाह– **वाग्वा इति** ।। वाक् वागन्तर्गतो वाङ्नामा वासुदेव एव । यज्ञस्य होता होतृसंस्थो होतृनामक इति । वै प्रसिद्धमित्यर्थः । इदानीं वागन्तर्गतस्याग्निस्थस्य चाभेदमाह– **तद्येयमिति** ।। सा चासौ या च तद्या प्रसिद्धा येयं वाक् वागन्तर्गतो वाङ्नामा वासुदेवः । सोऽयमग्निः अग्निस्थोऽग्निनामा । इदानीमग्निस्थस्य होतृसंस्थेनाभेदमाह– **स इति** ।। सोऽग्निस्थोऽग्निनामा भगवान् होता होतृसंस्थो होतृनामक

इत्यर्थः । वागादिस्थस्य कथं मृत्युमोचकत्वमित्यत आह– **स इति** ॥ यो वागादिस्थः स मुक्तिः मोक्षप्रदः । मुच्यतेऽनेनेति व्युत्पत्तेः । न केवलं सर्वसाधारणाविद्यानिवृत्त्यादिरूपमुक्तिदः । किन्तु सातिमुक्तिः अतिशयितमुक्तिदः । मुक्तौ मनुष्येभ्य अधिकं सुखं देवेभ्यः प्रयच्छतीत्यर्थः ॥ ३ ॥

एवमेवोत्तरखण्डत्रयमपि व्याख्येयम् । अहोरात्राभ्यां तद्विकाराभ्यामित्यर्थः । एवं पूर्वपक्षापरपक्षाभ्यामित्येतदपि व्याख्येयम् । अध्वर्युणा चक्षुषादित्येन अध्वर्य्वादिगतेन सङ्कर्षणेन । उद्गात्रा वायुना प्राणेन । तन्निष्ठप्रद्युम्नेन यद् यस्मादिदं प्रसिद्धमन्तरिक्षं आकाशमनारम्भणमनालम्बनमिव भासते । अथ तस्मात्केनाक्रमेणऽक्रमणसाधनेनावष्टम्भेन । यजमानः । स्वर्गलोकं मोक्षमाक्रमते प्राप्नोतीत्यर्थः । ब्रह्मणा मनसा चन्द्रेण तदन्तर्गतानिरुद्धेनेत्यर्थः । उक्तमुपसंहरति– **इत्यतिमोक्षा इति** ॥ अतिशयितमोक्षसाधनीभूतोपासनाः इति निरूपिता इत्यर्थः । अथ मोक्षसाधनोपासनानिरूपणानन्तरम् । सम्पदः देवपदप्राप्ति-रूपसम्पत्साधनीभूता उपासना निरूप्यन्ते ॥ ६ ॥

ता उपासना वक्तुमाश्वलप्रश्नमवतारयति– **याज्ञवल्क्येति** ॥ कतिभिः कति सङ्ख्याभिः । ऋग्भिरयं होता । अद्याऽस्मिन् यज्ञे । शंसनं करिष्यतीति पृष्टे । तिसृभिर्ऋग्भिरित्युत्तरमुक्तवन्तं प्रति पुनस्तासां स्वरूपं पृच्छति– **कतमा इति** ॥ किं स्वरूपास्ता ऋच इति पृष्टे उत्तरमाह– **पुरोनुवाक्या चेति** ॥ पुरोनुवाक्या प्रयोगकालात्प्राक् होतृप्रयुज्यमाना ऋग्जातिः । याज्या च यागार्थं प्रयुज्यमाना ऋग्जातिः । शस्या शस्त्रार्थं प्रयुज्यमाना ऋग्जातिस्तृतीया त्रित्वसङ्ख्यापूरिका । एतस्याः फलं पृच्छति– **किमिति** ॥ ताभिर्वासुदेवाख्य-विष्ण्वधिष्ठानभूताभिस्तत्रत्यवासुदेवेनेति यावत् । किं जयतीति पृष्टे उत्तरमाह– **यत्किञ्चेदं प्राणभृदितीति** ॥ तज्जयतीत्यन्वयः । सर्वप्राणभृदधिपतिर्भवतीत्यर्थः ॥ ७ ॥

या हुताः समिदाज्याहुतयः उज्ज्वलन्ति । या हुता मांसाहुतयः अतिनेदन्ते अतीव शब्दं कुर्वन्ति । या हुताः पयः सोमाहुतयः । अधि अधो गत्वा

भूमेरधः शेते । फलं पृच्छति– **किमिति** ।। ताभिः सङ्कर्षणाधिष्ठान-भूताभिस्तिसृभिराहुतिभिस्तद्गतसङ्कर्षणेनेति यावत् । किं जयतीति पृष्टे उत्तरमाह– **या इति** ।। या आहुतयो हुता उज्ज्वलन्ति । ताभिर्देवलोकमेव जयति देवलोकाधिपत्यं लभते । कथमित्यपेक्षायामुज्ज्वलत्वसाम्यादित्याह– **दीप्यत इव हीति** ।। एवमुत्तरत्रापि । पितृलोक अतीवात्यन्तं नेदते । 'आस्फोटयन्ति पितरः' (कृ.म. २३०) इत्यादि वचनात् । अध इव हि मनुष्यलोक इति । नरकाद्यधोगतिसाम्यव्यावर्तनाय इवशब्दः । देवलोकपितृलोकापेक्षया अधस्तन इत्यर्थः ।। ८ ।।

अद्य ब्रह्माऽहवनीयस्य दक्षिणतो दक्षिणभागे । ब्रह्मासने स्थित्वा । कतिभिर्देवताभिर्यज्ञं गोपायतीति । अन्यत्पूर्ववत् । मन एवेति मनोऽभिमानी चतुर्मुख एव तं स्तौति– **अनन्तं वा इति** ।। मनस उक्तमनन्तत्वमुपपादयति– **अनन्ता इति** ।। यदधिष्ठिता विश्वेदेवा अप्यनन्ताः । किं मनोऽनन्तमित्यर्थः । निश्चयेन विमोक्ष्यत्वादनन्तनामकविष्णूपासकत्वाद्वा विश्वेदेवा अनन्तकाः । तत्फलमाह– **अनन्तमेवेति** ।। तेन मनसा तदभिमानिचतुर्मुखेन तदधिष्ठानभूतदेवेषु च विद्यमानेन प्रद्युम्नेन । अनन्तनामकं विष्णुलोकं जयति ।। ९ ।।

स्तोत्रियाः सामरूढा ऋचः ता ऋचः अध्यात्मं याः यदभिमन्यमानाः ता देवताः कतमा इत्यर्थः । पुरोनुवाक्यया पुरोनुवाक्याभिमानिप्राणगतेन । याज्यया याज्याभिमान्यपानगतेन । शस्यया शस्याभिमानिव्यानगतेनानिरुद्धेने-त्यर्थः । ततः स्वकृतप्रश्नोत्तरदानाद् होताश्वल उपरराम तूष्णीं बभूव ।। १० ।।

इत्याश्वलब्राह्मणम् ।। १ ।।

उपनिषत्——

## अथ आर्तभागब्राह्मणम्

[इन्द्रियाणि कति? इन्द्रियगोचरविषयाः कति?]

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इत्यष्टौ ग्रहा अष्टावतिग्रहा इति**

ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥ प्राणो वै ग्रहः सोऽपानेनातिग्रहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति ॥ २ ॥ वाग्वै ग्रहः स नाम्नाऽतिग्रहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः स रसेनातिग्रहेण गृहीतो जिह्वया हि रसान् विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः स रूपेणातिग्रहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्देनातिग्रहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनातिग्रहेण गृहीतो मनसा हि कामान् कामयते ॥ ७ ॥ हस्तो वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति ॥ ८ ॥ त्वग्वै ग्रहः सा स्पर्शेनातिग्रहेण गृहीतस्त्वचा हि स्पर्शान् वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

[मृत्यदेवता का? मृत्युमृत्युः कः]

याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति य एवं वेद ॥ १० ॥

[ब्रह्मज्ञानी प्रारब्धमनुभूय मुक्तिमेति]

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ ११ ॥

[अविनाशि वै नाम]

याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥

[उत्क्रमणकाले इन्द्रियमानिनां स्थितिः]

याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहर सोम्य हस्तमार्तभागाऽऽवामेवैतस्य वेदिष्यावो न नावेत् तत् सजन इति तौ होत्क्रम्य मन्त्रयाञ्चक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

इत्यार्तभागब्राह्मणम् ॥ २ ॥

भाष्यम्——

आकाशं परमात्मानमेव।

केचित्तु मानुषा मुक्तिमनुत्क्रम्यैव देहतः।
देहपाते तु देहस्य दोषान् भुक्त्वैव सर्वशः॥
मरणोच्छूनतादींस्तु स्वकीयारब्धकर्मजान्।
देहे क्षीणे तु गच्छन्ति दृष्ट्वा विष्णुमनुज्ञया॥
पुनरत्रैव तिष्ठन्ति नित्यानन्दैकभोगिनः।
देहादुत्क्रम्य देवास्तु यान्ति विष्णुं सनातनम्॥

**टिप्पणी—**

आकाशमात्मेत्यस्याऽऽत्मा आत्माभिव्यक्त्यधिष्ठानं हृदयाकाशं महाकाश-मप्येतीति व्याख्यानमसत्। आत्मशब्दस्य लाक्षणिकत्वापत्तेः। शरीरनियामक-परमात्मनः क्वचिद्गत्यनुक्तिप्रसङ्गाच्चेति भावेनाकाशशब्दं व्याचष्टे– **आकाश-मिति**॥ तथाचात्मा हृद्गतः परमात्माऽऽकाशं व्याप्तं स्वमूलरूपपरमात्मानमेवाप्येति गच्छतीत्यर्थ इति भावः। एतेनात्मा जीव आकाशमेतीति जीवगन्तव्यस्य स्वयमेवोक्तत्वात् क्वायं तदा पुरुषो भवतीति प्रश्नोऽयुक्त इत्येतदपि परास्तम्। ननु नेति होवाच याज्ञवल्क्य इति प्राणानामुत्क्रमणाभावोक्तिः कथम्। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ. ६.४.२) इत्यादिविरोधादिति चेत्, न। प्राणा उत्क्रामन्ति नवेति प्रश्नवाक्यस्येन्द्रियाभिमानिदेवताविशिष्टो जीवोऽपरोक्षज्ञानी ब्रह्मनाड्योत्क्रामति नवेत्यर्थमभिप्रेत्य ज्ञानी उत्क्रामति नवेति प्रश्नस्य नेति परिहारात्। तथापि अपरोक्षज्ञानिन उत्क्रमणाभावोक्तिः कथम्? 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतनेनैष आत्मा निष्क्रामति' (बृ. ६.४.२) इत्युत्तरवाक्यविरोधादित्यतोऽधिकारविशेषपरतयेदं व्याचष्टे– **केचित्त्विति**॥ आत्मत्वमात्रोपासका अत्यल्पा मानुषा इत्यर्थः। यथोक्तम्– 'आत्मेत्येवं परं देवमुपास्य हरिमव्ययम्। केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन। अत्रैव च स्थितिस्तेषाम्' (ब्र.सू.भा. ४.४.१९) इति। स उच्छ्वयति आध्मायति आध्मातो मृतः शेत इत्यस्यार्थः– **मरणोच्छूनतादीनिति**॥ नन्वपरोक्षज्ञानिन उत्तरपूर्वाघयोरश्लेषविनाशोक्तेर्दोषान्भुक्त्वैव सर्वश इति कथमुक्तं इत्यत उक्तम्– **स्वकीयारब्धकर्मजानिति**॥ प्रारब्धकर्मणस्तु भोगेनैव क्षय इति भावः। अत एव सर्वशो भुक्त्वैवेत्युक्तम्। 'बहुनाऽत्र किमुक्तेन यावच्छ्वेतं न गच्छति। योगी तावन्न मुक्तः स्यात्' (ब्र.सू.भा. १.३.२) इत्युक्तेरत्रैव तिष्ठन्तीति कथमुक्तमित्यत आह– **दृष्ट्वा विष्णुमिति**॥ सकृच्छ्वेतद्वीपं गत्वा तत्र विष्णुं दृष्ट्वेत्यर्थः। अत्रैव समवनीयन्त इत्येतद् व्याचष्टे– **अत्रैव तिष्ठन्तीति**॥ पूर्वमप्यत्रैव स्थितत्वात्को विशेष इत्यतः संशब्दार्थमाह–

**नित्यानन्दैकभोगिन इति** ।। तथाच यत्रायं पुरुष इत्येतत् जात्येकवचनमित्युक्तं भवति । केचिदत्यल्पा मानुषा अपरोक्षज्ञानिनो देहपाते प्रत्यासन्ने स्वकीयारब्धकर्मजान् मरणोच्छूनतादींस्तु देहस्य दोषान् सर्वशो भुक्त्वैव स्थितानां देहे क्षीणे देहतोऽनुत्क्रम्यैव ब्रह्मनाड्याऽनूत्क्रम्यैव चक्षुरादिद्वारान्तरेण निर्गत्य मुक्तिं लिङ्गभङ्गरूपां गच्छन्ति प्राप्नुवन्ति । तदनन्तरं सकृत् श्वेतद्वीपं गत्वा तत्र विष्णुं दृष्ट्वा तदनुज्ञया पुनरत्रैव भूलोक एव नित्यानन्दैकभोगिनः सन्तस्तिष्ठन्तीति योजना ।

**भाष्यम्—**

**देहादुत्क्रम्य यातानां देवा भागत एव तु ।**
**स्वाधिदैवं व्रजन्त्यद्धा भागतोऽनुव्रजन्ति तान् ।।**
**आकाशाख्यं स्वरूपं तु विष्णुस्तद्धृदि संस्थितः ।**
**भागतो भागतश्चैनाननुयाति जनार्दनः ।।**
**ज्ञानस्थितेन रूपेण देवानां मुक्तिदो हरिः ।**
**पुण्यस्थितेन रूपेण स्वर्गं निरयमन्यगः ।।**
**रहस्यमेतद्देवानां विदुः कर्मेति मानुषाः ।**
**तस्मान्नैव जनेष्वेतद्विष्णोः कर्म प्रकाशयेत् ।। इति च ।।**

**अत एव याज्ञवल्क्यो न जनेषूवाच ।**

**कर्मनामा तु भगवान् फलकर्तृत्वतो हरिः ।**
**पातनात् पापनामाऽसौ पुनातेः पुण्यनामवान् ।। इति भारते ।।**

इत्यार्तभागब्राह्मणम् ।। २ ।।

**टिप्पणी—**

उत्क्रमणप्रतिपादकवाक्यस्य विषयमाह— **देहादिति** ।। तुशब्दो विशेषार्थः । मनुष्यकुले जाता देवास्तु देहाद् ब्रह्मनाड्योत्क्रम्य यान्ति । स्वमूलरूपमिति शेषः । यद्वा तुशब्दः चशब्दार्थः । तेन समुच्चिताः सच्चिदानन्द आत्मेति चतुर्गुणोपासका मनुष्योत्तमा ब्रह्मनाड्या देहादुत्क्रम्य सनातनं विष्णुं यान्ती-

त्यर्थः । यद्वाऽत्रैव समवनीयन्त इति वाक्यमस्मिन्नेव देहे लीयन्त इति प्रतीतिनिरासाय व्याचष्टे– **देहादिति** ॥ देवा इन्द्रियाभिमानिनो देहान्मुच्य-मानजीवदेहादुत्क्रम्य निर्गत्य। विष्णुमनुयान्तीत्यर्थः। यद्वक्ष्यति 'अनुयान्ति शरीरस्था' इत्यादि। अनेनात्रैव जीवमादाय गच्छति विष्णावेव समवनीयन्ते तमनुगच्छन्तीति वाऽत्रानेन जीवमादाय गच्छता विष्णुना समवनीयन्ते स्वसहायेन नीयन्त इति वाऽर्थ उक्तो भवति । देवानिति क्वचित्पाठः । तत्र केचिन्मानुषाः इत्यनुवर्तते। तुशब्दः चशब्दार्थः। केचिन्मनुष्याश्चतुर्गुणोपासका देहादुत्क्रम्य देवान् विष्णुं च यान्तीत्यर्थः । 'अग्निं वागप्येति' इत्यादिना पुरुषे मृते वागादयोऽग्न्यादीन् प्रति यान्तीत्युक्तिः कथम् । 'प्राणैर्वाव न वियुज्यते' इति श्रुतिविरोधादित्यतस्तदभिप्रायमाह– **देहादिति** ॥ देवा वागाद्यभिमानिनः । भागत एव रूपान्तरेणैव । स्वाधिदैवमग्न्यादिकम् । तानुत्क्रम्य यातान् जीवान् । ननु प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद्यातीति मरणकाले परमात्मनोऽपि जीवेन सह गत्युक्तेराकाशमात्मेति कथमुक्तमित्यतस्तद् व्याचष्टे– **आकाशाख्यमिति** ॥ भागतो यातीति सम्बन्धः। पुण्यः पुण्येन कर्मणेत्यत्र कर्मसाध्यत्वेनोक्तः पुण्यो न मोक्षः । तस्य ज्ञानमात्रसाध्य-त्वात् । तस्मात्तदुपलक्षणपरमिति भावेन ज्ञानस्य स्वातन्त्र्यनिरासायाह– **ज्ञानस्थितेनेति** ॥ पुण्यपापयोरेव पुण्यलोकादिहेतुत्वमिति प्रतीतिनिरासाय पुण्यं पुण्येनेत्यादिवाक्यं व्याचष्टे– **पुण्यस्थितेनेति** ॥ हरिरित्यनुवर्तते । ददातीति शेषः । अन्यगः पापगः। इदञ्चाप्यतिगोप्यत्वात् यस्मै कस्मैचन न वाच्यमिति भावेनाह– **रहस्यमेतदिति** ॥ ज्ञानस्थितेन रूपेणेत्याद्युक्तमेतत् देवानां रहस्यं दैवतैर्गोप्यम् । अन्येषामप्येतादृशज्ञानसत्त्वे कथमेतद्देवानां रहस्यमित्यत आह– **विदुरिति** ॥ मानुषाः स्वर्गनरकहेतुपुण्यपापरूपं कर्मेति विदुः। तस्माद्देवरहस्यत्वादेतत् ज्ञानादिस्थितरूपेण मुक्त्यादिदानरूपं विष्णोः कर्म एतज्जनेषु साधारणजनेषु न प्रकाशयेदित्यर्थः। एकान्ते सम्मन्त्रणे किं प्रयोजनमित्यत आह– **अत एवेति** ॥ यद्वाऽत्रैवैतदुपनिषद्गतमवष्टम्भकमाह–

**अत एवेति** ।। यतो जनेषु न प्रकाशयेदत एवेत्यर्थः । कर्म हैव तदूचतुरित्यादावुक्तकर्मशब्दार्थमाह– **कर्मनामा त्विति** ।। अनेन पुण्येन कर्मणेत्युक्तकर्मशब्दोऽपि व्याख्यातः । पुण्येन पापेनेत्येतत् पुण्यस्थेन पापस्थेन हरिणेति व्याख्यातम् । तत्र पुण्यपापशब्दौ निर्वक्ति– **पातनादिति** ।।

**अथ खण्डार्थः**

अथाश्वलोपरमानन्तरम् । जरत्कारुगोत्रापत्यं जारत्कारवः । ऋतभागस्यापत्यमार्तभागः । एनं याज्ञवल्क्यं पप्रच्छ याज्ञवल्क्येति सम्बोध्योवाच । गृह्णन्ति विषयानिति ग्रहा इन्द्रियाणि कति कति सङ्ख्याकाः ग्रहं गृह्णन्ति स्वाभिमुख्येनाहरन्तीत्यतिग्रहाः विषयाः । कतीत्यर्थः । इति पृष्टो याज्ञवल्क्य उत्तरमाह– **अष्टाविति** ।। सङ्ख्येयान् पृच्छति– **एत इति** ।। एतेऽष्टौ ग्रहाः अष्टावतिग्रहाश्चोक्तास्ते कतमे क इत्यर्थः ।। १ ।।

उत्तरमाह– **प्राणो वा इति** ।। प्राणो घ्राणेन्द्रियं वै ग्रहः । अतिग्रहत्वप्रदर्शनपूर्वकं प्राणातिग्रहं दर्शयति– **स इति** ।। स प्राणोऽपानेनापानाभिमन्यमानेन गन्धेनातिग्रहेण गृहीतः । अनेन घ्राणं गृह्णाति स्वाभिमुख्येनाहरतीति गन्धस्य घ्राणातिग्रहत्वमित्युक्तं भवति । प्राणस्य ग्रहत्वं दर्शयति– **अपानेन इति** ।। अपानाभिमन्यमानेन घ्राणेन । यस्माद् गन्धं जिघ्रति तस्मात्प्राणो वै ग्रहः इत्यर्थः । वागतिग्रहं दर्शयति– **स इति** ।। स वाग्रूपो ग्रहो नाम्नाऽतिग्रहेण गृहीतः । वाचो ग्रहत्वं दर्शयति– **वाचा हीति** ।। एवमुत्तरत्रापि कामेन काम्येन । उपसंहरति– **इत्यष्टाविति** ।। पादपायूपस्थानां हस्त एवान्तर्भाव इति भावः । अत एव स कर्मणाऽतिग्रहेणेति कर्ममात्रस्य हस्तातिग्रहत्वमुक्तम् ।। ३-९ ।।

प्रमेयान्तरं पृच्छति– **याज्ञवल्क्येति** ।। यदिदं प्रमाणप्रसिद्धं सर्वं यस्य मृत्योरन्नं स मृत्युः का देवता स च मृत्युः यस्या देवतायाः अन्नं सा च देवता केति योजना । प्रथमप्रश्नोत्तरमाह– **अग्निरिति** ।। अग्नावेव सर्वे देवा विलीयन्त इति श्रुतेरित्यर्थः । द्वितीयप्रश्नोत्तरमाह– **स इति** ।।

सोऽग्निरपां सूर्यस्यान्नम् । अत्र सर्वदेवतावाचकाप्शब्देन सूर्यो ग्राह्यः । यद्वा, वरुणवत्सूर्योऽप्यपामभिमानी । अधमाभिमन्यमानकस्योत्तमाभिमन्यमानकत्वात् । तत अप्शब्देन सूर्यग्रहणम् । कुत एवं व्याख्येयमिति चेत् । सूर्योऽग्नियुक्त इति अग्नेः सूर्यान्नत्वस्योक्तत्वात् । यद्वा यदिदं सर्वं पूर्वोक्तं प्राणादीन्द्रिय-गन्धादिविषयाभिमानिदेवताजातं यस्य मृत्योरन्नं सा देवता का स च मृत्युर्यस्या देवताया अन्नं सा च देवता केति पृष्टे प्रथमप्रश्नोत्तरमग्निरिति । अग्निरग्नि-नामकोऽग्न्यन्तर्गतश्चतुर्मुखो मृत्युः सोऽग्निनामा चतुर्मुखः अपां आपालनाद-प्शब्दवाच्यो विष्णुस्तस्यान्नम् । एवंवेत्तुः फलमाह– **अपपुनरिति** ।। य एवं वेदेति शेषः । पुनर्मृत्युं मृतिमपजयति मोक्षं प्राप्नोतीत्यर्थः ।। १० ।।

अपरोक्षज्ञानिनो यन्मरणानन्तरमेव मोक्षः तत्र विशेषं पृच्छति– **याज्ञवल्क्येति** ।। अयमात्मत्वमात्रोपासनजब्रह्मापरोक्षज्ञानवान् पुरुषो यत्र यदा म्रियते तदाऽस्मात् ज्ञानिनो देहात् प्राणा वागादीन्द्रियाभिमानिन उत्क्रामन्ति– **आहो नेति** ।। आहो इत्यत्र प्लुतिर्विचारणार्था । मरणकाले इन्द्रियाभिमानिदेवैः सह अयमपरोक्षज्ञानी ब्रह्मनाड्योत्क्रामति नवेति प्रश्नवाक्यार्थः । ज्ञान्युत्क्रामति नवेत्यस्य उत्तरमाह– **नेतीति** ।। अयमपरोक्षज्ञानी न ब्रह्मनाड्योत्क्रामति किन्तु चक्षुःश्रोत्ररूपद्वारान्तरेण निर्गच्छतीत्यर्थः । इदानीं प्राणविषयप्रश्नोत्तरमाह– **अत्रैवेति** ।। अत्रैव जीवमादाय गच्छति विष्णावेव समवनीयन्ते देहमुत्सृज्य तमनुयान्तीत्यर्थः । अत्रानेन जीवमादाय गच्छता विष्णुना समवनीयन्ते स्वसहायेन नीयन्त इति वाऽर्थः । अत्रैव स्वमूलरूपाग्न्यादावेव समवनीयन्ते देहमुत्सृज्य तान् प्रति गच्छतीति वार्थः । न केवलं ब्रह्मनाड्योत्क्रमणाभावमात्रं ज्ञानिनः । किन्तु स अपरोक्षज्ञानिदेहः । उच्छ्वयति उच्छूनतां प्रतिपद्यते । आध्मायति दृतिवद् बाह्येन वायुना पूरितो भवति । आध्मातो मृतो निश्चेष्टः शेते । एवं प्रारब्धकर्मफलभूतं देहोच्छूनतादिकमनुभूय चक्षुरादिद्वारा देहान्निर्गत्य मुक्तिं गच्छतीत्यर्थः ।। ११ ।।

प्रकृतमुक्तौ विशेषं पृच्छति– **याज्ञवल्क्येति** ।। अयं पुरुषो ब्रह्मापरोज्ञक्षानी

यत्र यदा म्रियते मुक्तो भवति तदा एनं किं न जहातीत्युवाचेति सम्बन्धः। उत्तरमाह– **नामेति** ॥ सर्वं जहाति नाममात्रं न जहाति कुत इत्यत आह– **अनन्तमिति** ॥ शेषो मुक्तः विरिञ्चो मुक्त इति मुक्तानामपि तत्तन्नाम्ना व्यवहारादित्यर्थः। वाच्यानां देवानामन्तवत्त्वे खलु तद्वाचकशब्दस्या-न्तवत्त्वम् । तदेव नास्तीत्याह– **अनन्ता इति** ॥ एवंवेत्तुः फलमाह– **अनन्तमेवेति** ॥ य एवं वेदेति शेषः ॥ १२ ॥

इदानीमत्रैव समवनीयन्त इत्युक्तमनुवदन् सर्वसाधारणमरणे विशेषं पृच्छति– **याज्ञवल्क्येति** ॥ यत्र यदा मृतस्य पुरुषस्य वाक् वागभिमानी अग्निरग्निं स्वमूलरूपमेकेन रूपेणाप्नोति प्राप्नोति एवमुत्तरत्रापि । आत्मा हृदिस्थः परमात्मा । आकाशं बहिर्व्याप्तं परमात्मानमप्येति । अयं पुरुषः क्व भवति कस्मिन् स्थाने तिष्ठतीत्यर्थः । पृष्टस्योत्तरं वक्तुं तस्यातिरहस्यत्वात्तदयोग्येषु न प्रकाशनीयमिति भावेनोपोद्घातमाह– **आहरेति** ॥ हे सौम्य हस्तमाहर देहि । कुतः । हे आर्तभागावामेवैतस्यैतत् त्वया पृष्टं तत्त्वं वेदिष्यावः नौ आवाभ्यां स जनः अयोग्यो जनः एतत्प्रमेयं न जानीयादिति । तौ याज्ञवल्क्यार्तभागौ उत्क्रम्य मन्त्रयाञ्चक्राते । तौ किं मन्त्रयामासतुरित्यतः श्रुतिः स्वयमाह– **तौ हेति** ॥ कर्मैव कर्मफलदातृत्वाद् भगवान् कर्मेत्युच्यते । कायं तदा पुरुषो भवतीति प्रश्नस्य किमुत्तरमुक्तवानित्यत आह– **पुण्य इति** ॥ स मृतः पुरुषो यदि पुण्यकर्मा । तर्हि पुण्येन कर्मणा तत्स्थेन परमात्मना पुण्यो भवति स्वर्गादिपुण्यलोकवान् भवति । यदि पापकर्मा तर्हि पापेन कर्मणा तत्स्थपरमात्मना पापो नरकादिलोकवान् भवति । यदि ज्ञानी तर्हि ज्ञानस्थेन परमात्मना मुक्तिमानित्यपि ग्राह्यम् । अनेन केत्यस्य स्वर्गादावित्युत्तरमुक्तं भवति। ततः स्वपृष्टप्रश्नानामुत्तरकथनाज्जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

इति आर्तभागब्राह्मणम् ॥ २ ॥

**उपनिषत्—**

**अथ भुज्युब्राह्मणम्**

**[ब्रह्माण्डस्य विस्तृतिः]**

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्जलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥ १ ॥**

**भाष्यम्—**

**पारीक्षिताः प्रद्युम्नाः ।**

**टिप्पणी—**

अत्र पारीक्षिता इत्यस्य परितो दुरितं क्षीयते येन स परीक्षित् अश्वमेधः तद्याजिनः पारीक्षिता इति व्याख्यानमसत् । क्व पारिक्षिता इति प्रश्नस्यागच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति परिहारानुपपत्तेः । न ह्यश्वमेधयाजिनः क्व सन्तीति प्रश्ने यत्राश्वमेधयाजिनस्तत्रागच्छन्निति परिहारः सम्भवति । नचाधुनातनाः पारीक्षिताः क्वेति प्रश्ने पूर्वतना अश्वमेधयाजिनो यत्रेति परिहारः सम्भवतीति वाच्यम् । अश्रुतकल्पनापत्तेरिति भावेन पारीक्षिता इत्येतद् व्याचष्टे– **पारीक्षिता इति** ॥

**उपनिषत्—**

**स होवाचोवाच वै सोऽगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति तां**

समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान् वायुरात्मनि धित्वा तत्रागमयद् यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

इति भुज्युब्राह्मणम् ॥ ३ ॥

भाष्यम्—

अश्वमेधयाजिन इन्द्राः ।

प्रद्युम्नः कामनामाऽसौ पारीक्षित इतीरितः ।
सर्वेक्षणात्परो विष्णुः परीक्षिदिति कीर्तितः ॥
तत्पुत्रत्वात्कामदेवः पारीक्षित इति स्मृतः ।
शताश्वमेधयाजित्वादिन्द्रा एवाश्वमेधिनः ॥
अतीतानागतानां च कामानां वज्रिणामपि ।
एकमेव हि मुक्तानां स्थानं वेदोदितं सदा ॥
इन्द्रनामा तु गरुडः सामर्थ्यादेव कथ्यते ।
तस्य रूपद्वयं नित्यं सौपर्णं पौरुषं तथा ॥
तत्र पौरुषरूपी सन् भूत्वा सौपर्णरूपवान् ।
कामदेवानुपादाय मुक्तौ वायोः प्रयच्छति ॥
वायुस्तान् स्वशरीरस्थान् कृत्वेन्द्रा यत्र मुक्तिगाः ।
प्रद्युम्ननामके विष्णावेवं वायुर्हि मोक्षदः ॥
तस्मात्सर्वोत्तमो वायुर्विविधं तु यदष्टकम् ।
देवान् ऋषीन् पितॄन् यक्षान् गन्धर्वान् मानुषोरगान् ।

उपनिषत्—

## अथ भुज्युब्राह्मणम्

[ब्रह्माण्डस्य विस्तृतिः]

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्जलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥ १ ॥**

भाष्यम्—

**पारीक्षिताः प्रद्युम्नाः ।**

टिप्पणी—

अत्र पारीक्षिता इत्यस्य परितो दुरितं क्षीयते येन स परीक्षित् अश्वमेधः तद्याजिनः पारीक्षिता इति व्याख्यानमसत् । क्व पारिक्षिता इति प्रश्नस्यागच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति परिहारानुपपत्तेः । न ह्यश्वमेधयाजिनः क्व सन्तीति प्रश्ने यत्राश्वमेधयाजिनस्तत्रागच्छन्निति परिहारः सम्भवति । नचाधुनातनाः पारीक्षिताः क्वेति प्रश्ने पूर्वतना अश्वमेधयाजिनो यत्रेति परिहारः सम्भवतीति वाच्यम् । अश्रुतकल्पनापत्तेरिति भावेन पारीक्षिता इत्येतद् व्याचष्टे– **पारीक्षिता इति** ॥

उपनिषत्—

**स होवाचोवाच वै सोऽगच्छन् वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्व न्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत्पर्येति तां**

समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान् वायुरात्मनि धित्वा तत्रागमयद् यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशंस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

इति भुज्युब्राह्मणम् ॥ ३ ॥

भाष्यम्—

अश्वमेधयाजिन इन्द्राः ।

प्रद्युम्नः कामनामाऽसौ पारीक्षित इतीरितः ।
सर्वेक्षणात्परो विष्णुः परीक्षिदिति कीर्तितः ॥
तत्पुत्रत्वात्कामदेवः पारीक्षित इति स्मृतः ।
शताश्वमेधयाजित्वादिन्द्रा एवाश्वमेधिनः ॥
अतीतानागतानां च कामानां वज्रिणामपि ।
एकमेव हि मुक्तानां स्थानं वेदोदितं सदा ॥
इन्द्रनामा तु गरुडः सामर्थ्यादेव कथ्यते ।
तस्य रूपद्वयं नित्यं सौपर्णं पौरुषं तथा ॥
तत्र पौरुषरूपी सन् भूत्वा सौपर्णरूपवान् ।
कामदेवानुपादाय मुक्तौ वायोः प्रयच्छति ॥
वायुस्तान् स्वशरीरस्थान् कृत्वेन्द्रा यत्र मुक्तिगाः ।
प्रद्युम्ननामके विष्णावेवं वायुर्हि मोक्षदः ॥
तस्मात्सर्वोत्तमो वायुर्विविधं तु यदष्टकम् ।
देवान् ऋषीन् पितॄन् यक्षान् गन्धर्वान् मानुषोरगान् ।

**असुरांश्च वशे नित्यं नयत्यमितपौरुषः ।**
**सम्पूर्णांश्च सुपर्णेशशेषेन्द्रान् तत्स्त्रियोऽपि च ॥**
**अष्टौ नयत्युन्नयति वशीकृत्य स्वयं प्रभुः ।**
**अतो व्यष्टिः समष्टिश्च वायुरेवाभिधीयते ॥**
**एवं व्यष्टिं समष्टिं च यो वायुं वेद तत्त्वतः ।**
**तत्परं च हरिं नित्यं मुच्यते संसृतेः पुमान् ॥ इति परमसंहितायाम्**
**चरकस्तीर्थसञ्चारी वित्तार्थी करकः स्मृतः ॥ इत्यभिधानम् ॥**

**टिप्पणी—**

ननु तथापि यत्राश्वमेधयाजिनस्तत्र पारीक्षिता आगच्छन्निति परिहारानुपपत्तिः । न ह्यश्वमेधयाजिनां पुरुषाणां यत् स्थानं स्वर्गादिकं तत्प्रद्युम्नानां स्थानम् । तेषां देवत्वेनाश्वमेधयाज्यपेक्षयोत्तमत्वादित्यतोऽश्वमेधयाजिपदं व्याचष्टे– **अश्वमेधयाजिन इति** ॥ प्रद्युम्नानां इन्द्राणां च समत्वेनैकस्थानत्वमुपपन्नमिति भावः । उक्तार्थे प्रमाणं वदन् समग्रब्राह्मणं प्रमाणेन व्याचष्टे– **प्रद्युम्न इति** ॥ प्रद्युम्ने पारीक्षितशब्दं निर्वक्ति– **सर्वेक्षणादिति** ॥ अन्येषामप्यश्व-मेधयाजित्वात्कथमश्वमेधयाजिन इन्द्रा इति व्याख्यानमित्यत आह– **शताश्व-मेधेति** ॥ असाधारण्येन व्यपदेशा भवन्तीति भावः । ननु इन्द्रकामयोरेकैकत्वात् कथं बहुवचनम् । कथं वा तेषामेकस्थानत्वोक्तिः । इन्द्रस्थाने स्वर्गे कामस्या-वस्थानाभावादित्यत आह– **अतीतेति** ॥ इन्द्रः सुपर्णो भूत्वेति कथम् । पुरन्दरस्य सुपर्णत्वेन भवनायोगादित्यत आह– **इन्द्रनामा त्विति** ॥ कुत इत्यत आह– **सामर्थ्यादिति** ॥ ऐश्वर्यादित्यर्थः । यद्वा इन्द्रशब्दसामर्थ्यादेव । इन्द्रः सुपर्णो गरुड इत्यभिधानादित्यर्थः । ननु गरुडः सुपर्णो भूत्वेति कथं सिद्धत्वेनावक्तव्यत्वादित्यत आह– **तस्येति** ॥ सौपर्णं पक्षिसम्बन्धि पौरुषं पुरुषसम्बन्धि । इन्द्रस्सुपर्णो भूत्वा वायवे प्रायच्छदित्येतद् व्याचष्टे– **तत्रेति** ॥ अत्र वायुशब्देन चतुर्मुखो विवक्षितः । वायुरात्मनि धित्वा तत्रागमयद् यत्राश्वमेधयाजिनोऽभवन्निति वाक्यं व्याचष्टे– **तस्मादिति** ॥ सर्वोत्तम इति

व्यष्टिसमष्टिशब्दतात्पर्यकथनम् । व्यष्टिशब्दार्थमाह– **विविधमिति** ।। अशू व्याप्तावित्यस्मात्कर्तरि क्तिच्क्तौ च सञ्ज्ञायां क्तिच्। विविधं अश्नुत इति व्यष्टिः। विविधमित्यस्यैव विवरणं यदष्टकमिति। यद्वा विविधमष्टकमस्यास्तीति व्यंष्टिरित्यर्थः । समष्टिशब्दार्थमाह– **सम्पूर्णानिति** ।। सं समीचीनमश्नुत इति समष्टिः समीचीनमष्टकमस्यास्तीति वा समष्टिः । समीचीनमित्यस्य विवरणम्– **सम्पूर्णानिति** ।। अपपुनर्मृत्युं जयतीति फलवाक्यं व्याचष्टे– **एवमिति** ।। 'तमेवं विद्वान्' इति श्रुतिविरोधपरिहारायोक्तम् ।। **तत्परमिति** ।। अप्रतीतेर्मद्रेषु चरका इत्युक्तचरकशब्दार्थमाह– **चरक इति** ।।

**भाष्यम्**—

> **अहर्मुहूर्तं विज्ञेयमहर्मासोऽपि भण्यते।**
> **अहर्दिनं प्रकाशश्च क्वचिज्ज्ञानं बलं तथा ।। इति च ।।**
>
> **मुहूर्तमष्टभागोनघटिकाद्वयमिष्यते।**
> **क्वचिद्विघटिकाऽपि स्यात् क्वचित् स्यात् तावदुत्तरः ।।**
>
> **–इति कालनिर्णये ।।**
>
> **द्वात्रिंशत्तु मुहूर्तानां दिनमेकं विदुर्बुधाः ।**
> **त्रिंशन्मुहूर्तमथवा मुहूर्तोन्मानभेदतः ।। इति च ।।**
> **सप्तकोटिं च लक्षाणां चतुर्दश च नित्यशः ।**
> **अष्टाविंशत्सहस्रं च सप्तांशशतपञ्चकम् ।।**
> **सौरो रथस्त्वहोरात्रात् परियाति दिवि स्थितः ।**
> **तत्त्रिभागाधिकं चक्रं मानसोत्तरगं चरेत् ।।**
> **नृणां कार्तयुगानां तु योजना मानतो भवेत् ।**
> **यावत्सूर्यरथो याति दिवारात्रेण पार्श्वयोः ।।**
> **सूर्यस्य तावदेव स्यात्प्रकाशः सर्वतस्तथा ।**
> **तमोऽन्धं द्विगुणं तस्मात् काठिण्यात् पृथ्विनामकम् ।।**

**ततो मण्डोदकं चापि द्विगुणं परिकीर्तितम् ।**
**पञ्चाशत्कोटिविस्तारमेवमण्डान्तमुच्यते॥**
**ततस्त्वण्डं च सौवर्णं तद्भिन्नं हरिणा पुरा ।**
**सुषिरं सर्वतो दिक्षु क्षुरधारासमं ततः ।**
**सुपर्णो वायवे तेन मुक्तान् कामान् प्रयच्छति ॥**

**इति तत्त्वसंहितायाम्॥**

**इति भुज्युब्राह्मणम् ॥ ३ ॥**

**टिप्पणी—**

द्वात्रिंशतं वै देवरथाह्न्यानीत्यत्राहःशब्दस्य दिनार्थत्वे प्रकृतेऽसम्भवात् मुहूर्तप्रकाशरूपार्थद्वयं विवक्षितम् । तत्राभिधानमाह– **अहरिति** ॥ ननु षष्टिघटिकात्मकस्यैकस्य दिवसस्य त्रिंशन्मुहूर्तात्मकत्वात् द्वात्रिंशतं वै देवरथाह्न्यानीति कथमुक्तमित्यतो मुहूर्तपरिमाणं तावदाह– **मुहूर्तमिति** ॥ घटिकाष्टभागोनं च तत् घटिकाद्वयं चेति तथोक्तम् । तावदुत्तरः घटिकाषष्ठमभागाधिको द्विघटिकात्मकः कालो मुहूर्त इत्यर्थः । अत्र विघटिकामात्राधिक्यं द्रष्टव्यम् । किं तत इत्यत आह– **द्वात्रिंशत्त्विति** ॥ **अथवेति** ॥ अष्टाविंशत्रिंशन्मुहूर्तमिति पक्षान्तरद्योतकः । कथमेतत्सङ्गतं इत्यत आह– **मुहूर्तोन्मानभेदत इति** ॥ प्रागुक्तमुहूर्तोत्कृष्टपरिमाणभेदत इत्यर्थः । पक्षत्रयेऽपि दिवसस्य षष्टिघटिकात्मकत्वं न विहन्यत इति भावः । तथाच श्रुतौ अष्टभागोनघटिकाद्वयात्मकमुहूर्तापेक्षया द्वात्रिंशतं वै देवरथाह्न्यानीत्युक्तमिति तात्पर्यम् । द्वात्रिंशतं वै देवरथाह्न्यानीति वाक्यं व्याख्यातुं तदुपयुक्तत्वेन सूर्यरथपरिभ्रमणपरिमाणमाह– **सप्तकोटिमिति** ॥ शतपञ्चकस्य सप्तमभागसहितं सप्तांशशतपञ्चकम् । रथपरिभ्रमणदेशपरिमाणमुक्त्वा चक्रपरिभ्रमणदेशपरिमाणमाह– **तत्त्रिभागाधिकमिति** ॥ सप्तकोटिमित्याद्युक्तरथपरिभ्रमणदेशपरिमाणतृतीयभागाधिकदेशमित्यर्थः । उक्तं च पञ्चमस्कन्धे– 'एवं नवकोट्य एकपञ्चाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशन्ति' इति । रथसम्बद्धचक्रपरिभ्रमणदेशस्य तत्त्रिभागाधि-

कत्वं कथमित्यत उक्तम्– **मानसोत्तरगमिति** ।। रथस्तु मानसोत्तरपर्वतापेक्षयाऽन्तर्देश एव वर्तत इत्यर्थः । सप्तकोटिमित्युक्तं योजनं केषां मानत इति जिज्ञासायामाह– **नृणामिति** ।। तुशब्द एवार्थे कार्तयुगानामेव नृणामङ्गुलिमानतो योजना भवेत् । तद्यथा चतुर्विंशत्यङ्गुलो हस्तः । हस्तचतुष्को दण्डः । दण्डसहस्रं क्रोशः । क्रोशचतुष्कं योजनमिति । इदानीं द्वात्रिंशतं देवरथाह्न्यान्ययं लोक इति वाक्यं व्याचष्टे– **यावत्सूर्य इति** ।। यावत् यावद्योजनात्मके देशे । तावत् तावति देशे । सूर्यस्य प्रकाशः सूर्यस्य पार्श्वयोर्मेरुपर्वतभागे लोकालोकपर्वतभागे च सर्वतः सर्वस्मिन् देशे स्यात् । अनेन द्वात्रिंशतं द्वात्रिंशद्देवरथस्य परिवर्तमानस्य सूर्यरथस्याहानि मुहूर्तानि देवरथाहानि तैर्व्याप्तानि योजनानि देवरथाह्न्यानि यावन्ति यावन्ति योजनानि देवस्य सूर्यस्याहोभिः प्रकाशैर्वा व्याप्तानि । अयं प्रकाशव्याप्तो देशो लोको लोकनामेति व्याख्यातं भवति । यद्वा देवस्याह्न्यानीत्येतदनावर्त्य तावद्योजनात्मके देशेऽयं लोकः सूर्यस्य प्रकाश इति व्याख्यातं भवति । ननु सूर्यरथपरिभ्रमणपरिमाणं सप्तकोटिं च लक्षाणामित्याद्युक्तं अयुक्तं सूर्यरथपरिभ्रमणपरिमाणस्य तावत्त्वे तावतः प्रदेशस्य लोकशब्दवाच्यत्वं कथमुच्यते । सप्तकोटिविस्तारात्मकप्रदेशस्यैव लोकशब्दवाच्यत्वेन निर्णीतत्वात् । 'अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ । तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः । अन्त्याध्यर्धस्थलं हैमं बाह्यतो वाज्रलेपिकम् । एतत्सर्वं लोकनाम' (म.ता.नि. ११-४३) इतीति वाक्यार्थ-पर्यालोचनया तथैव लाभादिति चेन्न । सौरप्रकाशस्य भूप्रदेश इव मेर्वादिलोकालोकान्तपर्वतोपरिभागवर्तित्वेन तद्व्याप्तदेशस्य सप्तकोट्यपेक्षया चतुर्दशलक्षाणामित्युक्तसङ्ख्याधिक्येऽपि अयं लोक इत्यत्र सौरप्रकाश-व्याप्तसप्तकोटिसङ्ख्याकभूसमुद्रप्रदेशमात्रस्यैव लोकशब्दवाच्यत्वेन विवक्षितत्वा-दिति । तं समन्तमिति वाक्यं व्याचष्टे– **तमोऽन्धमिति** ।। तस्मात् सूर्यप्रकाशव्याप्तदेशात् । तर्हि श्रुतौ पृथिवीशब्दप्रयोगः कथमित्यत आह– **काठिन्यादिति** ।। तां पृथिवीं द्विस्तावत्समुद्र इत्येतद् व्याचष्टे– **तत इति** ।।

सति चैवं ब्रह्माण्डान्तः कियत्परिमाणं जातमित्यत आह– **पञ्चाशदिति** ॥ ननूक्तगणनतया ब्रह्माण्डान्तरेकोनपञ्चाशत्कोटित्वप्राप्तेः कथमेतदिति चेन्न । लोकालोकपर्वताक्रान्तस्य पार्श्वद्वयगतस्य मिलितस्य कोटियोजनपरिमितस्य भूप्रदेशस्यात्रानुक्तस्यापि ग्राह्यत्वात् । यथोक्तम्– 'लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः' (म.ता.नि. ११-४६) इति । नचैवं स पञ्चाशत्सहस्रश्चेत्युक्तत्वेन लोकालोकप्रदेशो लक्षाधिककोटिसङ्ख्याकस्तथा च लक्षयोजनाधिक्यं स्यादिति वाच्यम् । जम्बूद्वीपस्य लक्षमात्रयोजनत्वेन लोकनामकप्रदेशस्य लक्षन्यूनसप्तकोटिसङ्ख्याकत्वादिति । तद्यावती क्षुरस्य धारेत्यादिकं व्याख्यातुं तदुपयुक्तमाह– **तत इति** ॥ मण्डोदकात्परतः । तद्व्याचष्टे– **सुषिरमिति** ॥ ततः हरिणा भिन्नत्वात् । सर्वतो दिक्षु सुषिरमस्ति । तानिन्द्रे इत्यस्य तात्पर्यमाह– **सुपर्ण इति** ॥ तेन मार्गेण ॥

### अथ खण्डार्थः

अथ आर्तभागोपरमानन्तरम् । लह्यस्यापत्यं लाह्यायनिः । भुज्युरिति नामवान् । एनं याज्ञवल्क्यं पप्रच्छ । एतस्य प्रश्नस्य त्वयोत्तरं वक्तुं न शक्यत इति द्योतयितुं काञ्चन कथामाह– **याज्ञवल्क्येति** ॥ चरकाः तीर्थचारिणः सन्तो वयम् । मद्रेषु मद्रदेशेषु । पर्यव्रजाम पर्यटितवन्तः । ते वयम् । काप्यस्य कपिगोत्रोत्पन्नस्य । पतञ्चलस्य पतञ्चलनाम्नः । गृहान् आवसथान् । ऐम आगतवन्तः । तस्य पतञ्चलस्य । दुहिता गन्धर्वेण गृहीता । आसीत् तं दुहितर्याविष्टं गन्धर्वम् । त्वं कः किन्नामासीति वयमपृच्छाम । सोऽस्मान् प्रत्यब्रवीत् । नाम्ना सुधन्वा गोत्रेणाङ्गिरस इति । तत्स्वरूपं ज्ञात्वा । तं गन्धर्वं यदा लोकानां लोकादीनां अन्तान् निर्णयान् अवसानान् वा अपृच्छाम । अथ तदा एनं गन्धर्वं पारीक्षिताः परित ईक्षत इति परीक्षित् विष्णुः तत्पुत्रत्वात्पारीक्षिताः अतीतानागतकामदेवाः । काभवन् क्व गता इत्यब्रूम । सः गन्धर्वादाप्तविद्योऽहम् । क्व पारीक्षिता अभवन् तत्स्थानं

त्वा त्वां पृच्छामि । हे याज्ञवल्क्य त्वं यदि जानासि तर्हि क्व पारीक्षिता अभवन्नित्यस्योत्तरं कथय ॥ १ ॥

स एवं भुज्युना पृष्टः याज्ञवल्क्यो ह उवाच । सः सुधन्वाऽङ्गिरसः तुभ्यं उवाच वै । अहं तु ब्रवीमि । ते पारीक्षिताः तत् तत्र अगच्छन् वै । क्व यत्र शताश्वमेधयाजित्वेनाश्वमेधयाजिनः इन्द्राः अतीतानागताः मुक्ताः गच्छन्तीति । पुनः पृच्छति– **केति** ॥ तेषां स्थानं वक्तुं भुवनकोशपरिमाणमाह– **द्वात्रिंशतमिति** ॥ द्वात्रिंशतं द्वात्रिंशत् । देवरथस्य सूर्यरथस्य परिवर्तमानस्य अहानि मुहूर्तानि देवरथाह्वानि तैर्व्याप्तानि योजनानि देवरथाह्वानि यावन्ति । तावन्ति योजनानि । देवरथस्य सूर्यस्य अहोभिः प्रकाशैर्व्याप्तानि । अयं सौरप्रकाशव्याप्तो देशः । लोको नामेति योजना । द्वात्रिंशन्मुहूर्तात्मकाहोरात्राभ्यां देशं सूर्यरथः परिभ्रमति तावति देशे सौरप्रकाशोऽस्ति । यावति सौरप्रकाशोऽस्ति तावद्देशो लोक इत्युच्यत इत्यर्थः । यावान् लोकनामको देशः द्विस्तावत् द्विगुणितं तावत् काठिन्यात् पृथिवीनामकं तमः । तं लोकं समन्तं समन्तात् । पर्येति परितो वर्तते । यावान् तमः प्रदेशः द्विस्तावत्समुद्रः घनोदकनामा तां पृथिवीं समन्तं पर्येति परितो वर्तते । ततस्त्वण्डं च सौवर्णं तद्भिन्नं हरिणा पुरेति ग्राह्यम् । यावती क्षुरस्य धारा अग्रम् । यावद्वा मक्षिकायाः पत्रं तावान् । तत्तत्र सौवर्णाण्डे अन्तरेणाऽकाशोऽस्ति । तेन मार्गेण इन्द्रः सामर्थ्यादिन्द्रनामा पुरुषरूपी गरुडः सुपर्णो भूत्वा सुपर्णशब्देन स्वकीयमेव सौपर्णरूपमुच्यते तद्भूत्वा । तान् पारीक्षितान् वायवे प्रायच्छत् । वायुः तान् पारीक्षितान् आत्मनि स्वशरीरे धित्वा धृत्वा तत्रागमयत् । क्व यत्र प्रद्युम्ननामके विष्णौ अश्वमेधयाजिनो मुक्ता इन्द्राः अभवन् इति । यथा अहं पारीक्षितानां मोक्षदातृतया वायुं स्तौमि एवमिव एवमेव । वै सः गन्धर्वो वायुमेव प्रशशंस । वेदपुरुषः स्वयं वायुं स्तौति– **तस्मादिति** ॥ पारीक्षितानां मोक्षदातृतया । वायुरेव व्यष्टिः विविधं प्रत्येकं अनेकविधं देवर्ष्यादिरूपं यदष्टकं तन्नयतीति व्यष्टिः । वायुरेव समष्टिः सम्पूर्ण

यत्सुपर्णादिरूपमष्टकं तन्नयतीति समष्टिरित्यर्थः । व्यष्टिसमष्टित्वेन वायुज्ञानिनः फलमाह– **अपपुनरिति** ॥ २ ॥

इति भुज्युब्राह्मणम् ॥ ३ ॥

**उपनिषत्**—

## अथ उषस्तब्राह्मणम्

[भगवतः लक्षणानि]

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मा सर्वान्तर य उदानेनोदानिति स त आत्मा सर्वान्तरो यः समानेन समानिति स त आत्मा सर्वान्तर एष आत्मा सर्वान्तरः ॥ १ ॥**

**भाष्यम्**—

यत्साक्षादपरोक्षात् । साक्षादेवापरोक्षमत्ति । अनुभवति स्वरूपमन्यच्च सर्वं पश्यतीति साक्षादपरोक्षात् । आपरोक्ष्येण पश्यतामप्यन्येषां भगवत्प्रसादादेव दर्शनं भवति । न भगवतोऽन्यापेक्षयेति साक्षादिति विशेषणम् । अनन्यापेक्षस्याप्यपूर्णत्वं भवतीत्यतो ब्रह्मेति । अन्येषां नियन्तृत्वं चास्तीत्यत आत्मा ।

**टिप्पणी**—

यत्साक्षादपरोक्षादित्यस्य यद्ब्रह्म बृहत्तमं साक्षाद् अव्यवहितमपरोक्षाद् विभक्तिव्यत्ययेनापरोक्षमगौणं न तु नामब्रह्मेत्यादिवत् गौणमिति व्याख्यानमसत् । अपरोक्षादित्यस्यैवार्थान्तरपरत्वेन प्रथमान्तत्वसम्भवे पञ्चम्यन्तत्वमङ्गीकृत्य

विभक्तिव्यत्यासस्यानाश्रयणीयत्वात् । अगौणमित्यस्याशाब्दत्वाच्चेति भावेन तदनूद्य व्याचष्टे– **यत्साक्षादिति** ॥ अपरोक्षमिति क्रियाविशेषणम् । अदित्यस्यार्थोऽत्तीति भक्षणार्थत्वस्य प्रकृतानुपयोगात् तत्तात्पर्यमाह– **अनुभवतीति** ॥ विषयानुक्तेस्तदुक्तिपूर्वकमपरोक्षादित्यस्य फलितमर्थमाह– **स्वरूपमिति** ॥ नन्वनेनापरोक्षतया जानातीत्यपरोक्षादित्यर्थ उक्तो भवति । तथाच साक्षादिति विशेषणं व्यर्थं स्यादित्यत आह– **आपरोक्ष्येणेति** ॥ पश्यतां जानताम् । 'पश्यार्थैश्चानालोचने' इति ज्ञानमात्रेऽपि तत्प्रयोगात् । नच स्वरूपमन्यच्च पश्यतीत्युक्त्यैवान्यत्राप्रसङ्गात् साक्षादिति विशेषणवैय्यर्थ्यं तदवस्थमेवेति वाच्यम् । स्वरूपमन्यच्चेत्यस्य स्वरूपमात्रकथनपरत्वेन शब्दार्थान्तर्गतत्वाभावात् । अत एवापरोक्ष्येण पश्यतामित्येवानुवादः कृत इति भावः । ननु साक्षादित्यनेन यद्यनन्यापेक्षत्वमुक्तं तर्हि ब्रह्मेति विशेषणं व्यर्थं स्यात् । अनन्यापेक्षस्य पूर्णत्वनियमेन तदुक्त्यैव तल्लाभादित्यत आह– **अनन्यापेक्षस्यापीति** ॥ कस्मिंश्चिद्विषयेऽनन्यापेक्षस्यापि अपूर्णत्वं भवतीत्यतः पूर्णत्वप्रतिपादनाय ब्रह्मेति विशेषणं न व्यर्थमित्यर्थः । यद्वा अनन्यापेक्षस्य न पूर्णत्वनियमः । अनन्यापेक्षस्यापरिपूर्णत्वं भवति सम्भवतीत्यप्रयोजकत्वात् । तथाच न तदुक्त्या पूर्णत्वं लभ्यत इत्याशङ्कमानं प्रति पूर्णत्वप्रदिपादनार्थं तद्विशेषणमिति भावः । आत्मा जीव इति व्याख्यानमसत् । तस्य सर्वान्तरत्वायोगात् । नतु जीवस्यापरिच्छिन्नत्वमस्ति, येन परिच्छिन्नत्वभ्रमव्युदासाय तत्सार्थकं स्यादिति भावेन ब्रह्मशब्दागतार्थतयाऽत्मशब्दं व्याचष्टे– **अन्येषामिति** ॥ इत्यत इति निमित्तात् । परमात्मनोऽन्यनियामकत्वं निमित्तीकृत्यात्मेत्युक्तमित्यर्थः ।

**भाष्यम्—**

**अन्यनियन्तृत्वेऽप्यन्यापेक्षा नास्तीत्यतः सर्वान्तरः । सर्वं सामर्थ्यं स्वान्तरेवास्तीति । जीवेश्वराभेदनिवृत्त्यर्थं त आत्मेति । साक्षादपरोक्षत्वादिगुणैरेव भेदे सिद्धेऽपि परमार्थतोऽपि जीवेश्वराभेदनिवृत्त्यर्थं 'त आत्मा' इति ।**

**तत्र प्रधानतात्पर्यज्ञापनार्थं पुनःपुनरभ्यासः ।**

**टिप्पणी**——

ननु यदि सर्वान्तरत्वं सर्वान्तःस्थत्वमात्रं तदाकाशादिसाधारण्यापत्तिः । यदि च नियामकतयेति विवक्षितं तदात्मशब्देन गतार्थमित्यतस्तन्निवर्त्याशङ्कां सूचयन् व्याचष्टे– **अन्येति** ॥ आत्मशब्देन परमात्मनोऽन्यनियन्तृत्वोक्तौ तच्च ब्रह्मादीनामिवान्यापेक्षया किमित्येतच्छङ्कापरिहारार्थमन्यनियन्तृत्वेऽप्यन्यापेक्षा नास्तीत्यतो हेतोस्सर्वान्तर इत्युक्तमित्यर्थः । सर्वान्तरशब्देन कथमेतल्लभ्यत इत्यतस्तद्व्याचष्टे– **सर्वमिति** ॥ स्वतो समर्थस्यान्यापेक्षेति भावः । यो म आत्मेत्युषस्तेनानुक्तत्वात्त आत्मेति कथं याज्ञवल्क्येनानुवादः कृत इत्यत आह– **जीवेति** ॥ उषस्तेन जीवब्रह्मणोरेकत्वं बुद्ध्वा जीवस्वरूपं पृष्टमिति मन्दानां जीवब्रह्माभेदप्रतीतिनिरासार्थं याज्ञवल्क्येन त आत्मेत्यनुवादः कृत इत्यर्थः । एतेनैतदपि निरस्तं यत्परैरुक्तं यत्साक्षादपरोक्षं ब्रह्म यश्चात्मा जीवः सर्वान्तरस्तं ब्रह्माभिन्नमेव व्याचक्ष्वेति । जीवब्रह्माभेदस्य प्रश्नविषयकत्वे त आत्मेति जीवेश्वरभेदानुवादानुपपत्तेरिति । ननु त आत्मेत्यनुक्तावपि जीवेशभेदः साक्षादपरोक्षत्वादिविशेषणोक्त्यैव सिद्ध्यति । अतस्तदुक्तिर्व्यर्थेत्यत आह– **साक्षादिति** ॥ यद्यपि साक्षादपरोक्षत्वादिगुणैरेव जीवेशभेदः सिद्ध्यति । जीवे तदभावस्यानुभवसिद्धत्वात् । तथापि तेषां धर्माणां व्यावहारिकत्वात् तत्कृतो भेदोऽपि व्यावहारिकः । स च न परमार्थतो जीवेश्वरचैतन्याभेदविरोधीति तच्चैतन्ययोरभेदः स्यादित्यतः परमार्थतोऽपि मुक्तौ जीवेश्वरचैतन्याभेदनिवृत्त्यर्थं त आत्मेत्युक्तम् । ननु त आत्मेति वाक्यप्रतिपाद्योऽपि भेदः व्यावहारिकः किन्न स्यादिति चेन्न । जीवेश्वरभेदस्य वेदप्रधानतात्पर्यविषयत्वेन परमार्थतया मुक्तावपि सिद्धेः । ननु तत्र प्रधानतात्पर्यमेव कुतस्सिद्धमित्यत आह– **तत्रेति** ॥ जीवेशभेदे इत्यर्थः । अभ्यासमात्रं तात्पर्यं ज्ञापयति पुनःपुनरभ्यासस्तु महातात्पर्यं ज्ञापयतीत्यर्थः ।

उपनिषत्—

**स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद् व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तमेव व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरोऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥**

इति उषस्तब्राह्मणम् ॥ ४ ॥

भाष्यम्—

**देवतान्तरस्यापीदं लक्षणं समानमिति पृच्छति यथा विब्रूयादित्यादिना ।**

**चतुष्पात्त्वादिलक्षणं गोरश्वस्यापि यथा समम् एवमेव साक्षादपरोक्षत्वादिलक्षणं तत्तद्देवतावादिभिस्तस्यास्तस्या अङ्गीक्रियत एव ।**

**अतो विशेषनाम वक्ति अः इति । अतोऽन्यद्विष्णोरन्यदार्तम् ।**

टिप्पणी—

तं मे व्याचक्ष्व ब्रह्माभिन्नं जीवं व्याचक्ष्व शृङ्गे गृहीत्वा गामिव दर्शयेति प्रश्नस्योक्तमुत्तरं व्यधिकरणमिति प्रश्नोत्तरयोर्वैयधिकरण्यमाशङ्कते स होवाचेतीति व्याख्यानमसत् । तं मे व्याचक्ष्वेत्यस्य शब्दबाह्यत्वादुक्ताभिप्रायकत्वाभावेन परमात्मानं व्याचक्ष्वेत्यर्थत्वे उक्तोत्तरस्य समानाधिकरणत्वादिति भावेन स्वयमन्यथा तदवतार्य व्याचष्टे– **देवतान्तरस्यापीति** ॥ ब्रह्मरुद्रादिरूपस्येत्यर्थः । समानमिति तथा चातिव्याप्तिरित्यर्थः । यद्यपि यः प्राणेन प्राणितीत्यादि याज्ञवल्क्योक्तब्रह्मलक्षण एवातिव्याप्तिराशङ्क्या । तथापि स्वोक्तस्यापि साक्षादपरोक्षत्वादिलक्षणस्य वस्तुतो निर्दुष्टस्य याज्ञवल्क्यस्याभिप्रेतत्वेन

तत्राप्यतिव्याप्तिशङ्केति ध्येयम्। नन्वेवं यदन्यानिष्ठं विष्णोर्लक्षणं तन्मे व्याचक्ष्वेति प्रश्नवाक्यार्थः। एतस्य च नोत्तरमुपलभ्यते। न दृष्टेर्द्रष्टारमित्याद्युक्त-लक्षणस्यापि पूर्ववदतिव्याप्तिशङ्काग्रस्तत्वादित्यत आह– **अत इति** ॥ यत इतरलक्षणानामतिव्याप्तिशङ्काविषयत्वमित्यर्थः । विशेष्यत इति विशेषः । किमनेन विशेषनामोक्तं विष्णोरित्यतः तद् व्याचष्टे– **अतोऽन्यदिति** ॥

**भाष्यम्**——

**अ इति विष्णोर्हि नाम ।**

**'न ते विष्णो' 'परो मात्रया' इत्यादिश्रुतिप्रसिद्धं विष्णोर्लक्षणं न दृष्टेर्द्रष्टारमित्यादिना वक्ति।**

**टिप्पणी**——

नन्वतःशब्दस्य प्रकृपरामर्शकत्वात्कथं विष्णोरन्यदिति व्याख्यानमित्यत आह– **अ इतीति** ॥ हिशब्देन 'अः इति ब्रह्म' 'अकारो वासुदेवः स्यात्' इत्यादिश्रुतिस्मृतिप्रसिद्धिं दर्शयति । अनेन अ इत्येव विशेषनामेत्युक्तं भवति। नचैतदपि अन्यसमानम्। 'अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम्। ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः । वर्तन्ते नत्वकारोऽयं वर्तते केशवं विना । नारायणादिनामानि नृणां नामक्रियास्वपि । विहितान्यकारो नैवायं विहितस्तमृते प्रभुम्' (ऐ.भा. प्र-२, अ-२) इति वचनादकारस्य विशेषनामवत्त्वावगमात् । ननूक्तलक्षणानामतिव्याप्तिशङ्काग्रस्तत्वात् किम-साधारणलक्षणमिति प्रश्नेन दृष्टेरित्यादिनेन्द्रियगोचरत्वं कथमुच्यते । तस्यापि तथात्वादित्यतस्तदपि श्रुतिसिद्धत्वेनासाधारणमित्यभिप्रेत्याऽऽह– **न त इति** ॥ चक्षुराद्यगोचरत्वादेर्विष्ण्वन्यानिष्ठत्वे आद्या श्रुतिः । चक्षुराद्यगोचरत्वस्य विष्णुनिष्ठत्वे तदन्यानिष्ठत्वे च द्वितीया। हे विष्णो देव ते महिम्नश्चक्षुरा-द्यगोचरत्वादिरूपस्य । परमन्तं सीमानं जायमानो न प्राप्नोति जातो नाऽप जनिष्यमाणो नाऽप्स्यतीत्यर्थः । हे विष्णो स्वमूर्त्यै वा परिच्छिन्नमापयन्ति

विषयानिति मात्रेन्द्रियगणस्ततस्तं परोऽसि ते महित्वमिन्द्रियागोचरत्वलक्षणं केऽपि न प्राप्नुवन्तीत्यर्थः । न ते विष्णाविति सामान्यश्रुतिमुदाहरता साक्षादपरोक्षत्वादीनां उक्तसर्वलक्षणानामतिव्याप्तिः परिहृता। अत एवोदाहरिष्यमाणप्रमाणे 'यद्यप्येते गुणाः सर्वे विष्णोरेव नचान्यगाः' इत्युक्तमिति ज्ञातव्यम् ।

**भाष्यम्—**

**विनैवान्यप्रसादेन पूर्णसर्वगुणात्मकम्।**
**पश्यन्ननुभवत्येव स्वरूपं केशवः प्रभुः ।।**
**पश्यत्यव्यवधानेन सर्वं चान्यज्जडाजडम्।**
**साक्षादेवापरोक्षात्स विष्णुरेव ततः स्मृतः ।।**
**साक्षाच्छब्दः स्वतन्त्रत्वमपरोक्षस्त्वनावृतिम् ।**
**अदनं भोग उद्दिष्टस्तस्माद्विष्णुस्तथा स्मृतः ।।**
**ब्रह्मासौ गुणपूर्णत्वादात्मा सर्वनियन्तृतः ।**
**अनियम्यत्वतो नित्यं सर्वैः सर्वान्तरः स्मृतः ।।**
**प्राणादिपञ्चरूपो यो वायुः सर्वनियामकः।**
**नियन्ता परमो विष्णुर्वायोस्तस्यापि सर्वदा ।।**
**न दृश्यश्चक्षुषा चासौ न मनोबुद्धिगोचरः।**
**अनन्तत्वान्महाविष्णुरवाच्योऽश्राव्य एव च।।**

**टिप्पणी—**

एवं स्ववाक्येन ब्राह्मणं व्याख्याय तद्दाढर्याय तद्व्याख्यानरूपं प्रमाणं उदाहरति— **विनैवेत्यादिना** ।। साक्षादित्यस्यार्थः— **विनैवान्यप्रसादेनेति** ।। अपरोक्षेत्यस्यार्थः पश्यन्नेवेति । अदित्यस्यार्थोऽनुभवतीति । पूर्णसर्वगुणात्मकं स्वरूपमिति विषयोक्तिः । न केवलं स्वस्वरूपं किन्तु सर्वं जडाजडमन्यज्जगच्चाव्यवधानेन पश्यति। साक्षादित्यस्यार्थो व्यवधानेन नान्यद्वारमन्तरेणेति । अपरोक्षादित्यस्यार्थः पश्यतीति । साक्षाच्छब्दस्योक्तार्थत्वमुपपादयति—

**साक्षाच्छब्द इति** ॥ आहेति शेषः । अपरोक्षशब्दस्योक्तार्थत्वमुपपादयति– **अपरोक्ष इति** ॥ अपरोक्षशब्दः । अदित्यस्योक्तार्थत्वमुपपादयति– **अदनमिति** ॥ भोगः स्वानुभव इत्यर्थः । ब्रह्मात्मसर्वान्तरशब्दान् व्याचष्टे– **ब्रह्मेति** ॥ सर्वैरनियम्यत्वत इति सम्बन्धः । यः प्राणेन प्राणितीत्यादि व्याचष्टे– **प्राणादीति** ॥ अनेन यो विष्णुः प्राणेन प्राणनाम्ना मुख्यवायुरूपेण निमित्तेन प्राणिति जगत्प्राणनरूपं व्यापारं करोतीत्यादि व्याख्यातं भवति । न दृष्टेर्द्रष्टारं पश्येरित्यादि व्याचष्टे– **न दृश्य इति** ॥ ननु विष्णुस्वरूपस्य सर्वथा चक्षुराद्यगोचरत्वे 'द्रष्टव्यः श्रोतव्यः' इत्यादिश्रुतिविरोध इत्यत आह– **अनन्तत्वादिति** ॥ तथाच साकल्येन चक्षुराद्यगोचर इत्यर्थः ।

**भाष्यम्**—

> **यद्यप्येते गुणास्सर्वे विष्णोरेव न चान्यगाः ।**
> **तथाप्येतैर्गुणैर्युक्तानज्ञाः प्राहुः शिवादिकान् ॥**
> **अनाम्नैव ततो विष्णुमाहुर्वेदा अदोषतः ।**
> **अदोषत्वाद् गुणोद्रेकाद् अ इत्युक्तो हरिः स्वयम् ॥**
> **अगम्यत्वाच्च बुद्ध्यादेरतोऽन्ये सर्व एव तु ।**
> **ब्रह्मरुद्रादयो जीवा दुःखिनस्तत्प्रसादतः ॥**
> **दुःखमुक्ता निजानन्दं प्राप्नुयुर्नित्यमञ्जसा ॥**
> **मुक्तानामपि सर्वेषां विष्णुरेव नियामकः ।**
> **पूर्णानन्दस्य तस्यैव मुक्ता विप्रुट्सुखात्मकाः ॥**

**टिप्पणी**—

न दृष्टेर्द्रष्टारमित्यादिकमुपलक्षणपरमिति भावेनोक्तमवाच्य इति । यथा विब्रूयादित्यादि व्यपदिष्टं भवतीत्यन्तस्य तात्पर्यमाह– **यद्यपीति** ॥ न ते विष्णावित्यादिश्रुतेरित्यर्थः । तर्हि किं विष्णुमात्रनिष्ठं लक्षणमुक्तमित्यत आह– **अनाम्नेति** ॥ यत एतैर्गुणैर्युक्तान् शिवादिकान् प्राहुस्तत इत्यर्थः । वेदा

अतोऽन्यदार्तमित्याद्याः। केन निमित्तेन अनामवाच्यत्वं विष्णोरित्यत आह– **अदोषत इति** ॥ उक्तमनुवदन्नर्थान्तरमाह– **अदोषत्वादिति** ॥ अनेन अ इत्यस्याभावार्थकत्वमङ्गीकृत्यार्थ उक्तः। विरुद्धार्थत्वमङ्गीकृत्याह– **गुणोद्रेकादिति** ॥ अभावार्थत्वमङ्गीकृत्यार्थान्तरमाह– **अगम्यत्वाच्चेति** ॥ अतोऽन्यदार्तमित्येतद्व्याचष्टे– **अत इति** ॥ एवं वै तमात्मानं विदित्वेत्यादि व्युत्थायेत्यन्तोत्तरब्राह्मणगतवाक्यतात्पर्यमाह– **तत्प्रसादत इत्यादिना** ॥ अथ भिक्षाचर्यं चरन्तीत्यस्य तात्पर्यमाह– **मुक्तानामिति** ॥

**भाष्यम्—**

**तारतम्येन तिष्ठन्ति ब्रह्मा तेष्वधिकः सदा।**
**यथा चन्द्रात् सदा भिन्नाः सर्वे तुहिनबिन्दवः ॥**
**एवं विष्णोस्सदा भिन्ना मुक्ता ब्रह्मादिका गणाः ।**
**एवं नियन्ता भगवान् पूर्णसर्वगुणार्णवः ।**
**एक एव परो विष्णुरनियम्यः सदोदितः ॥ इत्यादि बृहच्छ्रुतिः ॥**
**आर्तिर्दुःखं समुद्दिष्टमनार्तो विष्णुरव्ययः ॥ इति च ॥**

**अतोऽन्यदार्तमित्येतस्माच्च जीवानां भेदः प्रसिद्धः। नहि जीवादन्यस्यार्तिर्युज्यते। अतो जीवेभ्योऽन्यश्च विष्णुरेव। तदन्ये ब्रह्मरुद्रादयः सर्वे जीवा एवेति सिद्धम्।**

**प्रकृतिस्त्वतिसामीप्यादनार्ताऽपि पृथङ् न तु।**
**उच्यते न स्त्रियो यद्वत्त्रयस्त्रिंशत्सु भेदिताः ॥ इति च ॥**

इत्युषस्तब्राह्मणम् ॥ ४ ॥

**टिप्पणी—**

गार्गिब्राह्मणतात्पर्यमाह– **तारतम्येनेति** ॥ तारतम्योक्त्या लब्धमर्थमाह– **यथेति** ॥ विरुद्धधर्माधिकरणत्वादित्यर्थः । अन्तर्यामिब्राह्मणतात्पर्यमाह– **एवमिति** ॥ आर्तमित्येतद्दुःखिन इति व्याख्यातम् । तत्र प्रमाणमाह– **आर्तिरिति** ॥ एतेनातोऽस्मादात्मनोऽन्यदार्तं विनाशि रज्जुसर्पादिवत् मिथ्या-

भूतमिति परव्याख्यानं प्रमाणविरुद्धमित्युक्तं भवति । विष्णोरप्यार्तिमत्त्वेऽतोऽन्य-दार्तमिति कथमुच्यत इत्यत आह– **अनार्त इति** ॥ ननु विष्णोर्विशेषनाम वक्तव्यं चेद्विष्णुः अ इत्युच्यत इत्येतावता पूर्तेरतोऽन्यदार्तमिति किमर्थमुक्त इत्यत आह– **अतोऽन्यदिति** ॥ त आत्मेत्युक्तिसमुच्चयार्थश्चशब्दः । विष्णोरिति शेषः । अन्यदिति भेदवाचकशब्दसद्भावादार्तत्वोक्त्या च भेदः प्रकर्षेण सिद्ध इत्यर्थः । ननु विष्ण्वन्यज्जडं किं न स्यात्तथा च कथं जीवानां विष्णोर्भेद-सिद्धिरित्यत आह– **नहीति** ॥ ब्राह्मणार्थमुपसंहरति– **अत इति** ॥ त आत्मेत्याद्युक्तहेतुभ्यो विष्णुर्जीवेभ्योऽन्य इति । अत आर्तिमत्त्वात्तदन्ये ब्रह्मरुद्रादयः सर्वे जीवा एवेति च सिद्धमित्यर्थः । ब्रह्मरुद्रादयः सर्वे जीवा एवेत्यनेनातोऽन्यदार्तमित्युक्तौ ब्रह्मरुद्रादयो जीवा एव न तत्तद्भाद्युक्तरीत्या ईश्वरपुरुषा इति न साक्षादपरोक्षत्वादिलक्षणस्यातिव्याप्तिरिति प्रयोजनान्तरमप्युक्तं भवति । ननु अतोऽन्यदार्तमित्यस्य तदन्ये ब्रह्मरुद्रादयो जीवाः दुःखिन इति व्याख्याने न लक्ष्म्या अनार्तत्वं सिद्धम् । तस्याः दुःखस्पृष्टत्व-लक्षणजीवत्वाभावात् । तथाच श्रुतौ अत इति । विष्णुरिव साऽपि प्रतियोगित्वेन कुतो नोच्यत इत्यत आह– **प्रकृतिरिति** ॥ प्रकृतिर्लक्ष्मीः । अतिसामीप्यात् तत्पत्नीत्वेनेत्यर्थः । तत्र दृष्टान्तमाह– **न स्त्रिय इति** ॥ अष्टौ वसव एकादश रुद्रा द्वादश आदित्या इन्द्रः प्रजापतिरिति त्रयस्त्रिंशत्सु देवेषु निरूप्यमाणेषु तत्स्त्रियो न भेदिताः पृथक् नोक्ता इत्यर्थः । यद्यपि वसुषु अग्निवाय्वादित्यशब्दवाच्यानां वीन्द्रवायुमहेश्वराणां स्त्रियः पृथिव्यन्तरिक्षद्युशब्द-वाच्यत्वेन पृथगुक्ताः । तथैवोत्तरत्र व्याख्यानात् । तथाऽपि नक्षत्रादिशब्दवाच्येन्द्रा-दित्रिंशद्देवतास्त्रीणां पृथगनुक्तत्वात् तदभिप्रायेणेयमुक्तिरिति ज्ञेयम् ।

**अथ खण्डार्थः**

अथ भुज्यूपरमानन्तरमेनं याज्ञवल्क्यं चक्रस्यापत्यं चाक्रायणः उषस्तनामा पप्रच्छ । याज्ञवल्क्येति सम्बोध्योवाच । यत्साक्षादपरोक्षात् यत् ब्रह्म । साक्षादन्यप्रसादं विनाऽपरोक्षं यथा भवति तथा अत्ति अनुभवति स्वरूपमन्यच्चेति शेषः । इति साक्षादपरोक्षात् । ब्रह्म सर्वगुणपरिपूर्णम् । यश्चाऽत्मा सर्वेषां

नियन्ता सर्वान्तरः सर्वं सामर्थ्यं स्वान्तरेवास्तीति नियमनाद्युपयुक्तसर्वसामर्थ्यवान् । तं विष्णुं मे व्याचक्ष्व विशेषेण वदेति । उत्तरमाह– **एष इति** ॥ ते तवात्मा नियामकः सर्वान्तरः । उक्तविशेषणोपलक्षणमेतत् । एष जीवेश्वराभेदनिवृत्त्यर्थं त आत्मेत्युक्तम् । एष इति क इति पृच्छति–**कतम इति** ॥ सर्वान्तर एष इत्युक्तो यः स कतमः क इत्यर्थः । उत्तरमाह– **य इति** ॥ यः प्राणेन प्राणनाम्ना मुख्यप्राणरूपेण निमित्तेन प्राणिति जगत्प्राणनं करोति स ते आत्मा सर्वान्तर इत्यर्थः । एवमुत्तरत्रापि । यस्समानेन समानितीत्यपि ग्राह्यम् । उपसंहरति– **एष इति** ॥ ते आत्मा सर्वान्तरः एष प्राणादिपञ्चरूपमुख्यवायुप्रेरकत्वलक्षण इत्यर्थः ॥ १ ॥

देवतान्तरस्यापीदं लक्षणं समानमिति पृच्छति– **स होवाचेति** ॥ का गौः कोऽश्व इति पृष्टेऽसौ चतुष्पात् गौः असौ चतुष्पादश्व इति यथा कश्चिद्विब्रूयात् वदेत् । एवमेव त्वया व्यपदिष्टमुक्तमेतत् मुख्यप्राणद्वारा सर्वजगच्चेष्टकत्वादिकं लक्षणं भवति । यथा चतुष्पात्त्वादिलक्षणं गोरश्वस्यापि समत्वादतिव्याप्तं तथेदमपि हरहिरण्यगर्भादावतिव्याप्तं तैस्तैर्वादिभिस्तथाऽङ्गीक्रियमाणत्वादित्यर्थः । तस्माद्यदेवान्यानिष्ठलक्षणयुक्तं तल्लक्षणोपेतम् । तादृशं लक्षणमिति यावत् । व्याचक्ष्वेति पृष्टे पूर्ववदुत्तरमाह– **एष इति** ॥ पूर्ववत्पृच्छति– **कतम इति** ॥ उत्तरमाह– **न दृष्टेरिति** ॥ त्वं द्रष्टारं सर्वमापरोक्ष्येण पश्यन्तं दृष्टेश्चक्षुषो न पश्येः परमात्मा चक्षुरगोचर इत्यर्थः । एवमुत्तरत्रापि । श्रुतेः श्रोत्रात् मतेर्मनसः विज्ञातेर्बुद्धेः । नच चक्षुःश्रोत्रमनोबुद्ध्याद्यगोचरत्वमपि लक्षणं पूर्ववदतिव्याप्तमिति वाच्यम् । 'परो मात्रया' इत्यादिश्रुतिसिद्धत्वेनातिव्याप्त्यभावात् अत एव विष्णोरकारवाच्यत्वं विशेषलक्षणं वदन् पूर्वोक्तलक्षणातिव्याप्त्युद्धारोपयोगित्वेन ब्रह्मरुद्रादीनां दुःखित्वमाह– **अत इति** ॥ अतः अकारवाच्याद्विष्णोरन्यत् ब्रह्मरुद्रादिकमार्तं दुःखीत्यर्थः । ततः स्वपृष्टप्रश्नोत्तरकथनानन्तरमुषस्तश्चाक्रायण उपरराम ॥ २ ॥

इति उषस्तब्राह्मणम् ॥ ४ ॥

भूतमिति परव्याख्यानं प्रमाणविरुद्धमित्युक्तं भवति। विष्णोरप्यार्तिमत्त्वेऽतोऽन्यदार्तमिति कथमुच्यत इत्यत आह– **अनार्त इति** ।। ननु विष्णोर्विशेषनाम वक्तव्यं चेद्विष्णुः अ इत्युच्यत इत्येतावता पूर्तेरतोऽन्यदार्तमिति किमर्थमुक्त इत्यत आह– **अतोऽन्यदिति** ।। त आत्मेत्युक्तिसमुच्चयार्थश्चशब्दः। विष्णोरिति शेषः । अन्यदिति भेदवाचकशब्दसद्भावादार्तत्वोक्त्या च भेदः प्रकर्षेण सिद्ध इत्यर्थः । ननु विष्ण्वन्यज्जडं किं न स्यात्तथा च कथं जीवानां विष्णोर्भेद-सिद्धिरित्यत आह– **नहीति** ।। ब्राह्मणार्थमुपसंहरति– **अत इति** ।। त आत्मेत्याद्युक्तहेतुभ्यो विष्णुर्जीवेभ्योऽन्य इति। अत आर्तिमत्त्वात्तदन्ये ब्रह्मरुद्रादयः सर्वे जीवा एवेति च सिद्धमित्यर्थः । ब्रह्मरुद्रादयः सर्वे जीवा एवेत्यनेनातोऽन्यदार्तमित्युक्तौ ब्रह्मरुद्रादयो जीवा एव न तत्तद्भाद्युक्तरीत्या ईश्वरपुरुषा इति न साक्षादपरोक्षत्वादिलक्षणस्यातिव्याप्तिरिति प्रयोजनान्तरमप्युक्तं भवति । ननु अतोऽन्यदार्तमित्यस्य तदन्ये ब्रह्मरुद्रादयो जीवाः दुःखिन इति व्याख्याने न लक्ष्म्या अनार्तत्वं सिद्धम् । तस्याः दुःखस्पृष्टत्व-लक्षणजीवत्वाभावात्। तथाच श्रुतौ अत इति। विष्णुरिव साऽपि प्रतियोगित्वेन कुतो नोच्यत इत्यत आह– **प्रकृतिरिति** ।। प्रकृतिर्लक्ष्मीः । अतिसामीप्यात् तत्पत्नीत्वेनेत्यर्थः । तत्र दृष्टान्तमाह– **न स्त्रिय इति** ।। अष्टौ वसव एकादश रुद्रा द्वादश आदित्या इन्द्रः प्रजापतिरिति त्रयस्त्रिंशत्सु देवेषु निरूप्यमाणेषु तत्स्त्रियो न भेदिताः पृथक् नोक्ता इत्यर्थः । यद्यपि वसुषु अग्निवाय्वादित्यशब्दवाच्यानां वीन्द्रवायुमहेश्वराणां स्त्रियः पृथिव्यन्तरिक्षद्युशब्द-वाच्यत्वेन पृथगुक्ताः। तथैवोत्तरत्र व्याख्यानात्। तथाऽपि नक्षत्रादिशब्दवाच्येन्द्रा-दित्रिंशद्देवतास्त्रीणां पृथगनुक्तत्वात् तदभिप्रायेणेयमुक्तिरिति ज्ञेयम् ।

**अथ खण्डार्थः**

अथ भुज्यूपरमानन्तरमेनं याज्ञवल्क्यं चक्रस्यापत्यं चाक्रायणः उषस्तनामा पप्रच्छ । याज्ञवल्क्येति सम्बोध्योवाच । यत्साक्षादपरोक्षात् यत् ब्रह्म । साक्षादन्यप्रसादं विनाऽपरोक्षं यथा भवति तथा अत्ति अनुभवति स्वरूपमन्यच्चेति शेषः । इति साक्षादपरोक्षात् । ब्रह्म सर्वगुणपरिपूर्णम् । यश्चाऽऽत्मा सर्वेषां

नियन्ता सर्वान्तरः सर्वं सामर्थ्यं स्वान्तरेवास्तीति नियमनाद्युपयुक्तसर्वसामर्थ्यवान् । तं विष्णुं मे व्याचक्ष्व विशेषेण वदेति । उत्तरमाह– **एष इति** ॥ ते तवात्मा नियामकः सर्वान्तरः । उक्तविशेषणोपलक्षणमेतत् । एष जीवेश्वराभेदनिवृत्त्यर्थं त आत्मेत्युक्तम् । एष इति क इति पृच्छति–**कतम इति** ॥ सर्वान्तर एष इत्युक्तो यः स कतमः क इत्यर्थः । उत्तरमाह– **य इति** ॥ यः प्राणेन प्राणनाम्ना मुख्यप्राणरूपेण निमित्तेन प्राणिति जगत्प्राणनं करोति स ते आत्मा सर्वान्तर इत्यर्थः । एवमुत्तरत्रापि । यस्समानेन समानितीत्यपि ग्राह्यम् । उपसंहरति– **एष इति** ॥ ते आत्मा सर्वान्तरः एष प्राणादिपञ्चरूपमुख्यवायुप्रेरकत्वलक्षण इत्यर्थः ॥ १ ॥

देवतान्तरस्यापीदं लक्षणं समानमिति पृच्छति– **स होवाचेति** ॥ का गौः कोऽश्व इति पृष्टेऽसौ चतुष्पात् गौः असौ चतुष्पादश्व इति यथा कश्चिद्विब्रूयात् वदेत् । एवमेव त्वया व्यपदिष्टमुक्तमेतत् मुख्यप्राणद्वारा सर्वजगच्चेष्टकत्वादिकं लक्षणं भवति । यथा चतुष्पात्त्वादिलक्षणं गोरश्वस्यापि समत्वादतिव्याप्तं तथेदमपि हरहिरण्यगर्भादावतिव्याप्तं तैस्तैर्वादिभिस्तथाऽङ्गीक्रियमाणत्वादित्यर्थः । तस्माद्यदेवान्यानिष्ठलक्षणयुक्तं तल्लक्षणोपेतम् । तादृशं लक्षणमिति यावत् । व्याचक्ष्वेति पृष्टे पूर्ववदुत्तरमाह– **एष इति** ॥ पूर्ववत्पृच्छति– **कतम इति** ॥ उत्तरमाह– **न दृष्टेरिति** ॥ त्वं द्रष्टारं सर्वमापरोक्ष्येण पश्यन्तं दृष्टेश्चक्षुषो न पश्येः परमात्मा चक्षुरगोचर इत्यर्थः । एवमुत्तरत्रापि । श्रुतेः श्रोत्रात् मतेर्मनसः विज्ञातेर्बुद्धेः । नच चक्षुःश्रोत्रमनोबुद्ध्याद्यगोचरत्वमपि लक्षणं पूर्ववदतिव्याप्तमिति वाच्यम् । 'परो मात्रया' इत्यादिश्रुतिसिद्धत्वेनातिव्याप्त्यभावात् अत एव विष्णोरकारवाच्यत्वं विशेषलक्षणं वदन् पूर्वोक्तलक्षणातिव्याप्त्युद्धारोपयोगित्वेन ब्रह्मरुद्रादीनां दुःखित्वमाह– **अत इति** ॥ अतः अकारवाच्याद्विष्णोरन्यत् ब्रह्मरुद्रादिकमार्तं दुःखीत्यर्थः । ततः स्वपृष्टप्रश्नोत्तरकथनानन्तरमुषस्तश्चाक्रायण उपरराम ॥ २ ॥

इति उषस्तब्राह्मणम् ॥ ४ ॥

उपनिषत्——

## अथ कहोळब्राह्मणम्

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तमेव मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोळः कौषीतकेय उपरराम ॥ १ ॥**

इति कहोळब्राह्मणम् ॥ ५ ॥

भाष्यम्——

यदेव साक्षादिति पुनः प्रश्नो मुक्तानामपि भगवतो भेदोऽस्तीति ज्ञापयितुम् । यदेव ब्रह्म तदन्ये ब्रह्मरुद्रादयो मुक्ता अपि यन्नैव भवन्ति कदाचन । तमेव मे व्याचक्ष्व मुक्तजीववैलक्षण्येन सहेति द्वितीय एव शब्दार्थः ।

टिप्पणी——

ननु यदुषस्तेन पृष्टं तदेव कहोलोऽपि पृच्छति । तदयुक्तम् । जनसंसद्येव याज्ञवल्क्येन प्रेरकत्वाज्ञेयत्वादिभगवल्लक्षणस्योक्तत्वेन उत्तरस्य जातत्वादित्यत आह— **यदेवेति** ॥ एतेन किञ्चिद्विशेषकथनाय पूर्वोक्तप्रश्नप्रतिवचनयो-

रनुवादोऽयमिति व्याख्यानमपहस्तितम्। तस्य गत्यन्तराभाव एवाऽश्रयणीयत्वात्। ननु कथमनेन वाक्येनायमर्थो ज्ञायते । अवधारणद्वयबलादिति चेन्न । तस्य य एवाऽत्मा उषस्तेन पृष्टस्तमेवाहं पृच्छामीति विद्यैक्यद्योतनार्थत्वादिति चेन्न । विद्यैक्ये ब्राह्मणभेदानुपपत्तेरिति भावेन तद्व्याचष्टे– **यदेव ब्रह्मेति** ॥ यदेवेत्येवकारव्यावर्त्यकथनं तदन्य इति । ननु यदेव ब्रह्म नत्वन्यदिति ज्ञापनाय यदेव साक्षादपरोक्षाद्ब्रह्म तं मे व्याचक्ष्वेत्येतावता पूर्तेर्द्वितीय एवशब्दो व्यर्थ इत्यत आह– **मुक्तजीववैलक्षण्येनेति** ॥ द्वितीय एवशब्दार्थ इति । आत्मस्वरूपापेक्षया द्वितीयो मुक्तवैलक्षण्यरूप एवशब्दार्थ इत्यर्थः । यद्वा बुद्ध्या विवेकेन यो द्वितीयएवशब्दस्तस्यार्थ इत्यर्थः । तं मे व्याचक्ष्वेत्येवोक्ते वस्तुगत्या यदेव ब्रह्म नत्वन्ये तं तत्स्वरूपं व्याचक्ष्वेति परमात्मस्वरूपस्यैव प्रश्नविषयत्वं स्यान्न मुक्तवैलक्षण्यस्य । अन्यथा साक्षादपरोक्षत्वादीनामपि प्रश्नविषयत्वापत्तेः । तथाच परिहारे मुक्तवैलक्षण्योक्तिरसङ्गता स्यात् । अत एवकारः प्रयुक्तः । तथाच तमेव न स्वरूपमात्रं किन्तु इतरव्यावृत्तं मुक्तवैलक्षण्यसहितमिति प्रश्नवाक्यार्थ इति भावः ।

**भाष्यम्——**

**स तु भगवान् स्वत एवातीताशनायादिरतीतानागतवर्तमानकालेषु ब्रह्मादयस्तु तं विदित्वा तत्प्रसादादेव पश्चादत्येष्यन्ति एतं वै तमित्येतादृशैर्गुणैः साक्षादपरोक्षत्वजीवभेदादिभिर्युक्तमित्यर्थः ।**

**टिप्पणी——**

ननु यद्येवं प्रश्नवाक्यार्थस्तर्हि कथं योऽशनायापिपासे इत्यादिपरिहारोक्तिः । अशनायाद्यतीतत्वस्य लक्ष्मीमुक्तसाधारण्यादिति शङ्कां परिहरन् मुक्त-परमात्मवैलक्षण्यप्रतिपादकतया योऽशनायेत्यादि वाक्यं व्याचष्टे– **स त्विति** ॥ तथाहि स्मृतिः । 'नित्यतीर्णाशनायादिरेक एव हरिः स्वतः । अशनायादिकानन्ये तत्प्रसादात् तरन्ति हि' (ब्र.सू.भा. १-३-१४) इति । अत्र मुक्तव्यावृत्त्यर्थ-

उपनिषत्—

## अथ कहोळब्राह्मणम्

**अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तमेव मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं वै तमात्मानं विदित्वा ब्राह्मणः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोळः कौषीतकेय उपरराम ॥ १ ॥**

इति कहोळब्राह्मणम् ॥ ५ ॥

भाष्यम्—

यदेव साक्षादिति पुनः प्रश्नो मुक्तानामपि भगवतो भेदोऽस्तीति ज्ञापयितुम् । यदेव ब्रह्म तदन्ये ब्रह्मरुद्रादयो मुक्ता अपि यन्नैव भवन्ति कदाचन । तमेव मे व्याचक्ष्व मुक्तजीववैलक्षण्येन सहेति द्वितीय एव शब्दार्थः ।

टिप्पणी—

ननु यदुषस्तेन पृष्टं तदेव कहोलोऽपि पृच्छति । तदयुक्तम् । जनसंसद्येव याज्ञवल्क्येन प्रेरकत्वाज्ञेयत्वादिभगवल्लक्षणस्योक्तत्वेन उत्तरस्य जातत्वादित्यत आह— **यदेवेति** ॥ एतेन किञ्चिद्विशेषकथनाय पूर्वोक्तप्रश्नप्रतिवचनयो-

रनुवादोऽयमिति व्याख्यानमपहस्तितम्। तस्य गत्यन्तराभाव एवाऽऽश्रयणीयत्वात्। ननु कथमनेन वाक्येनायमर्थो ज्ञायते। अवधारणद्वयबलादिति चेन्न। तस्य य एवाऽत्मा उषस्तेन पृष्टस्तमेवाहं पृच्छामीति विद्यैक्यद्योतनार्थत्वादिति चेन्न। विद्यैक्ये ब्राह्मणभेदानुपपत्तेरिति भावेन तद्व्याचष्टे– **यदेव ब्रह्मेति** ॥ यदेवेत्येवकारव्यावर्त्यकथनं तदन्य इति। ननु यदेव ब्रह्म नत्वन्यदिति ज्ञापनाय यदेव साक्षादपरोक्षाद्ब्रह्म तं मे व्याचक्ष्वेत्येतावता पूर्तेर्द्वितीय एवशब्दो व्यर्थ इत्यत आह– **मुक्तजीववैलक्षण्येनेति** ॥ द्वितीय एवशब्दार्थ इति। आत्मस्वरूपापेक्षया द्वितीयो मुक्तवैलक्षण्यरूप एवशब्दार्थ इत्यर्थः। यद्वा बुद्ध्या विवेकेन यो द्वितीयएवशब्दस्तस्यार्थ इत्यर्थः। तं मे व्याचक्ष्वेत्येवोक्ते वस्तुगत्या यदेव ब्रह्म नत्वन्ये तं तत्स्वरूपं व्याचक्ष्वेति परमात्मस्वरूपस्यैव प्रश्नविषयत्वं स्यान्न मुक्तवैलक्षण्यस्य। अन्यथा साक्षादपरोक्षत्वादीनामपि प्रश्नविषयत्वापत्तेः। तथाच परिहारे मुक्तवैलक्षण्योक्तिरसङ्गता स्यात्। अत एवकारः प्रयुक्तः। तथाच तमेव न स्वरूपमात्रं किन्तु इतरव्यावृत्तं मुक्तवैलक्षण्यसहितमिति प्रश्नवाक्यार्थ इति भावः।

**भाष्यम्—**

**स तु भगवान् स्वत एवातीताशनायादिरतीतानागतवर्तमानकालेषु ब्रह्मादयस्तु तं विदित्वा तत्प्रसादादेव पश्चादत्येष्यन्ति एतं वै तमित्येतादृशैर्गुणैः साक्षादपरोक्षत्वजीवभेदादिभिर्युक्तमित्यर्थः।**

**टिप्पणी—**

ननु यद्येवं प्रश्नवाक्यार्थस्तर्हि कथं योऽशनायापिपासे इत्यादिपरिहारोक्तिः। अशनायाद्यतीतत्वस्य लक्ष्मीमुक्तसाधारण्यादिति शङ्कां परिहरन् मुक्त-परमात्मवैलक्षण्यप्रतिपादकतया योऽशनायेत्यादि वाक्यं व्याचष्टे- **स त्विति** ॥ तथाहि स्मृतिः। 'नित्यतीर्णाशिनायादिरेक एव हरिः स्वतः। अशनायादिकानन्ये तत्प्रसादात् तरन्ति हि' (ब्र.सू.भा. १-३-१४) इति। अत्र मुक्तव्यावृत्त्यर्थ-

मतीतानागतेत्याद्युक्तम् । रमाव्यावृत्त्यर्थं स्वत एवेति । यद्यपि स्वत एवेत्यनेनोभयव्यावृत्तिसिद्धिः । तथाप्यशनायाद्यतीतत्वस्य कादाचित्कत्वशङ्का-परिहारायातीतानागतेत्याद्युक्तम् । सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यमिति भावः । यदि मुक्तानामपीदृशमशनायाद्यतीतत्वं स्यात्तर्हि कथमिदं तद्व्यावर्तकमित्यत एतं वै तमात्मानं विदित्वेत्यारभ्य व्युत्थायेत्यन्तस्य तात्पर्यमाह– **ब्रह्मादयस्त्विति** ॥ अत्येष्यन्ति अशनायादिकमिति शेषः । अशनायापिपासादेरेषणात्मकत्वाद् एषणाभ्यो व्युत्थायेत्यस्य तात्पर्यमिदम् । स्वत एवेत्यस्य प्रतियोगी तत्प्रसादादेवेति । अतीतानागतेत्यस्य प्रतियोगी पश्चादिति प्रसादानन्तरमित्यर्थः । ननु तर्हि तमित्येतावता पूर्तेरेतमिति व्यर्थमित्यत आह– **एतमिति** ॥ एतं वै तमित्यत्र एतमित्यस्येत्यर्थ इति सम्बन्धः । एतेन तमित्युषस्तब्राह्मणोक्तलक्षणं त्वंपदार्थरूपं परामृशति । एतमिति कहोळब्राह्मणोक्तमशनायादिरहितं तत्पदार्थरूपं परामृशति । सामानाधिकरण्यात्तु सिद्धमेकत्वं वैशब्दोऽवधारयतीति परकीयव्याख्यानमपास्तम् । उषस्तब्राह्मणे साक्षादपरोक्षत्वादिब्रह्मलक्षणनामेवोक्तत्वेन त्वंपदार्थनिरू-पणाभावादिति ।

**भाष्यम्—**

**भिक्षाचर्यं चरन्ति मुक्ता अपि ब्रह्मादयस्तस्मादेव परमेश्वराद्विप्रुडानन्दमेव भिक्षन्तो वर्तन्ते । ब्रह्माणनान्मुक्ता एव ब्राह्मणशब्देनोच्यन्ते ।**

**नहि ज्ञानादनन्तरं सन्न्यासस्य कर्तव्यता । येषां तद्योग्यता तेषामपि ज्ञानार्थत्वे-नैव सन्न्यासः । मुक्ता अपि यं भिक्षन्ते सोऽतिपरिपूर्णमहानन्दो भगवान् स्वत एव । तदन्ये ब्रह्मादयो मुक्ता अपि तत एव विप्रुडानन्दभिक्षुका इति विशेषः । तथापि तेषामेषणातीतत्वान्न दुःखम् ।**

**टिप्पणी—**

'अथ भिक्षाचर्यं चरन्ति' इत्यत्र भगवतो मुक्तवैलक्षण्यं न प्रतीयत इति तदनुपयुक्तमित्याशङ्कावारणाय तावत्तद्वाक्यमनूद्य व्याचष्टे– **भिक्षाचर्यमिति** ॥

अपिशब्देन किं संसारिण इति द्योतयति । विप्रुडानन्दमेव नतु ब्रह्मानन्दवत् निरवधिकमित्यर्थः । नन्वत्र मुक्तवाचकपदाभावात्कथं मुक्ता अपीत्युक्तमित्यत आह– **ब्रह्माणनादिति** ॥ ब्रह्म प्रति गमनादित्यर्थः । अण पण गताविति धातोः आत्मानं विदित्वा ब्राह्मण इति ब्राह्मणशब्देनेत्यर्थः । ब्राह्मणाः ब्रह्मनिष्ठाः ब्राह्मण्यजातिमन्तो वा एषणाभ्यो व्युत्थाय सन्न्यासं कृत्वाऽथानन्तरं शेषकाले देहस्थित्यर्थं भिक्षाचर्यं चरन्तीति परेषां व्याख्यानं दूषयति– **नहीति** ॥ सन्न्यासः खलु ज्ञानार्थं विधेयः । तच्च ज्ञानं जातमेव एतं वै तमात्मानं विदित्वेत्युक्तत्वात् तथाच तद्विधानं व्यर्थम् । नहि निष्पन्नफलं प्रति साधनं विधेयमिति भावः । ननु आत्मानं विदित्वेति परोक्षज्ञानमेवोच्यते तदनन्तरं च सन्न्यासस्य कर्तव्यता स्यादेवेति चेन्न । प्रथमब्राह्मणो मुक्त इति प्रमाणे प्रथमब्राह्मणपदस्य मुक्तपरत्वेन व्याख्याततया तत्साधनीभूतापरोक्षज्ञानस्यैव विदित्वेत्यनेन ग्राह्यत्वात् । ननु व्युत्थाय भिक्षाचर्यं चरन्तीति वर्तमाना-पदेशादर्थवादोऽयं न विधायकः प्रत्ययोऽस्ति । अतः सन्न्यासस्य कर्तव्यतेति कथमुक्तमिति चेन्न । परेणैवमेवाऽऽशङ्क्य 'यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद् यतिः'[१]इत्यादिश्रुत्यनुसारेणास्य वाक्यस्य सर्वकर्मपरित्यागलक्षणसन्न्यास-विधायकत्वाङ्गीकारेण तदनुसारेण तथोक्तत्वात् । ननु अपरोक्षज्ञानिनामपि सनकादीनां विहिततया सन्न्यासानुष्ठानस्य प्रमितत्वात् कथं ज्ञानानन्तरं सन्न्यासस्याकर्तव्यतेत्यत आह– **येषामिति** ॥ तद्योग्यताज्ञानानन्तरमपि सन्न्यासयोग्यता । ज्ञानार्थत्वेन विशेषज्ञानार्थत्वेन । नचात्रापि ज्ञानानन्तरमपि विशेषज्ञानार्थत्वेनैव सन्न्यासविधानमिति वाच्यम् । तादृशाधिकारि-विशेषज्ञापकपदस्य श्रुतावभावादिति भावः । नन्वथ भिक्षाचर्यं चरन्तीत्यनेन भगवतः किं मुक्तवैलक्षण्यमुक्तमित्यत आह– **मुक्ता अपीति** ॥ ननु मुक्ता अपि यदि भिक्षन्ति तर्हि दुःखिनः स्युः । लोके भिक्षुकाणां दुःखदर्शनादित्यत आह– **तथापीति** ॥ भिक्षुकत्वेऽपीत्यर्थः । एषणाया एव दुःखसाधनत्वा-दित्यर्थः ।

भाष्यम्——

**पुत्रस्य वित्तस्य च लोकार्थत्वाल्लोकैषणायामन्तर्भावः। वित्तस्यापि प्रायः पुत्रार्थत्वात्पुत्रैषणायाम्। लोकैषणाया अपि दुःखरूपत्वात्साऽपि तेषां नास्त्येवेति दर्शयितुमुभे ह्येते एषणे एव भवत इत्याह। उभे अपि दृष्टादृष्टविषये एषणात्वाद्दुःखरूपे एवेत्यर्थः। पुत्रवित्तैषणे उभे अपि दृष्टविषयत्वादेकैवेत्युभे एवेत्युक्तम्।**

टिप्पणी——

'या ह्येव पुत्रैषणा' इति श्रुतौ पुत्रैषणाया वित्तैषणायां वित्तैषणायाः लोकैषणायामन्तर्भाव उच्यत इति प्रतीयते तदयुक्तम् । एवमन्तर्भावोक्तौ निमित्ताभावात्। नच वित्तस्य लोकार्थत्वात् वित्तेषणाया लोकेषणायामन्तर्भावो युक्त इति वाच्यम् । तथा सति पुत्रस्यापि लोकार्थत्वेन पुत्रैषणाया अपि लोकैषणायामन्तर्भावापत्तेरित्यतः तद्वाक्यं यथावद्व्याचष्टे– **पुत्रस्येति** ॥ पुत्रवित्तेषणयोरिति शेषः । अनेन या पुत्रैषणा या च वित्तैषणा सैव हि लोकैषणेति वाक्यं योजितं भवति । ननु तर्हि वित्तस्य लोकार्थत्ववत् पुत्रार्थत्वाच्च वित्तैषणाया एव पुत्रैषणायामन्तर्भावो वक्तव्यो नतु पुत्रैषणाया वित्तैषणायामित्यतो या ह्येव पुत्रैषणा सा वित्तैषणेति वाक्यं व्याचष्टे– **वित्तस्यापीति** ॥ वित्तैषणाया इति शेषः । अन्तर्भाव इति वर्तते । अनेन या वित्तैषणा सैव हि पुत्रैषणेति यत्तच्छब्दव्यत्यासेन वाक्यं योजितं भवति। ननूभे ह्येत इति वाक्यं किमर्थं प्रवृत्तमित्यत आह– **लोकैषणाया अपीति** ॥ स्वर्गादिलोकस्य यागादिना सर्वैरभ्यर्थ्यमानतया लोकैषणायाः सत्त्वात् कथं लोकैषणायाश्च व्युत्थायेत्युक्तमित्याशङ्कापरिहाराय लोकैषणाया अपि दुःखरूपत्वात् सा लोकैषणापि तेषां मुक्तानां नास्त्येवेति दर्शयितुमिदं प्रवृत्तमित्यर्थः । नन्वनेन वाक्येन लोकैषणाया अपि दुःखरूपत्वं न प्रतीयत इत्यतः तद्व्याचष्टे– **उभे अपीति** ॥ एषणात्वादित्यनेन हि यस्मात् एषणे इति व्याख्यातं भवति । दुःखरूप इति शेषोक्तिः । नन्वेषणानां त्रित्वादन्तर्भावेऽप्येकत्वादुभे इति कथमुक्तमित्याशङ्कापरिहारायोक्तं दृष्टादृष्टविषयेति । कथमनेन तिसृणां

सङ्ग्रहः कृत इत्यत आह– **पुत्रेति** ॥ पुत्रवित्तैषणे उभे अपि दृष्टविषयत्वादेकैव । अदृष्टविषयिणी लोकैषणा चापरेति उभे एवेत्युक्तमित्यर्थः । उभे इत्येवोक्तमिति वा सम्बन्धः ।

**भाष्यम्—**

**द्वितीयो ब्राह्मणो ब्रह्माणितुं योग्यः ।**

**पाण्डित्यमागमजज्ञानम् । बाल्यं युक्तिसहितम् । बलयुक्तत्वात् । मौनमुपासनाजम् । अमौनमपरोक्षज्ञानम् । निर्विद्य नितरां प्राप्य लब्ध्वा । विद्लृ लाभ इति धातोः ।**

**अथ ब्राह्मणो मुक्तो भवतीत्यर्थः । स मुक्तो येन केनापि वर्तयन्नीदृश एव भिक्षुक एव । न कदाचित्स्वतन्त्रो भवति ।**

**'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति च वक्ष्यति ।**

**मुक्तविषयं चैतत् । अत्र पिताऽपिता भवतीत्यादि तत्प्रस्तावे 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति भगवद्वचनम् ।**

**तत्रैव मुक्तानामानन्दतारतम्यं चोक्तम् ॥**

**स यो मनुष्याणां राद्धः समृद्धो भवति ॥ इत्यादिना ॥**

**श्रोत्रियत्वावृजिनत्वाकामहतत्वानां मुक्तेष्वेव मुख्यत्वात् । यश्च श्रोत्रिय इति ह्यभ्यासः । न ह्यमुक्ता अवृजिना अकामहता वा । नच श्रुतिफलं सम्यक्प्राप्ताः । श्रुतिफलप्राप्तिर्हि श्रोत्रियत्वम् ।**

**टिप्पणी—**

तस्माद्ब्राह्मण इत्युक्तब्राह्मणशब्दस्य मुक्तपरत्वेऽपरोक्षज्ञानिपरत्वे वा पाण्डित्यं निर्विद्येत्याद्ययुक्तेस्तदर्थमाह– **द्वितीय इति** ॥ अणितुं द्रष्टुम् । अप्रतीतेः पाण्डित्यबाल्यशब्दार्थावाह– **पाण्डित्यमिति** ॥ आगमजज्ञानमित्यर्थः । सहितं ज्ञानमिति वर्तते । युक्तिः सहितं सहायः कारणं यस्य तद्युक्तिसहितं युक्तिजन्यमित्यर्थः । यद्वक्ष्यति बाल्यं युक्तिसहायतेति । यद्वा, युक्तिसहितमागमज्ञानमिति सम्बन्धः । बाल्यशब्देन कथमयमर्थो लभ्यत इत्यत आह–

**बलेति** ॥ बलयुक्तं बाल्यं, बलं च युक्तिसहितं ज्ञानं बाल्यशब्देनोच्यत इत्यर्थः । मननस्य बाल्येनेत्यनेनैवोक्तत्वात् मौनशब्दार्थमाह– **मौनमिति** ॥ अमौनं मौनाभावमिति प्रतीतिनिरासाय व्याचष्टे– **अमौनमिति** ॥ निर्विद्येत्यस्य वैराग्यार्थकत्वे 'जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानम्' इति कात्यायनवचनात् पाण्डित्यस्य विरामार्थकधातुयोगेनापादानत्वप्राप्तौ पाण्डित्यादिति पञ्चमी स्यादिति भावेन तदनूद्य व्याचष्टे– **निर्विद्येति** ॥ प्राप्येति तात्पर्यमुक्तम् । तत्कथमित्यतो धात्वर्थमाह– **लब्ध्वेति** ॥ तत्र धातुं पठति– **विदॢ लाभ इति** ॥ अथ ब्राह्मण इति ब्राह्मणशब्दस्य द्वितीयब्राह्मणशब्दवत् ब्रह्माणनयोग्यार्थकत्वप्रतीतिनिरासायार्थमाह– **अथेति** ॥ स ब्राह्मण इति वाक्यं प्रकृतोपयुक्ततया व्याचष्टे– **स मुक्त इति** ॥ भोगेनेति शेषः । एवकारव्यावर्त्यमाह– **नेति** ॥ तदन्येन ब्रह्मादयो मुक्तास्तत एव विप्रुडानन्द-भागिन इत्युक्तार्थे एतदुपनिषद्गतवाक्यमेव संवादयति– **एतस्यैवेति** ॥ मात्रां तत्प्रतिबिम्बांशम् । नन्वस्य वाक्यस्यान्यानि भूतानि सुप्तानि । एतस्याऽनन्दस्य मात्रामुपजीवन्तीत्यमुक्तपरत्वात् मुक्ताः परमात्मविप्रुडानन्दभागिन इत्यर्थे कथं प्रमाणतयोदाहरणमित्यतः प्रतिजानीते– **मुक्तेति** ॥ चशब्देनामुक्तसङ्ग्रहः । कुत इत्यत आह– **अत्रेति** ॥ अत्र पिता भवतीत्यादितत्प्रस्तावे तस्यैतस्यैवाऽनन्द-स्येति प्रकरणस्य प्रस्तावे प्रारम्भे विषये तदधिकृत्येति यावत् । भगवद्वचनमस्ति यत इत्यर्थः ।

इदमुक्तं भवति । एतस्यैवाऽनन्दस्येति वाक्यं मुक्तविषयम् । अत्र पितेत्यादि-मुक्तविषयकोपक्रमेणास्य प्रकरणस्य मुक्तविषयत्वावगमात् । नचोपक्रमस्यापि मुक्तविषयकत्वं कुतः सिद्धमिति वाच्यम् । भगवता सूत्रकारेण तथा व्याख्यातत्वादिति । सूत्रार्थमाचार्य एव वक्ष्यति । न केवलं पूर्ववाक्यबला-देतन्मुक्तविषयं किन्त्वव्यवहितोत्तरवाक्यबलाच्चेत्याह– **तत्रैवेति** ॥ ननु तत्राप्यमुक्तानामेवाऽनन्दतारतम्यमुच्यते न मुक्तानामित्यत आह– **श्रोत्रियत्वेति** ॥ ननु भवतु श्रोत्रियत्वादिकं मुक्तेष्वेव मुख्यम् । 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः'

इति श्रुतौ त्वमुख्यमेव श्रोत्रियत्वादिकममुक्तानामुच्यत इति किन्न स्यादित्यत आह– **यश्चेति** ।। हि यस्माद् यश्च श्रोत्रिय इत्यभ्यासस्तस्मान्नामुख्यं श्रोत्रियत्वादिकं श्रुतावुच्यते अभ्यासेन तदनुपचरितत्वज्ञापनादित्यर्थः । भवतु श्रुतावुच्यमानमवृजिनत्वादिकं मुख्यमेव । तच्चामुक्तानामपि किन्न स्यादित्यत आह– **नहीति** ।। अमुक्ताः श्रोत्रियाश्च नेत्याह– **नचेति** ।। उपपादनसापेक्षत्वात्पृथगुक्तिः । अमुक्तानामपि श्रुतिफलप्राप्तिसद्भावात् सम्यगित्युक्तम् । ननु 'श्रोत्रियश्छन्दोऽधीते' इति स्मृतिसिद्धं श्रोत्रियशब्दप्रवृत्तिनिमित्तममुक्तेष्वप्यस्ति । अतः किमेतदुच्यत इत्यत आह– **श्रुतिफलप्राप्तिरिति** ।। हिशब्देन प्राप्तश्रुतिफलत्वात्तु श्रोत्रियाः प्राप्तमोक्षिण इत्यादिप्रमाणप्रसिद्धिं दर्शयति ।।

**भाष्यम्——**

**'सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थभावाः' इति भागवते शरीरसम्बन्धिनां मोहादियुतत्वम् । मोहादियुतानां न श्रोत्रियत्वमदुःखत्वमकामहतत्वं वा ।**

**'वृजिनं व्रजनं दुःखं क्लेशो बाधेति चोच्यते' इत्यभिधानम् । नच देवादिपदाकामानामिन्द्रादिपदाकामानांच कश्चिद्विशेषो दृश्यते । अतो मुक्तविषयमेवैतत् ।**

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति' । 'ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते । तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे' । 'मुक्तानां परमा गतिः' । 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यादिवचनैश्च भगवदनुग्राह्यत्वं तदानन्दानवाप्तिश्च मुक्तानां दृश्यते ।**

**टिप्पणी——**

अमुक्तानां श्रोत्रियत्वावृजिनत्वाकामहतत्वानि कुतो न सम्भवन्तीत्यतस्तत्र हेतुं वक्तुं तत्साधकानुमानाङ्गव्याप्तौ प्रमाणमाह– **सर्व इति** ।। इमे प्रसिद्धाः

सर्वे ब्रह्मादयस्तव माययेच्छया देव्या वा तनुभृतः शरीरधारिणः । अत एव विमोहितधियः । कथं बहिरर्थभावाः बहिरर्थापेक्षयैव तेषां मोहः । परमसुखसाधनादन्योऽर्थो बहिरर्थ इत्यर्थः । (भा.ता.११.७.१३) 'सर्वेषां ब्रह्मपदवीयोग्यानां पूर्वमेव तु । अभावस्त्वापरोक्षस्य मोहो ज्ञानस्य भण्यत' इत्यादिनान्यत्र ब्रह्मणोऽपि मोहोपपादनं कृतमनुसन्धेयम् । एवं व्याप्तिसाधकं प्रमाणमभिधाय तां व्याप्तिमाह– **शरीरेति** ।। आदिपदेनाज्ञानं ग्राह्यम् । इदमुक्तं भवति । अमुक्ता न श्रोत्रियत्वादिमन्तः मोहादियुतत्वात् । मोहादियुतानां च श्रोत्रियत्वाद्यभावात् । नचासिद्धिः । अमुक्ता मोहादियुताः शरीरसम्बन्धित्वाद् ये शरीरसम्बन्धिनस्ते मोहादियुताः इति व्याप्तेरिति । शरीरसम्बन्धित्वस्य श्रोत्रियत्वाद्यभावेऽप्रयोजकत्वात्परम्पराश्रयणम् । मोहादीनां च दुःखादिकं प्रति कारणत्वेन नाप्रयोजकत्वमिति ध्येयम् । अदुःखित्वमित्युक्त्या वृजिनशब्दो दुःखपरत्वेन व्याख्यातः । तत्राभिधानमाह– **वृजिनमिति** ।। अत्र वदन्ति । नेदं मुक्ततारतम्यप्रतिपादकम् । किन्तु 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः' इति तेषु तेषु पदेष्वकामस्य तत्तत्समानानन्दत्वमत्रोच्यत इति । तन्न । एवं हि वदता पूर्वपूर्वपदाकामिभ्य उत्तरोत्तरपदाकामिनां शतगुणसुखवत्त्वं वक्तव्यम् । नच तदस्ति । तत्र प्रमाणाभावादित्याह– **नचेति** ।। स यो मनुष्याणां राद्ध इत्यस्य मुक्तविषयत्वमुपपाद्योपसंहरति– **अत इति** ।। श्रोत्रियत्वादेर्मुक्तेष्वेव मुख्यत्वादन्यथा व्याख्यानस्य चायुक्तत्वादित्यर्थः । एवं स य इति वाक्यस्य मुक्तविषयत्वेन तद्बलादेतस्यैवेति वाक्यं मुक्तविषयं भवत्येवेत्युपपादितं तद्वोपसंहरति– **अत इति** ।। ननु भवतु एतस्यैवेति वाक्यं मुक्तपरं तथापि तत्रान्येषां मुक्तानां परमात्मानन्दैकदेशप्राप्तिरेवोच्यते । तत एव न मुक्ताः परमात्मभिन्नाः तदानन्दभोक्तृत्वात् । तथाच कथमुक्तार्थे इदं प्रमाणमिति चेत् न । एवं श्रुत्यर्थकथने प्रमाणान्तरविरोधापत्तेरिति भावेन मुक्तानां तदानन्दानवाप्तौ तद्भेदव्याप्यतदनुग्राह्यत्वे च प्रमाणमाह– **परो मात्रयेति** ।। आद्यं प्रमाणद्वयं तदानन्दानवाप्तौ । उत्तरद्वयं तु भगवदनुग्राह्यत्वे

इति विवेकः । अश्नुवन्तीत्यत्र कर्तृविशेषानुक्तेर्मुक्ता अमुक्ताश्चेति शेषः । ब्रह्मेशानादिशब्देन मुक्ता अमुक्ताश्च गृह्यन्ते । सङ्कोचे कारणाभावात् । हे हरे ब्रह्मेशानादिभिः देवैर्यत्कैवल्यं सर्वोत्तमत्वं प्राप्तुं नैव शक्यते तत् यत् यत्स्वभावः यस्य नैसर्गिकं स भवान् । कुतः? यतः केवलो जडामिश्र इति योजना ।

**भाष्यम्—**

> **बह्वभ्यासात्त आत्मेति मुक्तौ जीवेशयोर्भिदा।**
> **प्रधानतत्परत्वेन दृश्यतेऽत्यादरात् सदा ॥**
> **महातात्पर्ययोगाच्च स एवार्थोऽवगम्यते।**
> **तात्पर्यं परमं विष्णोरत्युद्रेके विशेषतः ॥**
> **सर्वश्रुतिस्मृतीनां च दृश्यतेऽन्यत्तदर्थतः।**
> **स च जीवेशयोर्भेदे सर्वोद्रेको हि युज्यते ॥**
> **बह्वभ्यासस्त आत्मेति श्रुतावादरतस्ततः।**
> **ममाऽत्मेति वचो यत्र विष्णोरपि च दृश्यते ।**
> **देहस्यापि स्वरूपत्वज्ञापनं तत्प्रयोजनम् ॥**

**टिप्पणी—**

एवं स्वयं ब्राह्मणं व्याख्याय तद्दार्ढ्याय व्याख्यानरूपं प्रमाणमुदाहरति— **बह्वित्यादिना** ॥ पूर्वब्राह्मणे त आत्मेति बहुधा प्रयुक्तस्य । परमार्थतोऽपि जीवेश्वराभेदनिवृत्त्यर्थस्त आत्मेति । तत्र प्रधानतात्पर्यज्ञापनार्थं पुनःपुनरभ्यास इति तात्पर्यमुक्तं तत्रेदं प्रमाणम्— **बह्विति** ॥ त आत्मेत्युक्त्या मुक्तौ जीवेशयोर्भेदो दृश्यते । नचैतद्वाक्यप्रतिपाद्यो भेदः सांसारिकः किन्न स्यादिति वाच्यम् । त आत्मेत्यत्यादराद् बह्वभ्यासेन सिद्धेन प्रधानतत्परत्वेन भेदस्य मुक्तावपि सिद्धेरित्यर्थः । न केवलं त आत्मेति वाक्यप्रधानतात्पर्यविषयत्वाद् जीवेश्वरभेदः पारमार्थिकः किन्तु हेत्वन्तराच्चेत्याह— **महातात्पर्ययोगाच्चेति** ॥ स एव मुक्तौ जीवेशयोर्भेद एव । कुत्र कस्य महातात्पर्यमित्याह—

**तात्पर्यमिति** ।। देवताधर्मादिस्वरूपे तात्पर्यावगमात्कथमेतदित्यत आह– **अन्यदिति** ।। तदर्थतः उच्यत इति शेषः । ननु विष्णोः सर्वोद्रेके सर्वागमानां महातात्पर्ययोगेन मुक्तौ जीवेशभेदः कथं सिद्ध्यतीत्यत आह– **स चेति** ।। सर्वोद्रिकः । जीवेशयोर्भेदे पारमार्थिके सत्येव युज्यते हि यस्मात्, तस्मात् तत्सिद्धिरित्यर्थः । प्रतिबन्दीमोचनाय पुनः प्रस्तावयति– **बह्विति** ।। ततः मुक्तपरमात्मनोर्भिन्नत्वादेवेत्यर्थः । ननु यदि त आत्मेति सम्बन्धवचनेन भेदसिद्धिः तदा स्वदेहमुद्दिश्य ममाऽत्मा भूतभावन इति यत्र विष्णुवाक्यं तत्रापि स्वस्य स्वदेहाद् भेदसिद्धिः स्यात्। सम्बन्धवचनत्वाविशेषादित्यत आह– **ममाऽत्मेतीति** ।। यत्र प्रकरणे विष्णोरपि भिन्नदेहरहितस्यापि देहस्यापि लोके भिन्नत्वेन प्रतीतस्यापि ज्ञानादिसमुच्चयार्थो वाऽयमपिशब्दः । तत्प्रयोजनं ममाऽत्मेति सम्बन्धवचनप्रयोजनम् । तथाच यत्र 'ममाऽत्मा भूतभावनः' इति प्रयोगोऽस्ति तत्र स्वदेहस्यापि भूतभावनत्वादिस्वलक्षणयोगकथनेन स्वस्वरूपत्वज्ञापनं प्रयोजनमस्तीत्यर्थः ।

**भाष्यम्—**

**नह्यप्रयोजकं वेदपदं वर्णोऽथवा स्वरः ।**
**देहस्वरूपता विष्णोर्न ममेति पदं विना ।।**
**सम्यग् ज्ञापयितुं शक्या ततस्तत्पदमिष्यते ।**
**ततस्त आत्मेति वचो भेदाभावे न युज्यते ।।**
**भिक्षया भक्षणं तस्मादानन्दस्य ततोऽवदत् ।**
**मुक्तानामेकदेशत्वं ब्रह्मानन्दव्यपेक्षया ।।**
**विप्रुट्त्वं प्रतिबिम्बत्वं श्रुतिषूक्तं हि सर्वशः ।**
**तथापि पूर्णानन्दत्वममुक्तानां व्यपेक्षया ।।**
**ब्रह्मादेस्तारतम्यं च मुक्तावेव सदातनम् ।**
**दृष्टादृष्टेषणानाशान्निर्दुःखत्वं च सर्वदा ।।**

**टिप्पणी—**

किमेवं सम्बन्धवचनस्य प्रयोजनोपपादनेन व्यर्थमेव तत्किन्न स्यादित्यत आह– **नहीति** ॥ नन्वात्मा भूतभावन इत्युक्त्यैव देहस्वरूपत्वज्ञापनस्य सम्भवात् किं ममेति पदेनेत्यत आह– **देहेति** ॥ यद्यप्यात्मा भूतभावन इति देहस्य भूतभावनत्वादिविष्णुलक्षणकथनेन विष्णोर्देहस्वरूपता ज्ञापयितुं शक्या तथापि ममेति पदं विना सम्यग्ज्ञापयितुं न शक्येत्यर्थः । यद्यपि 'आनन्दं ब्रह्मणो विद्वान्' इति व्यवहारवद् विशेषबलेनैव ममाऽत्मेति व्यवहारोपपादनं सम्भवति तथापि तदविहायैव प्रकारान्तरमेतदित्यदोषः। अनेन निमित्तान्तराभावे सम्बन्धवचनस्य भेदसाधकत्वमित्युक्तं भवति । नच त आत्मेत्येतदपि प्रयोजनान्तरेणान्यथासिद्धमिति वाच्यम् । अत्र तादृश-प्रयोजनान्तरादर्शनादिति भावेनोपसंहरति– **तत इति** ॥ निमित्तान्तरं विना सम्बन्धवचनस्य भेदसाधकत्वात् प्रकृते च निमित्तान्तराभावादित्यर्थः। नच ते त्वया पृष्ट आत्मेत्यर्थो वाच्यः। वृथा विभक्तिव्यत्यासस्यानाश्रयणीयत्वात्। नच त आत्मा स्वरूपमित्यर्थो वक्तव्यः। तथात्वे षष्ठ्या औपचारिकत्वप्रसङ्गात्। जीवात्मैक्यस्य निरस्तत्वाच्च। किञ्च तथात्वे भिक्षाचर्यं चरन्तीत्येतदप्ययुक्तमित्याह– **भिक्षयेति** ॥ ततो भिन्नत्वादेव । तस्माद् विष्णोर्भिया मुक्तानामानन्दस्य विप्रुण्मात्रस्य भक्षणमवदच्छ्रुतिरिति सम्बन्धः । यद्येवं तर्हि मुक्तानामपूर्णत्वं स्यादित्यत आह– **मुक्तानामिति**॥ यद्यपि मुक्तानामानन्दस्य ब्रह्मानन्दव्यपेक्षया एकदेशत्वम् । तथापि अमुक्तानामानन्दव्यपेक्षया पूर्णत्वमिति सम्बन्धः । एकदेशत्वे भेदः स्यादित्यत आह– **विप्रुट्त्वमिति** ॥ एकदेशत्वमित्यर्थः। यद्वा न मुक्तेशयोर्भेदो युक्तः । एतस्यैवाऽनन्दस्येति मुक्तानां परमात्मानन्द-विप्रुट्त्वोक्तेः । तथाहि स्मृतिः– 'एष एव परो विष्णुः पूर्णानन्दः प्रकीर्तितः । यस्माद् ब्रह्मापि मुक्तः सन् विप्रुण्मात्रं समश्नुते' इति । तत्राऽह– **विप्रुट्त्वमिति**॥ प्रतिबिम्बत्वं तदधीनत्वे सति तत्सदृशत्वमित्यर्थः । न केवलममुक्तानन्दापेक्षया मुक्तानन्दस्य पूर्णत्वं, किन्तु मुक्तब्रह्माद्यानन्दस्य

स्वावरशेषाद्यानन्दापेक्षयाऽपीति भावेनाऽह– **ब्रह्मादेरिति** ॥ मुक्तावेवेत्येवकार अन्यत्र पूर्णत्वावधिभूतं न मृग्यमित्यर्थे सदातनमेवेति वा सम्बन्धः । यद्वा, मुक्तानां तारतम्याच्च न मुक्ता भगवदभिन्ना इत्याह– **ब्रह्मादेरिति** ॥ मुक्तानां तारतम्ये द्वेषेर्ष्यादिना दुःखं स्यादित्यत आह– **दृष्टेति** ॥ यद्वा मुक्ता भिक्षन्ते चेद् दुःखिनः स्युरित्यत आह– **दृष्टेति** ॥ अनेन पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायेति वाक्यं व्याख्यातं भवति । पुत्रवित्तैषणयोर्दृष्टैषणत्वात् । लोकैषणायाः अदृष्टैषणत्वात् ।

**भाष्यम्—**

**परब्रह्मत्ववचनं मुक्तानां यत्र दृश्यते ।**
**जीवेषु ब्रह्मशब्दोक्तेः परत्वं तु विमुक्तितः ॥**
**तत्परब्रह्मता तेषां बद्धजीवोच्चता मता ।**
**ततो ब्रह्माणने योग्यः पाण्डित्यं प्राप्नुयात्परम् ॥**
**पाण्डित्यमागमज्ञत्वं बाल्यं युक्तिसहायता ।**
**मौनं तूपासनासिद्धिरमौनं भगवद्दृशिः ॥**
**एतान्याप्य भवेन्मुक्तिर्मुक्तो वै भिक्षुको भवेत् ।**
**नह्यन्यभिक्षितं विष्णुर्दद्यान्नियमतः क्वचित् ॥**
**मुक्तस्य भिक्षितं सर्वं दद्यान्नियमतो हरिः ।**
**अयोग्यभिक्षणं तेषां न कदाचित्तु युज्यते ॥**
**येन केनापि नैतेषां भिक्षावृत्तिर्विनश्यति ।**

**टिप्पणी—**

ननु मुक्तानां ब्रह्मणो भेदे 'परब्रह्माणि मुक्तिगाः' इति परब्रह्मत्वोक्तिः कथमित्यत आह– **परेति** ॥ यत्र मुक्तानां परब्रह्मत्ववचनं तत्र तेषां परब्रह्मता बद्धजीवोच्चता मता । बद्धजीवोत्तमत्वं कथं परब्रह्मत्वमित्यत उक्तम् ॥ **जीवेष्विति** ॥ 'ब्रह्माणि जीवास्सर्वेऽपि' इति ब्रह्मशब्दोक्तेः । अभेदाभिप्रायत्वे

तस्य 'प्रकृतिः परमं ब्रह्म परमं महदच्युतः' इति वाक्यशेषविरोध इति भावः। तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्येति वाक्यं व्याचष्टे– **तत इति** ॥ यतो ब्रह्मापरोक्षज्ञानिनां मुक्तौ विष्णोर्भिक्षयाऽऽनन्दभक्षणं तत इत्यर्थः । पाण्डित्यशब्दार्थमाह– **पाण्डित्यमिति** ॥ आगमार्थज्ञत्वमित्यर्थः । बाल्यशब्दार्थमाह– **बाल्यमिति** ॥ आगमजज्ञानस्येति शेषः । मौनामौनशब्दार्थावाह– **मौनमिति** ॥ पाण्डित्यं च निर्विद्येत्यादि अथ ब्राह्मण इत्यन्तवाक्यतात्पर्यमाह– **एतानीति** ॥ आप्यस्थितस्येति शेषः । स ब्राह्मणः केन स्यादित्यादि व्याचष्टे– **मुक्त इति** ॥ ननु मुक्तानामपि भिक्षुकत्वे को विशेषोऽमुक्तेभ्यस्तेषामित्यत आह– **नहीति** ॥ अन्यभिक्षित-ममुक्तभिक्षितम्। यदि मुक्तभिक्षितं विष्णुर्नियमतो दद्यात्तर्हि निरवधिकानन्दादिकं भिक्षन्ते चेत्कथमित्यत आह– **अयोग्येति** ॥ तेनेदृश एवेत्येवकाराभिप्रायमाह– **येनेति** ॥

**भाष्यम्**——

> **प्रथमो ब्राह्मणो मुक्तो द्वितीयो योग्य उच्यते ॥**
> **अपरोक्षविन्मुक्तयोस्तु तार्तीयेनोभयोर्ग्रहः ।**
> **अतो मुक्ता अमुक्ताश्च न स्वतन्त्राः कदाचन ॥**
> **स्वतन्त्रस्तु स एवैको भगवान् पुरुषोत्तमः ॥ इत्यादि ब्रह्मतर्के ॥**
> **'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
> **क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**
> **उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥'**
> **——इत्यादिना च भेदेन महोत्कर्षे परमतात्पर्यं सर्वशास्त्राणामाह ।**

**इति कहोळब्राह्मणम् ॥ ५ ॥**

**टिप्पणी**——

एतत्प्रकरणगतब्राह्मणशब्दानामेकार्थत्वप्रतीतिनिरासायार्थभेदमाह– **प्रथम इति** ॥ नन्वथ ब्राह्मण इति ब्राह्मणशब्दस्य मुक्तपरत्वाङ्गीकारे स्तुत्यधिकरणविरोधः

स्यात्। तत्र तस्य ब्राह्मणशब्दस्य जीवन्मुक्तपरत्वाङ्गीकारादित्यतः तत्सङ्ग्रहाया-परोक्षविन्मुक्तयोरित्युक्तम् । 'अतोऽन्यदार्तम्' इत्यस्य तात्पर्यमाह– **अत इति** ॥ श्रुत्यादेर्भगवदुत्कर्षे महातात्पर्यमस्तीत्यत्र गीतावाक्यमपि प्रमाणयति– **द्वाविमाविति** ॥ व्याख्यातमेतत् ।

## अथ खण्डार्थः

अथोषस्तोपरमानन्तरम् । कहोळो नामतः कुषीतकस्यापत्यं कौषीतकेयः । एनं याज्ञवल्क्यम्। पप्रच्छ याज्ञवल्क्येति सम्बोद्ध्योवाच। यदेव साक्षादपरोक्षाद् ब्रह्म य एवाऽत्मा सर्वान्तरः नत्वन्ये ब्रह्मादयो मुक्ता अपि तमेव मुक्तवैलक्षण्य-विशिष्टं परमात्मानं मुक्तपरमात्मवैलक्षण्यमिति यावत् । मे व्याचक्ष्वेति। मुक्तपरमात्मनोर्वैलक्षण्यं वक्तुं परमात्मस्वरूपं तावदाह– **एष इति** ॥ ते आत्मा नियामकः सर्वान्तर एषः । एष इति क इति पृच्छति– **कतम इति** ॥ उत्तरमाह– **य इति** ॥ यः परमात्मा अशनायाऽशितुमिच्छा च पिपासा पातुमिच्छा चेत्यशनायापिपासे शोकं दुःखं मोहं मिथ्याज्ञानं जरामत्येति स्वत एवानाद्यनन्तकालेष्वतिक्रम्य वर्तते । एवं परमात्मस्वरूपं निरूप्य मुक्तस्वरूपमाह– **एतमिति** ॥ एतं साक्षादपरोक्षत्वजीवभेदादि अशनायाद्यतीतत्वविशेषणविशिष्टं तं परमात्मानं विदित्वा वै विदित्वैवापरोक्षी-कृत्यैव तत्प्रसादादेव पश्चात्पुत्रैषणाया वित्तैषणाया लोकैषणायाश्च व्युत्थाय ब्रह्म प्रत्यणनाद् गमनाद् ब्राह्मणा मुक्ता भवन्ति। अथ मुक्त्यनन्तरं भिक्षाचर्यं चरन्ति परमात्मन एव विप्रुडानन्दं भिक्षन्तो वर्तन्ते । अत्र मुक्तपरमात्म-वैलक्षण्योपपादनं भाष्य एव स्पष्टम्। किं तिस्रोऽप्येषणाः परस्परसमप्रधानभावोपेताः नेति भावेनाह– **याहीति** ॥ या वित्तैषणा सैव पुत्रैषणा । वित्तस्य प्रायः पुत्रार्थत्वात् । वित्तैषणा पुत्रैषणायामन्तर्भवति। या पुत्रैषणा या च वित्तैषणा सा लोकैषणा । पुत्रवित्तयोः स्वर्गादिलोकसाधनत्वात् । पुत्रैषणावित्तैषणयो-र्लोकैषणायामन्तर्भाव इत्यर्थः। ननु स्वर्गादिलोकस्य यागादिना प्रार्थ्यमानत्वात् तदेषणाया व्युत्थायेति कथमुक्तमित्यतस्तस्या अपि दुःखरूपत्वात् ततो व्युत्थानं

युज्यत इति दर्शयितुमाह– **उभे इति** ।। पुत्रवित्तैषणे दृष्टविषयत्वाद् एका अदृष्टविषयिणी लोकैषणा चापरेति । उभे दृष्टादृष्टविषये हि यस्मादेषणे तस्माद् दुःखरूप एवेत्यर्थः । एवं यस्मात् ब्रह्मापरोक्षज्ञानान्मोक्षस्तस्माद् ब्राह्मणो ब्रह्माणनयोग्यः । पाण्डित्यमागमजं ज्ञानं प्राप्नुयात् । एवं पाण्डित्यं निर्विद्य लब्ध्वा बाल्येन युक्तिबलसहितज्ञानेन तिष्ठासेत् स्थातुमिच्छेत् । युक्तिजं ज्ञानमापादयेदिति यावत् एवं बाल्यं पाण्डित्यं च निर्विद्याथानन्तरं मुनिर्ध्यानी भवति । एवं मौनमुपासनाजं ज्ञानम् । चशब्दाच्छ्रवणमनने च निर्विद्य अमौनं भगवदपरोक्षज्ञानं च प्राप्नोति । अथ भगवदपरोक्षज्ञानानन्तरं ब्राह्मणो मुक्तो भवति । स ब्राह्मणो मुक्तो येन स्यात् केन स्यात् येन केनापि भोगेन वर्तयंस्तेन वर्तनेनेदृश एव । यथा संसारावस्थायां भिक्षुकस्तथा परमात्मनो विप्लुडानन्दभिक्षुक एवेत्यर्थः । उपसंहरति– **अत इति** ।। अतस्तस्माद्तोऽस्मात्परमात्मनोऽन्यन्मुक्ता मुक्तजातमार्तं कदाचिद्दुःखि तथाच परमात्मैव स्वतन्त्रोऽन्यन्मुक्ता मुक्तजातमस्वतन्त्रमित्यर्थः । ततो ह कहोळः कौषीतकेय उपरराम ।। १ ।।

इति कहोळब्राह्मणम् ।। ५ ।।

**उपनिषत्——**

## अथ गार्गिब्राह्मणम्

[मुक्ततारतम्यप्रतिपादनम्]

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिद९ँ सर्वमप्स्वोतं च प्रोतं चेति कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति । गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु**

खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापति-लोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माऽतिप्राक्षीर्मा ते मूर्धा व्यपतदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि माऽतिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥

इति गार्गिब्राह्मणम् ॥ ६ ॥

भाष्यम्—

मुक्तानां तारतम्यं गार्गिब्राह्मणेनोच्यते।

लोका इति मुक्तानामानन्दानुभवाः स्वरूपभूताः। अप्सु वायाविति स्वरूपस्यैव प्रस्तुतत्वात्। अनतिप्रश्न्यां वै देवतामतिपृच्छसीति देवतास्वरूपप्रश्नस्यैवाव-गम्यमानत्वाच्च । नचोपरितनलोकेषु अधस्तनलोकाः आश्रिताः । नच वायुर्गन्धर्वलोकाश्रितः। वाय्वाश्रयत्वश्रुतेः सर्वलोकानाम्। 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादिना।

टिप्पणी—

यस्सर्वान्तर इत्युक्तं किं तत्सर्वमित्याकाङ्क्षायामनात्मभूतान् सर्वपदार्थास्तावत् गार्गिब्राह्मणेनाहेति परकीयब्राह्मणप्रतिपाद्यवर्णनमसदिति भावेनैतद्ब्राह्मणप्रतिपाद्य-माह— **मुक्तानामिति**॥ नन्वन्तरिक्षलोकेषु गार्गीत्यादौ लोकशब्दप्रयोगादनात्म-पदार्थप्रतिपादनमेवात्र क्रियत इति ज्ञायते नतु मुक्तानां तारतम्यमुच्यत इति

तत्राह– **लोका इति** ॥ उच्यन्त इति शेषः । ननु मुक्तानामन्तःकरणा-भावात्कथमानन्दानुभव इत्यत उक्तम्– **स्वरूपभूता इति** ॥ कुत इत्यत आह– **अप्स्विति** ॥ अप्सु वायाविति अप्वायुशब्दवाच्यचक्रवर्त्यादिस्वरूपस्यैव प्रस्तुतत्वेनान्तरिक्षलोकेष्वित्यादावपि लोकशब्देनान्तरिक्षादिशब्दवाच्यदेवता-स्वरूपभूत एवानन्दानुभवो ग्राह्यः । अन्यथा प्रक्रमविरोधादिति भावः । न केवलमुपक्रमवशाल्लोकशब्दस्य स्वरूपभूतानन्दानुभवपरत्वं किन्तूपसंहार-वशाच्चेत्याह– **अनतीति** ॥ कस्मिन् खलु ब्रह्मलोका ओताश्च प्रोताश्चेति प्रश्नस्तावद्देवतास्वरूपविषयक एवावगम्यते । अनतिप्रश्न्यां देवतामति पृच्छसीति ब्रह्मलोकपदोक्तार्थे देवताशब्दप्रयोगात् । ततश्च ब्रह्मपदेनैव देवतास्वरूपस्योक्तेः ब्रह्मलोकपदस्य ब्रह्मस्वरूपभूतानन्दानुभवपरत्वे अवश्यं वक्तव्ये इतरत्रापि लोकशब्दस्य तत्परत्वमेवाङ्गीकार्यमित्यर्थः । लोकशब्दस्योक्तार्थत्वमनङ्गीकृत्य प्रसिद्धार्थत्वाङ्गीकारे बाधकमाह– **नचेति** ॥ यदि लोकशब्दस्य प्रसिद्धलोकार्थत्वं स्यात्तर्हि आदित्यादिलोकानां चन्द्रादिलोकाश्रितत्वोक्तिरयुक्ता स्यात् । चन्द्रादिलोकानामुपरितनत्वात् । आदित्यादिलोकानां चाधस्तनत्वात् । नचोपरितनलोकेष्वधस्तनलोका आश्रिता इत्यर्थः । किञ्चैवं कस्मिन् खलु वायुरोतश्च प्रोतश्चेति गन्धर्वलोकेषु गार्गीति वायोर्गन्धर्वलोकाश्रितत्वमुच्यते तदप्ययुक्तं स्यादित्यत आह– **नच वायुरिति** ॥ कुतो नेत्यत आह– **वाय्वाश्रयत्वेति** ॥ श्रुतेः श्रवणात् । नेनीयन्ते पुनःपुनः भृशं वा धार्यन्ते ।

**भाष्यम्——**

**'सप्तस्कन्धगतो लोकान् यो बिभर्ति महाबलः' इति हरिवंशेषु । नचानतिप्रश्नत्वं लोकमात्रस्यास्ति । अधस्तनेषु चोपरितना लोकास्तिष्ठन्ति । नच मरुतामेकोऽपि गन्धर्वलोकादवरो विद्यते ।**

**टिप्पणी——**

तत्रैव स्मृतिमपि पठति– **सप्तेति** ॥ दूषणान्तरमाह– **नचेति** ॥ ब्रह्मस्वरूप-भूतानन्दानुभवव्यावृत्त्यर्थं मात्रपदम् । यदि लोकशब्दः प्रसिद्धलोकार्थः स्यात्

तदा ब्रह्मलोकस्योक्तमनतिप्रश्नत्वमयुक्तं स्यात् । प्रसिद्धब्रह्मलोकस्याधारान्तर-सम्भवेन तस्यानतिप्रश्नत्वाभावादित्यर्थः । न केवलमुपरितनलोकेषु अधस्तन-लोका अनाश्रिता इत्येव किन्तु वैपरीत्यमेवास्तीत्याह– **अधस्तनेष्विति** ।। नन्वत्र गन्धर्वलोकाश्रितत्वेनोच्यमानो वायुर्न मुख्यः येन श्रुत्यादिविरोधः स्यात् । किन्नाम एकोनपञ्चाशन्मरुत्सु कश्चित् । तथाच नोदाहृतश्रुत्यादिविरोध इत्यत आह– **नचेति** ।। मरुतामिति निर्धारणे षष्ठी । यो हि यतोऽवरः स तमाश्रयते । नहि मरुतामेकोऽपि गन्धर्वलोकादवरोऽस्ति । येन तमाश्रयेतेत्यर्थः । यद्वा नन्वनतिप्रश्न्यां देवतामतिपृच्छसीति वाक्योक्तं न बाधकम् । देवताभिमन्यमानत्वेन देवताशब्दोपपत्तेरित्यतस्तदुपपादयति– **नचानतिप्रश्नत्वमिति** ।। नचोपरितनलोकेष्वित्यपि बाधकमुपपादयति– **अधस्तनेष्विति** ।। नच वायुरित्यपि न बाधकम् । 'वायुना हि सर्वे लोका नेनीयन्ते' इति सामान्यवचनस्यैतद्वाक्यबलेन स्वाश्रयगन्धर्वलोकव्यतिरिक्ताः सर्व इत्यर्थोपपत्तेरित्यतस्तदप्युपपादयति– **नच मरुतामिति** ।। एकोऽपि न विद्यते किमु मुख्यवायुरित्यर्थः । पररीत्या एतदुक्तम् । सिद्धान्ते वायुशब्दस्यान्यपरत्वादिति भावः ।

**भाष्यम्—**

**उक्तञ्च—**

**आ पिबन्त्यखिलान् भोगानित्यापश्चक्रवर्तिनः ।**
**मुक्तास्तेषां वायुसुतश्चक्रो नाम व्यपाश्रयः ।।**
**मुक्तस्तस्य च मुक्तस्तु मरुद्गन्धर्वनामवान् ।**
**सुतो वायोस्तत्सुखानां मौक्तानामन्तरिक्षगाः ।।**
**मरुतामेक एवासावन्तरिक्षश्च वायुजः ।**
**तत्सुखानां च मौक्तानामानन्दाः सूर्यरूपकाः ।।**
**सौराणां चापि मौक्तानामानन्दाश्चन्द्ररूपकाः ।**
**आह्लादनाच्चन्द्रनामा देवोऽसावनिरुद्धकः ।।**

**टिप्पणी—**

न केवलं लोकशब्दस्य प्रसिद्धार्थत्वानुपपत्त्या स्वरूपानन्दानुभवार्थत्वम् । किन्तु ब्राह्मणव्याख्यानपरप्रमाणादपीति भावेनाऽह– **उक्तं चेति** ।। तामुक्तिं पठति– **आ पिबन्तीति** ।। अनेन कस्मिन्नाप इत्युक्तं आप इत्येतद्व्याख्यातम् । कस्मिन्नाप ओताश्च प्रोताश्चेति वायौ गार्गीत्यस्यार्थमाह– **तेषामिति** ।। अनेन वायुशब्दो न प्रधानपरो न वा एकोनपञ्चाशन्मरुत्सु कश्चित्परः । किन्तु अप्शब्दो वायुशब्दश्च जडपर एवेति परास्तम् । कस्मिन् खलु वायुरोतश्च प्रोतश्चेति गन्धर्वलोकेष्वित्यस्यार्थमाह– **तस्य चेति** ।। कस्मिन् खलु गन्धर्वलोका ओताश्च प्रोतश्चेत्यन्तरिक्षलोकेष्वित्यस्यार्थमाह– **तत्सुखानामिति** ।। अन्तरिक्षगः अन्तरिक्षाभिमानी । कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्च इत्यादित्यलोकेषु गार्गीत्यस्यार्थमाह– **तत्सुखानामिति** ।। कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीत्यस्यार्थमाह– **सौराणामिति** ।। सूर्याचन्द्रमसोस्समानत्वात्कथमाश्रयाश्रयिभाव इत्यत आह– **आह्लादनादिति** ।।

**भाष्यम्—**

**स एव चन्द्रमाविश्य स्थितस्तन्नामकोऽपि सः ।**
**अनिरुद्धसुखानां च मौक्तानामिन्द्र आश्रयः ।।**
**नक्षत्रनामवानिन्द्रो नैवान्यः क्षत्रियोऽस्य हि ।**
**विद्यते त्रिषु लोकेषु ब्रह्माद्यास्तूर्ध्वलोकगाः ।।**
**आनन्दानां तथेन्द्राणां मौक्तानां देव आश्रयः ।**
**देवेति लिङ्गनाम स्याल्लिङ्गात्मा रुद्र उच्यते ।।**
**इन्द्राश्रयः शिवस्यापि सुखानां मुक्तिगामिनाम् ।**
**शिवो हीश्वरनामा स्यात्तत्पारम्यात् सरस्वती ।**
**इन्द्रेत्युक्ता तत्सुखानां ब्रह्माऽऽधिर्मुक्तिगामिनाम् ।**
**तत्सुखानां परं ब्रह्म मुक्तिगानां पराश्रयः ।।**

**टिप्पणी—**

चन्द्रशब्दवाच्यत्वे निमित्तान्तरमाह– **स एवेति** ।। कस्मिन्नु खलु चन्द्रलोका ओताश्चेति नक्षत्रलोकेष्वित्यस्यार्थमाह– **अनिरुद्धेति** ।। नक्षत्रशब्दमिन्द्रे निर्वक्ति– **नैवेति** ।। अस्येन्द्रस्यान्यः क्षत्रियो रक्षको नैवेत्यर्थः । ननु ब्रह्मादीनां सत्त्वात् कथमेतदित्यत आह– **त्रिषु लोकेष्विति** ।। एवमपि कथं तद्व्याावृत्तिरित्यत आह– **ब्रह्माद्या इति** ।। कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु इत्यस्यार्थमाह– **आनन्दानामिति** ।। अत्र रुद्रशब्देन शेषो ग्राह्यः । कस्मिन् खलु देवलोका ओताश्च प्रोताश्च इन्द्रलोकेषु गार्गीत्यस्यार्थमाह– **इन्द्रेति** ।। इन्द्रा सरस्वती । तस्यामिन्द्रशब्दं निर्वक्ति– **शिवो हीति** ।। यद्वा, नन्विन्द्र त्वं परमेश्वर त्वं तत्र क ईश्वरो यत्परमत्वेनास्या इन्द्रत्वमित्यत आह– **शिवो हीति** ।। कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेष्वित्यस्यार्थमाह– **तत्सुखानामिति** ।। ब्रह्मा चतुर्मुखः आधिराश्रयः कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेष्वित्यस्यार्थमाह– **तत्सुखानामिति** ।। चतुर्मुखसुखानामित्यर्थः ।

**भाष्यम्—**

**एवमेव च संसारे बिम्बत्वादुत्तरोत्तरम् ।**
**न परब्रह्मणः कश्चिदाश्रयः स्वाश्रयं यतः ।।**
**तस्याऽश्रयोऽस्ति वेत्येवं पृच्छतोऽपि शिरः सदा ।**
**भिद्यते पर्वतैरन्धे तमसिस्थस्य दैवतैः ।**
**तस्माद्ब्रह्म परं नित्यं ज्ञेयं पूर्णमनाश्रयम् ।। इति ब्रह्माण्डे ।।**
**रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**
**ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ।। इति भारते ।।**
**अथात आनन्दस्य मीमांसा भवति ।। इत्यादेश्च ।।**

संसाराल्लुप्तानां मुक्तानां कानि सुखानि लोकाः रोचमानानि कानि लोकाः ।

**लीनं सुखं क इत्युक्तं कं नाम क्षीयतेऽत्र यत् ॥**

**इति गार्गिब्राह्मणम् ॥ ६ ॥**

**टिप्पणी—**

एवं मुक्तपरत्वेन ब्राह्मणं व्याख्याय संसारिपरत्वेनापि व्याचष्टे– **एवमेवेति** ॥ संसारे चेति सम्बन्धः । एवमेव व्याख्येयमिति शेषः । मुक्तिसंसारयोश्चक्रवर्त्याद्यानन्दानां वायुसुतचक्राद्यानन्दाश्रितत्वं कुत इत्यत आह– **बिम्बत्वादिति** ॥ अनतिप्रश्न्यां देवतामिति परब्रह्मण आश्रयप्रश्नाविषयत्वमुक्तं तत्र हेतुमाह– **नेति** ॥ मातिप्राक्षीरिति प्रश्नो न कर्तव्य इत्युक्त्वा तत्र हेतुरुच्यते मा ते मूर्धा व्यपतदिति । तस्य शिरश्छेदमात्रार्थत्वप्रतीतिं निवारयंस्तद्धटयति– **तस्येति** ॥ उपसंहरति– **तस्मादिति** ॥ उक्तार्थे प्रमाणान्तरमाह– **रुद्रमिति** ॥ देवाः रुद्रम् उक्तप्रकारेण समाश्रिताः । प्रमाणान्तरसंवादाच्चायमेवार्थ इत्याह– **अथात इति** ॥ प्रमाणे लोकशब्दः मुक्तस्वरूपभूतसुखपरत्वेन व्याख्यातः तद्व्युत्पाद्य दर्शयति– **रोचमानानीति** ॥ लोक इत्यस्यार्थो रोचमानानीति । कानि सुखानि । नन्वेवं लोकशब्दनिर्वचने लोकमिति नपुंसकलिङ्गं स्यात् । सुखवाचककशब्दस्य नपुंसकलिङ्गत्वात् । न तु लोक इति पुल्लिङ्गनिर्देश इत्यत आह– **लीनमिति** ॥ पूर्वं लीनं पश्चादभिव्यक्तं सुखं क इत्युक्तम् । अत्र संसारे यत्सुखं क्षीयते स्थीयते तत् कं नामेत्यर्थः ।

**अथ खण्डार्थः**

अथ कहोळोपरमानन्तरम् । गार्गी गर्गगोत्रोत्पन्ना । वाचक्नवी वचक्नोरपत्यं स्त्री वाचक्नवी । एनं याज्ञवल्क्यं पप्रच्छ । य इदं सर्वमुक्तमनुष्योत्तमजातम् । अप्सु अप्शब्दवाच्येषु मुक्तचक्रवर्तिषु । ओतमाश्रितम् । नैतदौपचारिकमित्याह– **प्रोतमिति** ॥ ताः आपः कस्मिन्नोताः प्रोताश्चेति । उत्तरमाह– **वायाविति** ॥ अत्र वायुशब्देन प्रधानवायुपुत्रश्चक्रनामा मुक्तो ग्राह्यः । तदुत्तरकक्ष्यं पृच्छति– **कस्मिन्निति** ॥ गन्धर्वलोकेषु गन्धर्वशब्दवाच्यस्य

मुक्तस्य वायुपुत्रस्य सुखेषु अन्तरिक्षलोकेषु अन्तरिक्षाख्यस्य वायुपुत्रस्य मुक्तस्य मरुतः सुखेषु आदित्यलोकेषु मुक्तसूर्यानन्देषु चन्द्रलोकेषु चन्द्रशब्दवाच्यमुक्तानिरुद्धानन्देषु नक्षत्रलोकेषु नक्षत्रशब्दवाच्यमुक्तेन्द्रानन्देषु देवलोकेषु मुक्तशेषानन्देषु इन्द्रलोकेषु मुक्तसरस्वत्यानन्देषु प्रजापतिलोकेषु मुक्तब्रह्मानन्देषु ब्रह्मलोकेषु परब्रह्मानन्देषु परब्रह्मानन्दस्याप्याश्रयं पृच्छति– **कस्मिन्निति** ॥ अति अतिक्रम्य मा प्राक्षीः ते मूर्धा शिरो मा व्यपतत्। अन्धे तमसि विविच्य विस्पष्टं मा पततु। कुतः यतस्त्वमनतिप्रश्न्यां आश्रय-वत्त्वप्रश्नानर्हां देवतामपि अतिक्रम्य पृच्छसि । तदाश्रयप्रश्नश्चानर्थहेतुरिति भावः ॥ १ ॥

इति गार्गिब्राह्मणम् ॥ ६ ॥

उपनिषत्——

## अथ अन्तर्यामिब्राह्मणम्

[सर्वान्तर्यामी सर्वाश्रयश्च कः]

**अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयाना-स्तस्यासीद् भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति सोऽब्रवीत् पतञ्जलः काप्यो नाहं तद्भगवन् वेदेति सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत् पतञ्जलः काप्यो नाहं तं भगवन् वेदेति सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च यो वै तत्काप्य सूत्रं विद्यात् तं चान्तर्यामिणमिति**

**स ब्रह्मवित् स लोकवित् स देववित् स भूतवित् स आत्मवित् स सर्वविदिति तेभ्योऽब्रवीत् तदहं वेद तच्चेत् त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद् ब्रूयाद् वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥**

भाष्यम्—

पुनस्तस्यैव सर्वनियन्तृत्वमुच्यते। योऽन्तरो यमयतीति द्वितीययशब्दो विष्णुशब्दपर्यायः।

अकयप्रविसम्भूमसखहा विष्णुवाचकाः ।
एकाक्षरा अ इत्येष निर्दोषत्वाज्जनार्दनः ॥
आनन्दत्वात्क इत्युक्तः पूर्णत्वाद् य इतीर्यते ॥ इत्यादि शब्दनिर्णये

इति स्वप्रतिज्ञातप्रकारेण।

ब्रह्मवित्पूर्णविज्ञानाल्लोकानां कर्तृवेदनात्।
लोकविद् देवविच्चासौ देवानां देववेदनात्॥
वेदार्थवेदनाच्चैव वेदविद् भूतवित् तथा ।
तन्नियन्तृपरिज्ञानादात्मविच्चाप्तवेदनात् ॥
सर्ववित् सर्वसारज्ञो यो वेद पुरुषोत्तमम् ।
देशाधिष्ठातृविज्ञानाद् देशज्ञ इति चोच्यते॥
यथा तद्वद्धरेर्ज्ञानात् सर्वज्ञ इति वैदिकम् ॥ इति ब्रह्मतर्के ॥

टिप्पणी—

अन्तर्यामिब्राह्मणे अन्तर्यामित्वं प्रकृतेस्तत्तज्जीवस्य चोच्यते। श्रुत्युक्तपृथिव्यादि-शरीरत्वस्य प्रकृतावुपपत्तेः । शरीरशब्दस्य स्वरूपेऽपि प्रयोगात् । प्रकृतेश्च पृथिव्यादिसर्वात्मकत्वात् । नच पृथिव्यां तिष्ठन्नित्यादेरनुपपत्तिः । व्याप्तं

कार्येषु कारणमित्यादिना कारणस्य कार्यस्थत्वोक्तेः । पृथिवीं यमयतीत्येतत् उपचारेण नेतव्यम् । पृथिव्यादिजीवस्य च पृथिव्यादिशरीरत्वादिकं सुघटमेवेति शङ्कापरिहाराय ब्राह्मणप्रतिपाद्यमाह– **पुनरिति** ॥ ब्रह्मलोकेषु गार्गीति यः सर्वमुक्ताश्रयत्वेनोक्तः । तस्य विष्णोरेव नतु प्रकृतेस्तत्तज्जीवस्य वेत्यर्थः । 'एष त आत्मा' इति विष्णोर्नियन्तृत्वस्योक्तत्वात् पुनः किमर्थमेतदित्यत उक्तम्– **सर्वेति** ॥ 'य आत्मा सर्वान्तरः' इति आत्मशब्देन सर्वनियन्तृत्वस्याप्युक्तत्वात् पुनरित्युक्तम् । आत्मेत्युक्तमेव विविच्योच्यत इति न वैय्यर्थ्यमिति भावः । विष्णोरेव सर्वनियन्तृत्वमुच्यत इति कुत इति चेत् । अन्तर्यामिप्रश्नवाक्ये योऽन्तरो यमयतीति विष्णुवाचकयशब्दश्रवणात् । अन्यथा य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयतीत्येतावता पूर्णत्वात् योऽन्तरो यमयतीति पुनर्य इति व्यर्थमित्याह– **य इति** ॥ नचैवं स्वेनैवान्तर्यामिणो विष्णुत्वस्योक्तत्वात्प्रश्नानुपपत्तिः । काप्येनापि विष्णुत्वस्य यशब्देन ज्ञानान्न वेदेत्यनुपपत्तिश्च । तमन्तर्यामिणं विष्णुं विशेषेण वेत्थ किमिति गन्धर्वप्रश्नेन वदेति काप्यवचनात् । यशब्दस्य विष्णुवाचकत्वेऽभिधानमाह– **अकयेति** ॥ विष्णावकयादिशब्दानां प्रवृत्तौ निमित्तमप्याह– **अ इत्येष इति** ॥ यो वै तत्काप्यसूत्रं विद्यात् तं चान्तर्यामिणमिति स ब्रह्मविदिति वाक्य इतिशब्दो व्यर्थ इत्यत आह– **इतीति** ॥ येनायं च लोकः परश्च लोकः सर्वाणि भूतानि च सन्दृब्धानीति य इमं च लोकं परं च लोकं सर्वाणि भूतानि योऽन्तरो यमयतीति च स्वप्रतिज्ञातप्रकारेणेत्यर्थः । तथाच स्वप्रतिज्ञातप्रकारवाचीतिशब्दाभावे सूत्रान्तर्यामिस्वरूपमात्रज्ञानिनो ब्रह्मवित्त्वादिकमुच्यमानमयुक्तं स्यादिति तत्सार्थकमिति भावः । ननु स्वप्रतिज्ञातप्रकारेण सूत्रान्तर्यामिविदोऽपि कथं ब्रह्मवित्त्वादिकमित्यतः स ब्रह्मविदित्यादिवाक्यं व्याचष्टे– **ब्रह्मविदिति** ॥ शक्तिज्ञानादिपूर्णविज्ञानादित्यर्थः । सूत्रस्य सर्वाश्रयत्वमन्तर्यामिणः सर्वनियन्तृत्वं च जानंस्तदुपयुक्तशक्तिज्ञानादिपूर्णत्वमपि जानात्येवेति भावः । लोकानां कर्तृवेदनादिति । धारणनियमनकर्तृवेदनादि-

त्यर्थः । सूत्रस्य लोकधारणकर्तृत्वज्ञानं अन्तर्यामिणः लोकनियामकत्वज्ञानं विना स न सम्भवतीति भावः । देवानां देववेदनादिति। देवानां यो देवत्व-प्रदस्तदाश्रयः तन्नियामकश्चेति यावत् तद्वेदनादित्यर्थः । सूत्रान्तर्यामिणोः सर्वाश्रयत्वसर्वनियामकत्वज्ञाने देवाश्रयत्वतन्नियामकत्वमपि ज्ञातमेव । तच्च देवज्ञानाभावे न सम्भवतीति भावः ॥ **वेदार्थेति** ॥ सर्वाश्रयत्वसर्व-नियामकत्वयोर्वेदार्थत्वादित्यर्थः। प्रतिपादकवेदज्ञानाभावे तत्प्रतिपाद्यार्थ-ज्ञानाभावादिति भावः ॥ **तन्नियन्तृपरिज्ञानादिति** ॥ नियम्यरूपभूतज्ञानाभावे तन्नियन्तृत्वेन तज्ज्ञानमपि न सम्भवतीति भावः। तदाश्रयपरिज्ञानादित्यपि ग्राह्यम् ॥ **आप्तवेदनादिति** ॥ तदाप्तस्यैव तदाश्रयत्वं तन्नियामकत्वं चेति आश्रयत्वनियन्तृत्वाभ्यां सूत्रान्तर्यामिणोर्ज्ञाने तदाप्तत्वज्ञानमावश्यकमिति भावः । सर्वसारज्ञः सर्वाश्रयसर्वनियन्त्रोः सर्वसारत्वात्। पुरुषोत्तमं पुरुषशब्दोऽत्राधिकारिपरश्चेतनपरश्च। तथाचाधिकार्युत्तमं सूत्रं चेतनोत्तमं विष्णुं चेत्यर्थः। ननूत्तमाधिकारिणामुक्तप्रकारेण लोकवेदादिसर्वज्ञानसम्भवेऽप्यन्येषां न सम्भवति । तेषामसर्वज्ञत्वादिति चेन्न । तदा लोकानां कर्तृवेदनात् लोकविदित्युच्यत इत्यौपचारिकत्वाङ्गीकारात्। तथा सति तत्र प्रयोजनं वाच्यमिति चेन्न। निरूढोपचारत्वेन तत्र प्रयोजनानपेक्षणादिति भावेनाऽह– **देशेति** ॥ वैदिकं व्याहरणमिति शेषः।

उपनिषत्—

**स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि सन्दृब्धानि भवन्ति तस्माद् वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति वायुना हि वै गौतम सूत्रेण सन्दृब्धानि भवन्तीत्येवमेवैतद् याज्ञवल्क्या-न्तर्यामिणं ब्रूहीति ॥ २ ॥**

भाष्यम्—

**स्यूतं जगदिदं यस्मिन् सूत्रं वायुरसौ स्मृतः ।**
**तं चापि यमयेद् यस्मादन्तर्यामी हरिः स्मृतः ॥**

टिप्पणी—

वायुर्वै गौतम तत्सूत्रमित्युक्तम् । तत्र सूत्रशब्दं वायौ निर्वक्ति– **स्यूतमिति** ॥ 'एष त आत्माऽन्तर्यामी' इति प्रकृतेस्तत्तज्जीवस्य वाय्वन्तर्यामित्वमुक्तन्यायेनोच्यत इति प्रतीतिनिरासायान्तर्यामिशब्दं निर्वक्ति– **तं चेति** ॥ चशब्दस्तस्मादित्यर्थे । न केवलं पृथिव्यादिकं, किन्तु तमपि सूत्रनामानं वायुमपि । अन्तःस्थित्वेति शेषः । अस्मिन् ब्राह्मणे सूत्रान्तर्यामिणोः समप्रधानभावेन प्रतिपाद्यत्वभ्रमनिवारणाय तमपीत्युक्तम् ।

उपनिषत्—

[मुख्यवायुः जगदाधारः]

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ३ ॥ योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्याऽपः शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ४ ॥ योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ५ ॥ योऽन्तरिक्षे तिष्ठन्नन्त-रिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षं शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन्**

दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठन् चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकं शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठन् तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमसोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥ यस्तेजसि तिष्ठन् तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः इत्यधि-दैवतम् अथाधिभूतम् ॥ १४ ॥ यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥ यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद

यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्यामयमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥ यः श्रोत्रे तिष्ठन् श्रोत्रस्यान्तरो यं श्रोत्रं न वेद । यस्य श्रोत्रं शरीरः यः श्रोत्रमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः । यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठंस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥ यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥ यो रेतसि तिष्ठन् रेतसोऽन्तरो यं रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

इत्यन्तर्यामिब्राह्मणम् ॥ ७ ॥

भाष्यम्—

पृथिव्याद्या देवतास्तु देहवद् यद्वशत्वतः ।
शरीरमिति चोच्यन्ते यस्य विष्णोर्महात्मनः ॥

अन्तस्थो देवतानां च न विदुर्यं च देवताः ।
प्रविष्टत्वाद् देवतास्थः सोऽन्तरः स्ववशत्वतः ॥
बाह्यापेक्षां विना यस्तु रमते सोऽन्तरः स्मृतः ।
अतिप्रियत्वाच्च हरेरन्तरत्वमुदाहृतम् ॥
जीवानां स्वप्रियत्वं च विष्णुना नियतं यतः ।
तस्य प्रियत्वं नान्येन देवस्य नियतं क्वचित् ॥
स्वतन्त्रः सन्नियन्तासावन्तर्यामी ततः स्मृतः ।
देवतानां स्वभावोऽपि स्वरूपमपि सर्वदा ॥
तदधीनं ततो यामी वासुदेवः प्रकीर्तितः ।
स्वभावसत्तादातृत्वं यन्तृत्वमिति कथ्यते ॥ इति ब्रह्मतर्के ॥

**टिप्पणी—**

नन्वन्तर्यामित्वं प्रकृतेस्तत्तज्जीवस्यैव वा युक्तं नतु हरेः । पृथिव्यादिशरीरत्वस्योक्त-न्यायेन तत्र सम्भवात् । हरावसम्भवात् । तस्य पृथिव्यादिभिन्नचिच्छरीरत्वोररीकारेण पृथिव्यादिशरीरत्वानङ्गीकारादिति चेन्न । यतोऽत्र पृथिव्यादिशब्दादेव ता वाचका एव । इत्यधिदैवतमिति पृथिव्यादीनामधिदैवत्वोक्तेः । यं पृथिवी न वेदेत्यादौ पृथिव्यादेर्जडत्वे यमित्यस्य वैयर्थ्याच्च । यं विज्ञानं न वेदेत्यस्यानुपपत्तेश्च । अप्रसक्तप्रतिषेधापत्तेश्च । नच पृथिव्यादिशब्दा-भिधेयदेवताशरीरत्वं प्रकृतेः पृथिव्यादिजीवस्य वा युक्तम् । विष्णोस्तु गौणं पृथिव्यादिदेवताशरीरत्वं युज्यत एवेति भावेनाऽऽह– **पृथिव्याद्या इति** ॥ यस्य शरीरमिति सम्बन्धः । यच्छब्दस्य सोऽन्तर इत्युत्तरेणान्वयः । न केवलं तद्वशत्वगुणयोगेन पृथिव्यादिदेवतानां विष्णुशरीरत्वं, किन्तु तत्प्रविष्टत्वलक्षणगुणयोगेनापीति भावेनाऽऽह– **अन्तस्थ इति** ॥ यो देवाना-मन्तःस्थश्च । नन्वेवं पृथिव्यादिशरीरत्वं गौणमङ्गीकृत्य किं बलादन्तर्यामित्वं हरेरङ्गीकर्तव्यमिति चेत् अन्तर्यामिणः पृथिव्याद्यवेद्यत्वादिविष्णुधर्मव्यपदेशात् । नच पृथिव्यादिदेवताऽविदितत्वादिकं प्रकृतेस्तत्तज्जीवस्य वोपपद्यत इति भावेन

यं पृथिवी न वेद यमापो न विदुरित्यादि वाक्यं तावद् व्याचष्टे– **न विदुरिति** ।। यः पृथिव्यां तिष्ठन् योऽप्सु तिष्ठन्नित्यादेरर्थमाह– **प्रविष्टत्वादिति** ।। यः पृथिवीमन्तरो यमयतीत्याद्यन्तरशब्दं व्याचष्टे– **सोऽन्तर इति** ।। अन्तर-शब्देन स्ववशत्वं कथं लब्धमित्यत अन्तरशब्दार्थमाह– **बाह्येति** ।। अन्तरेव रमत इत्यन्तरः । अन्तरेवेत्यस्यार्थः बाह्यापेक्षां विनेति । स्वभिन्नापेक्षां विनेत्यर्थः । तस्यैवार्थान्तरमाह– **अतिप्रियत्वाच्चेति** ।। अन्तःस्थित्वा रमयतीति अन्तर इति भावः । नन्वतिप्रियत्वं नाम निरुपाधिकं प्रियत्वम् । तच्च स्वात्मन एव नतु विष्णोरित्यत आह– **जीवानामिति** ।। एवं पृथिव्याद्यविदितत्वा-दिहेतुबलाद्विष्णुरेवान्तर्यामीत्युक्तम् । इदानीमन्तर्यामिशब्दार्थस्य विष्णावेव सम्भवात् प्रकृत्यादावसम्भवाच्च विष्णुरेवान्तर्यामीति भावेनान्तर्यामिशब्दार्थमाह– **स्वतन्त्र इति** ।। ततः तस्मादिति तच्छब्दश्रवणाद् यद् यस्मादित्यपि ग्राह्यम् । अन्तरेव यामीत्यन्तर्यामी । तत्रान्तरेवेत्यस्य तात्पर्यं स्वतन्त्र इति । यामीत्यस्यार्थो नियन्तेति । ननु यामीत्यस्य कथं नियन्तेति व्याख्यानं तयोरेकार्थत्वाप्रतीतेरित्यतस्तयोरेकार्थत्वसिद्ध्यर्थं तदुभयशब्दार्थावाह– **देवताना-मिति** ।। स्वभावो धर्मः । यत इति श्रवणादत इति ग्राह्यम् ।

**भाष्यम्**—

**अधिभूतं सर्वजीवा अध्यात्मं तच्छरीरगाः ।**
**देवतास्ताः स्वलोकस्था अधिदैवाभिधा मताः ।।**
**लोकाभिमानिन्यस्ता एवाधिलोका इतीरिताः ।**
**यज्ञाभिमानिनो देवा अधियज्ञा इति स्मृताः ।। इति च ।।**

**भवनाधिकारे स्थितत्वादधिभूतम् ।**

**पृथुं नारायणं वाति समादायैव पक्षिराट् ।**
**अतस्स पृथिवीत्युक्तस्त्वन्तरिक्षं हरः स्मृतः ।।**
**स्वान्तर्गतं यतः सर्वमिच्छया क्षपयेदसौ ।**
**द्यौर्नाम देवी विद्युत् स्यात् साक्षादेव सरस्वती ।।**

**द्योतनात् सर्ववस्तूनां तमो दुर्गा प्रकीर्तिता ।**
**यतः सङ्कल्पयेत् सर्वांस्तेजः श्रीः परिकीर्तिता ॥**
**आकाशो विघ्न उद्दिष्टः काशते हि पृथूदरः ।**
**आपो वरुण उद्दिष्टो तदेतत् पालयत्यसौ ॥**
**आत्मा विज्ञानमिति तु सर्वजीवाभिमानवान् ।**
**ब्रह्मैवोक्तस्त्विमे सर्वेऽप्यनुक्ता याश्च देवताः ॥**
**ये च जीवाः परे सर्वे नियता विष्णुनैव हि ।**

**टिप्पणी—**

इत्यधिदैवतम् इत्यधिभूतम् । इत्यध्यात्ममित्युक्ताधिदैवादिशब्दानामर्थमाह– **अधिभूतमिति** ॥ सर्वजीवाः मनुष्यादयः । तच्छरीरगास्तदिन्द्रियाद्यभिमानिन्यः । या इन्द्रियाद्यभिमानिन्यः ता रूपान्तरेण स्वलोकस्थाः । अत्राधिलोकाधियज्ञेति मूलानुक्तं माध्यन्दिनशाखाभिप्रायेण । तत्राथाधिलोकं यः सर्वेषु लोकेषु तिष्ठन् सर्वेभ्यो लोकेभ्योऽन्तरः । अथाधियज्ञं यः सर्वेषु यज्ञेषु तिष्ठन्नित्येवं रूपेण पाठात् । जीवेष्वधिभूतशब्दं व्युत्पाद्य दर्शयति– **भवनाधिकार इति** ॥ अधिभूतशब्दं सप्तम्यन्तमङ्गीकृत्योक्तं भवनाधिकार इति । स्थितत्वादिति शेषोक्तिः । भूतं भवनमुत्पत्तिमधिकृत्य वर्तत इत्यधिभूतम् । तस्मिन् स्थितत्वादित्यर्थः । यद्वा भवनाधिकार इति उत्पत्तिप्रतिपादकग्रन्थविशेषस्य सञ्ज्ञा । तत्र स्थितत्वात् । तत्प्रतिपाद्यत्वादित्यर्थः । पृथिव्याद्या देवा इत्युक्तम् । के ते केन निमित्तेन पृथिव्यादिशब्दवाच्या इत्येतत्सर्वं प्रमाणेनाऽऽह– **पृथुमिति** ॥ वाति गच्छति । हरौ अन्तरिक्षशब्दं निर्वक्ति– **स्वान्तर्गतमिति** ॥ क्लृप्तेति शेषः । अन्तरित्यस्यार्थः **स्वान्तर्गतमिति** । इ इत्यस्यार्थः– **इच्छयेति** ॥ क्ष इत्यस्यार्थः– **क्षपयेदिति** । विद्युत् द्यौर्नाम स्यात् । द्यौर्वाव विद्युदिति श्रुतेः । का सा द्यौरित्यत आह– **देवी सरस्वतीति** ॥ कुत इत्यत आह– **साक्षादिति** ॥ साक्षादेव सर्ववस्तूनां

द्योतनादिति । सङ्ग्लापयेत्। तमु ग्लपन इति धातोः । हि यस्मात् पृथूदरः तस्मादासमन्तात्काशत इत्यर्थः । एतत् पश्चिमदिक्स्थितं जगत् । आत्मा विज्ञानमिति त्विति। अत्र माध्यन्दिनशाखाभिप्रायेणाऽत्मेत्युक्तम् । अत्र यो विज्ञाने तिष्ठन्नितिवत् तत्र य आत्मनि तिष्ठन्नात्मनोऽन्तर इत्येवंरूपेण पाठादिति ज्ञेयम् । नन्वेवं व्याख्याने 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' (ब्र.सू. १.२.२०) इति सूत्रभाष्यविरोधः स्यात् । तत्रास्य वाक्यस्य विशेषित-जीवपरत्वाङ्गीकारादिति चेन्न । जीवाभिमानिचतुर्मुखादपि तन्नियामकत्वादिना भिन्नस्यान्तर्यामिणः किमु वक्तव्यं तदभिमन्यमानजीवेभ्यो भिन्नत्वमितीत्यभि-प्रायेणान्तर्यामिणो जीवाद् भिन्नत्वेऽस्य वाक्यस्य सूत्रकृतोपात्तत्वात् । तदेतदाह— **सर्वजीवाभिमानवानिति** ।। श्रुत्युक्तानामेव भगवन्नियम्यत्वं नत्वन्येषामिति शङ्कापरिहाराय यः पृथिव्यां तिष्ठन्नित्यादिकमुपलक्षणपरमिति भावेनाऽह— **इमे सर्व इति** ।। इमे सर्वे श्रुत्युक्ता गरुडाद्याः । या अत्र ब्राह्मणेऽनुक्ता देवतास्ताश्च ये परे मनुष्याद्याः सर्वे जीवा अधिभूतशब्दोक्तास्ते च विष्णुनैव नियता इत्यर्थः ।

**भाष्यम्—**

**जीवानां नियमेऽजीवं किमु वाच्यमिति श्रुतिः ।।**
**पृथक् तन्नियमं नैषा वक्ति सिद्धत्वतः स्वतः ।**
**स एष सर्ववेत्ता हि परमात् परमो हरिः ।।**
**नान्यो वेत्ता स्वतन्त्रोऽस्ति जीवास्सर्वे हि दुखिनः ।**
**यदि स्वतन्त्रा नैवैते दुःखिनः स्युः कदाचन ।।**
**अत आर्तिमतामार्तिदाता मुक्तिप्रदश्च सः ।**
**भगवान् परमो विष्णुः स्वतन्त्रः सर्वदैकराट् ।।**

इत्यादि महामीमांसायाम् ।।

इत्यन्तर्यामिब्राह्मणम् ।। ७ ।।

**टिप्पणी—**

ननु पृथिव्यादिशब्दानामुक्तरीत्या गरुडादिदेवतापरत्वे जडस्य भगवन्नियतत्वं नोक्तं स्यात् इत्यतः कैमुत्यसिद्धतया तदनुक्तावपि सिद्ध्यतीति भावेनाऽह– **जीवानामिति** ॥ एषा श्रुतिस्तन्नियमनं जडनियमनं पृथङ् न वक्ति । कुतः स्वत उक्तिं विनापि सिद्धत्वात् कथम् । जीवानां नियमेऽजीवं जीवभिन्नं जडं नियच्छतीति किमु वाच्यमितीति योजना । ननु अदृष्टो द्रष्टाऽश्रुतः श्रोतेत्यादिना द्रष्टृत्वश्रोतृत्वादिकं विष्णोर्लक्षणमुक्तम् । तत्तु चेतनमात्रसाधारणं कथं विष्णुलक्षणं स्यादित्यत आह– **स एवेति** ॥ ननु विष्णोः सर्वात्मनाऽदृष्टत्वाश्रुतत्वादिकं प्रमाणान्तरविरुद्धमित्यत आह– **हि परमात् परम इति** ॥ हिशब्दो यस्मादित्यर्थः । तस्माच्छ्रुतौ साकल्येनादृष्टत्वादिकमुच्यत इति शेषः । नान्योऽतोऽस्ति द्रष्टेत्यादिनिषेधः कथं जीवानामेव तद्व्यतिरिक्तानां द्रष्टृत्वादित्यत आह– **नान्य इति** ॥ स्वतन्त्रवेत्तारोऽपि जीवाः कुतो न स्युरित्येतच्छङ्कापरिहारकतयाऽतोऽन्यदार्तमित्येतद्व्याचष्टे– **जीवा इति** ॥ दुःखित्वेऽपि स्वातन्त्र्यं किन्न स्यात् इत्यत आह– **यदीति** ॥ दुःखिनो नैव स्युः किन्तु नित्यं सुखिन एव स्युरित्यर्थः । जीवानां भगवदधीनत्वं भगवतः स्वातन्त्र्यं चोपसंहरति– **अत इति** ॥ आर्तिमतां दुःखस्पृष्टानाम् । मुक्तिप्रदश्च स इत्यनन्तरं तस्माज्जीवा अस्वतन्त्रा इति शेषः ॥

**अथ खण्डार्थः**

अथ हैनमुद्दालको नामत अरुणस्यापत्यमारुणिः पप्रच्छ । स्वस्य सूत्रादिविद्याया गुरूपदेशपूर्वकत्वं ज्ञापयितुमाख्यायिकामारचयति– **मद्रेष्विति** ॥ मद्रेषु देशेषु काप्यस्य कपिगोत्रोत्पन्नस्य पतञ्जलनाम्नो गृहेषु यज्ञमधीयाना याज्ञिकविद्याभ्यासं कुर्वाणा असाम । तस्य पतञ्जलस्य भार्या गन्धर्वेण गृहीता तदाविष्टाऽऽसीत् । तं गन्धर्वं पतञ्जलसहिता वयं याज्ञिकास्त्वं कोऽसीत्यपृच्छाम । एवं पृष्टः स गन्धर्वः । अस्मभ्यमब्रवीत् किम् अहंनाम्ना कबन्धः अथर्वणोऽपत्यं आथर्वण इति । स गन्धर्वः काप्यं पतञ्जलं याज्ञिकांश्च प्रत्यब्रवीत् ।

हे काप्य तत्सूत्रं त्वं वेत्थ नु जानीषे किम् । किं तत्सूत्रमित्यतस्तद्विशिनष्टि– **येनेति** ।। येन सूत्रेणायं लोकः भूरादिलोकः परश्च लोकः अन्तरिक्षादिलोकः सर्वाणि भूतानि सन्दृब्धानि सङ्गतानि तदाधारतयाऽवस्थितानि भवन्तीति । स पृष्टः काप्यः पतञ्चलौ हे भगवन् अहं तत्सूत्रं न वेदेत्यब्रवीत् । स एवमुक्तो गन्धर्वः पतञ्चलं काप्यं याज्ञिकांश्च पुनरब्रवीत् । हे काप्य त्वं तमन्तर्यामिणं वेत्थ नु किं कोऽसावन्तर्यामी कीदृशश्च स इत्यत आह– **य इति** ।। य इमं लोकं परं च लोकं सर्वाणि भूतानि अन्तरो यमयति यः पूर्णत्वाद्यशब्दाभिधो विष्णुस्तमन्तर्यामिणमिति सम्बन्धः । एवं पुनः पृष्टः स पतञ्चलः काप्यो हे भगवन् अहं तमन्तर्यामिणं न वेदेत्यब्रवीत् । स्वप्रतिज्ञातप्रकारेण सूत्रान्तर्यामिस्वरूपवेत्तुः फलमाह– **स इति** ।। हे काप्य यो वाऽधिकारी एतत्सूत्रं तमन्तर्यामिणं च इति येनायं लोकः इति य इमं च लोकमिति स्वप्रतिज्ञातप्रकारेण विद्यात् । स ब्रह्मवित् स पूर्णवित् । स लोकानां कर्तृवेदनात् लोकवित् स देवानां देववेदनाद् देववित् । स वेदार्थवेदनाद् वेदवित् भूतनियन्तृवेदनाद् भूतवित् आत्मवेदनादात्मवित् सर्वसारवेदनात्सर्वविदिति । एवं स गन्धर्वः सूत्रान्तर्यामिज्ञानिनः फलमुक्त्वा तेभ्यः पतञ्चलयाज्ञिकेभ्यः सूत्रान्तर्यामिस्वरूपमब्रवीत् । तत्सूत्रान्तर्यामिस्वरूपं गन्धर्वोपदिष्टमहं वेदं किं मे तावतेत्यत आह– **तच्चेदिति** ।। हे याज्ञवल्क्य त्वं चेद् यदि तदुक्तविशेषणविशिष्टं सूत्रं तमुक्तविशेषणविशिष्टमन्तर्यामिणं चाविद्वान् सन् ब्रह्मगवीः ब्रह्मविदां स्वभूता गाः अन्यायेनोदजसे उन्नयसि । तर्हि ते मूर्धा विपतिष्यतीति उद्दालकेनोक्तः याज्ञवल्क्यः प्रत्याह । हे गौतम गोतमगोत्रोत्पन्न अहं तत्सूत्रं तमन्तर्यामिणं च वेद वा इति । एवमुक्त उद्दालकः प्रत्याह– **वेद वेदेति** ।। वेद वेदेति इदं वै यः कश्चिद्ब्रूयात् आत्मानं श्लाघयेत् किं तेनोदितेन यथा वेत्थ तथा ब्रूहीति ।। १ ।।

एवमुक्तस्स याज्ञवल्क्य उवाच । हे गौतम यत् त्वया पृष्टं तत्सूत्रं वायुरेव सूत्रस्योक्तलक्षणं वायौ दर्शयति– **वायुनेति** ।। वायोः सर्वलोकाधारत्वमनुभवारूढं

करोति– **तस्मादिति** ॥ हे गौतम तस्माद्वै वायोः सर्वाधारत्वादेव प्रेतं मृतं वायुना परित्यक्तं पुरुषमाहुः । किमस्य प्रेतस्याङ्गानि करचरणादीनि व्यस्रंसिषत विशीर्णान्यभवन्निति । सूत्रापगमे मणय इव । एवं वायोः सर्वाधारत्वमनुभवारूढं कृत्वा साध्यमाह– **वायुना हीति** ॥ एवं याज्ञवल्क्योक्तं सूत्ररूपमङ्गीकृत्यान्तर्यामिस्वरूपं पृच्छति– **एवमेवैतदिति** ॥ २ ॥

यः पृथिव्यां पृथुं नारायणं समादाय वाति गच्छतीति पृथिवी गरुडस्तस्मिन् तिष्ठन् । पृथिव्या गरुडादन्तरो विविक्तः । यमन्तर्यामिणं पृथिवी गरुडो न वेद यस्य पृथिवीशरीरं तद्वशत्वादेः । न केवलं तत्र स्थितिमात्रं किन्तु योऽन्तरो बाह्यापेक्षां विना रमत इति वा रमयतीति वाऽन्तरः । पृथिवीं गरुडं यमयति । एषं ते आत्मा नियामकोऽमृतो नित्योऽन्तर्यामी । अत्रापि त आत्मेति जीवेश्वराभेदव्यावृत्त्यर्थम् । एवमेवोत्तरत्रापि व्याख्येयम् । अत्र पृथिवीशब्देन गरुडभार्याऽपि ग्राह्या । 'प्रथितं हरिमादाय यातीति पृथिवः स्मृतः । तद्भार्या पृथिवी नाम' इति वक्ष्यमाणत्वात् । अप्सु वरुणे अग्नौ प्रसिद्धभूताभिमानिनि यद्यप्यग्निशब्देन शाकल्यब्राह्मणे अग्रं विष्णुं नयेद् यस्मात् सुपर्णोऽग्निरुदाहृत इति सुपर्णो गृह्यते । तथाप्यत्र पृथिवीशब्देनैव तस्य गृहीतत्वान्नाग्निशब्देन तद्ग्रहणम् । अन्तरिक्षे हरे । वायुपत्नी श्रद्धापि ग्राह्या श्रद्धा नामैव तत्पत्नी सर्वस्यान्तर्निरीक्षणात् । अन्तरिक्षमिति प्रोक्तेति वक्ष्यमाणत्वात् । वायौ मुख्यवायौ सर्वज्ञत्वात्तथायुष्ट्वात्सूत्रात्मा वायुरुच्यत इति वक्ष्यमाणत्वात् । दिवि सरस्वत्यां उमाऽपि ग्राह्या । द्यौरुमा च समुद्दिष्टेति वक्ष्यमाणत्वात् । आदित्ये सूर्ये यद्यप्यादित्यशब्देनाऽदिकालस्थितो यस्मादादित्यस्तु सदाशिव इत्युत्तरत्र सदाशिवो गृह्यते । तथाऽपि तस्यान्तरिक्षशब्देनैवोक्तत्वान्न तेन तद्ग्रहणम् । दिक्षु दिगभिमानिषु चन्द्रश्च तारकाश्च चन्द्रतारकं तस्मिन् । चन्द्रः कामः । चन्द्रः काम उदाहृत इति विवक्ष्यमाणत्वात् । तारकशब्देनेन्द्रः । नक्षत्रमिन्द्र उद्दिष्ट इति तारक-शब्दपर्यायनक्षत्रशब्देनेन्द्रस्योत्तरत्र ग्रहणात् । नचोत्तरब्राह्मणे पृथिव्यादिशब्दानां

हे काप्य तत्सूत्रं त्वं वेत्थ नु जानीषे किम् । किं तत्सूत्रमित्यतस्तद्विशिनष्टि– **येनेति** ॥ येन सूत्रेणायं लोकः भूरादिलोकः परश्च लोकः अन्तरिक्षादिलोकः सर्वाणि भूतानि सन्दृब्धानि सङ्गतानि तदाधारतयाऽवस्थितानि भवन्तीति । स पृष्टः काप्यः पतञ्जलो हे भगवन् अहं तत्सूत्रं न वेदेत्यब्रवीत् । स एवमुक्तो गन्धर्वः पतञ्जलं काप्यं याज्ञिकाश्च पुनरब्रवीत् । हे काप्य त्वं तमन्तर्यामिणं वेत्थ नु किं कोऽसावन्तर्यामी कीदृशश्च स इत्यत आह– **य इति** ॥ य इमं लोकं परं च लोकं सर्वाणि भूतानि अन्तरो यमयति यः पूर्णत्वाद्यशब्दाभिधो विष्णुस्तमन्तर्यामिणमिति सम्बन्धः । एवं पुनः पृष्टः स पतञ्जलः काप्यो हे भगवन् अहं तमन्तर्यामिणं न वेदेत्यब्रवीत् । स्वप्रतिज्ञातप्रकारेण सूत्रान्तर्यामिस्वरूपवेत्तुः फलमाह– **स इति** ॥ हे काप्य यो वाऽधिकारी एतत्सूत्रं तमन्तर्यामिणं च इति येनायं लोकः इति य इमं च लोकमिति स्वप्रतिज्ञातप्रकारेण विद्यात् । स ब्रह्मवित् स पूर्णवित् । स लोकानां कर्तृवेदनात् लोकवित् स देवानां देववेदनाद् देववित् । स वेदार्थवेदनाद् वेदवित् भूतनियन्तृवेदनाद् भूतवित् आत्मवेदनादात्मवित् सर्वसारवेदनात्सर्वविदिति । एवं स गन्धर्वः सूत्रान्तर्यामिज्ञानिनः फलमुक्त्वा तेभ्यः पतञ्जलयाज्ञिकेभ्यः सूत्रान्तर्यामिस्वरूपमब्रवीत् । तत्सूत्रान्तर्यामिस्वरूपं गन्धर्वोपदिष्टमहं वेदं किं मे तावतेत्यत आह– **तच्चेदिति** ॥ हे याज्ञवल्क्य त्वं चेद् यदि तदुक्तविशेषणविशिष्टं सूत्रं तमुक्तविशेषणविशिष्टमन्तर्यामिणं चाविद्वान् सन् ब्रह्मगवीः ब्रह्मविदां स्वभूता गाः अन्यायेनोदजसे उन्नयसि । तर्हि ते मूर्धा विपतिष्यतीति उद्दालकेनोक्तः याज्ञवल्क्यः प्रत्याह । हे गौतम गोतमगोत्रोत्पन्न अहं तत्सूत्रं तमन्तर्यामिणं च वेद वा इति । एवमुक्त उद्दालकः प्रत्याह– **वेद वेदेति** ॥ वेद वेदेति इदं वै यः कश्चिद्ब्रूयात् आत्मानं श्लाघयेत् किं तेनोदितेन यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

एवमुक्तस्स याज्ञवल्क्य उवाच । हे गौतम यत् त्वया पृष्टं तत्सूत्रं वायुरेव सूत्रस्योक्तलक्षणं वायौ दर्शयति– **वायुनेति** ॥ वायोः सर्वलोकाधारत्वमनुभवारूढं

करोति– **तस्मादिति** ॥ हे गौतम तस्माद्वै वायोः सर्वाधारत्वादेव प्रेतं मृतं वायुना परित्यक्तं पुरुषमाहुः । किमस्य प्रेतस्याङ्गानि करचरणादीनि व्यस्रंसिषत विशीर्णान्यभवन्निति । सूत्रापगमे मणय इव । एवं वायोः सर्वाधारत्वमनुभवारूढं कृत्वा साध्यमाह– **वायुना हीति** ॥ एवं याज्ञवल्क्योक्तं सूत्ररूपमङ्गीकृत्यान्तर्यामिस्वरूपं पृच्छति– **एवमेवैतदिति** ॥ २ ॥

यः पृथिव्यां पृथुं नारायणं समादाय वाति गच्छतीति पृथिवी गरुडस्तस्मिन् तिष्ठन् । पृथिव्या गरुडादन्तरो विविक्तः । यमन्तर्यामिणं पृथिवी गरुडो न वेद यस्य पृथिवीशरीरं तद्वशत्वादेः । न केवलं तत्र स्थितिमात्रं किन्तु योऽन्तरो बाह्यापेक्षां विना रमत इति वा रमयतीति वाऽन्तरः । पृथिवीं गरुडं यमयति । एष ते आत्मा नियामकोऽमृतो नित्योऽन्तर्यामी । अत्रापि त आत्मेति जीवेश्वराभेदव्यावृत्त्यर्थम् । एवमेवोत्तरत्रापि व्याख्येयम् । अत्र पृथिवीशब्देन गरुडभार्याऽपि ग्राह्या । 'प्रथितं हरिमादाय यातीति पृथिवः स्मृतः । तद्भार्या पृथिवी नाम' इति वक्ष्यमाणत्वात् । अप्सु वरुणे अग्नौ प्रसिद्धभूताभिमानिनि यद्यप्यग्निशब्देन शाकल्यब्राह्मणे अग्रं विष्णुं नयेद् यस्मात् सुपर्णोऽग्निरुदाहृत इति सुपर्णो गृह्यते । तथाप्यत्र पृथिवीशब्देनैव तस्य गृहीतत्वान्नाग्निशब्देन तद्ग्रहणम् । अन्तरिक्षे हरे । वायुपत्नी श्रद्धापि ग्राह्या श्रद्धा नामैव तत्पत्नी सर्वस्यान्तर्निरीक्षणात् । अन्तरिक्षमिति प्रोक्तेति वक्ष्यमाणत्वात् । वायौ मुख्यवायौ सर्वज्ञत्वात्तथायुष्ट्वात्सूत्रात्मा वायुरुच्यत इति वक्ष्यमाणत्वात् । दिवि सरस्वत्यां उमाऽपि ग्राह्या । द्यौरुमा च समुद्दिष्टेति वक्ष्यमाणत्वात् । आदित्ये सूर्ये यद्यप्यादित्यशब्देनाऽदिकालस्थितो यस्मादादित्यस्तु सदाशिव इत्युत्तरत्र सदाशिवो गृह्यते । तथाऽपि तस्यान्तरिक्षशब्देनैवोक्तत्वान्न तेन तद्ग्रहणम् । दिक्षु दिगभिमानिषु चन्द्रश्च तारकाश्च चन्द्रतारकं तस्मिन् । चन्द्रः कामः । चन्द्रः काम उदाहृत इति विवक्ष्यमाणत्वात् । तारकशब्देनेन्द्रः । नक्षत्रमिन्द्र उद्दिष्ट इति तारक-शब्दपर्यायनक्षत्रशब्देनेन्द्रस्योत्तरत्र ग्रहणात् । नचोत्तरब्राह्मणे पृथिव्यादिशब्दानां

गरुडभार्यादिपरत्वेऽप्यत्र कुतस्तद्ग्रहणमिति वाच्यम् । एवं सति विष्णोस्तदन्तर्यामित्वस्यालाभात् । अत एव तत्र वक्ष्यति । अत्रोक्ता अप्यन्तर्यामिब्राह्मणे भवन्तीति । आकाशे विघ्ने । तमसि दुर्गायां तेजसि श्रियाम् । इत्यधिदैवतमिति इत्यनेन प्रकारेणाधिदैवतं स्वलोकस्य देवताजातं तदन्तर्यामिनिरूपणं कृतम् । अथाधिदैवतमन्तर्यामिनिरूपणानन्तरमधिभूतं भवनाधिकारे स्थितत्वादधिभूतं सर्वजीवजातम् । तदन्तर्यामिनिरूपणं क्रियत इत्यर्थः । सर्वेषु भूतेषु मनुष्यादिजीवेषु । अथाधिभूतमन्तर्यामिनिरूपणानन्तरमध्यात्ममात्मानं जीवशरीरमधिकृत्य वर्तमानमिन्द्रियाभिमानिदेवताजातं तदन्तर्यामिनिरूपणं क्रियत इत्यर्थः । प्राणे घ्राणाभिमानिदेवतायां एवं वागादिशब्देनापि तदभिमानिदेवता ग्राह्याः । विज्ञाने सर्वजीवाभिमानिचतुर्मुखे । अन्तर्यामिणो महिमान्तरमाह– **अदृष्ट इति** । सोऽन्तर्यामी अदृष्टः साकल्येन चक्षुर्गोचरो न भवति । अत्युत्तमत्वात् । द्रष्टा सर्वमापरोक्ष्येण पश्यति अश्रुतः साकल्येन श्रवणेन्द्रियागोचरः श्रोता सर्वं शृणोति अमतो मनोऽगोचरः मन्ता सर्वं मनसा मनुते अविज्ञाता विज्ञानागोचरः । विज्ञाता सर्वं विजानातीति । अतोऽन्तर्यामिणोऽन्यः स्वातन्त्र्येण द्रष्टा नास्ति । एवमुत्तरत्रापि । कुतोऽन्यो जीवः स्वातन्त्र्येण द्रष्ट्रादिर्न भवतीत्यतस्तस्य दुःखित्वान्न स्वातन्त्र्यमित्याह– **अतोऽन्यदिति** ॥ ततः स्वकृतप्रश्नोत्तरकथनानन्तरमुद्दालक आरुणिरुपरराम ॥

**इति अन्तर्यामिब्राह्मणम् ॥ ७ ॥**

उपनिषत्—

## अथ अक्षरब्राह्मणम्

[वाद-जल्प-वितण्डालक्षणम्]

**अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥**

**भाष्यम्—**

**पूर्वं गार्ग्या जीवानामुत्तरोत्तराश्रयत्वं सर्वेषां भगवदाश्रयत्वं च श्रुतम् । नतु मूलप्रकृतेराधारत्वमाधेयत्वं वा । अतः पुनः पृच्छति विजिगीषुकथात्वाद् ब्राह्मणानुज्ञया ।**

**टिप्पणी—**

ननु यदिदं सर्वमप्स्वोतं च प्रोतं चेति कस्मिन् खल्वाप ओताश्च प्रोताश्चेत्यादिना वाचक्नव्या प्रश्ने कृते वायौ गार्गीत्यादिना याज्ञवल्क्येन परिहारस्योक्तत्वात् यदूर्ध्वं याज्ञवल्क्य दिव इत्यादि पुनः प्रश्नः किमर्थ इत्यतस्तदभिप्रायमाह– **पूर्वमिति** ॥ सर्वेषां जीवानामित्यनुवर्तते । अतः मूलप्रकृतेराधारत्वाधेयत्वयोरश्रुतत्वात् पुनः पृच्छति । सर्वाधारं सर्वाधारप्रकृत्याधारं चेति शेषः । पृच्छ गार्गीति ब्राह्मणानुज्ञया प्रश्नकरणे निमित्तमाह– **विजिगीष्विति** ॥ गार्गी ब्राह्मणानुज्ञया याज्ञवल्क्यं पृच्छति । अस्याः कथायाः विजिगीषुकथात्वाद् गार्ग्याः पूर्वं पराजितत्वात् । विजिगीषुकथायामेकपराजये कथायाः परिसमाप्तत्वेन सभ्यानुज्ञां विना प्रश्नस्याकर्तव्यत्वादिति भावः । ननु याज्ञवल्क्येन ब्राह्मणैः सह क्रियमाणकथा विद्यापरीक्षार्थेत्युपक्रमपर्यालोचनया सिद्धम् । विद्यापरीक्षा च वादेनैव । वादेन चोच्चनीचत्वविज्ञानं भवति स्फुटम् । इति वादस्य पूर्वत्वमित्यनुव्याख्यानेऽभिधानात् । तथाच विजिगीषुकथात्वादिति कथमुच्यते । तथात्वे जल्पत्वप्राप्त्या विद्यापरीक्षार्थत्वानुपपत्तेरिति चेन्न । विजिगीषुकथात्वे जल्पत्वं स्यादिति किं विद्यापरीक्षार्थायाः कथाया जल्पशब्दवाच्यत्वमापद्यते किंवा वादशब्दवाच्यत्वाभावः यद्वा समाहाररूपं कथान्तरम् अथवा निमित्तद्वयसमावेशे वादशब्दस्यैव व्यवहारानुपपत्तिः । नाऽद्यः । जल्पशब्दप्रवृत्तिनिमित्तसत्त्वेन इष्टत्वात् । न द्वितीयः । तत्त्वनिर्णयार्थत्वलक्षणवादशब्दप्रवृत्तिनिमित्तसत्त्वात् । नापि तृतीयः । तुलायां प्रमाणप्रमेयशब्दप्रवृत्तिवदुपपत्तेः । अन्यथा तुलाया अपि प्रमाणप्रमेयादितो विधान्तरतापत्तेः । नापि चतुर्थः । निमित्तद्वयसमावेशेऽपि अस्यां कथायां वादशब्दप्रवत्तिनिमित्तस्यैव मुख्यत्वेन

वादशब्दस्यैव व्यवहारोपपत्तेः । कथकौ यद्यप्यादितो विजिगीषू । तथापि सभ्यादिभिर्विजिगीषां परिभाव्योत्पादिता तत्त्वनिर्णयार्थितैव कथोपयोगिनीति वादशब्दप्रवत्तिनिमित्तं हि मुख्यमिति सुधायामेव 'जल्प इत्यपि नाम स्याद् वादस्यैतादृशस्य तु' (ब्र.सू.अनु. २.१.२) इत्यनुव्याख्यानव्याख्यानावसरे कथितत्वात् ।

**भाष्यम्—**

**स्वभर्तुर्विद्याबलं जानत्यपि युष्माकमेनं जेतुं न शक्य इति ज्ञापयित्वा तेषामुपकारार्थं च पप्रच्छ । नच युक्त्या पूर्वमुपरता । भार्यात्वाद् भगवतोऽन्याधारत्वं नाऽशङ्क्यमित्युक्ते भीत्यैवोपरता । भगवतोऽन्याधारत्वं च सर्वाधारमूलप्रकृतेरपि भगवानेवाऽधार इत्युक्ते युक्तित एव निवारितं भवति । 'नान्यदतोऽस्ति द्रष्टृ' त्यादियुक्तिभिश्च । अस्थूलत्वादित्युक्तिभिश्च ।**

**टिप्पणी—**

ननु गार्ग्या याज्ञवल्क्येन क्रियमाणायाः कथायाः विजिगीषुकथात्वं न युज्यते । गार्ग्यास्तत्स्त्रीत्वेन गोग्रहणनिमित्तमात्सर्यायोगात् । तदीयविद्याधिक्यज्ञानाच्च तद्विजिगीषाभावादित्यत आह– **स्वभर्तुरिति** ॥ चशब्दोऽवधारणे । आत्मनस्तत्त्वनिर्णयार्थं तेषामुपकारार्थं चेति वा । यद्यपि स्वभर्तुर्याज्ञवल्क्यस्य विद्याबलं जानात्येव गार्गीति न तस्य तद्विजिगीषाऽस्ति । समविद्ययोरेव विजिगीषावत्त्वात् । तथाऽपि यद्ययं मदीयप्रश्नोत्तरं प्रयच्छति । तर्हि युष्माकमयं जेतुं न शक्य इति ज्ञापयित्वा तेषां ब्राह्मणानामुपकारार्थं पप्रच्छ । तथा ज्ञापनमेव तेषामुपकार इति यावत् । आत्मनस्तत्त्वनिर्णयार्थं च स्वस्यां विजिगीषाध्यारोपणेन पप्रच्छेत्यर्थः । किञ्च गार्ग्या स्वस्याः पूर्वं पराजितत्वमभ्युपेत्यैव पुनः प्रश्नार्थं ब्राह्मणानुज्ञा प्राप्ता । वस्तुतः तस्याः पराजय एव नास्तीति पुनः प्रश्नो युक्त इत्याशयेनाऽह– **नचेति** ॥ युक्त्योपरतत्वं हि पराजयः । नच सा युक्त्या पूर्वमुपरता । अतः पराजयाभावात्पुनः प्रश्नो नानुपपन्न

इति भावः । तर्हि कथमुपरतेत्यत आह– **भार्यात्वादिति** ॥ अन्येषामविद्यमाना भीतिरस्याः कुत इत्यत उक्तम्– **भार्यात्वादिति** ॥ ननु यदि तत्र भीत्यैवोपरता । तर्ह्यत्र ब्राह्मणे कुतो भगवतोऽन्याधारत्वं न शङ्कनीयमिति प्रश्नस्तत्परिहारश्च कर्तव्य इत्यत आह – **भगवत इति** ॥ तथाच न तत्प्रश्नावकाश इति भावः । यद्वा भगवतोऽन्याधारत्वं पश्चाद्युक्त्या निवारितं किमित्यत आह– **भगवत इति** ॥ अथवा कस्मिन् खलु प्रजापतिलोका ओताश्च प्रोताश्चेति प्रश्ने ब्रह्मलोकेषु गार्गीतिवत् कस्मिन् खल्वाकाश ओतश्च प्रोतश्चेति प्रश्ने एतस्मिन् खल्वक्षरे गार्गीत्येवोक्तम् । तत्र पूर्वं भगवतोऽन्याधारत्वं न शङ्कनीयमित्यनुक्तत्वात् कस्मिन् खलु ब्रह्मलोका ओताश्च प्रोताश्चेति प्रश्नः कृतः अत्र तु अनतिप्रश्न्यां वै देवतामतिपृच्छसीति भगवतोऽन्याधारत्वं न शङ्कनीयमित्यनुपदमुक्तत्वेन तदक्षरं कस्मिन्नोतं च प्रोतं चेति प्रश्नमकृत्वैवोपरतेत्येव विशेषः । युक्त्यनुक्तेरुभयत्राविशिष्टत्वात् । तथाच किमुच्यते पूर्वं भीत्यैवोपरतेति तत्राह– **भगवत इति** ॥ अन्य आधारो यस्य सः अन्याधारः तस्य भावः अन्याधारत्वम् । युक्तित एवेति । भगवान् अन्याधारको न भवति सर्वाधारप्रकृत्याधारत्वात् । व्यतिरेकेण देवदत्तवदिति युक्तितः । नतु पूर्ववदित्य-त्रापि भयदर्शनेनेत्यर्थः । नचात्र सर्वाधारेति प्रकृतिविशेषणं व्यर्थमिति वाच्यम् । यदि विष्णोरन्य आधारः स्यात्तर्हि विष्ण्वाश्रितायाः प्रकृतेर्विष्ण्वाधाराश्रयत्वासम्भवेन विष्णोः स्वव्यतिरिक्तसर्वाधारत्वं न स्यादिति विपक्षे बाधकतर्कसूचकतयाऽ-प्रयोजकत्वशङ्कापरिहारार्थत्वात् । भगवतोऽन्याधारत्वाभावे युक्त्यन्तरमाह– **नान्यदिति** ॥ भगवतोऽन्याधारत्वं निवारितम् इति सम्बन्धः । यदि भगवानन्या-धारकः स्यात् तदा तस्यैवाऽधारभूतस्य स्वतन्त्रद्रष्टुः सत्त्वेन नान्यदतोऽस्ति द्रष्टृत्यादितन्निषेधोऽयुक्तः स्यादित्यर्थः । उपसंहारस्योपक्रमापेक्षया प्राबल्येनोपसंहारवाक्योक्तयुक्तीरुक्त्वा उपक्रम-वाक्योक्तयुक्तीराह– **अस्थूलत्वा-दीति** ॥ पूर्ववत्सम्बन्धः । स्वत इति शेषः । तेनास्थूलत्वस्य हेतुत्वे सूक्ष्मपदार्थेऽसूक्ष्मत्वस्य हेतुत्वे स्थूलपदार्थे श्रीतत्त्वे वा न व्यभिचारः ।

**भाष्यम्—**

**वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा।**

**टिप्पणी—**

विजिगीषुकथात्वादित्युक्तम् । तत्र कथास्वरूपजिज्ञासायां तत्प्रपञ्चनार्थम् उत्तरो ग्रन्थसन्दर्भः । तत्राऽदौ कथां विभागेनोद्दिशति– **वाद इति** ॥ तत्त्वनिर्णयैकप्रयोजनत्वेनाभ्यर्हितत्वाद् वादस्य प्रथममुद्देशः। उभयसाधनवत्तया सदधिकारितया च वादसाम्यात्तदनन्तरं जल्पस्य । परिशेषाद् वितण्डायाः। कथकभेदेन कथानन्त्यात्तत्तल्लक्षणोपाधिक्रोडीकृतराशित्रयविवक्षया त्रित्वमिति दर्शयितुं त्रिविधेति धाल्प्रयोगः । ननु सामान्यलक्षणाभिधानेन विना कथं विभागोद्देशावसरः। अवच्छेदकैक्येनैक्यमापन्नं हि वस्तु विभज्योद्देष्टव्यम् । अथ कथाशब्दं वाक्यप्रबन्धे व्युत्पादितं सिद्धवत्कृत्य न पृथक् सामान्यलक्षणमुच्यत इति चेन्न। तर्हि भारतादीनामपि वाक्यप्रबन्धत्वेन कथात्वात्कथं कथात्रैविध्यम्। नहि तानि वादादिष्वन्तर्भवन्तीत्यतः सामान्यलक्षणमाह– **विदुषामिति** ॥ ननु विदुषामिति कथं बहुवचनम् । वादे बहूनामप्यधिकारादिति चेन्न । नियामकाभावात् । जल्पवितण्डयोर्द्वयोरेवाधिकाराच्चेति चेन्न । अनन्तासु कथासु प्रत्येकं वादित्वप्रतिवादित्वावच्छिन्ना अनन्ता इत्यभिप्रेत्य बहुवचन-प्रयोगात्। एतदभिप्रायेणैव कथालक्षणटीकादौ विदुषामिति जातौ बहुवचन-मित्युक्तम् । अत्र कथाशब्द आवर्तनीयः । तत्रैको रूढ्या लक्ष्यपरः। अपरस्तु योगेन वाक्यप्रबन्धपरः । विचारगोचरेत्युपस्कर्तव्यम्। तेनानेकविद्व-त्कर्तृकविचारगोचरवाचकप्रबन्धः कथा। सा वादादिभेदेन त्रिविधेत्युक्तं भवति। अत्र वैदुष्यं कथामहावाक्यार्थनिर्वाहकत्वम्। अनेन स्वस्थः सर्वजनप्रत्यायना-वलम्बी सावधानः अकलहकारश्चेत्यादयः कथका दर्शिताः । पूर्वोत्तरपक्ष-बलाबलचिन्ता विचारः। अत्रानेकवक्तृकत्वोक्त्यैव वक्तृकेभ्यो मीमांसावाक्येभ्यो व्युदासः । वैदुष्योक्त्या कलहादिभ्यः विचारगोचरत्ववचनेन विदुषामन्योन्यं सुखव्यवहारेभ्यः कथायाथात्म्यविदुषां मतेन त्रिविधेति वा । तेनैक एव

कथामार्ग इति बाह्याः वादवितण्डे द्वे एवेति श्रीहर्षः । वादो जल्पो वादवितण्डा जल्पवितण्डा चेति चतस्रः कथा इति गौडनैयायिकाः । ते समस्ता निरस्ता भवन्ति ।

**भाष्यम्—**

**केवलं तत्त्वविज्ञानमुद्दिश्य गुरुशिष्ययोः ॥**
**अन्ययोर्वा बहूनां वा निर्दुष्टमनसां कथा ।**
**वाद इत्युच्यते सद्भिः जयस्तत्रार्थिको भवेत् ॥**
**विजये शिष्यताऽन्येषां पूजा च जयिनः सदा ।**
**पुनश्च संशयो यत्स्यात्तेषां तस्यापि वारणम् ॥**
**कर्तव्यं जयिना नित्यमशक्तस्य स्वतोऽधिकात् ।**
**अन्योन्यनिर्णयश्चेत्स्यात्तदा सब्रह्मचारिणः ॥**
**पृष्टेन प्रथमं मानं वक्तव्यं वादिना शुभम् ।**

**टिप्पणी—**

तत्र यथोद्देशं वादलक्षणमाह– **केवलमिति** ॥ अत्र केवलं तत्त्वविज्ञानमुद्दिश्य कथा वाद इत्येकं लक्षणम् । तत्त्वं प्रमाणप्रमितं वस्तु तस्य विज्ञानमज्ञातज्ञानं संशयविपर्ययव्युदासोऽभ्यनुज्ञानेन दृढीकरणं चेति त्रिविधम् । अत्र तत्त्वविज्ञानहेतुः कथा वाद इत्येवोक्ते जल्पविशेषेऽतिव्याप्तिः स्यात् । तथाहि । यदा हि ख्यात्याद्यर्थयमानौ विजिगीषू सद्भ्यामेव साधनदूषणाभ्यां स्वपरपक्षसाधनोपालम्भौ कुर्वाते स जल्पोऽपि भवति तत्त्वविज्ञानहेतुः । नह्यसदेव जल्पे वक्तव्यमिति नियमः । प्रतीयमानसदतिक्रमे कारणाभावात् । किन्नाम सदपरिस्फूर्तौ निश्चित-पराभवात् वरं पाक्षिकविजय इति मन्वानोऽसदप्युपादत्ते । नच तत्साधनं तत्त्वविज्ञानं न जनयतीति युक्तम् । व्याघातात् । अतस्तत्रातिव्याप्ति-परिहारायोद्दिश्येत्युक्तम् । नहि तत्त्वनिर्णयहेतुरपि जल्पः तदुद्देशेन क्रियते । तत्त्वविज्ञानमुद्दिश्य कथा वाद इत्येवोक्ते वितण्डाविशेषेऽतिव्याप्तिः । तथाहि

यदि स्वयमध्यवसितार्थः कारुणिकतया पाषण्डिप्रसञ्जितौ लोकस्य संशय-विपर्ययौ पराकर्तुं तद्विजिगीषया वितण्डामारभते सापि तत्त्वविज्ञानमुद्दिश्य कथा भवत्येव । अतस्तत्रापि प्रसङ्गपरिहाराय केवलमित्युक्तम् । ननु या कथा लोकसंशयविपर्ययनिरासं ख्यात्यादिकं चोद्दिश्य प्रवर्तते । ततोऽनेन व्युदासो भवेत् । या तु केवलं संशयाद्यपाकरणार्थैव कथं ततो व्यावृत्तिः । केवलं तत्त्वनिर्णयहेतुः कथावाद इत्येतावतैव सदुपायजल्पव्यवच्छेदसिद्धेरुद्देशग्रहणं च व्यर्थं स्यादिति चेन्न। केवलशब्दस्य साक्षादर्थत्वात् । नहि कापि वितण्डा साक्षात्तत्त्वनिर्णयं करोति । किन्तु परपराभवद्वारैव । विवक्षित-केवलशब्दार्थस्य सदुपायजल्पेऽपि सत्त्वेन तद्व्यवच्छेदायोद्देशग्रहणस्यापि सार्थकत्वात् । ननु कथकगततत्त्वविज्ञानविवक्षया लक्षणे ख्याते वितण्डायां प्रसङ्ग एव नास्तीति केवलग्रहणमनर्थकमिति चेन्न । तथात्वे यदा विदित-तत्त्वावदुष्टमनसौ परप्रार्थितौ कथां कुरुतस्तस्यां वादकथायामव्याप्त्यापत्तेः । द्वयोस्तत्त्वविज्ञानितया तदुद्देशित्वाभावादिति निर्दुष्टमनसां कथा वाद इत्यपरं लक्षणम् । निर्दुष्टमनसश्च प्रकृतोक्तिका अविप्रलम्भका यथाकालस्फूर्तिका अनपेक्षकाः प्रमाणसिद्ध-सम्प्रत्यायिनश्चेत्यादयः । एवम्भूताश्च गुरुशिष्यादय एव प्रायेणेति त एव दर्शिताः । गुरुशिष्ययोरन्ययोः सखिसब्रह्मचारिणोरिति वादे जल्पादिवद् एक एव वादी प्रतिवादी चेति नियमो नास्तीति दर्शयितुं बहूनां वेत्युक्तम्। सखिसब्रह्मचार्यादीनामित्यर्थः । सद्भिरित्युच्यत इत्युक्त्या स्वोक्तलक्षणस्य प्रामाणिकत्वमुक्तम् ।

ननु वादस्य जयहेतुत्वमप्यस्तीति केवलतत्त्वविज्ञानहेतुत्वाभावादसम्भव इत्यत आह– **जय इति** ॥ तत्र वादे जय आर्थिको नतूद्देश्यः। लक्षणे च केवलं तत्त्वविज्ञानमुद्दिश्येत्युक्तमतो नासम्भव इत्यर्थः । वादे आर्थिकजये सति किं स्यादित्यत आह– **विजय इति** ॥ अन्येषां पराजितानां संवादं कुर्वतां जयिनः शिष्यता स्यात् । जयिनः पूजा चशब्देन गुरुत्वं च । यदा यदा जयस्तदा तदा पूजादिकार्यमेवेति भावेन सदेत्युक्तम् । ननु

विजये शिष्यताऽन्येषामित्याद्युक्तम् अयुक्तम् । वादिप्रतिवादिनोरन्यतरविजय-मात्रेण वादावसानाभावात् । तत्त्वनिर्णयार्थस्य वादस्य तस्मिन् सत्येवावसानात् । एकपराजयमात्रेण कथानिवृत्तौ पुनस्तस्यैवान्येषां वा साधनान्तरादिस्फुरणेन सन्देहावस्कन्दने तत्त्वनिर्णयाभावादित्यत आह– **पुनश्चेति** ॥ यद् यदि तेषां पराजितानाम् । उपलक्षणमेतत् । अन्येषां चेत्यपि ग्राह्यम् । तस्यापि संशय-स्यापि । ननु तेषामिति सामान्येनोक्तेः स्वयमेव संशयनिराकरणसमर्थस्यापि संशयवारणं जयिना कर्तव्यं किमित्यत आह– **अशक्तस्येति** ॥ अधिकादिति ल्यब्लोपनिमित्ता पञ्चमी । स्वतोऽधिकं विहाय । संशयनिवारणशक्तस्य संशयवारणं जयिना कर्तव्यमिति सम्बन्धः । तथाच निस्सन्दिग्धतया तेनैवान्येषां तत्त्वविनिर्णयेन कथावसानेऽन्येषां तच्छिष्यत्वादिकमिति भावः ।

भवतु यदा एकेनैवापरस्य तत्त्वनिर्णयस्तदा तस्य गुरुत्वमपरस्य शिष्यत्वम् । यदा तु एकमेव तत्त्वं परस्परं निर्णीयते तदा कथमित्यत आह– **अन्योन्येति** ॥ चेद् यदि । तदा ते सब्रह्मचारिणः एव स्युर्नतु गुरुशिष्यभावोपेता इत्यर्थः । ननु विप्रतिपन्नप्रमेये प्रतिवादिना प्रमाणे पृष्टे वादिना किं प्रमाणं वक्तव्यम् । यत्र यदस्ति तत्र तदेवेति चेत् सत्यम् । प्रमाणसम्प्लवे कथं किं सर्वमेवोतैकमेव तत्रापि किमित्यपेक्षयामाह– **पृष्टेनेति** ॥ शुभमेव मानं वक्तव्यं तस्यैव साध्यसाधकत्वादिति भावः ॥

**भाष्यम्**——

> **वेदाः सर्वे शुभं मानं सेतिहासपुराणकाः ॥**
> **सपञ्चरात्रमीमांसाः स्मृतयश्चाप्यनन्तरम् ।**
> **तदन्यदशुभं प्रोक्तं न प्रयोज्यं कथासु च ॥**
> **मिश्रमक्षानुमाने तु ग्राह्ये शब्दार्थनिर्णये ।**

**टिप्पणी**——

किं तच्छुभमशुभं च मानं यस्य वादे प्रयोगाप्रयोगनियम इत्यत आह– **वेदा इति** ॥ सपञ्चरात्रमीमांसाश्चेति चशब्दसम्बन्धः । सेतिहासपुराणकाः

सपञ्चरात्रमीमांसाश्च सर्वे वेदाः शुभं मानम्। अपौरुषेयत्वेन पुरुषदोषनिबन्धन-दोषशून्यत्वाद् इतिहासादीनां च इतिहासपुराणः पञ्चमो वेदानां वेद इति वेदेनैव वेदसमानतया गृहीतत्वात्। स्मृतयश्च तदनन्तरं शुभं मानं वेदसंवादित्वेनैव तस्य प्रामाण्यादित्यर्थः । अत्र सेतिहासपुराणकाः सपञ्चरात्रमीमांसा इति साहित्योक्त्या इतिहासादीनां वेदार्थनिर्णायकत्वमप्यस्तीति सूचितम्। यथोक्तम्– 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति । तदन्यस्तु दुरागमः । ननु प्रत्यक्षानुमाने किं शुभमशुभं वा। नाऽद्यः। वेदाद्यागमस्यैव शुभमानत्वोक्तेः। वेदादिवन्निर्दोषत्वनियमाभावाच्च । न द्वितीयः । तथा सति तस्याप्रमाणत्व-प्रसङ्गादित्यत आह– **मिश्रमिति**॥ तुशब्दः प्रत्यक्षानुमानयोरागमाद्विशेषद्योतकः। प्रत्यक्षानुमानं तु मिश्रं मानम् । वेदाद्यागममात्रस्य प्रामाण्यनियमवत् दुरागममात्रस्याप्रामाण्यनियमवच्च प्रत्यक्षानुमानमात्रस्य प्रामाण्याप्रामाण्य-नियमाभावादिति। ननु परश्चक्षुराद्येकप्रमाणके केवलानुमानविषये चार्थे प्रमाणं पृच्छेत्। तदाऽपरेण किन्तूष्णीमासितव्यं किं वा प्रत्यक्षादिकमेव वक्तव्यम्। आद्ये साध्यासिद्धिः। द्वितीये शुभमेव मानं वक्तव्यमिति नियमभङ्गः । वेदाद्यागमस्यैव शुभमानत्वोक्तेरित्यत आह– **अक्षानुमाने तु ग्राह्ये इति**॥ तुशब्दश्चशब्दार्थः । ग्राह्ये तदेकप्रमाणके प्रमाणप्रश्ने । तत्साधकत्वेनेति शेषः । नचोक्तविरोधः । प्रमाणसम्प्लव एवाऽगमनियमस्योक्तत्वादिति भावः। न केवलमेतदर्थमेव प्रत्यक्षानुमाने ग्राह्ये। किन्तु साध्यसिद्ध्यर्थमागमे वादिना प्रयुक्ते प्रतिवादिना च तस्यान्यार्थेऽभिहिते वादिनाऽपि मदुक्त एवार्थो न त्वदुक्त इत्युक्ते वाक्यार्थविप्रतिपत्तौ सत्यां तन्निर्णये चेत्याशयेनोक्तम्– **शब्दार्थनिर्णय इति**॥ चशब्दार्थकतुशब्दस्यात्रापि सम्बन्धः। एतदभिप्रायेणैव प्राक् प्रथममित्युक्तम् ।

**भाष्यम्—**

**अदुष्टमिन्द्रियं त्वक्षमुपपत्तिस्तथाऽनुमा॥**
**अनुमैव त्वभावाख्यो ह्यर्थापत्त्युपमे तथा।**

**उपपत्तिभेदा यत्तेऽपि वाक्यमेवाऽगमः शुभम् ॥**
**तत्त्वनिर्णयवैलोम्यं संवादो वा विरोधिते।**
**पराजय इति प्रोक्तः समः सर्वकथासु च ॥**

**टिप्पणी**—

प्रकृताक्षानुमानयोर्लक्षणमाह– **अदुष्टमिति** ॥ येनोपहतमिन्द्रियादिकं ज्ञानं न जनयति विपरीतज्ञानं चोत्पादयति तद्रहितमदुष्टम्। इन्द्रियमिति ज्ञानेन्द्रियमेव गृह्यते प्रमाणप्रकरणत्वात्।

तुशब्दो विशेषार्थः। सेतिकर्तव्यताकं कारकं करणम्। करणविशेषश्चात्र प्रत्यक्षादिकमेवेति। यद्यपि प्रत्यक्षस्यैव लक्षणं वक्तव्यं तथापि अत्र करणधर्मिणः प्राधान्यात् प्रत्यक्षधर्म्यक्षमेव निरूपितम्। पूर्वं तु व्यापारप्राधान्यविवक्षया निर्दोषेन्द्रियसंयोग इत्युक्तम्। तथा अदुष्टोपपत्तिरनुमा। ननु अभावार्थापत्यादीनामपि मिश्रप्रमाणान्तराणां सत्वात्कथमक्षानुमाने मिश्रं मानमित्युक्तमित्यत आह– **अनुमैवेति** ॥ अभावाख्यस्त्विति तुशब्दसम्बन्धः। सच प्रत्यक्षाद्यन्तर्भूताऽभाव-प्रमाणापेक्षया विशेषद्योतकः। यद्वा तुशब्दश्चशब्दार्थः। तेन प्रत्यक्षादिकं समुच्चिनोति। एवकारः पृथक् प्रमाणव्यावर्तकः। तथाऽनुमैवेत्यर्थः। अभाव-प्रमाणादेरनुमान एवान्तर्भावः कुत इत्यत आह– **उपपत्तीति** ॥ वादिभिः पृथक् प्रमाणत्वेनाङ्गीकृता अपि ते अभावप्रमाणादयो यद्यस्मादुपपत्तिभेदा उपपत्तिविशेषाः व्याप्तिमपेक्ष्यार्थगमका इति यावत्। तस्मादनुमैवेति सम्बन्धः। भावानुपलब्धिर्ह्यभावप्रमाणमङ्गीक्रियते साऽप्यर्थे लिङ्गमेव न पृथक् प्रमाणं कुतः। नह्यनुपलब्धिमात्रमभावगमकमङ्गीक्रियते। किन्तु योग्यानुपलब्धिः, तत्र वक्तव्यं योग्यस्यानुपलब्धिरिति कस्मादुच्यत इति। अनुपलब्धिमात्रस्य व्यभिचारादिति चेत्। तत्किं योग्यानुपलब्धिरभावव्यभिचारिणी। बाढमिति चेद्, हन्त तर्हि व्याप्तिसापेक्षार्थं गमयतीत्यङ्गीकृतमित्यनुमानत्वमेव। अर्था-पत्तिर्हि अन्यथानुपपत्तिसापेक्षा। सा च केनचिद् विना कस्यचिदसम्भवः।

असम्भवश्च न तावदनुत्पत्तिः । बहिर्भावादिनापि गृहाभावादेरजन्यत्वात् । अतोऽनवस्थानमेवासम्भव इति वाच्यं तस्य च व्याप्त्यपेक्षा सर्वथाऽङ्गीकार्या । केनचिद् विना कस्यचिदनवस्थानस्य तयोर्व्याप्तिं विनाऽनुपपत्तेः । ततश्चार्थापत्ति-रप्यनुमानमेव । यो यद्‌गतसादृश्यप्रतियोगी स तत्सदृशः । योऽगोत्वे सति गोसदृशः 'असौ गवयशब्दवाच्य इति व्याप्तिसापेक्षतयाऽर्थगमकत्वाद् उपमानस्याप्यनुमानत्वमेवेति । आगमलक्षणमाह– **वाक्यमेवेति** ।। शुभं निर्दुष्टम् । वाक्यमेवागमः । चेष्टाव्यावृत्त्यर्थमेवकारः । तेन चेष्टासङ्ग्रहाय समयबलेन सम्यक् परोक्षानुभवसाधनमागम इति भासर्वज्ञोक्तं निरस्तम् । आगमशब्दस्य वाक्य एव रूढत्वात् चेष्टायाश्चानुमानेऽन्तर्भावात् । विजये शिष्यताऽन्येषामिति वादे पराजितानां शिष्यत्वमुक्तम् । तत्र कः पराजयहेतुरित्यतः प्रसङ्गात् सर्वकथासु पराजयनिमित्तमाह– **तत्त्वनिर्णयेति** ।। तत्त्वनिर्णयवैलोम्यं वादिप्रतिवादिभ्यामभिलपितस्य तत्त्वनिर्णयस्य यावद् वैलोम्यं विरुद्धवचनमावरणं वा तत्सर्वं पराजयः पराजयहेतुर्वाद इति शेषः । विरोधिते संवादः पराजयः पराजयहेतुः । जल्पवितण्डयोरिति शेषः । वाशब्दो व्यवस्थितविभाषायाम् । अत्र संवाद इत्येव वक्तव्ये विरोधिते संवाद इति वचनं संवादलक्षणकथनार्थम् । विरोधिते विप्रतिपन्ने प्रमेये संवादोऽङ्गीकारः संवाद इति । उपलक्षणमेतत् । विरोधासङ्गत्यादिकमपि ग्राह्यम् । परपरिगणितनिग्रहस्थानेषु प्रथमं प्रतिज्ञाहान्य-न्तर्भावाधिकरणत्वेन संवादस्य स्ववचनेन ग्रहणम् । इति प्रोक्तः प्रामाणिकैरिति शेषः । तेन परोक्तमाश्रयासिद्ध्यादीनां पराजयहेतुत्वमसदित्युक्तं भवति । 'तत्त्वनिर्णयवैलोम्यं वादे साक्षात्पराजयः । विरोधासङ्गतिन्यूनतूष्णीम्भावादिकैः जितः । भवेज्जल्पः' इति कथालक्षणानुसारेणैवं व्याख्यातम् । यद्वा उद्‌ग्रन्थानुसारेण तत्त्वनिर्णयवैलोम्यशब्देनार्थदोषयोर्विरोधासङ्गत्योः तत्त्वनिर्णयविरोधिलाभादिकं यथा जल्पवितण्डयोरसाधारणं न तथा पराजय इत्याह– **सम इति** ।। चशब्द अभिव्याप्त्यर्थकापिशब्दार्थः ।

भाष्यम्—

तत्त्वनिर्णयवैलोम्ये दण्ड्या वादकथास्वपि।
गुरुणैव त्ववश्यानां राजा दण्डं प्रयोजयेत् ॥
गुरुदण्डस्तु वाचा स्याद्राजदण्डोऽर्थदेहतः।
गुरुदण्डोऽप्यर्थतः स्यात्संवादे व्रततोऽपि वा ॥
राजदण्डो बलाच्च स्याद्दोषस्य गुरुलाघवात्।
संवादे दण्ड्यता नास्ति जल्पादौ च कथञ्चन ॥
तत्त्वविप्लवकर्तारं संसत्सु च पराजितम् ।
छित्वा जिह्वां च काकाङ्कं राजा राज्याद् विवासयेत् ॥
अन्यसाम्यमभेदो वा नीचता वा कुतश्चन।
विष्णोः श्रीपूर्वकाणां च व्यत्यासो गुणदोषतः ॥
तद्भक्तेरन्यधर्मत्वं पञ्चैते तत्त्वविप्लवाः।
तत्त्वविप्लावकं शूद्रं वैश्यं क्षत्रियमेव वा ॥
हन्यादेवाविचारेण विप्रजिह्वां तथोद्धरेत्।

टिप्पणी—

ननु वादादिकथासु तत्त्वनिर्णयवैलोम्यादिकं प्राप्तवतः किं कार्यमित्यत आह— **तत्त्वनिर्णयेति** ॥ तत्त्वनिर्णयवैलोम्ये प्राप्तेऽपि यदि मतिमान् च्छलादिना तत्र संवादं न करोति तदा वादकथास्वपि दण्ड्यः किमु वक्तव्यं जल्पवितण्डयोर्विरोधादिनिग्रहस्थानं प्राप्ते न संवादाकरणे स दण्ड्य इतीत्यर्थः । केन दण्ड्य इत्यत आह— **गुरुणैवेति** ॥ यदि वादकथासु तत्त्वनिर्णयवैलोम्यं प्राप्तो गुरुवश्यः संवादं न करोति तदा गुरुणैव दण्ड्यः । नतु राज्ञा। उपलक्षणमेतत् । जल्पवितण्डयोः प्राश्निकादिनैवोक्तविधो वादी प्रतिवादी वा दण्ड्य इत्यपि ग्राह्यम्। तदवश्यानां कथमित्यत आह— **अवश्यानामिति** ॥ वादकथायां सभापतेरनङ्गत्वेऽपि गुरुणा राजानं प्रत्युक्त्वा स्वावश्यानां तेन दण्डः कारयितव्य इति भावः । यथोक्तम् । गुरुरात्मवतां शास्ता शास्ता

राजा दुरात्मनामिति । गुरुदण्डो राजदण्डश्च कीदृश इत्यत आह– **गुरुदण्ड इति** ।। अर्थदेहतः । अर्थापहारदेहताडनादिना । वाचैव गुरुदण्ड इति न नियम इत्याह– **गुरुदण्डोऽपीति** ।। न केवलं राजदण्डोऽर्थतः । किन्तु गुरोरर्थग्रहणविषये शिष्यस्य संवादे गुरुदण्डोऽपीत्यपिशब्दार्थः । न केवलं गुरुदण्डो वाचा किन्तु अर्थतोऽपीति वा सम्बन्धः । व्रततः उपवासादिलक्षणव्रतत इत्यर्थः । अर्थतो गुरुदण्डे यथा संवादापेक्षानियमस्तथा राजदण्डे न संवादापेक्षानियम इत्याह– **राजदण्ड इति** ।। चशब्दः संवादसमुच्चायकः । अल्पमात्रे दोषे कृते किं सर्वोऽप्युक्तविधो दण्डः कर्तव्यः नेत्याह– **दोषस्येति** ।। तत्त्वनिर्णयवैलोम्यादिकं प्राप्तो यदि संवादं करोति तदा किं कार्यमित्यत आह– **संवाद इति** ।। आदिपदेन वितण्डाग्रहणम् । चशब्दः किमु वादकथायामिति कैमुत्यद्योतकापिशब्दार्थः । वितण्डायां यदि वादी पराजितो संवादयित्वा तत्त्वविप्लवं करोति तस्य सभापतिना कर्तव्यविशेषमाह– **तत्त्वविप्लवेति** ।। काकाङ्कं कृत्वेति शेषः । कस्तत्त्वविप्लव इति जिज्ञासायामाह– **अन्यसाम्यमिति** ।। तद्भक्तेर्विष्णुभक्तेः सकाशात् । अन्यस्य इतरदेवताभजनादेर्धर्मत्वमित्यर्थः । तत्त्वविप्लवकर्तृणां सर्वेषां वर्णानामप्युक्त एव दण्डः किमिति जिज्ञासायां विशेषमाह– **तत्त्वविप्लावकमिति** ।।

**भाष्यम्**—

**स्वसिद्धान्ते प्रमाणं च परसिद्धान्तदूषणम् ।।**
**वक्तव्यमुभयं वादे जल्पे चेति सतां मतम् ।**
**अवाक्यदूषणं तर्कादागमादेव साधनम् ।।**
**वाक्यतात्पर्यविज्ञस्यै मानमन्यत्र चान्यथा ।**

**टिप्पणी**—

एवं प्रसक्तायां वितण्डायां मूलपक्षग्रहापेतेति लक्षणं वक्तुं तदुपयुक्तमाह– **स्वसिद्धान्त इति** ।। उभाभ्यामिति शेषः । ननु वादे परसिद्धान्तदूषणं

केन कार्यं स्वसिद्धान्ते च किं प्रमाणं वक्तव्यमित्यत आह– **अवाक्येति** ॥ परसिद्धान्तदूषणं हि परोपन्यस्तप्रमाणदूषणं परोपन्यस्तं च प्रमाणं यदि वाक्यरूपं तदा तस्यान्यार्थत्वमेव वक्तव्यं नतु तर्कात् । वाक्याप्रामाण्यलक्षणं दूषणम् । वेदादिरूपवाक्यस्यापौरुषेयत्वादिना प्रामाण्यनिश्चयात् । यथोक्तम्– अन्यार्थ एवागमस्य वक्तव्यः प्रतिवादिनेति । वाक्यभिन्नमनुमानादिकं चेत्परोपन्यस्तं तदा तस्य दूषणं आभासत्वव्युत्पादनं तर्कात् प्रतिपक्षानुमानादे-रित्यर्थः । यद्यपि 'पृष्टेन प्रथमं मानं वक्तव्यं वादिना शुभम्' इत्युक्तं तथापि तत्रावधारणाभावादत्र च तत्सद्भावान्न पुनरुक्तिः प्रमाणसम्प्लव एवेदं द्रष्टव्यम् । तर्हि अवाक्यदूषणं तर्कादित्यनुपपन्नम् । वादिना स्वपक्षस्थापनाय वाक्यभिन्नप्रमाणस्यावक्तव्यत्वेन प्रतिवादिनस्तद्दूषणप्रसक्तेरेवाभावादित्यत आह– **वाक्यतात्पर्येति** ॥ ननु प्रमाणसम्प्लवे यदि आगमादेव साधनं कर्तव्यं तर्हि तत्र तर्कादेः सर्वथोपयोगः किन्नास्तीत्यत आह– **वाक्यतात्पर्येति** ॥ यदा वादिना प्रतिवादिना वा स्वपक्षस्थापनायाऽगमेऽभिहिते तस्य परेणान्यार्थत्वोक्तौ त्वदुक्त एवार्थो न मदुक्त इत्यत्र किं नियामकमित्याशङ्कायां स्वस्वाभिमतार्थे वाक्यस्य तात्पर्यं ज्ञापयितुम् अन्यद्वाक्यभिन्नमुपपत्त्यादिरूपं मानमिष्यते । तद्दूषणं च तर्कादिना कर्तव्यम् । नचान्यथा आदावेव विप्रतिपन्नप्रमेये अन्यन्मानं नैव वक्तव्यमित्यर्थः ।

**भाष्यम्—**

> **सतोरेव यदा स्पर्धा गुणतोऽर्थार्थमेव वा ॥**
>
> **तदा जल्पः समुद्दिष्टस्तत्र विद्यां परीक्षयेत् ।**
>
> **विद्यापरीक्षापूर्वा हि सत्कथा जल्प उच्यते ॥**

**टिप्पणी—**

नन्वेवं वादजल्पयोर्भेदो न स्यादित्यतो जल्पलक्षणमाह– **सतोरेवेति** ॥ यदा सतोस्तत्त्वज्ञानयोग्ययोः स्वभावतः स्पर्धाशून्ययोः । गुणतो योग्यताधिक्यादिगुणैः

स्पर्धैव स्पर्धानिमित्तकपरपराभवमात्रोद्देशस्तदा या कथा स जल्पः समुद्दिष्टः । अर्थार्थमेव अर्थोद्देशेनैव वा या कथा स जल्प इति योज्यम् । अर्थार्थमिति ख्यात्याद्युपलक्षणम् । एवशब्देन तत्त्वनिर्णयव्यवच्छेदः । ननु परपराभवार्थ-ख्यात्यादीनि समस्तानि व्यस्तानि वोद्देश्यानि । नाऽद्यः । एकैकोद्देशेन प्रवृत्तकथाऽव्यापनात् । न द्वितीयः । परस्पराव्याप्तेः । मैवम् । तत्त्वनिर्णयातिरिक्तफलोद्देशेन सतोः कथा जल्प इति लक्षणार्थत्वात् । यथोक्तम् 'तत्त्वाप्रकाश एवैको वितण्डाजल्पयोः फलम्' (ब्र.सू.अनु. २.१.२) इति । फलान्तरं च परपराभवादिकमिति तद्ग्रहणम् । सतोः कथावादोऽपि भवतीति तद्व्युदासाय स्पर्धाद्युक्तिः । वादविशेषोऽप्यानुषङ्गिकख्यात्यादिहेतुर्भवतीति तद्व्युदासायोद्देशग्रहणम् । वितण्डाव्यावृत्त्यर्थं सतोरित्युक्तम् । किञ्च वादे गुरुशिष्यादयोऽसमानविद्या अपि अधिक्रियन्ते । तत्त्वनिर्णयार्थित्वात् । जल्पे तु सम्भावितसमान-विद्ययोरेवाधिकारः । 'ययोरेव समं वित्तं ययोरेव समं श्रुतम् । तयोर्विवाहो वादश्च नोत्तमाधमयोः क्वचिद्' (भ.म.पु.) इति स्मरणात् । वादो जल्पवितण्डालक्षणः । अन्यथा अत्यन्ताप्रकृष्टोऽपि उत्कृष्टोऽपि उत्कृष्टतमेन वैयात्यात् घटमानो यदि दैवात्तमभिभावयेत् । यदि वा वृथा ख्यातिं लभेत तदा प्राश्निकादीनामज्ञत्वं प्रत्यवायश्च स्यात् । 'अपूज्यः पूज्यते यत्र' इत्यादिवचनात् । एवं च वादाज्जल्पस्य भेदसिद्धिरिति वक्तुं तत्राऽदौ पर-बुद्धेरप्रत्यक्षत्वेन विद्यासाम्यादेर्ज्ञातुमशक्यत्वात्कथं विद्यासाम्यादिनिश्चय इत्यत आह– **तत्रेति** ॥ तत्र जल्पे । तयोर्जल्पार्थिनोर्विद्यां परीक्षयेदित्यर्थः । जल्पलक्षणपर्यालोचनयाऽपि तत्र विद्यापरीक्षणमावश्यकमिति भावेन तस्य लक्षणान्तरमाह– **विद्येति** ॥ विद्यापरीक्षापूर्वा कारणभूता यस्याः सा तथोक्ता । हिशब्दो हेतौ । तस्मात्तत्र विद्यां परीक्षयेदिति सम्बन्धः । सतोः कथा सत्कथा । वादव्यावृत्त्यर्थं विद्यापरीक्षापूर्वेति वितण्डाव्यावृत्त्यर्थं सतो कथेति । उच्यते प्रामाणिकैरित्यनेन जल्पनिराकरणोपपत्तेराभासत्वमभिप्रैति ।

भाष्यम्—

**सर्वज्ञा वैष्णवाः पञ्च सप्त वोभयसम्मताः ।**
**अधिका वा यथालब्धाः प्राश्निकास्तु परीक्षकाः ॥**
**उभयोः प्रश्नकर्तृत्वात् प्राश्निका इति कीर्तिताः ।**
**तदभावे गुणोद्रेकं दर्शयेतां पृथग्जने ।**

टिप्पणी—

'विद्या परीक्षयेद्' इत्युक्तम् । तत्र के परीक्षकाः किंलक्षणकाः कियन्तश्चेति जिज्ञासायामाह– **सर्वज्ञा इति** ॥ परीक्षकास्तु प्राश्निका इति सम्बन्धः । सर्वज्ञा इति वैष्णवा इति प्राश्निकानां लक्षणम् । सर्वज्ञशब्देन वादिप्रतिवादि-दर्शनस्य कथोपयुक्तव्याकरणादेश्च सङ्ग्रहः । तदज्ञत्वेऽपसिद्धान्ताद्युद्भावनेन निर्णयो न स्यात् । वैष्णवा विष्णुभक्ताः । अन्यथा कथकसदसद्भावाविवेकेन कथाव्यवस्थापनाद्ययोगात् । रागद्वेषविहीना इत्यपि ग्राह्यम् । रागित्वेऽसन्तमपि पक्षं सन्तं ब्रूयुः । द्वेषित्वे सन्तमप्यसन्तं ब्रूयुरिति । अत एवोभयसम्मताः त्रय इत्यपि ग्राह्यम् । यथा लब्धा अधिका विषमसङ्ख्याकाः विषमसङ्ख्याकत्वे हि तेषामेव परस्परविरोधे बहूनां संवादेन निर्णयः स्यात् । यथोक्तं 'द्वैधे बहूनां वचनम्' इति । उपलक्षणमेतत् । 'अशेषसंशयच्छेत्ता निस्संशय उदारधीः । एकोऽपि प्राश्निको ज्ञेयः' (कथा.ल. ६) । परीक्षिकेषु प्राश्निकशब्दं निर्वक्ति– **उभयोरिति** ॥ वादिप्रतिवादिनोः उभौ प्रति इति यावत् । प्रश्नशब्दात्तत्र नियुक्त इत्यर्थे ठकि कृते तस्येकादेशे किति चेति वृद्धौ यस्येति चेति अकारलोपे प्राश्निका इति रूपं निष्पन्नम् । ननूक्तविधप्राश्निकानामभावे को दोष इत्यत आह– **तदभाव इति** ॥ उक्तप्राश्निकाभावे वादिप्रतिवादिनौ पृथग्जने मूर्खेऽविद्यमानमपि गुणोद्रेकं दर्शयेताम् । ततश्च विद्यासाम्याद्यनिश्चयेन जल्पप्रवृत्तिरेव न स्यादित्यर्थः ।

**भाष्यम्—**

**विद्यासाम्ये कथा कार्या ह्यन्यथैकपराजयः ॥**
**विद्योनो दण्ड्य एव स्याद् यदि नोच्चस्य शिष्यताम् ।**
**व्रजेत् पश्चाद् यथा वाद एवं जल्पः प्रकीर्तितः ॥**
**अर्थनिर्णयहेतुत्वाद् वादे प्रश्नो जयेऽपि तु ।**
**न जल्पे तु पुनः प्रश्नः सभ्यानुज्ञां विना भवेत् ॥**
**स्पर्धा सतां वितण्डा स्यात् तत्त्वविप्लावकैर्यदा ।**
**मूलपक्षग्रहापेता वितण्डा कविभिर्मता ॥**

**टिप्पणी—**

एवं यदर्थं विद्यां परीक्षयेदित्युक्तं तदाह– **विद्यासाम्य इति** ॥ कथा जल्पलक्षणा । अन्यथा विद्यावैषम्ये एकस्य विद्याहीनस्य पराजयः विद्याहीनः पराजितोऽपि यद्युच्चेन सह प्रतिवादित्वेच्छया तच्छिष्यत्वं न प्राप्नुयात् तदा तस्य कर्तव्यमाह– **विद्योन इति** ॥ यथा वादे तत्त्वनिर्णयोद्देशेन प्रवृत्ते विद्योनो यद्युच्चस्य शिष्यतां न व्रजेत् । तदा दण्ड्यस्तथाऽत्रापि । पश्चात् परीक्षानन्तरं निश्चितविद्योनो यद्युच्चस्य शिष्यतां न व्रजेत्तदा दण्ड्य इति सम्बन्धः । विद्यासाम्ये कथा कार्येत्युक्तं ततः किमित्यतो वादाज्जल्पस्य भेदसिद्धिरिति भावेनाह– **एवमिति** ॥ जल्पः एवं सम्भावितसमानविद्याधिकारिकः प्रकीर्तितः । वादस्तु नैवम् । अतश्च तयोर्भेदसिद्धिरिति भावः । वादात् जल्पस्य भेदकान्तरमाह– **अर्थेति** ॥ वादे त्विति तुशब्दसम्बन्धः । वादे एकस्य जयोऽपि पराजितेन पुनः प्रश्नः कर्तव्यः । तत्त्वनिर्णयहेतुत्वाद् वादस्य एकपराजयेऽपि पुनस्तस्यैव साधनान्तरादिस्फुरणेन सन्देहावस्कन्दनात् तत्त्वनिर्णयस्यानुत्पन्नत्वादिति भावः । जय इत्युत्तरत्रापि सम्बद्ध्यते । जयैकार्थत्वाज्जल्पस्य तस्मिन् जाते प्रश्नस्य वैयर्थ्यादिति भावः । ननु जये सति न जल्पे तु पुनः प्रश्न इत्युक्तम् अयुक्तम् । जल्पे पराजितयापि वाचक्नव्या याज्ञवल्क्यं प्रति पुनः प्रश्नस्य कृतत्वादित्यत आह– **सभ्यानुज्ञां**

**विनेति** ।। प्रकृते च सभ्यानुज्ञाऽस्त्येव पृच्छ गार्गीति ब्राह्मणैरुक्तत्वात् । अत एव पूर्वं विजिगीषुकथात्वाद् ब्राह्मणानुज्ञयेत्युक्तं वितण्डालक्षणमाह– **स्पर्धेति** ।। यदा सतां तत्त्वविप्लावकैः स्पर्धा तदा सा कथा वितण्डा। जाताविदं बहुवचनम् । जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामित्युक्तेः । नन्वेवं जल्पवितण्डयोः को भेदः । उभयोरपि स्पर्धापूर्वकत्वाविशेषात् । कर्तृभेदेन कथाभेदेऽतिप्रसङ्गादित्यतः स्वसिद्धान्ते प्रमाणं चेत्यादि यदर्थमुक्तं तल्लक्षणान्तरमाह– **मूलपक्षेति** ।। स्वपक्षस्थापनहीनेत्यर्थः। कथेति शेषः । कविभिर्मतेति तस्य प्रामाणिकत्वमुक्तम् ।

**भाष्यम्—**

**सतामेव वितण्डा स्यादसतां जल्प एव तु ।**
**एवं जल्प वितण्डेति ह्युभयोः सहिता कथा ।।**
**अप्रकाश्यः स्वपक्षो हि पाषण्डानां यतस्ततः ।**
**अग्रहेणैव पक्षस्य तर्कागमबलेन तु ।।**
**दूषयेदेव पाषण्डांस्तत्त्वविप्लावकान् सदा ।**
**तत्पक्षाणां निषेध्यत्वात् तेषां पक्षग्रहो भवेत् ।।**
**विष्णुभक्त्यन्यधर्माख्यस्तत्त्वविप्लव एव तु ।**
**बौद्धादीनां यतस्सर्वे तत्त्वविप्लावकास्ततः ।।**
**सर्वनास्तिकवादी वा स्वमनीषामतोऽपि वा ।**
**तस्यापि पक्षं संश्रित्य दूषयेद् वाक्ययुक्तितः ।।**

**टिप्पणी—**

ननु वादिप्रतिवादिनोरुभयोरपि वितण्डायां स्वपक्षस्थापनाहीनत्वमयुक्तम् । दूष्यपक्षाभावेन वितण्डाया एवाप्रवृत्तेः । अत अन्यतरस्यैव तदिति स्वीकर्तव्यम् । तत् कस्येत्यत आह– **सतामेवेति** ।। वितण्डा परपक्षदूषणमित्यर्थः । वितण्डैवेति प्रथमैवकारसम्बन्धः । असतां त्विति तुशब्दसम्बन्धः । जल्पः स्वपक्षसाधन-परपक्षदूषणात्मकः । एवमसङ्करेण कथामार्गत्रयं प्रतिपादितम् ।

तत्र यदुक्तं गौडनैयायिकेन जल्पवितण्डेति कथान्तरमस्तीति तदसत्। वितण्डाया एवोक्तविवक्षया जल्पवितण्डत्वेन तदतिरिक्तजल्पवितण्डायां मानाभावादिति भावेनाह– **एवमिति** ॥ उभयोरिति तृतीयार्थे षष्ठी । कथावितण्डैव हि यस्मादेवमुक्तप्रकारेण जल्पो वितण्डेत्युभाभ्यां सहिता तस्मादेव जल्पवितण्डेत्युच्यते नतु जल्पवितण्डा नाम कथान्तरमस्तीति भावः । सतां परपक्षदूषणात्मका वितण्डा असतां स्वपरपक्षस्थापनदूषणात्मको जल्प एवेत्युक्तम् । तत्रैवं नियमे किं कारणमित्यत आह– **अप्रकाश्य इति** ॥ सद्भिरिति शेषः । तुशब्दश्चशब्दार्थः। तेन छलादिसमुच्चयः। दूषयेदेव सज्जनः। तत्पक्षाणामसत्पक्षाणां तेषामसताम् । ननु के तत्त्वविप्लावकाः बौद्धादय एवेति चेन्न तेषां प्रत्येकमुक्तपञ्चविधतत्त्वविप्लवकारित्वाभावात्। नचैकैकस्यैकैकस्तत्त्वविप्लवोऽस्तीति ते तत्त्वविप्लावका इति वाच्यम् । अनुगततत्त्वविप्लवाभावेन तत्त्वविप्लावक-स्वरूपनिर्धारणानुपपत्तेरित्यत आह– **विष्णुभक्तीति** ॥ तत्त्वविप्लवस्तु विष्णुभक्त्यन्य एव यतो बौद्धादीनां सर्वेषां साधारणस्ततस्ते सर्वे तत्त्वविप्लावका इति सम्बन्धः । तर्कागमबलेन दूषयेदित्युक्तम् । नायं नियम इत्याह– **सर्वेति** ॥ यद्वा तर्कागमबलेनापि किं स्वसिद्धान्तानुसारेणैव दूषणीयं नेत्याह– **सर्वेति** ॥

**भाष्यम्——**

**यस्य नैवाऽगमो मानं तं ब्रूयादागमाश्रयः ।**
**धर्मार्थोऽथ वृथैवायं तव पक्षस्य सङ्ग्रहः ॥**
**धर्मार्थश्चेन्न धर्मो हि शक्यो द्रष्टुं विनाऽगमात् ।**
**यथाऽनुमीयते हिंसा पापहेतुस्तथैव हि ॥**
**धर्महेतुत्वमप्यस्या अनुमातुं सुशक्यते ।**
**वृथा पक्षं वृथा हन्याद् यदि कश्चित् किमुत्तरम् ॥**
**इत्यशक्तौ सतां सर्वे सम्भूयापि निवारणम् ।**
**कुर्युरेवासतां सन्तस्तत्त्वविप्लाविनां जये ॥**

**येषां विष्णोः समं किञ्चिदधिकं वा नतु क्वचित् ।**
**क्षराक्षराभ्यां भिन्नं च विष्णुं पश्यन्ति ये सदा ॥**
**तारतम्यविदः सर्वजीवानां प्रकृतेरपि ।**
**भगवद्धर्मिणो नित्यं ते सन्तः परिकीर्तिताः ॥**
**पराजितेष्वसत्सूक्तं राजा दण्डं प्रपातयेत् ।**
**जितेषु सत्स्वसद्भिस्तु राजोदासीनतां व्रजेत् ॥**
**यावदेषां विजेता स्यादथ दण्डं निपातयेत् ॥ इत्यादि ब्रह्मतर्के ॥**

**टिप्पणी—**

नन्वागमाप्रामाण्यवादिनः धर्मप्रयोजनका बौद्धादयः कथमागमेन दूषणीयाः । प्रतिवादिना ह्यागमेन दूषणाभिधाने तेन तदप्रामाण्यमेवाभिधीयते इत्यतस्तं प्रत्यागमं प्रयुज्य तत्प्रामाण्यं साधनीयमिति भावेनाह– **यस्येति** ॥ आगमाश्रयः आगमप्रामाण्यवादी । किं ब्रूयादित्यत आह– **धर्मार्थ इति** ॥ अयं तव पक्षस्य सिद्धान्तस्य सङ्ग्रहः किं धर्मार्थः धर्मप्रयोजनकः अथ वृथैव प्रयोजनशून्य इत्यर्थः । धनवनितादिरूपलौकिकार्थस्यान्यत एव सिद्धेः शास्त्रप्रयोजनत्वाभावान्न स पक्षो विकल्पितः । आद्यमनूद्य दूषयति– **धर्मार्थश्चेदिति** ॥ तर्ह्यागम-प्रामाण्यसिद्धिरिति शेषः । कथमित्यत आह– **न धर्मो हीति** ॥ शास्त्रस्य धर्मार्थत्वं वदता धर्मसिद्धिः केनचित्प्रमाणेनाभ्युपेया । मेयसिद्धेः मानाधीनत्वात् । नचाऽगमातिरिक्तप्रमाणेन तत्सिद्धिरित्यागमप्रामाण्यमवश्यमभ्युपेयमित्यर्थः । ननु यद्यपि न धर्मसिद्धिः प्रत्यक्षात् तस्यातीन्द्रियत्वात् । योगिप्रत्यक्षस्यास्मान् प्रत्यनिश्चायकत्वात् । तथाप्यनुमानाद् भविष्यति । देवदत्तशरीरादिकं देवदत्त-विशेषगुणजन्यं कार्यत्वे सति देवदत्तस्य भोगहेतुत्वाद् देवदत्तभोगहेतु-तत्प्रयत्नजन्यस्रक्चन्दनवदिति चेन्न । इदमनुमानं प्रमाणान्तरसहकृतं केवलमेव वा । नाद्यः । प्रमाणान्तरस्य प्रत्यक्षस्याभावात् । आगमस्य प्रामाण्यानङ्गीकारात् । अङ्गीकारे विवादपर्यवसानात् । न द्वितीयः । केवलानुमानस्य सर्वस्य प्रतिपक्षग्रस्तत्वेनाप्रमाणत्वात् । अत्रापि देवदत्तशरीरं देवदत्तविशेषगुणजन्यं

न भवति शरीरत्वाद् यज्ञदत्तशरीरवदिति सत्प्रतिपक्षत्वाच्च । ननु यागीयहिंसा पापहेतुः हिंसात्वाद् बाह्यहिंसावदित्यनुमानस्य प्रमाणान्तरासहकारिणाऽपि प्रमाणत्वात्कथमेवमुच्यत इत्यतस्तत्रापि सत्प्रतिपक्षत्वमाह– **यथेति** ।। हिंसा विहितहिंसा हिंसात्वेनेति शेषः । धर्महेतुत्वं पापहेतुत्वाभावः । अनिषिद्धत्वेनेति शेषः । वृथैवेति द्वितीयपक्षं दूषयति– **वृथा पक्षमिति** ।। वृथा व्यर्थः पक्षो यस्य सः वृथापक्षः । तं त्वां यदि कश्चिद्धन्यात् तदा तं प्रति तव किमुत्तरम् । मां किमिति हंसीत्युत्तरमिति चेत् । तर्हि तेनापि त्वं यथा वृथापक्षं गृह्णासि तथैवाहमपि त्वां वृथैव हन्यामित्युक्ते किमुत्तरमित्यर्थः । इति ब्रूयादिति पूर्वेण सम्बन्धः । ननु वितण्डायां सतः प्रतिवादिनो वाद्युक्त-साधनदूषणादौ पुरस्फूर्त्याद्यभावेनाशक्तौ किं कार्यमित्यत आह– **अशक्ताविति** ।। तत्त्वविप्लाविनां जये सतां प्रतिवादिभूतानामशक्तौ सत्यां सन्तः प्राश्निकादयः सर्वे सम्भूयापि असतां निवारणं कुर्युरिति सम्बन्धः । तत्त्वविप्लाविनां निवारकाः सन्तः कीदृशा इत्यपेक्षायां पूर्वोक्ततत्त्वविप्लवविरोधिगुणवन्त इत्याह– **येषामिति** ।। मतमिति शेषः । असत्सु पराजितेषु किं कार्यमित्यत आह– **पराजितेष्विति** ।। उक्तं 'च्छित्वा जिह्वां च' इत्यादि प्रागुक्तम् ।सत्सु पराजितेषु किं कार्यमित्यत आह– **जितेष्विति** ।। सन् प्रतिवादी स्वयमेवान्यैः सम्भूय वा एषामसतां विजेता यावत्स्यात्तावदुदासीनतां व्रजेदिति सम्बन्धः । अथ सतां पराजयानन्तरम् ।। १ ।।

उपनिषत्—

[सर्वलोकाधारा श्रीः]

**सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ।। २ ।।**

भाष्यम्—

बाणस्त्वयोमयः प्रोक्तः शरो नालोऽस्य कीर्तितः ॥ इत्यभिधानम् ॥
कर्मारस्तु तदा बाणं तीक्ष्णमञ्जलिकाभिधम् ।
सन्दधानः शरे यान्तं राजानं न ददर्श ह ॥ इति पाद्मे ॥

टिप्पणी—

ननु बाणवन्तावित्युच्यमानौ कौ । शराविति चेन्न । तस्यैव बाणत्वेन कथं तस्यैव तद्वत्त्वमित्यतो बाणशरशब्दयोः अभिधानपुराणवचनाभ्याम् अर्थभेदमाह– **बाणस्त्विति** ॥ एतेन शराग्रे यो वंशखण्डः सन्धीयते स बाण उच्यत इति परव्याख्यानं प्रमाणविरुद्धमित्युक्तं भवति ।

उपनिषत्—

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिन् तदोतं च प्रोतं चेति ॥ ३ ॥ स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥**

भाष्यम्—

दीप्तेराकाशशब्दोक्ता श्रीर्हि सर्वाश्रया मता ।
तदाश्रयः परो विष्णुः सोऽस्थूलादिगुणो मतः ॥ इति स्कान्दे ॥

टिप्पणी—

यदुक्तं सर्वाधारमूलप्रकृतेरपि भगवानेवाऽधार इत्युक्त इति तदयुक्तम् । श्रुतावविनाशित्वेनाक्षरशब्दाभिधेयायाश्चित्प्रकृतेस्सर्वाधाराकाशाधारत्वप्रतीत्या

भगवतः सर्वाधारमूलप्रकृत्याधारत्वाप्रतीतेः । तथाचास्थूलत्वादिकमपि तस्या एवेत्यतः श्रुत्यर्थनिश्चायकं प्रमाणमाह– **दीप्तेरिति** ॥

उपनिषत्—

**सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽथा परस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥ सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावा-पृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳ-स्तदोतं च प्रोतं चेति ॥ ६ ॥ स होवाच यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥**

भाष्यम्—

पुनः प्रश्नः सर्वाधारा प्रकृतिरित्यनुपचरितत्वेनावधारणार्थम् । आकाश एवेत्यवधारणात् ।

पुनरुक्तिः शब्ददोषो न्यूनाधिक्यादिकं तथा ।
न जिगीषुकथायां च कारणं स्यात्पराजये ॥
क्वचिद् विद्याधिकस्यापि स्खलनं सम्भवेद् यतः ।
तत्त्वनिर्णयवैलोम्यं विलम्बो वा मुहूर्ततः ।
विद्यादौर्बल्यहेतुः स्यादतस्तस्मिन् पराजयः ॥ इति ब्रह्माण्डे ॥

अतस्तत्त्वनिर्णयविरोधिपुनरुक्त्यादीनि निग्रहः ।

टिप्पणी—

ननु विजिगीषुकथायां पुनरुक्तेर्निग्रहस्थानत्वात्कथं वाचक्नवी यदूर्ध्वं याज्ञवल्क्य दिव इत्यादि प्राक् पृष्टमेव पृच्छति । याज्ञवल्क्योऽपि कथं पुनरुक्तं निग्रह-

स्थानमनुद्भाव्य पूर्वोक्तमेवोत्तरं वक्ति । पर्यनुयोज्योपेक्षणापत्तेरित्यतः पुनः प्रश्नतात्पर्यमाह– **पुनःप्रश्न इति** ।। सर्वाधारप्रकृतिरित्येतन्नोपचरितं किन्त्वनुपचरित-मित्येवंप्रकारेणावधारणार्थमित्यर्थः । प्रागुक्तपरिहारेणानुत्पन्नं इदमवधारणमिदानीं किं बलाज्जायत इत्यतः परिहारे विशेषोऽस्तीत्याह– **आकाश एवेति** ।। ननु पुनरुक्तिमनुद्भाव्य परिहारकथने पर्यनुयोज्योपेक्षणापत्तिरित्युक्तमिति चेन्न । प्राप्तनिग्रहस्यानुद्भावने हि पर्यनुयोज्योपेक्षणम् । नच पुनरुक्तिर्निग्रहस्थानम् । येन तदनुद्भावने निग्रहस्थानं स्यादिति भावेनाऽह– **पुनरुक्तिरिति** ।। आदिपदेन यत्तदित्याद्यनुवाददूष्यैकदेशानुवादकेवल-दूषणोक्तिलक्षणाननुभाषणैकदेशस्य ग्रहणम् । पुनरुक्तिस्तथा न्यूनाधिक्यादिकं शब्ददोषः स न पराजये कारणमिति योजना । किमु वादकथायामिति कैमुत्यद्योतनाय चशब्दोऽपिशब्दार्थः । पुनरुक्त्यादिकं कुतः पराजयकारणं न भवतीत्यत उक्तं शब्ददोष इति । शब्ददोषत्वेऽपि कुतो न पराजयकारणत्वमित्यत आह– **क्वचिदिति** ।। अपटुकरणत्वादिना सम्भवतस्तस्य प्रतिद्वन्द्ययोग्यपेक्षया विद्यादौर्बल्यद्योतकत्वा-भावादिति भावः । तर्हि कः पराजयहेतुरित्यत आह– **तत्त्वनिर्णयेति** ।। तत्त्वनिर्णयवैलोम्यशब्देनार्थदोषविरोधासङ्गत्योर्ग्रहणम् । तयोरेव साक्षात्तत्त्वनिर्णय-विरोधित्वात् । विलम्बो वा मुहूर्तत इत्यनेन वक्तृदोषभूतानुक्तेर्ग्रहणम् । अनुक्तिलक्षणकथनायैवमुक्तम् । चशब्दार्थकवाशब्देन संवादोऽपि ग्राह्यः । अत इति श्रवणाद्यत इति ग्राह्यम् । नन्वेवं यदि पुनरुक्त्यादीनां न पराजयकारणत्वं तर्हि तेषां निग्रहस्थाने परिगणनमेव न स्यादित्यत आह– **अत इति** ।। यतः पुनरुक्त्यादिमात्रं पराजयहेतुर्न भवति यतश्च तत्त्वनिर्णयवैलोम्यमेव पराजयहेतुरत इत्यर्थः । निगृह्यतेऽनेनेति निग्रह निग्रहस्थानम् । तत्त्वनिर्णयविरोधिपुनरुक्त्यादीनीत्युक्त्या प्रमाणे तत्त्वनिर्णयवैलोम्यशब्देनेदमपि सङ्ग्राह्यमिति सूचयति । प्रकृतपुनरुक्तिश्च न तत्त्वनिर्णयविरोधिनीति न निग्रहस्थानमिति भावः । यद्यप्याचार्यैरन्यत्र विरोधासङ्गतिन्यूनाधिकसंवादानुक्तीनां षण्णामेव निग्रहस्थानत्वमुक्तम् । तथाऽपि पुनरुक्त्यादीनां न्यूनाधिकयोः

शब्ददोषयोरन्तर्भावः । अत एव प्राक् प्रमाणे शब्ददोष इत्युक्तम् । अत्र व्यवहारस्तु अन्तर्भावाविवक्षया पररीत्यैवेति ध्येयम् ॥ ७ ॥

उपनिषत्—

**स होवाचैतद् वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य-स्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्व-नाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेज-स्कमप्राणममुखममात्रमगोत्रमजरमभयममृतमरजोऽ-शब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥ ८ ॥**

भाष्यम्—

**प्रसिद्धस्थूलसूक्ष्मादिवैलक्षण्याज्जनार्दनः ।**
**अस्थूलादिरिति प्रोक्तो नैव स्थौल्याद्यभावतः ॥**
**अनावृत्तेस्तमो नास्य स्वातन्त्र्यान्नाद्यते क्वचित् ।**

टिप्पणी—

अस्थूलमित्यादौ द्रव्यत्वादिप्रयोजकपरिमाणादिराहित्यमुच्यत इति परेषां व्याख्यानं दूषयितुं स्वयं तावद् व्याचष्टे– **प्रसिद्धेति** ॥ उपलक्षणमेतत् । प्रसिद्धस्थूलसूक्ष्मा-द्यन्यवस्तुस्वभावस्थौल्यादिराहित्याच्चेत्यपि ग्राह्यम् । अत एव नैव स्थौल्याद्यभावत इत्युक्तं दूषयति– **नैवेति** ॥ तथात्वे ब्रह्मणो निःस्वभावत्वापत्तेरित्यर्थः । लौकिस्थौल्यादिनिषेधे त्वलौकिकस्थौल्यादिसद्भावान्न निःस्वभावत्वमिति भावः । ननु यदि अस्थूलादिपदानां लौकिकस्थौल्यादिराहित्यार्थकत्वेनालौकिक-स्थौल्यादिसिद्धिस्तर्हि अतमोऽवाय्वादिपदानामपि लौकिकतमोवाय्वादि-राहित्यार्थकत्वापत्त्या अलौकिकतमोवाय्वादिसिद्धिप्रसङ्ग इत्यतः उपलक्षणत्वेन अतम इत्येतद् व्याचष्टे– **अनावृत्तेरिति** ॥ अस्य जनार्दनस्य । तमस्सर्वात्मना

नास्ति तमसो ज्ञानावरकत्वस्वाभाव्यात्। अस्य च ज्ञानप्रतिबन्धावरणाभावादित्यर्थः । न तदश्नाति किञ्चनेत्यनेन गतार्थताशङ्कापरिहाराय न तदश्नाति कश्चनेति वाक्यं व्याचष्टे– **स्वातन्त्र्यादिति** ॥ नाद्यते न संह्रियते । तत्र हेतुः– **स्वातन्त्र्यादिति** ॥ परानधीनत्वादित्यर्थः । यदि ब्रह्म केनचित् संहार्यं स्यात्तदा संहारकाधीनमेव स्यात्। संहार्यस्य संहारकाधीनत्वनियमात्। नच तदस्ति अतो न संहार्यमित्यर्थः ॥ ८ ॥

उपनिषत्——

[इच्छामात्रेण सर्वलोकधारकः नारायणः]

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यो स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥**

[भगवतो नारायणस्य ज्ञानं विना न मोक्षः]

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद् भवति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥ तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति**

**मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥ सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्यध्वं न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद् यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥**

इत्यक्षरब्राह्मणम् ॥ ८ ॥

**भाष्यम्**—

**द्यावापृथिव्यौ श्रीभूमी केशौ सूर्यविधू मतौ ॥**
**दीप्तेः पृथुत्वाज्ज्ञानाच्च तथाऽह्लादविधेरपि ।**
**तदाधारो हरिर्नित्यं स्वातन्त्र्येण प्रशासकः ।**
**आधारत्वं श्रियो यच्च तच्च विष्णोः प्रशासनात् ।**
**तद्वशान्न स्वतन्त्रत्वं स स्वतन्त्रो हरिः सदा ॥**

**इति महामीमांसायाम् ॥**

**न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।**
**न योगित्वादीश्वरत्वात्सत्यरूपाच्युतो विभुः ॥ इति वाराहे ॥**

**'आदित्यवर्णं तमसस्तु पारे' इत्यादेश्च। 'न सत्तन्नासदुच्यते'। 'अदुःखमसुखं समम्'। 'न प्रज्ञं नाप्रज्ञम्' इत्यादि च ।**

**टिप्पणी**—

'एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादि-वाक्यद्वयगतसूर्याचन्द्रमोद्यावापृथिवीशब्दानां प्रसिद्धार्थत्वे तद्धारकत्वस्यान्यदेवता-साधारण्येन विष्णुमात्रनिष्ठत्वं न स्यादित्यतस्तत्पदचतुष्टयस्याभिधेयमाह– **द्यावापृथिव्याविति** ॥ प्राधान्यक्रमेण श्रुतिक्रमोल्लङ्घनम् । सूर्यविधू केशौ ब्रह्मरुद्रौ मतावित्यर्थः । द्यावापृथिवीसूर्याचन्द्रमःशब्दान् श्र्यादिषु निर्वक्ति– **दीप्तेरिति** ॥ आह्लादविधेः सुखकरणात्। एवं पदार्थमुक्त्वा एतस्य वा

अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत इति वाक्यद्वयार्थमाह– **तदाधार इति** ॥ हरिः प्रशासकः सन्स्वातन्त्र्येण नित्यं तदाधार इत्यन्वयः । स्वातन्त्र्येणेत्युक्त्या भगवतः सर्वाधारत्वमन्याधीनं नेत्याह । आकाश एव तदोतं च प्रोतं चेति सर्वाधारत्वमाकाशाख्यश्रियोऽभिहितम् । इदानीं विष्णोरेव सूर्यचन्द्राद्याधारत्वं कथमुच्यत इत्यत आह– **आधारत्वमिति** ॥ ननु कथं भगवत एव स्वातन्त्र्यमुच्यते सर्वाधारत्वोक्त्या आकाशाख्यश्रियोऽपि स्वातन्त्र्यावगमादित्यतो वाऽह– **आधारत्वमिति** ॥ श्रिय आधारत्वं विष्णोः प्रशासनादिति कुतः स्वातन्त्र्येणैव किन्न स्यादित्यत आह– **तद्वशादिति** ॥ तद्वशत्वादित्यर्थः । श्रिय इत्यनुवर्तते । हरेः स्वातन्त्र्यं च कादाचित्कं नेत्याह– **स इति** ॥

ननु अतम इत्यादाविवामुखमित्यादावपि सर्वात्मना मुखादिनिषेधः किन्नेति भावेन भगवतः प्राकृतविग्रहराहित्ये प्रमाणमाह– **न तस्येति** ॥ तथाच प्राकृतमुखादिराहित्यमेव श्रुत्यर्थ इति भावः । कुत एवं व्याख्येयं सर्वात्मना विग्रहादिराहित्यमेवार्थः किन्न स्यादित्यतो भगवतो रूपादिसद्भावे प्रमाणसद्भावात् तथा व्याख्याने तद्विरोधः स्यादिति भावेनाऽह– **आदित्यवर्णमिति** ॥ आदिपदेनाणोरणीयान्महतो महीयान् सहस्रशीर्षा पुरुष इत्यादेर्ग्रहणम् । अस्थूलमनण्वित्यादिस्थूलादिविलक्षणपरत्वेनैव व्याख्येयमित्यत्र निदर्शनमाह– **न सदिति** ॥ तद् ब्रह्म सदिति नोच्यते । असदिति नोच्यते इति वाक्यद्वयं यथा मूर्तामूर्तविलक्षणपरत्वेनैव व्याख्येयं नतु सत्त्वासत्त्वाभावपरत्वेन ब्रह्मणः सद्रूपत्वात् । यथोक्तं 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते । मूर्तामूर्तेतरद् ब्रह्म न सत्तन्नासदुच्यते' (तत्त्वो.) इति । तथेदमपीति भावः । नन्वेकप्रकरणगताना-मप्यस्थूलादिपदानां प्राकृतस्थौल्यादिनिषेधपरत्वमतो वाय्वादिपदानां सर्वात्मना तमआदिनिषेधपरत्वमिति व्याख्यानं कथमित्यत आह– **अदुःखमिति** ॥ यथैकस्मिन्नपि प्रकरणे असुखमित्यनेन लौकिकसुखनिषेधेऽपि दुःखमित्यनेन

सर्वात्मना दुःखनिषेध एव । यथा वा न प्रज्ञमित्यत्र लौकिकज्ञाननिषेधेऽपि नाप्रज्ञमित्यत्र सर्वात्मनाऽज्ञाननिषेध एव । तत्रापीति भावः ॥

**अथ खण्डार्थः**

अथोद्दालकोपरमानन्तरं वाचक्नवी वचक्नोर्दुहिता गार्गी याज्ञवल्क्यभार्या स्वयं पूर्वं पराजिततया सभ्यानुज्ञां विना विजिगीषुकथायां पुनः प्रश्नो न कर्तव्य इति ब्राह्मणानुज्ञार्थं ब्राह्मणान् प्रत्युवाच । किमिति? हे ब्राह्मणाः भगवन्तः ज्ञानादिसम्पन्नाः अहम् इमं याज्ञवल्क्यं पुनः द्वौ प्रश्नौ प्रष्टव्यौ प्रक्ष्यामि। हन्त यद्यनुमतिर्भवतामस्ति । अयं याज्ञवल्क्यः । तौ प्रष्टव्यार्थौ मे मम चेद् यदि वक्ष्यति तदुत्तरं कथयिष्यति । तर्हि जातु कदाचित् । युष्माकं मध्ये कश्चित् कोऽपि अन्यतमः इमं याज्ञवल्क्यम् । ब्रह्मोद्यं ब्रह्मवादिनं सन्तं नवै नैव जेता भवेदिति । अनेन ब्राह्मणानामेवं ज्ञापनरूपोपकारार्थं चायं प्रश्न इत्युक्तं भवति । एवमुक्ता ब्राह्मणा हे गार्गि त्वं पृच्छेत्यनुज्ञां दत्तवन्तः ॥ १ ॥

सा एवं लब्धानुज्ञा गार्गी याज्ञवल्क्यं प्रत्युवाच ह । किं हे याज्ञवल्क्य अहं वै पूर्वं भीत्योपरताऽपि त्वा त्वां द्वौ प्रश्नौ पुनः प्रक्ष्यामीत्यनुषज्यते। ननु पूर्वकृतप्रश्नानामिवैतयोरपि प्रश्नयोः सुशकोत्तरत्वे पुनः प्रश्नो व्यर्थ इत्यतः तयोः प्रश्नयोः दुरुत्तरत्वं द्योतयितुं दृष्टान्तपूर्वकमाह– **यथेति** ॥ यथा उग्रपुत्रः क्रूरपुत्रः शूरत्वसम्भावकमिदमुभयोर्विशेषणम् । काश्यां भवः काश्यो वा विदेहानां राजा वैदेहो वा । उज्ज्यम् उद् उद्गता अवरोपिता ज्या यस्य तदुज्ज्यम् । धनुः अधिज्यं अध्यारोपिता ज्या यस्य तदधिज्यं कृत्वा द्वौ बाणवन्तौ अयोमयवन्तौ शराविति शेषः । कीदृशौ सपत्नातिव्याधिनौ सपत्नाः शत्रवः तानतिशयेन वेद्धुं शीलं ययोस्तौ सपत्नातिव्याधिनौ । हस्ते कृत्वा उपोत्तिष्ठेत् शत्रोस्समीपे तिष्ठेत् । एवमेवाहं त्वां शरस्थानीयाभ्यां द्वाभ्यां प्रश्नाभ्याम् । उपोदस्थां त्वत्समीप उत्तिष्ठेयं त्वं ब्रह्मिष्ठत्वे प्रतिज्ञावांश्चेत्

तर्हि तौ प्रश्नौ तयोः प्रश्नयोः उत्तरं मे मह्यं ब्रूहि । एवमुक्तो याज्ञवल्क्यः पृच्छ गार्गीत्याह ॥ २ ॥

सा एवमुक्ता गार्गी ह उवाच अपृच्छत् किम् । हे याज्ञवल्क्य । दिवः द्युशब्दवाच्यात् स्वर्गलोकाद् वैकुण्ठलोकाद् वा । ऊर्ध्वं उपरि यदास्ति महर्लोकादिकम् । ब्रह्माण्डखर्परबहिरावरणादिकं वा । पृथिव्याः भूलोकात् पृथिवीसम्बन्धिलोकसप्तकाद् वा अर्वाग् अधः यदस्ति । अतलादिकं अण्डोदकादिकं वा । अन्तरा ऊर्ध्वार्वाक्शब्दवाच्ययोः पूर्वोक्तयोर्मध्ये वर्तमानं यत् । ये इमे प्रसिद्धे द्यावापृथिवीस्वर्गादिभूरादिके । तत् जगद् भूतम् अतीतमिति भवच्च वर्तमानमिति । भविष्यच्चेति यदाचक्षते विद्वांसस्तत्सर्वं कस्मिन्नोतं प्रोतं चेति ॥ ३ ॥

स एवं पृष्टो याज्ञवल्क्यः उक्तानुवादपूर्वकमुत्तरमुवाच । आकाशे आसमन्तात् काशमानत्वेनाऽकाशशब्दाभिधेये श्रीतत्त्वे ॥ ४ ॥

सा एवं लब्धप्रथमप्रश्नोत्तरा गार्गी ह उवाच । याज्ञवल्क्य यस्त्वं मे मम एतं दुर्वचं प्रश्नं व्यवोचः विशेषेणोत्तारितवानसि अतस्ते तुभ्यं नमोऽस्तु । अथापरस्मै द्वितीयप्रश्नाय धारयस्व मनो धत्स्व । इतर आह पृच्छ गार्गीति ॥ ५ ॥

द्वितीयप्रश्नं कर्तुं सर्वाधारा प्रकृतिरित्यनुपचरितत्वेनावधारणार्थं पूर्वपृष्टमेव पुनः पृच्छतीत्याह– **सा होवाचेत्यादिना** ॥ ६ ॥

याज्ञवल्क्योऽपि पूर्वोक्तमेवोत्तरं आकाश एवेत्यवधारणेनाहेत्याह– **स होवाचेत्यादिना** ॥ द्वितीयं पृच्छति– **कस्मिन्निति** ॥ ७ ॥

एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्यक्षरस्याकाशाश्रयत्वं वक्तुं कथं सर्वाधाराकाशस्याक्षरमाश्रयः स्यादित्यतस्तस्य महिमानमाह– **एतद् वा इत्यादिना नान्यदतोऽस्ति विज्ञात्रित्यन्तेन** ॥ तद् आकाशाश्रयत्वेन वक्ष्यमाणम् । अक्षरं न क्षरतीत्यक्षरशब्दवाच्यं ब्रह्म एतद् एतल्लक्षणकं ब्राह्मणा

ब्रह्मज्ञानिनः अभिवदन्ति वै किं तल्लक्षणमित्यत आह ॥ अस्थूलम् प्राकृतस्थूलसूक्ष्मादिविलक्षणमित्यर्थः । अलोहितं लोहिताद्युपलक्षित-प्राकृतरूपरहितम् । एवमस्नेहमित्येतदपि व्याख्येयम् । अच्छायं च्छायारहितं तेजःस्वरूपत्वाद् अज्ञानरहितं वा । अतमः अनावृतेस्तमोरहितम् । अवायु श्वासोच्छ्वासादिरहितम् । अनाकाशं शरीराद्यारम्भकतयाऽकाशशब्दोपलक्षित-पञ्चमहाभूतरहितं तद्विलक्षणं वा । असङ्गं सर्वत्र स्थितमपि तत्कृतलेपरहितम् । अरसं प्राकृतरसशून्यम् । अगन्धं प्राकृतगन्धशून्यम् । एवमचक्षुष्कमित्यादि व्याख्येयम् । अतेजस्कं प्राकृतवर्चोरहितम् । अप्राणं चक्षुःश्रोत्रवाङ्मनो-व्यतिरिक्तप्राकृतज्ञानेन्द्रियकर्मेन्द्रियरहितम् । अमुखं प्राकृतविग्रहरहितम् । अमात्रं परिमितिशून्यम् । न विद्यते अन्तरं यस्य तदनन्तरम् । न विद्यते बाह्यं यस्य तदबाह्यम् । अयमेव सर्वस्मादन्तरः सर्वस्माद्बाह्यश्चेत्यर्थः । तद् ब्रह्म किञ्चनान्नादिकं नाश्नाति उपजीवनाद्यर्थं नात्ति । कश्चन कोऽपि समर्थस्तद्ब्रह्म नाश्नाति न संहरतीत्यर्थः । ८ ॥

सर्वाधारप्रकृत्याधारत्वोक्त्या विष्णोरपि यत्सर्वाधारत्वं विवक्षितं तन्न प्रयासेन किन्त्वाज्ञामात्रेणेत्याह– **एतस्य वा इति** ॥ वैशब्दोऽवधारणे । प्रशासने आज्ञायां निमित्तसप्तमीयम् । सूर्याचन्द्रमसौ ब्रह्मरुद्रौ द्यावापृथिव्यौ श्रीभूमी निमेषादिशब्देन तदभिमानिनो देवा उच्यन्ते । या नद्यः अन्याः विलक्षणाः काश्चित्प्राच्यः प्राच्यां स्थिताः अन्याः काश्चित्प्रतीच्यः प्रतीच्यां स्थिताः श्वेतेभ्यः पर्वतेभ्यः यां यां दिशम् अनुस्यन्दन्ते ता एतस्यैवाक्षरस्याऽज्ञया तां तां दिशमनुस्यन्दन्त इत्यर्थः । एतस्य वाऽज्ञया ददतो गोहिरण्यादीन्प्रयच्छतः मनुष्याः प्रशंसन्ति देवा यजमानं प्रशंसन्ति पितरः दर्वीं दर्वीहोमम् उच्छिष्टपिण्डावसरे दर्वीं वा अन्वायत्ताः अनुगताः ॥ ९ ॥

अक्षरज्ञानाज्ञानाभ्यामेव मोक्षसंसाराविति वक्तुं कर्मणां तावन्मोक्षसाधनत्वं निराकरोति– **यो वा इति** ॥ एतद् उक्तलक्षणकम् अक्षरम् अविदित्वा जुहोति हविःप्रक्षेपं करोति यजते ददाति बहूनि वर्षसहस्राणि तपः चान्द्रायणादि

तप्यते स यद्यप्यस्मिन् प्रमाणप्रमिते स्वर्गादिलोके बहूनि वर्षसहस्राणि तिष्ठति। तथापि अस्य तत् फलं अन्तवदेव विनाशवदेव भवति कृपणः शोच्यः संसारीति यावत्। ब्राह्मणः मुक्तः ॥ १० ॥

अदृष्टम् अन्यैः साकल्येन दृष्टं न भवति, स्वयं द्रष्टृ। अश्रुतं साकल्येन, स्वयं शृणोतीति श्रोतृ। अमतं साकल्येन, स्वयं मन्तृ। अविज्ञातं साकल्येन बुद्ध्यविषयः। ननु सर्वेषामपि द्रष्टृत्वश्रोतृत्वादेः सत्वात्को विशेषोऽक्षरस्येत्यतो नात्र द्रष्टृत्वादिमात्रं लक्षणं विवक्षितम्। किन्तु स्वातन्त्र्येण द्रष्टृत्वादि तच्च नान्यस्येत्याह– **नान्यदिति** ॥ अत अक्षरात् अन्यत् स्वातन्त्र्येण द्रष्टृ नास्ति। एवं यदर्थमक्षरमाहात्म्यमभिहितं तदाह– **एतस्मिन्विति** ॥ ११ ॥

सा लब्धप्रश्नद्वयोत्तरा गार्गी उवाच। किं। हे ब्राह्मणाः भगवन्तो यूयम् अस्माद्याज्ञवल्क्यात्। नमस्कारेण मुच्यध्वमिति यदुच्यते मया तदेव बहु मन्यध्वम्। कुत इत्यत आह– **नेति** ॥ युष्माकं मध्ये कश्चिद् इमं ब्रह्मोद्यं याज्ञवल्क्यं जातु कदापि जेता नैव यस्मात् तस्मादित्यर्थः। ततः ब्राह्मणान्प्रतिवचनानन्तरम् ॥ १२ ॥

इत्यक्षरब्राह्मणम् ॥ ८ ॥

**उपनिषत्**——

## अथ शाकल्यब्राह्मणम्

[त्रयस्त्रिंशद्देवताः]

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा**

**याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥ स होवाच महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति कतमे ते त्रयस्त्रिंशदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशा इति ॥ २ ॥**

भाष्यम्——

ये ये वराः सुरास्ते तु परेषां महिमात्मकाः ।
महीत्युक्तं हि माहात्म्यं महिमानो हि तन्मिताः ॥
एवं हि महिमाशब्दस्तद्वशत्वं वदत्ययम् ।
यत्र माहात्म्यवाची स्यान्महत्त्वं महिमा तथा ॥
त्रयस्त्रिंशत्सुराणां हि परिवारास्ततः परे ।
षण्णामेते त्रयाणां ते ते द्वयोः साधिकस्य तौ ॥
एकस्य सोऽपि क्रमतः पराधीनस्वरूपिणः ।
पराधीनबलाश्चैव पराधीनप्रवृत्तयः ॥
एक एव स्वतन्त्रोऽसौ भगवान् पुरुषोत्तमः ॥

टिप्पणी——

ननु महिमान एवैषामेत इत्यत्र एते त्रयस्त्रिंशत्सङ्ख्याका देवा एषां त्रयश्च त्रीशतेत्याद्युक्तानां महिमान एवेत्यन्यथाप्रतीतिनिरासाय एषामेत इत्यनयोः परामृश्यं दर्शयंस्तद्वाक्यं व्याचष्टे– **ये य इति** ॥ अत्र वीप्साया न केवलं त्रयश्च त्री च शतेत्युक्ताः त्रयस्त्रिंशच्छतसङ्ख्याका देवाः त्रयस्त्रिंशतां देवानां महिमानः, किन्तु ते त्रयश्च त्री च सहस्रेत्युक्ताः त्रयस्त्रिंशत्सहस्रसङ्ख्याका

देवाः । एषां त्रयश्च त्री च शतेत्युक्तानां देवानां महिमान इति वाक्य-योजनामभिप्रैति। परेषामुत्तमानाम्। नन्ववराणामुत्तममाहात्म्यरूपत्वाभावात्कथं ते तन्महिमात्मका इत्यतोऽत्र महिमान इत्यस्य विवक्षितमर्थमाह– **महीत्युक्तमिति**।। आद्यो हिशब्दः महीत्यस्य माहात्म्यार्थत्वे। द्वितीयस्तु मेत्यस्य मर्यादारूपमानार्थत्वे प्रसिद्धिमाह । तन्मितास्तेन परिमिताः न्यूनाः । एवं महिमशब्दार्थमुक्त्वा एषां महिमान इति षष्ठीलब्धमर्थमाह– **एवं हीति** ।। ननु सर्वत्रापि महिमशब्दस्योक्तार्थत्वे 'सत्यः सो अस्य महिमा' 'देव महिम्नः परमन्तमाप' इत्यादावपि महिमशब्दस्योक्तार्थत्वं स्यादित्यत उक्तम् ।। **अयमिति** ।। महिमान इति श्रुतिगतः । कस्तर्हि तत्र महिमशब्दार्थ इत्यत आह– **यत्रेति** ।। यत्र 'सत्यः सो अस्य महिमा' इत्यादौ महिमशब्दः माहात्म्यवाची विवक्षितः स्यात् । तदा तत्र महिमा महिमशब्दार्थः महत्वमित्यर्थः । ननु कत्येव देवा याज्ञवल्क्येति प्रश्नस्य त्रयश्च त्री च शतेत्यादिना परिहारस्योक्तत्वात् कत्येव देवा याज्ञवल्क्येति पुनः प्रश्नतत्परिहाराणामसम्भवः । नच सङ्कोचसङ्ख्याविषयप्रश्ने तत्परिहारोऽयमिति वाच्यम् । व्यर्थत्वादित्यतः पूर्वपूर्वोक्तेषु अधिकाधिकविवक्षया पुनः प्रश्न इति ज्ञापनाय परिहारवाक्यानां तात्पर्यमाह– **त्रयस्त्रिंशत्सुराणामिति** ।। त्रयश्च त्रीच शतेत्युक्तानां मध्ये ततः त्रयस्त्रिंशद्देवेभ्यः परे देवाः त्रयस्त्रिंशत्सुराणां परिवाराः । षण्णामेते इत्यत्रापि त्रयस्त्रिंशत्सुराणां ततः पर इति पदत्रयमनुवर्तते । त्रयस्त्रिंशत्सुराणां मध्ये ततः षड्भ्यः परे एते सप्तविंशत्सङ्ख्याका देवाः । षण्णां परिवाराः त्रयाणां ते इत्यत्र षण्णां ततः परे इति पदत्रयमनुवर्तते । षण्णां मध्ये ततः त्रिभ्यः परे ते त्रयो देवाः त्रयाणां परिवाराः । ते द्वयोरित्यत्रापि षण्णां ततः पर इत्यनुवर्तते । षण्णां मध्ये ततः द्वाभ्यां परे ते चत्वारो देवाः द्वयोः परिवाराः साधिकस्य तावित्यत्र द्विवचनमविवक्षितम् । द्वयोः ततः पर इति अत्रानुवर्तते । द्वयोर्मध्ये ततः साधिकात् पर एकः साधिकस्य परिवारः । सोऽपि साधिकोऽपि एकस्य परिवार इति योज्यम् । अमात्यादीनां राजादिपरिवारत्ववत् नावरदेवानामुत्तमदेवपरिवारत्वमित्याशयेन प्रागुक्तं तद्वशत्वं

विवृणोति– **क्रमत इति** ॥ बलशब्दो ज्ञानाद्युपलक्षकः । एक इत्युक्तविष्णोरपि पराधीनस्वरूपत्वादिकं किं नेत्याह– **एक एवेति** ॥ २ ॥

उपनिषत्—

**कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वं निहितमिति तस्माद् वसव इति ॥ ३ ॥**

भाष्यम्—

अग्रं विष्णुं नयेद् यस्मात् सुपर्णोऽग्निरुदाहृतः ॥
प्रथितं हरिमादाय वातीति प्रथिवः स्मृतः ।
तद्भार्या पृथिवी नाम यत् तदिच्छानुसारिणी ॥
सर्वज्ञानात् तथाऽऽयुष्द्वात् सूत्रात्मा वायुरुच्यते ।
श्रद्धानामैव तत्पत्नी सर्वस्यान्तर्निरीक्षणात् ॥
अन्तरिक्षमिति प्रोक्ता देवेभ्योऽधिकवीक्षणात् ।
आदिकालस्थितो यस्मादादित्यस्तु सदाशिवः ॥
द्यौरुमा च समुद्दिष्टा वाग्रूपा द्योतिका यतः ।
त एते सर्वदेवेभ्यो विशिष्टास्तद्वशाः परे ॥
नक्षत्रमिन्द्र उद्दिष्टश्चन्द्रः काम उदाहृतः ।
अत्राणात् सूर्यचन्द्राद्यैराह्लादाच्चैव हेतुतः ॥
वासयन्ति जगद्यस्मादेतेऽष्टौ वसवः स्मृताः ।
ज्ञानादिषड्गुणाः षट्सु तदन्येभ्योऽधिका यतः ॥
वसुष्वपि त एवोचा वीन्द्राद्याः पूर्वकीर्तिताः ।

टिप्पणी—

ननु षण्णामेते परिवारा इत्युक्तमसत् । ते च षड्वसुषूक्ता अग्न्यादय एव कतमे षडिति प्रश्नोत्तरे कथ्यन्ते । एतेषामेव शब्दानां तत्र श्रवणात् ।

तेषां प्रसिद्धानां त्रयस्त्रिंशत्स्वाधिक्यम् । अग्न्यादीनां चन्द्राद्युत्तमत्वाभावादित्यतः प्रथमवाक्यगताग्न्यादिशब्दाभिधेयान् तेषु तन्निर्वचनपूर्वकमाह– **अग्रमित्यादिना** ॥ अग्रशब्दे कर्मण्युपपदे नयतेः कर्मणि डिप्रत्ययः उपपदरशब्दलोपश्च । प्रथितशब्दे कर्मण्युपपदे वातेः कर्तरि कप्रत्ययः उपपदतकारलोपश्च । तद्भार्या गरुडभार्या पृथिवीनाम । ननु प्रथिवस्येयं प्राथिवीति स्यात् पृथिवीति कथमित्यत आह– **यत्तदिति** ॥ यद्यस्मात्तदिच्छानुसारिणी तस्मादभेदोपचारेण तेनैव शब्देनोच्यते। निर्वचनत्वाद् रेफस्य ऋवर्णः । स्त्रीत्वात् ङीबिति भावः ॥ **सर्वज्ञत्वादिति** ॥ गत्यर्थाद् वातेः कर्तरि क्तः विशेषानुक्तेः सर्वज्ञत्वादित्युक्तम् । आयुष्वाद् आयुःप्रदत्वाद् वश्चासावायुश्चेति वायुरिति विग्रहः । सर्वेषामप्यन्तर्निरीक्षितृत्वात्को विशेष इत्यत आह– **देवेभ्य इति** ॥ शेषादिभ्य इत्यर्थः । उमाद्यपेक्षया आदिकालस्थितः । आदिशब्दाद्भवार्थे त्यप्रत्ययः । चशब्दः अत इत्यर्थे वाग्रूपा वागभिमानिनी सती यतो द्योतिका अर्थप्रकाशिका अत उमा द्यौः समुद्दिष्टा । नन्वस्त्वेवं वसुषूक्ताः अग्न्यादिशब्दाभिधेया गरुडाद्याः कतमे षडिति प्रश्नोत्तरगताग्न्यादयो यदि प्रसिद्धास्तदाप्यनुपपत्तिरेव। प्रसिद्धाग्न्यादीनां गरुडाद्युत्तमत्वाभावादित्यतस्तत्रोक्ता अप्यग्न्यादय एत एव । तेषां च चन्द्राद्युत्तमत्वं सम्भवतीत्याशयेनाह– **त एत इति** ॥ नक्षत्रचन्द्रमःशब्दार्थावाह– **नक्षत्रमिति** ॥ तौ शब्दौ तत्र निर्वक्ति– **अत्राणादिति** ॥ एतेषु हीदं वसु सर्वं हितमिति तस्माद् वसव इति वाक्यं व्याचष्टे– **वासयन्तीति** ॥ अन्तर्णीतण्यर्थाद्वसतेः कर्तर्युकार-प्रत्ययः ॥

कतमे षडिति प्रश्ने वसुषूक्ता अग्न्यादय एव षडित्युच्यन्ते तेषां त्रयस्त्रिंशत्सु देवेषु वसुष्वप्याधिक्यं कुत इत्याशङ्कापरिहाराय प्राप्तं एतेषु हीदं सर्वं षडिति वाक्यं हेतुहेतुमद्भावं दर्शयन्व्याचष्टे– **ज्ञानादीति** ॥ अन्येभ्य इन्द्रादिसप्तविंशद्देवेभ्यः । न केवलं त्रयस्त्रिंशत्सु किन्तु वसुष्वपीत्यपिशब्दः ॥ ३ ॥

उपनिषत्—

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशास्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद् यद् रोदयन्ति तस्माद् रुद्रा इति ॥ ४ ॥**

भाष्यम्—

प्राणाद्या वायुपुत्रास्तु दश बुद्ध्यभिमानवान् ॥
बृहस्पतिरिति ह्येते रुद्रा इत्येव कीर्तिताः ॥

टिप्पणी—

दशेमे पुरुषे प्राणा आत्मैकादश इति वाक्यं व्याचष्टे– **प्राणाद्या इति** ॥ प्राणादीन्द्रियाभिमानिनः । आत्मशब्दार्थो बुद्ध्यभिमानवानिति । एत एवेति सम्बन्धः ॥ ४ ॥

उपनिषत्—

**कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदं सर्वमाददाना यन्ति ते यदिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥**

भाष्यम्—

मासाभिमानिनो ये तु यमचन्द्रयुता द्विषट् ॥
धात्रर्यमाद्या आदित्या इन्द्राविष्णू विनैव तु ।

टिप्पणी—

ते यदास्मादित्यादिना श्रुत्युक्तं रुद्रशब्दप्रवृत्तिनिमित्तम् एतेषु प्रसिद्धमिति हिशब्देनाऽह । द्वादश वै मासाः संवत्सरस्यैत आदित्या इति वाक्यं व्याचष्टे– **मासाभिमानिन इति** ॥ धात्रर्यमादिद्वादशादित्यान्तर्गतस्येन्द्रस्य

नक्षत्रपदेन गृहीतत्वाद् विष्णोस्तु गरुडादिपरिवारत्वाभावादाह– **इन्द्राविष्णू विनैवेति** ॥ तर्हि द्वादशमासाभिमानित्वं कथं दशानामित्यत उक्तम्– **यमचन्द्रयुता इति** ॥ ये मासाभिमानिनो धात्रर्यमाद्याः ते इन्द्राविष्णू विना यमचन्द्रयुता द्विषडिति सम्बन्धः ॥ ५ ॥

**उपनिषत्—**

**कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥**

**भाष्यम्—**

**स्तनयित्नोरभीमानी वायुजस्त्विन्द्र उच्यते ॥**
**स एव वज्र इन्द्रस्य सोऽशनिश्चाशनादरेः ।**
**यज्ञो नामेन्द्रपुत्रो यो जयन्त इति चोच्यते ॥**
**स एव पशुमानित्वात् पशवश्चेति कथ्यते ।**

**टिप्पणी—**

स्तनयित्नुरेवेन्द्र इत्येतत्स्तनयिद्ध्वभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **स्तनयित्नोरिति** ॥ नक्षत्रपदेनेन्द्रस्य गृहीतत्वाद्रूपान्तरविवक्षया वायुजस्त्विन्द्र इत्युक्तम् । ननु कतमः स्तनयित्नुरिति प्रश्ने अशनिरित्युत्तरमुच्यते । तत्कथमेवं व्याख्यानमित्यतः अशनिशब्दाभिधेयोऽप्ययमेवेत्याह– **स एवेति** ॥ वज्रः वज्राभिमानी यतः अतः अरेरशनाच्चाशनिरिति सम्बन्धः । यज्ञः प्रजापतिरिति वाक्यं व्याचष्टे– **यज्ञ इति** ॥ इन्द्रपुत्रो यो जयन्तस्स प्रजापतिरिति यज्ञ इति चोच्यत इत्यर्थः । ननु कतमो यज्ञ इति पशव इतीत्युत्तरवाक्ये पशूनां यज्ञत्वमुच्यते तत्कथमेवं व्याख्यानमित्यतः पशुशब्दाभिधेयोऽप्ययमेवेत्याह– **स एवेति** ॥ ६ ॥

उपनिषत्—

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चाऽऽदित्यश्च द्यौश्चैते षडेतेषु हीदं सर्वं षडिति ॥ ७ ॥ कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥ तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यस्मिन्निदं सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ॥ ९ ॥

भाष्यम्—

एवं प्राधान्यतो देवास्त्रयस्त्रिंशत्प्रकीर्तिताः ॥
दक्षाग्निप्रमुखाः सर्वे प्राणा एव हि वायुजाः ।
रुद्रा अपि तदावेशात् पृथङ्नोदीरिता इह ॥
काम एवानुविष्टत्वादनिरुद्धश्च नोदितः ।
मन्वावेशादिन्द्रजस्तु सङ्ख्यायामनुवेशितः ॥
अश्विनौ निर्ऋतिश्चैव कुबेरश्च विनायकः ।
अर्यम्ण्यंशादिचतुर्षु विशेषावेशसंयुताः ॥

अत्रोक्ता अपि पृथिव्याद्याः अन्तर्यामिब्राह्मणे भवन्ति ।

टिप्पणी—

अग्निश्च पृथिवी चेत्यादेर्व्याख्यानमुपसंहरति– **एवमिति** ॥ ननु दक्षाद्याः अधिकाः कस्मात् त्रयस्त्रिंशत्सु नोक्ता इत्यतस्तेऽप्युक्ता इत्याह– **दक्षेति** ॥ दक्षाग्निप्रमुखा एव पूर्वोक्ताः वायुजाः । प्राणा इन्द्रियाभिमानिन इत्यर्थः । शिवस्य षट्सु प्रवेशेऽपि इतरे रुद्राः कस्मात्त्रयस्त्रिंशत्सु नोक्ता इत्यत आह– **रुद्रा इति** ॥ तदावेशात् शिवावेशात् । तथाच तदुक्तावेतेऽप्युक्ता

एवेति भावः । अनिरुद्धस्य त्रयस्त्रिंशत्सु पृथगनुक्तौ कारणमाह– **काम इति** ।। कामस्यानिरुद्धपितृत्वात्काम एवान्तर्भूतत्वेनानिरुद्धः पृथङ् नोक्तः । नन्वपकृष्टो जयन्तस्त्रयस्त्रिंशत्सु कस्मादुक्त इत्यत आह– **मन्विति** ।। तथाचेन्द्रजयन्तोक्त्या मनुरप्युक्त एवेति भावः । नन्वश्विप्रभृतयः सन्त्यधिकाः ते कस्मात् सङ्ख्यायां न निवेशिता इत्यत आह– **अश्विनाविति** ।। विनायक इत्येते अर्यम्णि अंशादिषु चतुर्षु स्थितैर्विशेषावेशैः संयुताः । तेषां विशेषावेशा अर्यमादिषु सन्तीति यावत् । तथाचार्यमाद्युक्तावश्विप्रभृतयोऽप्युक्ता इति भावः। अंश इति द्वादशादित्यानां मध्ये एकस्य नामान्तरम् । अत्रेन्द्रकामादिस्त्रीणां शच्यादीनां पृथगनुक्तौ कारणं प्रसङ्गात् पूर्वमेवोक्तम् । पूर्वमन्तर्यामिब्राह्मणे पृथिव्यग्न्यन्तरिक्षवाय्वादित्यचन्द्रतारकशब्दैः गरुडाग्नि-शिवभूताभिमानिवायुसरस्वतीसूर्यचन्द्रनक्षत्राण्युच्यन्ते इति व्याख्यातम् । न केवलमेतावत्, किन्तु तत्र पृथिव्यन्तरिक्षवायुद्युचन्द्रतारकशब्दैरत्रोक्ताः पृथिव्याद्यास्सौपर्णीश्रद्धामुख्यवायूमाकामेन्द्रा अप्युच्यन्त इत्याह– **अत्रेति** ।। प्रतिपाद्यत्वेनेति शेषः ।

**भाष्यम्**—

> **षट्सु प्रधानास्तिस्रो हि वायुवीन्द्रमहेश्वराः ।**
> **स्वभार्याणां स्वाश्रयत्वात् ते लोका ज्ञानरूपतः ।।**
> **पदैक्याद् ब्रह्मवाय्वोस्तु पदसाम्याच्छिवस्य च ।**
> **शेषस्यापि तु नैवोक्तिः पृथक्**.................... ।।

**टिप्पणी**—

कतमे ते त्रयो देवा इति प्रश्नस्येम एव त्रयो लोका इत्युत्तरमुक्तम् । तदयुक्तं उक्तरीत्या त्रयाणां लोकानां षट्स्वप्रविष्टत्वेन षट्स्वधिकप्रश्ने एतस्योत्तरत्वायोगादित्यतो लोकशब्दाभिधेयदेवानाह– **षट्स्विति** ।। कथं लोकशब्देन तेऽभिधीयन्ते इत्याशङ्कायाम् एषु हीमे सर्वे देवा इति वाक्यं

व्याचष्टे – **स्वभार्याणामिति** ।। स्वे वायुवीन्द्रमहेश्वरा आश्रया यासां तास्तथोक्ताः तस्य भावस्तत्त्वं तस्मादित्यर्थः । स्वभार्याणां स्वाश्रयत्वादित्युक्त्या वीन्द्रमहेश्वरयोः श्रद्धोत्तमत्वाभावेन कथं षट्सु प्राधान्यमिति शङ्का परास्ता । तस्य वायुमात्राश्रयत्वस्य विवक्षितत्वात् स्वयं निमित्तान्तरमाह– **ज्ञानरूपत इति** ।। लोका इत्येतदत्रापि सम्बद्ध्यते । ननु ब्रह्मशेषौ सपत्नीकौ कुतः त्रिष्वनुक्तौ षट्सु त्रयस्त्रिंशत्सु चानुक्तत्वादिति चेन्न । तत्राप्यनुक्तौ निमित्ताभावादित्यत आह– **पदैक्यादिति** ।। आद्यतुशब्देन चशब्दार्थकेन तत्पत्न्योः श्रद्धासरस्वत्योः समुच्चयः । चशब्देन गरुडस्योमासौपर्ण्योश्च समुच्चयः । अपिशब्देन वारुण्याः समुच्चयः । शेषस्यापीत्यस्य नैवोक्तिरित्यत्रापि सम्बन्धः । तदाऽपि पदेन ब्रह्मणः वारुणीब्रह्माण्योश्च समुच्चयः । तदयमर्थः । ब्रह्मवाय्वोस्तत्पत्न्योः शेषस्य शिवस्य तत्पत्न्योश्च पदैक्यात् गरुडस्य शेषस्य तत्पत्न्योश्च पदसाम्यात् वायुग्रहणेन ब्रह्मणः श्रद्धाग्रहणेन ब्रह्माण्याः शिवस्य गरुडस्य वा ग्रहणेन शेषस्य उमायाः सौपर्ण्या वा ग्रहणेन वारुण्या गृहीतत्वाद् ब्रह्मणः ब्रह्माण्याः शेषस्य वारुण्याश्च त्रयस्त्रिंशत्सु षट्सु त्रिषु वा पृथगुक्तिस्तु नैवेति ।। ३-६ ।।

**भाष्यम्—**

> **..................श्रद्धा च मारुतः ।।**
> **द्वौ देवाविति सम्प्रोक्तावन्नं श्रद्धा प्रकीर्तिता ।**
> **अतीतत्वाद् देवताभ्यो नेतृत्वाच्चान्नमुच्यते ।।**
> **श्रद्धेति वायोः पत्नी सा ........................ ।।**

**टिप्पणी—**

कतमौ द्वौ देवाविति प्रश्नोत्तररूपं अन्नं च प्राणश्चेति वाक्यं व्याचष्टे– **श्रद्धा चेति** ।। किं कस्य व्याख्यानमित्यत आह– **अन्नमिति** ।। इतिशब्दोऽध्याहार्यः । प्राण इति मारुतः प्रकीर्तित इति परिशेषसिद्धत्वात्

स्फुटत्वाच्चानुक्तिः । श्रद्धायामन्नशब्दं निर्वक्ति– **अतीतत्वादिति** ।। सा वायोः पत्नी श्रद्धा देवताभ्यः शेषादिभ्यः अतीतत्वात् उत्तमत्वात् अत्, नेतृत्वात् नं इत्यन्नमित्युच्यत इत्यर्थः । ननु त्रिष्वधिकप्रश्नस्योत्तरत्वेनोक्तौ द्वौ देवौ श्रद्धामारुतौ कथं स्यातां श्रद्धायास्त्रिष्वनुक्तत्वादिति चेन्न । षट्स्वेव स्वस्वभार्यापेक्षयाऽधिकप्रश्ने त्रय इत्युत्तरस्य स्वरूपोत्तमत्वाभिप्रायेण प्रश्ने द्वावित्युत्तरस्योक्तत्वात् । अन्यथा षट्सु स्वरूपोत्तमत्वाभिप्रायेणैव प्रश्ने द्वावित्येवोत्तरं वक्तव्यम् । नतु त्रय इति वीन्द्रमहेश्वरयोः श्रद्धोत्तमत्वाभावादिति भावः ।। ८ ।।

**भाष्यम्—**

> **................प्राणो वै विष्णुरुत्तरः ।**
> **णेत्येवाऽनन्द उद्दिष्ट आसमन्तात् प्रकृष्टतः ।।**
> **प्राणो हि भगवान् विष्णुरध्यर्धो वायुरुच्यते ।**
> **अध्यर्धा हि गुणा नित्यं वायोरध्यर्ध एव तत् ।।**
> **नचैकत्वं भवेद् वायोस्तद्विशिष्टो यतो हरिः ।**
> **नच द्वितीयता तस्मिन् प्रीतिरत्यधिका हरेः ।।**
> **तेनाध्यर्द्धगुणो यस्मात् सर्वस्माद् देवतागणात् ।**
> **नचाशक्यं नचाप्राप्यमतोऽध्यर्ध इतीरितः ।।**

**टिप्पणी—**

अन्नं चैव प्राणश्चेत्युक्त एव प्राणः कतम एको देव इति प्रश्नोत्तरत्वेनोच्यत इति प्रतीतिनिरासाय प्राण इति वाक्यगतप्राणशब्दाभिधेयमाह– **प्राणो वै इति** ।। प्राणशब्दं विष्णौ निर्वक्ति– **णेत्येवेति** ।। आ इत्यनुवादेन समन्तादिति व्याख्यानम् । प्रेत्युपसर्गार्थः प्रकृष्टत इति । हि यस्माद् भगवान् विष्णुः आसमन्तात् प्रकृष्टतः णः आनन्दरूपः तस्मादेव प्राणशब्दवाच्य इत्यर्थः । कतमोऽध्यर्थ इति प्रश्नोत्तरं योऽयं पवत इति वाक्यं भूतवायुपरत्वप्रतीतिनिरासाय

व्याचष्टे– **अध्यर्ध इति** ॥ कुतो वायुरध्यर्ध इत्याशङ्कानिरासकतया यदस्मिन्निदं सर्वं अध्याध्नोंत् तेनाध्यर्ध इति वाक्यं व्याचष्टे– **अध्यर्धा इति** ॥ हि यस्माद् वायोः गुणाः नित्यमध्यर्धाः आधिक्येन ऋद्धाः तत् तस्मादेव वायुरध्यर्ध इत्यर्थः । वायोरध्यर्धगुणत्वमेव कुत इत्याशङ्कानिरासकतया यदयमेक इवैव पवतेऽथेति वाक्यं प्रवृत्तमिति भावेन एकः पवते द्वितीयः पवत इत्यनुक्त्वा एक इवेति किमर्थमुक्तमित्यतस्तदभिप्रायमाह– **नचेति** ॥ हरिः यतः तद्विशिष्टः तेन वायुना विशिष्टः विशेषतस्तत्र सन्निहित इति यावत् । अतो वायोरेकत्वे केवलत्वं न भवेत् । यद्वा, एकत्वं मुख्यत्वं तद् विशिष्टस्तदपेक्षयोत्तमः । यतश्च तस्मिन्वायौ सर्वस्माद्देवतागणाद् हरेरभ्यधिका प्रीतिरतो द्वितीयत्वं न भवेत् । यस्य यस्मिन्नधिका प्रीतिः स एव स इत्युच्यते । नतु ततो द्वितीय इति लोके दर्शनात् । अत एक इवेत्युच्यत इति भावः । इदानीं यदयमेक इवैव पवत इति वाक्यार्थस्याध्यर्धगुणत्वे हेतुत्वं दर्शयति– **तेनेति** ॥ उक्तप्रकारेण एक इवेत्युच्मानत्वेनेत्यर्थः । विष्णोरिव नैतस्याध्यर्ध गुणत्वमित्याह– **सर्वस्मादिति** ॥ यस्मादध्यर्धगुणः अतोऽध्यर्ध इतीरित इति यदस्मिन्निदं सर्वमिति वाक्यार्थोपसंहारः । यदस्मिन्निति वाक्यस्य प्रकारान्तरेण तात्पर्यमाह– **नचेति** ॥ नियमनादावित्यर्थः । यस्मादित्यनुवर्तते । अनेन यस्मात् इदं सर्वं जगत् । अस्मिन् वायौ । अध्याध्नोंत् नियम्यत्वादिना स्थापितमभवत् । तेन अध्यर्द्ध इतीरित इति व्याख्यातं भवति ।

**भाष्यम्**——

**अत्यन्तरङ्गं यत् तस्मान्न हरेः पृथगीरिता ।**
**श्रीः स्वरूपविभेदेऽपि सर्वोत्कृष्टाऽपि नित्यशः ॥**
**तस्या अपि परो विष्णुर्गुणैः सर्वैरदोषवान् ।**
**एक इत्युच्यते नित्यं यस्मान्नान्यस्तथाविधः ॥**
**तत्परो वा गुणोद्रेके ब्रह्माऽसौ गुणपूर्तितः ।**

**तथात्वेन यतो नित्यमविकारेण याति हि ।**
**त्यदित्युक्तस्ततो विष्णुः सर्वदेवेश्वरेश्वरः ॥ इति महामीमांसायाम् ॥**

**टिप्पणी—**

ननु देवेषु अधिकाधिकदेवोत्त्यवसरे वायोरनन्तरं श्रीरपि वक्तव्या । नच वाय्वाद्युत्तमत्वाभावादुत्तमत्वेऽपि हर्यभिन्नत्वाद् वा तदनुक्तिरिति वाच्यं वाय्वादिसर्वोत्कृष्टत्वात्, विष्णोर्भिन्नत्वाच्च । तत्कुतस्तदनुक्तिरित्यत आह– **अत्यन्तरङ्गमिति** ॥ यद् यस्मात् । श्रीहरेः अत्यन्तरङ्गं वाय्वपेक्षया अतिशयेन अन्तरङ्गभूता तस्मात्तस्याः हरेः सकाशात् स्वरूपविभेदेऽपि सर्वोत्कृष्टाऽपि हरेः पृथक् नेरितेति सम्बन्धः । सर्वोत्कृष्टत्वोक्त्या तस्या हरिसाम्यशङ्कां वारयति– **तस्या अपीति** ॥ गुणैः पर इति सम्बन्धः । दोषवान् न भवतीत्यदोषवान् । एको देवः प्राण इत्युक्तम् । कस्मादेको देवः प्राणो देवेषु सत्स्वपीत्यत आह– **एक इत्युच्यत इति** ॥ तस्यैव मुख्यत्वादित्यर्थः । तत्कुत इत्यत आह– **यस्मादिति** ॥ स ब्रह्म त्यदित्याचक्षत इत्येतद् व्याचष्टे– **ब्रह्मासाविति** ॥ नित्यमित्यवधारणार्थम् । यथा श्रुत्यादिना प्रतिपादितं तथात्वेनैवानाद्यनन्तकालतः मत्स्यादिरूपेण वा याति नतु विकारेण यतः ततः त्यदित्युक्तः 'त्' इत्यस्यार्थः तथात्वेनेति यदित्यस्यार्थो यातीति ॥ ९ ॥

**टिप्पणी—**

[स्वायम्भुवनियामकः वायुः]

**पृथिव्येव यस्याऽयतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ स एवायं शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥**

[श्रीसरस्वतीपार्वत्यः प्रद्युम्ननियामकाः]

काम एव यस्याऽयतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥

[रुद्रनियामकः चतुर्मुखः]

रूपाण्येव यस्याऽयतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥ १२ ॥

[गरुडशेषदक्षाः चन्द्रनियामकाः]

आकाश एव यस्याऽयतनं श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवायं श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

[यमः निर्ऋतिनियामकः]

तम एव यस्याऽयतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं

यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥

[प्राणः सूर्यनियामकः]

रूपाण्येव यस्याऽयतनं चक्षुर्लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥

[वरुणः पर्जन्यनियामकः]

आप एव यस्याऽयतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ॥ १६ ॥

[इन्द्रनियामकः चतुर्मुखः]

रेत एव यस्याऽयतनं हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्याऽत्मनः परायणं स वै वेदिता स्याद् याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्याऽत्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषस्स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

**भाष्यम्—**

**शारीरो मनुरुद्दिष्टः कामः प्रद्युम्न उच्यते ।**
**आदित्यस्थस्तथा रुद्रः श्रोत्रश्चन्द्र उदाहृतः ॥**
**छायामयस्तु निर्ऋतिरादर्शे सूर्य एव च ।**
**पर्जन्यस्त्वप्सु पुरुषः शक्रः पुत्राभिमानवान् ॥**
**अमृतं वायुरुद्दिष्टः स्त्रियः श्रीर्गीरुमा तथा ।**
**सत्यं ब्रह्मा समुद्दिष्टो गरुत्मच्छेषका दिशः ॥**
**आदेशनाद् दिशः प्रोक्ता मृत्युर्यम उदाहृतः ।**
**अन्तर्गतेन रूपेण वायुरेव त्वसुः स्मृतः ॥**
**पालकेन स्वरूपेण ब्रह्मैवाऽत्र प्रजापतिः ।**
**प्रकाशस्त्वान्तरो ज्योतिर्लोको बाह्य इतीर्यते ॥**
**मनःस्थिता मनोनाम्नी बोधरूपत्वतो रमा ।**
**सैवाग्निस्थाऽदनान्नित्यमग्निरित्येव गीयते ॥**
**हृदयं बुद्धिसंस्था सा त्वयनं हृदि यत्ततः ।**
**चक्षुः सा दृष्टिहेतुत्वादष्टानां लोक एव सा ॥ इति च ॥**

**टिप्पणी—**

शारीरः पुरुषः काममयः पुरुषः आदित्ये पुरुषः श्रौत्रः पुरुषः छायामयः पुरुषः आदर्शे पुरुषः अप्सु पुरुषः पुत्रमयः पुरुष इति शब्दाष्टकस्य कोशादिप्रसिद्धार्थपरत्वप्रतीतिनिरासायाभिधेयमाह— **शारीर इत्यादिना** ॥ ननु यद्येवं शारीरादिशब्दैर्मन्वादयो विवक्षिताः तर्हि अमृतस्त्रीसत्यदिङ्मृत्यु-असुप्रजापतीनां तत्तद्देवतात्वं कथमुच्यते प्रसिद्धानां तेषां मन्वाद्युक्तमत्वस्य देवतात्वस्य चाभावादित्यतः अमृतादिशब्दाभिधेयमाह— **अमृतमित्यादिना** ॥ गरुत्मच्छेषकाः गरुडशेषदक्षाः । वायुरेव अमृतशब्दोक्त एव ब्रह्मैव सत्यशब्दोक्त एव अन्तर्गतेन पालकेन स्वरूपेणेत्युक्त्या अमृतं वायुर्बाह्यरूपेण सत्यं ब्रह्मान्तर्गतरूपेणेति सूचितम् । वरुणशब्दस्य देवतापरत्वे वरुणस्य पर्जन्योत्तमत्वे

च विवादाभावात्तदनुक्तिः । तत्र अष्टस्वपि प्रकरणेषु पृथिव्येव यस्याऽयतन-मित्यादिनाऽऽश्रयस्योक्तत्वात् । लोकशब्देन प्रकाशकं ग्राह्यम् । तथाच ज्योतिःशब्दस्य पुनरुक्तत्वं स्यादित्यतस्तयोरर्थभेदमाह– **प्रकाश इति** ।। प्रकाशः प्रकाशकम् । मनोज्योतिरिति प्रकरणाष्टकगतमनःशब्दस्य प्रसिद्धार्थतया व्याख्याननिरासायाभिधेयमाह– **मनःस्थितेति** ।। अन्यथा मनसो विज्ञानहेतुत्वस्य प्रसिद्धत्वान्न वक्तव्यमिति भावः । अग्निर्लोकः हृदयं लोकः श्रोत्रं लोकः चक्षुर्लोकः इत्यत्राग्न्यादिशब्दानां प्रसिद्धार्थत्वे अग्न्यादीनां मन्वादिज्ञानहेतुत्वा-सम्भवात्तदभिधेयमाह– **सैवेति** ।। यद् यस्माद् हृदि रमाया अयनं निवसनं ततो हृदयमित्यर्थः । श्रोत्रं श्रवणहेतुत्वादित्यपि ग्राह्यम् ।

**भाष्यम्—**

**बुद्धिवृत्त्यपेक्षया बहिः प्रकाशहेतुत्वमपि देव्या न विरुद्ध्यते ।**

**टिप्पणी—**

ननु मनोनिष्ठस्य रमारूपस्येव वागभिमान्यग्निहृदयचक्षुःश्रोत्रनिष्ठस्यापि तस्य शरीरान्तर्गतत्वेनान्तःप्रकाशहेतुत्वमेव युक्तं नतु सौरालोकादिबाह्यप्रकाशहेतुत्वम् । अन्यनिष्ठस्यान्यत्र हेतुत्वे विरोधादित्यत आह– **बुद्धीति** ।। बुद्धिवृत्तेस्तु जीवस्वरूपभिन्नत्वेन बहिःप्रकाशत्वमेवेति भावः । तथाच पूर्वमान्तरः प्रकाशः इति साक्षी बाह्यः प्रकाश इति बुद्धिवृत्तिर्विवक्षितेति नानुपपत्तिरिति तात्पर्यम् ।

**भाष्यम्—**

**इम एव त्रयो लोका इति पूर्वोक्तानां देवानामनुक्तौ कथं लोकमात्रे सर्वदेवानामन्तर्भावः? । उक्ताङ्गीकारेऽनन्तर्भावः कथम्? कथं चाग्न्यादिषु?**

**टिप्पणी—**

इम एव त्रयो लोका इत्येतत् वायुवीन्द्रमहेश्वरा इति प्रमाणेन व्याख्यातं तत्र लोकशब्दस्योक्तार्थत्वमनङ्गीकृत्य पृथिव्यन्तरिक्षद्युरूपप्रसिद्धलोकपरत्वाङ्गीकारे बाधकमाह– **इम एवेति** ।। इम एव त्रयो लोका इत्यत्र लोकशब्देन

पूर्वोक्तानां वायुवीन्द्रमहेश्वराणामनुक्तौ पृथिव्यन्तरिक्षद्युरूपलोकमात्रोक्तौ एतेषु हीमे सर्वे देवाः इति वाक्यशेषोक्तः सर्वदेवानां लोकमात्रेऽन्तर्भावः कथं स्यात्। सर्वदेवानां जडलोकाधीनत्वाभावादित्यर्थः। उपलक्षणमेतत्। लोकानां देवत्वाभावेन कतमे त्रयो देवा इति प्रश्नस्येदमुत्तरं न स्यादित्यपि ग्राह्यम्। लोकशब्दस्य पूर्वोक्तवाय्वादिदेवतापरत्वाङ्गीकारेऽपि कथमन्तर्भाव उपपद्यत इत्यत आह– **उक्तेति** ॥ वायुवीन्द्रमहेश्वराणामतिसमर्थत्वेन सर्वदेवानां तदधीनत्वात्तेषां तत्रान्तर्भावो घटत एवेति भावः। ननु नास्माभिस्त्रयो लोकाः पृथिव्यादय इति व्याख्यायते। येनोक्तदोषः स्यात्। किन्तु पृथिवीमग्निं चैकीकृत्यैको देवः, अन्तरिक्षं वायुं चैकीकृत्य द्वितीयः, दिवमादित्यं चैकीकृत्य तृतीय इत्येवं त्रयो लोका इत्यनेनाग्न्यादयस्त्रयो देवा उच्यन्ते। एषु त्रिषु देवेषु हि यस्मात् सर्वे देवाः अन्तर्भवन्तीति व्याख्यायत इत्यतस्तत्रापि बाधकमाह– **कथं चेति** ॥ सर्वदेवानामन्तर्भाव इति वर्तते। अग्न्यादीना-मिन्द्राद्युत्तमत्वाभावेनेन्द्रादीनां तदधीनत्वासम्भवादिति भावः। एतेन इम एव त्रयो लोका इति क्रमेणाग्निवाय्वादित्यात्मना एकीकृत्य त्रयो देवा उच्यन्ते। कथं हि यस्मादेषु त्रिषु लोकेषु इमे अग्निवाय्वादित्यान्तर्भूताः सर्वे देवाः अन्तर्भवन्तीत्येतदपि निरस्तं अग्निवाय्वादित्येषु सर्वदेवाना-मन्तर्भावासम्भवात्।

**भाष्यम्—**

**न चावासमात्रमत्र विवक्षितम्। प्रतिशरीरमपि सर्वदेवानामावासान्न लोकादीनां विशेषः। सामर्थ्याधिक्यं चात्र विवक्षितम्।**

**टिप्पणी—**

ननु लोकमात्रे कथं सर्वदेवानामन्तर्भाव इति यदुक्तं तदयुक्तम्। एषु त्रिषु लोकेषु सर्वे देवा आवसन्ति इत्यर्थाङ्गीकारात्। आवासमात्रस्य च लोकेष्वपि सत्त्वात्। अग्न्यादौ सर्वदेवानामन्तर्भावो नाम अग्न्याद्युपजीव्यत्वादिकमेव विवक्षितमिति न तत्राप्यनुपपत्तिरित्यत आह– **नचेति** ॥ आवास इत्युपलक्षणम्।

उपजीव्यत्वादिकमपीति ग्राह्यम् । निवासत्वादिकमित्युत्तरत्रादिपदप्रयोगात् । मात्रशब्दोऽनभिमतव्यावर्तकः कुतो नेति चेन्न । यदि त्रिषु लोकेषु सर्वदेवानामावासमात्रं विवक्षितं स्यात् तदा प्रतिशरीरमपि सर्वदेवानां तत्त्वाभिमानितयाऽऽवासात् लोकानां शरीरापेक्षया विशेषो न स्यात् । यदि वा अग्न्यादिषु सर्वदेवानामुपजीव्यत्वादिकं विवक्षितं तदा वक्तव्यं तदुपजीव्यत्वादिकं किमग्न्यादेः सर्वदेवोत्तमत्वेन उत हविरादानाद्युपकारमात्रेण । नाऽद्यः । तदभावादित्युक्तत्वात् । न द्वितीयः । प्रतिशरीरमपि देवानां नियामकतयाऽवासात्तन्नियम्यजीवस्यापि तादृगुपजीव्यत्वसत्त्वेनाग्न्यादीनां जीवाद् विशेषाभावापत्तेः । तथाच विशिष्य एतेषु हीमे सर्वे देवाः इत्युक्तिरयुक्ता स्यादित्याह– **प्रतिशरीरमिति** ॥ नचावासमात्रमित्युक्तमात्रपदेनाधिकमपि विवक्षितमिति लब्धं तत्किमित्यत आह– **सामर्थ्येति** ॥ यद्वा यदुक्तं कथं लोकमात्रे सर्वदेवानामन्तर्भाव इति उक्ताङ्गीकारेऽनन्तर्भावः कथमिति वा तत्रोभयत्र हेतुमाह– **सामर्थ्येति** ॥ चशब्दो हेत्वर्थः । अत्र एषु हीमे सर्वे देवा इति वाक्ये । तथाच लोकमात्रस्य सामर्थ्याधिक्याभावाद् वायुवीन्द्रमहेश्वराणां तु सामर्थ्याधिक्यसद्भावादिति भावः ।

**भाष्यम्**——

**एतेषु हीदं सर्वं षडिति ।**

**यदस्मिन्निदं सर्वमध्याध्रोत् स ब्रह्म त्यदित्याचक्षते ।**

**महिमान एवैषाम् इत्यादिषु षड्गुणोद्रेकादीनामुक्तेः ॥**

**अन्तर्भावस्य च महिमकारणकत्वोक्तेः ।**

**टिप्पणी**——

सामर्थ्याधिक्यमत्र विवक्षितमिति कुतो ज्ञायते सामर्थ्याधिक्यस्यान्तर्भावहेतुत्वं च कुतो ज्ञायत इत्यत आह– **एतेषु हीति** ॥ प्रथमादिपदेन तस्य का देवता इति प्रश्नोत्तररूपम् अमृतमिति होवाचेति स्त्रिय इति होवाच इत्यादि

ग्राह्यम् । द्वितीयादिपदेन गुणाध्यार्धत्वगुणपरिपूर्णत्वशारीरादिदेवतात्वादीनां ग्रहणम् । इत्यादिषु वाक्येषु मध्ये आद्येषु त्रिषु वाक्येषु आदिपदोपात्तेषु च षड्गुणोद्रेकादीनामुक्तेः सामर्थ्याधिक्यमत्र विवक्षितमिति ज्ञायते । एतस्यापि तत्समानन्यायत्वात् चतुर्थे त्रयश्च त्री च शतेत्युक्तानां देवानां त्रयस्त्रिंशत्सु देवेषु अन्तर्भावस्य महिमकारणकत्वस्य सामर्थ्यपरिमितत्वकारणत्वस्योक्तेरन्तर्भावाधिकरणस्य सामर्थ्याधिक्यमितरेषां तत्रान्तर्भावे कारणमिति ज्ञायत इति भावः ।

**भाष्यम्—**

**इदं सर्वं गुणषट्कं पूर्णं गुणषट्कमित्यर्थः । इदंशब्दो विवक्षितत्वादयं भगवानितिवत् । एवमेवेदं सर्वमध्यार्धोदिति च ।**

**टिप्पणी—**

षड्गुणोद्रेकेति 'एतेषु हीदं सर्वं षट्' इति वाक्यतात्पर्यमुक्तम् । तस्य तत्राप्रतीतेरनूद्य व्याचष्टे– **इदमिति** ।। सर्वं षडित्यनुवादे कर्तव्य एकवचनान्तस्य सर्वशब्दस्य बहुवचनान्तेन षडित्यनेन सामानाधिकरण्यसिद्ध्यर्थं गुणषट्कमित्युक्तम् । सर्वशब्दार्थः पूर्णमिति । यद्वा सर्वं षडिति सामानाधिकरण्यानुपपत्तिशङ्कापरिहारायाह– **इदं सर्वमिति** ।। गुणषट्कस्य सर्वत्वं नाम किमित्यत आह– **पूर्णमिति** ।। ननु गुणषट्कस्य पूर्वमप्रकृतत्वादिदमिति कथं तस्य परामर्श इत्यत आह– **इदंशब्द इति** ।। गुणषट्कस्य विवक्षितत्वात् वक्तुमिष्टत्वेन बुद्धिसन्निहितत्वात् तत्र इदंशब्दः प्रयुक्त इत्यर्थः । ग्रन्थाप्रकृतेऽपि बुद्धिसन्निहिते इदंशब्दप्रयोगे दृष्टान्तमाह– **अयमिति** ।। 'अयं मे हस्तो भगवान्' इत्यत्रायमिति विवक्षित एवार्थे यथा प्रयुज्यते तथाऽत्रापीत्यर्थः । उक्तन्यायमन्यत्राप्यतिदिशति– **एवमेवेति** ।। अयमपि इदंशब्दः ग्रन्थाप्रकृतेऽपि बुद्धिसन्निहिते प्रयुक्त इत्यर्थः ।

**भाष्यम्—**

**गुणाधिक्येन तदधीनत्वे विवक्षिते निवासत्वादिकमन्तर्भवति। उत्तमानामधिकव्याप्त्यादेः । न तु निवासत्वादौ गुणाधिक्यादिकम् । कथञ्च तन्महिमत्वेनान्तर्भावमुक्त्वा निवासत्वमात्रेणान्तर्भाव उच्यते?**

**टिप्पणी—**

ननु नचावासमात्रमत्र विवक्षितम् । सामर्थ्याधिक्यं चेत्युक्त्याऽवासोऽपि विवक्षितो ज्ञायते । तथाच तेनैवान्तर्भावोक्त्युपपत्तौ सामर्थ्याधिक्यविवक्षायामन्तर्भावोक्तिरित्यङ्गीकारे किं नियामकमित्यत आह– **गुणाधिक्येनेति** ।। तदधीनत्वम् इत्यनेनान्तर्भावो व्याख्यातः । आदिपदेनोपजीवनादिकं ग्राह्यम् । तत्र हेतुमाह– **उत्तमानामिति** ।। आदिपदेन नियमनशक्त्यादीनां ग्रहणम् । तथाचाधिकव्याप्त्यादिमत्सूत्तमेष्वन्तर्भूतानां तेषां तत्र निवासत्वादिकमपि सम्भवतीति भावः । ननु गुणाधिक्येन तदधीनत्वे निवासत्वादिकमिव निवासत्वादौ गुणाधिक्यादिकमन्तर्भवति चेत् को विशेषो युष्मद्व्याख्यान इत्यत आह– **नत्विति** ।। निवासादिहेतुगृहादौ गुणाधिक्यादर्शनादिति बावः । एतेषु हीमे सर्वे देवा इत्यत्र निवासत्वमात्रेणान्तर्भाव उच्यत इत्यङ्गीकारे उपक्रमविरोधलक्षणं दूषणान्तरमाह– **कथं चेति** ।। तन्महिमत्वेन तदपेक्षया सामर्थ्यन्यूनत्वेन उक्त्वा महिमान एवैषामेत इत्यनेनेत्यर्थः ।

**भाष्यम्—**

**कथं चान्यथा कामादीनां प्रसिद्धमहिमानां स्त्रीमात्रादिकं देवतोच्यते? प्रसिद्धं चैतत् ।**

**टिप्पणी—**

एवम् इम एव त्रयो लोका इति वाक्यस्योक्तार्थत्वमुपपाद्येदानीममृतस्त्रीसत्यादिशब्दानां अमृतं वायुरुद्दिष्टः स्त्रियः श्रीर्गीरुमा तथेत्याद्युक्तव्याख्यानानङ्गीकारे बाधकमाह– **कथञ्चेति** ।। चशब्दः पूर्ववाक्योपपादनेन सह समुच्चयार्थः ।

अन्यथा अमृतादिशब्दैः पूर्वोक्तवाय्वादिदेवानामनुक्तौ । ननु स्यादेतत् । यदि पूर्वोक्तदेवानां सामर्थ्याधिक्यमेव प्रमितं स्यात् तदेव कुत इत्यत आह– **प्रसिद्धं चैतदिति** ॥

**भाष्यम्—**

**'आत्मा देवानां भुवनस्य गर्भः' । 'आत्मा ते वातः' । 'इन्द्रो वै देवानामोजिष्ठः' । 'ब्रह्मा देवानां प्रथमः सम्बभूव' । 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' । 'तमेताः सप्ताक्षितय उपतिष्ठन्ते' । 'तद् या इमा अक्षँल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्तो यच्छुक्लं तेनेन्द्रः' ।**

**टिप्पणी—**

आद्यं प्रमाणद्वयं वायोः सर्वदेवोत्तमत्वे । देवानामात्मा स्वामीत्यर्थः । भुवनस्य गर्भः भुवनं व्याप्य वर्तमानः । तस्मै वाताय हविषा विधेमेति वाक्यशेषादिदं वायुविषयम् । हे इन्द्रवातः वायुः ते त्वदादीनाम् आत्मा स्वामीत्यर्थः । त्रयस्त्रिंशत्सु देवेषु षण्णामेवाधिक्यस्योक्तत्वेनेन्द्रस्य इतरदेव-साधारण्यशङ्कापरिहाराय तस्यापीतरदेवोत्तमत्वे प्रमाणमाह– **इन्द्र इति** ॥ ओजिष्ठः अवष्टम्भनशक्तिमान् । पदैक्याद् वायुग्रहणेन ब्रह्मापि गृहीत इत्युक्त्या ब्रह्मणः सर्वदेवोत्तमत्वं सूचितम् । तत्र प्रमाणमाह– **ब्रह्मेति** ॥ अयमिति वाक्यं वायोर्विष्ण्वधीनत्वे मानम् । तमेता इति वायोः सर्वदेवोत्तमत्वे ।

**भाष्यम्—**

**'अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ।**
**ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठस्तु मारुतः ॥'**

**'वायुर्भीमो भीमनादो महौजाः सर्वेषां च प्राणिनां प्राणभूतः ।**
**अनावृत्तिर्देहिनां देहपाते तस्माद् वायुर्देवदेवो विशिष्टः' ।**

**'क्रतुं सचन्त मारुतस्य वेधसः' ।**

**टिप्पणी—**

तत्रैव स्मृतिद्वयं पठति– **अश्वमेध इति** ।। सर्वेषां चेति चशब्दः अभिव्याप्त्यर्थकापिशब्दार्थः । प्राणिनां प्राणभूतत्वे हेतुमाह– **अनावृत्तिरिति** ।। देहिनां देहपाते अनस्य मुख्यप्राणस्यावृत्तिः कारणत्वमित्यर्थः । वेधसः सर्वज्ञा वरुणाद्या देवाः । मारुतस्य वायोः । क्रतुं सचन्त कृतवन्त इति वायोः सर्वदेवोत्तमत्वे मानम् ।

**भाष्यम्—**

**'वायोरात्मानं कवयो निचिक्युः' । 'आत्मत एष प्राणो जायते' । 'यो वायौ तिष्ठन्' । 'देवानां देवता वायुर्वायोर्देवो जनार्दनः' । 'स प्राणमसृजत । प्राणाच्छ्रद्धाम्' । 'एतस्माज्जायते प्राणः' ।**

**'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।**
**ब्रह्मा मामाश्रितो नित्यं नाहं कश्चिदुपाश्रितः ।।'**

इत्यादिषु सर्वत्र ।

**टिप्पणी—**

विष्णोर्वायूत्तमत्वे उत्तरं वाक्यषट्कम् । निचिक्युः ज्ञातवन्तः । आत्मतः परमात्मनः । प्राणाच्छ्रद्धामित्यनेनाध्यर्धस्य प्राणस्यान्नं चैव प्राणश्चेत्युक्तान्नाख्यश्रद्धोत्तमत्वमुक्तमपि प्रमापितं भवति । इम एव त्रयो लोका इति यद् रुद्रस्योमादिसर्वदेवाश्रयत्वमुक्तं यच्च ब्रह्मणः रुद्राद्याश्रयत्वमभिप्रेतं विष्णोश्च तदाधारत्वं तत्र प्रमाणमाह– **रुद्रमिति** ।। इत्यादिषु सर्वत्र एतत् वाय्वादेः सामर्थ्याधिक्यं प्रसिद्धमित्यर्थः ।

**भाष्यम्—**

**'श्रियः प्रसादं स कुशेशयेशयः श्रितः स चिन्त्यः प्रशशंस शौरिम्'** इत्यादि च ।

टिप्पणी—

श्रीः स्वरूपविभेदेऽपि सर्वोत्कृष्टाऽपि नित्यश इत्युक्तं तत्र प्रमाणमाह– **श्रिय इति** ॥ श्रियः प्रसादं श्रितः कुशेशयेशयः नीरजे स्थितः स ब्रह्मा यं शौरिं प्रशशंस सः कृष्णश्चिन्त्य इति योजना ॥ १०-१७ ॥

उपनिषत्—

**शाकल्येति होवाच याज्ञवल्क्यस्त्वां स्विदिमे ब्राह्मणा अङ्गारावक्रयणमकृता३ इति ॥ १८ ॥**

[दिग्देवताः, तेषां आश्रयदातारश्च]

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति ॥ १९ ॥**

भाष्यम्—

**दिशो वेद सदेवाः सप्रतिष्ठा इति याज्ञवल्क्यवचनं सर्वप्रतिष्ठात्वेन ब्रह्मणोऽपि ज्ञानं भवतीति किं ब्रह्म विद्वानित्यस्य चोत्तरम् ।**

टिप्पणी—

शाकल्यो याज्ञवल्क्येति सम्बोध्योवाच । कुरुपाञ्चालानां ब्राह्मणानत्यवादीरिति यत् इदं भवान् ब्रह्म विद्वानिति सदेवाः सप्रतिष्ठा दिशो वेदेति किमिति प्रतीत्या दिशो वेद स देवा इति वाक्यमपि शाकल्यवचनमिति प्रतीयते तामपाकरोति– **दिश इति** ॥ अन्यथा किं ब्रह्म विद्वानित्यस्योत्तराभावप्रसङ्ग इति भावः । ननु दिशो वेदेत्यस्य याज्ञवल्क्यवचनत्वेऽपि किं ब्रह्म विद्वानित्यस्य कथमुत्तरं जातम् । एतस्य तदुत्तरत्वाप्रतीतेरित्यत आह– **सर्वेति** ॥ दिशो वेदेत्युच्यमानं ज्ञानं सप्रतिष्ठाः परब्रह्मपर्यन्तमाश्रयपरासाहित्येन दिशो वेदेत्युक्त्याऽऽदित्याद्युदानान्तसर्वाश्रयत्वेन ब्रह्मणोऽपि ज्ञानं भवतीति किं

ब्रह्म विद्वानित्यस्यापि इदमुत्तरं भवतीत्यर्थः । ननु किं ब्रह्म विद्वानिति प्रश्ने ब्रह्म वेदेत्येव वक्तव्ये सप्रतिष्ठाः सदेवा दिशो वेदेति किमर्थमुच्यत इति चेन्न । न केवलमहं ब्रह्ममात्रं वेद किन्तु तदाश्रिता दिशो देवांश्च वेदेति स्वस्य ज्ञानाधिक्यज्ञापनाय तथोक्तत्वात् । तदिदमुक्तं सर्वप्रतिष्ठात्वेनेति ।

उपनिषत्—

**यद् दिशो वेत्थ सदेवाः सप्रतिष्ठाः किं देवतोऽस्यां प्राच्यां दिश्यसीति आदित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद् याज्ञवल्क्य ॥ २० ॥**

भाष्यम्—

यदि दिशो वेत्थ तर्हि किं देवतोऽस्याम् ।

आदित्यस्याऽश्रयश्चक्षुर्नामा स्वायम्भुवो मनुः ।
चक्षुस्थो दृष्टिशक्तीशो रूपात्मेन्द्रस्तदाश्रयः ॥
बुद्धितत्त्वात्मिकोमा च शक्रस्यापि समाश्रयः ।

टिप्पणी—

यद्दिशो वेत्थ सदेवाः सप्रतिष्ठा इत्यत्र खण्डस्य समाप्तत्वादन्वयाप्रतीतेः उत्तरखण्डस्थवाक्येनान्वयं दर्शयन् किञ्चिद् व्याचष्टे— **यदीति** ॥ आदित्यश्चक्षुषि चक्षुःरूपेषु रूपाणि हृदये प्रतिष्ठितानीत्युक्तम् । तत्राऽदित्यादीनां जडचक्षुराद्याश्रितत्वमुच्यत इति प्रतीतिनिरासाय चक्षुरादिशब्दार्थकथनपूर्वकं तद् व्याचष्टे— **आदित्यस्येत्यादिना** ॥ मनोश्चक्षुःशब्दप्रवृत्तौ निमित्तमाह— **चक्षुःस्थ इति** ॥

दृष्टिशक्तीशः दृष्टिशक्तिनियामकः । शक्रस्यापि अन्याश्रयस्यापीत्यर्थः । एवं तस्या अपीत्याद्यपि व्याख्येयम् ॥ २० ॥

उपनिषत्—

**किं देवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन् प्रतिष्ठित इति यज्ञ इति कस्मिन् यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायां ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद् याज्ञवल्क्य ॥ २१ ॥**

भाष्यम्—

एवं यमस्याऽश्रयश्च यज्ञमान्यनिरुद्धकः ॥
दक्षिणामानिनी देवी रतिरेव तदाश्रयः ।
श्रद्धारूपः सदा कामस्तस्या अपि समाश्रयः ॥
हृदयात्मिक्युमा तस्य कामस्यापि समाश्रयः ।

टिप्पणी—

यमो यज्ञे, यज्ञो दक्षिणायां, दक्षिणा श्रद्धायां, श्रद्धा हृदये प्रतिष्ठितेत्युक्तं तद्व्याचष्टे– **एवमित्यादिना** ॥ चशब्दोऽपिशब्दार्थः । यमस्यापि प्रसिद्धभावस्यापीत्यर्थः ॥ **रतिरेवेति** ॥ प्रसिद्धिद्योतनायैवकारः । अनिरुद्धस्य रतिपुत्रत्वात्तत्समस्यापि तदाश्रयत्वं युक्तम् ॥ २१ ॥

उपनिषत्—

**किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स**

वरुणः कस्मिन् प्रतिष्ठित इत्यप्स्विति कस्मिन्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद् याज्ञवल्क्य ॥ २२ ॥

भाष्यम्—

अब्देवता सदा चन्द्रो वरुणस्य समाश्रयः ॥
रेत आत्मा सुरगुरुः सोमस्यापि समाश्रयः ।
तस्याप्युमैवाऽश्रयः स्यात्............... ॥

टिप्पणी—

वरुणोऽप्सु आपो रेतसि रेतो हृदये प्रतिष्ठितमित्युक्तं तद् व्याचष्टे–अब्देवतेत्यादिना ॥ उमैव शक्रकामाश्रयत्वेनोक्तैव ॥ २२ ॥

उपनिषत्—

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद् याज्ञवल्क्य ॥ २३ ॥

भाष्यम्—

...............तस्यैव तु दिगीशितुः ॥
सोमस्य दीक्षारूपा तु शतरूपा समाश्रयः ।

**तस्यास्सत्यात्मको देवो मनुरेव समाश्रयः ।**
**तस्याप्युमैवाऽश्रया सा स्रष्टृरूपस्य नित्यदा ।।**

**टिप्पणी—**

सोमो दीक्षायां दीक्षा सत्ये सत्यं हृदये प्रतिष्ठितमित्युक्तं तद् व्याचष्टे– **तस्यैवेत्यादिना** ।। तुशब्दो विशेषार्थः । तमेवाह– **दिगीशितुरिति** ।। तथाच सुरगुर्वाश्रितस्यैव सोमस्य रूपविशेषापेक्षया शतरूपाश्रयत्वं न विरुद्धमिति भावः । नच शतरूपायाः सोमसमानत्वोक्तेः कथमेतदिति वाच्यम् । समानत्वेऽपि स्वेच्छयाऽऽश्रयाश्रयिभावे विरोधाभावात् । यद्वा एतदुक्त्यनुरोदेन कामादिन्द्रस्येव शतरूपाया अपि सोमात्किञ्चिदाधिक्यमस्तीति ज्ञायते । साम्योक्तिस्तु इन्द्रकामसाम्योक्तिवद्व्याख्येया । सत्यशब्दार्थः स्रष्टृरूपस्येति । रूपविशेषोक्तेः पूर्वोक्त एवाभिप्रायः ।। २३ ।।

**उपनिषत्—**

**किंदेवतोऽस्या ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्नु प्रतिष्ठित इति वाचीति कस्मिन्नु वाक् प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितमिति ।। २४ ।।**

**भाष्यम्—**

**मध्यदिक्स्वामिनोऽग्नेश्च स्वाधारो वाग्बृहस्पतिः ।**
**तस्याप्युमैव हृदयरूपा नित्यं समाश्रयः ।।**

**टिप्पणी—**

अग्निर्वाचि वाक् हृदये प्रतिष्ठितेत्युक्तं तद्व्याचष्टे– **मध्यदिक्स्वामिन इत्यादिना** ।। ध्रुवायां दिशीत्यस्यार्थो मध्यदिगिति । प्राची दक्षिणा मध्येत्यर्थः । सुष्ठ्वाधारः स्वाधारः ।। २४ ।।

उपनिषत्—

[याज्ञवल्क्येन शाकल्यपराजयः]

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मन्मन्यासै यध्येतदन्यत्रास्मत् स्याच्छ्वानो वा एनद् अद्युर्वयांसि वा एनद् विमथ्नीरन्निति ॥ २५ ॥**

भाष्यम्—

तस्याः समाश्रयो रुद्रस्त्वमहश्चेति रूपवान्।
अहङ्कारात्मको नित्यमात्मोमा परिकीर्तिता।
बुध्यात्मनैवाततत्वाद् यद् यस्यानाश्रयो हरः।
तदा बोधात्मिका शक्तिर्नास्या देहाभिरक्षणे॥
अरक्षितान् मानुषादीन् श्वानो वाऽद्युर्वयांसि वा॥

टिप्पणी—

कस्मिन् हृदयं प्रतिष्ठितमिति प्रश्नस्योत्तरं न प्रतीयत इत्यतो यत्रैतदन्यत्रास्मन्मन्यासा इत्यादि उत्तरवाक्यानुरोधेनोत्तरमाह– **तस्या इति** ॥ अस्मदिति त्वं चेति प्रयोगानुरोधादुक्तं त्वमहं चेति रूपवानिति । तत्र हेतुरहङ्कारात्मक इति। त्वमित्येच्छब्दार्थकथनप्रसङ्गेन त्वं चात्मा चेति तत्समभिव्याहृतात्मशब्दाभिधेयमाह– **आत्मेति** ॥ बुद्ध्यात्मना बुद्ध्यभिमानित्वेन यद्ध्येतदन्यत्रास्मत्स्यात्। श्वानो वै न दद्युरिति वाक्ये हृदयाख्योमाया अहंकाराभिमानी रुद्रादन्याश्रितत्वाङ्गीकारे बाधकमुच्यत इति प्रतीयते । तदयुक्तम् । तस्या अपि प्राणाख्यशेषाश्रयत्वस्य वक्ष्यमाणत्वादित्यतस्तद्यथावद् व्याचष्टे– **यद्यस्या इति** ॥ उमाया रुद्रानाश्रितत्वस्य श्वानो वै न दद्युरित्यत्र साक्षादापादकत्वायोगात् साक्षात्तदापाद्यमुक्तं तदेति । बोधात्मिका शक्तिः बुद्ध्यभिमानशक्तिः स्यादिति शेषः । मानुषादीन् देहानित्यर्थः । अनेनैतदित्युक्तार्थं भवति ॥ २५ ॥

उपनिषत्—

**कस्मिन्नु त्वं चाऽत्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन् व्यानः प्रतिष्ठित इति उदान इति कस्मिन् उदानः प्रतिष्ठित इति । समान इति स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरूह्य प्रत्यूहात्यक्रामत् तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे विवक्ष्यसि मूर्धा ते विपतिष्यतीति तं ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥**

भाष्यम्—

शिवस्य च तथोमायाः प्राणात्मा शेष आश्रयः ।
शेषस्यापानरूपा सा भारत्येव व्यपाश्रयः ॥
तस्या व्यानाभिधो वायुर्विशिष्टानो यतो हि सः ।
उन्नेतृत्वादुदानाख्या तस्य श्रीराश्रयः सदा ।
समानाख्यो हरिस्तस्याः सहैव ह्यानयत्यसौ ॥
स्वावरस्यानकास्त्वन्ये सर्वेषां चेष्टको हि सः ।

टिप्पणी—

त्वं चाऽत्मा च प्राणे स चापाने स च व्याने स च उदाने स च समाने प्रतिष्ठित इत्युच्यते । तद्व्याचष्टे– **शिवस्येत्यादिना** ॥ शेषस्य शिवाश्रयत्वं स्वरूपसाम्येऽपि पदाधिक्याद्युक्तं विशिष्टान इत्यनेन विशेषेण

आ समन्तादन इति व्यान इति व्याख्यातं भवति– **उन्नेतृत्वादिति** ॥ उद् ऊर्ध्वम् आ सम्यक् नयतीत्युदान इत्यर्थः । तस्या हरिराश्रय इत्यनुवर्तते ॥ **स हैवेति** ॥ स्वात्मना सहैव नित्यावियोगितयैव तामानयतीत्यर्थः । यद्वा, सहैव नियामकैः सहैव नियम्यान् सर्वानिति यावत् । अनेन सममानयतीति समान इति व्याख्यातं भवति । अन्येषामपीदं प्रवृत्तिनिमित्तं चेत् कथमस्यैव समानशब्दवाच्यत्वमित्यत आह– **स्वावरस्येति** ॥ अनकाश्रेष्टकाः ।

**भाष्यम्—**

**स एष भगवान्नैवं श्रीवदन्याश्रयो हरिः ।**
**नच ब्रह्मादिवद् विष्णुर्नैवासौ बद्धवत् क्वचित् ॥**
**नच मुक्तवदीशेशः कुत एव जडोपमः ॥**
**अग्राह्योऽशीर्यसङ्गोऽसावसितश्च न रिष्यति ।**
**नहि सर्वात्मना क्वापि केनचिद् ज्ञायते क्वचित् ॥**
**स्वल्पोऽपि शीर्यते नैव कारणात् कालतोऽपि वा ।**
**न लिप्यते जगन्नाथः क्वचिद् दोषेण केनचित् ॥**
**भूतपूर्वो भविष्यो वा बन्धो नास्य कुतश्चन ।**
**नच नाशो भवेत् क्वापि न नशिष्यति च क्वचित् ॥**
**अन्यत्सर्वं गृहीतं हि तेन ज्ञानादिना सदा ।**
**अशीर्यत्वादयोऽन्येषां सर्वेषां तत्प्रसादतः ॥**
**अतस्तस्यापि वैषम्यान्नेति नेत्याह तं श्रुतिः ॥ इत्यादि च ॥**

**टिप्पणी—**

स एष नेति नेत्यात्मेति वाक्यं व्याचष्टे– **स इति** ॥ भगवान् हरिरित्यात्मशब्द-व्याख्यानम् । इति नेत्यस्यार्थः एवं नेति । तदेव विवृणोति– **श्रीवदन्याश्रय इति** ॥ द्वितीयस्य नेत्यस्यार्थो नच ब्रह्मादिवदिति । एवं दुःखस्पृष्टतदस्पृष्ट-द्विविधचेतनविवक्षया तद्वैलक्षण्यप्रतिपादकतया नेतिनेतीति वाक्यं व्याख्याय इदानीं बद्धमुक्तद्विविधचेतनविवक्षयाऽपि तद्वैलक्षण्यप्रतिपादकत्वेन व्याचष्टे–

**नैवासाविति** ॥ नन्वेवं चेतनवैलक्षण्यमेव प्रतिपादितं जडवैलक्षण्यं कुतो न प्रतिपाद्यत इत्यत आह– **कुत एवेति** ॥ कैमुत्यसिद्धत्वेनानुक्तिरिति भावः । श्रुतौ स एष आत्मेत्येतद् अग्राह्योऽशीर्योऽसङ्गोऽसितो न रिष्यतीत्यत्रापि सम्बद्ध्यत इति भावेनाऽह– **अग्राह्य इति** ॥ असौ भगवान् हरिः सज्यत इति सङ्गः शीर्यश्चासौ सङ्गश्च शीर्यसङ्गः न शीर्यसङ्गोऽशीर्यसङ्गः । श्रुतावात्मनोऽग्राह्यत्वे हेतुरुच्यते नहि गृह्यत इति तद्युक्तम् । ईश्वरस्यापि गृह्यमाणत्वादित्यतस्तद् व्याचष्टे– **नहीति** ॥ क्वापि देशे क्वचित्काले सर्वात्मना न ज्ञायते इत्युक्त्याऽल्प एव ज्ञायत इति लभ्यते । ननु तर्हि नहि शीर्यते नहि सज्यते न व्यथते न रिष्यतीत्यत्रापि सर्वात्मना शीरणादिनिषेधेऽल्पः शीर्यत इत्यादि स्यादित्यत आह– **स्वल्पोऽपीति** ॥ न व्यथते न रिष्यतीत्युक्त्या वर्तमाननिषेधमात्रप्रतीतिवारणाय क्रियाप्रबन्धे लडित्यभिप्रेत्याऽह– **भूतपूर्वो भविष्यो वेति** ॥ **नच नाशो भवेदिति च** ॥ नचैवं व्याख्याने साध्यावैशिष्ट्यदोषः । अग्राह्योऽशीर्यसङ्गोऽसावसितश्च न रिष्यतीत्यत्र इत्युच्यत इत्यध्याहारात् । यद्वाऽग्राह्य इत्यादिकं सम्बन्धमात्रप्रदर्शनपरम् । प्रतिज्ञातमग्राह्यत्वादिकमेवोक्तशङ्कानिरासाय नहि सर्वात्मनेत्यादिना विवृतम् । नहि गृह्यत इत्यादिवाक्यं तु यथा हेतुप्रतिपादकं तथाऽचार्यः स्वयमेव व्याख्यास्यति । ननु नेति नेतीत्युक्तवैलक्षण्ये अग्राह्यत्वादिकं हेतुत्वेनोच्यते । इदं चेदन्यनिष्ठं तदा कथं हेतुः स्यादित्यत अन्यस्य सर्वात्मना अग्राह्यत्वादिकं नास्तीत्याह– **अन्यदिति** ॥ अन्यत् रमादिकं तेन परमात्मना गृहीतं सर्वात्मनेति शेषः । ज्ञानादिनेत्यादिशब्देन चक्षुरादिकं ज्ञानेन गृहीतं विषयीकृतम् । ननु सर्वात्मनाऽग्राह्यत्वस्य विष्णोरन्यत्राभावेऽपि निरुक्ताशीर्यत्वस्य रमायां मुक्तेषु च सत्वात् । निरुक्तानामसङ्गत्वाबद्धत्वानाश्यत्वानां मुक्तेष्वभावेऽपि रमायां सत्त्वात् कथमयं तद्वैलक्षण्ये हेतुः स्यादित्यत आह– **अशीर्यत्वादय इति** ॥ रमाया मुक्तानां चेत्यर्थः । अत्र अशीर्यत्वमात्रापेक्षया अन्येषामिति बहुवचनम् । श्रुतौ स्वातन्त्र्येण अशीर्यत्वादिकमेव विवक्षितमिति भावः । ततश्चाग्राह्यत्वा-

देरन्यसाधारण्याभावेन तस्य वैलक्षण्ये हेतुत्वं युज्यत एवेत्याह– **अत इति** ॥ सर्वात्मनाऽग्राह्यत्वादेर्विष्णुमात्रनिष्ठत्वात्। तस्य हरेरतिवैषम्याद् रमादिभ्योऽत्यन्तविलक्षणत्वात् ।

**भाष्यम्—**

**तद्गुणानां सुपूर्णानां विप्रुट्कं प्रतिबिम्बितम्।**
**श्रीर्भुङ्क्ते तद्गुणान् ब्रह्मा तस्य रुद्रादयोऽपि च ॥ इत्यादि च ॥**

**अहर्ज्ञानमस्य लीनमित्यहर्लीक एवाहल्लिकः। अज्ञेत्याक्षिपति। नहि गृह्यत इत्यादिना ग्रहणशीरणादिषु सर्वप्रमाणाभावं दर्शयति।**

**नेति नेत्यादिरूपेण विज्ञापितगुणोऽपि तु।**
**विशेषापेक्षया पृष्टो न शाकल्यो विवेद तम् ॥ इति ब्रह्माण्डे ॥**

**टिप्पणी—**

समानादिपदवाच्यविष्ण्वादीनाम् उदानादिपदवाच्यलक्ष्म्याद्याश्रयत्वं नाधारत्वमात्रमित्याह– **तद्गुणानामिति** ॥ तर्ह्यभेदः स्यादित्यत उक्तम्– **प्रतिबिम्बितमिति** ॥ तद्गुणान् श्रीगुणप्रतिबिम्बभूतस्वगुणान् । अस्योत्तरत्रापि सम्बन्धः । अहल्लिकेत्यस्य अहनि लीयत इत्यहल्लिकः प्रेत इति यावत्। तथाच प्रेतनाम्ना शाकल्यसम्बोधनं क्रियत इति परव्याख्यानमसत् । अहनि लीयत इत्यस्य प्रेत इत्यर्थत्वासम्भवात् । लक्षणायां च स एव दोष इति भावेन स्वयं व्याचष्टे– **अहर्ज्ञानमिति** ॥ अहर्दिनं प्रकाशश्च कचिज्ज्ञानं इत्यभिधानं प्रागेवोक्तम् । तर्ह्यहर्लिक इति स्यादित्यत उक्तम्– **अहर्लीक एवेति** ॥ रेफस्य लत्वमिति भावः । कस्मिन् हृदयं प्रतिष्ठितमिति प्रश्ने अहल्लिकेत्युक्तिरसङ्गतेत्यतस्तदभिप्रायमाह– **अज्ञेत्याक्षिपतीति** ॥ हृदयाख्योमायाः शिवे प्रतिष्ठितत्वस्यातिप्रसिद्धत्वेन तत्रापि प्रश्ने अज्ञेति तमाक्षिपतीत्यर्थः । ननु श्रुतौ अग्राह्यः अशीर्य इत्याद्युक्तार्थे नहि गृह्यते नहि शीर्यत इत्यादिना तदेव तत्र हेतुत्वेन कथमुच्यत इत्यत आह– **नहीति** ॥ तथाचार्थाभावे

प्रमाणाभावो हेतुरुच्यत इति नानुपपत्तिरित्यर्थः । ननु शाकल्येनापि ब्रह्मणो ज्ञातत्वाद् याज्ञवल्क्येनापि स एष नेति नेतीत्यादिना विशेषेण निरूपितत्वाच्च तद्गुणकस्य ब्रह्मणो वक्तुं शक्यत्वात् कस्मात् तं ह न मेने शाकल्य इत्यतस्तस्याभिप्रायमाह– **नेतीति** ॥ **विशेषापेक्षयेति** ॥ अत एव श्रुतौ तं चेन्मे न विवक्ष्यसीति विशेषवाचकविशब्दप्रयोग इति भावः ।

**भाष्यम्**—

**तदपेक्षां विनैवासौ निर्गत्य पुरुषोत्तमः ।**
**वहत्येवानिशं सर्वं निरूढं तेन तज्जगत् ॥**
**प्रति प्रतिस्थितै रूपैर्यस्माद् धत्ते हरिः सदा ।**
**अतः प्रत्यूह्यते तेन व्यक्ताव्यक्तमिदं जगत् ॥ इति ब्रह्मतर्के ॥**

**टिप्पणी**—

निरूह्य प्रत्यूह्येत्यनयोरेकार्थत्वप्रतीतिं निवारयन् व्याचष्टे– **तदपेक्षामित्यादिना** ॥ जगदपेक्षाम् । निरोऽर्थो निर्गत्येति ।

**भाष्यम्**—

**न विनोपनिषद्भिः स ज्ञेयः केनापि कस्यचित् ।**
**अत औपनिषत्कं तं प्राहुर्विष्णुं सनातनम् ॥ इति च ॥**

**टिप्पणी**—

ननु देवताधर्मादिस्वरूपस्याप्युपनिषद्गम्यत्वात् औपनिषदमिति कथमेतस्यैव विशेषणमित्यत आह– **नेति** ॥ केनापि प्रकारेण कस्यचित् पुंसः । कर्तरि षष्ठीयम् ।

**भाष्यम्**—

**[विश्वासयोग्योपदेशकस्य लक्षणम्]**

**प्रश्नो वादे च जल्पादौ कर्तव्यः प्रतिवादिना ।**
**तदुक्तिमात्रे प्रामाण्यं यदि नास्याऽगमान्तरम् ॥**

**अपेक्षितं यदा शङ्का दर्शनीयस्तदाऽऽगमः ।**
**निःशङ्कत्वेन यो वक्ता प्रश्नानामुत्तरं सदा ॥**
**आनुकूल्येनाऽगमानां नाऽशङ्क्यं तद्वचः क्वचित् ।**

**टिप्पणी—**

नन्वाश्वलादिभिर्यदिदं सर्वं मृत्युनाऽऽप्तं सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमति मुच्यत इत्यादिप्रश्ने कृते याज्ञवल्क्येन होत्रर्त्विजाग्निना वाचा इत्यादिनोत्तरे च दत्ते तत्र प्रमाणमपृष्ट्वा कथं तदङ्गीकारः क्रियते । आश्वलादिभिर्याज्ञवल्क्येन क्रियमाणायाः कथाया जल्परूपत्वात् । जल्पे च प्रमाणप्रश्नस्य कर्तव्यत्वात् इत्यतः आश्वलादिभिः प्रमाणप्रश्नाकरणे निमित्तं वक्तुमाह– **प्रश्न इति** ॥ विप्रतिपन्नप्रमेये इति शेषः । वादिना च तत्पृष्टप्रमेयं वक्तव्यमित्यपि ग्राह्यम् । तत्र यदि प्रतिवादिनस्तदुक्तौ वादिवचने प्रामाण्यं निश्चितं तदाऽऽगमान्तरं नापेक्षितं तदुक्तेरेवागमरूपत्वात् । ततश्च न तदुक्ते प्रमेये प्रमाणप्रश्नः कर्तव्य इति भावः । यदा शङ्का तदुक्तौ प्रामाण्यविषयिणी तदा तेन प्रमाणप्रश्नः कर्तव्यः । वादिना वाऽऽगमो दर्शनीय इत्यर्थः । नन्वस्त्वेवं तथापि याज्ञवल्क्यवचनेऽप्रामाण्यशङ्कैव कुतो नेत्यत आह– **निःशङ्कत्वेनेति** ॥ भ्रान्तोऽपि वैयात्यात् प्रश्नोत्तरं निश्शङ्कत्वेन न वक्तीति तद्व्यावृत्त्यर्थं सदागमानामानुकूल्येनेत्युक्तम् ।

**भाष्यम्—**

**दशतालो दशमुखो ललाटत्रिंशकस्तथा ।**
**सार्धोन्नतश्चैव पुनः पर्यग्दशशिरास्तथा ।**
**पञ्चोराः सप्तपादो यो नाशङ्क्यं तद् वचः क्वचित् ॥**
**नवाङ्गुलमुखो यस्तु गले च चतुरङ्गुलः ॥**
**चतुर्विंशाङ्गुलतनुस्तद्वाक्यं देवपूजितम् ।**

**टिप्पणी—**

इतोऽपि याज्ञवल्क्यवचने नाप्रामाण्यशङ्केत्याह– **दशताल इति** ।। तथाशब्दौ चशब्दः पुनःशब्दश्च लक्षणानां परस्परसमुच्चये । नाऽशङ्क्यमेवेत्येवशब्दसम्बन्धः । दशतालः दशमणिबन्धपरिमितकायः दशमुखः दशमुखपरिमितकायः ललाटत्रिंशकः त्रिंशल्ललाटपरिमितकायः सार्धोन्नतः अर्धोन्नतललाटेन सहितः पर्यग्दशशिराः पर्यक्परितः दशललाटपरिमितकायः पञ्चोराः उरःपञ्चकपरिमितकायः सप्तपादः सप्तपादपरिमितकायः नवाङ्गुलमुखः नवाङ्गुलपरिमितं मुखं यस्य स तथोक्तः चतुरङ्गुलः चतुरङ्गुलपरिमाणवान् चतुर्विंशाङ्गुलतनुः चतुर्विंशाङ्गुलपरिमिता तनुर्मध्यदेहो यस्य स तथोक्तः । देवपूजितं तथाच नाप्रामाण्यशङ्का तत्रेत्यर्थः ।

**भाष्यम्—**

**प्राधान्याल्लक्षणोपेतो दुर्लक्षणयुतोऽपि सन् ।।**
**तस्यापि वाक्यं मानं स्यात् किमु सर्वयुतस्य तु ।।**
**प्रायो देवाश्च ऋषयो न सर्वशुभलक्षणाः ।**
**ऋते विष्णुं सुरश्रेष्ठं ब्रह्माणं वाऽप्यनन्तरम् ।**
**यस्मान्न विदुषां वाक्यमाशङ्क्यं केनचित् क्वचित् ।।**
**तस्माद् वेदेषु सर्वेषु कथाः प्रश्नोत्तरात्मिकाः ।**
**न प्रमाणान्तरं तत्र पृच्छन्ति घटनां विना ।**
**एतस्मादाश्वलाद्याश्च पप्रच्छुर्नैव कुत्रचित् ।**
**आगमं याज्ञवल्क्योक्तेरन्यं तं मैथिलोऽपि च ।। इति ब्रह्मतर्के ।।**

**टिप्पणी—**

ननु याज्ञवल्क्यस्य उक्तसर्वलक्षणोपेतत्वाभावात् कथं तद्वचनेऽप्रामाण्यशङ्काभाव इत्यत आह– **प्राधान्यादिति** ।। बाहुल्यादित्यर्थः । अल्पदुर्लक्षणयुत इत्यर्थः । ननु सर्वलक्षणसम्पन्नस्यैव वाक्यं मानमिति प्राधान्येन लक्षणोपेतस्यापि वाक्यं अमानं किन्न स्यादिति चेन्न । तथात्वे देवर्ष्यादिवचनेऽप्यप्रामाण्यशङ्का

स्यात् । कुत इत्यत आह– **प्राय इति** ॥ प्राय इत्यस्य व्यावर्त्यमाह– **ऋत इति** ॥ किं तत इत्यत आह– **यस्मादिति** ॥ यद्वा भवतु विष्णुविरिञ्चेतरदेवर्ष्यादिवचनेऽप्यप्रामाण्यशङ्केति चेत् । तथात्वे प्रमाणप्रश्नं विनैव तत्प्रश्नोत्तररूपाः कथा वेदे न स्युरिति भावेनाऽह– **यस्मादिति** ॥ तस्मादेवेत्यर्थः । वाक्यार्थघटनामेव पृच्छन्ति न घटनां विना तत्र तदुक्तेऽर्थे प्रमाणान्तरं पृच्छन्ति । अत एव याज्ञवल्क्येन त्रयस्त्रिंशत्सु षडेवोत्तमाः षट्सु च त्रय एवोत्तमाः इत्याद्युक्त्वा कथमिदं घटत इत्याशङ्कापरिहाराय एतेषु हीदं सर्वं षडिति एतेषु हीमे सर्वे देवाः इत्यादिना घटको हेतुरुक्तः । यदर्थमेतावदुक्तं तदाह– **एतस्मादिति** ॥ याज्ञवल्क्यस्य ऋषित्वेनागमानुकूल्येन निःशङ्कं प्रश्नोत्तरवक्तृत्वात् प्राधान्येनोक्तलक्षणोपेतत्वाच्च तद्वचनस्यानाशङ्कनीयत्वादित्यर्थः । याज्ञवल्क्योक्तेरन्यमागममिति सम्बन्धः । मिथिलोऽपि तमागमं न पप्रच्छेत्युत्तराध्यायविवक्षया तं याज्ञवल्क्यमिति वाऽर्थः ।

**भाष्यम्—**

**यश्छिन्नविचिकित्सस्तु च्छिनत्त्यपि च संशयान् ।**
**तस्य पर्येषणं कुर्यात् प्रतीच्छन्नोत दक्षिणाम् ॥ इति च भारते ॥**
**षण्णवत्यङ्गुलो यस्तु न्यग्रोधपरिमण्डलः ।**
**दशतालश्चतुर्हस्तः स देवैरपि पूज्यते ॥ इति वायुप्रोक्ते ॥**
**अत एव च सर्वागमेषु प्रतिसंहितमाचार्यलक्षणमुच्यते ।**

**टिप्पणी—**

महापुरुषवचो न शङ्क्यमित्युक्तम् । तत्र मानान्तरं पठति– **य इति** ॥ आदक्षिणामुत समग्रदक्षिणामपि प्रतीच्छन् दातुमिच्छन् पर्येषणम् अन्वेषणं कुर्यात् । यदि एतादृशस्यापि वचनं शङ्कार्हं तदा समग्रदक्षिणादानेन तत्पर्येषणविधानं न स्यादिति भावः । अत एव जनकादयः अलङ्कृतगवादिदक्षिणया तदन्वेषणं कृतवन्तः । एतल्लक्षणविशिष्टस्यापि वचनं नाऽशङ्क्यमित्याह–

**षण्णवत्यङ्गुल इति** ॥ तत्परिमितकायः । उक्तलक्षणवतो वचो न शङ्कार्हं इत्येतत्प्रमेयमुपपत्त्याऽपि समर्थयते– **अत एवेति** ॥ चशब्दः पूर्वोक्तागमसमुच्चायकः । यतः उक्तलक्षणस्य वचो न शङ्कनीयं अत एव पञ्चरात्रादिसर्वागमेषु प्रतिसंहितं सर्वसंहितासु आचार्यलक्षणमुच्यते । अन्यथा तदुक्तिवैयर्थ्यं स्यादित्यर्थः ।

उपनिषत्——

[स्वातन्त्र्येण सृष्टिकर्ता कः?]

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु स वै वा मा पृच्छत यो वः कामयते तं वः पृच्छाम सर्वान् वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥ तान् हैतैः श्लोकैः पप्रच्छ यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥ २८ ॥ त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः तस्मात् तदा तृण्णात् प्रैति रसो वृक्षादिवाऽहतात् ॥ २९ ॥ मांसान्यस्य शकराणि किनाटं स्नाव तत् स्थिरम् अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥ ३० ॥ यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥३१॥**

[सृष्ट्यादौ जीवानां वृक्षाणां च जनकः कः?]

**रेतस इति मा वोचत जीवतस्तत् प्रजायते धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥ ३२ ॥ यत् समूलमावृहेयुर्वृक्षं न पुनराभवेत् मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ॥ ३३ ॥**

[विज्ञानमानन्दं ब्रह्म]

**जात एव न जायते को न्वेनं जनयेत् पुनः विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम् तिष्ठमानस्य तद्विद इति ॥ ३४ ॥**

॥ इति शाकल्यब्राह्मणम् ॥ ५-९ ॥

॥ इति पञ्चमोऽध्यायः ॥

**भाष्यम्—**

**यथा वनस्पतौ वृक्ष इत्ययं शब्दोऽमृषा तथैव पुरुषे पुरुषशब्दो विद्यमान एव। स च नित्यत्वे सम्भवति। पुरुकालेऽपि सन् पुरुष इति। स्नावमध्ये यत् स्थिरं विद्यतेऽस्थि सल्लीनं तद्दारुसंश्लिष्टपाशवत्।**

**वृक्षो मूलाद् रोहतीत्यङ्गीकारमात्रम्। यत्समूलमावृहेयुरिति तस्यापि दूषणात्। अन्यस्य रेतसो जननमपि जीवतः पुरुषान्तरस्य भावे। प्रलये तु सर्वप्रलयात् कस्मादुत्पत्तिः?**

**टिप्पणी—**

यथा वृक्षो वनस्पतिस्तथैव पुरुषो मृषेत्यत्र मृषेति पदच्छेदोऽनुपपन्नः। वृक्षमिथ्यात्वस्यासिद्धत्वेन दृष्टान्तत्वेनोपादानायोगात्। पुरुषमिथ्यात्वस्य प्रमाणबाधितत्वाच्च। अमृषेति पदच्छेदेऽपि अर्थसत्यत्वप्रतिपादनपरत्वे वनस्पतिशब्दो व्यर्थः स्यात्। नच वनस्पतिरिति वृक्षस्य विशेषणमिति वाच्यम्। पर्यायियोर्विशेषणविशेष्यवाचकत्वानुपपत्तेरिति भावेन तद्वाक्यं यथावद् व्याचष्टे— **यथेति** ॥ 'सप्तसु प्रथमा' इति सूत्राद् वनस्पतिरिति प्रथमा सप्तम्यर्थे। श्रुतौ वृक्ष इत्यनन्तरम् इतिशब्दाध्याहारः। अर्थशास्त्रे प्रयुक्तस्य इतिशब्दस्य शब्दपदार्थकत्वमिति तल्लब्धार्थोक्तिः ॥ **अयंशब्द इति** ॥ अमृषा विद्यमानार्थक एव वृक्षशब्दप्रवृत्तिनिमित्तवृक्षत्वस्य तत्र सत्त्वात्। पुरुषे पुरुषशब्द इत्यनेन श्रुतौ पुरुषशब्द आवर्तनीय इत्युक्तं भवति। अमृषेत्यस्याविद्यमानार्थो नेत्यर्थमभिप्रेत्य लब्धमर्थमाह— **विद्यमानो विद्यमानार्थ**

**एवेति** ॥ ननु मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहतीति प्रष्टव्यार्थानुपयुक्तमेतदित्यत आह– **स चेति** ॥ चशब्दः प्रकृतानुसन्धानार्थः । एतस्योपयोगमुत्तरत्र वक्ष्यति । विद्यमानार्थकः पुरुषशब्दो वाच्यस्य नित्यत्वे सम्भवति । कुत इत्यतः पुरुषशब्दस्य नित्यत्वार्थकत्वादिति भावेन पुरुषशब्दार्थमाह– **पुरुकालेऽपीति** ॥ किनाटं स्नावतत्स्थिरमिति वाक्यं अप्रतीतेर्व्याचष्टे– **स्नावमध्ये इति** ॥ स्नावेति अविभक्तिको निर्देशः । विभक्तिश्च षष्ठीति भावेनोक्तं **स्नावमध्य इति** । श्रुतौ तच्छब्दश्रवणाद् यदिति लभ्यते । अस्थिसंलीनं संलग्नमित्यर्थः । दारुसंश्लिष्टपाशेति किनाटशब्दार्थः । ननु कस्मान्मूलात् प्ररोहतीत्यत्र वृक्षः कस्मान्मूलात् प्ररोहतीत्यस्यार्थोऽभिमतः स न युक्तः । यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनरिति वृक्षस्य मूलशब्दवाच्य-भूगतवृक्षभागकारणकत्वस्योक्तत्वेन सिद्धविषयत्वादित्यतस्तद्वाक्यतात्पर्यमाह– **वृक्ष इति** ॥ तत्र हेतुमाह–**यत्समूलमिति** ॥ रेतस इति मा वोचतेत्यत्र जीवतस्तत्प्रजायत इति कथं हेतुरुच्यत इत्यतस्तदभिप्रायमाह– **अन्यस्येति** ॥ अन्यस्य सृज्यस्य पुरुषान्तरस्य रेतसि चेत्यर्थः । पुरुषान्तरसद्भावोऽपि स्यादित्यत आह– **प्रलये त्विति** ॥ अनेन अञ्जसा प्रेत्य इत्यस्य तात्पर्यमुक्तं भवति ।

**भाष्यम्——**

**तत्पृष्टं सर्वं वक्तुमशक्यत्वात् पुरुषस्य पुनरुत्पत्तौ कारणं भगवन्तं जानन्तोऽपि तूष्णीमृषयो बभूवुः । पुरुषनामकत्वान्नित्यस्य जीवस्य यावन्मुक्तिः पुनरुत्पत्त्या भवितव्यं न शरीरेण सह नाशः । तस्य च स्वोत्पत्ता-वस्वातन्त्र्यादन्येनोत्पादकेन भाव्यम् । कोऽसाविति प्रश्नाशयः ।**

**तेषु तूष्णीम्भूतेषु स्वयमेव परिहरति विज्ञानमानन्दं ब्रह्मेति । तस्याप्यन्य उत्पादक इत्याशङ्का मा भूदिति जात एव न जायत इत्याह । पुरुषान्तरापेक्षया पुनः शब्दो नतु क्रियाभ्यासापेक्षया ।**

एक एव हरिर्बन्धुः पुनरन्यो न विद्यते । इतिवत् ॥
रातिरिष्टः । तिष्ठमानस्य तद्विदः परायणम् ।

**टिप्पणी—**

एवं याज्ञवल्क्यप्रश्ने ते ह ब्राह्मणा न दधृषुरित्युक्तत्वात् जात एव न जायते इत्यादिना याज्ञवल्क्येन स्वयमेव परिहाराच्च ब्राह्मणास्तूष्णीं बभूवुरिति प्रतीयते तदयुक्तम् । ऋषीणां पुरुषाद्युत्पादकतया भगवज्ज्ञानित्वेन कस्मान्मूलात् प्ररोहतीति प्रश्नस्य भगवत इत्युत्तरमदत्वा तूष्णीम्भावे निमित्ताभावादित्यत आह– **तत्पृष्टमिति** ॥ ननु किं तत्पृष्टं यत्सर्वं वक्तुमशक्ता ऋषय इत्यतः प्रश्नाभिप्रायमाह– **पुरुषस्येति** ॥ देहव्यतिरिक्तजीवाभावाद्भावे वा शरीरेण सहैव तस्य नाशेन पूर्वोत्तरशरीरेष्वनुवर्तमानस्यैकस्याभावात् तस्य पुनरुत्पत्तिरेव नास्तीति कथं तदुत्पादकप्रश्न इत्यतो न जीवस्य शरीरेण सह विनाशः । किन्तु स नित्य एव पुरुकाले सन्निति यौगिकपुरुषनामवत्त्वात् । नित्यस्य तस्याऽशरीरत्वे संसारायोगात् यावन्मुक्तिशरीरयोगलक्षणपुनरुत्पत्तिरावश्यकीत्यर्थः। नन्वस्त्वेवं जीवस्य पुनरुत्पत्तिः तथाऽपि तदुत्पादकप्रश्नोऽनुपपन्नः स्वस्यैवोत्पादकत्वसम्भवेन सिद्धविषयत्वादित्यत उक्तम्– **तस्य चेति** ॥ असौ उत्पादकः । कः किंलक्षण इत्यर्थः । तथाच पुरुषस्य पुनरुत्पादकं भगवन्तं जानन्तोऽपि वक्ष्यमाणं वक्तुमशक्ता ऋषय इति भावः । याज्ञवल्क्यपृष्टं न विज्ञातं ब्राह्मणैः । अतो ब्रह्मिष्ठत्वाद्धृताः गावः याज्ञवल्क्येन जिताः ब्राह्मणाः । समाप्ता आख्यायिका । यद् याज्ञवल्क्येन पृष्टं तच्छ्रुतिरस्मभ्यं उपदिशति विज्ञानमितीति परव्याख्यानमप्रामाणिकं स्वयमेव तदोवाच याज्ञवल्क्य इति प्रमाणविरुद्धं चेति भावेन तद्वाक्यमवतारयति– **तेष्विति** ॥ एतेन विज्ञानमानन्दमित्येतदेव याज्ञवल्क्यं प्रति पृष्टम् ऋषीणां वाक्यमिति प्रतीतिरपि परास्ता । जात एव न जायत इति वाक्यं याज्ञवल्क्यकृतप्रश्नान्तर्गतमिति परो व्याख्याति । तथाहि– यस्तु मृतः स पुनर्न जायते जातत्वादेव जनिष्यमाणस्य हि कारणचिन्ता न जातस्य अतोऽत्र प्रश्न एवानुपपन्न

इति चेन्नेति पृथग् वाक्यम् । यन्मतं जात एवेति तन्न किन्तर्हि मृतः पुनरपि जायत एव । अन्यथा कृतनाशाकृताभ्यागमः स्यात् । अतो वः पृच्छामि । एनं मृतं को नु पश्चात्पुनर्जनयेदिति तदसत्। जात एवेति चेन्न जायत एवेति योजनायामध्याहारवाक्यभेदप्रसङ्गात् । यस्तु मृतः स पुनर्न जायत इति शङ्कितुर्जीवानित्यत्वं ह्यभिप्रेतम् । तच्चास्मत्पक्षे तथैव पुरुषो मृषेति जीवस्य पुरुकाले सन्नितियौगिकपुरुषनामकत्वोक्त्या परिहृतमेव । यथोक्तं पुरस्तात् । स्वभाववादमालम्ब्येयमाशङ्केत्यनुपपन्नमेव । तददर्शनात् । अत एवाऽचार्यस्तस्य स्वोत्पत्तावस्वातन्त्र्यादिति स्वयमेव स्वभाववादमपाकृतवान् । त्वत्पक्षे विज्ञानानन्दस्यापि ब्रह्मण उत्पादकशङ्काया अपरिहाराच्च 'नैवास्य जनकः कश्चिन्नित्यजातो ह्यसौ हरिः' इति प्रमाणे एतद्वाक्यस्य याज्ञवल्क्य-परिहारवाक्यान्तर्गतत्वावगतेस्तद्विरोधाच्चेति भावेन तदवतारयति– **तस्यापीति** ।। नन्वेवं व्याख्याने को न्वेनं जनयेत् पुनरिति पुनःशब्दोऽयुक्तः स्यात् । क्रियाभ्यासापेक्षया प्रयुक्तेन पुनःशब्देनैकवारं जननप्रतीतेः । परमात्मनश्च सकृदपि जननानङ्गीकारादित्यत आह– **पुरुषान्तरेति** ।। अनेन पुनः क इति पुनःशब्दान्वयः सूचितो भवति । ननु क्रियाभ्यासे पुनःशब्दप्रयोगो दृष्टः पुनरागत इत्यादौ न पुरुषान्तरापेक्षयेत्यर्थे । अतस्तत्रापि प्रयोगमाह– **एक एवेति** ।। रातिरिति प्रथमा षष्ठ्यर्थे । रातेर्धनस्य दातुः परायणमिति परव्याख्यानमसत् । स प्रियः सर्वदातॄणामिति प्रमाणविरोधादिति भावेन रातिशब्दार्थमाह– **रातिरिति** ।। व्यवहितत्वेनान्वयं दर्शयति– **तिष्ठमानस्येति** ।।

**भाष्यम्——**

**विजित्य सर्वान् पप्रच्छ याज्ञवल्क्यः पुनर्मुनीन् ।**
**यथा वनस्पतौ वृक्षशब्द एवं यथार्थतः ।।**
**पुरुषेऽपि हि तच्छब्दो नित्यत्वादेव युज्यते ।**
**तस्मान्नास्य शरीरेण नाशस्तस्मात् पुनर्जनिः ।।**

आमुक्तेर्भविता नित्यं कुतस्तदिति चोच्यताम् ।
रेतसो जननं यावत् प्रलयस्तावदेव हि ॥
निर्मूलस्य च वृक्षस्य प्रलये पुरुषस्य च ।
पुनरुत्पादको यस्तं वदन्तु मम कृत्स्नशः ॥
धानाजात इवायं हि दृश्यते विदुषां तरुः ।
अस्वातन्त्र्यात्तु विदुषां नैव तत्कारणं भवेत् ॥
अञ्जसा प्रेत्य सम्भूतिकारणं तद्वदन्तु नः ॥
प्रेत्य सम्भूतिकर्ता हि स्वतन्त्रो घटते यतः ।
इति पृष्टास्तु मुनयो न वक्तुं शेकुरञ्जसा ।
तद्वेत्तारोऽपि तत्प्रश्ननिर्मूलनबलोज्झिताः ॥

**टिप्पणी—**

एवं स्ववचनेन व्याख्याय दार्ढ्याय श्रुतिव्याख्यानरूपं प्रमाणं पठति– **विजित्येति** ॥ तं त्वौपनिषदं पुरुषं पृच्छामीति शाकल्यं प्रति कृतप्रश्नापेक्षया पुनःशब्दः । अनेन अथ होवाच ब्राह्मणा इत्याद्यारभ्य पप्रच्छेत्यन्तमुक्ततात्पर्यं भवति । यथा वृक्ष इत्यादेरर्थमाह– **यथेति** ॥ यथार्थतः विद्यमानार्थत्वेन पूर्वोत्तराभ्यामेतत्सम्बद्ध्यते । तच्छब्दः पुरुषशब्दः पुरुषेऽपि वर्तते । नन्वेतत्प्रष्टव्यार्थासङ्गतं किमुच्यत इत्याशङ्कां परिहरन् प्रश्नवाक्यतात्पर्यमाह– **नित्यत्वादेवेति** ॥ तच्छब्द इत्यनुवर्तते । शरीरेण सह रेतस इति मा वोचत जीवतस्तत्प्रजायत इति वाक्यस्य तात्पर्यमाह– **रेतस इति** ॥ मदीय-प्रश्नस्त्वादिसृष्टिविषयक इति भावः । अत्र मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहतीति पुरुषोत्पादकमात्रप्रश्न इति प्रतीतिनिरासाय यत् स मूलमावृहेयुरित्येतदनुरोधेन प्रश्नाभिप्रायमाह– **निर्मूलस्येति** ॥ कृत्स्नश इति तत्स्वरूपलक्षणविवक्षया । धानारुह इव वृक्ष इत्येतद् व्याचष्टे– **धानाजात इवेति** ॥ इवशब्दाभिप्रायकथनं अविदुषामिति । विदुषामपि तथा कुतो न दृश्यत इत्यत आह– **अस्वातन्त्र्यादिति** ॥ अस्वातन्त्र्यान्नैव तत्कारणं

भवेत् । अविद्यमानं कथं विदुषां दृश्येतेति भावः । अविदुषां विदुषामिति कर्तरि षष्ठ्यौ । अञ्जसा प्रेत्य सम्भव इति वाक्यं सम्भवशब्देन भाव उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **अञ्जसेति** ॥ प्रेत्य स्थितस्येति शेषः । अनेन सम्भवति अस्मादिति व्युत्पत्तिर्दर्शिता । अञ्जसा प्रेत्य सम्भूतिकारणमपि स्वयं जीव एव किन्न स्यादित्यत आह– **प्रेत्येति** ॥ जीवस्त्वस्वतन्त्र इति भावः । जात एव न जायत इत्यादेः ऋषीणां परिहारवाक्यत्वमिति प्रतीतिनिरासाय मध्ये वक्तव्यमाह– **इतीति** ॥ तद्वेत्तारोऽपि उत्पादकस्वरूपवेत्तारोऽपि तत्प्रश्ननिर्मूलने तत्पृष्टलक्षणकथनेन सर्वथा प्रश्न-परिहारे बलोज्झिता इत्यर्थः ।

**भाष्यम्—**

**अधाष्ट्यात्मप्रभावेन धर्षिता नाशकन् यदा ।**
**स्वयमेव तदोवाच याज्ञवल्क्यो महामुनिः ॥**
**पूर्णानन्दो हरिर्नान्यः कारणं सृज्यसर्जने ।**
**नैवास्य जनकः कश्चिन्नित्यजातो ह्यसौ हरिः ।**
**स प्रियः सर्वदातॄणां ज्ञानिनां परमप्रियः ।**
**ये तु तद्भाविता नित्यं तेषामेष परायणम् ॥ इति नारदीये ॥**

॥ इति शाकल्यब्राह्मणम् ॥ ९ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**बृहदारण्यकोपनिषद्भाष्ये पञ्चमोऽध्यायः ॥**

**टिप्पणी—**

ते ह ब्राह्मणा न दधृषुः इत्येतस्य तात्पर्यमाह– **अधाष्ट्यादिति** ॥ विज्ञानमानन्दं ब्रह्मेति वाक्यमपेक्षिताध्याहारं सूचयन् व्याचष्टे– **पूर्णानन्द इति** ॥ मुख्यामुख्ययोर्मध्ये मुख्ये सम्प्रत्यय इति पूर्णानन्द इत्युक्तम् । पूर्णविज्ञान इत्यपि ग्राह्यम् । जात एव न जायते को न्वेनं जनयेत् पुनरिति वाक्यं हेतुहेतुमद्भावप्रतिपादकतया

व्याचष्टे– **नैवेति** ॥ रातिर्दातुरित्यस्यार्थमाह– **स प्रिय इति** ॥ तद्विदः परायणमित्यस्यार्थमाह– **ज्ञानिनामिति** ॥ ज्ञानिनां मध्यमभक्तानामित्यर्थः। तिष्ठमानस्य परायणमित्यस्यार्थमाह– **ये त्विति** ॥ तु विशेषेण । तद्भाविता एकान्तिन इत्यर्थः ॥

अथ खण्डार्थः

अथ वाचक्नव्युपरमानन्तरं एनं याज्ञवल्क्यम् । शकलस्यापत्यं शाकल्यः विदग्धो नामतः पप्रच्छ । किं हे याज्ञवल्क्य देवाः कति किंसङ्ख्याका इति । एवं पृष्टः स याज्ञवल्क्यः यावन्तो यावत्सङ्ख्याका देवाः वैश्वदेवस्य शस्त्रस्य निविदि निवित्सञ्ज्ञकमन्त्रे उच्यन्ते तावतो देवान् ह एतया वक्ष्यमाणया निविदा तत्सञ्ज्ञकमन्त्रेण प्रतिपेदे ज्ञातवान् । तां निविदं दर्शयति– **त्रयश्चेति** ॥ त्रयश्च त्री च शता त्रयस्त्रिंशच्छतानि । त्रयश्च त्री च सहस्रात्रयस्त्रिंशत्सहस्राणीत्यर्थः। यद्यपि इतोऽप्यधिकसङ्ख्या देवानामस्ति । 'नवकोट्यो हि देवानाम्' इत्याद्युक्तेः । तथापि तेषु त्रयस्त्रिंशत्सहस्रसङ्ख्याका देवा अधिकाः तेषु च त्रयस्त्रिंशच्छतसङ्ख्याका अधिका इति भावः । एवं याज्ञवल्क्योक्तं परिहारं शाकल्योऽङ्गीकरोतीत्याह– **ॐ इति होवाचेति** ॥ शाकल्य इति सेषः । त्रयस्त्रिंशच्छतसङ्ख्याकेष्वपि देवेषु अधिकान् पृच्छति– **कत्येवेति** ॥ उत्तरमाह– **त्रयस्त्रिंशदिति** ॥ एवमुत्तरत्रापि प्रश्नपरिहारौ व्याख्येयौ । अथ सङ्ख्येयस्वरूपं पृच्छति– **कतम इति** ॥ १ ॥

स एवं पृष्टो याज्ञवल्क्यः उवाच । किं त्रयस्त्रिंशदेव देवाः तु विशिष्टाः। एते त्रयस्त्रिंशच्छतसङ्ख्याका देवाः एषां त्रयस्त्रिंशत्सङ्ख्याकानां देवानां महिमान एव महिना माहात्म्येन मिताः परिमिताः न्यूनाः अत एव तेषां परिवारभूता एवेत्यर्थः । तेषां बहुलत्वात् पृथङ् निर्देशमकृत्वा महिमान इत्येवोक्तम् । तथा एते त्रयस्त्रिंशत्सहस्रसङ्ख्याका देवाः एषां त्रयस्त्रिंशच्छतसङ्ख्याकानां देवानां महिमान इत्यपि योज्यम् । त्रयस्त्रिंशत्सङ्ख्याकान् पृच्छति– **कतम इति** ॥ ते त्रयस्त्रिंशच्छतसङ्ख्याकेष्वधिकाः । उत्तरमाह– **अष्टाविति** ॥

इन्द्रश्च प्रजापतिश्च त्रयस्त्रिंशौ द्वात्रिंशत्त्रयस्त्रिंशत्सङ्ख्यापूरकौ । अत्रेन्द्रशब्देन वायुज इन्द्रो ग्राह्यः । नक्षत्रशब्देन रूपान्तरग्रहणात् । प्रजापतिशब्देनेन्द्रपुत्रो जयन्त उच्यते ॥ २ ॥

अग्निः सुपर्णः पृथिवी तद्भार्या सौपर्णी वायुः सूत्रात्मा अन्तरिक्षं तत्पत्नी श्रद्धा आदित्यः शिवः द्यौस्तद्भार्योमा चन्द्रमाः कामः नक्षत्राणीन्द्रः बहुवचनं रूपबाहुल्याभिप्रायेण । इत्येते वसवः कुत एते वसुशब्दाभिधा इत्यत आह– **एतेष्विति** ॥ सर्वं वसतीति वसुशब्दवाच्यं जगद् एतेषु अष्टसु हितं निहितं इति हि यस्मात् तस्मादेते वसवः इत्यर्थः ॥ ३ ॥

पुरुषे जीवे वर्तमानाः प्राणाः ज्ञानेन्द्रियकर्मेन्द्रियनियामकाः इमे प्रसिद्धाः दक्षाग्निप्रमुखा वायुपुत्राः दश आत्मा बुद्ध्यभिमानी बृहस्पतिः एकादश एकादशत्वसङ्ख्यापूरकः । तेषु रुद्रशब्दं निर्वक्तुमाह– **ते यदेति** ॥ ते एकादशेन्द्रियाभिमानिनः यदा यस्मिन् काले । अस्मान्मर्त्यात् म्रियमाणाच्छरीराद् उत्क्रामन्ति । अथ तदा रोदयन्ति म्रियमाणसम्बन्धिनो जनान् । किं तत इत्यत आह– **तदिति** ॥ यद् यस्मात् तत् तस्मिन्नुत्क्रान्तिकाले रोदयन्ति तस्माद् रुद्रा इत्युच्यन्त इत्यर्थः ॥ ४ ॥

संवत्सरस्य संवत्सरात्मकस्य कालस्य वै प्रसिद्धा ये द्वादशमासा द्वादशमासाभिमानिनः एते आदित्याः ते च धाताऽर्यमा विवस्वान् पूषा त्वष्टा सविता भगः पर्जन्यो वरुणो मित्रो यमश्चन्द्र इत्येते तेष्वादित्यशब्दं निर्वक्तुमाह– **एते हीति** ॥ एते द्वादशादित्याः इदं सर्वं प्राणनामायुरादिकम् आददाना यन्ति परितो यान्ति । ते यद् यस्माद् इदं सर्वमाददाना यन्ति तस्मादादित्या उच्यन्ते इत्यर्थः ॥ ५ ॥

वायुजेन्द्रजयन्तयोः रूपविशेषं पृच्छति– **कतम इति** ॥ स्तनयित्नुरेव तदभिमान्येव प्रसिद्ध्यर्थ एवकारः । यज्ञो यज्ञाभिमानी तस्यापि रूपविशेषं पृच्छति– **कतम इति** ॥ अशनिः वज्राभिमानी । पशवः पश्वभिमानी ॥ ६ ॥

एतेषु त्रयस्त्रिंशद्देवेषु ये षडधिका उक्तास्तान् पृच्छति– **कतमे षडिति** ॥ अग्न्यादिशब्दार्थस्तूक्त एव । एतेषां त्रयस्त्रिंशत्स्वाधिक्ये हेतुमाह– **एतेषु हीति** ॥ इदं बुद्धिस्थं षट् ज्ञानविज्ञानैश्वर्यवीर्यश्रीयशोरूपगुणषट्कम् एषु अग्न्यादिशब्दाभिधेयेषु गरुडादिषु सर्वं पूर्णं देवतान्तरापेक्षयोत्कृष्टं हि यस्माद् इति तस्मात् त एव त्रयस्त्रिंशत्स्वधिका इत्यर्थः ॥ ७ ॥

षट्स्वधिकान् त्रीन् पृच्छति– **कतम इति** ॥ इम एव पूर्वोक्ता अग्निवाय्वादित्य-शब्दवाच्याः वीन्द्रवायुमहेश्वराः लोकाः स्वस्वभार्याणामाश्रयाः ज्ञानरूपाश्च । अनेन वायुवीन्द्रमहेश्वराणां सर्वदेवोत्तमत्वं लब्धम् । तत् कुत इत्यत आह– **एषु हीति** ॥ हि यस्मादेषु वायुवीन्द्रमहेश्वरेषु सर्वे देवा अन्तर्भूताः इति तस्मात् ते सर्वदेवोत्तमा इत्यर्थः । अत्र सर्वदेवानां तदन्तर्भावो नाम तत्परिवारत्वं विवक्षितमिति बोध्यम् । षट्सु स्वभार्यापेक्षयाऽधिकप्रश्ने त्रय इति परिहारोऽभिहितः । षट्स्वेव स्वरूपोत्तमापेक्षया अधिकप्रश्ने द्वाविति यदुत्तरमुक्तं तयोर्द्वयोः स्वरूपं पृच्छति– **कतमाविति** ॥ अन्नं प्रागन्तरिक्षशब्दोक्ता श्रद्धा प्राणः तत्पतिर्मुख्यवायुः चशब्दौ परस्परसमुच्चये । एवकारः प्रसिद्ध्यर्थः ॥ ८ ॥

अध्यर्धस्वरूपं पृच्छति– **कतम इति** ॥ यः सर्वलोकाधारतया पवते अयमध्यर्ध इत्युच्यते । तत् तत्र वायोरध्यर्धशब्दवाच्यत्वविषये आहुः पृच्छन्ति शाकल्याद्याः । किमिति कथमध्यर्ध इति केन निमित्तेन अध्यर्धशब्दवाच्य इत्यर्थः । तस्योत्तरमाह– **यदस्मिन्निति** ॥ यद् यस्माद् अस्मिन् वायौ इदं बुद्धिस्थं सर्वं ज्ञानादिगुणजातम् अध्यार्ध्नोत् आधिक्येन ऋद्धमभवत् तेन कारणेनाध्यर्ध इति । तत् तत्रापि आहुः पृच्छन्ति । किमिति कथमस्मिन् गुणजातमध्यार्ध्नोदिति । तस्योत्तरमाह– **यदयमिति** ॥ यद् यस्माद् अयं वायुः एक इवैव पवते । नायमेक एव यतो विष्णुरेतद्विशिष्टः नापि द्वितीय एव । विष्ण्वतिप्रीति-विषयत्वात् । अतोऽयमेक इवैवेत्युच्यते । अथ तस्माद् उक्तनिमित्तेनैक इवैवेत्युच्यमानत्वात् । अस्मिन् इदं सर्वमध्यार्ध्नोदित्यर्थ इति योज्यम् । यद् यस्मात् । अस्मिन् वायौ । इदं सर्वं प्रमाणप्रमितं जगत् अध्यार्ध्नोत्

आधिक्येन स्थापितमभवत् तेनाध्यर्ध इत्युच्यत इत्यपि यदस्मिन्निति वाक्यं व्याख्येयम् । प्राणो विष्णुः स प्राणनामा विष्णुः । ब्रह्मेति गुणपूर्ण इति त्यदिति तत् तथा । यथा श्रुत्यादौ प्रतिपादितं तथैव नतु विकारेणानाद्यनन्तकालेषु यातीति त्यदित्याचक्षते विद्वांसः ॥ ९ ॥

पुनरपि प्रष्टुं प्रष्टव्यार्थज्ञानिनस्तावत् फलमाह– **पृथिवीति** ॥ हे याज्ञवल्क्य यस्य पुरुषस्य पृथिव्येव प्रसिद्धैव पृथिवी आयतनमाश्रयः यदभिमन्यमानेति यावत् । अग्निर्वागभिमान्यग्निस्था अग्निशब्दाभिधा रमा लोको बाह्यप्रकाशहेतुः मनोवृत्तिहेतुः मनः मनःस्थिता मनोनाम्नी रमा ज्योतिरान्तरप्रकाशरूपस्वरूप-ज्ञानाविर्भावहेतुः तं सर्वस्यात्मनो जीवजातस्य परायणं उत्तमाश्रयं पुरुषं यो वै य एवाधिकारी विद्यात् जानीयात् स वै स एव वेदिता ज्ञानी स्यादित्यर्थः । अत्र तं पुरुषं त्वं जानासि किमिति ग्राह्यम् । याज्ञवल्क्य उत्तरमाह– **वेद वा इति** ॥ हे शाकल्य यमात्थ तं सर्वस्याऽत्मनः परायणं पुरुषम् अहं वेद वै जानाम्येव । यदि वेत्थ तर्हि तं ब्रूहीत्यत आह– **य एवेति** ॥ योऽयं प्रसिद्धः शरीरः पुरुषः जीवाभिमानी स्वायम्भुवो मनुः स एव एष त्वया पृष्टः नैतावतोपरन्तव्यम् । किन्तु प्रष्टव्यं पृच्छैवेत्याह– **वदैवेति** ॥ शाकल्यः पृच्छति तस्य मनोः का देवता नियमनादिकर्त्रीति । एवं पृष्टो याज्ञवल्क्यः अमृतं वायुर्देवतेत्युत्तरमुवाचेत्यर्थः ॥ १० ॥

एवमेवोत्तरखण्डसप्तकस्याक्षरयोजना द्रष्टव्या । कामो मनोवृत्तिविशेषः । हृदयं हृद्ययनाद् हृदयं बुद्धिस्था रमा । एवमुत्तरत्रापि चक्षुर्लोक इत्यादौ चक्षुःशब्दद्वयेन श्रोत्रशब्देन हृदयशब्दत्रयेण च तत्तदन्तर्गता तत्तच्छब्दाभिधा रमैवोच्यते । अत्र सर्वत्र मनो ज्योतिरित्यत्र मनःशब्देन रमैवोच्यते । काममयः कामाभिमानी प्रद्युम्नः । स्त्रियः श्री सरस्वत्युमाः ॥ ११ ॥

रूपाणि शुक्लादीनि आदित्ये वर्तमानः पुरुषो रुद्रः त्यं चतुर्मुखः ॥ १२ ॥

आकाशो भूताकाशः श्रौत्रः श्रोत्रगतस्सन् प्रतिशृणोतीति प्रातिश्रुत्कः पुरुषश्चन्द्रः दिशो गरुडशेषदक्षाः ॥ १३ ॥

तमः प्रसिद्धं छायामयः तदभिमानी निर्ऋतिः मृत्युर्यमः ॥ १४ ॥

आदर्शे विद्यमानः पुरुषः सूर्यः असुः अन्तर्गतरूपो वायुः ॥ १५ ॥

आपो जडभूताः अप्सु पुरुषः पर्जन्यः वरुणः प्रसिद्धः ॥ १६ ॥

रेतः प्रसिद्धं पुत्रमयः पुत्राभिमानी शक्रः प्रजापतिः प्रजापालको ब्रह्मा ॥ १७ ॥

एवमतिप्रश्नादनर्थं पश्यन् याज्ञवल्क्यः करुणयाऽह– **शाकल्येति** ॥ याज्ञवल्क्यः शाकल्येति सम्बोध्योवाच । किं इमे ब्राह्मणाः स्वित् वितर्के नूनं त्वां अङ्गारावक्षयणं अङ्गाराः अवक्षीयन्ते इतस्ततः अवक्रियन्ते येन काष्ठेन तत् अङ्गारावक्षयणं तत्स्थानीयं अकृता कृतवन्तः त्वं तु तन्न जानासि । अकृता इति प्लुतिः कारुण्यविशेषद्योतिका ॥ १८ ॥

एवमुक्तं हितोपदेशं विपरीतार्थं मत्वाऽमर्षवशेन याज्ञवल्क्येति सम्बोध्योवाच शाकल्यः । त्वं कुरुपाञ्चालानां देशानां सम्बन्धिनः तद्देशस्थान् ब्राह्मणानतिक्रम्य मामङ्गारावक्षयणं कृतवन्त इति यदवादीः इदं किं ब्रह्म विद्वानिति बुद्ध्योक्तं सत्यमहं ब्रह्म विद्वानिति । न केवलमहं ब्रह्मस्वरूपमात्रं विद्वान् किन्तु सर्वप्रतिष्ठात्वेन तद्विद्वानित्याशयेनाऽह याज्ञवल्क्यः– **दिशो वेदेति** ॥ अहं स देवाः अभिमानिदेवतासहिताः सप्रतिष्ठाः साधाराः दिशो वेद ॥ १९ ॥

शाकल्यः पृच्छति यद् यदि स देवाः दिशो वेत्थ तर्हि अस्यां प्राच्यां दिशि किं देवतोऽसि का देवताऽधिष्ठात्री ज्ञाता येन स किंदेवतः । अस्यां दिशि कां देवतां जानासीति यावत् । उत्तरमाह याज्ञवल्क्यः– **आदित्यदैवत इति** ॥ यदि सप्रतिष्ठा दिशो वेत्थ तर्हि आदित्यः कस्मिन् प्रतिष्ठित इति योज्यम् । चक्षुषि चक्षुःस्थे दृष्टिशक्तिप्रेरके स्वायम्भुवमनावित्याह याज्ञवल्क्यः तस्याप्याधारं पृच्छति– **कस्मिन्निति** ॥ रूपेषु रूपाभिमानीन्द्रे चक्षुषा तदभिमानिस्वायम्भुवमनुना तत्प्रसादेन रूपाणि तदभिमानीन्द्रं पश्यति जीवो हि यस्मात् तस्माच्चक्षुःरूपेषु प्रतिष्ठितम् । अमात्यप्रसादेन राजदर्शने

अमात्यस्य राजाधीनत्वदर्शनात्। यद्वा, रूपज्ञानस्य चक्षुःसत्वव्यवस्थापकत्वेन बाह्येन्द्रियापेक्षया विषयस्य प्राधान्यविवक्षया रूपाणि हि चक्षुषा पश्यतीत्येवं योज्यम् । अन्यथा यथाश्रुतेऽसम्भवात् । अचेतनयोर्नियम्यनियामकभावस्तु चेतननियम्यनियामकभावाधीन इति भावः । हृदये बुद्ध्यभिमानिन्यामुमायां हि यस्माद् हृदयेन रूपाणि जानाति मनसः सर्वज्ञानसाधनत्वप्रसिद्धेः । तस्माद् हृदये एव रूपाणि प्रतिष्ठितानि भवन्तीत्यर्थः । हे याज्ञवल्क्य एतत् त्वयोक्तं एवमेवेत्याह शाकल्यः ॥ २० ॥

यज्ञे तदभिमान्यनिरुद्धे। दक्षिणायां तदभिमानिरत्याम्। श्रद्धायां तदभिमानि-कामे। तदुपपादयति– **यदेति** ॥ यस्मिन् काले श्रद्धत्ते अथ तदा दक्षिणां ददाति वै प्रसिद्धम्। हि यस्मात् तस्मात् श्रद्धायामेव दक्षिणा प्रतिष्ठितेति । हृदय इत्यादि पूर्ववत् ॥ २१ ॥

अप्सु तदभिमानिनि चन्द्रे रेतसि तदभिमानिबृहस्पतौ हृदये उमायाम् । तस्मादपि तस्मादेव । जातं प्रतिरूपं पुत्रम् । आहुर्लौकिकाः । किं अस्य पितुः हृदयादिव अयं पुत्रः सुप्तः विनिःसृतः हृदयादिव निर्मितः। यत एव अन्तः हृदये एव रेतः प्रतिष्ठितमित्यर्थः ॥ २२ ॥

दीक्षायां शतरूपायां सत्ये स्वायम्भुवमनौ तस्मादपि तस्मादेव दीक्षितं पुरुषं सत्यं वदेत्याहुः । हि यस्माद् एवं तस्मात् सत्ये दीक्षा प्रतिष्ठितेति । हृदये उमायाम् ॥ २३ ॥

अस्यां ध्रुवायां प्राची दक्षिणा मध्यभूतायां वाचि वागभिमानिनि बृहस्पतौ। हृदये उमायाम्। एवं शक्राद्याश्रयभूताया हृदयात्मिकोमाया अप्याश्रयं पृच्छति– **कस्मिन्निति** ॥ २४ ॥

हे अहल्लिक अहर्ज्ञानं लीनमस्येत्यहर्लीक एवाहल्लिक अज्ञेति होवाच याज्ञवल्क्यः । कुतस्तस्याज्ञत्वमित्यत आह– **यत्रेति** ॥ यत्र यस्मात् । एतद् हृदयं अस्माद् अहङ्काराभिमानिनो रुद्राद् अन्यत्र मन्यासे जानासि

बुद्ध्यभिमानिन्युमाया अहङ्काराभिमानिरुद्राश्रितत्वं प्रसिद्धं न जानासीति यावत् । तस्मात् त्वमज्ञ इत्यर्थः । तस्या रुद्रानाश्रितत्वे किं बाधकमित्याह– **यद्धीति** ॥ यद् यदि एतद् हृदयं अस्मद् अहङ्काराभिमानिरुद्रात् अन्यत्र स्यात् तदनाश्रितं स्यादिति यावत् । तर्हि बुद्ध्यभिमान्युमायाः देहाभिरक्षणोपयोगिबुद्धिशक्त्यभावप्रसङ्गेनैतच्छरीरं श्वानो वाऽद्युः वयांसि च एनत् शरीरं विमथ्नीरन् विकर्षेरन् कस्यापि जीवनं न स्यादिति भावः ॥ २५ ॥

इदानीं रुद्रोमयोराधारं पृच्छति– **कस्मिन्निति** ॥ त्वं त्वमहमिति रूपः अहङ्काराभिमानी रुद्रः आत्मा बुद्ध्यभिमान्युमा च इत्येतौ कस्मिन्प्रतिष्ठितौ स्तः इति प्राणे प्राणनामके शेषे अपाने प्राणनामके शेषे अपाने अपाननामिकायां भारत्यां, व्याने व्यानाभिधे वायौ, उदाने उदाननामिकायां श्रियां, समाने समानशब्दाभिधेये हरौ । कुत एवं समाननामकस्य विष्णोः सर्वाधारत्वमित्यत आह– **स एष इति** ॥ स कतम एको देवः प्राण इत्युक्तः । एष समानशब्दाभिधेयः आत्मा विष्णुः । इति न दुःखास्पृष्टरमावन्न भवति । इति न दुःखस्पृष्टब्रह्मादिवन्न भवति । यद्वा इति न बद्धब्रह्मादिवन्न भवति । इति न रमादिमुक्तवन्न भवतीत्यर्थः । तत्र हेतुमाह– **अगृह्य इति** ॥ अगृह्यः अग्राह्यः साकल्येन ज्ञातुमशक्यः कुत इत्यतः परमात्मनः साकल्येन ग्राह्यत्वे प्रमाणाभावादित्याह– **नहीति** ॥ परमात्मा साकल्येन गृह्यत इत्यत्र प्रमाणं नहीत्यर्थः । वैलक्षण्ये हेत्वन्तरमाह– **अशीर्य इति** ॥ कारणकालादिप्रयुक्तविशरणशून्यः स्वत इति शेषः । कुत इत्यत आह– **नहीति** ॥ परमात्मा शीर्यत इत्यत्र प्रमाणं नहीत्यर्थः । वैलक्षण्ये एव हेत्वन्तरमाह– **असित इति** ॥ स्वत एव बन्धाभाववान् । तत्रापि हेतुमाह– **नेति** ॥ व्यथते दुःखी भवतीत्यत्र प्रमाणं नहीत्यर्थः । हेत्वन्तरं चाह– **न रिष्यतीति** ॥ त्रैकालिकनाशशून्य इत्यर्थः । अत्रापि प्रकरणान्नहि न रिष्यतीति ग्राह्यम् । एवं शाकल्यप्रश्नस्य सर्वस्योत्तरमुक्त्वा स्वयं सामर्षो याज्ञवल्क्यः शाकल्यं पृच्छति– **एतानीति** ॥ एतानि पृथिव्येव

यस्याऽयतनमित्यादिनोक्तानि पृथिव्यादीनि अष्टावायतनानि अग्निर्लोक इत्यादिनोक्ता अष्टौ लोकाः अमृतमिति होवाचेत्यादिनोक्ताः अष्टौ देवाः शारीरः पुरुष इत्याद्युक्ता अष्टौ पुरुषा उक्ताः स प्रसिद्धो यस्तान् पुरुषान् उपलक्षणमेतत्। आयतनलोके देवानपि निरूह्य तदपेक्षां विना निर्गत्य बहिष्ठरूपेणोह्य प्रत्यूह्य प्रति तत्तदन्तर्यामिरूपेणोह्यात्यक्रामत् अतिक्रान्तवान्। तम् औपनिषदम् उपनिषन्मात्रगम्यं पुरुषं त्वा त्वां पृच्छामि तं पुरुषं चेद् यदि मे मम त्वं विशेषेण न वक्ष्यसि तर्हि ते मूर्धा शिरः विपतिष्यतीत्युवाच याज्ञवल्क्यः। शाकल्यः किं कृतवानिति जिज्ञासायां श्रुतिः स्वयमाह– **तमिति** ॥ शाकल्यः तं याज्ञवल्क्यपृष्टविशेषवन्तं परमात्मानं न मेने न ज्ञातवान् ह तस्य शाकल्यस्य मूर्धा विपपात प्रश्नोत्तराज्ञानात्। न केवलमयं मृत एव, अपि तु अस्य शाकल्यस्य अस्थीन्यपि परिमोषिणः स्तेनाः अन्यन्मन्यमानाः सादृश्यात् रजतं मन्यमानाः अपजह्रुरपहृतवन्तः ॥ २६ ॥

अथ शाकल्यशिरःपातानन्तरं याज्ञवल्क्य उवाच। हे ब्राह्मणाः भगवन्तः पूजार्हाः वो युष्माकं मध्ये यः कामयते याज्ञवल्क्यं पृच्छामीति इच्छति स मा मां पृच्छतु अथवा सर्वे यूयं मा मां पृच्छत वो युष्माकं मध्ये यः कामयते याज्ञवल्क्यो मां पृच्छत्विति तं वो युष्माकं मध्ये वर्तमानम् अहं पृच्छामि वाऽथवा सर्वान् वो युष्मान् पृच्छामीति। एवं याज्ञवल्क्येनोक्तास्ते ब्राह्मणा न दधृषुः धैर्यवन्तो नाभवन् ॥ २७ ॥

तान् ब्राह्मणान् एतैर्वक्ष्यमाणैः श्लोकैः पप्रच्छ याज्ञवल्क्यः। ननु जीवस्यैव देहातिरिक्तस्याभावात् भावे वा तस्यैव देहेन सहैव नाशेन पूर्वोत्तरदेहेष्वेकस्याभावेन तस्य पुनरुत्पादकप्रश्नोऽयुक्त एवेत्याशङ्कापरिहाराय पुरुषस्य नित्यत्वं तावदुपोद्घातसङ्गत्या साधयति– **यथेति** ॥ यथा वनस्पतिः। प्रथमा सप्तम्यर्थे वनस्पतौ। वृक्ष इत्ययं शब्दः अमृषा विद्यमानार्थः। तथैव पुरुषे पुरुष इत्ययं शब्दोऽमृषा विद्यमानार्थ एव। वृक्षशब्दप्रवृत्तिनिमित्तं वृक्णत्वं यथा वनस्पतौ विद्यमानं तथा पुरुकालसत्त्वरूपं पुरुषशब्दप्रवृत्तिनिमित्तं पुरुषे

विद्यमानमेव । तथाचोक्तप्रवृत्तिनिमित्तकपुरुषनामकत्वात्तन्नित्यत्वं सिद्धमिति भावः । एवं वृक्षसदृशतया प्रकृतस्य पुरुषस्य शरीरस्य हेयत्वख्यापनार्थं वृक्षसादृश्यं वक्ति– **तस्येत्यादिना** ॥ यद्वा, नित्यस्य पुरुषस्य पुनरुत्पत्तिर्नाम देहोत्पत्तिरेव देहस्यैवोत्पत्तिनाशसिद्ध्यर्थं पुरुषस्य वृक्षसाम्यमाह– **तस्येत्यादिना** ॥ अथवा कस्मान्मूलात् प्ररोहतीत्यत्र पुरुषोत्पादकमिव वृक्षोत्पादकमपि प्रष्टुं पुरुषोत्पादकप्रश्नावसरे वृक्षोत्पादकप्रश्नोऽसङ्गत इत्याशङ्कापरिहाराय वृक्ष-पुरुषयोस्साम्यमुपपादयति– **तस्येत्यादिना** ॥ तस्य पुरुषदेहस्य लोमानि पर्णानि वृक्षपर्णानीव अस्य पुरुषदेहस्य त्वक्लोमाश्रयभूतं चर्म बहिरुत्पाटिकावृक्षस्य सर्वापेक्षया बहिर्भूतत्वगिव ॥ २८ ॥

पुरुषत्वचः वृक्षत्वक्साम्यमुपपादयति– **त्वच इति** ॥ यथा अस्य वनस्पतेः त्वचः उत्पटः निर्यासः प्रस्यन्दी तथाऽस्य पुरुषस्य त्वच एव रुधिरं प्रस्यन्दि । तदेव विवृणोति– **तस्मादिति** ॥ यस्मादेवं साम्यं तस्माद् आहतात् छिन्नात् वृक्षाद् रस इव आतृणात् सम्यक् छिन्नाद् देहात् तद् रुधिरं प्रकर्षेण एति निर्गच्छतीत्यर्थः ॥ २९ ॥

वृक्षदेहयोः साम्यान्तरमाह– **मांसानीति** ॥ अस्य मांसानि शकराणि वृक्षशकलस्थानीयानि वृक्षान्तस्त्वङ्निभानि वा स्नावमध्ये यत् स्थिरं विद्यते अस्थिसंलग्नं तत् कीनाटमिव दारुसंश्लिष्टपाशवत् । पुरुषस्यास्थीनि वृक्षस्यान्तरतो विद्यमानदारूणि वृक्षान्तःस्थसारभूतदारूणीव वनस्पतिमज्जा पुरुषमज्जोपमा पुरुषमज्जायाः दृष्टान्तभूता कृतेत्यर्थः ॥ ३० ॥

एवं पुरुषस्य वृक्षसाम्यमुपपाद्येदानीं नाशोत्पत्तिमत्त्वेनापि साम्योपपादनपूर्वकं यत् प्रष्टव्यं तत् पृच्छति– **यदिति** ॥ यद्यथा वृक्णः छिन्नो मूलान्नवतरः पूर्वस्मादभिनवतरः पुनः प्ररोहते उत्पद्यते तथा मृत्युना वृक्णः मर्त्यः स्विन्मर्त्योऽपि पुनः प्ररोहति । स वृक्षो मर्त्यश्च कस्मान्मूलात्कारणात्प्ररोहत्युत्पद्यते । वृक्षपुरुषयोः स्वातन्त्र्येणोत्पादकः किंलक्षणश्चेति प्रश्नाशयः ॥ ३१ ॥

स्वयमेव पुरुषोत्पत्तौ सम्भावितं कारणान्तरमाशङ्क्य निराकरोति– **रेतस इति** ॥ हे ब्राह्मणाः रेतसः सकाशात् पुरुषः प्ररोहतीति मा वोचत मैवं वक्तुमर्हथ कुत इत्यत आह– **जीवत इति** ॥ यस्मात् तद् रेतो जीवतः पित्रादेः प्रजायते मया तु अञ्जसा प्रेत्य स्थितस्य महाप्रलयानन्तरमिति यावत् । सम्भवत्यस्मादिति सम्भव उत्पादकः । पृष्टः नहि महाप्रलये रेतःसिचः पित्रादेः जीवनं, तस्माद् रेतसः पुरुषोत्पत्तिर्न शङ्कनीयेत्यर्थः । ननु वृक्षस्य पुनरुत्पादकप्रश्नोऽयुक्तः तस्य धानाजन्यत्वस्य प्रत्यक्षसिद्धत्वादित्यत आह– **धानारुह इवेति** ॥ वृक्षो धानारुहः स्वातन्त्र्येण धानाजन्य इवाऽविदुषां प्रतीयते नतु विदुषाम् । अतस्तन्न स्वातन्त्र्येण वृक्षकारणमिति भावः । ननु वृक्षो मूलाद्रोहतीत्युक्तत्वाद् वृक्षोत्पादकप्रश्नः सिद्धविषय इति चेन्न। तस्याङ्गीकारवादमात्रत्वात् ॥ ३२ ॥

कुत इत्यतः तमपि पक्षं दूषयन् मर्त्य इति पूर्वोक्तमेवानुवदति– **यत् समूलमिति** ॥ यत् यदा समूलं वृक्षं पुरुषा आवृहेयुरुद्धर्तयेयुस्तदा सः उन्मूलो वृक्षः पुनरासम्यक् न भवेत् किम्? यथा एवं मृत्युना वृक्णो मर्त्यः स्वित् मर्त्योऽपि पुनर्भवेत् किम् । भवेदेव वृक्षो मर्त्यश्च । तत् कस्मान्मूलात् प्ररोहतीत्यर्थः । एवं याज्ञवल्क्येन पृष्टे पुरुषस्य पुनरुत्पादकं भगवन्तं जानन्तोऽपि ऋषयस्तत्पृष्टं सर्वं वक्तुमशक्तत्वात् तूष्णींबभूवुः ॥ ३३ ॥

तेषु तूष्णींभूतेषु याज्ञवल्क्यः स्वयमेव परिहरति– **जात एवेत्यादिना** ॥ ब्रह्म परं ब्रह्मैव सृज्यसर्जने कारणमित्यर्थः । सार्वज्ञाभावे सर्वसर्जनायोग इत्यत उक्तम्– **विज्ञानमिति** ॥ विज्ञानपूर्णमित्यर्थः । प्रयोजनापेक्षया सर्जनेऽपूर्णताप्रसङ्ग इत्यत आनन्दोद्रेकादेव सर्जनमित्याशयेनोक्तम्– **आनन्दमिति** ॥ आनन्दपूर्णमित्यर्थः । तस्याप्यन्यत उत्पत्तौ को विशेषो जीवादित्यत उक्तम्– **को न्विति** ॥ एनं परमात्मानं नु इदानीं सृष्टिकाले पुनः कः पुरुषो जनयेन्न कोऽपि । कुत इत्यत उक्तम्– **जात एवेति** ॥ अयं परमात्मजात एव नित्यजात एव अनादिकालतश्चिदानन्ददेहयुक्त एव

अतो न जायते तथाच क एनं जनयेदित्यर्थः । न केवलं पूर्णविज्ञानानन्दं ब्रह्म किन्तु अधिकारियोग्यतानुसारेण पुरुषार्थप्रदं चेत्याह– **रातिरिति** ।। दातुः स्वोद्देशेन हविरादिदातुर्यजमानस्य रातिरिष्टः । तद्विदः ब्रह्मविदः परायणं परमप्रियः तिष्ठमानस्य निष्ठावतः परायणं मुख्याश्रयः ।। ३४ ।।

इति शाकल्यब्राह्मणम् ।। ९ ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तममुनिविरचितायां पञ्चमोऽध्यायः ।।**

स्वयमेव पुरुषोत्पत्तौ सम्भावितं कारणान्तरमाशङ्क्य निराकरोति– **रेतस इति** ॥ हे ब्राह्मणाः रेतसः सकाशात् पुरुषः प्ररोहतीति मा वोचत मैवं वक्तुमर्हथ कुत इत्यत आह– **जीवत इति** ॥ यस्मात् तद् रेतो जीवतः पित्रादेः प्रजायते मया तु अञ्जसा प्रेत्य स्थितस्य महाप्रलयानन्तरमिति यावत् । सम्भवत्यस्मादिति सम्भव उत्पादकः । पृष्टः नहि महाप्रलये रेतःसिचः पित्रादेः जीवनं, तस्माद् रेतसः पुरुषोत्पत्तिर्न शङ्कनीयेत्यर्थः । ननु वृक्षस्य पुनरुत्पादकप्रश्नोऽयुक्तः तस्य धानाजन्यत्वस्य प्रत्यक्षसिद्धत्वादित्यत आह– **धानारुह इवेति** ॥ वृक्षो धानारुहः स्वातन्त्र्येण धानाजन्य इवाऽविदुषां प्रतीयते नतु विदुषाम् । अतस्तन्न स्वातन्त्र्येण वृक्षकारणमिति भावः । ननु वृक्षो मूलाद्रोहतीत्युक्तत्वाद् वृक्षोत्पादकप्रश्नः सिद्धविषय इति चेन्न । तस्याङ्गीकारवादमात्रत्वात् ॥ ३२ ॥

कुत इत्यतः तमपि पक्षं दूषयन् मर्त्य इति पूर्वोक्तमेवानुवदति– **यत् समूलमिति** ॥ यत् यदा समूलं वृक्षं पुरुषा आवृहेयुरुद्धर्तयेयुस्तदा सः उन्मूलो वृक्षः पुनरासम्यक् न भवेत् किम्? यथा एवं मृत्युना वृक्णो मर्त्यः स्वित् मर्त्योऽपि पुनर्भवेत् किम् । भवेदेव वृक्षो मर्त्यश्च । तत् कस्मान्मूलात् प्ररोहतीत्यर्थः । एवं याज्ञवल्क्येन पृष्टे पुरुषस्य पुनरुत्पादकं भगवन्तं जानन्तोऽपि ऋषयस्तत्पृष्टं सर्वं वक्तुमशक्तत्वात् तूष्णींबभूवुः ॥ ३३ ॥

तेषु तूष्णींभूतेषु याज्ञवल्क्यः स्वयमेव परिहरति– **जात एवेत्यादिना** ॥ ब्रह्म परं ब्रह्मैव सृज्यसर्जने कारणमित्यर्थः । सार्वज्ञाभावे सर्वसर्जनायोग इत्यत उक्तम्– **विज्ञानमिति** ॥ विज्ञानपूर्णमित्यर्थः । प्रयोजनापेक्षया सर्जनेऽपूर्णताप्रसङ्ग इत्यत आनन्दोद्रेकादेव सर्जनमित्याशयेनोक्तम्– **आनन्दमिति** ॥ आनन्दपूर्णमित्यर्थः । तस्याप्यन्यत उत्पत्तौ को विशेषो जीवादित्यत उक्तम्– **को न्विति** ॥ एनं परमात्मानं नु इदानीं सृष्टिकाले पुनः कः पुरुषो जनयेन्न कोऽपि । कुत इत्यत उक्तम्– **जात एवेति** ॥ अयं परमात्मजात एव नित्यजात एव अनादिकालतश्चिदानन्ददेहयुक्त एव

अतो न जायते तथाच क एनं जनयेदित्यर्थः । न केवलं पूर्णविज्ञानानन्दं ब्रह्म किन्तु अधिकारियोग्यतानुसारेण पुरुषार्थप्रदं चेत्याह– **रातिरिति** ॥ दातुः स्वोद्देशेन हविरादिदातुर्यजमानस्य रातिरिष्टः । तद्विदः ब्रह्मविदः परायणं परमप्रियः तिष्ठमानस्य निष्ठावतः परायणं मुख्याश्रयः ॥ ३४ ॥

इति शाकल्यब्राह्मणम् ॥ ९ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तममुनिविरचितायां पञ्चमोऽध्यायः ॥**

# षष्ठोऽध्यायः

उपनिषत्—

## अथ षडाचार्यब्राह्मणम्

[याज्ञवल्क्यं प्रति जनकस्य उपसत्तिः]

**जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज तं होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्ता- नित्युभयमेव सम्राळिति होवाच ॥ १ ॥**

भाष्यम्—

**अणुर्भगवांस्तद्विषयान्निर्णयान् वक्तुं वा।**

टिप्पणी—

आगतानामृषीणां मध्ये यो ब्रह्मिष्ठस्तस्य गुरुत्वेन वरणाय हि तद्विवेकार्थमृषिभिः कथा कारिता जनकेन । कथया च याज्ञवल्क्यः श्रेष्ठो निश्चितस्तदनन्तरं जनको याज्ञवल्क्यं गुरुत्वेन वव्रे चेत्याहानेनाध्यायेन । यद्वा, पञ्चमाध्याये विद्यापरीक्षाहेतुभूतया विजिगीषुकथया ब्रह्मस्वरूपं निर्धारितम् । इदानीं गुरुशिष्ययोर्याज्ञवल्क्यजनकयोः वादरूपकथया ब्रह्मस्वरूपनिर्धारणायायमध्यायः प्रवर्तते । पशूनिच्छन् अण्वन्तानित्युभयमेव सम्राळिति होवाचेत्येतत् पशूनण्वन्तानित्युभयमिच्छन् इति योजनया याज्ञवल्क्यवचनमिति प्रतीयते । तदयुक्तम् । याज्ञवल्क्यस्य स्वयं ज्ञानित्वेनान्यस्मादण्वन्तेच्छाभावादित्यतः पशूनिच्छन्नण्वन्तानित्येतज्जनकस्यैव वाक्यमिति सूचयन्नपेक्षिताध्याहारेणा- ऽण्वन्तानित्येतद् व्याचष्टे– **अणुरिति** ॥ तद्विषयानित्यनेनाणोरन्ता अण्वन्ता इति विग्रहः षष्ठी च कर्मणीत्युक्तं भवति । अन्तानित्यस्यार्थो निर्णयानिति वक्तुं चेति शेषोक्तिः ।

उपनिषत्—

[वाङ्नामकभगवदुपासना]

यत्ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छैलिनोऽब्रवीद् वाग्वै ब्रह्मेत्यवदतो हि किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत् सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य वागेवाऽयतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राळिति होवाच वाचा वै सम्राळ् बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग् जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

भाष्यम्—

प्रतिष्ठा प्रतिमा प्रोक्ता प्रतिरूपेण संस्थितेः ।
प्रतिमाऽधिकसादृश्यान्मुख्या विष्णोः सदा रमा ॥
दीप्तत्वादासमन्तात् सा चाऽकाश इति गीयते ।
प्रत्येकं विष्णुरूपाणामन्यदायतनं पृथक् ॥ इत्यध्यात्मे ॥

प्रतिमानामवस्थानं रहस्यं नाम सार्थकम् ।
चतुष्टयं यदा ज्ञातं सम्यग् विद्याफलं तदा ॥ इति च ॥

का प्रज्ञता वागेवेत्यादेर्धर्मधर्म्यभेदः।

टिप्पणी—

अब्रवीत्तु ते तस्यायतनं प्रतिष्ठामित्यादिवाक्यषट्कगतप्रतिष्ठाशब्द आश्रयपर इति व्याख्यानमसत् आयतनशब्देन पुनरुक्तिप्रसङ्गादिति भावेन प्रतिष्ठाशब्दार्थं निर्वचनपूर्वकमाह– **प्रतिष्ठेति** ॥ प्रतिरूपेण प्रतिबिम्बरूपेण प्रतिष्ठाशब्दोक्ता प्रतिमा केत्यत आह– **प्रतिमेति** ॥ रमा विष्णोर्मुख्या प्रतिमा ब्रह्मादीनामपि प्रतिमात्वान्मुख्येत्युक्तं तत्र हेतुर्विष्णोरधिकसादृश्यादिति । तदधीनत्वे सति तत्सदृशत्वस्यैव प्रतिबिम्बत्वादिति भावः । नित्यमुक्तत्वदेशव्याप्त्याद्यधिक-सादृश्यादित्यर्थः । सदेति स्वरूपकीर्तनम् । यद्वा मुक्तानामपि स्वानन्दानुभवितृ-त्वादिनाऽधिकसादृश्यात्सदेत्युक्तम् । ननु श्रुतावाकाशः प्रतिष्ठेत्याकाशस्य प्रतिमात्वोक्तेः कथमेतदित्यत आकाशशब्देन रमैवोच्यत इत्याह– **दीप्तत्वादिति** ॥ आ इत्यनुवादेन समन्तादिति व्याख्यानम् । ननु एकस्य विष्णोर्यथैकैव प्रतिमा एवमेकमेवाऽयतनं वक्तव्यं कथं वागादीनि षडायतनान्युक्तानीत्यत आह– **प्रत्येकमिति** ॥ वाक् प्राणचक्षुःश्रोत्रमनोहृदयनामकानां प्रत्येकं विष्णुरूपाणां अन्यत् रमाभिन्नं वागिन्द्रियादिकं पृथगायतनमित्यर्थः । ननु वाग् वै ब्रह्मेत्याद्युपदिष्टस्य वागादिनामकब्रह्मणः पूर्णत्वात् एकपाद् वा एतत्सम्राळिति कथमुच्यत इत्यतः तदभिप्रायमाह– **प्रतिमानमिति** ॥ प्रतिमेत्यर्थः । सार्थकं प्रतिपाद्यार्थसहितं रहस्यं नामेति सम्बन्धः । रहस्यं नाम तदर्थश्चेति चतुष्टयमित्यर्थः । विद्या फलं सम्यगिति सम्बन्धः । तथाच विद्यासम्पूर्णफलाय ज्ञातव्यचतुष्टये जित्वादिभिः षड्भिराचार्यैर्वाग्वै ब्रह्मेत्यादिना रहस्यं नामैवोक्तं न प्रतिष्ठादित्रयं अत एकपाद् वा एतदित्युक्तमिति भावः । ननु का प्रज्ञता का प्रियतेत्यादि धर्मप्रश्ने वाक् प्राणादिनिष्ठो धर्म एवोत्तरत्वेन वक्तव्यः वागेव सम्राळिति प्राण एव सम्राळिति वाक् प्राणादिरूपो धर्मी

कथमुत्तरत्वेनोच्यत इत्यत आह– केति ॥ इत्यादेः प्रश्नपरिहारात्मकस्य वाक्यस्य धर्मधर्म्यभेदोऽभिप्रेत इत्यर्थः ।

भाष्यम्—

अमिताक्षरं पञ्चरात्रं विद्येत्याहुर्मनीषिणः ।
मिताक्षरं श्लोकवाच्यमुभयं वेद ईर्यते ॥ इति ब्रह्माण्डे ॥
सूत्रं तु ब्रह्मसूत्राख्यं महामीमांसिका तथा ।
तथा साङ्कर्षणं सूत्रं ब्रह्मतर्कादयस्तथा ॥
प्रकाशिका निर्णयश्च तत्त्वनिर्णय एव च ।
व्याख्येति कथिताः सर्वाः स्वयं भगवता कृताः ।
वृहत्तर्कादयः सर्वा अनुव्याख्याः प्रकीर्तिताः ॥ इति प्रतिसङ्ख्याने
वाग् विष्णुर्वाचकत्वेन प्राणः प्रणयनात् स्वयम् ।
मनो मन्तृत्वतो नित्यं स चक्षुः सर्वदर्शनात् ॥
श्रोत्रं श्रवणशक्तित्वाद् हृदयं हृद्गतो यतः ॥ इति प्रत्याहारे ॥
अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम् ॥ इत्यादि च ॥
वागादिषु स्थितं विष्णुं य उपास्ते सदैव तु ।
वागादिनाम्ना नैनं स प्रजहाति कदाचन ॥ इति सत्तत्वे ॥

अत आयतनमेव वागिन्द्रियादि । परमं ब्रह्मेति वचनान्न वागिन्द्रियादिमात्रमुपास्यम् ।

प्रतिमाद्यं हरित्वेन पृथिव्याद्यमथापि वा ।
इन्द्रियप्राणजीवाद्यमथवा य उपासते ।
मिथ्योपास्तिमतां तेषां निष्कृतिर्न कदाचन ।
अतिदुःखे पतन्त्यद्धा तमस्यन्धे पतङ्गवत् ॥ इत्युपासानिर्णये ॥

टिप्पणी—

ननु ऋग्वेदादिविद्यासाधनकथनप्रकरणे विद्याकथनमयुक्तम् । नच करणव्युत्पत्त्या विद्याशब्देन तत्साधनमेवोच्यत इति वाच्यम् । ऋगादिव्यतिरिक्तस्य तस्याभावात् ।

नचानुक्तपञ्चरात्रपरत्वं विद्याशब्दस्येति वाच्यं भारते पञ्चरात्रविदो मुख्या इति प्रकृतपञ्चरात्रविषयत्वेन ऋषीनुवाच तान् सर्वान् अदृश्यः पुरुषोत्तमः। कृतं शतसहस्रं हि श्लोकानां हि तमुत्तममिति श्लोकशब्दस्य प्रयोगात् श्लोकशब्देन पञ्चरात्रोक्त्या पुनरुक्तिप्रसङ्गादित्यत आह– **अमितेति**॥ अमिताक्षरं गद्यात्मकं मिताक्षरं छन्दोबद्धपद्यात्मकम् । पञ्चरात्रमित्यनुवर्तते वेदविद्या उपनिषदः श्लोका इति वेदवाक्ये विद्या श्लोकशब्दाभ्यामुभयं गद्यात्मकं पद्यात्मकं च पञ्चरात्रमीर्यत इत्यर्थः । यद्यपि विद्याख्या मूलिका श्रुतिरित्युक्तं, तथापि व्याख्यानान्तरमेतदित्यदोषः। नचैवं मूलश्रुतेरसङ्ग्रहः ऋगादिपदेनैव तद्ग्रहणात्। 'ऋचस्स ऋच उद्धृत्य' इत्यादि मूलश्रुतावपि ऋगादिपदप्रयोगात्। सूत्राणीति सूत्रपदेन ब्रह्मसूत्रमात्रग्रहणे बहुवचनानुपपत्तिरिति भावेनाऽह– **सूत्रमिति**॥ व्याख्यानानीत्यस्यार्थमाह– **बृहत्तर्कादय इति** ॥ वाग्वै ब्रह्म प्राणो वै ब्रह्म चक्षुर्वै ब्रह्म श्रोत्रं वै ब्रह्म मनो वै ब्रह्मेति वाक्यानि वागादीन्द्रियाणामेव ब्रह्मत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **वागिति** ॥ वाचकत्वेन वाचकत्वशक्तिप्रदत्वेन वचनक्रियाकर्तृत्वेनेति यावत्। वागादिशब्दा ब्रह्मवाचका इत्यत्र समाख्यामाह– **अन्नमिति** ॥ नच तत्रापि विवादः । अधीहि भगवो ब्रह्मेति ब्रह्मप्रश्ने अन्नादीनामुक्तत्वात् । 'यतो वा इमानि भूतानि जायन्ते' 'अन्नं ब्रह्मेति व्यजानात्' इत्याद्युत्तरवाक्याच्च अन्नादिशब्दानां ब्रह्मपरत्वावगमात् । अन्नमत्रानुपयुक्तम् आदिपदेन हृदयं ब्रह्मेत्यारुणय इति श्रुतिग्रहणम्। ननु तथापि वाग्वै ब्रह्मेत्यादौ वागादिशब्दानां न ब्रह्मपरत्वमङ्गीकर्तुं शक्यम् । तथा सति नैनं वाक् जहाति नैनं प्राणो जहातीत्यादि फलवाक्यानुपपत्तेः। नहि ब्रह्मोपासकस्य वागादीन्द्रियात्यागः फलं सम्भवति। उपासनाननुगुणत्वात् । अत इन्द्रियाणामेव ब्रह्मत्वमुच्यत इत्यत आह– **अत इति**॥ यत एवं प्रमाणेन व्याख्यातमतो वागेवाऽयतनमित्यादावायतनत्वेनोक्तमेव वागादिकं वागिन्द्रियादि नतु वाग्वै ब्रह्मेत्यादिना ब्रह्मत्वेनोक्तं तद्विरोधापत्तेरित्यर्थः। अतो वाग्वै ब्रह्मेत्यादिनोक्तं वागादि ब्रह्मैवेति वक्तव्ये

आयतनमेव वागादीन्द्रियादीत्युक्तिः ब्रह्मत्वेनोक्तवागादेर्वागादीन्द्रियत्वे वागेवायतनमिति वागादीन्द्रियस्यैवायतनत्वोक्तिर्विरुद्धा स्यात् । नहि स्वस्यैव स्वयमायतनमिति बाधकान्तरसूचनार्था एतेनैतद्बाधकपरिहाराय वाग्वै ब्रह्मेत्यादौ वागाद्यभिमानिदेवताऽग्न्यादिरेव वागादिशब्देनोच्यते वागेवायतनमित्यादौ तु वागिन्द्रियमेव तस्यायतनत्वेनोच्यत इति यत्परव्याख्यानं तदप्यपास्तम् । उदाहृतप्रमाणविरोधस्य तदवस्थत्वात् । वाग्वै ब्रह्मेत्यादौ वागादिशब्देनेन्द्रिय-मात्रग्रहणे बाधकान्तरमाह– **परममिति** ।। यदि वाग्वै ब्रह्मेत्यादौ वागादिशब्दानां वागादीन्द्रियपरत्वं तर्हि वाग्वै सम्राट् परमं ब्रह्मेति परमब्रह्मत्ववचनं न स्यात् । नहीन्द्रियस्य परमब्रह्मत्वं सम्भवति । स य एवं विद्वानेतदुपास्त इत्युक्तमुपास्यत्वं च न स्यात् । नहीन्द्रियमात्रस्य जडस्योपास्यत्वं युक्तं अचेतनोपासनस्य व्यर्थत्वात् । तथाच साङ्कर्षणं सूत्रं अचेतनासत्यायोग्यान्यनुपास्या-न्यफलत्वविपर्ययाभ्यामिति । यद्यपि वाग् वै ब्रह्मेत्यादौ ब्रह्मशब्द एव वागादेः परब्रह्मत्वसाधकोऽस्ति तथापि ब्रह्मशब्दस्य कथञ्चिद् वागिन्द्रियादावेव सावकाशताशङ्कापरिहाराय परमं ब्रह्मेति वचनादित्युक्तम् । यद्वा, वागादिशब्द-समभिव्याहृतब्रह्मशब्दस्य परब्रह्मत्वसाधकत्वं शिष्यैरेव सुज्ञेयमिति भावेन व्यवहितवाक्यगतपरमब्रह्मशब्दोपादानमित्यवधेयम् । ननु नात्र वागादीन्द्रियमात्र-मुपास्यमुच्यते येन तद्वैयर्थ्यम् । किन्तु वागादेः परब्रह्मत्वेनोपासनमेव । तस्य च शुद्धब्रह्मोपासनाङ्गत्वेन सार्थकत्वादिति चेन्न । वागादीनां ब्रह्मत्वस्याभावेन तदुपासनस्य मिथ्योपासनत्वात् मिथ्योपासनायाश्च अनर्थफलहेतुत्वादित्याह– **प्रतिमाद्यमिति** ।। हरित्वेनेत्यस्योत्तरत्रापि सम्बन्धः ।

**भाष्यम्—**

> **सर्वेन्द्रियेषु या विष्णोरुपासा युगपत् सदा ।**
> **देवानामेव योग्या सा तया देवत्वमाप्नुयुः ।।**
> **सर्वे देवपदे योग्याः सायुज्यं स्वोत्तमेष्वथ ।**
> **सम्प्राप्य ब्रह्मणा सार्धं प्राप्नुयुः पुरुषोत्तमम् ।।**

दुहन्ति सर्वभोगांश्च तेभ्योऽन्ये मुक्तिगा नराः ।
स्वोत्तमेभ्यश्च देवेभ्यस्ते मुक्ता हरये सदा ।। इति च ।।
प्रविश्य देहं यो भोगः स्वरूपव्यतिरेकतः ।
सायुज्यमिति तं प्राहुः संयुक्तत्वाद् विशेषतः ।। इति च ।।
इन्द्रियेषु स्थितं विष्णुमुपासीत क्रमेण तु ।
सदा देवपदायोग्यः स मानुषसुरो भवेत् ।।
मानुषा देवलोकस्थास्ते प्रोक्ता मानुषाः सुराः ।
मानुषा देवसायुज्यं यान्त्युपासनयाऽनया ।। इति च ।।
ऋषभान् गजमिश्रांस्तु क्षत्रियो गुरुदक्षिणाम् ।
विप्रो दद्याद् वृषानेव वैश्यो गाः प्रातिविद्यकम् ।।

इति मानसंहितायाम् ।।

टिप्पणी—

अग्नौ पतङ्गवद् वागादीन्द्रियेषु वागादिनामकभगवदुपासको यः कश्चित् देवो भूत्वा देवत्वमप्येतीति प्रतीतिनिरासाय देवो भूत्वा देवानप्येतीति समग्रं वाक्यं व्याख्यातुं तदुपासनाधिकारिणस्तावदाह– **सर्वेति** ।। ननु देवो भूत्वा देवानप्येतीति कथं, देवत्वभवनव्यतिरेकेण देवत्वप्राप्तेरभावादित्यतो देवानप्येतीत्येतावन्मात्रं तद् व्याचष्टे– **तयेति** ।। इदानीं देवो भूत्वा देवानप्येतीति समग्रं वाक्यं व्याचष्टे– **सायुज्यमिति** ।। अथ देवप्राप्त्यनन्तरं सर्वाण्येनं भूतान्यभिक्षरन्तीति वाक्यं ऐहिकफलपरत्वप्रतीतिनिरासाय व्याचष्टे– **दुहन्तीति** ।। तेभ्यो देवेभ्यः ते च मुक्ता देवाः स्वोत्तमेभ्यो भोगान् दुहन्ति ते चोत्तमा देवा हरये भोगान् दुहन्तीति सम्बन्धः । ननु देवो भूत्वेत्येतत् स्वोत्तमदेवो भूत्वेत्येव कुतो न व्याख्यास्यते । अधमदेवस्योत्तमदेवाभेदस्य प्रमाणबाधितत्वादिति चेत् । तर्हि स्वोत्तमेषु सायुज्यं सम्प्राप्येति कथं व्याख्यानं तत्सायुज्यस्य तत्स्वरूपाव्यतिरेकेण तदानन्दभोगरूपत्वेनाभेदापरिहारादित्यत आह– **प्रविश्येति** ।। स्वरूपव्यतिरेके सायुज्यं कथमित्यत आह– **संयुक्तत्वादिति** ।।

नन्वस्यामुपासनायां देवपदायोग्यानामपि कथञ्चिदधिकारोऽस्ति नवा। नाऽद्यः फलाभावात्। देवो भूत्वेत्यादेर्दैवतापरत्वात्। न द्वितीयः प्राग् युगपदिति विशेषणवैयर्थ्यापत्तेरित्यतः प्रथमपक्षं तावदङ्गीकरोति– **इन्द्रियेष्विति** ॥ तत्रोक्तदोषपरिहारार्थं देवो भूत्वेति वाक्यं व्याचष्टे– **स इति** ॥ मनुष्याणां सुरत्वाभावात् कथमेतदित्यत आह– **मानुषा इति** ॥ देवानप्येतीत्येतद् व्याचष्टे– **मानुषा इति** ॥ हस्त्यृषभं सहस्रमित्यस्य हस्तितुल्यऋषभो यस्मिन् गोसहस्रे तत्सहस्रहस्तिऋषभं सहस्रमिति व्याख्यानमसत्। गजऋषभाणामेव गुरुदक्षिणात्वेन क्षत्रियेण दातव्यतया जनकराजेन तेषामेव गुरुदक्षिणात्व-प्रतिज्ञोपपत्तेः। गवां च वैश्येनैव तत्त्वेन दातव्यत्वादिति भावेन तत्र प्रमाणमाह– **ऋषभानिति** ॥ अनेन हस्तिना युक्त ऋषभो हस्तिऋषभस्तम्। सहस्रं सहस्रसङ्ख्याकं ददामीत्यर्थ उक्तो भवति। एवं च द्वन्द्वसमासत्वे हस्त्यृषभाविति स्यादिति परास्तम्। गवां सहस्रमवरुरोधेति पूर्वमुक्तं गोसहस्रावरोधनं तु विद्यापरीक्षणार्थमेव नतु गुरुदक्षिणार्थमिति न तद्विरोधः।

**भाष्यम्—**

> **अन्यया विद्यया मुक्तिः सुराणामन्यया नृणाम्।**
> **तत्रापि योग्यताभेदात् प्रतिभेदा अवान्तराः॥**
> **यया यस्य विमुक्तिः स्यात् तद्दाता मुख्यतो गुरुः।**
> **एकदेशगुरुत्वं स्यादन्यविद्याप्रदस्य तु॥ इति च॥**

**टिप्पणी—**

ननु जनकस्य जित्वादयो यादृशगुरवो याज्ञवल्क्योऽपि किं तादृश एव नेति ब्रूमः। किन्तु मुख्यगुरुरेव तन्मोक्षसाधनविद्योपदेष्टृत्वात्। जित्वादयस्त्वमुख्यगुरवः। मोक्षसाधनादन्यविद्याप्रदत्वात्। जित्वाद्युपदिष्टविद्याया अपि मनुष्यादिमोक्षसाधनत्वेनासिद्धो हेतुरिति चेन्न। तथापि जनकमोक्ष-हेतुत्वाभावात्। नन्वेकस्या एव विद्याया मनुष्यादिमोक्षहेतुत्वं जनकादिमोक्षहेतुत्वा-भावश्च कथमित्यत आह– **अन्ययेति** ॥ योग्यताभेदादित्यस्यात्रापि सम्बन्धः।

तत्रापि एकस्यामपि। तर्हि सर्वेषामपि सुराणां किमेकयैव विद्यया मुक्तिर्नैवेत्याह– **तत्रापीति** ।। सुरेष्वपीत्यर्थः । प्रतिभेदाः प्रातिस्विकभेदाः। मोक्षसाधनतदन्यविद्यादातृत्वयोः मुख्यामुख्यगुरुत्वाभ्यां व्याप्तिमाह– **ययेति** ।। २ ।।

उपनिषत्—

[प्राणनामकभगवदुपासना]

**यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छौल्बायनोऽब्रवीत् प्राणो वै ब्रह्मेत्यप्राणतो हि किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येक-पाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवाऽयतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाया प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।। ३ ।।**

भाष्यम्—

प्राणसंस्थस्य वै विष्णोः सम्प्रीत्यै भोजनं भवेत्।
तदिच्छयैव चौर्यादि कुर्युरज्ञा अपि ध्रुवम् ।।
तथापि तं न जानीयुः प्राणात्मानं जनार्दनम् ।। इति प्रवृत्ते ।।

**टिप्पणी—**

नन्वयाज्ययाजनाप्रतिग्राह्यप्रतिग्रहचौर्याणि भोजनसाधनान्येव नतु प्राणप्रीति-साधनानि । अतः प्राणस्यैव कामायायाज्यं याजयतीत्यादि कथमुच्यत इत्यतः श्रुतावप्ययाज्ययाजनादीनां परम्परयैव प्राणप्रीतिसाधनत्वं विवक्षितमिति भावेनाऽह– **प्राणेति** ॥ तदिच्छया वस्तुतः प्राणस्थविष्णुप्रीतिकरभोजनेच्छया ज्ञानिनो भोजनसाधनमयाज्यया याजनादिकं कुर्युः । अज्ञा अपि भोजनसाधनं चौर्यादि कुर्युरित्यपिशब्दार्थः । तत्र वधाशङ्कं भवतीत्यस्य तात्पर्यं चौर्येति । आदिपदेनाऽयाज्ययाजनाप्रतिग्राह्यप्रतिग्रहयोः ग्रहणम् । चौर्यस्येतरदोषापेक्षया प्रबलत्वाच्छ्रुतिक्रमोल्लङ्घनं चौर्यादिकरणे किं तेषां स्वातन्त्र्येणेति भावेनोक्तम्– **तदिच्छयैवेति** ॥ प्राणस्थविष्णोरिच्छयैवेत्यर्थः । अनेन प्राणस्यैव कामायेति द्वितीयवाक्यं व्याख्यातं भवति । ननु प्राणस्थविष्णुप्रीतिकरभोजनेच्छया तदिच्छयैव यदि चौर्यादि कुर्युस्तर्हि ते कथमज्ञा इत्यत आह– **तथाऽपीति** ॥ यद्यपि वस्तुतः प्राणस्थविष्णुप्रीतिकरभोजनेच्छया तदिच्छयैव चौर्यादि कुर्युः । तथापीत्यर्थः ॥ ३ ॥

उपनिषत्—

[चक्षुर्नामकभगवदुपासना]

**यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तद् वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत् सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवाऽयतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति**

**सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको ह वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥**

**भाष्यम्—**

**यच्चक्षुषि स्थितं रूपं विष्णोश्चक्षुस्तदुच्यते।**
**शब्दादेरप्यापरोक्ष्ये तद्धेतुर्विश्वनामकम्॥**
**तद्गतस्य ततो विष्णोः कण्ठस्थानागमो यदा।**
**तदा स्वप्नो भवेज्जाग्रद्दर्शनं नैव जायते।**
**चक्षुर्निमीलनं च स्यात् सर्वेन्द्रियगुणैः सह।**
**चक्षुरात्मा ततो विष्णुः सत्यमित्यभिधीयते॥ इति च॥**

**टिप्पणी—**

चक्षुर्वै ब्रह्मेत्यादौ चक्षुःशब्देन नेन्द्रियमात्रमुच्यते। किन्तु विष्णुरूपमेवेत्यत्र प्रमाणान्तरमाह– **यदिति** ॥ ननु चक्षुषां वै सम्राट् पश्यन्तमाहुरित्यादिना चक्षुरिन्द्रियस्यैव सत्यत्वमुपपाद्यते। तत्कथमेतदित्यतस्तदपि चक्षुर्नामकभगवत एव सत्यत्वोपपादकमित्यभिप्रेत्याद्राक्षीरिति स आहाद्राक्षमित्यादिकमुपलक्षणपरमिति भावेन चक्षुःस्थभगवद्रूपविशेषं दर्शयन्नाह– **शब्दादेरिति** ॥ आदिपदेन गन्धादिग्रहणम् अपिशब्देन रूपसमुच्चयः। दक्षिणाक्षिस्थविश्वनामकविष्णुरूपस्य जाग्रद्दर्शनमात्रहेतुत्वादिति भावः। विश्वनामकविष्णो रूपादिसाक्षात्कारहेतुत्वं व्यतिरेकेणोपपादयति– **तद्गतस्येति** ॥ चक्षुर्गतस्येत्यर्थः। ततश्चक्षुषः कुतो न जायत इत्यत आह– **चक्षुर्निमीलनमिति** ॥ स्वप्नावस्थायां श्रोत्रादिसर्वेन्द्रियगुणैर्व्यापारैस्सह चक्षुर्निमीलनं स्यात् अतः सन्निकर्षाभावान्न ज्ञानमिति भावः। किं तत इत्यत आह– **चक्षुरात्मेति** ॥ ततो जाग्रद्दर्शनहेतुत्वात् ॥ ४ ॥

उपनिषत्—

[श्रोत्रनामकभगवदुपासना]

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदि-त्येकपाद्वा एतत् सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद् वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशः दिशो वै सम्राट् श्रोत्रं श्रोत्रं वै सम्राट् परमं ब्रह्म नैनं श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभसहस्रं ददामीति होवाच जनको ह वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥

भाष्यम्—

सर्वव्यापी तु भगवाननन्त इति कीर्तितः ।
दिङ्नामा स तु विज्ञेयो दिक्षुस्थो नित्यदेशनात् ॥ इति च ॥

टिप्पणी—

ननु अनन्त इत्येतदुपासीतेति श्रोत्रनामकस्य भगवतोऽनन्तत्वमुक्त्वा काऽनन्तता दिश इति होवाचेति दिशामनन्तत्वमुच्यते तदसङ्गतमित्यत आह— सर्वव्यापीति ॥ दिक्षुस्थ इति सप्तम्या अलुक् ॥ ५ ॥

उपनिषत्——

[मनोनामकभगवदुपासना]

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदि-त्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवाऽयतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत काऽऽनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥

भाष्यम्——

मनःस्थितस्य यद् विष्णोः सम्बन्धादेव कामतः ।
जातः सुतः सुखे हेतुः परानन्दो हरिः किमु ॥ इति ब्रह्मतर्के ॥

टिप्पणी——

ननु काऽनन्दतेति प्रश्ने मन एवेति मनोनामकस्य भगवतः आनन्दत्वं प्रतिज्ञाय मनसा वै सम्राडित्यादिना पुत्रस्याऽनन्दत्वमुच्यते । तदसङ्गतं, पुत्रस्यानन्दत्वमयुक्तं चेत्यत आह– **मन इति** ॥ यत् यदा कैमुत्येन मनःस्थस्य भगवत आनन्दहेतुत्वमुपपादयितुं पुत्रस्याऽनन्दहेतुत्वमुच्यत इति नासङ्गतिरिति भावः ॥ ६ ॥

उपनिषत्—

[हृदयनामकभगवदुपासना]

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छाकल्योऽब्रवीद् हृदयं वै ब्रह्मेत्यहृदयस्य किं स्यादित्यब्रवीत्तु ते तस्याऽयतनं प्रतिष्ठां न मेऽब्रवीदित्येक-पाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवाय-तनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानामायतनं हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदये होव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्तृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

इति षडाचार्यब्राह्मणम् ॥ १ ॥

भाष्यम्—

सदा प्रतिष्ठितानि भवन्ति। विशेषतोऽपि प्रतिष्ठितानि सुप्तौ।

हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः।
जीवानां स्थानमुद्दिष्टः सर्वदैव सनातनः॥
हृत्कर्णिकामूलगतः स्वाङ्गुष्ठाग्रप्रमाणकः।
मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः॥
अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ।

प्रविशन्ति सुषुप्तौ तु प्रबुद्ध्यन्ते ततस्तथा ॥
सोऽयं त्रिरूपो भगवान् हृदयाख्यः प्रकीर्तितः ॥ इति च ॥
स्थानमायतनं प्रोक्तं प्रतिष्ठा धारकः पुमान् ॥ इति च ॥

इति षडाचार्यब्राह्मणम् ॥ १ ॥

**टिप्पणी—**

हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठेति प्रतिज्ञावाक्ये हृदयशब्देन सर्वदा जीवधारकं सुप्तौ च जीवधारकं भगवद्रूपमुच्यत इति ज्ञापनाय हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्तीत्युपपादकवाक्यम् अपेक्षिताध्याहारेण द्वेधा व्याचष्टे– **सदेति** ॥ ननु हृदयनामकं हृद्गतं च भगवद्रूपमेकमेव। अत्र तु हृदयं वै सम्राट् सर्वेषां भूतानामायतनमित्यायतनत्वेनोच्यमानं रूपं एकं प्रतिष्ठात्वेनोच्यमानं रूपद्वयमिति रूपत्रयमुच्यते । तत् कथमित्यतो हृदयस्थं रूपत्रयमप्यस्तीति भावेन हृदयं वै सम्राट् सर्वेषां भूतानामायतनमिति वाक्यं तावद् व्याचष्टे– **हृदय इति** ॥ तत्तद्धृदयव्यापी तत्तज्जीवस्थानमिति सर्वेषां जीवानां स्थानमित्यर्थः । एवं सर्वे जीवाः प्रतिष्ठिता इत्युत्तरवाक्यमपि व्याख्येयम् । हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठेति वाक्यं द्वेधा व्याचष्टे– **हृत्कर्णिकेति** ॥ प्रतिष्ठिताः सर्वदेति शेषः । तु विशेषेण प्रविशन्तीत्यन्वयः । अनेन 'प्रादेशमात्रं पुरुषं वसन्तम्'(भा.२.२.८.) इति 'अङ्गुष्ठमात्रः पुरुषः' इति 'अङ्गुष्ठाग्रप्रमाणकः'(छां.भा.५.१८.१) इति वचनानां विरोधः परिहृतो भवति। ननु जाग्रदवस्थायां जीवो दक्षिणाक्षिस्थः स्वप्नावस्थायां कण्ठदेशस्थः सुप्तौ तु हृदयस्थः । जाग्रदाद्यवस्थाप्रेरकविश्वतैजसप्राज्ञानां दक्षिणाक्ष्यादिषु स्थितत्वात् । यथोक्तं 'दक्षिणाक्षिमुखे विश्वः'(माण्डूक्य.भा) इत्यादि । तथाच हृत्कर्णिकामूलगतभगवद्रूपे जीवः सर्वदा प्रतिष्ठितः। सुप्तौ हृत्कर्णिकाग्रस्थितहरौ प्रविशतीति कथमुक्तम् । कथं वा हृदयव्याप्त-प्रादेशपरिमितभगवद्रूपस्य सर्वदा जीवस्थानत्वमिति चेन्न। हृदिस्थमेव सर्वदा जीवस्वरूपं 'हृदि ह्येष आत्मा' इत्यादि श्रुतेः । 'अवस्थितिवैशेष्यादिति

चेन्नाभ्युपगमाद्धृदि हि' (ब्र.सू. २.३.२४) इति सूत्राच्च। जागरितादावप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत्। यथोक्तं 'गुणाद् वाऽलोकवद्' (ब्र.सू. २.३.३५) इति । ननु कथमङ्गुष्ठमात्रत्वं भगवद्रूपस्य परिमाणान्तरस्यापि तत्र सत्वादिति चेन्न। हृदि विद्यमानाऽकाशस्याङ्गुष्ठमात्रत्वेन भगवन्मूर्तिविशेषस्य तत्राभिव्यक्त्या लक्षणयाङ्गुष्ठमात्रत्वव्यपदेशात् । भिन्नेष्वपि स्थानैक्योक्तिवद् हृदयाकाशस्य अङ्गुष्ठमात्रत्वेन तत्सम्बन्धात् सर्वगतेऽपि हरौ उपचारेण अङ्गुष्ठमात्रत्वव्यपदेशात् । नन्वेवं विष्णुरूपस्यैव यद्यायतनत्वं प्रतिष्ठात्वं च तर्हि श्रुतौ हृदयमायतनं हृदयं प्रतिष्ठेति कथमुक्तमित्यत आह– **सोऽयमिति** ॥ नन्वायतनप्रतिष्ठाशब्दयोर्नार्थभेदोऽस्ति । नचायतनशब्दः स्थानार्थ इत्युक्तमिति वाच्यं तथापि प्रतिष्ठाशब्दस्य तदन्यार्थानुपलम्भादित्यत आह– **स्थानमिति** ॥ ७ ॥

### अथ खण्डार्थः

एवं विद्यापरीक्षानन्तरं जनको ह वैदेह आसां चक्रे आसनं कृतवान्। सिंहासनमधिरूढ इति यावत्। अथ तदनन्तरं याज्ञवल्क्यो जनकसमीपमाववाज। तं याज्ञवल्क्यं विधिवत् सम्पूज्य होवाच जनकः । किमिति हे याज्ञवल्क्य किमर्थमचारीः पर्यटनमकार्षीः किं पशूनिच्छन् उताणुर्भगवान् तद्विषयान् अन्तान्निर्णयान् वक्तुं वेति । एवमुक्तो याज्ञवल्क्यो हे सम्राट् सार्वभौम उभयमेव पश्विच्छाण्वन्तवचनं चेत्युभयमपि मम चरणे निमित्तमित्युवाच । उभयमेव नान्यदिति वा ॥ १ ॥

यद्यण्वन्तान् वक्तुमागतस्तर्हि वक्तव्यमिति राज्ञोक्ते स्वयमन्येभ्यो ज्ञातादधिकं मुक्तिसाधनं वक्तुं ते तव कश्चिदाचार्यो यदब्रवीत् तत्तावद् वयं शृणवामेत्याह याज्ञवल्क्यः। एवमुक्तो जनक आह– **अब्रवीदिति** ॥ मे मम शिलिनस्यापत्यं शैलिनः जित्वा नामतो ब्रह्मगुणपरिपूर्णं विष्णवाख्यं वाग् वै वक्तृत्वाद् वाङ्नामकं वै प्रसिद्धमित्यब्रवीत् । शैलिनोपदिष्टं स्तोतुकामो याज्ञवल्क्यस्तस्याऽप्तत्वप्रयोजकीभूतशुद्धित्रयमाह– **यथेति** ॥ माता यस्यानुशासित्री स

मातृमान्, पिता यस्यानुशासकः स पितृमान्, आचार्यो यस्यानुशासकः स आचार्यवान् पुरुषो यथा स्वशिष्याय ब्रूयात् शैलिनस्तुभ्यं वाग् वै ब्रह्मेत्यब्रवीदिति यत्तत्तथेत्यर्थः । वाग् वै ब्रह्मेत्येतन्मुनिरेवोपपादयति– **अवदत इतिं** ॥ अवदतो वाङ्नामकभगवद्रूपशून्यस्य किं फलं स्यात् वचनक्रियाया एवासम्भवेनाध्ययनादिनित्यकर्मानुष्ठानस्यैवासम्भवात् । हि यस्मादिति । तस्माद् वाग् ब्रह्मेति साधूक्तम् । अनेनैवोपदेशेन कृतकृत्योऽस्मीति न मन्तव्यमिति भावेन नृपं प्रति मुनिः पृच्छति– **अब्रवीदिति** ॥ स जित्वा ते तव तस्य वाङ्नामकस्य भगवतः आयतनं स्थानं प्रतिष्ठां प्रतिमां उपलक्षणमेतत् । वाङ्नामार्थं तु विशेषेणाब्रवीत् किमिति । एवमुक्तो जनको न मेऽब्रवीदित्याह तं प्रति मुनिराह हे सम्राट् एतत् जित्वोपदिष्टमुपास्यस्य भगवतो वाङ्नामकत्वमेकपाद् वा इति । उपास्यस्य भगवतो हि आयतनं प्रतिमा रहस्यं नाम तदर्थश्चेति चतुष्टयं मोक्षार्थं ज्ञेयम् । तत्र जित्वा रहस्यनाममात्रमुपदिष्टवानिति तदुपदिष्टमेकदेशरूपमेवेत्यर्थः । एवमुक्तो राजाह– **स इति** ॥ हे याज्ञवल्क्य स वै सर्वब्राह्मणप्रश्नोत्तरदाता त्वं नोऽस्माकं ब्रूहि । वाङ्नामकस्य भगवत आयतनादित्रयमिति शेषः । एवमुक्तो मुनिराह– **वागेवेति** ॥ वागेव प्रसिद्धवागिन्द्रियमेवाऽयतनमधिष्ठानं आकाश आ समन्ताद्दीप्तत्वादाकाशनाम्नी रमा प्रतिष्ठा प्रतिमा । एनद् एतत् प्रज्ञेत्युपासीत । राजा पृच्छति– **का प्रज्ञतेति** ॥ धर्मधर्मिणोरभेदाभिप्रायेणोत्तरमाह– **वागेवेति** ॥ वाङ्नामकभगवद्रूपमेवेत्यर्थः । तस्य प्रज्ञतामुपपादयति– **वाचेति** ॥ वाचा वै वाङ्नामकभगवद्रूपेण बन्धुः प्रज्ञायते । को बन्धुरित्यत आह– **ऋग्वेद इति** ॥ ऋग्वेदादीनामिष्टसाधनावबोधकत्वाद् बन्धुत्वम् । विद्येत्यमिताक्षरं पञ्चरात्रमुच्यते, श्लोका इति मिताक्षरं पञ्चरात्रं, सूत्राणि ब्रह्मसूत्रादीनि, अनुव्याख्यानानि वेदव्याख्यानविस्तररूपाणि बृहत्तर्कादीनि, व्याख्यानानि वेदव्याख्यानभूतब्रह्मतर्कादीनि, इष्टं यजनं, हुतं होमः, अशितमन्नदानम्, पायितं पेयदानं, अयं च लोकः परश्च लोकः सर्वाणि भूतानि च वाचा

वै प्रज्ञायन्ते । उपसंहरति– **वाग्वा इति** ।। अत इति शेषः । यद्वा ब्रह्मशब्दस्यान्यत्रापि कथंचिद्वृत्तेः 'वाग्वै ब्रह्म' इत्यत्र वाङ्नामकत्वमन्यस्योच्यत इति न भ्रमितव्यमित्याह– **वाग्वा इति** ।। उक्तप्रकारेण वाङ्नामकभगवदुपासकस्य फलमाह– **नैनमिति** ।। यो देवत्वयोग्योऽधिकारी एवमायतनादिचतुष्टयसाहित्येन एतत् वाङ्नामकभगवद्रूपं विद्वानुपास्ते एनमधिकारिणं वाक् वाङ्नामकं ब्रह्म न जहाति स देवान्देवत्वमप्येति। ततो देवो भूत्वा स्वोत्तमदेवेषु सायुज्यं प्राप्य देवान् क्रीडादिगुणसम्पन्नश्वेतद्वीपादिस्थितभगवद्रूपविशेषान् ब्रह्मणा सहाप्येति प्राप्नोति । तत्र मुक्तौ सर्वाणि भूतानि तदवराणि एनमभिक्षरन्ति एतस्मै सर्वान् भोगान् दुहन्तीत्यर्थः । यो देवपदायोग्य एवं विद्वानेतदुपास्ते स देवो भूत्वा देवलोकस्थो भूत्वा देवानप्येति मुक्तौ देवेषु सायुज्यं प्राप्नोति । इतरत्समानम् । अत्र देवपदयोग्यस्य वागिन्द्रियादिषु युगपदुपासनं अन्यस्य तु क्रमेणेति युक्तः फलभेदः । एवमुपदिष्टो राजा स्वयोग्यगुरुदक्षिणां प्रतिजज्ञे– **हस्त्यृषभमिति** ।। हस्तिना युक्त ऋषभो हस्तृषभस्तं सहस्रं सहस्रसङ्ख्याकं ददामीति होवाच जनको वैदेहः । एवमुक्तः स याज्ञवल्क्यो होवाच । किम् । अननुशिष्य शिष्यस्योपदेष्टव्यं सर्वमनुपदिश्य नाहरेत गुरुदक्षिणां न गृह्णीयादिति मे मत्पिताऽमन्यत । अतो नाहं समग्रमनुपदिश्य गृह्णामीति भावः । एवमुत्तरखण्डपञ्चकेऽप्यक्षरयोजना ।। २ ।।

शुल्वायनस्यापत्यं शौल्वायनः । उदङ्को नामतः ब्रह्मा प्राणः प्रणयनात् प्राणनामकं वै प्रसिद्धमित्यत्राब्रवीत् । अप्राणतः प्राणनामकभगवद्रूपशून्यस्य किं स्यात् । चेष्टादिसर्वप्रवृत्तिविलोपापत्तेः प्राण एव प्राणापानादिरूपो वायुरेव आयतनं स्थानं एतत्प्राणनामकं ब्रह्म प्रियमित्युपासीत । प्राणनामकस्य भगवतः प्रियत्वमुपपादयति– **प्राणस्यैवेति** ।। हे सम्राट् प्राणस्यैव प्राणस्थस्य प्राणनामकस्य विष्णोरेव कामाय सम्प्रीत्यै भोजनं भवेत् । तादृशभोजनार्थमेवाज्ञोऽपि जनः प्राणस्य तन्नामकविष्णोः कामायेच्छयैवायाज्यं याजनायोग्यं शूद्रादिकमपि याजयति । अप्रतिगृह्यस्याप्रतिग्राह्यमपि प्रतिगृह्णाति यस्मात्प्रतिग्रहो न

ग्राह्यस्तस्य सकाशादिति वा । चौर्यं च करोति तदर्थं यां दिशमेति तत्र वधाशङ्कं वधविषयाशङ्का भवतीत्यर्थः ।। यद्वा यां दिशमेति तत्र वधाशङ्कं यथा भवति तथा तां दिशमेतीत्यर्थः । एनमुपासकं प्राणः प्राणस्थः प्राणनामको विष्णुर्न जहाति ।। ३ ।।

वट्कुर्नामतः वृष्णस्यापत्यं वार्ष्णः । ब्रह्म चक्षुः सर्वदर्शनाच्चक्षुर्नामकं वै । अपश्यतश्चक्षुर्नामकभगवद्रूपशून्यस्य किं स्यात् । विश्वनामकस्य तस्य जाग्रद्दर्शनमात्रहेतुत्वेन तदभावे जाग्रद्दर्शनमात्राभावापत्तेरिति भावः । चक्षुरेव चक्षुरिन्द्रियमेव । आयतनमवस्थानम् । चक्षुःस्थस्य चक्षुर्नामकस्य विश्वस्य सत्यत्वमुपपादयति– **चक्षुषेति** ।। चक्षुषा चक्षुःस्थेन चक्षुर्नामकेन विश्वाख्यविष्णुरूपेण तत्प्रेरणयेति यावत् । पश्यन्तं पुरुषं प्रत्याहुरन्ये पुरुषाः । त्वं तत्र रूपादिकमद्राक्षीरिति । स पश्यन्नाह– **अद्राक्षमिति** ।। पुनर्दृष्टं चेत् तद् वस्तु सत्यं यथास्थितं भवति । श्रौत्रज्ञानाद्युपलक्षणमेतत् । एवमन्वय उक्तः । चक्षुःस्थविश्वाख्यविष्णुरूपस्य कण्ठस्थानादौ गमने जाग्रद्दर्शनं न भवतीति व्यतिरेकोऽपि द्रष्टव्यः । यत एवं चक्षुर्नामकभगवतो यथार्थज्ञानहेतुत्वं तत्तस्माच्चक्षुःस्थं ब्रह्म सत्यं भवतीत्यर्थः । एनम् उपासकं चक्षुःस्थं चक्षुर्नामकं ब्रह्म न जहातीत्यर्थः ।। ४ ।।

गर्दभी गर्दभदेशीयः विपीतो नामतः, भरद्वाजस्यापत्यं भारद्वाजः । ब्रह्म श्रोत्रं श्रवणाच्छ्रोत्रनामकं वा इत्यब्रवीत् । अशृण्वतः श्रोत्रनामकभगवच्छून्यस्य किं स्यात् । सच्छास्त्रश्रवणाद्यसम्भवात् श्रोत्रमेव श्रोत्रेन्द्रियमेवाऽयतनम् । दिश एव चक्षुःस्थितो दिङ्नामकः विष्णुरेवेत्यर्थः । दिग्गतस्य विष्णोरनन्तत्वमुपपादयति– **तस्माद्वा इति** ।। हे सम्राट् हि यस्माद्दिशोऽनन्ताः दिङ्नामा दिक्षु स्थितो विष्णुः सर्वव्यापी तस्मादेव यः कोऽपि यां काञ्चन दिशं तन्नामकभगवदधिष्ठितां दिशं प्रति गच्छति अस्या दिशोऽन्तमवसानं नैव गच्छतीत्यर्थः । यदधिष्ठितदिशामेवानन्तत्वं सोऽनन्त इति किमु वक्तव्यमित्यर्थः । नन्वेवं दिङ्नामकस्य दिक्स्थस्य विष्णोरनन्तत्वेऽपि

श्रोत्रान्तर्गतस्य विष्णोरनन्तत्वेनोपासनं कथं स्यादित्यत आह– **दिशो वा इति** ॥ दिक्स्थं विष्णुरूपमेव श्रोत्रं श्रोत्रान्तर्गतमित्यर्थः । एनमुपासकं श्रोत्रस्थं श्रोत्रनामकं ब्रह्म न जहाति ॥ ५ ॥

जबालाया अपत्यं जाबालः, सत्यकामो नामतः, मनो मन्तृत्वतो मनोनामकं वै ब्रह्मेत्यब्रवीत् । अमनसो मनोनामकभगवद्रहितस्य किं स्यात् । मननादे-रसम्भवात् मन एव प्रसिद्धमनोरूपेन्द्रियमेवायतनम् । एतन्मनोनामकं ब्रह्मा-नन्दहेतुरित्युपासीत । आनन्दता आनन्दहेतुता मनोगतस्य मनोनामकस्य विष्णोरानन्दहेतुत्वमुपपादयति– **मनसेति** ॥ मनसा मनोनामकविष्ण्वधिष्ठितेन मनोरूपेन्द्रियेणैव पुमान् स्त्रियं प्रत्यभिहार्यते नीयते ह । तस्यां स्त्रियां प्रतिरूपोऽनुरूपः पुत्रो जायते । स जातः पुत्रः आनन्दः आनन्दहेतुः । एवं यदधिष्ठितमनोव्यापारेण जातः पुत्रः सुखहेतुः स आनन्दरूपः परमात्मा सुखहेतुरिति किमु वक्तव्यमित्यर्थः । एनमुपासकं मनोनामकं मनःस्थं ब्रह्म न जहातीत्यर्थः ॥ ६ ॥

विदग्धो नामतः शाकलस्यापत्यं शाकल्यः हृदयं हृदयनामकं वै ब्रह्मेत्यब्रवीत् अहृदयस्य हृदयनामकभगवद्रूपशून्यस्य किं स्यात् । जीवस्य सुप्त्याद्यसम्भवादिति भावः । हृदयमेव प्रसिद्धं हृदयमेव । आयतनं स्थितिः स्थितिहेतुः । स्थितता स्थितिहेतुता । उत्तरमाह– **हृदयमेवेति** ॥ हृदयमेव हृदयगतं हृदयनामकं हृदये सर्वत्र व्याप्तं प्रादेशपरिमितं हृत्कर्णिकामूलगतं अङ्गुष्ठाग्रप्रमाणकं हृत्कर्णिकाग्रगतं अङ्गुष्ठमात्रपरिमितं चेति भगवद्रूपत्रयमेव स्थितिहेतुरित्यर्थः । आद्यस्य हृदयनामकस्य स्थितिहेतुत्वमुपपादयति– **हृदयं वा इति** ॥ हे सम्राट् हृदयं वै हृद्गतं हृदयनामकं हृदये सर्वशो व्याप्तं प्रादेशपरिमितं भगवद्रूपं सर्वेषां भूतानामायतनं स्थानं वै प्रसिद्धमित्यर्थः । द्वितीयतृतीयरूपयोः स्थितिहेतुत्वमुपपादयति– **हृदयं वा इति** ॥ हृदयं हृदयनामकं हृद्गतं कर्णिकामूलगतं हृत्कर्णिकाग्रगतं विष्णुरूपं सर्वेषां भूतानां प्रतिष्ठा धारकं सर्वदा सुप्तौ चैवेति शेषः । तदुपपादयति– **हृदये ह्येवेति** ॥ हृदयनामके

हृत्कर्णिकामूलगते विष्णुरूपे एव सर्वाणि भूतानि सदा प्रतिष्ठितानि भवन्तीत्यर्थः । तथा हृदयनामके हृत्कर्णिकाग्रगते विष्णुरूपे सर्वाणि भूतानि विशेषतोऽपि सुप्तौ प्रतिष्ठितानि भवन्तीत्यर्थः । एनमुपासकं हृदयस्थं हृदयनामकं भगवद्रूपं न जहातीत्यर्थः ॥ ७ ॥

इति षडाचार्यब्राह्मणम् ॥ १ ॥

उपनिषत्—

## अथ कूर्चब्राह्मणम्

[याज्ञवल्क्यं प्रति जनकस्य उपसत्तिः]

**जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण् महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन् अधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवान् वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद् वक्ष्यामि यत्र गमिष्यसीति स होवाच ब्रवीतु भगवानिति ॥ १ ॥**

भाष्यम्—

स्वयोग्यं ज्ञानं श्रोतुं सिंहासनादवरुह्योपसदनं कृत्वोवाच। यत् स्वात्मना प्राप्यं मुक्तौ तदुपास्यैव मुक्तिर्भवतीत्यतः प्राप्यं पृच्छति।

'वृन्दैः प्राप्यतमत्वात्तु वृन्दारक इति स्मृतः' इति च पाद्मे ॥

टिप्पणी—

ननु पूर्वमुपसत्तिमकृत्वेदानीमुपसत्तिकरणे किं निमित्तमित्यतः तत्र निमित्तप्रदर्शनपूर्वकं जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाचेति वाक्यं अर्थाप्रतीतेरपेक्षिताध्याहारेण व्याचष्टे– **स्वयोग्यमिति** ॥ ज्ञानं ज्ञानसाधनं ज्ञेयं वा । इन्द्रियेषु भगवदुपास्तिस्तु नासाधारण्येन स्वयोग्या, युगपदुपास्तौ देवानां क्रमेणोपास्तौ मनुष्याणां

चाधिकारादिति भावः। कूर्चादित्यस्यार्थः सिंहासनादिति। अवरुह्येति शेषोक्तिः। उपावसर्पन्नित्यस्यार्थः उपसदनं कृत्वेति। ननु स्वयोग्योपदेशं श्रोतुमुपसदनं कृतवन्तं राजानं प्रति याज्ञवल्क्येन त्वदुपास्यं किं जानासीति प्रष्टव्ये इतो विमुच्यमानः क्व गमिष्यसीति मुक्तौ प्राप्यप्रश्नोऽसङ्गत इत्यतस्तदभिप्रायमाह– **यत्स्वात्मनेति**॥ पृच्छति इतो विमुच्यमान इत्यादिनेति शेषः। ननु जनकस्य देवत्वाभावात्कथं तस्मिन् वृन्दारकशब्दप्रयोग इत्यत आह– **वृन्दैरिति**॥ वृन्दैः भृत्यादिसमूहैः अर्यते प्राप्यत इति वृन्दारक इत्यर्थः ॥ १ ॥

**उपनिषत्**——

[इन्द्रनामकभगवदुपासना]

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥**

[सारभोक्ता-स्थूलभोक्ता च हरिः]

**अथैतद् वामेऽक्षिणि पुरुषरूपमेषाऽस्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयोरेतत् प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणीयैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥**

भाष्यम्—

राज्ञां हृदयसंस्थो य इन्द्रो नाम जनार्दनः ।
स इन्द्रे च यमे चैव स प्राप्यो मुक्तराजभिः ॥
तस्मात्रेषामुपास्यः स विराण् नाम तदाश्रया ।
श्रीस्तयोः स्तुतिरेषा हि प्राणेन क्रियते सदा ॥
कर्णौ पिधाय या ज्ञेया सर्ववेदात्मिका हि सा ।
काशनात् सर्वजीवानामाकाश इति सा स्तुतिः ॥
जाग्रतां सर्वजीवानां स विष्णुर्दक्षिणाक्षिगः ।

टिप्पणी—

ननु जनकस्य मुक्तौ प्राप्यं वक्ष्यामीति प्रतिज्ञाय 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः' इति दक्षिणाक्षिस्थ इन्द्रनामा कथं प्राप्यत्वेनोच्यते । अन्तरुपास्तियोग्यानां राज्ञां स्वहृदिस्थस्यैवोपास्यस्य मुक्तौ प्राप्यत्वादित्यतः सत्यमित्याह– **राज्ञामिति** ॥ इन्द्र इत्याचक्षत इत्युक्त्यनुरोधादिन्द्रो नामेत्युक्तम् । प्रमाणान्तरे इन्द्रस्थस्य यमस्थस्य वा भगवद्रूपस्य मुक्तौ राजप्राप्यत्वोक्ते-स्तदनुरोधादाह– **स इन्द्रे चेति** ॥ तिष्ठतीति शेषः । तस्मान्मुक्तौ प्राप्यत्वात्प्राप्यस्यैवोपास्यत्वात् । एषाऽस्य पत्नी विराडिति वाक्यं व्याचष्टे– **विराण्णामेति** ॥ अस्य पत्नीत्यस्यार्थः तदाश्रयेति । तयोरेष संस्ताव इति वाक्यं व्याचष्टे– **तयोरिति** ॥ श्रुतौ प्राणेन क्रियत इति शेषोक्तिः । य एषोऽन्तर्हृदय आकाश इत्याकाशशब्दस्य काशनात् सर्वजीवानामित्यर्थं वक्तुं तस्यासम्भावनाशङ्कामादौ परिहरति– **कर्णाविति** ॥ ज्ञेया सर्वजीवैः संस्ताव इति समित्युपसर्गतात्पर्यमाह– **सर्ववेदात्मिकेति** ॥ एवमसम्भावनाशङ्कां परिहृत्याकाशशब्दार्थमाह– **काशनादिति** ॥ इत्युच्यत इति शेषः । यदि राज्ञां हृदयसंस्थइन्द्रनामा मुक्तौ राजभिः प्राप्य उपास्यश्च तर्हि श्रुतौ दक्षिणेऽक्षन्पुरुष इति दक्षिणाक्षिस्थस्येन्द्रनाम्नः कथं प्राप्यत्वमुच्यत इत्यत आह– **जाग्रतामिति** ॥ स राजहृदयसंस्थ इन्द्रः ॥ ३ ॥

उपनिषत्—

[सर्वे सुराः इन्द्रस्य सेवका एव]

तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिक् दक्षिणाः प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवाञ्चः प्राणाः सर्वा दिशस्सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यते असङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको ह वैदेहोऽभयं त्वागच्छताद् याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥

इति कूर्चब्राह्मणम् ॥ २ ॥

भाष्यम्—

तस्य पूर्वदिशीन्द्राग्नी सभार्यौ सम्प्रतिष्ठितौ ॥
यमराक्षसौ दक्षिणस्यां वरुणो वायुरेव च ।
पश्चिमस्यामुत्तरस्यां सोमेशानौ प्रतिष्ठितौ ।
ब्रह्मा प्रधानवायुश्च तथोर्ध्वायां दिशि स्थितौ ।
अधरायां शेषकामौ सभार्याः सर्व एव च ।
एकैकस्यां हि चत्वारो नेतृत्वात् प्राणनामकाः ।
इन्द्रियाभिमते चैव प्राणा इत्येव शब्दिताः ।

त्वत्प्रसादाद् यदभयमस्माकं प्राप्तं तदेव तव तृप्तयेऽस्तु नान्यद् वयं प्रत्युपकर्तुं शक्नुम इत्यर्थः । 'स भगवान् स्वकृतेन तुष्येत्' इतिवत् । इन्धो दीप्तः ।

जीवभोगस्य भोक्तेशो जीवस्तद्भोगभुङ् नतु ।
विविक्तभुगिवातोऽसौ भगवान् पुरुषोत्तमः ॥ इति पाद्मे ॥

इति कूर्चब्राह्मणम् ॥ २ ॥

**टिप्पणी—**

तस्य प्राची दिक् प्राञ्चः प्राणा इत्यादि वाक्यं प्राच्यादिदिशां तत्तत्प्राणानां चाभेद उच्यत इति प्रतीतिनिरासाय व्याचष्टे– **तस्येति** ॥ सभार्याविन्द्राग्नी इत्यनेन प्राञ्चः प्राणा इति बहुवचनोपपत्तिर्दर्शिता । अग्निराक्षसवाय्वीशानाः कोणपाः । सभार्यावित्यस्योत्तरत्रापि सम्बन्धः । तेन तत्रापि बहुवचनोपपत्तिः । सर्वा दिशः सर्वे प्राणा इति वाक्यं व्याचष्टे– **सभार्या इति** ॥ चशब्दोऽपिशब्दार्थः । सर्वेऽपीन्द्राद्यास्सभार्याः एकैकस्यां दिशि चत्वार एवेति सम्बन्धः । यद्येवं तर्हि कथं श्रुतौ प्राणशब्दप्रयोग इत्यत आह– **नेतृत्वादिति** ॥ प्राणशब्दस्य तेषु योगमुक्त्वा रूढिमप्याह– **इन्द्रियेति** ॥ इन्द्रियाणां च प्राणशब्दवाच्यत्वादिति भावः । यो यदभिमानी स तच्छब्दवाच्य इत्येतत्प्रसिद्धमिति द्योतनायाद्य एवशब्दः । प्राणा इत्येव शब्दिताः प्राणशब्दरूढिविषया एवेत्यर्थः । अभयं त्वागच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयस इत्यस्यैकवाक्यतासिद्धये यत्तच्छब्दाध्याहारेण वाक्यं योजयति– **त्वत्प्रसादादिति** ॥ नन्वात्मारामस्य मुनेरभयनामा भगवांस्तृप्तिहेतुरिति सिद्धमेव तत्किमनेनोच्यत इत्यतस्तत्तात्पर्यमाह– **नान्यदिति** ॥ अत्र दृष्टान्तमाह– **स इति** ॥ इति वचनस्य यथा नित्यतृप्तस्य भगवतः प्रत्युपकाराभाव एव तात्पर्यं तथाऽत्रापीत्यर्थः । इन्ध इत्यस्य स्थूलार्थभोक्तृत्वेन सदा स्फुरणादिति व्याख्यानमसत् । तन्मते भोक्तुर्विशिष्टस्य प्राप्यत्वायोगात् प्राप्यस्य च भोक्तृत्वाभावादिति भावेनेन्धशब्दार्थमाह– **इन्ध इति** ॥ ननु जीवभोग्यस्येशभोग्यत्वाभावादीशभोग्यस्य च जीवभोग्यत्वाभावेनेशस्य प्रविविक्ताहारतरत्वमेव वक्तव्यं अतः कथमिवशब्दप्रयोग इत्यत आह– **जीवभोगस्येति** ॥ भोगस्य भोग्यस्य तद्भोग्यभुगित्यर्थः । गन्धादिषु जीवेन्द्रियगोचरः सारभागस्तस्यापि परमात्मभोग्यत्वादिति भावः । यद्वा 'श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च । अधिष्ठाय मनश्चायं विषयानुपसेवते' (भ.गी. १५.९) इतीशस्य जीवभोग्यविषयभोगोक्तेः कथं शरीरात् प्रविविक्ताऽहारतरत्वमित्यत आह– **जीवेति** ॥ यद्यपि जीवभोग्यस्येशो भोक्ता तथापि

जीवस्तद्भोग्यभोक्ता नैव भवति गन्धादिगोचरसारभागस्यापीशभोग्यत्वात् । अतोऽसौ विविक्तभुगित्युच्यत इत्यर्थः । अवतारेषु स्थूलमपि भुङ्क्ते इतीवशब्दः । अनेन प्रविविक्ताहारतरोऽयं जीव एवेति परास्तम् । शारीरादात्मन इति भेदाभिधानात् । नहि जीवो जीवादेव विलक्षणाहार इति युज्यते । ननु शारीराज्जागरावस्थाज्जीवात् स्वप्नसुषुप्त्यवस्थः स एव प्रविविक्ताहारतर इत्यवस्थाभेदोपाधिकं जीवस्य भेदमङ्गीकृत्य व्याख्यास्यामीति चेन्न । 'शारीरस्तु त्रिधा भिन्नो जाग्रदादिष्ववस्थितेः' इति वचनात् त्र्यवस्थस्यापि शारीरशब्देन गृहीतत्वात्ततः स्वप्नसुषुप्त्यस्थस्य भेदायोगात् । नन्वस्तु त्र्यवस्थोऽपि शारीरः तथाप्यस्मादिति विशेषणेनात्र शारीरादिति जागरावस्थो जीवो गृह्यते तस्माच्च स्वप्नाद्यवस्थस्य भेदोक्तिरुक्तविधया सम्भवति । भवत्पक्षे शारीरादिति जीवे सिद्धे अस्मादिति विशेषणं व्यर्थं स्यादिति चेन्न । एतद्विशेषणसार्थक्यायेश्वरं परित्यज्य जीवस्य ग्राह्यत्वात् । 'शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसञ्ज्ञितः' इति ईश्वरस्यापि शारीरत्ववचनात् शारीरादित्येवोक्तावीश्वरस्यापि प्राप्तावीश्वरादेवेश्वरस्य भेदानुपपत्तेस्तद् व्यावृत्त्यर्थं जीवमात्रपरिग्रहाय विशेषणमिति सार्थक्योपपत्तेः । नन्वेवं पक्षद्वयेऽप्युपपत्तावीश्वर एवात्रोच्यते न जीव इति कुतो विनिगमनमिति चेन्न । भेदश्रुतेः स्वाभाविकभेदरूपे गत्यन्तरे सम्भवति पुरुषभेद एवार्थतया ग्राह्यः नत्ववस्थाभेदः मुख्यामुख्ययोः मुख्ये सम्प्रत्ययात् । अतो युक्तं विनिगमनम् । दूषयिष्यते चायं भेदः । आह च 'प्रविविक्तभुग्यतो ह्यस्माच्छरारीत्पुरुषोत्तमः' इति ॥ ४ ॥

### अथ खण्डार्थः

जनको ह वैदेहः स्वयोग्यं ज्ञानं श्रोतुं कूर्चात् सिंहासनादवरुह्योपावसर्पन् गुरूपसदनं कुर्वन् कृत्वेति यावत् उवाच । हे याज्ञवल्क्य ते नमोऽस्तु मा मां अनुशाधि मोक्षानुकूल्येन शिक्षय । एवमुक्तो याज्ञवल्क्य इतरसाधनसामग्रीसम्पत्तिमतोऽपि यत्स्वात्मना मुक्तौ प्राप्यं तदुपासनयैव मुक्तिर्भवतीति भावेनेतरसामग्र्यनुवादपूर्वकं प्राप्यं पृच्छति– **स होवाचेत्यादिना** ॥ हे सम्राट्

यथा कश्चित् त्वादृशः सम्राट् राजा महान्तमध्वानं मार्गं स्थले जले वैष्यन्यथाक्रमं रथं नावं वा समाददीत। एवं त्वमेताभिः पूर्वोक्ताभिः वाग् वै ब्रह्मेत्यादिभिरुपनिषद्भिः समाहितात्मा स्वस्थमना असि। अनेनान्तःकरणशुद्धिरुक्ता। वैराग्यं सूचयन् विशेषणान्तरमाह– **एवमिति**॥ एवं दृश्यमानप्रकारेण वृन्दारकः भृत्यादिवृन्दैः प्राप्यतमः आढ्यः धनी सन्नपि अधीतवेदः उक्तोपनिषत्कः व्याख्यातोपनिषत्कस्त्वमितः संसाराद् विमुच्यमानः क गमिष्यसीति। अहं यत्र गमिष्यामीति तत्प्रमेयं न वेदेति राज्ञोक्ते मुनिराह– **अथेति**॥ त्वं यत्र गमिष्यसि तत्प्राप्यमहं ते तव वक्ष्यामीति। एवमुक्तः स राजोवाच ब्रवीतु भगवानिति॥ १॥

मुनिरुपदिशति– **इन्ध इति**॥ योऽयं प्रसिद्धः सर्वेषां दक्षिणेऽक्षन् दक्षिणेऽक्षिणि विद्यमानः पुरुषो दीप्तत्वादिन्धो वै नाम एष मुक्तौ राजभिः प्राप्यः। अतस्स एव तद्धृदिस्थः उपास्यः तं राजहृदयान्तःस्थमेनं दक्षिणाक्षिस्थमिन्धमिन्धनामानं सन्तमिन्द्र इति परोक्षेणाप्रसिद्धेन नाम्नाऽऽचक्षते देवाः। कुत एवमाचक्षत इत्यत आह– **परोक्षप्रिया इति**॥ हि यस्माद्देवाः परोक्षप्रियाः अप्रसिद्धनाम्ना भगवदुपदेशप्रियाः प्रत्यक्षद्विषः प्रत्यक्षनाम्ना भगवदुपदेशद्वेषिणः प्रत्यक्षोपदेशेऽसुराणामपि सम्यग्दर्शनापत्तेः। असम्यग्दर्शनेन तत्पतनस्यैव देवानां प्रियत्वात्। कचिद्योग्येष्वपरोक्षोपदेशेनापि प्रीतिमत्त्वात् परोक्षप्रिया इवेतीवशब्दः॥ २॥

दक्षिणाक्षिस्थभगवद्रूपमहिमानमाह– **अथेति**॥ अथशब्दो माहात्म्योक्तिप्रारम्भार्थः। एतद्दक्षिणाक्षिस्थितमेव पुरुषरूपं वामेऽक्षिणि स्थितं एषा प्रसिद्धा विराण्णाम्नी श्रीः अस्याक्षिस्थपरमात्मनः पत्नी। यद्वा, यदेतत् प्रसिद्धं वामेऽक्षिणि विद्यमानं पुरुषरूपं पुरुषप्रतिमा एषा विराट् विराण्णाम्नी श्रीः अस्य दक्षिणाक्षिस्थपरमात्मनः पत्नी। एषः तयोरिन्द्रविराजोः संस्तावः सर्ववेदात्मिका स्तुतिः। कः योऽन्तर्हृदये प्राणेन क्रियमाण आकाश आसम्यक् सर्वजीवानां काशमानः। कर्णपिधाने घोषात्मकतया श्रूयमाण एष इत्यर्थः।

अथ य एष प्रसिद्धोऽन्तर्हृदयेऽन्तःस्थितो लोहितपिण्डो हृत्कमलरूप एतदेनयोः पूर्वोक्तयोरन्नं तत्र स्थित्वा ताभ्यामन्नादनात् । अथ यदेतत्प्रसिद्धं हृदयेऽन्तर्जालकमिव स्रगिव वर्तमानं वपारूपमेतदेनयोः पूर्वोक्तयोः प्रावरणम् । अथ यैषा प्रसिद्धा हृदयादूर्ध्वोपरि वर्तमाना नाडी उच्चरति मस्तकपर्यन्तं उद्गच्छति एषा तयोः पूर्वोक्तयोः सञ्चरणी सञ्चरणहेतुभूता सृतिर्मार्गः । हृत्कमललोहितपिण्डस्थितः किं भुङ्क्ते इत्यतः तस्याहारं वक्तुमाह— **यथेति** ॥ यथा केशः सहस्रधा भिन्नः एवमेताः प्रसिद्धा हिता नाम जीवस्य हितकारित्वात् परमात्मस्वरूपविशेषसन्निहितत्वाद् वा हिता नाम नाड्यः सहस्रधा भिन्नाः अस्य जीवस्य हृदयेऽन्तः प्रतिष्ठिता भवन्ति । एताभिः हितानामकनाडीभिरेतज्जीवभुक्तेऽन्ने जीवेन्द्रियागोचरं गन्धादिसारभूतं आस्रवत् क्रमेण स्यन्दमानं आमा स्रवति आगच्छति । तद्भुङ्क्ते परमात्मेत्यर्थः । तस्मात्तददनात् एष परमात्मा अस्माच्छारीरादात्मनो जीवात् प्रविविक्ताहारतर अतिशयेन विलक्षणभोग एव भवति । अवतारेषु स्थूलमपि भुङ्क्ते इतीवशब्दः । जीवभोग्यस्येशभोग्यत्वेऽपि ईशभोग्यस्य जीवभोग्यत्वाभावाद् वा इवशब्दः ॥ ३ ॥

तस्य परमात्मनः सर्वत्रावस्थितान् सेवकानाह— **तस्येत्यादिना** ॥ प्राञ्चः प्राचीदिगवस्थिताः प्राणा नेतृत्वात्प्राणनामका इन्द्रियाभिमानिनो वा । इन्द्राग्नी तद्भार्ये चेति चत्वारः । तस्य परमात्मनः प्राची दिक् प्राच्यां दिशि प्रतिष्ठिताः । अत्र दिक्चतुष्टयविवक्षयाऽऽग्नेय्या अपि दिशः प्राची दिगन्तर्भावेण सभार्यस्याग्नेः प्राक्त्वोक्तिः । एवमुत्तरत्रापि । दक्षिणाः प्राणाः दक्षिणदिगवस्था यमनिर्ऋती तद्भार्ये चेति चत्वारस्तस्य दक्षिणादिक्स्थाः । प्रत्यञ्चः प्रतीचीदिक्स्थाः प्राणा वरुणवायू तद्भार्ये चेति चत्वारस्तस्य प्रतीचीदिक्स्थाः । उदञ्चः प्राणाः उत्तरदिक्स्थाः सोमेशानौ तद्भार्ये चेति चत्वारः तस्य उदीचीदिक्स्थाः । ऊर्ध्वा ऊर्ध्वदिगवस्थिताः प्राणाश्चतुर्मुखप्रधानवायू तद्भार्ये चेति चत्वारस्तस्योर्ध्वदिगवस्थिताः । अर्वाञ्चः अधो दिगवस्थिताः प्राणाः शेषकामौ तद्भार्ये चेति चत्वारस्तस्यार्वाचीदिगवस्थिताः । एवं सर्वे प्राणाः सभार्या इन्द्राद्याः

सर्वा दिशः परमात्मनः परितः सर्वासु दिक्षु प्रतिष्ठिताः। स एष इत्याद्युक्तार्थम्। हे जनक त्वमभयं मुक्तस्य सर्वदाऽभयप्रदं 'अथाभयं भवेद् ब्रह्म तस्य मुक्तस्य सर्वदा' इति वचनात्। प्राप्तोऽसीति होवाच याज्ञवल्क्यः। जनकस्य निश्चितमोक्षत्वात्प्राप्तोऽसीत्युक्तम्। 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यते' इति वचनात्। स जनको ह वैदेह उवाच। हे भगवन् याज्ञवल्क्य यस्त्वं प्रसन्नः सन् नः अस्मान् यदभयं परमात्मरूपं वेदयसे प्रापयसि तं त्वां तदेवाभयं गच्छतात् तत् तव तृप्तिहेतुरस्तु नान्यद् वयं प्रत्युपकर्तुं शक्नुम इति यावत्। तत्तुभ्यं नमोऽस्तु। अन्यत्किं देयं इमे मदीयत्वेन प्रसिद्धविदेहदेशास्तव यथेष्टं भोगाय सन्तु। अयं त्वयोपदिष्टोऽहं तव दासोऽस्मि। मां राज्यं च यथेष्टं प्रतिपद्यस्वेत्यर्थः ॥ ४ ॥

इति कूर्चब्राह्मणम् ॥ २ ॥

उपनिषत्—

## अथ ज्योतिर्ब्राह्मणम्

[अवस्थात्रयेषु, स्वर्गमुक्त्योश्च भगवानेव ज्ञानसाधनम्]

**जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तं हास्मै ददौ तं ह सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥**

भाष्यम्—

याज्ञवल्क्यो वरं दत्वा राज्ञा संवादकामुकः।
वैदेहनगरं प्रायात् सन्तो यच्छास्त्रलोलुपाः॥ इति स्कान्दे॥

तथापि सम्राडेव पूर्वं पप्रच्छ।

**टिप्पणी—**

जनकं ह वैदेहमित्यादेः याज्ञवल्क्यो यदा जनकं प्रति गत्वा कामप्रश्नवरं ददौ तदैव जनकः पप्रच्छेति यथाश्रुतव्याख्यानं प्रमाणविरुद्धमिति भावेन तद्वाक्यतात्पर्यं प्रमाणेनाह– **याज्ञवल्क्य इति** ॥ स मेने न वदिष्य इत्यस्यार्थः संवादकामुक इति । कामप्रश्नवरं दत्वा स्वयमेव किमिति वैदेहनगरं प्रयादित्यत आह– **सन्त इति** ॥ किञ्च यथाश्रुतव्याख्याने कामप्रश्नवरदानानन्तरमेव प्रश्ने सम्राट् पप्रच्छेत्येतावता पूर्तेः पूर्वशब्दैवशब्दौ व्यर्थौ स्याताम् । तर्हि पूर्वं वरं दत्वा विदेहनगरं प्रायादिति व्याख्यानेऽपि कथं तयोः सार्थक्यमित्यत आह– **तथापीति** ॥ यद्यपि तव कामप्रश्नवरदाताऽहं त्वत्पृष्टं वक्तुमागतोऽस्मि त्वया तु यथेष्टं प्रष्टव्यमिति याज्ञवल्क्यवचनानन्तरं राज्ञा प्रश्नः कर्तव्यः तथाप्यौत्सुक्यात्सम्राडेव पूर्वं पप्रच्छेत्यर्थः । यद्वा यद्यपि याज्ञवल्क्येन संवादकामुकतयाऽऽगतत्वेनैव प्रथमतो वक्तव्यं तथापि कामप्रश्नवरस्य स्वीकृतत्वात्सम्राडेव पूर्वं पप्रच्छेत्यर्थः ॥ १ ॥

उपनिषत्—

**याज्ञवल्क्य किं ज्योतिरयं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ २ ॥ अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययंते कर्म कुरुते विपल्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ४ ॥ अस्तमित**

**आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद् याज्ञवल्क्य ॥ ५ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥**

**भाष्यम्—**

**आत्मा भगवानेवास्य ज्योतिः।**

**भावेऽभावेऽपि सूर्यादेर्जीवानां विष्णुरेव हि।**
**ज्योतिस्तथाऽप्यभावे तु तज्ज्ञेयं हि विशेषतः॥**
**अस्वातन्त्र्यात्तु जीवस्य द्योतयन् बुद्धिमस्य सः।**
**प्रवर्तयति सर्वेशस्तमस्यपि जनार्दनः॥ इति च॥**

**टिप्पणी—**

अस्य जीवस्याऽऽत्मैव स्वयमेव ज्योतिरिति जीवस्य स्वज्योतिष्ट्वमुच्यत इति प्रतीतिनिरासाय आत्मैवास्य ज्योतिर्भवतीति वाक्यं व्याचष्टे– **आत्मेति** ॥ ननु सुप्त्यादावस्य जीवस्य भगवानेव ज्योतिरिति न युज्यते भगवतोऽस्तमयादिशून्य जागृत्यपि ज्योतिष्ट्वप्राप्त्या तदविशिष्याऽत्मज्योतिष्ट्वोक्त्यनुपपत्तेरित्यत आह– **भाव इति** ॥ यद्यपि सूर्यादेः ज्योतिषो भावे अभावेऽपि जीवानां विष्णुर्ज्योतिर्भवत्येव तथाऽपि सूर्यादेरभावे तु तत् विष्ण्वाख्यं ज्योतिर्विशेषतो ज्ञेयमिति योजना। तथाच तदा ज्योतिरन्तराभावाभिप्रायेण विशिष्योक्तिरिति भावः। ननु सूर्यादेर्विषयप्रकाशकत्वादिना बुद्धिहेतुत्वाद्युक्तं जीवं प्रति ज्योतिष्ट्वं भगवतः कथं जीवं प्रति ज्योतिष्ट्वमित्यपेक्षायामाह– **अस्वातन्त्र्यादिति** ॥

स्वबुद्धिद्योतने जीवस्यास्वातन्त्र्ये विष्णुज्योतिष्ट्वाङ्गीकारोऽयुक्तः स्यादित्यत उक्तम्– **अस्वातन्त्र्यादिति** ॥ तुशब्द एवार्थः । तमस्यपि सूर्यादिज्योतिरन्तराभावदशायां न केवलं तत्सद्भावदशायामित्यपिशब्दः । नन्वन्धे तमसि तावन्न जीवबुद्धिप्रेरकत्वमीश्वरस्य । तथात्वे तत्स्थस्येश्वरस्य दुःखादिप्राप्तेः । अतस्तत्र स्वत एव बुद्धिद्योतनमित्यङ्गीकार्यम् । तथाच तद्वदत्रापि किं न स्यादित्यत उक्तम्– **तमस्यपीति** ॥ यथोक्तं 'तत्रापि च तद् व्यापाराद-विरोधः' (ब्र.सू. ३.१.२७) इति ॥ ६ ॥

उपनिषत्—

**कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनु सञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥**

भाष्यम्—

**स्वातन्त्र्याद् ध्यायतीवासौ ध्याययन् जीवमञ्जसा ।**
**गृह्णातीव ग्राहयन् स जीवं सर्वेश्वरेश्वरः ॥**
**सदा विज्ञानपूर्णोऽसौ समानोऽसौ सदा समः ।**
**अविकारात् समानः सन् जीवमादाय सञ्चरेत् ॥**
**उभौ लोकौ स्वापकत्वाद् भूत्वाऽसौ स्वप्ननामकः ।**
**इमं लोकं जाग्रदाख्यं मृत्युरूपात्मकं सदा ।**
**बहुपापैकहेतुत्वात् तारयेत् स्वप्नमानयन् ॥**
**इमं लोकं च भूराख्यं तारयित्वाऽन्तरिक्षगम् ।**
**जीवं कुर्यान्मृतौ विष्णुर्भूलोकः क्षिप्रमृत्युमान् ॥**
**बहवो मृत्यवश्चात्र मृत्यो रूपाण्यतस्त्वयम् ।**
**पापहेतुत्वतश्चात्र मृत्यो रूपाण्यतस्त्वयम् ।**

**जाग्रच्च पृथिवी चैव द्यौः सुषुप्तिस्तथैव च ॥**
**स्वप्नश्चैवान्तरिक्षं च ज्ञेया अन्योन्यनामकाः।**
**तद्वयभिप्रयिका तस्मादुभौ लोकाविति श्रुतिः ॥**

**टिप्पणी—**

यद्यात्मा भगवान् तर्हि तस्य ध्यायतीव लेलायतीवेति ध्यानग्रहणकर्तृत्वं कथमुच्यते तस्य जीवधर्मत्वात्। नचास्य जीवपरत्वे इवशब्दवैयर्थ्यं ध्यानादेरपि मिथ्यात्वाभिप्रायेण तदुपपत्तेरित्यतस्तद्यथावद् व्याचष्टे– **स्वातन्त्र्यादिति** ॥ असौ सर्वेश्वरेश्वरो जीवमञ्जसा ध्यायन् स्वयं ध्यायतीवेत्युच्यते । कुतः? स्वातन्त्र्यादिति योजना । ला उपादान इति धातोर्लेलायतीत्येतद्गृह्णातीति व्याख्यातम् ॥ यद्वा ध्यायतीति लेलायतीत्यस्यान्तर्णीतणिच्त्वमभिप्रेत्योक्तं ध्यायन् ग्राहयन्निति । इवशब्दोऽल्पार्थे । ननु विज्ञायतेऽनेनेति विज्ञानं बुद्धिस्तन्मयस्तत्प्राय इति जीवस्य विज्ञानमयत्वोक्तेः कथमात्मा भगवानित्यत आह– **सदेति** ॥ ननु स समानः सन्नुभौ लोकावनुसञ्चरतीत्युभयलोकसञ्चरण-मुच्यते । तच्च जीवस्यैव कर्मवशादुपपद्यते नतु भगवत इत्यतः तद् व्याख्यातुं समानशब्दार्थं तावदाह– **समान इति** ॥ यतः सदा समः अतः समानः । कथं सदा समत्वमित्यत आह– **अविकारादिति** ॥ तदिदानीं व्याचष्टे– **समानस्सन्निति** ॥ ननु स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणीति जीवलिङ्गप्रतीतेः कथं भगवत्परतया व्याख्यानमित्यतस्तद् व्याचष्टे– **स्वापकत्वादिति** ॥ ननु स्वप्नावस्थाप्रेरकः परमात्मेमं लोकं पृथिव्याख्यमति-क्रामतीत्यसङ्गतमनुपपन्नं चेत्यत उक्तम्– **जाग्रदाख्यमिति** ॥ इमं लोकमतिक्रामति मृत्यो रूपाण्यतिक्रामतीति वाक्यभेदप्रतीतिनिरासायाऽह– **मृत्युरूपात्मकमिति** ॥ तर्हि श्रुतौ बहुवचनानुपपत्तिरित्याशङ्कां परिहरन् जाग्रदवस्थाया मृत्युरूपाऽ-त्मकत्वमुपपादयति– **बह्विति** ॥ तारयेदित्यनेनातिक्रामतीत्येतद् अन्तर्णीत-णिजन्तमित्युक्तं भवति । स्वापकत्वात् स्वप्ननामकस्य जाग्रत्तरणहेतुत्वं कथ-मित्यत उक्तम्– **स्वप्नमानयन्निति** ॥ जीवमित्यनुवर्तमानं वक्ष्यमाणं वा

तारयेदित्यत्र स्वप्नमानयन्नित्यत्र च सम्बद्ध्यते। प्रकारान्तरेणापि तद्वाक्यं व्याचष्टे– **इमं लोकमिति**॥ अस्मिन्पक्षे स्वप्नो भूत्वेत्यस्यान्तरिक्षलोकप्रापको भूत्वेत्यर्थोऽभिप्रेतः। यथाश्रुतेऽसङ्गत्यापत्तेरिति भावेनाह– **अन्तरिक्षगमिति**॥ अनेनैव देहेन जीवमन्तरिक्षगं कुर्यात्किमिति जिज्ञासायामुक्तम्॥ **मृताविति**॥ भूर्लोकस्य मृत्युरूपत्वमुपपादयति– **भूर्लोक इति**॥ बहुवचनार्थमाह– **बहव इति**॥ चशब्दो यस्मादित्यर्थे। मृत्यवः कलावाभ्रोपमा जीवा इत्यादिवक्ष्यमाणप्रकारेण बहवः। हेत्वन्तरेणापि मृत्युरूपत्वमुपपादयति– **पापेति**॥ नन्विदं च परलोकस्थानं चेत्युक्तभूलोकस्वर्गलोकसन्धौ स्वप्नावस्थाया भवनाभावात्कथं सन्ध्यं तृतीयं स्वप्नस्थानमित्युक्तमिति चेन्न। भूलोकपरेदंशब्देन जाग्रदवस्थायाः द्युलोकपरपरलोकस्थानशब्देन सुषुप्त्यवस्थाया अवस्थावाचकस्वप्नशब्देनान्तरिक्षलोकस्यापि ग्रहणात्। तथाच जाग्रत्सुषुप्तिसन्धौ भवं सन्ध्यं स्वप्नस्थानं भूलोकद्युलोकयोः सन्धौ भवं सन्ध्यं अन्तरिक्षलोकस्थानमिति वाक्यार्थ इति भावेन लोकवाचकशब्दयोरवस्थावाचकत्वं अवस्थावाचकशब्दस्य लोकवाचकत्वं प्रमाणेनाह– **जाग्रच्चेति**॥ अनेनेमं लोकं जाग्रदाख्यमिति यदुक्तं अन्तरिक्षगमित्यनेन स्वप्नो भूत्वेत्यस्य अन्तरिक्षलोकप्रापको भूत्वेति च यद् विवक्षितं तदुभयमपि उपपादितं भवति। एवं लोकवाचकशब्दस्यावस्थाया अपि वाचकत्वे उभौ लोकावित्यत्र न लोकमात्रं ग्राह्यम्। किन्तु अवस्थापि ग्राह्येत्याह– **तद्व्यभिप्रायिकेति**॥ तस्माल्लोकवाचकशब्दस्यावस्थावाचकत्वस्यापि सत्वादित्यर्थः।

**उपनिषत्**——

**स वाऽयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति॥ ८॥**

**भाष्यम्**——

**स वा अयं जायमान इति च द्व्याश्रया श्रुतिः।**
**यस्य ज्योतिरयं विष्णुः स परामृश्यते तथा॥**

यदा तु भगवानुक्तस्तदा स्वातन्त्र्यतो विभुः ।
म्रियमाणो जायमान इत्युक्तस्तन्नियामकः ।
फलदानाय पापानां ग्रहस्संसर्ग उच्यते ।
मोक्षदाने फलादानाद् विजहातीति चोच्यते ।
जीवोऽपि मुक्तिकाले तु हाता पापस्य कथ्यते ।

टिप्पणी—

ननु स वा अयं पुरुषो जायमान इत्यादि जीवलिङ्गात् कथमात्मा भगवानिति व्याख्यानमित्यत आह– **स वा इति** ॥ द्व्याश्रया ईशजीवोभयपरा । न केवलमुभौ लोकाविति श्रुतिर्द्व्यभिप्राया । किन्तु इयमपीति द्व्यभिप्रायकत्वमात्रसमुच्चयार्थश्चशब्दः । ननु कथमियं श्रुतिरीशजीवोभयपरा? ईशस्य पूर्वं प्रकृतत्वात् स वा इति तत्परामर्शोऽपि जीवस्याप्रकृतत्वात् तत्परामर्शस्यासम्भवादित्यत आह– **यस्येति** ॥ तथा स वा अयं जायमान इत्यनेन तथाचाऽत्मैवास्य ज्योतिरित्यत्रास्येति भगवज्ज्योतिष्ट्वेन जीवस्यापि प्रकृतत्वात् तत्परामर्शोऽपि युक्त इति भावः । आत्मैवास्येति यो जीवः स परामृश्यते । तथेत्येव वक्तव्ये यस्य ज्योतिरयं विष्णुरित्युक्तिस्तद्वाक्यव्याख्यानार्था प्रमाणेन पूर्वं तस्याव्याख्यानात् । नन्वथापि नेयं श्रुतिरीशजीवोभयपरा ईशस्य जननमरणपापसंसर्गतद्धानानामसम्भवादित्यत आह– **यदेति** ॥ स्वातन्त्र्यतस्तन्नियामक इति सम्बन्धः । यथा जयपराजययोः भृत्यगतत्वेऽपि तन्नियामकतया राजा जयी पराजयीत्युच्यते तथा जीवनमरणयोः जीवगतत्वेऽपि तन्नियामकत्वेन भगवान् जायमानो म्रियमाण इत्युक्त इत्यर्थः । राज्ञो भृत्यनियामकत्वं यथाऽन्याधीनं नैवं भगवत इत्याशयेन स्वातन्त्र्यत इत्युक्तम् । पापानामित्यस्य पूर्वोत्तराभ्यां सम्बन्धः । ग्रह उपादानम् फलादानादित्यत्रापि पापानामित्येतदनुवर्तते । नन्वेवमपि कथमियं श्रुतिर्द्व्याश्रया जीवस्य जनन-मरणपापसंसर्गाणां सम्भवेऽपि तद्धानासम्भवादित्यत आह– **जीवोऽपीति** ॥

उपनिषत्—

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं चाथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मना आनन्दांश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥

भाष्यम्—

[स्वर्ग-सुप्ति-परलोकशब्दाः समानार्थकाः, मुक्तिवाचकाः]

स्वर्गः सुषुप्तिरित्याख्या मुक्तेरपि यतस्समा ।
परलोको यतो मुख्यो मुक्तिरेव नचापरः ।
अतो द्युसुप्तिमोक्षाणामभिप्रायादिदं वचः ।
सुप्तिरित्यादिकं स्वेति विष्णोराख्या सुखत्वतः ।
पुनरागमनं नाम मुक्तानामपि विद्यते ।
प्रलये तु प्रविश्यैनं भगवन्तं जनार्दनम् ।
स्थित्वा ज्ञानाविलोपेन निर्गच्छन्ति पुनस्ततः ।
नच ज्ञानसुखादीनां तेषां सृष्टौ लयेऽपि वा ।
विशेषः कश्चिदन्तश्च बहिश्चैव रमन्ति ते ।
स्वापयत्येनमिति स स्वपितीत्युच्यते हरिः ।
आनन्दपापलोकादेर्दर्शनं स्वप्नसुप्तयोः ।
अपि विष्णोः सदैवास्ति न जीवस्य कथञ्चन ।
अत्रायं भगवान् विष्णुर्जीवस्य स्वयमेव तु ।

ज्योतिर्विशेषतो भूयान्नैवान्यज्ज्योतिरत्र यत् ।
नहि जीवः स्वयं द्रष्टुं सुप्तः शक्नोति हि ध्रुवम् ।
अतः स नैव जीवोऽयं सर्वं पश्यति सूक्ष्मदृक् ।
स्वप्नेऽन्तरिक्षे स्वर्गे वा न रथाद्याः पुरा स्थिताः ।
तदैव तत्कर्मयोग्यान्निर्मिमीते हरिः स्वयम् ।

—इत्यादि महामीमांसायाम् ॥

**टिप्पणी—**

इदं परलोकस्थानं चेत्यादिकं न केवलमुक्तरीत्यावस्थालोकोभयमात्रपरं किन्तु संसारमोक्षपरं चेत्यभिप्रेत्याह– **स्वर्ग इति** ॥ सुप्तिरित्यादिकमिदं वच इति सम्बन्धः । आदिपदेन स्वर्ग इति परलोकस्थानमितीत्यस्य ग्रहणम् । यतस्सुप्तिरित्याख्या न केवलं सुप्तिस्वर्गयोः किन्तु मुक्तेरपि समा अतः सुप्तिरितीदं वचो द्युसुप्तिमोक्षाणामभिप्रायात् प्रवृत्तम् । यतः स्वर्ग इत्याख्या न केवलं स्वर्गसुप्त्योः किन्तु मुक्तेरपि समा अतः स्वर्ग इतीदं वचो द्युसुप्तिमोक्षाणामभिप्रायात् प्रवृत्तम् । यतः परलोको मुख्यो मुक्तिरेवामुख्यतः तु स्वर्गसुषुप्ती अतः परलोक इतीदं वचः द्युसुप्तिमोक्षाणां अभिप्रायादिति योज्यम् । सुप्तिरिति स्वर्ग इति वाक्यान्तराभिप्रायेणोक्तं सुप्तिरिति कथं मुक्तेराख्येत्यतः तत्पर्यायस्वापशब्दस्य स्वशब्दवाच्यविष्णुप्राप्तिरूपमुक्तिपरत्वादिति भावेनाऽह– **स्वेतीति** ॥ स्वर्ग इति कथं मुक्तेराख्येत्यतो वाऽह– **स्वेतीति** ॥ स्वरिति वक्तव्ये रेफमविवक्षित्वा स्वेतीत्येवोक्तम् । तं प्रतिगमनात्स्वर्ग इति मुक्तेराख्येति भावः । ननु सुप्तिरिति वचो यदि द्युसुप्तिमोक्षाणामभिप्रायात् तर्हि असुप्तः सुप्तानभिचाकशीतीत्येतन्मुक्तपरत्वेनापि व्याख्येयम् । नच तद्युक्तं शुक्रमादाय पुनरेति स्थानमिति जीवस्य पुनरागमनोक्तेरित्यत आह– **पुनरागमनमिति** ॥ तर्हि च पुनरावर्तत इत्यादिश्रुतिविरोध इत्यतः पुनरागमनं विवृणोति– **प्रलये त्विति** ॥ पुनः संसारप्राप्तिरूपपुनरागमननिषेधपरा श्रुतिरिति भावः । निर्गच्छन्ति सृष्टिकाले । ननु मुक्तानां भगवति प्रलये प्रवेशो

सृष्टौ निर्गमने चाऽज्ञानदुःखादिकं स्यादित्यत उक्तम् ॥ **ज्ञानाविलोपेनेति** ॥ सुखाविलोपेनेत्यपि ग्राह्यम् । तदेव विवृणोति– **नचेति** ॥ ते मुक्ताः सृष्टौ बहिर्लये अन्तश्च रमन्त्येव । नच तेषां ज्ञानसुखादीनां कश्चिद् विशेष इति सम्बन्धः । ननु स यत्र प्रस्वपितीति स्वापकर्तृत्वलिङ्गबलाज्जीव एवात्र प्रतिपाद्योऽवगम्यत इति कथं भगवत्परतया व्याख्यानमित्यत आह– **स्वापयतीति** ॥ नन्वेवमन्तर्णीतणिच्त्वादिनेदं प्रकरणं विष्णुपरतया कुतो व्याख्येयमिति चेत्तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यति तमाक्रममाक्रम्योभयान्पाप्मन आनन्दांश्च पश्यतीत्यस्य विष्णावेव सम्भवात् जीवे चाऽसम्भवादिति भावेनाऽह– **आनन्देति** ॥ लोकादेरित्यत्र लोकशब्देन पृथिवीस्वर्गयोर्ग्रहणम् । आदिपदेन जाग्रत्सुषुप्त्योः संसारमुक्त्योश्च सङ्ग्रहः । अनेनोभे स्थाने इत्येतदुक्तार्थम् । श्रुतौ तस्मिंत्सन्ध्ये स्थाने तिष्ठन्निति स्वप्ने स्थितो भगवानुभे स्थाने पश्यतीत्युक्तम् । तेन स्वप्न एव स्थितस्य विष्णोर्लोकादिदर्शनं न सुप्तिस्थस्येति शङ्का स्यात् । तां परिहर्तुं स्वप्नसुप्त्योरपि स्थितस्येत्युक्तम् । विष्णोरेवेति सम्बन्धः । नन्वात्मैवास्य ज्योतिर्भवतीत्युक्त एवार्थः अत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति प्रत्यभिज्ञायते । तत्र च जीवस्यैव स्वज्योतिष्ट्वमुच्यते । अत आत्मा भगवानिति व्याख्याने प्रत्यभिज्ञाविरोधः स्यादित्यत आह– **अत्रेति** ॥ अत्र सुप्तौ अवस्थान्तरेऽपि भगवतो ज्योतिष्ट्वात् किं विशिष्योच्यते इत्यत आह– **विशेषत इति** ॥ तथाच इदमपि वाक्यं भगवत्परमेवेति न प्रत्यभिज्ञाविरोध इति भावः । तद्वाक्यस्य जीवपरत्वे बाधकमाह– **नहीति** ॥ हिशब्दो यस्मादित्यर्थे । स्वयं स्वातन्त्र्येण स्वयञ्ज्योतिष्ट्वं नाम स्वातन्त्र्येण द्रष्टृत्वं तच्च जीवस्य न सम्भवतीति भावः । अयं अत्रायमिति वाक्यप्रतिपाद्यः । ईश्वरपक्षे च वाक्यार्थो युज्यत इति भावेनाऽह– **सर्वमिति** ॥ यद्वाऽनन्दपापलोकादेर्दर्शनं जीवस्य नास्ति विष्णोरेवास्तीत्युक्तम् । तत्कुत इत्यत आह– **नहीति** ॥ द्रष्टुम् आनन्दपापलोकादिकमिति शेषः । 'न तत्र रथाः' इत्यादिवाक्यानि स्वप्नमात्रपरत्वप्रतीतिनिरासाय व्याचष्टे– **स्वप्न इति** ॥

**भाष्यम्—**

**[स्वाप्नपदार्थसृष्टिकर्ता न जीवः]**

**जीवपक्षे प्रसिद्धत्वात् कतम आत्मेति प्रश्नो न युक्तः। नच जीवः समानः सन्नुभौ लोकौ सञ्चरति। सुखदुःखविशेषवत्त्वात्। नच सुखदुःखादेर्मिथ्यात्वे किञ्चिन्मानम्।**

**टिप्पणी—**

ननु बाधकाभावात् कथं जीवलिङ्गानामन्यार्थत्वमित्यतो जीवपक्षे बाधकमाह– **जीवपक्ष इति** ।। यद्यात्मैवास्य ज्योतिर्भवतीत्यत्रात्मा जीवः स्यात् तर्हि कतम आत्मेति प्रश्नो न युक्तः स्यात् जीवस्याहमिति प्रत्यक्षविषयत्वेन प्रसिद्धत्वात् प्रसिद्धप्रश्नस्य चासम्भवादित्यर्थः। भगवतश्च परोक्षत्वेनाप्रसिद्धत्वात् तद्विषयकप्रश्नो नानुपपन्न इति भावः । बाधकान्तरमाह– **नचेति** ।। समानो विकारः कुत इत्यत आह– **सुखेति** ।। जीवस्य द्युपृथिवीलोकसञ्चरणे सुषुप्तिजाग्रत्सञ्चरणे च यथाक्रमं सुखदुःखविशेषवत्त्वान्न समानत्वमित्यर्थः। ननु सुखदुःखविशेषवत्त्वेऽपि जीवस्य न समानत्वमनुपपन्नम्। सुखदुःखादेर्मिथ्यात्वेन वास्तवसमानत्वाविरोधित्वात् नह्यारोपितनीलिम्ना गगनस्य नीरूपत्वं विरुद्धमित्यत आह– **नचेति** ।। स्यादेतदेवं यदि सुखादेर्मिथ्यात्वमेव स्यान्न चैतदस्ति। तत्र प्रमाणाभावात् । न तावदत्र प्रत्यक्षमस्ति । इदं नीलमितिवत् सुखादिकं मिथ्येति प्रतीत्यभावात् । प्रत्युत सुखादिकं सदित्येव प्रतीतेश्च । नाप्यनुमानं लिङ्गाभावात् । विमतं मिथ्या दृश्यत्वादित्यनुमानमस्तीति चेन्न । मिथ्यात्वस्यासत्त्वेऽपसिद्धान्तापातात्। अनिर्वचनीयत्वे अप्रसिद्धविशेषणत्वात् सत्यविवेकस्य मिथ्याभावस्य साध्यत्वान्नाप्रसिद्धविशेषणतेति चेन्न । सत्यविवेकस्यासत्वानतिरेकेणापसिद्धान्तानिस्तारात्। असदनिर्वचनीयसाधारणं सद्विविक्तत्वमिति चेन्न । तर्ह्यसत्वमादायार्थान्तरतापातात् । अपरोक्षतया प्रतीयमानत्वेनासत्वबाधे अनिर्वचनीयत्वमेव सेत्स्यतीति चेन्न। असतोऽप्यपरोक्ष-प्रतीतिसम्भवेन तस्यासत्वाबाधकत्वात् । अन्यथा शुक्तिरूप्यादा-

वसत्प्रातिभासिकवैलक्षण्यज्ञानाभावे प्रवृत्त्यभावापत्तेः । अनिर्वचनीयस्यैवाभावेन धूमबाष्पयोः धूमत्ववत् सद्विविक्तत्वस्य साधारणत्वायोगाच्च । दृश्यत्वं च यदि दृग्विषयत्वं तदाऽऽत्मनि व्यभिचारः । अन्यथा वेदान्तजनितविज्ञानस्य आत्मज्ञानत्वाभावापातात् । नचात्मज्ञाननिवर्तकत्वेनात्मज्ञानत्वं तदविषयकस्य तदज्ञाननिवर्तकत्वे अतिप्रसङ्गात् । यदि च दृग्जन्यफलाश्रयत्वं तदाऽसिद्धम् । ज्ञाततादिरूपफलस्यान्यत्र निराकृतत्वात् । दृष्टान्तस्य साध्यसाधनवैकल्यं चेति । नाप्यागमः । नेह नानेत्यादेरन्यार्थत्वस्योक्तत्वात् । नापि ख्यातिबाधान्यथानुपपत्तिः । असतोऽपि परोक्षापरोक्षप्रतीतिसम्भवेनासच्चेन्न प्रतीयेतेत्यापादनासम्भवात् । सच्चेन्न बाध्येतेत्यत्र चेष्टापत्तिः । नाप्युपमानं तस्य सादृश्यादिनियतविषयत्वात् । नाप्यभावः प्रत्यक्षेण सुखदुःखादेः सत्यत्वस्यैवावगमेन सत्वानुपलब्ध्यसिद्धेरिति । तदेतदुक्तम् ।। **किञ्चिदिति** ।।

**भाष्यम्—**

**'याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' । 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' । 'वैधर्म्याच्च न स्वप्नादिवत्' इत्यादिवचनविरुद्धत्वाच्च ।**

**टिप्पणी—**

न केवलं प्रमाणाभावान्न सुखदुःखादेर्मिथ्यात्वं किन्तु तद्विरुद्धत्वाच्चेत्याह— **याथातथ्यत इति** ।। कविस्सर्वज्ञो मनसामीष्ट इति मनीषी परिभवति सर्वानिति परिभूः सर्वोत्तमः स्वयमेव भवतीति स्वयम्भूः स्वतन्त्रः परमेश्वरः शाश्वतीभ्यः समाभ्यः सर्वदा अर्थान् पदार्थान् महदादीन् याथातथ्यत एव व्यदधान्नतु मिथ्याभूतानीत्यर्थः । गीतायां जगदसत्यत्ववादिनां निन्दनात्तत्सत्यत्वे तात्पर्यावगमात्तद्विरोधो जगन्मिथ्यात्वस्येति भावः । आदिपदेन 'नासतो दृष्टत्वात्' (ब्र.सू. २.२.२६) 'नाभाव उपलब्धेः' (ब्र.सू. २.२.२८)इति सूत्रग्रहणम् ।

भाष्यम्—

**नचैतन्नासीदस्ति भविष्यतीत्यनुभवः कदाचिद् भविष्यतीत्यत्र किञ्चिन्मानम् ।**

टिप्पणी—

ननु यद्यपीदानीं सुखादिकं मिथ्येत्यनुभवो नास्ति तथाप्युत्तरत्रैतत् सुखादिजगन्नासीन्नास्ति न भविष्यतीत्यनुभवो वेदान्तजन्यः चरमसाक्षात्काररूपो भविष्यति । तेनैव जगतो बाध्यत्वरूपमिथ्यात्वसिद्धिः । नच श्रुत्यादिविरोधः । व्यावहारिकसत्वपरत्वात्तस्य प्रत्यक्षं तु वर्तमानमात्रग्राहित्रिकालबाधाभावग्राहकं नेति न तद्विरोधोऽपि । तथाच कथं जगन्मिथ्यात्वे मानाभावस्तद्विरोधश्चेत्यत आह— **नचेति** ॥ स्यादेतत् यद्ययमनुभव एवोत्तरत्र भविष्यतीति स्यात् । नच तदस्ति तत्र प्रमाणाभावात् । न तावत्तत्र प्रत्यक्षं तस्य वर्तमानमात्रग्राहित्वस्योक्तत्वात् । विमतं बाध्यं दृश्यत्वादित्यनुमानमस्त्विति चेन्न । बाध्यत्वस्यापि बाध्यत्वे अबाध्यत्वस्यं सत्यत्वप्राप्तेः । अन्यथा तत्र हेतुवृत्तौ व्यभिचारः । अवृत्तौ चानुमानवैयर्थ्यात् पूर्वोक्तदोषानिस्ताराच्च । अनिर्वचनीयत्वेन बाध्यत्वं साध्यमिति चेन्न । हेतुस्वरूपासिद्धेः । 'ज्ञाते द्वैतं न विद्यते' इति आगमोऽत्र मानमिति चेन्न । अद्वैतं न विद्यते इति पदच्छेदेन भेदे ज्ञाते अद्वैतं न विद्यते इत्यर्थसम्भवात् ज्ञानेन माक्षाभिधानान्यथाऽनुपपत्त्या तत्सिद्धिरिति चेन्न । ज्ञानेन अज्ञाननिवृत्तौ तदुपादानकं जगत्स्वयमेव बाध्यत इति हि तवाभिप्रायः स न युक्तः । अज्ञानस्य ज्ञाननिवर्त्यत्वं हि ज्ञानजन्यध्वंसप्रतियोगित्वमेव न त्रैकालिकाभावप्रतियोगित्वं शुक्तिज्ञानेन शुक्तिकाज्ञानं नष्टमित्येवानुभवात् एतादृग्बाध्यत्वस्यास्माकमप्रतिपक्षत्वाच्च । नच जगतोऽज्ञानोपादानकत्वे किञ्चिन्मानम् । शुक्तिरूप्यादेरप्यज्ञानोपादानकत्वासम्मतेः । तस्मादुक्तानुभवसत्वे न किञ्चिन्मानम् । तदेतदुक्तम्- **किञ्चिन्मानं नेति** ॥

**भाष्यम्—**

**किञ्चित्कालस्थिरत्वमात्रस्य शून्यवादिनामपि सिद्धत्वाद् 'वैधर्म्याच्च न स्वप्नादिवद्' इत्यादिवचनं व्यर्थं स्यात्। अतो न कदाचिदस्य नासीदस्ति भविष्यतीत्यनुभवो भविष्यतीत्यभिप्रायेणैव तद्वचनम्।**

**टिप्पणी—**

यदुक्तं जगन्मिथ्यात्वं 'वैधर्म्याच्च न स्वप्नादिवत्' इति सूत्रविरुद्धमिति तदयुक्तम्। सूत्रे हि प्रपञ्चस्य स्वप्नादिवैधर्म्यमुच्यते तच्च प्रपञ्चस्य किञ्चित्कालस्थिरत्वेनैव स्वाप्नपदार्थस्याऽशुतरविनाशित्वात् किञ्चित्कालस्थिरत्वमात्रं चास्माभिरपि प्रपञ्चस्याङ्गीक्रियते। तस्य शून्यवाद्यङ्गीकृतात्यन्तासत्वविरोधित्वेऽप्यस्मदभिमतमिथ्यात्वाविरोधित्वादित्यत आह— **किञ्चिदिति** ॥ यद्यत्र सूत्रे किञ्चित्कालस्थिरत्वमात्रेण प्रपञ्चस्य स्वप्नादिवैधर्म्यमुच्यते तदा तत्सूत्रं शून्यवादिनिराकरणपरं न स्यात् किञ्चित्कालस्थिरत्वमात्रेण स्वप्नादिवैधर्म्यस्य शून्यवादिनामपि सिद्धत्वात्। तथाच तत्सूत्रं व्यर्थं स्यादित्यर्थः। एतेन प्रपञ्चस्य व्यावहारिकसत्वेन स्वप्नादिवैधर्म्योक्तिरित्यपि निरस्तम्। व्यावहारिकसत्वस्य तेनाप्यङ्गीक्रियमाणत्वात्। यथोक्तं शून्यवादिना 'सत्वं तु द्विविधं प्रोक्तं सावृतं पारमार्थिकम्। सांवृतं व्यावहार्यं स्यान्निवृत्तौ पारमार्थिकम्' इति। तर्हि केन प्रकारेण स्वप्नादिवैधर्म्यं प्रपञ्चस्य सूत्रेऽभिप्रेतमित्यत आह— **अत इति** ॥ अर्थान्तरस्यासम्भवादित्यर्थः। अस्य प्रपञ्चस्य नास्ति नासीन्न भविष्यतीत्यनुभवः कदापि न भविष्यतीत्यभिप्रायेणैव स्वप्नादिवैधर्म्यवचनं प्रवृत्तम्। शून्यवादिना प्रपञ्चस्योक्तरूपानुभवः कदाचिद् भविष्यतीत्यङ्गीकारेण सूत्रस्य तद्दूषणपरत्वस्य सम्भवेन वैयर्थ्यासम्भवादित्यर्थः। ननु प्रपञ्चस्योक्तबाधाभावरूपेण सौत्रादिपदोपात्तरज्जुसर्पादिवैलक्षण्यसम्भवेऽपि स्वप्नवैलक्षण्योक्तिर्न युज्यते। न तत्र रथा इत्यादिना सृष्ट्युक्त्या स्वप्नपदार्थस्य सत्यत्वादिति चेन्न। स्वप्नशब्देनात्र स्वाप्नपदार्थे आरोपितजाग्रत्त्वग्रहणात्। तस्य च रज्जुसर्पादिवद्बाध्यत्वात्।

भाष्यम्—

**नच तथाननुभवे शून्यस्यानिर्वचनीयस्य च कश्चिद् विशेषः।**

टिप्पणी—

नन्वस्त्वेवमबाध्यत्वेनैव प्रपञ्चस्य स्वप्नादिवैधर्म्योक्तिः तथाऽप्यस्माकं कथं तद्विरोधः। शून्यवाद्यभ्युपगतजगदसत्यत्वविरोधित्वेऽप्यस्मदभिमतानिर्वचनीयत्व-विरोधाभावादिति चेन्न। प्रपञ्चस्यानिर्वचनीयत्वं वदता किं प्रपञ्चो नास्ति नाऽसीन्न भविष्यतीत्यनुभवोऽङ्गीक्रियते न वा। द्वितीये न विवादः अबाध्यत्वाविरोध्यनिर्वचनीयत्वस्यास्माकमप्रतिपक्षत्वादिति। आद्यं दूषयति— **नचेति**॥ तथाऽनुभवे त्वयाप्यङ्गीक्रियमाणे शून्यवाद्युक्तजगदसत्यत्वस्य त्वदुक्तानिर्वचनीयत्वस्य च न कश्चिद् विशेषः। तथाऽऽनुभवविषयत्वेऽसत्वस्यैव प्राप्तेः। मया तादृशानुभवाङ्गीकारेऽप्यसद्वैलक्षण्यं अङ्गीक्रियत इति चेन्न। अर्थक्रियाकारित्वादिना तद्वैलक्षण्यस्य तन्मतेऽपि सत्वात्। तदभिप्रेत-पारमार्थिकसत्वाभावस्य त्वन्मतेऽपि 'सत्वात्। तथाच वाङ्मात्रभेद एवायं नार्थभेद इति सूत्रविरोधो दुर्वार इति भावः।

भाष्यम्—

**नच शून्यवादिनां तद्वादिनां च कश्चिद् विशेषो मोक्षे।**

टिप्पणी—

ननु शून्यवादिनिराकरणपरसूत्रविरोधोऽस्माकं कथमिति चेन्न। सूत्रनिरसनीयांशस्य त्वन्मतेऽपि साम्यात्। मायावादिनिरासाय शून्यवादिनिरासकसूत्रोदाहरणे इतोऽपि नानुपपत्तिरित्याह— **नचेति**॥ तद्वादिनां मायावादिनां मत इति शेषः। यद्यपि मायावादिनां शून्यवादिनां च मते आचारविशेषो दृश्यते तथापि शास्त्रविषयीभूतप्रमेये न कश्चिद् विशेषः। तथाच शून्यवादिनिरासकसूत्रेण मायावादिनिरासो नानुपपन्न इत्यर्थः। ननु शास्त्रविषयभूतेऽपि प्रमेये शून्यवादिमतान्मायावादिमतस्य कुतो न विशेष इति चेत्स च विशेषः

किं प्रधानफलविशेषात्तत्साधनवैलक्षण्यात्परमप्रमेयवैषम्यादपरप्रमेयविशेषाद् वा । आद्यपक्षं दूषयति– **नचेति** ॥ प्रधानफलं हि मोक्ष एव स च शून्यवादिना यादृशोऽभिधीयते तादृश एव मायावादिनाप्यभिधीयत इति मोक्षे शून्यवादिनां मायावादिनां च मते न कश्चिद् विशेषः । तथाहि मायावादिमते हि 'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः' इत्युक्त्या किं मोक्षोऽविद्यानिवृत्तिरूपः उत 'ब्रह्म वेद ब्रह्मैव भवति' 'ब्रह्मभूयाय कल्पते' इत्यादिश्रुतिस्मृतिप्रामाण्याभिमानेन ब्रह्मभावः । आद्ये शून्यवादेऽपि संवृतिनिवृत्तेर्मोक्षत्वेन तद्वैलक्षण्याभावः । अविद्यानिवृत्तिः संवृतिनिवृत्तिविलक्षणेति चेत् तत्किमविद्यानिवृत्तेः संवृतिनिवृत्तिवैलक्षण्यं स्वतः प्रतियोगिवैलक्षण्याद् वा । नाद्यः । स्वतो वैलक्षण्यायोगात् । द्वितीये संवृतिवैलक्षण्यं किमविद्याया विरुद्धलक्षणयोगात् किं वा आवरणविक्षेपादिकार्यभेदादथ सञ्ज्ञाभेदात् । नाद्यः । मायावाद्यभिमतस्य अनाद्यनिर्वाच्यत्वादेरविद्यालक्षणस्य शून्यवादिभिः संवृतावप्यङ्गीकारात् । उक्तं हि- 'तस्यैवानादिसंवृत्त्या' इत्यादि । न द्वितीयः । संवृतिशब्देनैवावरकत्वस्य स्फुटं प्रतिभासनात् । विक्षेपस्य तैरप्यभ्युपगमाच्च । यथोक्तम् तस्यैवानादिसंवृत्या नानाभेदात्मकं जगत् । सदिवाभातीत्यादि । नापि तृतीयः । पर्यायभूतसञ्ज्ञाभेदस्यार्थवैलक्षण्याप्रयोजकत्वात् । संव्रीयते अनयेति संवृतिरित्यावरकत्वरूपसंवृतिशब्दयोगार्थस्य त्वदभिमताविद्यायामपि सत्वात् । विद्याविरोधित्वरूपाविद्याशब्दप्रवृत्तिनिमित्तस्य शून्यवाद्यभिमतसंवृतावपि सत्वात् । उक्तं चानुव्याख्याने– 'माया तेषां तु संवृतिः' इति । किञ्चाविद्यानिवृत्तिस्त्वन्मते ह्यात्मरूपैव । यथोक्तं 'आत्मैवाज्ञानहानिः' इति । शून्यवादिनोऽपि संवृतिनिवृत्तिः शून्यमात्रमित्यङ्गीकुर्वन्ति । यथोक्तमनुव्याख्याने- 'शून्यं तत्त्वमसम्बाधं नानासंवृतिवर्जितम् । मोक्ष इत्युच्यते' इति । तथाच कथं विशेषः । केचिन्मायावादिनस्त्वविद्यानिवृत्तिरात्मातिरिक्ता पञ्चमप्रकारैव । यथोक्तम्- 'न सन्नासन्नसदसन्नानिर्वाच्यश्च तत्क्षयः । यक्षानुरूपो वलिरित्याचार्याः प्रत्यपीपदन्' इति । आत्ममात्रत्वेऽसाध्यत्वापातात् । वृत्तिविशिष्टात्मरूपत्वे

वृत्तिनिवृत्तौ मोक्षनिवृत्त्यापाताद् वृत्त्युपलक्षितात्ममात्रत्वे तु वृत्त्युपलक्षितात्मनः पश्चादिव पूर्वमपि सत्वेन संसारदशायामपि मोक्षत्वापातात् । अनात्मत्वेऽपि सत्त्वेऽद्वैतहानिरसत्त्वे तदभावः । सदसत्त्वं विरुद्धं सदसद्विलक्षणत्वेऽज्ञान-निवृत्तित्वानुपपत्तिः । प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्यावश्यकत्वादिति वदन्ति । तन्मतस्यापि शून्यवादिमतान्न विशेषः। शून्यवादिभिरपि अगत्या तत्त्वस्य पञ्चमप्रकारत्वस्वीकारात् । यथाहुः- 'न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः' इति । तस्मादविद्यानिवृत्तिरूपमोक्षस्य न शून्यवाद्यभिमतसंवृतिनिवृत्तिरूपमोक्षवैलक्षण्यम् । नान्त्यः । ब्रह्मभावरूपमोक्षस्य शून्यवाद्यभिमतशून्यभावरूपमोक्षानतिरेकात् । यथोक्तं शून्यवादिना- 'तद्भावं योगिनं नयेत्' इति । नन्वस्मन्मते ब्रह्मणः परमानन्दात्मकतया तद्भावः पुरुषार्थः । दुःखनिवृत्तिव्यतिरेकेण निरतिशयानन्दस्फुरणात् । यथोक्तम्- 'तस्मादविद्यास्तमयो नित्यानन्दप्रतीतितः । निःशेषदुःखच्छेदाच्च पुरुषार्थः परो मतः' इति । नैवं शून्यमिति न तद्भावः पुरुषार्थ इति चेत् । आनन्दमनु-भूयासमितिवदानन्दो भूयासमितीच्छाया अदर्शनेनान्दत्वस्यापुरुषार्थत्वात् । स्ववृत्त्यानन्दानुभवः पुरुषार्थोऽपि परेण नेष्यते । सुखस्य स्ववृत्तित्वानभ्युप-गमात् । स्वस्मिन् कर्तृकर्मभावानभ्युपगमाच्च । किञ्च ब्रह्मणः सुखमात्रत्वे प्रकाशमात्रत्वे वा सुखप्रकाशाभावेनापुरुषार्थत्वम् । उभयात्मकत्वे चाखण्डत्व-हानिः । ननु वस्तुतो ज्ञानसुखात्मकत्वे भवेदखण्डत्वहानिः । नचैवं किन्तु जाड्यादिविरोधित्वमात्रम् । 'अनृतजडविरोधिरूपमन्तत्रयमलबन्धनदुःखता-विरुद्धम्' इति सिद्धान्तरहस्यज्ञैरुक्तत्वादिति चेन्न । एवं सत्यानन्दादिरूपाताया वाङ्मात्रत्वापत्त्या न ब्रह्मभावः पुरुषार्थः स्यात् । अन्यथा शून्यवादिभिः शून्यस्य 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत्' इत्यादिना जाड्य-दुःखविरोधिरूपज्ञानानन्दात्मकत्वोक्त्या शून्यभावोऽपि पुरुषार्थः स्यादिति न तद्वैलक्षण्यं ब्रह्मभावस्य ।

**भाष्यम्—**

**नच नित्यज्ञानस्वरूपमस्तीति वचनेन कश्चिद् विशेषः ज्ञेयाभावे ज्ञानस्याप्यभावात्। नहि ज्ञेयरहितं ज्ञानं नामास्तीत्यत्र किञ्चिन्मानम्। नच स्वविषयं तदिति तेषां पक्षः। तदा कर्तृकर्मविरोध इति हि तेषां वचनम्।**

**टिप्पणी—**

ननु शून्यवादिभिरात्मनाशो मोक्ष इत्युच्यते। न तथाऽस्माभिरङ्गीक्रियते मोक्षे आत्मनो नित्यज्ञानस्वरूपमस्तीत्यङ्गीकारात्। अतः कथं न विशेष इत्यत आह– **नचेति** ॥ मोक्ष इत्यनुवर्तते। आत्मनो मोक्षे नित्यज्ञानस्वरूपमस्तीति वचनेन मायावादिमतस्य शून्यवादिमतान्न कश्चिद् विशेषः। शून्यवादिभिरपि शून्याभिन्नात्मस्वरूपानुवृत्तेर्मुक्तावप्यङ्गीकारात्। अन्यथा 'तद्भावं योगिनं नयेत्' इत्युक्तः शून्यभावः कस्य स्यात्। कर्तृत्वभोक्तृत्वप्रमातृत्वादिविशिष्टात्मनाशस्तु मायावादिनामपि सम इति भावः। ननु यद्यपि शून्यवादिन आत्मस्वरूपमात्रं मुक्तावनुवर्तत इत्यङ्गीकुर्वन्ति नतु तन्नित्यज्ञानस्वरूपमिति। अतो विशेष इति चेन्न। त्वन्मतेऽप्यात्मस्वरूपं नित्यज्ञानात्मकमिति वचनमात्रत्वेन वस्तुगत्याऽयोगात्। तदिदमुक्तं इतिवचनेनेति। आत्मनो नित्यज्ञानस्वरूपत्वं कुतो न युक्तमिति चेन्न। तदात्मस्वरूपभूतं ज्ञानं सविषयं निर्विषयं वा। द्वितीयं तावद् दूषयति– **ज्ञेयेति** ॥ आत्मस्वरूपं न ज्ञानात्मकं विषयशून्यत्वाद् घटवत्। अन्यथा घटोऽपि ज्ञानं स्यादित्यर्थः। अत्र विषयशून्यत्वं विषयानुल्लेखित्वं नतूल्लिखितस्य विषयस्यावर्तमानत्वमत्यन्तासत्त्वं वा येनातीतादिज्ञाने तुच्छादिज्ञाने च व्यभिचारः स्यात्। ननु विषयशून्यघटस्य ज्ञानत्वाभावेऽपि आत्मा विषयशून्योऽपि ज्ञानमस्तु को दोषः। नहि सर्वैर्भावैरेकविधैर्भाव्यमिति नियमोऽस्ति। यथान्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दर्शनेऽप्यात्मन्यैक्यं दृश्यते तथेति चेत्। मामहं जानामीति प्रमाणसद्भावात् तत्र तथा कल्पनात्। नचात्र किञ्चित्प्रमाणमस्तीत्याह– **नहीति** ॥ सविषयकत्वेऽपि किं तत्परविषयं स्वविषयं वा। नाद्यः। परमते मोक्षे पराभावात्। त्वन्मते वर्तमानस्यैव

साक्षात्साक्षिविषयत्वाच्च। द्वितीयं दूषयति– **नचेति**।। यद्यप्यस्मन्मते आत्मरूपं ज्ञानं स्वविषयकं, आत्मनः स्वप्रकाशत्वाङ्गीकारात्। तथापि तेषां मायावादिनां पक्षो न भवति। नचैवमात्मनस्तन्मते स्वप्रकाशत्वाङ्गीकारविरोधः। अपरप्रकाश्यत्वं स्वप्रकाशत्वमिति परसिद्धान्तादिति भावः। आत्मस्वरूपं ज्ञानं स्वविषयमिति तेषां पक्षो न भवतीति कुतो ज्ञायत इत्यत आह– **तदेति**।। यदि आत्मस्वरूपभूतं ज्ञानं स्वविषयं स्यात् तदा ज्ञानस्यैव कर्तृत्वं कर्मत्वं चाङ्गीकर्तव्यं स्यात् विषयीकरणलक्षणव्यापारं प्रति ज्ञानस्य कर्तृत्वात्। अन्यथा ज्ञानं स्वात्मानं विषयीकरोतीति न स्यात्। नचैकस्यां क्रियायामेकस्यैव कर्तृत्वं कर्मत्वं च युक्तं विरोधात्। परसमवेतक्रियाजन्यफलशालित्वस्य कर्मलक्षणत्वादिति भावः।

**भाष्यम्—**

**नच जानातीत्यादिकर्तृत्वं ज्ञानस्य तैरङ्गीक्रियते। निर्विशेषत्वाङ्गीकारात्। अतः शून्यवादिन एव तेऽपि।**

**टिप्पणी—**

एवमात्मस्वरूपस्य विषयशून्यत्वेन ज्ञानत्वाभावमुपपाद्येदानीं ज्ञात्रभावादपि तन्न ज्ञानमित्याह– **नचेति**।। आत्मस्वरूपभूतज्ञानं प्रति न तावदन्यः कर्ताऽस्ति तदभावात्। अत आत्मस्वरूपज्ञानमेव स्वं प्रति कर्त्रीति वक्तव्यम्। तत्रेदं दूषणम्। आदिपदेनानुभवतीत्यादेर्ग्रहणम्। ज्ञानस्यात्मस्वरूपस्य कुत एतज्ज्ञायत इति चेत् ज्ञानरूपक्रियां प्रत्यात्मरूपज्ञानस्य कर्तृत्वाङ्गीकारे आत्मरूपज्ञानं स्वाश्रय इत्युक्तं स्यात्। धात्वर्थाश्रयस्यैव कर्तृत्वात्। नच तद्युज्यत इत्याह– **निर्विशेषत्वेति**।। तर्हि भवतामप्यात्मा ज्ञानात्मकः कथमिति चेत् अस्माभिस्तस्य स्वविषयकत्वस्याप्यङ्गीकारात्। आत्मन एव ज्ञातृत्वाङ्गीकाराच्चेति। नचोक्तदोषः। अभेदेऽपि भेदप्रतिनिधिविशेषबलात् सर्वस्योपपत्तेः। नच परमते तद्युज्यत इत्याह– **निर्विशेषत्वेति**।। ज्ञातृज्ञेयशून्यस्यापि ज्ञानत्वाङ्गीकारे को दोष इति चेद् वाच्यवक्तृविहीनस्य वचनस्य

भोज्यभोक्तृविहीनस्य भोजनस्य गम्यगन्तृविहीनस्य गमनादेरप्यङ्गीकारापातात् । एवं चात्मनो नित्यज्ञानस्वरूपत्वमस्तीत्यस्य वाङ्मात्रत्वेन मोक्षे शून्यवादिमतान्मायावादिमतस्य न कश्चिद् विशेष इति स्थितम् । नापि तत्साधनवैलक्षण्यादिति द्वितीयः पक्षो युक्तः । शून्यवादिभिः शून्याद्वैत-साक्षात्कारस्येव मायावादिभिरपि ब्रह्माद्वैतसाक्षात्कारस्यैव मोक्षहेतुत्वोक्तेः । नन्वस्तु तृतीयः पक्षः । मायावादिनो हि ब्रह्मैव तत्त्वमिति ब्रुवते शून्यवादिनस्तु शून्यमेवेति तथाच न द्वितीयपक्षोक्तदोषः । ब्रह्मसाक्षात्कारशून्यसाक्षात्कारयो-र्विषयवैलक्षण्यादेव वैलक्षण्यसिद्धेः । एवञ्च कथं तयोरविशेष इति चेत् । न । शून्यवाद्यभिमतशून्यान्मायावाद्यभिमतब्रह्मणो विशेषोक्तेर्व्याहतत्वात् । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ तैरित्यनुवर्तते । ननु माऽभूत् ब्रह्मणो निर्विशेषत्वाच्छून्याद् विशेषः । शून्यस्य ब्रह्मणो विशेषः किन्न स्यादिति मन्दाशङ्कामप्यपाकरोति– **निर्विशेषत्वेति**॥ शून्यस्य शून्यवादिनापीति शेषः । 'निर्विशेषं स्वयं भातम्' इत्यादि तद्वचनात् । किञ्च यद्धि यतो व्यावर्तते तत्तद्व्यावर्तकधर्मयोगेनैव ततो व्यावृत्तं दृष्टं यथा घटात्पटः । नच ब्रह्मशून्ययोः कश्चिद् व्यावर्तकधर्मोऽस्ति । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ शून्यवादिमायावादिभ्यां शून्यब्रह्मणोरिति शेषः । किञ्च न तावद्ब्रह्मणः शून्याद् विशेषो विरुद्धलक्षणयोगादिति वक्तुं युक्तम् । स किं जगत्कारण-त्वादिरूपतटस्थलक्षणयोगो वा सत्यत्वज्ञानत्वादिस्वरूपलक्षणयोगो वा । नाद्यः । मायावादिभिः शुद्धब्रह्मणो जगत्कारणत्वाद्यनङ्गीकारात् । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ अज्ञानोपहितस्य जगत्कारणत्वाङ्गीकारस्तु शून्यवादेऽपि समः संवृतियोगेन शून्यस्यापि शून्यवादिभिर्जगत्कारणत्वाङ्गीकारात् । यथाहुः शून्यवादिनः- 'विश्वाकारं च संवृत्या यस्य तत्पदमक्षयम्' इति । यथोक्तमनु-व्याख्याने 'नहि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः' इति । न द्वितीयः । मायावादिभिर्ब्रह्मणः परमार्थतः सत्यत्वाद्यनङ्गीकारात् । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ ननु परमार्थतः सत्यत्वाद्यभावेऽपि अनृतविरोधित्वादिनैव

सत्यत्वादिव्यवहारः । यथाहुरस्मन्मततत्त्ववेदिनः । 'अनृतजडविरोधिरूपम् अन्तत्रयमलबन्धदुःखताविरुद्धम्' इति। तथाचोक्तविधलक्षणप्रयुक्त एव शून्याद् ब्रह्मणो विशेष इति चेन्न। शून्यवादिभिरपि शून्यस्योक्तविधलक्षणाङ्गीकारात्। यथाहुः शून्यवादिनः । जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यदिति । उक्तं चानुव्याख्याने । 'अनृतादिविरोधित्वमुभयोश्च स्वलक्षणम्' इति । नापि विरुद्धधर्मयोगाच्छून्याद्ब्रह्मणो विशेषः। स च ब्रह्मशून्ययोः किं भावत्वाभावत्वं वा सत्त्वासत्त्वं वा दोषित्वगुणवत्त्वं वा हेयत्वोपादेयत्वं वाऽन्यद् वा । सर्वत्रापि दोषमाह– **निर्विशेषत्वेति**॥ शून्यवादिमायावादिभ्यां शून्यब्रह्मणोरिति शेषः। ननु 'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्च' इत्यादिना भाष्य-कृतानन्दाविषयानुभवो नित्यत्वं चेति सन्ति धर्मा इति पञ्चपादिकाकृता च ब्रह्मणि धर्माः स्वीकृता इति चेत्सत्यम् । नतु परमार्थतः काल्पनिकास्तु भावत्वादयो धर्माः शून्यवादिना शून्यस्याप्यङ्गीक्रियन्त एव । यथाहुः शून्यवादिनः- 'भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः। नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा ॥ हेयोपादेयरहितं तच्छून्यं पदमक्षयम्' इति। ननु धर्माङ्गीकारस्तावज्ज्ञायते । स च परमार्थतो नेति कथं ज्ञायत इत्यत आह– **निर्विशेषत्वेति** ॥ यदि ब्रह्मणो धर्माङ्गीकारः पारमार्थिकः स्यात् तदा निर्विशेषत्वाङ्गीकारविरोधः स्यादित्यर्थः। ननु ब्रह्मेति शून्यमिति सञ्ज्ञा-भेदादेव तयोर्भेदसिद्धिरिति चेन्न । निमित्तभेदरहितसञ्ज्ञाभेदस्यार्थवैलक्षण्या-प्रयोजकत्वात् । तथाहि ब्रह्मशब्दस्य किं ब्रह्मणि मुख्यवृत्तिरमुख्यवृत्तिर्वा? आद्येऽपि किं योगो रूढिर्योगरूढिर्वा । नाद्यः । ब्रह्मशब्दस्य यौगिकार्थो हि गुणपूर्णत्वम्, 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः' इत्यादि-श्रुतेः। नच त्वन्मते ब्रह्मणस्तद्युक्तं कुत इत्यत आह– **निर्विशेषत्वेति** ॥ देश-कालवस्तुपरिच्छेदराहित्यरूपमहत्त्वमेव ब्रह्मशब्दप्रवत्तिनिमित्तमिति तु मन्दम् । तस्य शून्यवादिभिः शून्येऽप्यङ्गीकृतत्वेन तथाविधयोगवृत्तिमतो ब्रह्मशब्दस्य तद्वैलक्षण्याप्रयोजकत्वात्। यथाह शून्यवादी 'जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि

यत्' इति । नापि द्वितीयः । असिद्धेरपसिद्धान्ताच्च । यथा घटादिशब्दानां यथा घटत्वादिकमेव प्रवृत्तिनिमित्तमेवं ब्रह्मण्यपि ब्रह्मशब्दप्रवृत्तिनिमित्तं किञ्चिद् वाच्यम् । नच तद्युक्तं कुत इत्यत आह– **निर्विशेषत्वेति** ॥ एतेन तृतीयोऽपि निरस्तः । अमुख्यवृत्तिरिति द्वितीयपक्षेऽपि किं ब्रह्मशब्दस्य ब्रह्मणि गौणी वृत्तिर्लक्षणा वा । नाद्यः । प्रवृत्तिनिमित्तातिरिक्तमुख्यार्थगुणयोगे हि गौणी दृष्टा । नचात्र मुख्यार्थगुणयोगोऽस्ति । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ न द्वितीयः । मुख्यार्थसम्बन्धिनि अर्थान्तरे वृत्तिर्लक्षणा । नच ब्रह्मणो मुख्यार्थसम्बन्धोऽस्ति । कुत इत्यत आह– **निर्विशेषत्वेति** ॥ ब्रह्मणि ब्रह्मशब्दवच्छून्यवादिना शून्येऽपि शून्यशब्दस्य लक्षणाङ्गीकाराच्च । यथोक्तं शून्यवादिना-'अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः' इति । तस्माच्छून्यब्रह्मणोरविशेषान्न परप्रमेये शून्यवादान्मायावादस्य वैलक्षण्यम् । अपरप्रमेये वैलक्षण्याभावोपपादनं तत्प्रागेव किञ्चित्कृतमिति चतुर्थोऽपि निरस्त एवेति । एवं मायावादस्य शून्यवादसाम्यमुपपाद्योपसंहरति– **अत इति** ॥ एवं सुखदुःखादेर्मिथ्यात्वाभावाज्जीवस्य समानत्वं न युज्यत इति स्थितम् ।

**भाष्यम्—**

**स्वप्नो भूत्वा स्वापको भूत्वा । नहि जीवोऽपि स्वप्न एव भवति । स्वापं नयतीति स्वप्न इति च व्युत्पत्तिः । जायमानो म्रियमाणो प्रस्वपितीत्यादि । 'कृत्वा विवाहं तु कुरुप्रवीराः', 'तदेतन्मे विजानीहि यथाऽहं मन्दधीर्हरे', 'सुखं बुद्ध्येय दुर्बोधं योषा भवदनुग्रहात्', 'जज्ञे बहुज्ञं परमाभ्युदारम्', 'द्रष्टुश्चक्षुषो नास्ति जिह्वा' इत्यादिवदन्तर्णीतणिच्त्वेन भवति । 'स्वातन्त्र्यस्नेहयोरन्तर्णीतणिच्' इति हि सूत्रम् ।**

**टिप्पणी—**

ननु जीवपक्ष इवेश्वरपक्षेऽपि बाधकमस्ति ईश्वरस्य स्वप्नाभेदाभावेन स्वप्नो भूत्वेत्यस्यानुपपत्तेरित्यतः तदनूद्य व्याचष्टे– **स्वप्नो भूत्वेति** ॥ जीवपरतया

यथाश्रुत एवार्थः किन्न स्यादित्यत आह– **नहीति** ।। तस्याप्यवस्थाभिन्नत्वादित्यर्थः । स्वप्न इत्यस्य स्वापक इत्यर्थं व्युत्पाद्य दर्शयति– **स्वापमिति** ।। ७ ।।

ननु तथापीश्वरस्य जननमरणादिकर्तृत्वासम्भवात्तत्पक्षे स वा अयं पुरुषो जायमानो म्रियमाणः स यत्र प्रस्वपिति इमं लोकमतिक्रमतीत्यादिकं न युक्तमित्यत आह– **जायमान इति** ।। विवाहं पाणिग्रहणं कृत्वा कारयित्वा विजानीहि विज्ञापय जज्ञे जनयामास द्रष्टुर्दर्शयितुः तदेतन्मे विजानीहीत्येतावत्युदाहर्तव्येऽप्यन्तर्णीतणिजर्थत्वख्यापनाय यथाहमित्याद्युदाहृतम्। एवं स वा अयं जायमान इत्यादिकमन्तर्णीतणिच्त्वेनोपपन्नमिति प्रयोगोपदर्शनेनोपपाद्यत तथा प्रयोगे किं निमित्तमित्यतः प्रयोजनं नियामकसूत्रेण दर्शयति– **स्वातन्त्र्येणेति** ।। स्वातन्त्र्यस्नेहयोर्विवक्षितयोर्णिच् अन्तरन्तर्गतो नतु प्रयुज्यत इत्यर्थः । प्रकृते स्वातन्त्र्यरूपार्थप्रदर्शनायान्तर्णीतणिच्प्रयोग इति भावः ।

**भाष्यम्—**

**[स्वप्नसुषुप्तिषु जीवस्य न ब्रह्मभावः]**

**कथमन्यथा 'स्वयं निहत्य स्वयं निर्माय स्नवत्यः सृजते । स हि कर्ता स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' इत्यादि युज्यते ।**

**उक्तार्थे च स्वप्नेन शारीरमित्यादि जीवेश्वरभेदमन्त्रा उक्ताः प्रमाणत्वेन ।**

**ईश्वरो जीवस्य भयानि पश्यन् जक्षदिव हसदिव ।**

**टिप्पणी—**

एवं जीवपरतया प्रतीयमानानामपि लिङ्गानां विष्णौ सावकाशत्वमुक्तं तदनङ्गीकृत्य जीवपरत्वाङ्गीकारे बाधकान्तरमाह– **कथमन्यथेति** ।। अन्यथा जीवपक्षे स्वयमेव बाह्यव्यापारविरामकर्तृत्वस्य स्वाप्नपदार्थस्रष्टृत्वस्य सर्वकर्तृत्वस्य च जीवे असम्भवात् । स्वप्नेत्यादिमन्त्रस्यासङ्गतेश्च । नह्ययं जीवप्रतिपादको येन सङ्गतिः स्यादिति भावः । नन्वीश्वरनिष्ठमपि समानत्वस्वप्नपदार्थकर्तृत्वादिकं

जीवस्यापि सम्भवत्येव। तस्येश्वराभिन्नत्वेन स्वरूपैक्यविवक्षया समानत्वाद्युक्ति-सम्भवात् । नचैवं यथाऽभेदाभिप्रायेण समानत्वादिकं जीवे नीयते तथा जायमानत्वादिकमप्यभेदाभिप्रायेणेशे नेतुं शक्यत इति किं जीव एवेति निर्बन्धे कारणमिति वाच्यम् । चैतन्यैक्याभिप्रायेणेशगतसमानत्वादेर्जीवे मुख्यवृत्तिवदीश्वरे जायमानत्वादेर्विशिष्टनिष्ठस्यामुख्यतोऽपि वक्तुमयोगात् । नच जीवेशाभेद एव कुत इति वाच्यम्। तदुभयप्रापकलिङ्गसामानाधिकरण्या-न्यथानुपपत्त्यैव तत्सिद्धेः। नच जीवप्रापकलिङ्गानि ईशपरतया व्याख्यातानीति वाच्यम्। एवमभेदेनैवोपपत्तौ तथा व्याख्याने नियामकाभावादित्यत आह– **उक्तार्थे चेति** ।। यद्यत्रोभयप्रापकलिङ्गान्यथानुपपत्त्या जीवेशाभेदो विवक्षितः स्यात्। तदा स्वप्नेनेत्यादिमन्त्रा असङ्गता विरुद्धाश्च स्युः। उक्तार्थे खल्वेते मन्त्राः प्रमाणत्वेनोक्ताः । जीवेशाभेदो ह्युक्तार्थः । अत्र च जीवेशभेद एवोच्यत इति तत् कुत इति चेत्। असुप्तत्वसुप्तत्वव्यपदेशात्। 'शुक्रमादाय' इति कर्मकर्तृव्यपदेशाच्च । कर्मकर्त्रोरुत्सर्गतो भेदस्यैव सत्त्वात् । नच कर्ता ईश्वरः कुत इति वाच्यम् । हिरण्मयत्वैकहंसत्वादिविशेषणात् । कुलायाद्बहिश्चरणस्यापि स्वप्नाद्यवस्थायां जीवस्य स्वतोऽसम्भवात् । अमृतस्येश्वस्यासम्भवात् । न तं पश्यति कश्चनेत्यदृष्टत्वोक्तेश्च । नच जीवस्यादृष्टत्वमस्ति । तं नायतं बोधयेदित्ययोग्यं प्रत्यनुपदेश्यत्वोक्तेश्चेति। तस्मादुक्तरीत्या जीवप्रापकलिङ्गानामीश्वरपरत्वेनैव व्याख्यानं युक्तम् । नतु जीवेशाभेद इत्यर्थः । ननु मन्त्रेष्वपि जीवेशाभेद एव विवक्षितः । अन्यथा कथमसुप्तत्वादीश्वरलिङ्गानां स्वप्नान्तमुच्चावचमीयमान इति भयानि पश्यन्निति जीवलिङ्गानां च सामानाधिकरण्यमुपपन्नं स्यादिति चेत् । न, स्वप्नान्तमुच्चावचमीयमान इत्यस्य अन्यथाव्याख्यास्यमानत्वादिति भावेन जक्षदुतेवापि भयानि पश्यन्निति वाक्यमीश्वरपरतया व्याचष्टे– **ईश्वर इति** ।। जक्ष भक्ष हसनयोरिति धातोरिति भावः । तथाचेदमपि जीवेशभेदपरमिति भावः ।

भाष्यम्—

**प्राज्ञेनात्मना सम्परिष्वक्तः प्राज्ञेनात्मनान्वारूढ इत्यादिषु चाभ्यासेन सर्वत्र भेद एव निर्दिश्यते 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति च निर्णयात्मकं भगवद्वचनम् ।**

टिप्पणी—

ननु स्वप्ने शारीरमित्यादौ भेदप्रतिपादनेऽपि तत्र तात्पर्याभावान्न तद्विरोध इत्यत आह– **प्राज्ञेनेति** ॥ इत्यादिषु सर्वत्र सम्बन्धः । आदिपदेन 'एतस्यैवानन्दस्यान्यानि भूतानि' इत्यादिवाक्यसङ्ग्रहः । चशब्देन 'स्वप्नेन शारीरम्' इत्यादिमन्त्रसमुच्चयः । अभ्यासस्य च तात्पर्यलिङ्गत्वमिति भावः । ननु 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति सुषुप्तिप्रकरणे 'प्राज्ञेनात्मनान्वारूढः' इत्युत्क्रान्तिप्रकरणे च जीवेशभेदः प्रतिपाद्यत इति कुतोऽवगतमिति चेत् सम्परिष्वक्तान्वारूढशब्दबलादेव । हेत्वन्तरमाह– **सुषुप्त्युत्क्रान्त्योरिति** ॥ सुषुप्त्युत्क्रान्त्योः प्रकरणयोः जीवेशयोः भेदेन व्यपदेशादिति सूत्रार्थः । एतेन 'स वा एष एतस्मिन् सम्प्रसादे रत्वा' इत्यादौ रमणचरणकर्तृत्वपुण्यपापफलशुभाशुभ-द्रष्टृत्वस्वापादिद्रष्टृत्वरूपजीवलिङ्गस्य पुण्यपापानन्वागतत्वासङ्गतत्वरूपेशलिङ्गस्य च सामानाधिकरण्यान्यथानुपपत्त्या जीवेशाभेदो विवक्षित इत्यपि परास्तम् । सर्वज्ञत्वेन स्वापादिद्रष्टृत्वस्येश एवोपपत्तेः । इतरलिङ्गानामीशे सावकाशत्वस्य वक्ष्यमाणत्वाच्च । ननु स्वप्नेन शारीरमिति न जीवेशभेदः प्रतिपाद्यते किन्तु असुप्तो जाग्रदवस्थापन्नो जीवः शारीरं सुप्तमात्मानं स्वप्नेनाभिप्रहत्येत्यवस्थाभेदेन जीवभेद एव एवं च सुषुप्त्युत्क्रान्तिप्रकरणयोरपि तद्भेदपरत्वमेवेत्यत आह– **नचेति** ॥ किमु पारमार्थिक इति कैमुत्यद्योतनायापिशब्दः ।

भाष्यम्—

**नचावस्थाभेदेन जीवभेदो व्यावहारिकोऽप्यस्तीत्यत्र किञ्चिन्मानम् । नहि जाग्रत्स्वप्नस्थश्च द्वावित्यज्ञप्रयोगोऽपि कश्चिदस्ति लौकिकः । नच भ्रमस्तादृशः । तस्माद् भगवानेवात्रोच्यते सर्वकर्तृत्वेन ।**

**वेशान्ता वेश्यागृहाः। सुषुप्तिमोक्षोभयविवक्षयैव तद्वचनमिति भगवताऽप्युक्तं 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति।**

**टिप्पणी—**

स्यादेतत्। यदि जागराद्यवस्थाभेदेनैकस्यैव जीवस्य भेद एव स्यात्। नच सोऽस्ति प्रमाणाभावादित्यर्थः। पारमार्थिकभेदाभावेऽपि व्यावहारिकः स्यादित्यत उक्तम्॥ **व्यावहारिकोऽपीति**॥ त्वन्मते जीवभेदस्य व्यावहारिकस्य सत्वादस्य तत्परत्वे कथञ्चिदुपपत्तिः। अवस्थाभेदोपाधिकजीवभेदपरत्वाङ्गीकारे तु न कथञ्चिदिति भावः। किञ्चावस्थाभेदोपाधिको व्यावहारिको जीवभेदो यदि स्यात्। तदा यथा व्यावहारिकभेदाभिप्रायेण द्वा सुपर्णेति द्वाविमौ पुरुषाविति च प्रयोगोऽस्ति। तथा जाग्रत्स्थः स्वप्नस्थश्चेति द्वाविति प्रयोगः स्यात्। नच सोऽस्तीत्याह– **नहीति**॥ ननु वैदिकप्रयोगाभावेऽपि लौकिकप्रयोगः स्यादित्यत उक्तम्॥ **लौकिक इति**॥ ननु लोकेऽपि ज्ञानिनां तादृशप्रयोगासम्भवेऽपि अज्ञप्रयोगः स्यादित्यत आह– **अज्ञप्रयोगोऽपीति**॥ ननु यद्यपि ज्ञानिनां तादृशप्रयोगः न सम्भवति। प्रयोगमूलभूतस्य ज्ञानस्य प्रमारूपस्य भ्रमरूपस्य वाऽसम्भात्। तथाप्यज्ञप्रयोगः सम्भवति। प्रयोगमूलभूतप्रमारूपज्ञानासम्भवेऽपि भ्रमरूपज्ञानसम्भवादित्यत आह– **नचेति**॥ तादृशः जाग्रत्स्थः स्वप्नस्थश्च द्वावित्येवमाकारः अस्तीत्यनुवर्तते। एतावत्पर्यन्तं मया स्वप्नो दृष्ट इति उत्थितस्य प्रत्यभिज्ञानेन विशेषदर्शनस्य य एवाहमेतावत्पर्यन्तं सुखमस्वाप्सं स एवेदानीं दुःखमनुभवामि। य एवाहं स्वप्ने गजादिकमद्राक्षं स एवेदानीं घटादिकमनुभवामीति च विशेषदर्शनस्य सर्वजनसाधारणत्वादिति भावः। यद्वा नन्वत्र श्रुत्यनुमानयोरभावेऽपि प्रत्यक्षप्रमाणं स्यादिति चेन्न। तत्प्रत्यक्षं किं स्वकीयं परकीयं वा। नाद्यः। तदभावात्। न द्वितीयः। तस्य प्रत्यक्षत्वेन व्यवहारानुमेयत्वात्। नचासावस्तीत्याह– **नहीति**॥ ननु व्यावहारिकतादृशभेदाभावेऽपि प्रातिभासिकः स्यादेवेत्यत आह– **नचेति**॥ उक्त एव वाक्यद्वयार्थः। जीवपक्ष इत्यादिनोक्तमुपसंहरति– **तस्मादिति**॥

जीवपक्षे बाधकसद्भावात् । साधकाभावाच्चेशपक्षे च तदभावादित्यर्थः । एवशब्दो जीवव्यावर्तकः । अत्रात्मैवास्य ज्योतिरित्यादौ सर्वकर्तृत्वेनेति सह कर्तेति वाक्यार्थकथनेन जीवपक्षे बाधकं ईशपक्षे साधकं चोक्तम् । एतेन स हि कर्तेति वाक्यं जीवपक्षे न युज्यत इति यदुक्तं तन्न । कर्तृत्वमात्रस्य जीवेऽपि सत्त्वादित्याशङ्कापि परास्ता । सर्वकर्तृत्वस्यैव तद्वाक्यार्थत्वात् तस्य च जीवेऽसम्भवात् । अन्यथा तस्य पूर्वोक्तस्वाप्नपदार्थस्रष्टृत्वे हेतुत्वासम्भवादिति भावः । वेशान्ताः पल्वला इति व्याख्यानमसत् । पुष्करिण्य इत्यनेनैव तेषामपि ग्रहणसम्भवेन पृथगुक्त्ययोगादिति भावेन तस्य पदस्यार्थमाह– **वेशान्ता इति** ।। इदं च परलोकस्थानं चेत्यादिकमिदं प्रकरणमवस्थालोकमोक्षपरत्वेनातो द्युसुप्तिमोक्षाणामभिप्रायादिदं वच इति व्याख्यातं तस्य प्रकरणस्य सुषुप्तिमोक्षपरत्वे नियामकान्तरमाह– **सुषुप्तीति** ।। उभयविवक्षयैव नत्वेकमात्रविवक्षयेत्येवार्थः । तद् वचनं अत्र पिताऽपिता भवतीत्यादि वचनमित्यर्थः । अपिशब्देन पूर्वोदाहृत-प्रमाणसङ्ग्रहः । सूत्रकर्त्रापीत्यर्थः । तद् वचनमुदाहरति– **स्वाप्ययेति** ।। यदुक्तम्- 'प्रदीपवदावेशस्तथा हि दर्शयति' इति पूर्वसूत्रे मुक्तस्य दुःखाद्यनुभवो नास्तीत्यत्र दर्शयति हीत्यंशेन । तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति वाक्यं प्रमाणमिति तदयुक्तम् । तीर्णो हीति वाक्यस्य स्वर्गस्थपरत्वसम्भवेन मुक्तानामदुःखित्वे प्रमाणत्वासम्भवात् । नच स्वर्गस्थस्य कथं दुःखाभाव इति वाच्यम् । 'स्वर्गे लोके न भयं किञ्चनास्ति न तत्र त्वं न जरया बिभेति' इत्यादिना स्वर्गे दुःखाभावसिद्धेरित्याशङ्कापरिहारायेदं सूत्रम् । स्वाप्ययो मुक्तिः, सम्पत्तिः सुप्तिः । तीर्णो हीति वाक्यं मुक्तिसुप्तिविषयमेव न स्वर्गविषयम् । कुतः अत्र पिताऽपिता भवति अनन्वागतं पापेनेत्यादिना पितृत्वपुण्यपापाद्यसङ्गतत्वादिलिङ्गश्रवणात् । अस्य वाक्यस्य सुप्तिमुक्तिविषयत्व-स्याविष्कृतत्वात्स्फुटं प्रतीयमानत्वात् । स्वर्गस्थस्य श्राद्धादिभोक्तुस्तदसम्भवादिति सूत्रार्थः ।

**भाष्यम्—**

**उभयापेक्षमित्युक्ते मोक्षस्थसुषुप्तिरिति मन्दस्याशङ्का स्यादतो मोक्षे सुप्तिरेव नास्तीति ज्ञापयितुमन्यतरापेक्षमित्युक्तं न त्वन्यतर एवार्थ इति। ज्ञाने विकल्पायोगात्। अतोऽवस्थाश्च लोकाश्च सर्वेऽपि विवक्षिताः। सर्वावतः आसमन्तात्सर्ववतः सर्वज्ञानान्युपादाय।**

**बाह्यप्रकाशो भेत्युक्तो ज्योतिरान्तर उच्यते।**
**सुखं स्वरूपभूतं यदानन्द इति कथ्यते ॥**
**मुन्नामविषयोत्थं यत्प्रकृष्टविषयात् प्रमुत् ॥ इति च ॥**

**टिप्पणी—**

ननु यदुक्तं सुषुप्तिमोक्षोभयविवक्षयैव तद् वचनमिति तदयुक्तम्। सूत्रेऽन्यतरशब्देन एकविवक्षया तद्वचनमित्युक्तत्वात्। अन्यथा स्वाप्ययसम्पत्त्यपेक्षमित्येतावता पूर्णत्वेनान्यतरपदवैयर्थ्यापत्तेः इत्यत आह– **उभयापेक्षमिति**॥ स्वाप्ययसम्पत्त्यपेक्षमित्युक्त इत्यर्थः। यदि स्वाप्ययसम्पत्त्यपेक्षमित्युच्यते तदा स्वाप्यये मोक्षे या सम्पत्तिः सुप्तिः तदपेक्षं तद्विषयमिति प्रतीत्या मोक्षेऽपि सुप्तिरस्तीत्याशङ्का स्यात्। नचाज्ञाननिवृत्तिरूपे मोक्षे कथमज्ञानकार्यसुप्तिशङ्का स्यादिति वाच्यम्। प्रेक्षावतां तच्छङ्काऽभावेऽपि मन्दस्य मोक्षस्याज्ञाननिवृत्तिरूपत्वं सुप्तेरज्ञानकार्यत्वं वाऽजानतः शङ्कासम्भवादित्यर्थः। किं तत इत्यत आह– **अत इति**॥ अत एव मन्दस्याशङ्कानिवृत्त्यर्थमेवेत्यर्थः। ज्ञापयितुमेवेति वा सम्बन्धः। ननु स्वाप्ययसम्पत्त्योरन्यतरापेक्षमित्युक्त्या मोक्षे सुप्तिरस्तीत्याशङ्कानिवृत्तिरेव भवति। द्वन्द्वसमासप्रदर्शनेन तत्पुरुषत्वभ्रान्तिनिवारणात्। नतु मोक्षे सुप्तिरेव नास्तीति ज्ञापनम्। ज्ञापकानुक्तेः। तस्मादत एवान्यतरापेक्षमित्युक्तमित्येव वक्तव्यं नतु मोक्षे सुप्तिरेव नास्तीति ज्ञापयितुमिति। अत एवोक्तं कर्मनिर्णये मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरपदमिति तत्कथमेतदिति चेत्सत्यम्। मोक्षे सुप्तिर्नास्तीति कृत्वा खलु तच्छङ्कानिवारणं कर्तव्यं अन्यथा तदपि सूत्रस्यार्थान्तरं स्यादिति तन्निरासाय व्यर्थपदप्रयोगानु-

पपत्तेः । तथाच मोक्षे सुप्तिरस्तीति शङ्कानिवारणेनैव तत्र सुप्तिर्नास्तीति ज्ञापितमिति भावः ।

ननु सम्बन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसम्पत्त्योरपेक्षमित्येव कुतो न कृतं तावताप्युक्तशङ्कापरिहारात् अन्यतरपदप्रयोगः किमर्थ इति चेन्न । अनेकार्थस्य तीर्णो हीति वाक्यस्यैकार्थव्याख्याने रुचिरेव व्याख्यातुः प्रमाणं नतु मुख्यामुख्यताविशेषोऽस्तीति सूचनाय अन्यतरशब्दस्य सार्थक्यादिति भावः । अत एव सूत्रभाष्ये सूत्रनिर्देशानुसारेण मोक्षे सुप्तौ चेति वक्तव्ये मुख्यामुख्यताविशेषाभावज्ञापनायैव सुप्तौ मोक्षे चेति व्यत्यासेनोक्तिः । यत्र यस्य रुचिः स एवार्थो ह्यस्य वाक्यस्य व्याख्येय इति भावेनैव वाशब्दस्य प्रयोगश्चेति । अत एव तत्त्वप्रकाशिकायां इदं वाक्यं सुप्तिमुक्तिविषयमिति तीर्णो हीति वाक्यस्योभयविषयत्वमुक्तम् । एवकारव्यावर्त्यमाह– **नत्विति** ।। नतु स्वाप्ययसम्पत्त्योर्मध्येऽन्यतर एक एवार्थो विवक्षितो नतूभयमिति ज्ञापयितुमन्यतरापेक्षमित्युक्तमित्यर्थः । कुत इत्यत आह– **ज्ञान इति** ।। ज्ञाने ज्ञातव्य इत्यर्थः । यदि स्वाप्ययसम्पत्त्योर्मध्ये एक एवार्थो विवक्षितः स्यात्तदा स्वाप्ययापेक्षमित्येव वा सम्पत्त्यपेक्षमित्येव वा ब्रूयात् नतु विकल्पवाचकान्यतरशब्दप्रयोगः । वस्तुविकल्पायोगात् । नच सूत्रकारस्याप्ययमेवार्थ इति निश्चयाभावादेवं प्रयोग इति वाच्यम् । सूत्रकृतो ज्ञाने विरुद्धानेकाकार-कल्पनायोगात् सूत्रकृतः संशयायोगादिति यावत् । अन्यथा सूत्रस्यासन्दिग्धत्व-व्याहतेरित्यर्थः । एवं तीर्णो हीति वाक्यस्य सुप्तिमोक्षोभयविषयत्वेनेदं प्रकरणं सुप्तिमोक्षोभयविवक्षयैव प्रवृत्तमिति स्थितम् । किं तत इत्यत आह– **अत इति** ।। यत उक्तरीत्येदं प्रकरणं सुप्तिमोक्षोभयपरं यतश्च प्रमाणेन तथा व्याख्यातं अतोऽस्मिन् प्रकरणे सुप्त्याद्यवस्थाश्च सर्वे लोकाश्च पृथिव्यन्तरिक्ष-द्युरूपा मोक्षाश्च प्रतिपाद्यतया विवक्षिता इत्यर्थः । अप्रतीतेः सर्वावत इति पदमनूद्य व्याचष्टे– **आसमन्तादिति** ।। आ इत्यनुवादेन समन्तादिति व्याख्यानं सर्वावत इत्येतत् षष्ठ्यन्तं लोकस्येत्यस्य विशेषणमिति व्याख्यानमसत् ।

सर्ववत इत्येव वक्तव्यतया सर्वावत इत्ययोगात् मतुपो व्यर्थत्वाच्च । सर्वस्य लोकस्यैकदा सुप्त्यभावाच्चेति भावेन सर्वावत इत्येतत् द्वितीया बहुवचनमित्यङ्गीकृत्य तस्य तात्पर्यं वदन् अन्वयमाह– **सर्वज्ञानानीति** ।। सर्वजाग्रत्पदार्थविषयज्ञानानी-त्यर्थः । अनेन सर्वं विषयत्वेनेषामस्तीति सर्वावत इति व्याख्यातम् । स्वेन भासा स्वेन ज्योतिषेत्यत्र पुनरुक्तिपरिहाराय भाज्योतिःशब्दयोः अर्थभेदमाह– **बाह्यप्रकाश इति** ।। वर्चोरूप इत्यर्थः । न तत्रानन्दा मुदः प्रमुद इत्यत्र पुनरुक्तिपरिहारायानन्दादिशब्दार्थमाह– **सुखमिति** ।। बुद्ध्या विविक्तस्योत्थमित्यस्य प्रकृष्टविषयादित्यत्रापि सम्बन्धः ।

उपनिषत्—

**तदेते श्लोका भवन्ति–**

**स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ।**
**शुक्रमादाय पुनरेति स्थानं हिरण्मयः पुरुष एक हंसः ।। ११ ।।**

भाष्यम्—

**शुक्रं जीवमादाय ।**

**शोकेन रत्या युक्तत्वाच्छुक्रो जीव उदाहृतः ।। इति च ।।**
**रत्यानन्दौ पूर्णनित्यौ हितौ तेन हिरण्मयः ।**
**स्वर्णवर्णतया वाऽपि वासुदेवो हिरण्मयः ।।**
**प्रधानहंसरूपत्वादेकहंस इतीरितः ।। इति च ।।**

टिप्पणी—

शुक्रमादाय पुनरेति स्थानमित्यस्य शुक्रं शुद्धं ज्योतिष्मदिन्द्रियादिमात्रारूपमुपादाय पुनर्जागरितस्थानमेतीति व्याख्यानमसत् । जीवस्य स्वयमेवेन्द्रियादानायोगादिति भावेन शुक्रशब्दार्थमाह– **शुक्रमिति** ।। परपक्षे बाधकस्य स्वपक्षे तदभावस्य च सूचनायादायेत्यस्यानुवादः । जीवे शुक्रशब्दं निर्वक्ति– **शोकेनेति** ।।

हिरण्मयश्चैतन्यज्योतिः स्वभाव इति व्याख्यानमपदार्थवर्णनं प्रमाणविरुद्धं चेति भावेन द्वेधा व्याचष्टे– **रत्येति** ।। रत्यानन्दाविति क्रमेण रेफणकारार्थोक्तिः । स्वरूपतः कालतश्च प्राचुर्यं मयडर्थ इति भावेन पूर्णनित्यावित्युक्तम् । हीत्यस्यार्थो हिताविति निहितावित्यर्थः । स्वर्णेति हिरण्यमय एव हिरण्मयः । यकारलोपो निर्वचनत्वात् । एक एव जाग्रत्स्वप्ने परलोकालोकादीन् हन्ति गच्छन्तीत्येकहंस इति व्याख्यानं प्रमाणविरुद्धमिति भावेन व्याचष्टे– **प्रधानेति** ।। वायोरपि हंसरूपसद्भावात्प्रधानेत्युक्तम् ।

उपनिषत्—

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा ।**
**स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः ।। १२ ।।**

भाष्यम्—

**अंशेन जीवमादाय क्वचिदीशो बहिर्नयेत् ।**
**स्वप्नेषु फल्गुनं यद्वत् कृष्णः कैलासमानयत् ।।**
**वासनारूपकान्प्रायस्त्वन्तरेव प्रदर्शयेत् ।**
**अतो बहिः कुलायादित्यपि वाङ् न विरुध्यते ।। इति ।।**

टिप्पणी—

नन्वीश्वरो जीवस्य स्वाप्नान् गजादीनन्तरेव दर्शयति । तेषां वासनोपादानकत्वात् । यथोक्तं 'मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न' इति गीयते ।। इति ।। तथाच बहिष्कुलायादमृतश्चरितत्वेति वाक्यं तद्विरुद्धं स्यादित्यत आह– **अंशेनेति** ।। सामस्त्येन जीवस्य बहिर्नयने शरीरस्य मृतकत्वापत्तिरित्यत उक्तम् ।। **अंशेनेति** ।। जीवं देवादिरूपं, सर्वेषामंशव्यतिरेकाभावात् तदपि न सर्वदेत्युक्तं क्वचित्कदाचिदिति तत्र निदर्शनमाह– **फल्गुनमिति** ।। तर्हि का गतिरुदाहृतप्रमाणस्येत्यत आह–**वासनारूपकानिति** ।। तथाच प्रायिकाभिप्रायं तद्वचनमिति भावः ।। ८-११ ।।

किं तत इत्यत आह– **अत इति** ।। अस्य देवादिविशिष्टजीवकादाचित्क-स्वाप्नबहिर्निर्गमनविषयत्वादित्यर्थः ।। १२ ।।

उपनिषत्—

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ।**
**उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ।।**

भाष्यम्—

**उच्चावचेषु रूपेषु प्रविशन् पुरुषोत्तमः ।**
**बहुरूपत्वमायाति स्वप्ने स जगतः प्रभुः ।। इति च ।।**
**मोदरूपत्वतो विष्णोः स्त्रीभिर्मोदो विडम्बनम् ।**

टिप्पणी—

स्वप्नान्तमुच्चावचमीयमानमिति जीवलिङ्गसद्भावात् कथमेतत्प्रकरणं विष्णुपरमित्यतस्तद् व्याचष्टे– **उच्चेति** ।। रूपाणि देवः कुरुते बहूनीत्यस्यार्थो बहुरूपत्वमायातीति । उतेव स्त्रीभिः सह मोदमान इतीवशब्दात् स्त्रीभिर्मोदो मृषेति प्रतीतिनिरासाय इवशब्दाभिप्रायमाह– **मोदरूपत्वत इति** ।। विडम्बनमनु-करणम् अनेन जक्षदुतेवेतीवशब्दस्याप्यभिप्राय उक्तः ।

उपनिषत्—

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति ।।**
**तं नायतं बोधयेदित्याहुर्दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयञ्ज्योति-र्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ।। १४ ।।**

भाष्यम्—

जीवस्य मृतिकाले च स्वप्नकाले च केशवः ।
एवंविधानि कर्माणि कुर्वाणोऽपि न दृश्यते ।
तथा जागरिते सुप्तौ मुक्तैरेव तु दृश्यते ।
तथापि नायतेभ्यस्तं ज्ञानी ब्रूयाज्जनार्दनम् ।
यस्य गोचरतां विष्णुः कदाचिन्न प्रपद्यते ।
तस्याऽयतस्य पापस्य भेषजं नहि विद्यते ।
सुप्तिकालोऽप्ययं विष्णोः सदा जागरितात्मकः ।
यानि जागरिते पश्येत् तानि सुप्तेऽपि पश्यति ।
नित्यज्ञानस्वरूपत्वाद् भगवान् पुरुषोत्तमः ।
नित्यानन्यप्रकाशत्वेऽप्यन्यज्योतिर्यदा भवेत् ।
तदा स्यात्संशयोऽज्ञानामित्यत्रेति विशेषणम् ।। इति च ।।

जीवस्यापि स्वप्नावस्थायां जागरितत्वेऽस्येति विशेषणं व्यर्थम् । पूर्वोक्तमपि मोक्षायैव भवति । अत ऊर्ध्वं विशिष्टमोक्षाय ब्रूहि ।

स्वयोग्यभगवद्दृष्टेः सर्वैर्मुक्तिरवाप्यते ।
पुनर्ज्ञानान्तराधिक्यात् सुखाधिक्यं विमोक्षगम् ।।इति ब्रह्मतर्के ।।

स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तम् ।

टिप्पणी—

नन्वस्याराममाक्रीडनं स्वप्नपदार्थनिर्माणादिलक्षणमेव पश्यन्ति जनाः । कश्चन तं पश्यतीति कथम् । एवंविधकर्मकर्तृत्वेन मुक्तैर्दृश्यमानत्वादित्यत आह— **जीवस्येति** ।। एवंविधानि प्रमाणप्रसिद्धानि कर्माणि कुर्वाणोऽपीत्युक्त्याऽऽराम-मित्यस्यार्थ उक्तः । न दृश्यते म्रियमाणादिभिः । तथा जागरिते सुप्तावित्यस्यैवं-विधानीति पूर्वेण सम्बन्धः । भगवदज्ञानी जनस्तर्हि ज्ञानिना बोधनीय इति चेत्सत्यम् । तथापि न सर्व इति भावेन तं नायतं बोधयेदित्याहुरिति वाक्यं व्याचष्टे— **तथापीति** ।। आयतेभ्यो ज्ञानार्थं प्रयत्नशून्येभ्य अयोग्येभ्य

इति यावत् । दुर्भिषज्यं हास्मै भवति यमेष न प्रतिपद्यत इति वाक्यमन्वयक्रमेण व्याचष्टे– **यस्येति** ॥ गोचरतां ज्ञानविषयताम् । अथो खल्वाहुः जागरितदेश एवास्यैष इति वाक्यं व्याचष्टे– **सुप्तिकालेऽपीति** ॥ सुप्तिकालः स्वप्नसुषुप्तिकालः । जीवस्य जागरणात्मकोऽपीति विरोधस्फोरणायापिशब्दः । यानि ह्येव जाग्रत् पश्यति तानि सुप्त इति हेतुवाक्यं व्याचष्टे– **यानीति** ॥ सुप्तेति भावे क्तः । स्वप्नसुषुप्त्यवस्थायामित्यर्थः । तत्र हेतुमाह– **नित्येति** ॥ ननु विष्णोः सर्वदा जीवं प्रति स्वातन्त्र्येण ज्योतिष्ट्वादत्र सुप्तिकाल इति विशेषणं व्यर्थमित्यत आह– **नित्येति** ॥ नित्यं सर्वदा जीवस्य विष्ण्वन्यस्य स्वतन्त्रप्रकाशशून्यत्वेऽपि यदा जागरितेऽन्यदादित्यादिकं ज्योतिर्भवेत् तदा श्रुतिप्रत्यक्षाभ्यां जीवस्य स्वतन्त्रप्रकाशः किं विष्णुरादित्यादिर्वेति संशयः स्यात् । विष्णुत्वकोट्यनुपस्थितावज्ञानं विष्णुः स्वातन्त्र्येण प्रकाशक इत्यज्ञानं अन्य एव स्वातन्त्र्येण प्रकाशक इति भ्रमो वा स्यात् । अतोऽत्रायं पुरुषः स्वयञ्ज्योतिर्भवतीति । वाक्येऽत्रेति स्वप्नसुषुप्त्यवस्थाप्रदर्शकं विशेषण-मुपात्तम् । तदुपादाने च तदा ज्योतिरन्तराभावात्तत्कोटिकसंशयो वा तत्स्वातन्त्र्यभ्रमो वा नेति भावः । ननु 'जागरितदेशे एवाऽस्यैषः' इति वाक्ये अस्य जीवस्य एषः स्वप्नकालो जागरितदेश एवेति जीवस्य स्वप्नावस्थायामपि जागरितत्वमुच्यत इति किं न स्यात् । सर्वेन्द्रियोपरमलक्षणसुप्तौ तदसम्भवेऽपि स्वप्नावस्थायां तत्सम्भवादिति चेन्न । एवं वदता किमीश्वरस्य जीवस्वप्नावस्थायां जागरितत्वमङ्गीक्रियते न वा । न चेत्प्रमाणविरोधः । आद्ये त्वाह– **जीवस्यापीति** ॥ यदीश्वरवत् जीवस्यापि स्वप्नावस्थायां जागरितत्वमङ्गीक्रियते तदा एष स्वप्नकालो जागरितदेश एवेति पूर्तेरस्येति विशेषणं व्यर्थं स्यात् । यदि स्वप्नकालः किञ्चित्प्रतिजागरितो न स्यात्तदा तद्व्यावर्तकत्वेनास्येत्यस्य सार्थक्यं जीवेश्वरावुभौ प्रत्यपि स्वप्नकालस्य जागरणात्मकत्वे किं व्यावृत्त्यर्थमस्येति विशेषणं स्यात् । तथाच वैयर्थ्यमेव । अस्मत्पक्षे तु जीवव्यावृत्त्यर्थं तदिति भावः । अत ऊर्ध्वं विमोक्षाय ब्रूहीत्युक्त्या पूर्वोक्तं मोक्षाय न भवतीति

शङ्कां परिहरति– **पूर्वोक्तमपीति** ।। तर्हि किमर्थं विमोक्षाय ब्रूहीति प्रार्थनमित्यतस्तद् व्याचष्टे– **अत ऊर्ध्वमिति** ।। अन्यथा विशब्दवैयर्थ्यमिति भावः । मोक्षस्यान्यत्साधनं विमोक्षस्यान्यत्साधनमिति कुतः कश्च विशिष्टमोक्ष इत्यत आह– **स्वयोग्येति** ।। यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति वाक्ये सुप्तशब्देन सुप्तिमात्रमुच्यत इति प्रतीतिं निवारयति– **स्वप्नेति** ।। जागरितदेश एवास्यैष इति पूर्ववाक्ये जीवस्य स्वप्नसुषुप्तिकालोऽपि अस्य जागरितदेश एवेत्युक्तं तत्राप्येष इति सुप्तिकालमात्रग्रहणे स्वप्नावस्थायामीश्वरस्य जागरणाभावापत्तेः । तत्र हि यानि ह्येव जाग्रत्पश्यति तानि सुप्त इति वाक्येन हेतुरुच्यते । तत्र यदि सुप्तशब्देन सुप्तिमात्रं गृह्यते तदा स्वप्नकालस्येश्वरजागरितदेशत्वं नोपपादितं स्यात् अतः स्वप्नसुषुप्त्युभयाभिप्रायेण तानि सुप्त इत्युक्तमित्यर्थः ।

उपनिषत्——

**स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद् याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ।। १५ ।।**

भाष्यम्——

तत्र सुषुप्तिमात्राभिप्रायेण स वा एष एतस्मिन् सम्प्रसाद इत्याह ।

यत्रोभयविवक्षा स्यात् परामर्शस्तदोभयोः ।
एकस्यापि भवेन्नैकविवक्षायां क्वचिद् द्वयोः ।। इति शब्दनिर्णये ।।

टिप्पणी——

नन्वेवं तर्हि स वा एष एतस्मिन् सम्प्रसादे रत्वेत्यत्राप्येतस्मिन्सम्प्रसाद

इत्यनेन स्वप्नसुप्त्योरुभयोरपि परामर्शः कर्तव्यः पूर्वमुभयोः प्रकृतत्वात् । नचासौ युक्तः । तथात्वे एतस्मिन् सम्प्रसादे रत्वा स्वप्नायैवाद्रवतीत्युक्त्यनुपपत्तेरित्यत आह– **तत्रेति** ।। उभयोः प्रकृतत्वेऽपि बाधकवशादेकस्यैव परामर्शो युज्यते इत्यत्र प्रमाणमाह– **यत्रेति** ।। उभयोः प्रकृतत्वे उभयपरामर्शो बाधकाभावेन यत्रोभयविवक्षा स्यात्तत्रोभयोः परामर्शः स्यात् । यथा स वा अयं जायमान इत्यत्र पूर्वप्रकृतेशजीवोभयपरामर्शः । यत्र कचिदुभयपरामर्शो बाधकसद्भावेनैकस्य विवक्षा स्यात्तदैकस्यापि परामर्शो भवेत् नत्वेकविवक्षायां द्वयोः परामर्श इत्यर्थः ।। १४ ।।

उपनिषत्——

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र यत् किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद् याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ।। १६ ।।**

भाष्यम्——

स्वप्नाख्योऽन्तः स्थानं स्वप्नान्तम् ।

अन्तः स्थानं स्थलं वासः प्रदेश इति चोच्यते ।। इति च ।।

स्वप्नान्तं च बुद्धान्तं चेत्यत्रापि स्वप्नान्तशब्दः स्वप्नसुषुप्त्युभयाभिप्रायेण ।

टिप्पणी——

स्वप्नान्तं च बुद्धान्तं चेत्यत्रान्तशब्दस्य प्रकृते नाशनिर्णयार्थत्वासम्भवात्स्वप्नान्तपदं व्याचष्टे– **स्वप्नाख्येति** ।। उपलक्षणमेतत् । बुद्धान्तशब्दोऽप्येवं व्याख्येयः । अन्तशब्दस्य स्थानवाचकत्वेऽभिधानमाह– **अन्त इति** ।। एतेन स्वप्नान्तायैवेत्यस्य स्वप्नस्यान्तो लयो यस्मिन् स स्वप्नान्तः सम्प्रसाद इति व्याख्यानमपहस्तितं

भवति । तथा सति बुद्धान्तायैव जागरितस्थानायैवेति स्वप्नान्ते स्वप्नस्थाने इति च त्वदुक्तेरेवायोगात् । स्वप्नान्तं च बुद्धान्तं चेत्यत्र स्वप्नान्तशब्दस्य स्वप्नपरत्वाङ्गीकाराच्च । ननु सुषुप्तिस्वप्नजाग्रद्रूपस्थानत्रयस्य पूर्वं प्राप्यत्वेनोक्तत्वात् स्वप्नान्तं बुद्धान्तं चेत्यत्र द्वयोरेव ग्रहणं कथमित्यत आह– **स्वप्नान्तमिति** ॥ न केवलं तानि सुप्त इत्युभयाभिप्रायेणेत्यपिशब्दः । न केवलं स्वप्नान्तायैवेत्यत्र स्वप्नान्तशब्दः स्वप्नसुषुप्त्युभयाभिप्रायेण किन्त्वत्रापीति शब्दार्थः ।

**उपनिषत्—**

**स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव ॥ १७ ॥ तद् यथा महामत्स्य उभे कूले अनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥**

**भाष्यम्—**

**शुभाशुभं तु दृष्ट्वैव स्वप्ने जागरितेऽपि च ।**
**असंस्पृष्टः सदा दुःखैश्चरतीशः पुनःपुनः ॥**
**स्वप्नसुप्त्यात्मकं कूलमेकं बुद्धात्मकं परम् ।**
**महामत्स्य इवासङ्गी चरत्येको जनार्दनः ।**

**टिप्पणी—**

'स वा एष एतस्मिन् सम्प्रसादे रत्वा' इत्यादि खण्डत्रयस्य जीवपरत्वप्रतीतिनिरासाय तात्पर्यमाह– **शुभाशुभमिति** ॥ अनेन दृष्ट्वैव पुण्यं च पापं चेत्येतदुक्तार्थम् । स्वप्न इति स्वप्नसुषुप्त्युभयाभिप्रायेण । च- अपिशब्दावितरेतरसमुच्चये । दृष्ट्वैवेत्येवकारव्यावृत्त्यर्थमुक्तं स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवतीति तस्यार्थमाह– **असंस्पृष्ट इति** ॥ पुण्यफलभोक्तृत्वेन तत्संसर्गसत्त्वात्कथं

तेनानन्वागत इत्यत आह– **दुःखैरिति** ॥ जीवपक्षे नैतदुपपन्नमिति भावः । सम्प्रसादे रत्वा स्वप्नायाऽद्रवति । स्वप्ने रत्वा बुद्धान्तायाऽद्रवति बुद्धान्ते रत्वा स्वप्नान्तायाऽद्रवतीत्युक्तेः तात्पर्यम् ॥ **पुनःपुनश्चरतीति** ॥ यदि स्वप्नान्तशब्दः स्वप्नसुषुप्त्युभयाभिप्रायेण तर्हि स्वप्नाद्यवस्थात्रयप्राप्त्योभे कूले इति दृष्टान्तानानुगुण्यं स्यादित्याशङ्कां परिहरन् तद्यथा महामत्स्य इति खण्डं व्याचष्टे– **स्वप्नेति** ॥ १५-१८ ॥

**उपनिषत्**—

[सुषुप्तिमुक्त्योः न दुःखम्]

**तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ सल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥**

**भाष्यम्**—

**यं विष्णुं श्येनवच्छ्रान्तो जीवो जागरिते भ्रमन् ।**
**स्वप्ने च सुप्तावभ्येति संश्रान्तः सद्गृहं यथा ।**
**स्वित्यानन्दः परो विष्णुस्तमाप्तः सुप्त उच्यते ।**
**सम्प्राप्य तमयं जीवः कामयेन्नैव किञ्चन ।**
**नच स्वप्नसमभ्रान्तिज्ञानं याति कदाचन ।**
**सुषुप्तौ च किमु ज्ञानान्मुक्तौ प्राप्तो जनार्दनम् ।**

**टिप्पणी**—

तद्यथास्मिन्नाकाशे श्येन इति खण्डं व्याचष्टे– **यमिति** ॥ यथा श्येन आकाशे विपरिपतनेन श्रान्तस्सन् गृहं श्रमनिवारकं स्वनीडमभ्येति । तथा जीवो जागरिते स्वप्ने च भ्रमन् श्रान्तः सुप्तौ यं विष्णुमभ्येतीति सम्बन्धः । यमिति यच्छब्दस्य तमयमित्युत्तरत्र तच्छब्देनान्वयः । यत्र सुप्त इति

सुप्तशब्दार्थमाह– **स्वितीति** ॥ आनन्दः आनन्दरूपः स्वित्युच्यत इति सम्बन्धः । सुशब्दस्य सुखवाचकत्वात् । 'यत्र सुप्तो न कञ्चन कामं कामयते' इत्यादि वाक्यं व्याचष्टे– **सम्प्राप्येति** ॥ न कञ्चन स्वप्नं पश्यतीत्यस्यार्थः ॥ **नचेति** ॥ यत्रेत्यस्यार्थो सुषुप्ताविति चशब्दोऽपिशब्दार्थः । सुषुप्तावपि तं सम्प्राप्येत्यन्वयः । यत्र सुप्तो न कञ्चन कामं कामयत इत्यादिवाक्यं मुक्तिपरत्वेनापि व्याचष्टे– **किम्विति** ॥ यत्रेत्यस्यार्थो मुक्ताविति । सुप्त इत्यस्यार्थो जनार्दनं प्राप्त इति । कामयेन्नैवेत्यादिकमत्राप्यनुवर्तते । कैमुत्यस्फोरणाय ज्ञानात्प्राप्त इत्युक्तम् । सुप्तौ त्वज्ञानादेवेति ॥ १९ ॥

उपनिषत्—

**ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति । यदेव जाग्रद् भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥**

भाष्यम्—

निहितो भगवान् यत्र हिता नाड्यः प्रकीर्तिताः ।
नानावर्णो हरिस्तासु नानारूपी व्यवस्थितः ।
तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययम् ।
ता एव कण्ठदेशस्था जीवस्तत्र व्यवस्थितः ।
स्वप्नान् पश्यति जाग्रद्वद् भयं च प्रतिपद्यते ।
अ इत्यादिश्यते विष्णुरविद्या तन्निरीक्षणम् ।

**तेन स्वप्नानयं पश्येज्जीवो जागरितं तथा ॥**

**इति महामीमांसायाम् ॥**

**जिनन्तीव ताडयन्तीव । विच्छाययति भयेन विच्छायं करोति ।**

**अहेमेवेदं सर्वोऽस्मि स्वयोग्यतापेक्षया पूर्णोऽस्मि । विषयभोगानन्वित-स्वरूपानन्देनेत्येवशब्दः ।**

**टिप्पणी——**

ता वा अस्यैता हिता नाम नाड्य इति वाक्यस्थ हितशब्दार्थमाह– **निहित इति** ॥ शुक्लस्येत्यादि व्याक्यं व्याचष्टे– **नानावर्ण इति** ॥ शुक्लादिवर्णः नानारूपी वासुदेवादिरूपी । अत्र शुक्लो वासुदेवो नीलोऽनिरुद्धः पिङ्गलः सङ्कर्षणः हरितः प्रद्युम्नः लोहितो नारायण इति विवेकमुत्तरत्र वक्ष्यति । किं तत इत्यतो लोहितस्य पूर्णा इत्यनन्तरं वक्तव्यमाह– **तासामिति** ॥ अथ यत्रैनं घ्नन्ती वेत्यादिवाक्यं व्याचष्टे– **ता एवेति** ॥ हिता नाड्य एव यदेव जाग्रद्भयं पश्यति तद्भयमत्र स्वप्नेऽविद्यया अज्ञानेन मन्यत इत्येकवाक्यमिति प्रतीयते । तदयुक्तम् । स्वप्ने जाग्रदभयदर्शनासम्भवात् स्वप्नदर्शनमात्रस्याज्ञानकार्यत्वेन विशिष्टभयमात्रग्रहणायोगाच्च । अज्ञानस्यापि जडत्वेन स्वप्नदर्शनं प्रति स्वतन्त्रकारणत्वायोगाच्चेति भावेन तावत् यदेव जाग्रद्भयं पश्यतीत्येतद् व्याचष्टे– **जाग्रद्वदिति** ॥ अनेन यदा यत्र जाग्रदिव भयं पश्यतीति व्याख्यातं भवति । तदत्रापि विद्यया मन्यते इति वाक्यं व्याचष्टे– **अ इतीति** ॥ तेन विष्णुकर्तृकज्ञानेन । अप्रतीतेर्जिनन्ति विच्छायतीति पदद्वयमनूद्य व्याचष्टे– **जिनन्ती वेत्यादिना** ॥ अथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यत इति वाक्यं प्रकृतस्वप्नपरमित्यसत् । तथा सति प्रकरणविच्छेदकाथशब्दायोगात् । सोऽस्य परमो लोक इति परमलोकत्वोक्त्याऽस्य वाक्यस्य मुक्तपरत्वावगमाच्च । यथोक्तम्- 'परलोको यतो मुख्यो मुक्तिरेव नचापरः' इति । ननु नेदं मुक्तपरमिति वक्तुं युक्तम् । मुक्तस्य सर्वात्मकत्वानुसन्धानाभावेन अहमेवेदं सर्वोऽस्मीत्यस्यायोगात् । स्वप्नस्थस्य

च तथाविधभ्रान्तिसम्भवेन तत्परत्वे तदुपपत्तेरित्यतस्तदनूद्य व्याचष्टे– **अहमेवेति** ।। ननु सर्वेषामपि मुक्तानां स्वस्वयोग्यतानुसारेण पूर्णत्वादहमेवेत्यन्ययोगव्यवच्छेदः कथमित्यत आह– **विषयेति** ।। तथाचावस्थाविशेषे विषयभोग्यव्यावृत्त्यर्थमेवकार इति भावः ।

**भाष्यम्—**

[अहमेवेदं सर्वोऽस्मि इति श्रुत्यर्थः]

**इदमिति पूर्णत्वविशेषणम् । 'अजानता महिमानं तवेदम्' इतिवत् स्वपूर्णतामापरोक्ष्येणानुभूयेदं पूर्णोऽस्मीति मन्यते।**

**'क्वचित्तद्भावशेषः स्यात् क्रियाशेषः क्वचिद् भवेत् ।**
**क्वचित् पदार्थशेषः स्यादिदमादिस्त्रिधा स्मृतः ।।'**

**इति शब्दनिर्णये ।।**

**नहि राजा देवो वा सर्वजगद्भवति । राज्ञो भोगापेक्षया पूर्तिर्भवतीति देवदृष्टान्तः । प्रत्यक्षदर्शनार्थं राजदृष्टान्तः ।**

**'स्वयोग्यपूर्तेः स्वातन्त्र्याद् राज्ञो देवगणस्य च ।**
**सर्वभावस्तथा मोक्षे नतु सर्वस्वरूपतः ।।' इति ब्रह्मतर्के ।**

**टिप्पणी—**

नन्विदंशब्दस्य विशेष्यनिघ्नत्वादयं सर्वोऽस्मीति वा स्यात् । इदं सर्वमस्मीति वा स्यात् । इदं सर्व इति कथमित्यत आह– **इदमितीति** ।। नात्रेदमित्येतत्सर्वशब्दार्थपूर्णरूपधर्मिविशेषणम् । येन नपुंसकलिङ्गत्वानुपपत्तिः किन्तु पूर्णगतपूर्णत्वरूपधर्मविशेषणमित्यर्थः । ननु शब्दार्थत्वाभिमतधर्मिगतधर्मविशेषणत्वेनेदंशब्दप्रयोगः क्व दृष्ट इत्यत आह– **अजानतेति** ।। यथाऽत्रेदंशब्दो महिमत्वरूपधर्मविशेषणत्वाभिप्रायेण प्रयुक्तः । अन्यथेमं महिमानमिति प्रयोगापत्तेः । तथाऽत्रापीति भावः । नन्वस्त्विदमिति पूर्णत्वविशेषणं तथापि कथमेतस्य स्वयोग्यतापेक्षयेत्यर्थोक्तिः । तस्यार्थस्य पूर्वमनुक्त-

त्वेनेदंशब्देन परामर्शायोगादित्यत आह– **स्वपूर्णतामिति** ।। इदंशब्दस्य समभिव्याहृतशब्दार्थधर्मिगतधर्मविशेषणत्वे प्रमाणमाह– **कचिदिति** ।। तस्य धर्मिणो भावस्तद्भावस्तस्य शेषः तद् विशेषणं स्यादित्यर्थः । क्रियाशेषः क्रियाविशेषणं तद्यथा तण्डुलानिदं पचतीति । पदार्थशेषः पदार्थविशेषणं यथेदं नीलमिति । ननु कुत एवं व्याख्येयं यथाश्रुत एवार्थः किन्न स्यादिति चेन्न । तथा सति दृष्टान्ताननुगुण्यं स्यादित्याह– **नहीति** ।। ननु यथा राजाऽहमेवेदं सर्वोऽस्मीति मन्यते । तथा मुक्तोऽपीति राजदृष्टान्तेनैव पूर्तेः किं देवदृष्टान्तेनेत्यत आह– **राज्ञ इति** ।। मुक्तो विषयभोगानन्वितस्वरूपानन्देन पूर्ण इत्युक्तार्थे न राजदृष्टान्तः । तस्य विषयभोगेनैव पूर्तिमत्त्वात् देवश्च तत्पदयोग्यस्वरूपानन्देन पूर्ण इति देवदृष्टान्तग्रहणमित्यर्थः । तर्हि देवदृष्टान्तेनैव पूर्तेः राजदृष्टान्तो व्यर्थ इत्यत आह– **प्रत्यक्षेति** ।। देवस्याप्रत्यक्षत्वादिति भावः । मनुष्याधिकारिकमपि शास्त्रं भवतीति तेषां पूर्णत्वस्य प्रत्यक्षतो दर्शनार्थं राजदृष्टान्तः । अतो न व्यर्थ इत्यर्थः । श्रुत्यर्थनिश्चायकं प्रमाणमप्याह– **स्वयोग्येति** ।। यथेति शेषः । पूर्तेरिति सम्बन्धे षष्ठी । ईश्वरदत्तस्वातन्त्र्यादित्यर्थः ।। २० ।।

उपनिषत्—

**तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर-मेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम् ।। २१ ।।**

भाष्यम्—

छन्दसामप्यवाच्यत्वादतिच्छन्दा हरिः स्मृतः ।
तेनाश्लिष्टो ह्ययं जीवः सुप्तो मुक्तोऽथवा भवेत् ।।

**विष्णो रूपं हि यन्नित्यमभयं पापवर्जितम् ।**
**आप्तकामं च पूर्णत्वादात्मकामं सुखत्वतः ॥**
**शोकं विना सुरमणाच्छोकान्तरमितीरितम् ।**

टिप्पणी—

अतिच्छन्दा इति कथं विष्णुरूपस्यातिच्छन्दस्त्वमुच्यते। तस्य गायत्र्यादिवत् च्छन्दोरूपत्वाभावादित्यतस्तं शब्दं तत्र निर्वक्ति– **छन्दसामपीति** ॥ साकल्येनेति शेषः । 'प्राज्ञेनाऽत्मना सम्परिष्वक्तः' इत्येतत्सुप्तमात्रपरमिति निरासाय व्याचष्टे– **तेनेति** ॥ तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयं रूपमिति वाक्यमन्वयं दर्शयन्व्याचष्टे– **विष्णोरिति** ॥ नित्यं सर्वदेत्युभयविशेषणम् । अभयं भयरहितम् । यच्छब्दस्य तेनाश्लिष्ट इति पूर्वेण सम्बन्धः । तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरमिति वाक्यं व्याचष्टे– **आप्तकामं चेति** ॥ विष्णो रूपं यदिति अत्रानुवर्तते । आप्ताः कामाः काम्याः येनासावाप्तकामः । तत्र हेतुः पूर्णत्वादिति । आत्मैव कामः काम्यत इत्यात्मकामः । तत्र हेतुः सुखत्वत इति । सुखस्वरूपत्वादित्यर्थः । शोकस्यान्तोऽभावो यस्मिन् तच्छोकान्तं तच्च तद् रं चेति शोकान्तरमित्यर्थः । अकामशब्दार्थः स्पष्टत्वान्नोक्तः ॥ २१ ॥

उपनिषत्—

**अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालो पौल्कसोऽपौल्कसः श्रमणोऽश्रमण-स्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान् हृदयस्य भवति ॥ २२ ॥**

भाष्यम्—

**तेनाश्लिष्टः स्वपुत्राणां दायादानां नवै पिता ।**
**तेषां दुःखाददुःखित्वान्न माता लोकमान्यपि ।**
**अलोकमानान्नो लोको देवोऽपि स्वाधिकारतः ।**
**वर्षणादेर्व्युत्थितत्वान्न देवो वेदमान्यपि ।**
**अवेदमानान्नो वेदः पापी पापफलाप्ययात् ।**
**अपापः श्रमणश्चापि यतिधर्मात् समुत्थितेः ।**
**अयतिस्तापसश्चैवमनिष्टं पुण्यमप्यमुम् ।**
**नान्वेत्येवंविधो मुक्तो विष्णोः सम्प्राप्तिमात्रतः ।**

टिप्पणी—

अत्र पिताऽपिता भवति माताऽमातेत्येतद्विरोधपरिहाराय व्याचष्टे— **तेनेति** ।। औपचारिकपुत्राणामेवायं न पिता किमित्यत उक्तम् ।। **दायादानामिति** ।। पूर्वं दायादानां स्वपुत्राणां पिता तेन परमात्मनाश्लिष्टः सुप्तो मुक्तश्च पिता नैव भवति । पूर्वं माता तेनाश्लिष्टा न माता । तत्र हेतुस्तेषामिति । लोका अलोका इत्येतद् व्याचष्टे— **लोकमान्यपीति** ।। पूर्वमिति शेषः । अलोकमानात् लोकाभिमानाभावादित्यर्थः । मुक्तिसुप्त्योरपि देवत्वस्यानपायात्कथं देवा अदेवा इत्युक्तमित्यतस्तद् व्याचष्टे— **देवोऽपीति** ।। वेदा अवेदा इत्येतद् व्याचष्टे— **वेदमान्यपीति** ।। पूर्वमिति शेषः । वेदाभिमानाभावादित्यर्थः । अत्र स्तेनो अस्तेनो भवतीत्यादि वाक्यचतुष्टयतात्पर्यमाह— **पापीति** ।। पूर्वं स्तैन्यादिनिमित्तकपापवानित्यर्थः । पापफलाप्ययात् पापफलभोगा-भावादित्यर्थः । अश्रमणत्वतापसत्वयोः सुप्तिमुक्त्योरपि सत्वात्कथं श्रमणोऽश्रमण-स्तापसोऽतापस इत्युक्तिरित्यतस्तद् व्याचष्टे— **श्रमणश्चापीति** ।। पापी चेति चशब्दान्वयः । यतिधर्मात्समुत्थितेः तद्विध्यतीतत्वादित्यर्थः । नन्वस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजत इति मुक्तौ पुण्यफलसत्वात्कथमनन्वागतं पुण्येनेत्युक्त-मित्यतोऽनन्वागतं पापेनेत्यतद् व्याचष्टे— **अनिष्टमिति** ।। अपिपदं किमु

पापमिति कैमुत्यद्योतकम् । तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवतीत्येत-त्तात्पर्यमाह– **एवंविध इति** ॥ तीर्णसर्वशोक इत्यर्थः । अनेन तीर्णो हि सर्वान् शोकानित्यस्यार्थ उक्तो भवति । हृदयस्येत्यस्यार्थो विष्णोरिति । सम्प्राप्तिमात्रत इति शेषोक्तिः । तदेत्यस्य तात्पर्यं मुक्त इति ॥ २२ ॥

**उपनिषत्—**

**यद् वै तन्न यद् द्वैतं न पश्यति पश्यन् वै तन्न पश्यति नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत् ॥ २३ ॥**

**भाष्यम्—**

**यत्तन्न विष्णुः पश्येत पश्यन् वै तन्न पश्यति ।**
**नित्यज्ञानस्वरूपत्वात् तत्समं नान्यदिष्यते ॥ इति च ॥**

**टिप्पणी—**

'यद्वै तन्न पश्यति' इत्यादिकं परेणैवं व्याख्यातम् सुप्त्यवस्थायां अहङ्कारादि-तत्कार्यविलयमात्रेण क्रियाकारकफलरूपद्वितीयजगदभावः सुप्तस्यात्मनो विधीयते । तथाहि प्राक् हृद्यन्तर्ज्योतिरिति ज्योतिश्शब्देन सुप्तस्य ज्ञानसद्भावोऽभिहितः पुनरेवायमात्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति ज्ञानाभावश्च । तदुभयं विप्रतिषिद्धमित्याशङ्क्येदमुच्यते । सुप्तोऽयं न पश्यतीति यदुक्तं तद्वैतत् तथैव । नच विप्रतिषेधः यतः पश्यन्वै ज्ञानवानेव तन्न पश्यतीत्युक्तम् । कुतः ज्ञानवत्त्वं नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् । कथं पश्यन्नेव न पश्यतीति । यतः स्वस्माद् विभक्तं पश्येत्तद्द्वितीयं तु नास्ति अतो विषयाभावान्न पश्यतीत्युच्यते । निर्विषयस्य स्वरूपज्ञानस्य स्थितत्वात्पश्यन्नित्यपि । अतो न परस्परविरोध इति । तदसत् । प्रमाणविरोधादिति भावेन तावत्तद् वाक्यं प्रमाणेन व्याचष्टे– **यदिति** ॥ नतु तद्द्वितीयमस्ति ततोऽन्यदिति प्रतिज्ञावाक्यस्यार्थः ॥ **तत्सममिति** ॥

अनेन द्वितीयशब्दः समार्थको व्याख्यातः तत्र हेतुरुच्यते यद्वैतन्न पश्यतीति । तद् व्याचष्टे– **यत्तन्न विष्णुः पश्येतेति** ।। यद्यस्माद् विष्णुः तत्स्वसमं न पश्येत्तत्तस्मात्तत्समं नान्यदिष्यत इति सम्बन्धः । ननु विष्णुनाऽदृष्टत्वेऽपि विष्णुसमं कुतो नास्तीति चेत् विष्णुर्यन्न पश्यति तन्नास्त्येवेति व्याप्तेरित्याह– **यद्वैतन्न पश्यतीति** । तद् व्याचष्टे– **यत्तन्न विष्णुः पश्येतेति** ।। विष्णुर्यन्न पश्येत्तन्नास्त्येवेत्यर्थः । ननु यद् विष्णुर्न पश्यति तन्नास्त्येवेति कथं नह्यस्मदाद्यदृष्टं धर्माधर्मादिकं नास्तीति शक्यते वक्तुमित्यत उक्तम् ।। **पश्यन्वा इति** ।। तन्निगदव्याख्यानमिति भावेनानुवदति– **पश्यन्वै तन्न पश्यतीति** ।। सर्वज्ञ एव सन् स्वसमं न पश्यतीत्यर्थः । ननु विष्णोस्सार्वज्ञं किं भ्रान्त्या नेत्याह– **नहि द्रष्टुरिति** ।। हि यस्माद्द्रष्टुर्दृष्टेर्विपरिलोपो वैपरीत्यमयथार्थत्वं न तस्मान्न भ्रान्त्या सार्वज्ञम् । कुतो विपरिलोपाभाव इत्यत उक्तम् ।। **अविनाशित्वादिति** ।। तद् व्याचष्टे– **नित्येति** ।। निर्दोषज्ञानत्वादबाध्य-ज्ञानत्वाच्चेत्यर्थः ।

**भाष्यम्—**

**यत्किञ्चिद् वस्तु भगवता न दृष्टं तन्नास्त्येव । विद्यमानं सर्वं पश्यत्येव । नहि द्वितीयो द्रष्टा यो विभक्तत्वेन जगत् पश्यति । तद्विरोधेन पश्यत्य-भ्रान्तः । तद्दृष्टादन्यद् वा । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतेः ।**

**टिप्पणी—**

एतदेव स्ववाक्येन विवृण्वन् 'यद् द्वैतं न पश्यति' इत्याद्यं वाक्यं व्याचष्टे– **यत्किञ्चिदिति** ।। अनेन श्रुतौ नञ आवृत्तिः । वैशब्दोऽवधारणार्थकः । हृदयशब्दप्रकृतं ब्रह्माऽत्र कर्तृत्वेन सम्बद्ध्यते इत्युक्तं भवति । उदाहृतवचनेन आवृत्तेरप्रदर्शनात्पृथग्व्याख्यानारम्भः । ननु भगवता न दृष्टं नास्त्येवेति कथं नह्यस्मदाद्यदृष्टं धर्माधर्मादिकं नास्तीत्याशङ्क्य परिहारतया पश्यन्वा इति वाक्यं व्याचष्टे– **विद्यमानमिति** ।। भगवानिति विभक्तिविपरिणामेनाऽनुवर्तते । अत्रापि वैशब्दोऽवधारणार्थ इति भावेनोक्तमेवेति । स्यादेवास्मदाद्यदृष्टमपि

धर्माधर्मादिकं अस्मदादीनां विद्यमानसर्वज्ञत्वाभावात् । भगवांस्तु विद्यमानं सर्वं पश्यत्येव स चेन्न पश्यति तदा तन्नास्त्येवेति भावः । यद्वा विष्णवन्यद् विष्णुसमं नास्ति । विष्णुनाऽदृष्टत्वादित्यत्र अन्वयव्याप्तिप्रतिपादकतया यद्वैतन्न पश्यतीति वाक्यं व्याख्याय व्यतिरेकव्याप्तिप्रतिपादकतया इत्येतद् व्याचष्टे– **विद्यमानमिति** ।। व्यभिचार-शङ्कानिरासाय सर्वमित्युक्तम् । ननु यथा अस्मदादीनां भ्रान्तत्वेनास्मदादिदृष्टविरुद्धद्रष्टाऽस्मदाद्यदृष्टद्रष्टा च भगवांस्तथा भगवद्दृष्टविरुद्धद्रष्टा भगवददृष्टद्रष्टा च यद्यन्यः स्यात्तदा कथं भगवान्विद्यमानं सर्वं पश्यतीति नियम इत्याशङ्कापरिहाराय तावत् नतु तद्द्वितीयमस्तीति वाक्यं प्रकारान्तरेण व्याचष्टे– **नहीति** ।। तुशब्दो हेत्वर्थ इति भावेन हीत्युक्तम् । श्रुतौ द्वितीयमिति नपुंसकलिङ्गसद्भावेऽपि उदाहरिष्य-माणप्रमाणानुसारेण पुल्लिङ्गप्रयोगः । ननु ब्रह्मादीनां सर्वेषामपि द्रष्टृत्वात्कथमेतत् । उक्तशङ्कायां द्रष्टृमात्रनिषेधो न सङ्गतश्चेत्याशङ्कानिरासाय ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्यं प्रवृत्तमिति भावेन विभक्तं पश्येदित्यंशस्यार्थमाह– **य इति** ।। स द्वितीयो द्रष्टा नास्तीति सम्बन्धः । ननु यो विभक्तत्वेन जगत्पश्यति स द्वितीयो द्रष्टा नास्तीति कथं सर्वेषामपि विभक्तत्वेन जगद्द्रष्टॄणां सत्वात् । असङ्गतं चैतत् । विभक्तत्वेन जगद्द्रष्टुरनाशङ्कितत्वादित्यतो विभक्तत्वेन जगत्पश्यतीत्युक्तमेव विवृणोति– **तद्विरोधेनेति** ।। भगवद्दृष्टविरोधेनेत्यर्थः । भ्रान्तः सर्वोऽपि जनः शुक्तित्वेनेश्वरदृष्टामेव शुक्तिं रजतत्वेन जानातीति तद्विरोधेन पश्यत्येवेत्यत उक्तम् ।। **अभ्रान्त इति** ।। ततोऽन्यदित्यंशं व्याचष्टे– **तद्दृष्टादिति** ।। अन्यद् वा यः पश्यति स द्वितीयो द्रष्टा नास्तीति पूर्वेण सम्बन्धः । ननु तद्दृष्टादन्यच्छुक्तिरजतं भ्रान्तः पश्यत्येव नचैवमसार्वज्ञप्रसङ्गः । विद्यमानाशेषार्थज्ञत्वमेव सार्वज्ञमित्यङ्गीकारादित्येतच्छङ्कानिरासायाभ्रान्त-पदमनुवर्तनीयम् । ब्रह्मादीनां द्रष्टृत्वेऽपि तद्दृष्टविरुद्धद्रष्टृत्वं तददृष्टद्रष्टृत्वं वा नास्तीति भावः । भगवद्दृष्टविरुद्धद्रष्टा तददृष्टद्रष्टा च नास्तीत्यत्र प्रमाणमाह– **नान्य इति** ।। अतः परमात्मनोऽन्यो द्रष्टा भगवद्दृष्टविरुद्धद्रष्टा तददृष्टद्रष्टा च नास्तीत्यर्थः । द्रष्टृमात्रनिषेधायोगादिति भावः ।

भाष्यम्—

> यत् तद् दृष्टं भगवता तदेवास्ति नचापरम् ।
> नह्यन्यो विद्यते द्रष्टा यः पश्येत् तददर्शितम् ।
> ब्रह्मादिरपि यो द्रष्टा पश्येत् तस्य प्रसादतः ।
> तददृष्टं कुतः पश्येदतः को वा विरोधतः ।। इति च ।।

**यदवतारादिकं द्वैतत्वेन न पश्यति नतु तत् ततो द्वितीयम् । नित्यज्ञानत्वाद् भ्रमाभावात् । यद् विभक्तत्वेन विष्णुः पश्यति तत् ततोऽन्यदस्ति च ।। इति च ।।**

टिप्पणी—

स्वकृतव्याख्यानदार्ढ्याय श्रुतिव्याख्यानरूपं प्रमाणमाह– **यदिति** ।। प्रथमतच्छब्दः प्रसिद्ध्यर्थः । अनेन यद्वैतं न पश्यतीति वाक्यं व्याख्यातम् । नतु तद्द्वितीयमस्तीत्यस्यार्थो ।। **नह्यन्यदिति** ।। ननु ब्रह्मादीनां सत्वात्कथमेतदित्यत आह– **य इति** ।। अनेन ततोऽन्यद्यत्पश्येदिति वाक्यं व्याख्यातम् । तद् विरुद्धं चेति शेषः । तेन विभक्तं यत्पश्येदिति वाक्यं व्याख्यातम् । ननु ब्रह्मादय एव तददृष्टद्रष्टारः तद्दृष्टविरुद्धद्रष्टारश्च किं न स्युः इत्यत आह– **ब्रह्मादिरिति** ।। एवं यद् वै तदिति पदच्छेदमभ्युपेत्य यद्वैतं न पश्यतीत्यादि वाक्यं हृदयशब्दप्रकृतविष्णुसमनिषेधपरत्वेन व्याख्यातम् । ननु कथमत्र विष्णुसमाननिषेधः विष्णुरूपाणामेव तत्समत्वात् । नच तदन्यत्तत्समं नेत्युक्तमिति वाच्यम् । शुक्लस्य नीलस्येत्यादिना भगवद्रूपाणां विलक्षणरूपवत्त्वोक्त्या तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपमिति षष्ठ्या रूपरूपवतोश्च भेदस्य प्रतीतेरित्याशङ्कानिरासकतयापि यद्द्वैतमिति पदच्छेदमभ्युपेत्य तदेव व्याचष्टे– **यदिति** ।। उभयत्राप्युच्चारणस्यैकप्रकारत्वादुभयथा पदच्छेदो नानुपपन्नः । यदित्यनुवादेनावतारादिकमिति व्याख्यातम् । आदिपदेन गुणादिग्रहणम् । द्वैतत्वेन स्वतः परस्परं च भिन्नत्वेन । तुशब्द एवार्थे । तदवतारादिकम् । ततः स्वस्मात्परस्परं चेत्यर्थः । अनेन ततोऽन्यदित्युत्तरवाक्यस्थं तत इत्येतत्

नतु तत् द्वितीयमित्यत्रापि सम्बद्ध्यत इत्युक्तं भवति । द्वितीयं भिन्नं यत् द्वैतमिति यच्छब्दस्य नतु तदिति व्यवहिततच्छब्दान्वयस्तु यत्तदोर्नित्यसाकाङ्क्षत्वादाकाङ्क्षायाश्च सन्निधानाद्बलीयस्त्वाद्युक्त इति भावः । ननु भगवता भिन्नत्वेनादृष्टत्वेऽपि कुतो न भिन्नं नह्यस्माभिः शुक्तिकाया भिन्नत्वेन रजतं न दृश्यत इत्येतावता तत् ततो न भिन्नम् । मैवम् । पश्यन् सर्वज्ञ एव तत् अवतारादिकं भिन्नत्वेन न पश्यति वै । ननु यदि भगवतो भ्रान्त्यैव सार्वज्ञं तर्हि तेन भिन्नत्वेनादृष्टमवतारादिकं ततो भिन्नं न भवतीति कथमित्यतः प्रवृत्तं नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वादिति वाक्यमुपोद्घातसङ्गत्या व्याचष्टे– **नित्येति** ।। निर्दोषज्ञानत्वान्निर्बाधज्ञानत्वाच्चेत्यर्थः। यद्वा यदवतारादिकं द्वैतत्वेन न पश्यतीत्यस्य द्वैतत्वाभावत्वेन पश्यतीत्यर्थो विवक्षितः । यद् वक्ष्यति अभेदेन स्वावतारान् हरिर्वेत्तीति । ननु विष्णुनाऽभेदेन दृष्टत्वेऽपि भेदाभावः कुतः नहि शुक्तिकाया अभेदेन रजतं दृश्यत इत्येतावता तत्ततो न भिन्नमित्यतः प्राप्तं नहि द्रष्टुरिति वाक्यं व्याचष्टे– **नित्येति** ।। ननु विष्णुर्यद्भिन्नत्वेन पश्यति तत् ततोऽन्यदस्त्येवेति नियमश्चेत्तदाऽवतारादिकं भिन्नत्वेन न पश्यतीति तद्भिन्नं न भवतीति वक्तुं शक्यते तदेव कुत इत्यतः प्राप्तमस्ति ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्यं व्याचष्टे– **यद्विभक्तत्वेनेति** ।। किं विभक्तत्वेन पश्यति किं ततोऽन्यदित्यत उक्तमेव विवृणोति– **यस्मादिति** ।। यद्वा ननु यथाऽवतारादिकं विष्णुना भिन्नत्वेनादृष्टत्वान्न भिन्नं तथा जीवजडादिकं विश्वमपि तेन भिन्नत्वेनादृष्टं चेद्भिन्नं न स्यादित्येतच्छङ्कानिरासकत्वेनास्ति ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्यं विश्वं विष्णुना भिन्नं तत्त्वेन तेन दृष्टत्वादित्यनुमानपरतया व्याख्यातुं तत्र व्याप्तिप्रतिपादकतयाऽस्ति ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्यमेव व्याचष्टे– **यद्विभक्तत्वेनेति** ।। चशब्दोऽवधारणार्थः । तेन व्यभिचाराभावमाह । इति चार्थ इति शेषः । तेन पूर्वव्याख्यानसमुच्चयः । यद्भिन्नत्वेन विष्णुः पश्यति तत् ततोऽन्यदस्त्येवेति कुतः । नहि चन्द्रश्चन्द्रात् भिन्नत्वेनाऽस्माभिर्दृश्यत

इत्येतावता भिन्न इत्याशङ्कानिरासार्थं नहि द्रष्टुरिति वाक्यव्याख्यानरूपं नित्यज्ञानत्वाद्भ्रमाभावादिति वाक्यमत्रापि योजनीयम् ।

भाष्यम्—

**यस्माद् विष्णुर्विश्वं विभक्तत्वेनैव पश्यति तस्मात् तदन्यदस्त्येव । नच जगदभावोऽत्रोच्यते । अन्यद् विभक्तमिति विशेषणवैयर्थ्यात् । नच भ्रान्तिकल्पितं जगदित्यत्र किञ्चिन्मानम् ।**

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ इत्यादि निन्दनाच्च ॥**

टिप्पणी—

एवं व्याप्तिप्रतिपदकत्वेनास्ति ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्यं व्याख्याय अनुमानप्रदर्शनपरत्वेनापि तदेव वाक्यं व्याचष्टे– **यस्मादिति** ॥ श्रौतयच्छब्दार्थो यस्मादिति यस्माद्धेतोरित्यर्थः । तत इत्यस्यार्थः ॥ **तस्मादिति** ॥ स्वस्माद्भिन्नत्वेनेति शेषः । यस्माद् विभक्तत्वेनैव पश्यति तस्मादन्यदिति वा सम्बन्धः । भेदाभेदव्यवच्छेदाय प्रथमैवकारः । नतु तद्द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येदिति वाक्ये यत् ततः स्वस्माद् विभक्तं पश्येत्तद्द्वितीयं तु नास्तीत्येतावता पूर्णत्वादित्यर्थः । यत्ततः स्वस्मादन्यद्विभक्तं पश्येत्तद्द्वितीयं तु नास्तीति व्याख्यानादनुवादपरत्वेन न वैयर्थ्यमिति चेन्न । तथा सति विभक्तं यत्पश्येत् तन्नास्तीत्येतावता पूर्णत्वेन शेषवैयर्थ्यादिति भावः । किञ्च न सुप्तौ सकलजगदभावो वक्तुं युक्तः देवदत्तस्य सुप्तावपि यज्ञदत्तस्य जगत्प्रतीतेस्सत्वात् । ननु देवदत्ते सुप्ते देवदत्तदेहादिकं जगद्देवदत्तं प्रति नास्त्येव देवदत्तभ्रान्तिकल्पितस्य तस्य तन्निवृत्तौ निवृत्तेरावश्यकत्वात् । जाग्रतो यज्ञदत्तस्य तु भ्रान्तेरनिवृत्तत्वेन तद्भ्रान्तिकल्पितं जगत्तं प्रति अस्त्येव । अत एवास्माभिर्दृष्टिसृष्टिर्जगतोऽङ्गीक्रियत इति चेन्न । स्यादेतदेवं यदि जगतो भ्रान्तिकल्पितत्वमेव स्यान्न च तदस्ति प्रमाणाभावादित्याह– **नचेति** ॥ नचास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि

व्युच्चरन्तीति श्रुतिस्तत्र मानं अन्यथा दृष्टिसृष्ट्यभावे कथं सुप्तोत्थिताज्जीवात्प्राणादिसृष्टिरुपपन्ना स्यादिति वाच्यं अस्य वाक्यस्य प्रागेव भगवत्परत्वेन व्याख्यातत्वात् । अन्यथा सर्वे लोका इत्याद्युक्तिरनुपपन्ना स्यात् । नहि दृष्टिसृष्टिपक्षेऽपि सुप्तोत्थितस्य सर्वलोकादिसृष्टिरस्ति ॥

किञ्च जगतो भ्रान्तिकल्पितत्वे असत्त्वमेव स्यात् । तत्र तस्यैव प्रयोजकत्वात्। किं तत इत्यत आह— **असत्यमिति** ॥ २३-३० ॥

उपनिषत्—

**यद् वै तन्न जिघ्रति जिघ्रन् वै तन्न जिघ्रति नहि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद् वै तन्न रसयते रसयन् वै तन्न रसयते नहि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् रसयेत् ॥ २५ ॥ यद् वै तन्न वदति वदन् वै तं न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद्वदेत् ॥ २६ ॥ यद् वै तन्न शृणोति शृण्वन् वै तन्न शृणोति नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यच्छृणुयात् ॥ २७ ॥ यद् वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यन्मन्वीत ॥ यद् वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्**

द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् स्पृशेत् ॥ २९ ॥
यद् वै तन्न विजानाति विजानन् वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यद् विजानीयात् ॥ ३० ॥

**भाष्यम्—**

**द्रष्ट्रन्तरनिषेधेन तस्यैव सर्वद्रष्टृत्वमेव च यत्र वा अन्यदिव स्यादित्यादिनोपसंह्रीयते । अन्यथाऽन्योऽन्यत् पश्येदित्यादिकमनर्थकम् । नह्येकस्यान्यत्वेऽन्यस्यानन्यत्वं भवति । अतो द्वितीयोऽन्यशब्दः व्यर्थ एव स्यात् ।**

**टिप्पणी—**

ननु यत्र वाऽन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदित्युत्तरवाक्ये यत्र जागरिते स्वप्ने वान्यदिवात्मनो वस्त्वन्तरमिवाविद्याप्रत्युपस्थापितं स्यात् । तत्रैवान्योन्यमिवात्मानं मन्यमानोऽन्यत्स्वस्माद्विभक्तमिवाविद्योत्थं वस्त्वन्तरं पश्येत् । यत्र पुनः साऽविद्या सुषुप्ते वस्त्वन्तप्रत्युपस्थापिका शान्ता तेनान्यत्वेनाविद्याप्रविभक्तवस्तुनोऽभावात्केन कं पश्येदित्युच्यन्ते । अतः पूर्ववाक्यमपि सुषुप्तौ जगदभावपरत्वेनैव व्याख्येयमित्यतस्तात्पर्यमाह– **द्रष्ट्रन्तरेति** ॥ यत्र वेति वाक्यस्य तात्पर्यं द्रष्ट्रन्तरनिषेधेनेति । एको द्रष्टेत्यस्य तात्पर्यं तस्यैव सर्वद्रष्टृत्वमिति परव्याख्याननिरासायैवशब्दः । चशब्दोऽस्यार्थस्य प्रकृतत्वानुसन्धानार्थः । अस्य वाक्यस्य परोक्त एवार्थः किन्न स्यादित्यत आह– **अन्यथेति** ॥ अस्य वाक्यस्योक्तार्थमनभ्युपगम्य परोक्तार्थाङ्गीकारेऽन्योऽन्यत् पश्येदित्यादिवाक्ये द्वितीयान्यपदं व्यर्थं स्यात् । तत्रान्यः पश्येदित्येतावता पूर्णत्वादित्यर्थः । ननु दर्शनादिविषयस्य दर्शनादिकर्त्रनन्यत्वशङ्कावारणाय अन्यदित्येतत्सार्थकमित्यत आह– **नहीति** ॥ यदा दर्शनादिविषयानन्यत्वशङ्कावारणाय दर्शनादिकर्तुरन्य इति विशेषणुक्तं तदा विषयस्य तदनन्यत्वशङ्कैव न भवति नह्येकस्यान्यत्वेऽन्यस्य तदनन्यत्वं भवति येनैवं शङ्का स्यादित्यर्थः ।

द्वितीयान्यशब्दवैयर्थ्यमुपपाद्योपसंहरति– **अत इति** ॥ यद्वा यत्रान्यदिव स्यात्तत्र पश्येदित्येतावता पूर्णत्वेन अन्योऽन्यदिति पदद्वयं व्यर्थं स्यादित्यर्थः। ननु विषयापेक्षया ज्ञातुरनन्यत्वशङ्कावारणाय प्रथमान्यपदं सार्थकमित्यत आह– **नहीति** ॥ एकस्य विषयस्यान्यत्वेऽभिहिते अन्यस्य ज्ञातुरन्यत्वं शङ्कार्हं न भवतीत्यर्थः । आर्थिकस्याप्यन्यत्वस्य शब्देन प्रतिपादनार्थं प्रथमान्यपदं सार्थकमिति चेन्न । तथापि द्वितीयान्यशब्दो व्यर्थ एवेत्याह– **अत इति** ॥ विषयान्यत्वस्यान्यदिवेत्यन्यशब्देनैव प्रतिपादितत्वादित्यर्थः ।

**भाष्यम्——**

**नच तत्पक्षे दृश्यत्वादिकमात्मनो विद्यते।**

**तस्माद् यत्र किञ्चिदपि स्वातन्त्र्यमन्यस्य भवति तत्रैव भगवतोऽन्यः पुरुषो भगवद्दृष्टादन्यत् पश्यतीत्यादि युज्यते तदेव नास्ति स्वतः। अतो नान्योऽन्यत्पश्येदित्यर्थः।**

**अन्यदिवेतीवशब्दोऽल्पस्वातन्त्र्यार्थे। राज्ञः पृथगिव भृत्य इतिवत्।**

**उपमार्थे तथाल्पत्वेऽपीवशब्दः प्रयुज्यते॥ इति शब्दनिर्णये॥**

**स्वरूपभेदे स्वातन्त्र्ये विरोधे च विलक्षणे।**

**अन्यशब्दश्चतुर्ष्वेषु प्रयोक्तव्यो मनीषिभिः॥ इति च॥**

**अनन्याः सर्व एवैते योधाः कुन्तीसुतादपि॥ इति प्रयोगाच्च॥**

**दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्॥ इति च॥**

**प्रकृतेः पुरुषाणां च नाणुमात्रमपि क्वचित्।**

**स्वातन्त्र्यं विष्णुना सर्वे नियताः सर्वदैव हि॥**

**तददृष्टं ततः को हि पश्येत् किं वाऽपि तद् भवेत्॥**

**इति महामीमांसायाम्॥**

**टिप्पणी——**

ननु यत्र वाऽन्यदिव स्यात्तत्रान्यः पश्येदित्येवोक्ते यत्राऽविद्यको भेदो नास्ति तत्रान्य आत्मा न पश्यति न जिघ्रतीत्यादि द्रष्टत्वादिमात्रनिषेधः कृतः

स्यात् स चायुक्तः आविद्यकभेदाभावदशायामपि अन्यद्रष्टृत्वाभावेऽपि आत्मनः स्वात्मद्रष्टृत्वाद्युपपत्तेः । अत आविद्यकभेदाभावदशायां स्वभिन्नकर्मकदर्शनादिनिषेधार्थमेव विषयवाचकद्वितीयान्यशब्दः सार्थक इति चेन्न । स्यादेवमात्मनः स्वदृश्यत्वादिकं यद्यात्मनो दृश्यत्वादिकमेव स्यात् नच तदस्तीत्याह– **नचेति** ॥ रस्यत्वादिकमिति पाठे तु दृश्यत्वस्य कथञ्चिदुपपत्तावपि रस्यत्वादिकं सर्वथानुपपन्नमिति ज्ञापनाय क्रमोल्लङ्घनम् । द्रष्ट्रन्तरनिषेधेनेति यत्र वान्यदिव स्यादित्यादिवाक्यतात्पर्यमुक्तं ततस्तस्याप्रतीतेः स्पष्टं तद् व्याचष्टे– **तस्मादिति** ॥ परव्याख्यानस्यायुक्तत्वादित्यर्थः । यत्र यदा किञ्चिदपि अल्पमपीत्यर्थः । इवशब्दार्थः किञ्चिदिति वैशब्दार्थोऽपीति । अन्यस्य भगवदन्यस्य तत्रैव तदैव अन्यशब्दस्य साकाङ्क्षत्वाद्भगवत इति भगवद्दृष्टादिति चोक्तम् । एवं चान्यशब्दद्वयमप्यस्माकं सार्थकमिति भावः । प्रयोजकाभावेन प्रयोज्याभावं दर्शयति– **तदेवेति** ॥ तदेव भगवदन्यस्य किञ्चित्स्वातन्त्र्यमेव स्वातन्त्र्यं तु जडान्प्रतीत्युक्तेः जीवानामपीश्वरदत्तकिञ्चित्स्वातन्त्र्यसत्वात्स्वत इत्युक्तम् ॥ **अन्यदिवेति** ॥ इवशब्देन किञ्चित्स्वातन्त्र्यमुच्यत इत्युक्तं तदुपपादयितुं प्रतिजानीते– **अन्यदिति** ॥ इवशब्द इवशब्दशिरस्कान्यशब्द इत्यर्थः । तत्र लौकिकप्रयोगमाह– **राज्ञ इति** ॥ राज्ञो भृत्यः पृथगिव राजानमपेक्ष्य किञ्चित्स्वतन्त्र इत्यर्थः । इवशब्दस्याल्पार्थत्वेऽभिधानमाह– **उपमार्थ इति** ॥ अन्यशब्दस्य स्वातन्त्र्यार्थत्वेऽपि तदाह– **स्वरूपेति** ॥ अन्यशब्दस्य स्वातन्त्र्यार्थत्वे वैदिकप्रयोगमप्याह– **अनन्या इति** ॥ योधा अपि कुन्तीसुतादनन्याः तमपेक्ष्य स्वतन्त्रा नेत्यर्थः । इवशब्दस्याल्पार्थत्वेऽपि प्रयोगं दर्शयति– **दशरात्रैरिति** ॥ प्रयोगाच्चेत्यस्यानुकर्षणार्थश्चशब्दः । श्रुतेः स्वोक्तार्थे दार्ढ्याय श्रुत्यर्थनिश्चायकं प्रमाणमाह– **प्रकृतेरिति** ॥ प्रकृतेर्लक्ष्म्याः पुरुषाणां ब्रह्मादीनां तत्र हेतुर्विष्णुनेति ॥ ततः स्वातन्त्र्याभावात् । ननु भगवददृष्टद्रष्ट्रभावेऽपि तददृष्टं वस्तु किन्न स्यात् । तथाच न तस्य सार्वज्ञमित्यत आह । तदपि भगवद्दृष्टमपि किं वा भवेदिति । पदार्थमात्रस्य कस्यचित्प्रत्यक्षत्वावश्यम्भवादत्र च तदभावादिति भावः ।

**भाष्यम्—**

> **अभेदेन स्वावताराञ्जीवाजीवं तु भेदतः ।**
> **यदभ्रमो हरिर्वेत्ति स तदन्यच्च तद् द्वयम् ॥ इति च ॥**

**अन्यदप्यस्वातन्त्र्येणान्यदिव स्थितं यस्मिन् पक्षेऽस्ति तत्रैवान्यदर्शनादिव्यवहारो युज्यते। सप्तमरसादिदर्शनाभावादिति च। सर्वेन्द्रियोपभोगोऽपि विष्णोः स्वात्मनि विद्यते।**

**टिप्पणी—**

'यद् द्वैतं न पश्यति' इत्यादेर्द्वितीयं व्याख्यानं प्रमाणेन द्रढयति– **अभेदेनेति** ॥ जीवाजीवमिति समाहारद्वन्द्वः । यद्यस्माद्धरिः स्वावतारान् स्वावतारादिकं स्वाभेदेन वेत्ति अतस्तदवतारादिकं स हरिरेवेत्यनेन यद्वैतं न पश्यति नतु तद्द्वितीयमित्यस्याभिप्रायोक्तिः । यस्माज्जीवा जीवं भेदतो वेत्ति तस्मात्तद्द्वयं जीवा जीवं तदन्यच्चेति ततोऽन्यद् विभक्तं यत्पश्येदित्यस्यार्थः । अभ्रम इति नहीति वाक्यार्थः । ननु यत्र वा अन्यदिव स्यादिति वाक्यस्योक्तरीत्या द्रष्ट्रन्तरनिषेधपरत्वं नतु तद्द्वितीयमस्तीत्यस्य प्राचीनव्याख्याने सङ्गतम् । द्वितीयव्याख्याने त्वसङ्गतमिति चेन्न । तदा तस्य ततोऽन्यद् विभक्तं यत्पश्येदित्युक्तभेदप्रपञ्चसत्यत्वमेव अभेदनिषेधेनोपसंह्रियत इत्येवंपरत्वाङ्गीकारादित्याशयेन तत्प्रकारान्तरेण व्याचष्टे– **अन्यदपीति** ॥ अन्यदिवेत्यस्यर्थोऽन्यवदवस्थितमिति । तर्हि भेदो मिथ्या स्यादित्यत इवशब्दार्थ उक्तः अन्यदपि स्वतो भिन्नमपि अस्वातन्त्र्येण निमित्तेनान्यवदिति। यस्मिन् पक्षे अन्यदेव नास्ति न तत्रान्यदर्शनादिव्यवहारो युज्यत इति वाक्यशेषः । नन्वयमन्यदर्शनादिव्यवहाराभावः किमिदानीमापाद्यते मोक्षे वा । नाद्यः । व्यावहारिकभेदसद्भावेन तदुपपत्तेः। नान्त्यः इष्टत्वादिति चेन्न। व्यावहारिकभेदस्य निराकरिष्यमाणत्वात्। इष्टापत्तेश्च मैत्रेयीब्राह्मणे परिहृतत्वात्परिहरिष्यमाणत्वाच्च । नन्वन्याभावेऽपि तद्गोचरदर्शनादिव्यवहारादिकं किन्न स्यादिति चेन्न । तथा

सति सप्तमरसादिदर्शनस्याप्यापातेन तेनानुभूयमानरसदर्शनेनैव सुखाद्यतिशयापातात् । नच तदस्तीत्याह– **सप्तमेति** ॥ इति चार्थ इति शेषः । ननु सिद्धान्तेऽसतोऽप्यपरोक्षप्रतीतेरङ्गीकारात्कथमेतदिति चेन्न । अत्र प्रधानस्यैवाभावेन रसनेन्द्रियजन्यसप्तमरसादिगोचरभ्रमस्याप्यसम्भवात् । यथोक्तम्- 'अधिष्ठानं च सदृशं तथ्यवस्तुद्वयं विना । न भ्रान्तिर्भवति क्वापि' इति । अत एव तत्त्वविवेकटीकायां यदि नाम कूर्मरोमादिकमनारोपितमिति कूर्मरोमादेरारोपविषयत्वाभाव उक्तः । नन्वस्मिन् पक्षे यत्र वान्यदिव स्यात्तत्रान्यः पश्येत् इत्येतावता पूर्णत्वेनास्माकमिव भवतामपि द्वितीयोऽन्यशब्दो व्यर्थः । एकस्यान्यत्वे द्वितीयस्यानन्यत्वायोगादिति चेन्न । अस्मत्पक्षे हि यत्रान्यदिव स्यात्तत्रैवान्यः पश्येत् । यत्र त्वन्यदेव नास्ति तत्रान्यो न पश्यतीत्यादि वाक्यार्थो न युज्यते । अन्यस्य विषयस्याभावेऽपि भगवतः स्वरमणत्वेन स्वविषयदर्शनघ्राणनादिव्यवहारस्य सत्वात् । अतोऽन्याभावे स्वभिन्नगोचरदर्शनादिव्यवहारो न युज्यत इति वक्तुं विषयवाचकमन्यदिति पदं सार्थकमिति भावेनाह– **सर्वेन्द्रियेति** ॥ स्वात्मन्यपीति सम्बन्धः ।

उपनिषत्—

[भगवानेक एव सर्वज्ञः]

**यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत् पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद् रसयेदन्योऽन्यद् वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत् स्पृशेदन्योऽन्यद् विजानीयात् ॥ ३१ ॥**

**सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषाऽस्य परमा गतिरेषाऽस्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥**

**भाष्यम्—**

**यदि जगदेव न स्यात् तदा कथं मोक्षेऽप्यन्यानि भूतानि मात्रामुपजीवन्तीति युज्यते? मोक्षप्रकरणं चैतत्। 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति भगवद्वचनम्।**

**यदा हि सलिलत्वेन प्रकृतिर्व्याप्य तिष्ठति।**
**तदा तस्यां परो विष्णुरेको द्रष्टा व्यवस्थितः।**
**अविरोधादद्वितीय एकोऽसौ समवर्जनात्।**
**बृहज्ज्ञानाद् ब्रह्मलोकः सदैव पुरुषोत्तमः।**
**सर्वगत्वादस्य गतिः परा विष्णोः सदैव हि।**
**पूर्णैश्वर्यादस्य सम्पत् परमा सम्प्रकीर्तिता।**
**सार्वज्ञ्यात् परमो लोको विष्णोरानन्द एव च।**
**स्वातन्त्र्यात् परमो ज्ञेयः स हि पूर्णः सदोदितः।**
**प्रतिबिम्बरूपविप्रुट्कांस्तदानन्दस्य चाखिलाः।**
**मुक्ता ब्रह्मादयोऽश्नन्ति तारतम्येन नित्यदा।**

**सलीलः सलिल इति वा।**

**टिप्पणी—**

यत्र वान्यदिव स्यादित्यस्यान्यदिव वस्त्वन्तरमिवाविद्याप्रत्युपस्थापितमिति व्याख्याने बाधकमाह– **यदीति** ॥ यदि भिन्नं जगदेव न स्यादाविद्यकं स्यादिति यावत्। तदाविद्यानिवृत्तिरूपे मोक्षेऽप्यन्यानि भूतानीति अन्येषां भूतानां सत्वोक्तिरयुक्ता स्यादित्यर्थः। स्यादेतत् यदीदं वाक्यं मोक्षपरमेव स्यात्। तदेव नास्ति। अस्य वाक्यस्य सुषुप्तिपरत्वादित्यत आह– **मोक्षेति** ॥ सुषुप्तिप्रकरणत्वसमुच्चयार्थश्चशब्दः। कुत इति चेत् अत्र पिताऽपिता भवतीत्याद्ये तत्प्रकरणोपक्रमवाक्यस्य सुषुप्तिमोक्षोभयविषयकत्वस्य सूत्रकृता निर्णीतत्वादिति भावेन तत्सूत्रं पठति– **स्वाप्ययेति** ॥ ३१ ॥

'सलिल एको द्रष्टाऽद्वैतो भवति' इत्यस्य सलिलः सलिलवच्छुद्धो विजातीयभेद-रहितः एकः सजातीयभेदशून्योऽत एव द्रष्टाऽद्वैतः स्वगतभेदशून्य इति पर-व्याख्यानमसत् । भेदप्रतिपादकेन ततोऽन्यदिति पूर्ववाक्येनान्यानि भूतानी-त्युत्तरवाक्येन च विरोधात् । तद्व्याख्यानरूपप्रमाणविरोधाच्चेति भावेन तद् व्याचष्टे– **यदा हीति** ॥ तस्यां सलिलरूपचेतनप्रकृतौ । ननु सलिलात्मकप्रकृतेरेव सत्वात्कथमेकोऽद्वैतश्चेत्यतस्तत्पदद्वयं व्याचष्टे– **अविरोधादिति** ॥ विरोधिशून्यत्वादित्यर्थः । प्रकृतेश्च न विरोधः । नापि साम्यमिति भावः । एष जीवो ब्रह्मलोको ज्योतीरूपं ब्रह्मैवेति व्याख्याननिरासाय ब्रह्मलोकशब्दार्थमाह– **बृहज्ज्ञान इति** ॥ बृहत्सर्वविषयं ज्ञानं यस्यासौ तथोक्तः । एषास्य परमा गतिरित्यस्यार्थमाह– **सर्वगत्वादिति** ॥ अस्येत्यनुवादेन विष्णोरिति व्याख्यानं एषास्य परमा सम्पदित्येतद् व्याचष्टे– **पूर्णेति** ॥ एषोऽस्य परमो लोक इत्येतद् व्याचष्टे– **सार्वज्ञादिति** ॥ लोको ज्ञानम् । 'एषोऽस्य परम आनन्दः' इति वाक्यं व्याचष्टे– **आनन्द इति** ॥ विष्णोरिति वर्तते विष्णोरानन्दश्च परमो ज्ञेयः । कुतः हि यस्मात्स आनन्दः पूर्णः सदोदितः । तत्र हेतुः स्वातन्त्र्यादेवेति । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति वाक्यं विष्णुस्वरूपभूतानन्दैकदेशभोक्तृत्वमन्येषामुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **प्रतिबिम्बरूपेति** ॥ मात्रामित्यस्यार्थो विप्लुट्कानिति । उक्तान्यथाप्रतीतिनिरासाय प्रतिबिम्बरूपेत्युक्तम् । स यो मनुष्याणामित्यादेस्तात्पर्यं तारतम्येनेति । पूर्वं सप्तम्यन्तत्वमङ्गीकृत्य सलिलपदं व्याख्यातम् । प्रथमान्तत्वमङ्गीकृत्यापि व्याचष्टे– **सलिल इति** ॥ लीलया सहितः सलीलः इत्यर्थः । दीर्घलोपः छान्दस इति भावः ॥ ३२ ॥

**उपनिषत्**—

[मुक्तेषु आनन्दतारतम्यं विद्यते]

**स यो ह वै मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपति-स्सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम**

आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवाना-मानन्दाः स एकः प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव प्रजापति आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाश्चकार मेधावी राजा सर्वेभ्यो माऽन्तेभ्य उदरौत्सीदिति ॥ ३३ ॥

भाष्यम्——

अन्येभ्यस्तु विमुक्तेभ्य आनन्दश्चक्रवर्तिनाम्।
मुक्तानां हि शतोद्रिक्तः पितॄणां तेभ्य एव च ।
तेभ्योऽप्यृषीणां मुक्तानां कर्मदेवाभिधायिनाम्।
तेभ्यश्च मुक्तदेवानां तेभ्यश्चोमापतेस्तथा।
तस्माच्च ब्रह्मणस्त्वेवं मुक्तस्य गरुडादपि।
एष एव ततो विष्णुः पूर्णानन्दः प्रकीर्तितः ।
यस्य ब्रह्माऽपि मुक्तः सन् विप्रुण्मात्रं समश्नुते ॥ इति च ॥

टिप्पणी——

'स यो मनुष्याणां राद्धः' इति प्रकरणं संसारिपरमिति प्रतीतिनिरासाय व्याचष्टे– **अन्येभ्य इति** ॥ अन्येभ्यो मनुष्योत्तमेभ्यः शतोद्रिक्त इत्यन्तं मूलानुक्तम् ।

अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणामानन्दः इत्यस्यार्थमाह– **पितॄणामिति** ।। तेभ्यश्चक्रवर्तिभ्यः पितॄणामानन्दः शतोद्रिक्त इति सम्बन्धः । अनेन श्रुतौ मनुष्यशब्दश्चकवर्तिपर इत्युक्तं भवति । तदुत्तरकक्ष्यमाह– **तेभ्योऽपीति** ।। ऋषीणां विश्वामित्रब्रह्मपुत्रव्यतिरिक्तानाम् । ननु श्रुतौ पितृभ्यो गन्धर्वाणां शताधिकत्वमुच्यते अत्र तु ऋषीणां क्वचित्तु आजानदेवानां तत्कथमेतदिति चेन्न । गन्धर्वाणां ऋषीणामाजानदेवानां च साम्यात् । यथोक्तं पुरस्तात्- 'तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि । विश्वामित्रब्रह्मपुत्रानृते चाप्यृषयोऽखिलाः । कार्तवीर्यादिराजभ्यो देवभृत्याः शतावराः । आजानदेवास्ते प्रोक्ताः' इति । अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दः इत्यस्यार्थमाह– **कर्मदेवेति** ।। तेभ्यः ऋषिभ्यः । अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्द इत्यंशं व्याचष्टे– **तेभ्यश्चेति** ।। अथ ये शतं आजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दः इत्यस्यार्थमाह– **तस्मादिति** ।। श्रुतौ प्रजापतिशब्देन गरुडोऽपि ग्राह्य इति भावेनोक्तं गरुडादपीति । अथैष एव परम आनन्द इति वाक्यमेष एवेत्यनेन ब्रह्मलोकशब्दप्रकृतचतुर्मुखपरामर्श इति प्रतीतिनिरासाय व्याचष्टे– **एष एवेति** ।। विष्णोरप्रकृतत्वात्कथं तत्परामर्श इत्यत एतस्यैवानन्दस्यान्यानि भूतानीति वाक्ये प्रकृतत्वात्परामर्शोपपत्तिरिति भावेन तत इत्युक्तं हेतुं विवृणोति– **यस्येति** ।।

**भाष्यम्—**

**राद्धो मुक्तः । मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नाधिक्यादाधिक्यं मुक्तौ प्राप्तुं शक्यत इत्यतः समृद्ध इत्युक्तम् । यावत् साधयितुं शक्यते तावत् साधनैः सम्पूर्णत्वेन मुक्त इत्यर्थः ।**

**टिप्पणी—**

एवं प्रमाणवचनेनेदं प्रकरणं मुक्तपरत्वेन व्याख्यातम् । इदानीमत्रापि मुक्तज्ञापकानि दर्शयिष्यन् स यो मनुष्याणामिति प्रथमवाक्ये मुक्तज्ञापकमाह–

**राद्ध इति** ॥ राध साध संसिद्धाविति पठ्यते । राध धातोश्च गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेत्यकर्मकत्वात्कर्तरि क्तः । ततो राद्ध इत्यस्य संसिद्ध इत्यर्थोऽवगम्यते । संसिद्धिश्च मुक्तिरेव । नित्यत्वेन दुःखासम्भिन्नत्वेन च समीचीनसिद्धत्वात् । नेतरा अनित्यत्वेन दुःखसम्भिन्नत्वेनासमीचीनत्वात् । नच मुख्ये सम्भवत्यमुख्यार्थोऽङ्गीकर्तुं युक्त इति भावः । ननु यदि राद्धो मुक्तस्तर्हि समृद्ध इति विशेषणं व्यर्थम् । असमृद्धस्यैवाभावेनाव्यावर्तकत्वादित्यत आह– **मनुष्याणामिति** ॥ प्रयत्नाधिक्यात् ज्ञानोत्तरकृतराजसूयादिप्रयत्नाधिक्यात् । इत्यतः इति हेतोः । असमृद्धमुक्तस्यापि सत्वान्न समृद्धपदं व्यर्थमित्यर्थः । ननु ज्ञानोत्तरानुष्ठितप्रयत्नाधिक्यान्मुक्तौ प्राप्यमाधिक्यं नाम न तावत्स्वरूपसुखस्यैव पुनराधिक्यं तस्य क्लृप्तत्वेनानागन्तुकत्वात् । नापि क्लृप्तसुखस्यैवाभिव्यक्तिः । ज्ञानेनावरणीभूताविद्यानिवृत्तावात्मस्वरूपसुखाभिव्यक्तेः सर्वसाधारण्यात् । नापि पृथगेव सुखं जायते तदनङ्गीकारात् । तत्कथमेतदिति चेन्मैवम् । नाविद्यैवात्मस्वरूपस्यावरणं किन्त्वीश्वरेच्छापि । तथाच ज्ञानेनाविद्यायां निवृत्तायामशेषानिष्टनिवृत्तिर्भवति । स्वरूपसुखं च बहुतरं व्यज्यते नतु सर्वम् । एवं च योग्यतया साम्येऽपि येन ज्ञानोत्तरं निवृत्तकर्मानुष्ठानलक्षणं प्रयत्नाधिक्यं कृतं तेन तज्जन्येश्वरप्रसादद्वारा यावत्स्वरूपाभिव्यक्तिलक्षणमाधिक्यं प्राप्तुं शक्यते । येन तु तदनुष्ठितं तेन नेति । एतदभिप्रायेणैवानन्दवृद्धिह्रासप्रतिपादनं तत्र तत्र क्रियते । इदमपि देवेषु न सम्भवति देवानां यावत्स्वरूपाभिव्यक्तेः सत्वेन तत्र वृद्धिह्रासाभावादित्यतो मनुष्याणामित्युक्तम् । मनुष्याणां च वृद्धिह्रासौ वर्तेते एव । यथोक्तं 'वृद्धिह्रासौ विमुक्तिगौ नृणाम्' इति । यावत्स्वरूपानभिव्यक्तिलक्षणानन्दह्रासं प्रति विकर्मवद् भगवत्पूजात्मककर्माकरणमपि निमित्तम् । यथोक्तं 'कृष्णोपास्तिमकुर्वतः । ज्ञानिनोऽपि यतो ह्रास आनन्दस्य भवेद् ध्रुवम्' इति ॥ 'अयोग्यकान्महापदे विधातुरेष हि क्रतुः । समानयोग्यतागणात्करोति मुक्तिगं वरम्' इत्येतदपि चक्रवर्तिरूपमनुष्यपरं योज्यम् । तथाहि वाक्यशेषः । 'अतस्त्रिंशङ्कुपुत्रको

नृपानतीत्य वर्तते' इति । ननु समृद्धपदेन कथमेवंविधासमृद्धमुक्तव्यावृत्तिरित्यतः समृद्धपदं व्याचष्टे– **यावदिति** ।। अन्यस्तु नैवंविध इत्यर्थः ।

**भाष्यम्—**

**स्वराष्ट्रे ज्ञानोपदेष्टृत्वान्मुक्तावपि तेषामधिपतिः । ज्ञानपूर्वकत्वेन मनुष्यत्वे दानादिकं कृत्वा तत्फलैरपि भोगैर्मुक्तौ सम्पन्नतमः ।**

**'नहास्य कर्म क्षीयते' इति श्रुतेः । अन्यथा राद्ध इति विशेषणं व्यर्थं भवति ।**

**टिप्पणी—**

नन्वन्येषामधिपतिरिति कथं मुक्तमनुष्यविशेषणम् । मुक्तचक्रवर्तिनः सांसारिकान्याधिपतित्वायोगात् । नच ये संसारावस्थायां चक्रवर्तिनियम्यास्तेषामपि मुक्तौ तदाधिपत्यं सम्भवतीति वाच्यम् । नियमाभावादित्यत आह– **स्वराष्ट्र इति** ।। पूर्वं स्वराष्ट्रे मुक्तिसाधनज्ञानोपदेष्टृत्वात्तदुपदेश्यानां तत्सहैव मोक्षात् मुक्तावपि तेषामधिपतिरित्यर्थः । ननु सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतम इति कथं मुक्तविशेषणं संसारगतमानुष्यकभोगानां मुक्तावभावादित्यतस्तद् व्याचष्टे– **ज्ञानेति** ।। मानुष्यकैरित्यस्यार्थो मनुष्यत्वे चक्रवर्तित्वदशायां दानादिकं कृत्वा तत्फलैरिति । न केवलं ज्ञानफलैरित्यपेरर्थः । ननु मनुष्यत्वावस्थायां कृतदानादेः काम्यत्वे स्वर्गादौ निष्कामत्वे च ज्ञानजन्मन्येवोपक्षय इति कथं तत्फलस्य मुक्तिगामित्वमित्यत उक्तम् ।। **ज्ञानपूर्वकत्वेनेति** ।। अपरोक्षज्ञानपूर्वकत्वेनेत्यर्थः । कृत्वेत्यनेन सम्बन्धः । अपरोक्षज्ञानोत्तरकृतदानादिकर्मफलस्य मुक्तिगत्वं युज्यत इत्यर्थः । अत्र श्रुतिमाह– **नहास्येति** ।। ननु स्रक्चन्दनादिभोगसाधनैः समृद्धोऽन्येषां भृत्यादीनामधिपतिः सर्वैर्मनुष्यभावैर्भोगैः तत्करणैस्सम्पन्नतम इति परोक्तरीत्या संसारिपरमेवेदं किन्न स्यादित्यत आह– **अन्यथेति** ।। मुक्तपरत्वाभाव इत्यर्थः । राद्धशब्दार्थसंसिद्धत्वस्य संसारिण्यभावादसम्भवाच्च राद्ध इति विशेषणं विरुद्धार्थमित्यर्थः । नच भोगक्षमावयवैराध्यात्मिकैः राद्धः संसिद्ध इति व्याख्यायत इति वाच्यम् । तस्याप्यनित्यत्वेन

राद्धशब्दमुख्यार्थत्वाभावात्। मुख्ये सत्यमुख्यग्रहणायोगात्। उपलक्षणमेतत्। समृद्ध इति विशेषणं व्यर्थं भवतीत्यपि ग्राह्यम्। मुक्तिं विना सम्यगृद्धेरभावेन समृद्धपदस्यापि मुक्तमात्रवाचकत्वात्।

**भाष्यम्—**

**स मनुष्याणां परम आनन्द इति स्वरूपानन्दश्चात्रोच्यते। नह्यमुक्तानां स्वरूपानन्दानुभवोऽस्ति। 'भुज्यते स्वसुखं मुक्तैराभासोऽन्यैस्ततोऽपरः' इति च।**

**टिप्पणी—**

ननु तस्येयं पृथिवीत्यादिपूर्वभाविव्यपेक्षयेत्यनुव्याख्याने तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यादिति तैत्तिरीयवाक्यस्यामुक्तपरत्वोक्त्या समानन्यायतया अन्येषामधिपतिरित्यादिवाक्यस्याप्यमुक्तपरत्वमभिप्रेतम्। यथोक्तं सुधायाम्– अनेनैव न्यायेनान्येषामधिपतिरित्यादिकममुक्तविषयं प्रतिपत्तव्यमिति ॥ तथाच तेन विरोधः स्यादिति चेन्न। अयमभिप्रायो भाष्यकारस्य नेदं वाक्यं सर्वथा परोक्तरीत्या संसारिमात्रपरम्। तथात्वे राद्धत्वसमृद्धत्वयोरनुपपत्तेः किन्तु मुक्तामुक्तपरं मुक्तमात्रपरं वा तत्र प्रथमपक्षमभ्युपेत्यानुव्याख्याने राद्धसमृद्धशब्दयोः मुक्तपरत्वं राद्धः संसिद्ध इत्येव मुक्त एवावगम्यते इत्यनेनोक्त्वाऽन्येषामधिपतिरित्यादीनाममुक्तपरत्वमङ्गीकृतं अत्र तु द्वितीय-पक्षमङ्गीकृत्यान्येषामधिपतिरित्यादिकमपि मुक्तपरत्वेनैव व्याख्यातम्। एवञ्च राद्धः समृद्ध इत्येतन्मुक्तमात्रपरं अन्येषामधिपतिरित्यादिकं तु मुक्तामुक्तोभयपरम्। तथाचोक्तं सुधायाम्–अन्येषामधिपतिरित्यादिकं तु मुक्तामुक्तसाधारणमिति तस्मान्न काप्यनुपपत्तिरिति। किञ्चैतद्वाक्यस्य संसारिपरत्वे परम आनन्द इत्यानन्दस्य परमत्वविशेषणमुक्तम्। वैषयिकानन्दस्य सान्तत्वसुदुःखत्वादिना परमत्वाभावादिति भावेनाह– **स इति**॥ अस्त्वेवममुक्तानामपि स्वरूपानन्दसद्भावेन नानुपपत्तिरित्यत आह– **नहीति**॥ तथाच परम आनन्द इति आविर्भूतस्वरूपानन्दो विवक्षित इति भावः। मास्त्वमुक्तस्य स्वरूपानन्दाविर्भावः तथापि परमानन्द

इति मुक्तज्ञापकं कुत इत्यतो मुक्तस्य स्वरूपानन्दभोक्तृत्वे अन्येषां तदभावे च प्रमाणमाह– **भुज्यत इति** ।। अन्यैरमुक्तैस्ततो परः स्वरूपसुखादन्य आभासो वैषयिकानन्दो भुज्यते ।

**भाष्यम्——**

**जितलोका इत्यपि मुक्ता एवोच्यन्ते । गन्धर्वलोके गन्धर्वाणां ब्रह्मज्ञाने मुक्ताविर्त्यर्थः । तदा हि ब्रह्मज्ञानं सदोदितमवतिष्ठते । एष ब्रह्मलोकः सम्राळित्यादिषु ज्ञानस्यैव लोकशब्दोदितत्वात् ।**

**टिप्पणी——**

एतत्प्रकरणस्य मुक्तपरत्वे द्वितीयवाक्यस्थमपि ज्ञापकमाह– **जितलोका इति** ।। जितलोकाः प्राप्तब्रह्मज्ञाना इत्यर्थः । ज्ञानसामान्यजयस्य चेतनमात्र-साधारणत्वेनावक्तव्यत्वात् । गन्धर्वलोक आनन्द इत्यस्य गन्धर्वलोके स्थितानामानन्द इति संसारिपरत्वप्रतीतिनिरासाय तदपि मुक्तज्ञापकं यथा स्यात्तथा व्याचष्टे– **गन्धर्वेति** ।। ब्रह्मेति योग्यतया सम्बन्धः । अनेन प्रजापतिलोक इति ब्रह्मलोक इत्येतच्च व्याख्यातम् । ननु जितलोका इत्येतत्कथं मुक्तत्वज्ञापकं जीवन्मुक्त्यवस्थायामपि ब्रह्मज्ञानजयसद्भावात् । अत एव ब्रह्मज्ञाने मुक्ताविति च कथं व्याख्यानमित्यतस्तदुपपादयति– **तदा हीति** ।। मुक्त्यवस्थायामित्यर्थः । अन्यदा तु तिरोभावादेः सम्भवात् मुख्ये सत्यमुख्य-ग्रहणायोगादिति भावः । लोकशब्देनात्र ज्ञानमेव विवक्षितमिति कुतः प्रसिद्ध-लोकार्थत्वे बाधकाभावादित्यत आह– **एष इति** ।। आदिशब्दो न एषोऽस्य परमो लोक इति पूर्ववाक्यस्य एष ब्रह्मलोक इत्युत्तरवाक्यस्य च ग्रहणम् । नच तत्रापि विवादः कर्तव्यः । ब्रह्मलोक इत्यस्य लोकनाल्लोको ज्योतीरूपं ब्रह्मैवेति परमो लोक इत्यस्य लोकनाल्लोकः स्वयञ्ज्योतिः स्वभाव इति त्वया व्याख्यातत्वात् । अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवाना-मानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत इति वाक्यं परैरेवं व्याख्यातम् ।

ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानां आजानत एवोत्पत्तित एव ये देवास्ते आजानदेवास्तेषामानन्दः । यश्च श्रोत्रियोऽधीतवेदः अवृजिनः पापरहितः अकामहतो न कामहत आजानदेवानन्दावधिभूतपूर्वानन्देषु वितृष्णः एवम्भूतस्याप्याजनदेवैः समान आनन्दः इत्यन्वाकृष्यते चशब्दादिति । तदेतदसद् वाक्यभेदकल्पनाप्रसङ्गात् । आजानदेवानन्दावधिभूतपूर्वानन्देष्वि-त्यस्याश्रुतस्य कल्प्यत्वात् । वितृष्णत्वरूपार्थस्याकामशब्देनैव लाभाद्धत-शब्दवैयर्थ्याच्च । विरक्तानां सर्वत्र कामाभावात्तारतम्योक्त्यनुपपत्तेश्च । नचाजानदेवपदकाम इति विवक्षितमिति वाच्यम् । अश्रुतकल्पनाप्रसङ्गात् पूर्वं दूषितं चैतत्सविस्तरम् । तस्माद् वचनव्यत्यासेनैकमेव वाक्यमिदम् । ततश्च श्रोत्रियत्वादिकं प्रकृताजान-देवादीनामेव विशेषणम् ।

**भाष्यम्—**

**यश्च श्रोत्रिय इति वचनं तेषामाजानादीनामपि मुक्तानामेवायं नियमेनानन्द-शतगुणोद्रेकः । अन्यदा तु कदाचिद् भवति । कदाचिद् व्याकुलतया न भवतीति दर्शयितुम् । चशब्दस्तु श्रोत्रियत्वावृजिनत्वा-कामहतत्वानां गुणानां मुक्तौ समुच्च-यार्थः । मुक्तस्यैवेते गुणा भवन्तीति मुक्तस्वीकारार्थं य इति विशेषणम् ।**

**टिप्पणी—**

तर्हि यश्च श्रोत्रिय इत्यादिकं व्यर्थं किमर्थमुच्यत इत्यस्तदपि मुक्तज्ञापनार्थमेवेति भावेनाह— **यश्चेति** ॥ आजानदेवादीनामपीत्यपिशब्दो देवोत्तमानामपीति नियमेनानन्दशतगुणोद्रेकसम्भावनायाम् । अन्यदा संसारदशायां कदाचित् चित्तविक्षेपाभावदशायां भवति आनन्दशतगुणोद्रेक इति वर्तते कदाचित् कदाचित्प्रारब्धकर्मफलभोगदशायां श्रोत्रियत्वादिविशेषणविशिष्टानामाजानादीना-मानन्दशतगुणोद्रेकः कथ्यते श्रोत्रियत्वादिकं चोक्तवक्ष्यमाणन्यायेन मुक्तानामेव सम्भवति नचामुक्तानाम् । तथाच मुक्तानामेवायं नियमो नान्येषामिति ज्ञायत इति भावः । ननु ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः

ये च श्रोत्रियाः अवृजिना अकामहतास्तेषामिति वाक्ययोजनायां चशब्दोऽनुपपन्नः स्यात् । चशब्दो ह्ययं समुच्चयस्य द्योतकः । देवदत्तो धनिको यज्ञदत्तश्चेति यथा। नचैकविषयतायामेवं युज्यते। नहि भवति वसिष्ठो ब्रह्मिष्ठोऽरुन्धतीपतिश्चेति प्रयोगः । तस्माद् वाक्यभेदमङ्गीकृत्यास्मदुक्तरीत्यैव व्याख्येयमित्यत आह– **चशब्द इति** ॥ तथाच ये श्रोत्रियाः अवृजिना अकामहताश्चेति विशेषणसमुच्चायकत्वान्न दोष इति भावः । ननु विभक्तिवचनव्यत्यासेन श्रोत्रियाणामवृजिनानामकामहतानां चाजानदेवानामिति योजनोपपत्तौ य इति विशेषणं व्यर्थम्। नच यच्छब्दस्य बुद्धिस्थवाचकत्वान्मुक्तानां चात्र बुद्धिस्थत्वात् तत्स्वीकारार्थं तदिति वाच्यम् । श्रोत्रियत्वादिविशेषणबलादेव तत्सिद्धेरित्यत आह– **मुक्तस्यैवेति** ॥ एते श्रोत्रियत्वादयो गुणाः मुक्तस्यैव भवन्ति नान्यस्येति वस्तुगतिप्रदर्शनायेत्यर्थः ।

**भाष्यम्**——

> **सर्वं श्रुतिफलं मुक्तैः प्राप्यं नान्येन केनचित् ।**
> **अतस्तु श्रोत्रियो मुक्तो ह्यन्यः श्रोत्रियको भवेत् ॥**
> **अदुःखत्वं च तस्यैव कामैरहतता तथा ।**
> **यः कामितं न प्राप्नोति स कामहत उच्यते ॥**
> **काम्याप्राप्तेश्च पापाच्च पापात्कामहतः स्मृतः ।**
> **उभयस्याप्यभावेन मुक्तोऽकामहतो मतः ॥ इति च ॥**
> **आजानदेवा इन्द्राद्या जातेभ्यस्ते वरा यतः ॥ इति च ॥**

**टिप्पणी**——

मुक्तस्यैवैते गुणा भवन्तीत्यत्र प्रमाणमाह– **सर्वमिति** ॥ हि यस्माच्छ्रोत्रियत्वं प्राप्तश्रुतिफलत्वं श्रुतिफलं च मुक्तिस्तद्गतानन्दातिशयश्च तत्सर्वं मुक्तैरेव प्राप्यं अतो मुक्त एव मुख्यतः श्रोत्रियः अन्योऽमुक्तः श्रोत्रियकः मुख्यतः प्राप्तश्रुतिफलत्वाभावात् मुख्ये सत्यमुख्यग्रहणायोगादित्यर्थः । यद्यपि श्रोत्रियशब्दः छन्दोऽधिगतिनिमित्तोऽवगतः । यथाह- 'श्रोत्रियञ्छन्दोऽधीते' इति । तथाप्यत्र

पुरुषार्थप्रकरणत्वात् विशेषप्रमाणोक्तत्वाच्चायमेवार्थो ग्राह्यः । अवृजिनत्वं चादुःखित्वं वृजिनं दुःखमित्युक्तेः तच्च मुक्तस्यैवेत्यर्थः । कामैरहतता तस्यैवेति सम्बन्धः । तत्कुत इत्यतः कामहतशब्दार्थं तावदाह– **य इति** ॥ उक्तमनुवदन्निमित्तान्तरमाह– **काम्याप्राप्तेरिति** ॥ पापात्कामाच्च निषिद्ध-कामाच्चेत्यर्थः । किं तत इत्यत आह– **उभयस्येति** ॥ एतेन ये केचिदेकवाक्यतामङ्गीकृत्यापि प्रकृता मुक्ताजानदेवविषयमेव यश्च श्रोत्रिय इत्यादिवचनमिति व्याचक्षते तेऽपि निरस्ता भवन्ति । उक्तरीत्या मुक्तेषु श्रोत्रियत्वादीनामसम्भवात् । विषयवैराग्योपेतत्वादकामहत इति व्याख्याने हतशब्दवैयर्थ्याच्च । अश्रोत्रियत्वादिविशिष्टाजानदेवाद्यभावेन व्यावर्त्याभावात् व्यर्थत्वाच्च । नेदं श्रोत्रियत्वादिकं विशेषणं किन्त्वाजानदेवानां कर्मदेवेभ्यः शतगुणोद्रिक्तानन्दवत्त्वे हेतुरनेनोच्यत इति चेन्न । सर्वत्रापि विद्यमानस्य श्रोत्रियत्वादेर्हेतुत्वायोगात् । नच कर्मदेवेभ्योऽप्यतिशयेन श्रोत्रिया अवृजिना अकामहताश्च य इति व्याख्यायत इति वाच्यम् । अश्रुतकल्पनाप्रसङ्गादिति । नन्वनुव्याख्याने अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहत इत्यत्र वाक्यभेदमङ्गीकृत्याद्यं वाक्यममुक्तपरं द्वितीयं मुक्तपरमिति व्याख्यातम् । यथोक्तम्- 'तस्मादमुक्तसुखगं तारतम्यं पृथक् पृथक् । उक्त्वा यश्चेति मुक्तानां तारतम्यं सुखे श्रुतिः । आहाति पेशलम्' इति । तत्कथमत्रैकवाक्यमङ्गीकृत्य मुक्तमात्रपरं व्याख्यायते इति चेन्न । अयमभिप्रायो भाष्यकारस्य सर्वथाऽनुव्याख्यानोक्तरीत्या वाक्यद्वयमेवेदं भिन्नविषयम् । तथा सति मुक्तामुक्तयोरुभयोरपि तारतम्योक्तिलाभात् । वाक्यभेदज्ञापकचशब्दसद्भावाच्च । उक्तं च । तच्च चशब्दादेव गम्यत इति वचनव्यत्यासादेरनाश्रयणीयत्वाच्च । एकवाक्यताश्रद्धायामप्यत्रोक्तरीत्या अनुपपत्तिबाहुल्यात् । द्वितीयापव्याख्याने वचनव्यत्यासादेः साम्याच्चेति । आजानत एवोत्पत्तित एव ये देवास्ते आजानदेवा इति व्याख्यानमसत् । आगन्तुकदेवत्वाभावेन व्यर्थत्वात् तस्मादनाख्याता देवकुले जाता एवाजानदेवा

इत्युच्यन्त इति कश्चित् तदप्यसत् । कर्मदेवावराणां तेषां कर्मदेवोत्तमत्वोक्त्यसम्भवादिति भावेनाजानदेवशब्दार्थमाह– **आजानेति** ।। जाना जातास्तेभ्य आसमीचीना वरा आजानास्ते च ते देवाश्चाजानदेवा इत्यर्थः ।

**भाष्यम्—**

**प्रजापतिलोक इत्युक्तेनैव मुक्तप्रजापतिसिद्धावपि मुक्तस्यैव प्रजापतेर्ब्रह्मणश्चायं विशेष इति स्वरूपकथनार्थं यश्च श्रोत्रिय इत्यादि । अनुपचरितश्रोत्रियादित्वमिति ज्ञापयितुमभ्यासः । सर्वेषामपि मुक्तानां नियमेन तदस्तीति ज्ञापयितुं च । 'प्रजास्तु पशुशब्दोक्ताः पशुपस्तु प्रजापतिः' इति च ।**

**टिप्पणी—**

ननु यदि यश्च श्रोत्रिय इत्यादेः मुक्तज्ञापकत्वं तर्हि स एकः प्रजापतिलोक आनन्दः स एको ब्रह्मलोक आनन्द इति वाक्यद्वये यश्च श्रोत्रिय इत्येतद् व्यर्थं स्यात् । गन्धर्वलोके गन्धर्वाणां ब्रह्मज्ञाने मुक्तावित्युक्तरीत्या प्रजापतिलोकब्रह्मलोकपदाभ्यामेव प्रजापतिब्रह्मणोर्मुक्तत्वसिद्धेरित्याशङ्क्याह– **प्रजापतीति** ।। ब्रह्मलोक इत्युक्तेरेव मुक्तब्रह्मसिद्धावित्यपि ग्राह्यम् । अयं विशेषः श्रोत्रियत्वादिरूपः । एतेन श्रोत्रियत्वेनैव मुक्तत्वसिद्धेरन्यद् व्यर्थमित्यपि निरस्तम् । स्वरूपकथनाय तदुपपत्तेः । ननु मुक्तस्यैवायं विशेष इति कथं उपचरितश्रोत्रियत्वादिकमेव श्रुतौ विवक्षितमित्यत्र ज्ञापकाभावादिति चेन्न । मुख्ये सत्यमुख्यग्रहणायोगस्यैव तज्ज्ञापकत्वात् । ज्ञापकान्तरमाह– **अनुपचरितेति** ।। यद्वा नन्वेकत्रोक्तस्यैव सर्वत्रानुवर्तनेन मुक्तस्वरूपमेतादृशमिति ज्ञातुं शक्यत्वात्किमर्थं यश्च श्रोत्रिय इति पुनः पुनर्वचनम् । अन्यथा सर्वत्र तदुक्तिप्रसङ्गादित्यत आह– **अनुपचरितेति** ।। अभ्यासो हि तात्पर्याधिक्यलिङ्गम् । अधिकतात्पर्यविषयत्वादस्यार्थस्यानुपचरितत्वं सिद्ध्यतीति भावः । प्रयोजनान्तरमाह– **सर्वेषामपीति** ।। कस्यचिन्मुक्तस्यैवमासीदिति इतिहासरूपेण नोच्यते किन्तु सर्वेषामप्येवमिति ज्ञापनार्थमित्यर्थः । यथोक्तं

पुरस्तात्- 'सर्वव्यक्तिष्वभिव्याप्त्यै तात्पर्याधिक्यवित्तये। पुनर्वचनमुद्दिष्टम्' इति। प्रजापतिलोके विराट्शरीरे ब्रह्मलोके हिरण्यगर्भात्मनीति व्याख्यानमसत्। विराट्शरीरकव्यतिरिक्तस्य हिरण्यगर्भस्याभावात्। नहि विराट्-शरीरकत्वावस्थापन्नात्स्वस्मादेव हिरण्यगर्भत्वावस्थापन्नस्य शतगुणानन्दवत्त्वं प्रामाणिकम्। प्रजापतिशब्दस्यैव विराट्शरीरवाचकत्वस्य ब्रह्मशब्दस्यैव हिरण्यगर्भवाचकत्वस्य वोपपत्तौ लोकशब्दवैयर्थ्याच्च। तस्मात्तेभ्य-श्चोमापतेरित्युक्तरीत्या प्रजापतिशब्द उमापतिपर इत्येव वक्तव्यम्। तदपि कथमित्यतः प्रजापतिशब्दमुमापतौ निर्वक्ति- **प्रजा इति**॥

**भाष्यम्—**

**अथशब्दादेष ब्रह्मलोक इति विशेषणाच्च द्वितीयब्रह्मलोकशब्देन पर-ब्रह्मैवोच्यते। अन्यथैष एव परम आनन्द इत्युक्त्वा पुनरेष इतिशब्दोऽनर्थकः स्यात्।**

**टिप्पणी—**

अथैष एव परम आनन्द एष ब्रह्मलोक इत्यस्य एष एव ततो विष्णुः पूर्णानन्द इति परमात्मपरत्वेन व्याख्यानमसत्। तस्याप्रकृतत्वेनैष इति तत्परामर्शायोगात्। नचैतस्यैवानन्दस्येत्यत्र सोऽपि प्रकृत इति वाच्यम्। स एको ब्रह्मलोक इति पूर्ववाक्ये ब्रह्मलोकशब्दोक्तहिरण्यगर्भात्मन एवैष ब्रह्मलोक इत्यनेन परामर्शप्रतीत्या दूरोक्तपरमात्मपरामर्शायोगादित्यत आह- **अथेति**॥ एष ब्रह्मलोक इति द्वितीयब्रह्मलोकशब्दस्य न पूर्वोक्तहिरण्यगर्भपरत्वं वक्तुं युक्तम्। तथा सति प्रकरणविच्छेदकाथशब्दायोगात् एष ब्रह्मलोक इति विशेषणायोगाच्च। नहि एष हिरण्यगर्भो ब्रह्मलोको हिरण्यगर्भात्मेत्युपपन्नम्। किन्तु परब्रह्मपरत्वमेव। तथा सति तयोरुपपन्नत्वादित्यर्थः। यत्प्रजापतेरपि शतगुणानन्दो ब्रह्मा अथ तस्मादेष एव परम आनन्द इत्यथशब्दो हेत्वर्थत्वेनोपपद्यत इति चेन्न। अथ ये शतं मनुष्याणामानन्दा इत्यादाविवात्राप्यथशब्दस्य प्रकरणविच्छेदार्थकत्वस्यावश्यकत्वात्। ननु

यत्रानन्दोत्कर्षतारतम्यं विश्रान्तमेष ब्रह्मलोको हिरण्यगर्भात्मा परमानन्द इति व्याख्यानान्न, ब्रह्मलोक इत्यस्य वैयर्थ्यमित्यत आह– **अन्यथेति** ॥ पूर्वेण एष एवेत्यनेन प्रकृतपरामर्शसिद्धेर्द्वितीय एष इति शब्दोऽनर्थकः स्यादित्यर्थः । नच युष्मद्रीत्या वाक्यभेदमङ्गीकृत्यैष एव हिरण्यगर्भः परम आनन्द एष हिरण्यगर्भो ब्रह्मलोकः पूर्णज्ञान इति वा एष हिरण्यगर्भो ब्रह्मलोकः ज्योतीरूप ब्रह्मस्वरूप इति व्याख्यायत इति वाच्यम् । निरुपचरितपरमत्वस्य पूर्णत्वस्य च विष्णोरन्यत्राभावात् हिरण्यगर्भात्मनो ब्रह्मस्वरूपत्वस्य सर्वप्रमाणविरुद्धत्वाच्चेति भावः । पुनः प्रयुक्त इति शेषः । तेन समानकर्तृता ।

**भाष्यम्—**

**तस्यैव ब्रह्मलोकशब्देन पूर्वमभ्यासाच्च ।**

**नच तैत्तिरीयादिश्रुतिविरोधः । शतशब्दस्यायुते दशलक्षादावपि समत्वात् । अतश्चक्रवर्तिभ्यो मनुष्यगन्धर्वाः शताधिकाः । देवगन्धर्वा अयुताधिकाः । पितरो दशलक्षाधिका इत्यविरोधः । उत्तमगन्धर्वापेक्षया पितृभ्यो गन्धर्वाणामाधिक्यं च युज्यते । आजानदेवेभ्यो जाता आजानजा इत्यतस्तत्राप्यविरोधः । यत्राजानज शतयेवोपरि पाठस्तत्राजानेभ्यो ब्रह्मादिभ्यो जाता शति भवति इन्द्रबृहस्पत्यादीनां विशेषस्तु विशेषवचनत्वादत्राप्यङ्गीकर्तव्य एव ।**

**टिप्पणी—**

परब्रह्मैवोच्यत इत्यत्र हेत्वन्तरमाह– **तस्यैवेति** ॥ सलिल एको द्रष्टाऽद्वैतो भवति एष ब्रह्मलोको सम्राडिति पूर्वं ब्रह्मलोकशब्देन तस्यैव परब्रह्मण एव श्रवणाच्चेत्यर्थः । यद्वा ब्रह्मलोकशब्देन पूर्णज्ञानप्रतिपादकशब्देनेत्यर्थः । तथाचैष ब्रह्मलोक एषोऽस्य परमो लोक इत्युभयमादायाभ्यासो द्रष्टव्यः । यद्वा सलिल एको द्रष्टा द्वैतो भवति एष ब्रह्मलोक इति पूर्ववाक्यगतं विपापो विरजो विचिकित्सो ब्राह्मणो भवति एष ब्रह्मलोकः सम्राडित्युत्तरब्राह्मणस्थवाक्यगत च ब्रह्मलोकशब्दमादायाभ्यासः । ननु ते

ये शतं मानुषा आनन्दाः स एषो मनुष्यगन्धर्वाणामानन्दः ते ये शतं मनुष्यगन्धर्वाणामानन्दाः स एको देवगन्धर्वाणामानन्दः ते ये शतं देवगन्धर्वाणामानन्दाः स एकः पितॄणां चिरलोकलोकानामानन्द इति तैत्तिरीयश्रुतौ क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिरा इति श्रुत्यन्तरे च मनुष्यपदवाच्यचक्रवर्तिभ्यो मनुष्यगन्धर्वाणां तेभ्यो देवगन्धर्वाणां तेभ्यः पितॄणां शतगुणानन्दत्वमुक्तम्। क्वचित्तु चक्रवतिभ्य एव देवगन्धर्वाणां शतगुणानन्दत्व-मुक्तम्। अत्र तु चक्रवर्तिभ्य एव पितॄणां शतगुणानन्दत्वमुच्यते। अतो विरोध इत्यतस्तं परिहरति– **नचेति** ।। कुत इत्यतः शतशब्दार्थं तावदाह– **शतशब्दस्येति** ।। तथापि विरोधपरिहारः कथमित्यत आह– **अत इति** ।। तथाच यत्र देवगन्धर्वाणामेव चक्रवर्तिभ्यः शतगुणानन्दत्वमुच्यते तत्र शतशब्दोऽयुतार्थः अत्र तु दशलक्षार्थक इति न विरोध इति भावः। एतेनैतदपि निरस्तं श्रुत्यन्तरे इन्द्रादिभ्यः पार्वत्यादीनां ततो रुद्रस्य ततः सरस्वत्याः ततो ब्रह्मणः शतगुणानन्दवत्त्वोक्तेः कथमत्रेन्द्राद्याजानदेवेभ्यः प्रजापतेस्तस्माद् ब्रह्मणः शतगुणानन्दत्वमुच्यत इति । ये शतमाजानदेवानामानन्दा इत्यत्र ये शतं प्रजापतेरानन्दा इत्यत्र च शतशब्दस्यायुतवाचित्वात् । ननु तैत्तिरीयादिश्रुतौ पितॄणां गन्धर्वापेक्षया आधिक्यमुक्तं अत्र तु पित्रपेक्षया गन्धर्वाणामतो विरोधात्कथमेतदुक्तमित्यत आह– **उत्तमेति** ।। तुम्बुरुप्रमुखाणां गन्धर्वाणां आजानदेवतासमत्वेन पितृभ्यस्तेषामाधिक्यं युज्यत इत्यर्थः । यथोक्तम्- 'तुम्बुरुप्रमुखा ये च' इत्यादि । नन्वत्राजानदेवानां कर्मदेवोत्तमत्वमुच्यते तैत्तिरीयादिश्रुतौ तु कर्मदेवावरत्वमित्यतो विरोध इत्यत आह– **आजानदेवेभ्य इति** ।। तैत्तिरीयादिश्रुतौ हि आजानजानां देवानामिति पाठः अत्र त्वाजानदेवानामित्येव । तथाचात्रोक्तानां जातेभ्योऽवराणां आजानदेवाना-मिन्द्रादीनां कर्मदेवोत्तमत्वेऽपि तत्रोक्तानामाजानदेवेभ्य इन्द्रादिभ्यो जातानामनाख्यातानां कर्मदेवावरत्वं युज्यत इति न विरोध इति भावः। ननु यत्र वाक्य आजानजा इत्येव कर्मदेवानामुपरि पाठस्तद्वाक्यस्य

तैत्तिरीयादिश्रुतिविरोधः स्यादेव। तत्राजानजानां कर्मदेवावरत्वेनोक्तत्वादित्यत आह– **यत्रेति** ॥ स्यादयं विरोधः यदि तैत्तिरीयादिश्रुतौ आजानजशब्दोक्ताः इन्द्रादिदेवेभ्यो जाताः अनाख्याताः देवा एवोच्येरन् नचैवम्। किं नाम? आजानेभ्यो जातेभ्यो वरेभ्यो ब्रह्मादिभ्यो जाता इन्द्राद्या एवाजानजशब्देनोच्यन्ते। तेषां च कर्मदेवोत्तमत्वं सम्भवतीति न विरोध इति भावः। ननु तैत्तरीयादिश्रुतौ देवेभ्य इन्द्रस्येन्द्राद्बृहस्पतेस्तस्माच्च प्रजापतेः शतगुणानन्दत्वमुक्तं अत्र तु आजानशब्दवाच्येभ्यो देवेभ्य एव प्रजापतेः शतगुणानन्दत्वमतो विरोध इत्यत आह– **इन्द्रेति** ॥ तैत्तिरीयवाक्यस्य विशेषवचनत्वादस्य च सामान्यवचनत्वात् तत्रोक्तविशेषोऽत्राप्यङ्गीकार्य एवेत्यर्थः। उपास्यविष्टां

**भाष्यम्**—

**सामान्यधर्मो बलवान् धर्माद् वैशेषिकाद् यथा।**
**बलवद्विशेषवचनं सामान्यवचनात्तथा॥**
**नृपा मनुष्यगन्धर्वा देवाश्च पितरस्तथा।**
**देवैः सहितगन्धर्वा ऋषयो देवतास्तथा॥**
**इन्द्रो बृहस्पतिश्चैव प्रधानेन्द्रः पुरन्दरः।**
**रुद्रो ब्रह्मेति क्रमशो मुक्ताः शतगुणोत्तराः॥ इति च॥**
**अतिप्रयत्नतो यावत् प्राप्तुं शक्यं विमुक्तिगम्।**
**सुखाद्यं तस्य सम्प्राप्त्यै ज्ञानश्रेण्यः क्रमात् स्मृताः॥**
**एकां श्रेणीं प्रविज्ञाय तदुत्कृष्टां च तद्वराम्।**
**क्रमेणैव विजिज्ञासुर्जनकः पृच्छति स्म ह।**
**पुनःपुनर्विमोक्षाय ब्रूहीत्यद्धा वरात् पुरा॥ इति च॥**
**रहस्यमस्यायोग्यं च यदि मामेष पृच्छति।**
**दत्तो मया वरोऽस्येति वक्तव्यं मे भविष्यति।**
**इति भीतोऽभवद्राज्ञो याज्ञवल्क्यः सुमेधया॥ इति ब्रह्माण्डे॥**

**तेभ्योऽश्वलादिभ्यः।**

**टिप्पणी—**

विशेषवचनोक्तमपि सामान्यवचने कुतो ग्राह्यमिति चेत् विशेषवचनस्य सामान्यवचापेक्षया बलवत्त्वात् । प्रबलानुसारेण दुर्बलस्य नेयत्वादिति भावेन विशेषवचनस्य सामान्यवचनाद्बलवत्त्वे प्रमाणमाह– **सामान्येति** ।। वैशेषिकात्तत्तदाश्रमोचितधर्मात् जपोपदेशादिरूपात् सामान्यधर्मः सर्ववर्णसाधारण-धर्मो विष्णुभक्त्यादिरूपो यथा बलवांस्तथा सामान्यवचनात् विशेषवचनं बलवदिति सम्बन्धः । ननु तैत्तिरीयश्रुतौ इन्द्रावरस्य बृहस्पतेरिन्द्रोत्तमत्वमुच्यते तत्कथं तत्रोक्तो विशेषोऽङ्गीकार्य इत्याशङ्कां परिहरन् अशेषमुक्त-तारतम्यप्रतिपादकप्रमाणमाह– **नृपा इति** ।। देवाः देवगन्धर्वाः देवैराजानजैः सहितगन्धर्वा इति केषाञ्चिद्गन्धर्वाणामाजानजसमत्वोक्त्योत्तमगन्धर्वापेक्षयेत्युक्तमपि प्रमापितं इन्द्र इत्यनुवादेन बृहस्पतिरिति व्याख्यातम् । तथा बृहस्पतिरित्यनुवादेन प्रधानेन्द्र इति व्याख्यातं प्रधानेन्द्रशब्देन यज्ञनामकेन्द्रप्रतीतिनिरासाय पुरन्दर इत्याह । ननु जनकेनात ऊर्ध्वविमोक्षाय ब्रूहीत्येकवारं पृष्टेऽपि विशिष्टमोक्षसाधनं याज्ञवल्क्यो वक्ष्यत्येव किमर्थं पुनःपुनः प्रक्रमात्तथा प्रश्न इत्यतस्तदभिप्रायमाह– **अतीति** ।। किं ततः प्रकृते इत्यत आह– **एकामिति** ।। महान्तं प्रति कथं पुनः पुनः प्रश्नकरणमित्यत आह– **अद्धेति** ।। याज्ञवल्क्यदत्तादिति शेषः । अत्र ह याज्ञवल्क्यो विभयांचकारेत्युक्तं याज्ञवल्क्यस्य पुनःपुनः प्रश्नकरणनिमित्तकं भयं स्वस्य तत्परिहारासामर्थ्यादिति प्रतीयते तां परिहर्तुं भयनिमित्तमाह– **रहस्यमिति** ।। राज्ञः सुमेधया भीत इति सम्बन्धः । सर्वेभ्यो मान्तेभ्यः उदरौत्सी-दिति तेभ्य इति कस्य परामर्शः । अव्यधानेन कस्याप्यप्रकृतत्वादित्यतः पूर्वाध्याये प्रश्नकर्तृत्वेन प्रकृताश्वलादिपरामर्श इति भावेनाह– **तेभ्य इति** ।। ३३ ।।

**उपनिषत्—**

[अवस्थात्रयनियामकः भगवानेव]

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं**

**च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव ॥ ३४ ॥**

भाष्यम्—

सर्वदा जीवमादाय नियमाद्विष्णुरेव हि।
जाग्रदादिषु संयाति नान्यथा तु कथञ्चन ॥
एवं नियमविज्ञप्त्यै जीवास्वातन्त्र्यवित्तये।
परीवृत्तिमवस्थासु साभ्यासा वक्ति हि श्रुतिः ॥ इति निर्णये ॥

अतस्तात्पर्यार्थं पुनर्वचम्।

टिप्पणी—

ननु स वा एष एतस्मिन्निति पूर्वोक्तमेव पुनः किमर्थमुच्यत इत्यतस्तत्र प्रमाणमुदाहृत्य पुनर्वचनकृत्यमाह— **सर्वदेति** ॥ एवं नियमविज्ञप्तिरपि किमर्थेत्यत उक्तम् ॥ **जीवेति** ॥ परिवृत्तिं परिवर्तनम् ॥ ३४ ॥

उपनिषत्—

**तद्यथाऽनः सुसमाहितमुत्सर्जद् यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढं उत्सर्जद् याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥**

भाष्यम्—

ग्रामादिकमुत्सर्जद् यायात्।

यथा ग्रामं परित्यज्य यात्यनः पुमधिष्ठितम्।
एवं देहं परित्यज्य विष्णुनाऽधिष्ठितः पुमान् ॥ इति च ॥

टिप्पणी—

तद्यथाऽनःसुसमाहितमुत्सर्जद्यायादित्यत्रोत्सर्जनक्रियायाः सकर्मत्वादत्र कर्मानुक्तेस्तद्दर्शयति— **ग्रामादिकमिति** ॥ अनेन उत्सर्जत् नानाविधं शब्दं

कुर्वेदिति व्याख्यानमपदार्थतया निरस्तं प्रमाणविरुद्धत्वाच्च तन्न युक्तमिति भावेन समग्रवाक्यव्याख्यानरूपं प्रमाणमाह– **यथेति** ॥ सुसमाहितमित्यस्यार्थः पुमधिष्ठितमिति ॥ ३५ ॥

उपनिषत्——

**स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद् यथाम्रमौदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यत एवमेवायंपुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या द्रवति प्राणायैव ॥ ३६ ॥**

भाष्यम्——

अणिमानं भगवन्तम्। 'स य एषोऽणिमा' 'तेजः परस्यां देवतायाम्' इति हि श्रुतिः। उपतपता रोगादिना।

आम्रं बाल्येऽपि पतति परिणामे ह्युदुम्बरम्।
सम्यक् पाके तथाऽश्वत्थफलं जीवमृतिस्तथा॥
कलावाम्रोपमा जीवास्त्रेतास्वौदुम्बरोपमाः।
कृतेऽश्वत्थसमाश्चैव यान्ति ब्रह्मवशास्सदा॥ इति पाद्मे॥

प्राणायैव।

वायुमेवाद्रवत्येष जीवो मोक्षाय तत्त्ववित्।
तदनुज्ञयैव ज्ञानित्वमतस्तं पुनराव्रजेत्॥
सर्वेऽपि वायुमासाद्य जायस्व ज्ञानमाप्नुहि।
इति तस्य वरादेव जायन्ते ज्ञानिनोऽखिलाः॥
पुनस्तं प्राप्य मुक्तिञ्च प्राप्नुयुस्तदनुज्ञया॥ इति प्रवृत्ते॥

टिप्पणी——

स यत्रामणिमानंन्येतीत्यस्य सोऽयं देह अणिमानं कार्श्यं यदान्येति गच्छति तदोर्ध्वोच्छ्वासी भवतीति व्याख्याननिरासायाणिमशब्दार्थमाह– **अणिमानमिति** ॥

अणिमशब्दस्य भगवद्वाचकत्वे श्रुतिमाह– **स इति** ।। मरणकाले जीवो भगवन्तं गच्छतीति वाक्यार्थे समाख्यामप्याह– **तेज इति** ।। तेजः श्रीः परस्यां देवतायां सम्पद्यते श्रिया भगवन्तं प्राप्नोतीत्यर्थः । यद्वा स य एषोऽणिमेत्यत्र पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासत इति पूर्वोक्तजीवपरामर्श एव किन्न स्यादिति चेन्न । तेजः परस्यां देवतायामित्यव्यवहितपूर्ववाक्यप्रकृत-परदेवतापरामर्शस्यैव ग्राह्यत्वादिति भावेनाह– **तेज इति** ।। उपतपतेत्यस्य पुरुषपरत्वेऽन्वयासम्भवात्तदनूद्य व्याचष्टे– **उपतपतेति** ।। उपतापयतीत्युपतपन्निति उपतपतेत्यनेन रोगादिकमुच्यत इत्यर्थः । तद्यथाम्रं औदुम्बरं वा पिप्पलं वेति दृष्टान्तत्रयाभिधानं किमर्थमित्यतस्तदभिप्रायमाह– **आम्रमिति** ।। प्राणायैवेत्यस्य शरीरान्तरग्रहणायेति व्याख्याननिरासाय तदनूद्य पुनः प्रतिन्यायं प्रतियोन्याऽऽद्रवति प्राणायैवेति वाक्यव्याख्यानरूपप्रमाणमेवाह– **प्राणायैवेति** ।। वायुमेवार्चिरादिमार्गगतं मुख्यवायुमेव । ननु वायं प्रतीदानीमेवाद्रवणाच्छ्रुतौ पुनः प्राणायैवाद्रवतीति कथमुक्तमित्यत आह– **तदनुज्ञयैवेति** ।। यतो वाय्वनुज्ञयैव जीवस्य ज्ञानित्वं जातम् । अतोऽर्चिरादिमार्गस्थवायुं प्रत्याव्रजनं पुनराव्रजनमित्यर्थः । तदेव विवृणोति– **सर्वेऽपीति** ।। सर्वे जायन्ते ज्ञानिनश्च भवन्तीति शेषः । ज्ञानिनोऽखिला इत्यस्योत्तरत्रापि सम्बन्धः ।। ३६ ।।

**उपनिषत्—**

[अर्चिरादिमार्गेषु मुक्तः पूज्यते]

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामाण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायात्ययमागच्छतीत्येवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीद-मागच्छतीति ।। ३७ ।।**

**भाष्यम्—**

**इदं मुक्तजीवस्वरूपमायाति । अतोऽनेन सहेदं परं ब्रह्मायातीति परब्रह्मणः पूजार्थं प्रतिकल्पन्ते । यथा राज्ञो ध्वजादिकं दृष्ट्वाऽयं ध्वज आगच्छति**

तस्माद् राजाऽऽयातीति पूजां प्रतिकल्पन्ते तद्वत्। अन्यथेदं ब्रह्मायातीद-मागच्छतीति द्विरुक्तिर्व्यर्था स्यात्। वीप्सात्वे त्वयमायातीत्येकप्रकारेण शब्दाभ्यासः स्यात्।

एकप्रकारशब्दानामभ्यासस्त्वादरार्थकः।
स्वरवर्णादिमात्रं वाप्यन्यथा चेत्तदा परः॥
अर्थः स्यादेष नियमो वाक्ये वीप्सापदे तथा।
प्रातिस्विकार्थेऽपि भवेदभ्यासे वा तथा स्थितः॥

इति शब्दनिर्णये॥

नच कुत्रचिदादरार्थे द्विरूपप्रयोगो दृष्टोऽनन्तरितः।

यदा मुक्तो व्रजत्यूर्ध्वं तदा तत्सहितो हरिः।
नियमाद् दृश्यते देवैरमुक्ते नियमो नतु॥
यथा ध्वजादिकं दृष्ट्वा पूजां राज्ञः प्रकुर्वते।
एवं विमुक्तिगं दृष्ट्वा विष्णोः पूजां प्रकुर्वते॥ इति तत्त्वनिर्णये॥

तस्मादणिमानं न्येतीत्यादिना जीवगतं ब्रह्म चोच्यते। जीवोपतापादि तु नैव।

**टिप्पणी—**

एवंविदं संसारिणं सर्वाणि भूतानि शरीरारम्भकाणि प्रतिकल्पान्ते प्रतीक्षन्ते स्वात्मनि देहाकारेण परिणते सति तत्राऽऽत्माभिव्यक्तिमाकाङ्क्षन्ते। कथं इदं ब्रह्माभिन्नं भोक्तृकर्तृ चायातीदमागच्छतीति व्याख्यानमसदिति भावेनेदं ब्रह्मायातीदमागच्छतीति वाक्यं व्याचष्टे— **इदमिति**॥ एवं सत्ययमायात्यय-मागच्छतीति दृष्टान्तवाक्यानानुगुण्यं स्यादित्यतस्तदपि यथावद् व्याचष्टे— **यथेति**॥ परोक्त एवार्थः किं न स्यादिति चेत् अचेतनानां शरीरारम्भकभूताना-मुक्तप्रकारप्रतीक्षासम्भवात्। बाधकान्तरमाह— **अन्यथेति**॥ अयमायातीत्यय-मागच्छतीति दृष्टान्तवाक्येऽपि द्विरुक्तिर्व्यर्था स्यादित्यपि ग्राह्यम्। नन्वादरार्थं वीप्सात्वोपपत्तेर्न द्विरुक्तिवैयर्थ्यमित्यत आह— **वीप्सात्वेति**॥ इदं ब्रह्मायातीत्येक-

प्रकारेण शब्दाभ्यासः स्यादित्यपि द्रष्टव्यम् । आदरार्थे वीप्सात्वे एकप्रकार एव शब्दानामभ्यासो भवेदित्यत्र प्रमाणमाह– **एकेति** ।। तुशब्द एवार्थः । आदिपदेन पदग्रहणं अपि तस्यैकार्थप्रतिपादकतया प्रतीयमानत्वेऽपीत्यर्थः । वाक्ये वीप्सापदे चैकप्रकारशब्दानामभ्याससत्वादादरार्थक इति सम्बन्धः । प्रातिस्विकार्थे स्थितेऽभ्यासेऽपि तथा वा तथैव भवेत् । यथाऽन्नमयादिषु पञ्चसु वर्तमानो ब्रह्मशब्दः । आदरार्थमिदं पुनर्वचनमित्यङ्गीकारे आगम-विरोधमभिधाय लौकिकप्रयोगोऽपि तथा नास्तीत्याह– **नचेति** ।। अन्तरितप्रयोगस्तु द्विरूपो दृष्टः यथा कदाचिन्मैत्र आयात्विति अन्यदा त्वागच्छत्विति अतोऽनन्तरित इत्याह । नन्विदं मुक्तजीवस्वरूपमिति व्याख्यानमयुक्तम् । सर्वेषां भूतानां मुक्तजीवस्वरूपदर्शनाभावात् । नच सर्वाणि भूतानीति सर्वभूतशब्दादेव परः तथा सति देवानामुक्तजीवसहागतहरिदर्शनस्यापि सत्वेनेदं मुक्तजीवस्वरूपमिति मुक्तग्रहणायोगादित्यत आह– **यदेति** ।। स्वकृत-व्याख्यानदार्ढ्याय तद्यथा राजानमायान्तमित्यादि श्रुतिव्याख्यानरूपं प्रमाणमाह– **यथेति** ।। स यत्रायमणिमानं न्येतीत्युक्ताणिमशब्दस्य कार्श्यार्थत्वे बाधकं सूचयन् भगवदर्थत्वं युक्त्या द्रढयति– **तस्मादिति** ।। सर्वगतस्य ब्रह्मणः कथमणिमत्वमिति शङ्कानिरासाय जीवगतमित्युक्तम् । यस्मादुक्तप्रकारेणेदं ब्रह्म यातीत्युत्तरवाक्ये जीवगतं ब्रह्मैवोच्यते तस्मात्स यत्राणिमानमिति पूर्ववाक्येऽप्यणिमशब्देन जीवगतब्रह्मैवोच्यते अन्यथोत्तरवाक्ये इदं ब्रह्मेति प्रकृतपरामर्शकेदंशब्दानुपपत्तेरिति भावः । ननु दह्यमानगेहान्तर्गतस्य दाहवज्जीवस्योपतापादिके सति तदन्तर्गतब्रह्मणोऽपि स्यादित्यत आह– **जीवेति** ।। अग्निस्तम्भनवतो दाहाभाववत् सामर्थ्यवैशेष्येण जीवगतस्यापि ब्रह्मणो जीवोपतापादिकं नैव भवतीत्यर्थः ।

उपनिषत्——

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभि-**

**समायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥**

इति ज्योतिर्ब्राह्मणम् ॥ ३ ॥

भाष्यम्—

**जीवमादाय गच्छन्तमनुयान्ति दिवौकसः ।**
**प्राणाभिमानिनो विष्णुं नृपं परिजना यथा ॥ इति च ॥**
**उग्रास्तु श्रेणयः प्रोक्ताः योधाः प्रत्येनसः स्मृताः ।**
**ग्रामण्यस्तु चमूपालास्ते सर्वे द्विविधा मताः ॥**
**राज्ञा सह स्थिताश्चैव तथा जनपदे स्थिताः ।**
**ते सर्वेऽपि नियन्तव्या श्रेणिभिर्द्विविधैः सदा ॥ इति राजनीतौ ॥**
**अनुयान्ति शरीरस्था अभियान्ति स्वलोकगाः ।**
**मुक्तमादाय गच्छन्तं विष्णुं सर्वे दिवौकसः ॥ इत्यध्यात्मे ॥**

इति ज्योबिर्ब्राह्मणम् ॥ ३ ॥

टिप्पणी—

तद्यथा राजानं प्रयियासन्तमित्यादिवाक्यं मरणकाले गच्छन्तं जीवमनुवागादिप्राणाः समायान्तीति प्रतीतिनिरासाय तत्प्रमाणेन व्याचष्टे– **जीवमिति** ॥ गच्छन्तं विष्णुमित्यन्वयः ॥ ३७ ॥

उग्राः क्रूरकर्माणः प्रत्येनसः पापिष्ठशासका ग्रामण्यो ग्रामनेतार इत्यन्यथाप्रतीतिनिरासायोग्रादिशब्दार्थमाह– **उग्रास्त्विति** ॥ श्रेणयः प्रधानाः । ननु तद्यथा राजानमायान्तमुग्रा इत्यादिनोग्रादीनां राजागमने तत्पूजाकल्पकत्वमुक्तं इदानीं तेषां राज्ञा सह गमनमुच्यते अतो विरोध इत्यत आह– **ते सर्व इति** ॥ द्वैविध्यमेव दर्शयति– **राज्ञेति** ॥ किमुग्रादयः परस्परसमाः नेत्याह– **ते सर्व इति** ॥ ननु जनपदस्थोग्रादिस्थानीयाः राजसहस्थितोग्रादिस्थानीयाश्च देवा एव अतो दृष्टान्तानानुगुण्यमित्यतो देवानामपि द्वैविध्यमाह– **अनुयान्तीति** ॥ ३८ ॥

प्रकारेण शब्दाभ्यासः स्यादित्यपि द्रष्टव्यम् । आदरार्थं वीप्सात्वे एकप्रकार एव शब्दानामभ्यासो भवेदित्यत्र प्रमाणमाह– **एकेति** ।। तुशब्द एवार्थः । आदिपदेन पदग्रहणं अपि तस्यैकार्थप्रतिपादकतया प्रतीयमानत्वेऽपीत्यर्थः । वाक्ये वीप्सापदे चैकप्रकारशब्दानामभ्याससत्वादादरार्थक इति सम्बन्धः । प्रातिस्विकार्थे स्थितेऽभ्यासेऽपि तथा वा तथैव भवेत् । यथाऽन्नमयादिषु पञ्चसु वर्तमानो ब्रह्मशब्दः । आदरार्थमिदं पुनर्वचनमित्यङ्गीकारे आगम-विरोधमभिधाय लौकिकप्रयोगोऽपि तथा नास्तीत्याह– **नचेति** ।। अन्तरितप्रयोगस्तु द्विरूपो दृष्टः यथा कदाचिन्मैत्र आयात्विति अन्यदा त्वागच्छत्विति अतोऽनन्तरित इत्याह । नन्विदं मुक्तजीवस्वरूपमिति व्याख्यानमयुक्तम् । सर्वेषां भूतानां मुक्तजीवस्वरूपदर्शनाभावात् । नच सर्वाणि भूतानीति सर्वभूतशब्दादेव परः तथा सति देवानामुक्तजीवसहागतहरिदर्शनस्यापि सत्वेनेदं मुक्तजीवस्वरूपमिति मुक्तग्रहणायोगादित्यत आह– **यदेति** ।। स्वकृत-व्याख्यानदार्ढ्याय तद्यथा राजानमायान्तमित्यादि श्रुतिव्याख्यानरूपं प्रमाणमाह– **यथेति** ।। स यत्रायमणिमानं न्येतीत्युक्ताणिमशब्दस्य कार्श्यार्थत्वे बाधकं सूचयन् भगवदर्थत्वं युक्त्या द्रढयति– **तस्मादिति** ।। सर्वगतस्य ब्रह्मणः कथमणिमत्वमिति शङ्कानिरासाय जीवगतमित्युक्तम् । यस्मादुक्तप्रकारेणेदं ब्रह्म यातीत्युत्तरवाक्ये जीवगतं ब्रह्मैवोच्यते तस्मात्स यत्राणिमानमिति पूर्ववाक्येऽप्यणिमशब्देन जीवगतब्रह्मैवोच्यते अन्यथोत्तरवाक्ये इदं ब्रह्मेति प्रकृतपरामर्शकेदंशब्दानुपपत्तेरिति भावः । ननु दह्यमानगेहान्तर्गतस्य दाहवज्जीवस्योपतापादिके सति तदन्तर्गतब्रह्मणोऽपि स्यादित्यत आह– **जीवेति** ।। अग्निस्तम्भनवतो दाहाभाववत् सामर्थ्यविशेष्येण जीवगतस्यापि ब्रह्मणो जीवोपतापादिकं नैव भवतीत्यर्थः ।

उपनिषत्—

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभि-**

**समायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥**

इति ज्योतिर्ब्राह्मणम् ॥ ३ ॥

**भाष्यम्—**

**जीवमादाय गच्छन्तमनुयान्ति दिवौकसः ।**
**प्राणाभिमानिनो विष्णुं नृपं परिजना यथा ॥ इति च ॥**
**उग्रास्तु श्रेणयः प्रोक्ताः योधाः प्रत्येनसः स्मृताः ।**
**ग्रामण्यस्तु चमूपालास्ते सर्वे द्विविधा मताः ॥**
**राज्ञा सह स्थिताश्चैव तथा जनपदे स्थिताः ।**
**ते सर्वेऽपि नियन्तव्या श्रेणिभिर्द्विविधैः सदा ॥ इति राजनीतौ ॥**
**अनुयान्ति शरीरस्था अभियान्ति स्वलोकगाः ।**
**मुक्तमादाय गच्छन्तं विष्णुं सर्वे दिवौकसः ॥ इत्यध्यात्मे ॥**

इति ज्योतिर्ब्राह्मणम् ॥ ३ ॥

**टिप्पणी—**

तद्यथा राजानं प्रयियासन्तमित्यादिवाक्यं मरणकाले गच्छन्तं जीवमनुवागादि-प्राणाः समायान्तीति प्रतीतिनिरासाय तत्प्रमाणेन व्याचष्टे– **जीवमिति** ॥ गच्छन्तं विष्णुमित्यन्वयः ॥ ३७ ॥

उग्राः क्रूरकर्माणः प्रत्येनसः पापिष्ठशासका ग्रामण्यो ग्रामनेतार इत्यन्यथाप्रतीति-निरासायोग्रादिशब्दार्थमाह– **उग्रास्त्विति** ॥ श्रेणयः प्रधानाः । ननु तद्यथा राजानमायान्तमुग्रा इत्यादिनोग्रादीनां राजागमने तत्पूजाकल्पकत्वमुक्तं इदानीं तेषां राज्ञा सह गमनमुच्यते अतो विरोध इत्यत आह– **ते सर्व इति** ॥ द्वैविध्यमेव दर्शयति– **राज्ञेति** ॥ किमुग्रादयः परस्परसमाः नेत्याह– **ते सर्व इति** ॥ ननु जनपदस्थोग्रादिस्थानीयाः राजसहस्थितोग्रादिस्थानीयाश्च देवा एव अतो दृष्टान्तानानुगुण्यमित्यतो देवानामपि द्वैविध्यमाह– **अनुयान्तीति** ॥ ३८ ॥

### अथ खण्डार्थः

जनकं वैदेहं प्रति याज्ञवल्क्यो जगाम । किमर्थं एनेनानेन जनकेन राज्ञा संवदिष्ये संवादं करिष्ये इति संवादकामुकतया वैदेहं प्रत्येव गमने निमित्तमाह– **अथ हेति** ।। जनको वैदेहश्च याज्ञवल्क्यश्चेत्येतावग्निहोत्रे अग्निहोत्रविषये यद्यदा समुदाते संवादं कृतवन्तौ तदा राज्ञोऽग्निहोत्रविषयमतिविशदं ज्ञानमुपलभ्य सन्तुष्टो ह याज्ञवल्क्यस्तस्मै राज्ञे वरं ददौ । स राजा कामप्रश्नमेवेच्छाप्रश्नमेव वरं वव्रे । नत्वैश्वर्यादिकम् । हेत्याश्चर्ये । तं राज्ञा याचितं कामप्रश्नवपरमस्मै राज्ञे ददौ याज्ञवल्क्यः । हेति याज्ञवल्क्यस्य कामप्रश्नपरिहारसामर्थ्यं प्रसिद्धमिति सूचयति– यद्यस्मादेवं पूर्वं जनकाय कामप्रश्नवरं ददौ याज्ञवल्क्योऽथ ह तस्मादेव जनकं प्रति संवादकमुको जगामेत्यर्थः । यद्यपि तव पूर्वं कामप्रश्नवरो मया दत्तस्तत्पृष्टं च वक्तुमिदानीमागतोऽस्मि त्वया यथेष्टं प्रष्टव्यमिति याज्ञवल्क्यवचनानन्तरमेव राज्ञा प्रश्नः कर्तव्यस्तथापि औत्सुक्यात्सम्राडेव पूर्वः पूर्वं पप्रच्छ ।। १ ।।

किमिति याज्ञवल्क्य अयं पुरुषः संसारी किं ज्योतिः यस्यासौ किंज्योतिरिति । अस्य पुरुषस्य प्रवृत्त्यादिव्यापारे स्वयमसमर्थत्वेन किञ्चिज्ज्योतिरपेक्षितं तत्किमित्यर्थः । एवं पृष्टो याज्ञवल्क्यो हे सम्राडयं पुरुषः आदित्य एव ज्योतिर्यस्यासावादित्यज्योतिरित्युवाच हेत्यादित्यज्योतिष्ट्वं जीवस्य प्रसिद्धमित्याह आदित्यज्योतिष्ट्वमेवोपपादयति– **आदित्येनैवेति** ।। यस्मादयं पुरुष आदित्येनैव ज्योतिषाऽऽस्ते तिष्ठति उपविशति वा पल्ययते ग्रामादिकं प्रति गच्छति तत्र कर्म कुरुते विपल्येति पुनः प्रत्यावर्तते तस्मादयमादित्यज्योतिरित्यर्थः । दिवा बाह्यज्योतिष्वादित्यस्य प्राधान्यापेक्षया एव शब्दो नतु ज्योतिरन्तराभावाभिप्रायेण दिवापि वागादीनां सत्वात् । एवं याज्ञवल्क्योक्तं राजाङ्गीकृतवानित्याह– **एवमेवेति** ।। हे याज्ञवल्क्यैतत्त्वयोक्तमेवमेव ।। २ ।।

तथापि आदित्यास्तमयेऽपि पुंप्रवृत्तिदर्शनादादित्येऽस्तमिते सत्ययं पुरुषः किंज्योतिरेव आदित्यस्यास्तमात्पुंप्रवृत्तिहेतुभूतं ज्योतिः किमेव स्यादित्यर्थः ।

अस्य पुरुषस्य आदित्यास्तमयादिकाले चन्द्रमा एव ज्योतिर्भवति । तदेवोपपादयति– **चन्द्रमसैवेति** ।। रात्रौ बाह्यज्योतिःषु चन्द्रस्य प्राधान्यापेक्षयाऽवधारणम् ।। ३ ।।

आदित्यचन्द्रमसोरुभयोरप्यस्तमयेऽपि कृष्णपक्षरात्रौ पुंपवृत्तिदर्शनात्तद्धेतुभूतं ज्योतिः पृच्छति– **अस्तमित इति** ।। ४ ।।

आदित्यचन्द्राग्नीनामभावेऽप्यन्धकारे पुंप्रवृत्तिदर्शनात्पृच्छति– **अस्तमित आदित्य इति** ।। वागेवेत्यनेन शब्दो गृह्यते नेन्द्रियं शब्दस्य ज्योतिष्ट्वमप्रसिद्धं कथमुच्यत इत्यतः तदनुभवारूढं करोति– **तस्मादिति** ।। हे सम्राट् तस्माद्वै तस्मादेव वाचोऽपि ज्योतिष्ट्वादेव यत्र यदादित्यचन्द्राग्र्यभावकाले स्वः स्वकीयोऽपि पाणिर्हस्तो न विनिर्ज्ञायते विस्पष्टं न दृश्यते अथ तदा बाह्यज्योतिषोऽभावेन प्रवृत्तिनिरोधे यत्र यस्मिन्प्रदेशे वाक्शब्दः उच्चरति तत्र तं प्रदेशं प्रति उपन्येत्येवोपगच्छत्येव अन्यथा तन्न स्यादित्यर्थः ।। ५ ।।

आदित्यचन्द्राग्निवाचामभावेऽपि सुप्त्यादौ प्रवृत्तिदर्शनात्तत्र किं ज्योतिरिति पृच्छति– **अस्तमित इति** ।। आत्मा भगवानेवास्य ज्योतिः ।। ६ ।।

जीवदेहेन्द्रियादिविवेकेनात्मनो प्रसिद्धेः पृच्छति– **कतम इति** ।। जीवदेहेन्द्रियादिभ्यो विवेकेनात्मानमाह– **योऽयमिति** ।। यो विज्ञानमयो विज्ञानपूर्णः प्राणेषु इन्द्रियेष्वन्तः हृद्यन्तश्च वर्तमानः ज्योतिः जीवस्य बुद्ध्यादिद्योतनेन प्रवृत्तिहेतुः पुरुषः पूर्णषड्गुणः अयमेवात्मेत्यर्थः । तस्य महिमानमाह– **स इति** ।। स आत्मा समानः सन् अविकारात्सदैकप्रकारः सन् उभौ लोकौ भूलोकद्युलोकौ जाग्रत्सुषुप्ती वा जीवमादायानुसञ्चरति ध्यायतीव इवशब्दोऽल्पार्थः । जीवमल्पं ध्यायति लेलायतीव जीवमल्पं ग्राहयति । तस्यैव महिमान्तरमाह– **स इति** ।। स आत्मा स्वप्नो भूत्वा स्वापको भूत्वा जीवस्य स्वप्नमानयन् मृत्यो रूपाणि बहुपापैक-हेतुत्वान्मृत्युरूपात्मकमिमं लोकं जाग्रदाख्यं अतिक्रामति तारयति हि प्रसिद्धम् । यद्वा स आत्मा स्वप्नो भूत्वा अन्तरिक्षलोकान्तर्गतो भूत्वा मृत्यो रूपाणि

बहुमृत्युरूपात्मकं बहुपापहेतुभूतं चेमं लोकं भूराख्यं अतिक्रामति जीवमन्तरिक्षगं कुर्वन् तारयति ॥ ७ ॥

महिमान्तरमाह– **स वा इति** ॥ स जीवं प्रति ज्योतिष्ट्वेनोक्तः अयं समानः सन्नित्यादिनोक्तः पुरुषो जायमानो वै । तस्यैव व्याख्यानं शरीरमभिसम्पद्यमान इति जीवगतशरीराभिसम्पत्तिनियामकः सन् पाप्मभिः संसृज्यते जीवेन पापं कारयित्वा तेषां फलदानाय तानि गृह्णातीत्यर्थः । स आत्मा म्रियमाणः न मरणमात्रमत्र विवक्षितं किन्तूत्क्रामन् ऊर्ध्वं गच्छन् मुक्तिं गच्छन् जीवगतोत्क्रमणनियामकस्सन् पाप्मनो विजहाति जीवकृतपापफलं न ददातीत्यर्थः । यद्वा जीववैलक्षण्येन भगवज्ज्ञानार्थं जीवस्वरूपमाह– **स वा इति** ॥ स आदित्यादिज्योतिष्ट्वेनोक्तः अयं आत्मज्योतिष्ट्वेनोक्तः पुरुषः संसारी जीवः जायमानः न घटादिवत्स्वरूपतः किन्तु शरीरमभिसम्पद्यमानः सन् पाप्मभिः संसृज्यते सम्बद्धो भवति । स जीवो म्रियमाणः तस्यैव व्याख्यानमुत्क्रामन् मुक्तिं गच्छन्सन् पाप्मनो विजहातीत्यर्थः ॥ ८ ॥

तस्यात्मनः स्थितिस्थानमाह– **तस्य वा इति** ॥ तस्यैतस्य पुरुषस्य पूर्णषड्गुणस्य द्वे एव स्थाने भवतः । किं ते इदं च परलोकस्थानं च भूलोकः स्वर्गलोकश्च जाग्रत्सुषुप्तिश्चेति वा । नन्वन्तरिक्षलोकस्य स्वप्नावस्थाया वा तृतीयस्थानस्य विद्यमानत्वात्कथं द्वे एव स्थाने इत्युक्तमित्यत आह– **सन्ध्यमिति** ॥ तृतीयं स्वप्नस्थानं स्वप्नावस्थाख्यं स्थानमन्तरिक्षलोकाख्यं वा स्थानं सन्ध्यं सन्धौ भवं जाग्रत्सुषुप्तिसन्धौ भूद्युलोकसन्धौ वा भवं अतो न पृथगुक्तमित्यर्थः । तस्मिन्सन्ध्ये स्थाने स्वप्नस्थानेऽन्तरिक्षलोके वा तिष्ठन्नेते उभे स्थाने पश्यति । के ते उभे स्थाने इदं च परलोकस्थानं च भूलोकः स्वर्गलोकश्च जाग्रत्सुषुप्तिश्च न केवलं स्वप्नावस्थायां तिष्ठन् जाग्रत्सुषुप्ती अन्तरिक्षलोके तिष्ठन् द्युपृथिवीलोकौ पश्यति किन्त्वित्यत आह– **अथेति** ॥ अथ जाग्रत्सुषुप्त्यवस्थादर्शनानन्तरं अयं पुरुषः परमात्मा परलोकस्थाने सुषुप्त्याख्ये जाग्रत्स्थानाद्धन्तव्ये यथाक्रमः यन्मार्गः भवति

तमाक्रमं मार्गं स्वप्नाख्यमाक्रम्य तत्र स्थित्वोभयान् तस्यैव विवरणं पाप्मन आनन्दांश्च जाग्रदवस्थायां जीवेनानुभूयमानानि पापफलानि दुःखानि सुप्तावनुभूयमानानन्दांश्च पश्यतीत्यर्थः । तथा परलोके स्थाने स्वर्गाख्ये पृथिवीलोकाद्गन्तव्ये सति यं पुरुषो यन्मार्गः तमाक्रमं मार्गमन्तरिक्षाख्य-माक्रम्योभयान्पाप्मन आनन्दांश्च पृथिव्यां अनुभूयमानपापफलानि दुःखानि स्वर्गेऽनुभूयमानानन्दांश्च पश्यतीत्यर्थः । नन्वात्मैवास्य ज्योतिर्भवतीत्युक्तं जीवस्यात्मज्योतिष्ट्वं कदा आदित्यचन्द्राग्निवाचामभावकाले इति चेत् साप्यवस्था केत्याशङ्कां परिहरन्नाह– **स यत्रेत्यादिना** ।। स आत्मा यत्र यदा प्रस्वपिति जीवं प्रस्वापयति । कथं प्रस्वापयतीत्यत आह– **अस्येति** ।। अस्य लोकस्य जनस्य सर्वावतः सर्वविषयज्ञानानि मात्रामिन्द्रियशक्तिं चोपादाय स्वयं विहृत्य जीवं बाह्यव्यापाररहितं कृत्वा स्वयमेव निर्माय स्वाप्नपदार्थान् रथादीनुत्पाद्य स्वेन स्वकीयेन स्वरूपभूतेन वा भासा बाह्यप्रकाशेन स्वेन ज्योतिषा आन्तरप्रकाशेन प्रस्वपिति जीवं प्रस्वापयति । अत्रास्मिन्स्वापकाले अयं पुरुषः परमात्मा स्वयमेव विशेषतो ज्योतिर्भवतीत्यर्थः । तथा स आत्मा यत्र प्रस्वपिति जीवमन्तरिक्षलोकं स्वर्गलोकं वा प्रापयति स्वप्नसुप्तिशब्दयोरन्त-रिक्षस्वर्गवाचकत्वेन स्वप्नसुषुप्त्युभयसाधारणस्वापशब्दस्य तदुभयलोकसाधारणस्य सत्वात् । कथम् । अस्य लोकस्य जनस्य सर्वज्ञानानीन्द्रियाभिमानिदेवांश्चोपादाय स्वयं विहृत्य जीवं भूलोकस्थव्यापाररहितं कृत्वा स्वयं निर्मायान्तरिक्षे स्वर्गे वा तत्र कर्मानुसारेण भोगसाधनरथादीनुत्पाद्य स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति अन्तरिक्षलोकं वा प्रापयति । अत्रान्तरिक्षादिप्राप्तिकाले अयं पुरुषः स्वयमेव ज्योतिर्भवतीत्यर्थः ।। ९ ।।

ननु स्वप्नेऽन्तरिक्षे स्वर्गे वा यदि रथाद्याः पूर्वमेव स्थितास्तदा कथमेतस्य तदुत्पादकत्वमित्यत आह– **न तत्रेति** ।। तत्र स्वप्नावस्थायां अन्तरिक्षे स्वर्गे वा रथाः प्रसिद्धाः न भवन्ति पूर्वं न स्थिताः रथयोगाः रथैर्युज्यन्त इति रथयोगा अश्वादयो न भवन्ति पुरा न स्थिताः पन्थानो मार्गाः

पूर्वं न स्थिताः किन्तु अथ तदैव स आत्मा तत्तत्कर्मानुसारेण रथान्रथयोगान्पथः सृजते आनन्दाः स्वरूपभूतसुखानि मुदः अप्रकृष्टविषयोत्थसुखानि प्रमुदः प्रकृष्टविषयोत्थसुखानि वेशान्ताः वेश्यागृहाः पुष्करिण्यः सरांसि स्रवन्त्यो नद्यः न केवलमेतावत् किन्तु स परमात्मा सर्वस्य कर्ता हि प्रमाणप्रसिद्धम् ॥ १० ॥

तस्य वा एतस्य पुरुषस्येत्यादिकं संसारमोक्षपरतयापि योज्यम् । परलोक-शब्दस्य मोक्ष एव मुख्यत्वात् तथाहि तस्यैतस्य पुरुषस्य द्वे इव स्थाने भवतः के ते इदं च संसारावस्थारूपं परलोकस्थानं मोक्षाख्यं चेति जीवन्मुक्त्यवस्थायाः पृथक्सत्वात्कथं द्वे एवेत्युक्तमित्यत आह– **सन्ध्यमिति** ॥ तृतीयं स्वप्नस्थानं जीवन्मुक्त्याख्यं सन्ध्यं संसारमोक्षयोः सन्धौ भवमतो न पृथगुक्तं तस्मिन् सन्ध्ये स्थाने जीवन्मुक्त्याख्ये तिष्ठन्नेते उभे स्थाने पश्यति । के ते इदं च परलोकस्थानं च । अथ संसारमुक्तिदर्शनानन्तरं अयं पुरुषो जीवः परलोकस्थाने मोक्षे गन्तव्ये यथाक्रमो यन्मार्गो भवति तमाक्रमं मार्गं जीवन्मुक्त्याख्यं आक्रम्योभयान् तस्यैव विवरणं संसारेऽनुभूयमानपापफलानि दुःखानि मोक्षेऽनुभूयमानानन्दांश्च पश्यति स परमात्मा यत्र यदा प्रस्वपिति प्रस्वापयति स्वापं मोक्षं प्रापयति कथं अस्य लोकस्य मुच्यमानस्य सर्वावतः वृत्तिरूपसर्वज्ञानानि मात्रामिन्द्रियाभिमानिदेवांश्चोपादाय स्वयं विहत्य सांसारिकव्यापाररहितं कृत्वा स्वयं निर्माय मुक्तौ भोगसाधनरथादीन् उत्पाद्य स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति मोक्षं प्रापयति । अत्रास्मिन् मोक्षकाले अयं पुरुषः परमात्मा अस्य जीवस्य स्वयमेव विशेषतो ज्योतिरित्यर्थः । ननु भोगसाधनरथादीनां मुक्तौ पूर्वमेव सत्वे कथं तदुत्पादनमित्यत आह– **न तत्रेति** ॥ न तत्र मोक्षे पूर्वं रथाद्याः स्थिताः किन्त्वपरोक्षज्ञानोत्तरकृत-तत्तत्कर्मानुसारेण तदैव रथादीन्सृजत इत्यर्थः ॥ १० ॥

तत्तत्र पूर्वोक्तार्थे एते वक्ष्यमाणाः श्लोका मन्त्रा भवन्ति प्रमाणत्वेनेति शेषः । तान्मन्त्रानुदाहरति– **स्वप्नेनेति** ॥ हिरण्मयः हिरण्यवर्णः एकहंसः

प्रधानहंसरूपः पुरुषः पूर्णषड्गुणः परमात्मा स्वप्नेन सुषुप्त्या स्वर्गेण मोक्षेण वा शारीरं जीवं अभिप्रहत्य संयोज्य स्वयमसुप्तः सुप्तिशून्यः स्वकर्मनिर्मितस्वर्गशून्यो बन्धध्वंसरूपमुक्तिशून्यो वा सुप्तान्सुप्त्यवस्थागतान् स्वर्गगतान्मोक्षगतान्वा शारीरान् जीवानभिचाकशीति पश्यति । एवं सुप्त्यवस्थादिप्रदर्शनानन्तरं शुक्रं शोकेन रत्या युक्तं शारीरं जीवमादाय पुनः स्थानं जाग्रदाख्यं भूलोकाख्यं सृष्टिस्थानं वा एतीत्यर्थः । न केवलं शरीर एव स्वप्नप्रदर्शको भगवानित्याह– **प्राणेनेति** ॥ अमृतः पुरुषः स्वप्ने जीवमादाय कुलायाच्छरीराद्बहिश्चरित्वा तानभिचाकशीतीति वा शुक्रमादाय पुनः कुलायरूपं स्थानमेतीति वा सम्बन्धः । ननु स्वप्ने जीवमादाय यदि बहिर्गच्छतीश्वरस्तर्हि तस्य शरीरस्यावस्थानं कथं स्यादित्यत आह– **प्राणेनेति** ॥ प्राणेन जीवस्यांशेन मुख्यप्राणेन वा अवरं कर्म निर्मिततया निकृष्टं कुलायं रक्षन् अंशेन जीवमादाय बहिर्गमनेऽप्यंशान्तरस्यात्र सद्भावान्न काप्यनुपपत्तिरित्यर्थः । सोऽमृतो हिरण्मय एकहंसः पुरुषो यत्र कामं कामोविषयस्तत्र ईयते ज्ञायते विषयेष्वस्वातन्त्र्या-त्तज्ज्ञापकोऽन्योऽस्तीत्यनुमीयत इत्यर्थः ॥ १२ ॥

तस्यैव महिमान्तरमाह– **स्वप्नान्त इति** ॥ देवः स्वप्नान्ते स्वप्नाख्यस्थाने उच्चावचमीयमानः वासनारूपेषु उच्चावचेषु गजपिपीलिकादिषु प्रविशन्स्वस्य बहूनि रूपाणि कुरुते । उत शब्दः च शब्दार्थः स्त्रीभिश्चेतनप्रकृतिरूपाभिः सह मोदमान इव च मोदरूपस्य स्त्रीभिर्मोदो विडम्बनमितीवशब्दः जीवस्य भयानि पश्यन्नपि जक्षदिव हसदिव च हसनक्रियाया नित्यत्वादिवशब्दः । उतशब्दश्चशब्दार्थः ॥ १३ ॥

ननु सुषुप्तिस्वप्नजाग्रदवस्थाप्रेरकः किं सुप्तादिभिः प्रदृश्यते नवेति जिज्ञासायामाह– **आराममिति** ॥ अस्यात्मनः आरामं आक्रीडनं तन्निर्मितस्वाप्नपदार्थादिकमेव पश्यन्ति नतु तमात्मानं कश्चन पश्यति । भगवदज्ञानी किं ज्ञानिना बोधनीयो नेत्याह– **तमिति** ॥ तं भगवन्तं अयतं प्रयत्नशून्यमयोग्यं प्रति न बोधयेदित्याहुर्विद्वांसः कुतोऽयं न बोधनीय इत्यत आह– **दुर्भिषज्यमिति** ॥

एष आत्मा यं न प्रतिपद्यते यस्य ज्ञानविषयो न भवतीति यावत् अस्मै अस्य दुर्भिषज्यं भवति प्रतीकारो न विद्यत इति यावत् । हेति प्रसिद्धिमाह जीववत्परमात्मनोऽपि सुप्तत्वेऽसुप्तः सुप्तानभिचाकशीतीत्युक्तमयुक्तमित्यत आह– **अथो इति** ।। अथोशब्दोऽपिशब्दार्थः । एषोऽपि जीवस्य स्वप्नसुषुप्तिकालोऽप्यस्य परमात्मनो जागरितदेश एवेत्याहुर्विद्वांस इत्यर्थः । तत्र हेतुमाह– **यानि हीति** ।। हि यस्मात् जाग्रत् जागरिते यानि पश्यति तानि सुप्ते स्वप्नसुषुप्तिकालेऽपि पश्यति इति तस्मात् स्वप्नसुषुप्तिकालो जागरितात्मक इत्यर्थः । तत्रापि को हेतुरित्यतः स्वतः सार्वज्ञमेवेति भावेनाह– **अत्रेति** ।। अत्र स्वप्नसुषुप्त्यवस्थायां अयं पुरुषः परमात्मा स्वयंज्योतिर्भवतीत्यर्थः । एवं श्रुत्वा राजा गुरुदक्षिणां प्रतिजज्ञ इत्याह– **सोऽहमिति** ।। हे याज्ञवल्क्य भगवते पूज्याय ते स त्वदुपदिष्टोऽहं सहस्रं हस्तिवृषभसहस्रं ददामि । अत ऊर्ध्वमतः परं विमोक्षाय विशिष्टमोक्षाय ब्रूहीत्याह ।। १४ ।।

राज्ञा एवं पृष्टो याज्ञवल्क्यो भगवतः सुप्त्याद्यवस्थाप्रेरकत्वं स्पष्टमाह– **स वा इति** ।। स एष परमात्मैव एतस्मिन्सम्प्रसादे सम्यक् प्रसीदति जीवोऽस्मिन्निति सम्प्रसादः सुप्तिः तस्मिन् रत्वा रमणं कृत्वा पुण्यं च पापं च दृष्ट्वैव चरति चरित्वा च प्रतिन्यायं प्रतिकालं प्रतियोनि प्रतिजीवं पुनः स्वप्नायैव जीवस्य स्वप्नावाप्तये एवाद्रवति । दृष्ट्वैवेत्येवकारव्यवच्छेद्यमाह– **स इति** ।। स परमात्मा तत्र सुप्तौ यत्किञ्चित्पापं पश्यति तेन पापफलेन दुःखेन अनन्वागतः असंस्पृष्टो भवति कुत इत्यत आह– **असङ्ग इति** ।। हि यस्मादयं पुरुषः असङ्गस्तत्कर्तृपापफलसंसर्गशून्य इति तस्मात्तेनानन्वागत इत्यर्थः । उक्तमङ्गीकृत्य पुनर्गुरुदक्षिणां प्रतिजज्ञे इत्याह– **एवमिति** ।। एवमुत्तरत्रापि व्याख्येयम् ।। १५ ।।

बुद्धान्तायैव बुद्धाख्यस्थानाय जाग्रत्स्थानायेत्यर्थः ।। १६ ।।

स्वप्नान्तायैव स्वप्नाख्यस्थानायैव । अत्र स्वप्नशब्दः सुषुप्तिपरः ।। १७ ।।

स्वप्नसुप्तिजाग्रदवस्थाप्रेरकत्वं दृष्टान्तेनोपपादयति– **तद्यथेति** ।। तत् निदर्शनं यथा महामत्स्यः नद्या उभे कूले अभिसञ्चरति के ते पूर्वं चापरं च एवमेवायं पुरुषः एतावन्तौ स्थाने अनुसञ्चरति कौ तौ स्वप्नान्तं च स्वप्नसुप्त्यात्मकमेकं बुद्ध्यात्मकं जाग्रदाख्यं चेति ।। १८ ।।

नन्ववस्थात्रयविशिष्टे संसारे भ्रमतो जीवस्य श्रमपरिहारः कदा भविष्यतीति चेत् मोक्ष एव तदा विष्णुं प्राप्तत्वात् । ननु मोक्षे विष्णुं प्राप्तत्वेऽपि श्रमाभावः कुत इति चेत् । प्रतिदिनमज्ञानादेव सुप्तौविष्णुं प्राप्तस्य न श्रमः किमु ज्ञानान्मुक्तौ विष्णुप्राप्तस्येति भावेन सुप्तौ विष्णुं प्राप्तस्य श्रमाभावं सदृष्टान्तमुपपादयति– **तद्यथेति** ।। तद् वक्ष्यमाणं निदर्शनं यथा श्येनो वा सुपर्णो वाऽस्मिन्नाकाशे विपरिपत्य इतस्ततः परिपतनं कृत्वा श्रान्तः पक्षौ संहत्य सङ्कोच्य सल्लयायैव श्रमपरिहारकस्वनीडायैव ध्रियते गच्छति एवमेवायं पुरुषो जागरिते स्वप्ने च भ्रमन् श्रान्तः तत्परिहारायैतस्मा अन्ताय धावति । कस्मै यत्र यस्यामवस्थायां सुप्त आनन्दरूपं विष्णुं प्राप्तो जीवो न कञ्चन कामं काम्यं कामयते न कञ्चन स्वप्नं पश्यति नच स्वप्नसदृशभ्रान्तिज्ञानमाप्नोति एतस्मा अन्ताय सुप्त्याख्यस्थानायेति सम्बन्धः ।। १९ ।।

स्वप्नदर्शनस्यानिष्टरूपत्वे न कञ्चन स्वप्नं पश्यतीति वक्तव्यं तदेव कुत इत्यतः प्रकृतसुप्तिस्वप्नस्वरूपं निरूपयितुमाह– **ता वा इति** ।। अस्य पुरुषस्य ताः प्रसिद्धाः एताः वक्ष्यमाणाः हितानाम नाड्यो यथा केशस्सहस्रधा भिन्नस्तावताऽणिम्ना सूक्ष्मपरिमाणेन तिष्ठन्ति तासां हितनामत्वं कुत इत्यतो नानारूपेण भगवता तत्र निहितत्वादिति भावेनाह– **शुक्लस्येति** ।। शुक्लस्य शुक्लरूपेण भगवता पूर्णाः व्याप्ताः तासां मध्ये सुषुम्ना च तत्र सुप्तिं व्रजत्ययमिति वक्तव्यम् । अथ यत्र यासु कण्ठदेशस्थितासु नाडीषु स्थितो जीवः एनं स्वप्नदृष्टमात्मानं अन्ये चोराः घ्नन्तीव पश्यति कदाचिज्जिनन्तीव ताडयन्तीव पश्यति एवं स्वात्मानं हस्तीव पश्यति अन्यः कश्चनैनं विच्छाययति भयेन

विच्छायं करोतीव पश्यति स्वयं गर्तं जीर्णकूपादिकं पततीव पश्यति जाग्रदिव भयं च पश्यति । अत्र बाह्यार्थवैलक्षण्यादिवशब्दः पश्यतीत्युक्त्या प्राप्तं स्वाप्नार्थदर्शने जीवस्य स्वातन्त्र्यं निवारयति– **यदेवेति** ।। यदा यस्यामवस्थायां जीवो यदेव स्वाप्नं भयादिकं जाग्रज्जाग्रद्वस्तुवत्पश्यति तद्वस्तु अत्राऽविद्यायाः अः परमात्मा तद्विद्या तन्निरीक्षणं तेन विष्णुकर्तृकज्ञानेनैव मन्यते पश्यति नतु स्वातन्त्र्येण सुप्तौ मोक्षे च न कश्चन कामं कामयत इत्युक्तं तर्हि कथं तिष्ठतीत्यपेक्षायामाह– **यत्रेति** ।। यत्र मोक्षे सुप्तौ वा देव इव राजेवाहमेवेदं सर्वोऽस्मि स्वयोग्यतया पूर्णोऽस्मीति मन्यते सोऽस्य परमात्मनः परमो लोक आश्रयः ।। २० ।।

पूर्णत्वमस्य कुतोऽभूदित्यत आह– **तद्वा इति** ।। अस्य भगवतः तत्प्रसिद्धमेतत् रूपमतिच्छन्दा अतिक्रान्तानि च्छन्दांसि येनासावतिच्छन्दासामवाच्यं अपहतपाप्मा पापवर्जितमभयं भयरहितं भगवद्रूपस्यैवंविधत्वेऽपि किमायातं प्रकृत इत्यतो भगवत्प्राप्त्या पूर्णत्वमस्येति सदृष्टान्तमाह– **तद्यथेति** ।। तत् निदर्शनं यथा । प्रियया मनोहरणसमर्थया स्त्रिया सम्परिष्वक्तः कामुको बाह्यं घटादिकं किञ्चन किमपि न वेद आन्तरं दुःखादिकं च न वेद स्त्रीपरिष्वङ्गेणैव पूर्णो भवति एवमेवायं पुरुषो जीवः प्राज्ञेन सर्वज्ञेनात्मना सम्परिष्वक्तः सुप्तो मुक्तो वा न बाह्यं किञ्चन वेद नान्तरं प्राज्ञात्मसंश्लेषेणैव पूर्णो भवतीत्यर्थः । भगवत्प्राप्तस्य महिमान्तरं वक्तुं प्रकृतभगवत्स्वरूपमाह– **तद्वा इति** ।। अस्यात्मनस्तत्प्रसिद्धमेतत् रूपं आप्तकामं आप्ता एव नत्वाप्तव्याः कामा येन तदाप्तकामं पूर्णसुखरूपत्वादात्मैव काम्यत इत्यात्मकामं अकामं विषयकामनारहितं शोकान्तरं शोकस्यान्तो भावो यस्मिन् तच्छोकान्तं रमत इति रं शोकान्तं च तद्रं चेति शोकान्तरम् ।। २१ ।।

इदानीमेतादृग्भगवद्रूपं प्राप्तस्य महिमानमाह– **अत्रेति** ।। तेनाप्तकामादिगुणेन भगवता सम्परिष्वक्तो जीवः पूर्वं स्वपुत्राणां पिताऽत्र सुप्तौ मुक्तौ वा अपिता भवति पूर्वं स्वपुत्राणां माताऽत्रामाता भवति तेषां दुःखेन स्वस्य

दुःखाभावात् पूर्वं लोकालोकाभिमानिनोऽत्रालोकाः तदा लोकाभिमानाभावात् पूर्वं देवा अपि अत्रादेवाः वर्षणादिरूपस्वाधिकाराभावात् पूर्वं वेदा वेदाभिमानिनोऽप्यत्रावेदाः वेदाभिमानाभावात् पूर्वं स्तेनस्तस्करोऽत्रास्तेनो भवति पूर्वं भ्रूणहाऽत्राभ्रूणहा भवति पूर्वं चण्डालोऽत्राचण्डालो भवति पूर्वं पौल्कसोऽत्रापौल्कसो भवति स्तैन्यादिपापफलस्याप्यपायात् पूर्वं श्रमणो यतिः अत्राश्रमणः यतिधर्मात्समुत्थितेः अत एव पूर्वं तापसोऽतापसः पुण्येनानिष्टेनानन्वागतं पापेनानन्वागतं हृद्ययनाद्धृदयस्य विष्णोः सम्प्राप्तिमात्रतस्तदा सुप्तौ मुक्तौ वा सर्वांच्छोकान् तीर्णो भवति । यद्वा तदा सर्वान् शोकान् तीर्णः हृदयस्य शेषभूतो भवतीत्यर्थः ॥ २२ ॥

एवमवस्थाप्रेरको भगवानित्युक्तं देशकालान्तरयोरन्योऽप्यवस्थाप्रेरकः किमित्याशङ्कापरिहाराय भगवतः समाभ्यधिकराहित्यरूपमहिमानमाह– **यद्वा इत्यादिना** ॥ नतु तद्द्वितीयमस्ति ततोऽन्यदिति प्रतिज्ञावाक्यं ततोऽन्यत् विष्णोरन्यत् तत् द्वितीयं तत्समं नैवास्तीत्यर्थः । तत्र हेतुः यद्वैतं न पश्यतीति ब्रह्म यद्यस्मात् तत् स्वसमं वस्तु न पश्यति तत्तस्मान्नतु तत् द्वितीयमस्तीति सम्बन्धः । ननु भगवददृष्टत्वेऽपि भगवत्समं कुतो नास्तीति चेत् यत्किञ्चिद् वस्तु भगवता न दृष्टं तन्नास्त्येवेति व्याप्तेरित्यप्याह– **यद्वैतन्न पश्यतीति** ॥ वैशब्दोऽवधारणार्थः । नञः आवृत्तिः पूर्वं प्रकृतब्रह्म यद् वस्तु न पश्यति तन्नास्त्येवेति व्याप्तेर्भगवददृष्टं भगवत्समं नास्त्येवेत्यर्थः । ननु यद्भगवता न दृष्टं तन्नास्त्येवेति कथं नह्यस्मदाद्यदृष्टं वस्तु नास्तीति वक्तुं शक्यते इत्यतो भवेदेवास्मदाद्यदृष्टं वस्तु अस्मदादीनामसर्वज्ञत्वाद् भगवांस्तु विद्यमानं सर्वं पश्यन्वै स चेन्न पश्यति तदा नास्त्येवेत्याह– **पश्यन्वा इति** ॥ ननु विष्णोः सार्वज्ञं किं भ्रान्त्या नेत्याह– **नहीति** ॥ हि यस्मात् द्रष्टुर्भगवतो दृष्टेर्विपरिलोपोऽयथार्थत्वं न तस्मान्न भ्रान्त्या सार्वज्ञं तत्र हेतुमाह– **अविनाशित्वादिति** ॥ निर्दोषत्वादबाधाच्चेत्यर्थः । ननु यथाऽस्मदादीनां भ्रान्तत्वेनास्मदादिदृष्टविरुद्धद्रष्टा अस्मदाद्यदृष्टद्रष्टा च भगवांस्तथा भगवद्दृष्ट-

विरुद्धद्रष्टा भगवद्दृष्टादन्यवस्तुद्रष्टा च यद्यन्यः स्यात्तदा कथं भगवान् सर्वज्ञः स्यादिति चेत् स्यादेतदेवं यदि भगवद्दृष्टादन्यवस्तुद्रष्टा भगवद्दृष्टविरुद्धद्रष्टा च स्यात् नचासावस्तीत्याह– **नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्य-दिति** ।। तुशब्दो हिशब्दार्थश्च ततोऽन्यद्भगवद्दृष्टादन्यत् ततो विभक्तं भगवद्दृष्टाद् विरुद्धं वस्तु यत्पश्येत् तत् द्वितीयं भगवद्व्यतिरिक्तं द्रष्टृ नैवास्ति हि यस्मात्तस्माद् विद्यमानं सर्वं पश्यन्वै इत्यर्थः ।। २३ ।।

ननु चक्षुषा स्वसमानवस्तुदर्शनाभावेऽपीन्द्रियान्तरेण स्यादित्यत आह– **यद्वैतन्न जिघ्रतीत्यादि** ।। योजना तु पूर्ववदेव । घ्रातेः घ्राणसम्बन्धिज्ञानस्य ।। २४ ।।

रसयतेः रासनज्ञानस्य ।। २५ ।।

वक्तेर्वागिन्द्रियव्यापारस्य विपरिलोपोऽसत्यत्वम् ।। २६ ।।

श्रुतेः श्रोत्रज्ञानस्य ।। २७ ।।

मतेर्मानसज्ञानस्य ।। २८ ।।

स्पृष्टेः स्पार्शनज्ञानस्य ।। २९ ।।

विज्ञातेः अन्तःकरणप्रभेदबुद्धिरूपेन्द्रियसम्बन्धिज्ञानस्य ।। ३० ।।

नतु तद्द्वितीयमस्तीति यद्भगवद्दृष्टान्यद्रष्टा नास्तीति उक्तं तदुपसंहरति– **यत्र वा अन्यदिव स्यादित्यादिना** ।। यत्र यदा अन्यद्भगवद्व्यतिरिक्तं अन्यदिव वै अल्पस्वातन्त्र्येणोपेतमपि भवेत् । तत्र वा तदैव अन्यो भगवद्व्यतिरिक्तः पुरुषः अन्यद्भगवद्दृष्टाद्भिन्नं पश्यतीत्यादि युज्यते तदेव नास्ति । अतो नान्योऽन्यत्पश्येदित्यर्थः ।। ३१ ।।

एवं द्रष्ट्रन्तरनिषेधमुपसंहृत्य तस्यैव सर्वद्रष्टृत्वमित्युक्तमुपसंहरति– **सलिल इति** ।। सलिले प्रकृतिरूपे एकः समवर्जितः अद्वैतः अद्वितीयोऽविरोधि द्वितीयशून्यः द्रष्टा विष्णुर्भवति तिष्ठति । लीलासहितः सलीलः सलील एव सलिलः इति वा । विष्णोरेव द्रष्टृत्वं नान्यस्येति कुत इत्यत आह–

**एष इति** ॥ हे सम्राट् एष आत्मा ब्रह्म पूर्णं लोको ज्ञानं यस्यासौ ब्रह्मलोक इति हैनं जनकमनुशशास याज्ञवल्क्य इत्यर्थः । यद्वा शुक्लस्य नीलस्येत्यादिना नाडीनां परस्परविलक्षणरूपवद्भिर्भगवद्रूपैर्व्याप्तत्वमुक्तं तेन भगवद्रूपाणां भेदः प्राप्तः तथा तद्वा अस्यैतदाप्तकाममित्यत्र षष्ठ्या रूपरूपिभेदश्च तन्निराकर्तुमाह– **यद्वैतमिति** ॥ हृदयशब्दप्रकृतं ब्रह्म यद्यस्मात् तत् शुक्लादिकं रूपं द्वैतं स्वतः परस्परं च भिन्नं न पश्यति तत्तस्मात् तत् द्वितीयं नास्ति न भवति भगवता भिन्नत्वेनादृष्टत्वेऽपि कुतो न भिन्नं नह्यस्माभिः शुक्तिकाया भिन्नत्वेन रजतं न दृश्यत इत्येतावता तत्ततो न भिन्नमित्यत आह– **पश्यन्निति** ॥ पश्यन् सर्वज्ञ एव सन् तच्छुक्लादिकं भिन्नत्वेन न पश्यति वै एवं तर्हि जीवजडात्मकं विश्वमपि किं ततो न भिन्नं नेत्याह– **ततोऽन्यद्विभक्तं यत्पश्येदिति** ॥ यद्यस्माद्भगवान् यज्जीवादिकं स्वतो विभक्तं भिन्नं पश्येत् तस्मात्ततोऽन्यदेव भगवता भेदेन दृष्टत्वेऽपि कुतो भिन्नं नहि चन्द्रश्चन्द्राद्भिन्नत्वेनास्माभिर्दृश्यत इत्येतावता भिन्न इत्यत आह– **नहीति** ॥ द्रष्टुः परमेश्वरस्य दृष्टेर्ज्ञानस्य विपरिलोपो वैपरीत्यमयथार्थत्वं न विद्यते । कुतः अविनाशित्वान्निर्दोषत्वादबाधाच्चेत्यर्थः । ततोऽन्यद् विभक्तं यत्पश्येदिति यद्भेदसत्यत्वमुक्तं तदिदानीमभेदनिषेधेनोपसंहरति– **यत्र वेति** ॥ यत्र यस्मिन्पक्षेऽन्यदिव स्वतो भिन्नमप्यस्वातन्त्र्येण निमित्तेनान्यदिव स्थितं स्यादस्ति तत्रैव पक्षेऽन्यः पुरुषोऽन्यद्घटादिकं पश्येदित्यादि युज्यते । यत्र तु पक्षे तदेव नास्ति न तत्रान्यदर्शनादिव्यवहारो युज्यत इत्यर्थः । स्वगतभेदशून्यस्यैव भगवतो महिमान्तरमाह– **सलिल इति** ॥ व्याख्यानं पूर्ववत् । तस्यैव महिमान्तरमाह– **एषेति** ॥ अस्य विष्णोरेषा गतिः परमा सार्वत्रिकत्वात् । अस्यैषा सम्पत्परमा निरतिशयपूर्णत्वात् । अस्यैष लोको ज्ञानं परमः सर्वविषयत्वात् । अस्यैष आनन्दः परमः पूर्णत्वात् । ननु ब्रह्मरुद्राद्यानन्दस्यापि पूर्णत्वेन परमत्वात्कथमेषोऽस्य परम आनन्दः इत्युक्तमित्यत आह– **एतस्यैवेति** ॥ अन्यानि भूतानि ब्रह्मादीनि मुक्तान्यपि

एतस्य विष्णोरेवानन्दस्य मात्रां प्रतिबिम्बरूपविप्लुट्कमुपजीवन्ति अश्नन्तीत्यर्थः ॥ ३२ ॥

ननु ब्रह्मादयः किं परमात्मानन्दप्रतिबिम्बभूतं विप्लुडानन्दं साम्येनैवाश्नन्ति उत तारतम्येनेति जिज्ञासायां तारतम्येनैवेत्याह– **स इत्यादिना** ॥ स प्रसिद्धो यो मनुष्याणां चक्रवर्तिनां मध्ये राद्धः संसिद्धो मुक्तः समृद्धो यावत्साधनैः साधयितुं शक्यते तावत्सम्पूर्णत्वेन मुक्तः स्वराष्ट्रे ज्ञानोपदेष्टृत्वादन्येषामधिपतिर्मानुष्यकैर्मनुष्यत्वदशायां ज्ञानोत्तरकृतदानादिफलभूतैः सर्वैर्भोगैः सम्पन्नतमो भवति स मनुष्याणां परम आनन्दः आविर्भूतस्वरूपानन्दः । आनन्दतद्वतोरभेदात् स मनुष्याणां मध्ये परमानन्दीत्यर्थः । यद्वा स इति तदीयानन्दपरामर्शः तदुत्तरकक्ष्यमाह– **अथेति** ॥ ये मनुष्याणां शतमानन्दाः स एको जितो लोको ब्रह्मज्ञानं यैस्ते जितलोका मुक्तास्तेषां पितॄणामानन्दः । अत्र शतशब्दो दशलक्षपरः मनुष्येभ्यो मनुष्यगन्धर्वाणां तेभ्यो देवगन्धर्वाणां तेभ्यः पितॄणां शतगुणानन्दवत्त्वस्यान्यत्रोक्तत्वात् । अथ जितलोकानां पितॄणां ये शतमानन्दाः स एको गन्धर्वलोके गन्धर्वाणां ब्रह्मज्ञाने मुक्तौ मुक्तानां गन्धर्वाणामानन्द इत्यर्थः । उत्तमगन्धर्वापेक्षयैवैतत् । अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानां मुक्तानामानन्दः । के कर्मदेवता इत्यत आह– **य इति** ॥ अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानां जातेभ्योऽवराणामिन्द्रादीनामानन्दः । तेषां मुक्तत्वज्ञापकमाह– **यश्चेति** ॥ वचनव्यत्यासः ये श्रोत्रियाः श्रुतिफलं प्राप्ताः अवृजिना दुःखरहिताः अकामहताः कामैरहताश्च तेषामाजानदेवानामिति सम्बन्धः । अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोके ब्रह्मणां लोके ब्रह्मज्ञाने मुक्तावानन्दः । ये श्रोत्रिया अवृजिना अकामहताश्च तेषां ब्रह्मणामित्यन्वयः । हे सम्राट् एवं तारतम्ये स्थितानि ब्रह्मादीनि मुक्तानि एतस्यानन्दस्य मात्रामेवोपजीवन्ति यस्मात् अथ तस्मादेष एव परमात्मा परम आनन्दः निरतिशयपूर्णानन्दः एष ब्रह्मलोकः पूर्णज्ञान इति होवाच याज्ञवल्क्यः । राजाह– **सोऽहमिति** ॥

अत्रैवं राज्ञा पृष्टे सति याज्ञवल्क्यो बिभयाश्चकार भीतवान् । भयनिमित्तमाह– **मेधावीति** ।। मेधावी प्रज्ञावान् राजा सर्वेभ्यः प्रश्नकर्तृभ्यस्तेभ्य आश्वलादिभ्यो मामुदरौत्सीत् उत्कृष्टतयावरोधं कृतवानिति ।। ३३ ।।

विमोक्षाय ब्रूहीत्युक्तो याज्ञवल्क्य आह– **स वा इति** ।। पूर्वस्यैव पुनर्वचनमभ्यासार्थम् ।। ३४ ।।

एवं सुप्त्यादिनियामको भगवानित्युक्तं इदानीं मरणनियामकोऽपि स एवेत्याह– **तद्यथेति** ।। तत् निदर्शनं यथा सुसमाहितं पुमधिष्ठितं अनः ग्रामादिकं उत्सर्जद्यायाद् गच्छेत् एवमेवायं शारीरः शरीराभिमानी आत्मा जीवो यत्र यदा ऊर्ध्वोच्छ्वासी भवति एतत् एतस्मिन्काले प्राज्ञेनात्मना परमात्मना अन्वारूढो देहं उत्सर्जत्परित्यजन्याति ।। ३५ ।।

न केवलं साधारणमरण एव भगवतान्वारूढो जीवः किन्तु मोक्षरूपमरणेऽपीत्याह– **स इति** ।। सोऽयं जीवः यत्र यदा अणिमानं भगवन्तं न्येति निर्गच्छति भगवत्प्राप्तिरूपं मोक्षं गन्तुमिच्छतीति यावत् । तदा प्राज्ञेनात्मना परमात्मनान्वारूढो देहं उत्सर्जदिति सम्बन्धः । भगवन्तं कदा न्येतीत्यत आह– **जरयेति** ।। जरया वोपतपता उपतापयतीत्युपतपन् रोगादिस्तेन वा अणिमानं निगच्छति । ननु सर्वेऽपि जरयैवाणिमानं निगच्छन्ति अतः कथमुपतपता वेति पक्षान्तरोक्तिरित्यतो नायं नियम इति सदृष्टान्तमाह– **तद्यथेति** ।। तत् निदर्शनं यथा आम्रं वा फलं बाल्ये औदुम्बरं फलं परिणामे पिप्पलं अश्वत्थफलं वा सम्यक् पाके बन्धनात्प्रमुच्यते पतति एवमेवायं पुरुषः कलौ बाल्ये त्रेतादौ मध्यमे वयसि कृते चरमे वयसि येभ्योऽगेभ्यः शरीरावयवेभ्यः शरीरादिति यावत् संप्रमुच्य प्रतिन्यायं प्रतियोनि प्राणायैव वायवे एव पुनराद्रवति पूर्वमेकदा वायुं प्राप्य जायस्व ज्ञानमाप्नुहीति तद्द्वारादेवोत्पद्य ज्ञानं सम्पाद्य पुनः प्राणं प्राप्नोति ततो भगवन्तं प्राप्नोतीत्यर्थः ।। ३६ ।।

स जीवो यदा भगवन्तं प्रतिगच्छति तदा विशेषमाह– **तद्यथेति** ॥ तत् निदर्शनं यथा अयान्तमागच्छन्तं राजानं दृष्ट्वा उग्राः श्रेणयः प्रत्येनसो योधाः सूताश्च ग्रामण्यश्च भूपालाश्चेति सूतग्रामण्यो जनपदस्थाः अन्नैः पानैरावसथैरावासस्थानैः पूजां प्रतिकल्पन्ते कल्पयन्ति । कथं दूरादागच्छतो राज्ञो दर्शनं च तेषामित्यत आह– **अयमिति** ॥ अयं ध्वज आगच्छति तस्मादयं राजाप्यायातीति ज्ञात्वा प्रतिकल्पन्त इति सम्बन्धः । एवमेवंविदं पूर्वोक्तप्रकारेण भगवदपरोक्षज्ञानिनमायान्तं दृष्ट्वा सर्वाणि भूतानि अर्चिरादिदैवतानि पूजां प्रतिकल्पन्ते । ननु ज्ञानिन्यागते देवैः किमिति पूजा कल्पनीया उग्रादिवत्तेषां तद्भृत्यत्वाभावादित्यत आह– **इदमिति** ॥ इदं मुक्तजीवस्वरूपमागच्छति अतः अनेन स ह इदं परं ब्रह्मायातीति तत्पूजार्थं प्रतिकल्पन्त इत्यर्थः ॥ ३७ ॥

मुक्तं जीवमादाय भगवानेक एव गच्छति किं नेति भावेनाह– **तदिति** ॥ तन्निदर्शनं यथा राजानं प्रयियासन्तं गच्छन्तं राज्ञा सह स्थिता उग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायान्ति एवमेवेममात्मानं मुक्तमादाय गच्छन्तं परमात्मानं अन्तकाले मोक्षकाले सर्वे प्राणाः शरीरस्थाः वागादीन्द्रियदेवाः अभितः समायान्ति । अन्तकालमेवाह– **यत्रेति** ॥ ३८ ॥

इति ज्योतिर्ब्राह्मणम् ॥ ३ ॥

उपनिषत्——

## अथ शारीरब्राह्मणम्

[मरणकाले मोहः]

**स यत्रायमात्मा बल्यं न्येत्य सम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैव चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥**

भाष्यम्——

**सर्वेषां बलकारित्वाद् बल्यो विष्णुः प्रकीर्तितः ।**
**तं यदा प्राप्य जीवात्मा मृतेः पूर्वं विमुग्धताम् ॥**
**याति विष्णुं तदा देवा यान्ति तेजःस्वरूपिणः ।**
**तानादाय हरिश्चक्षुस्थानाद्धृदयमाव्रजेत् ॥**
**तदा न किञ्चिज्जानाति जीवो ब्रह्मसमाश्रितः ॥ इति च ॥**

**एनं बल्यमभिसमायान्ति । पराक् स्थितश्चाक्षुषो भगवान् प्रत्यक् परावर्तते ।**
**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः ॥ इत्यादि श्रुतेः ॥**

टिप्पणी——

'तद्यथाऽन' इत्यादिना निरूपितमन्त्यमरणप्रकारमेव विविच्य दर्शयति– **स यत्रेत्यादिना** ॥ स यत्रायमात्मा बल्यं न्येत्यत्राबल्यमबलभावं दौर्बल्यमिति व्याख्यानमसत् प्रमाणविरुद्धत्वादिति भावेन प्रमाणेन बल्यशब्दार्थमाह– **सर्वेषामिति** ॥ बलसम्बन्धी बल्यः सम्बन्धश्च तत्कारित्वमित्यभिप्रेत्य बलकारित्वादित्युक्तं सङ्कोचे कारणाभावात्सर्वेषामिति ॥ नन्वेवं स आत्मा बल्यं न्येत्यसम्मोहमिव न्येतीत्यनुपपन्नं जीवस्य विष्णुप्राप्तेरेव मरणरूपत्वेन तदनन्तरं सम्मोहप्राप्त्यसम्भवात् । दौर्बल्यप्राप्त्यनन्तरं सम्मोहप्राप्तेश्च सम्भावितत्वादित्याशङ्कां परिहरन् स यत्रायमित्यादि प्राणा अभिसमायन्तीत्यन्तं वाक्यं व्याचष्टे– **तं यदेति** ॥ यत्रेत्यस्यार्थो यदेति न्येत्यस्यार्थः प्राप्येति श्रौतात्मशब्दस्य विष्णुपरत्वे सम्मोहप्राप्त्यादेरसम्भवादाह– **जीवात्मेति** ॥ उक्तशङ्कापरिहाराय मृतेः पूर्वमिति शेषोक्तिः । न्येतीत्यस्यार्थो यातीति एनमित्यस्यार्थो विष्णुमिति अथेत्यस्यार्थस्तदेति एते प्राणा इत्यस्यार्थो देवा इति स एतास्तेजोमात्रा इत्युत्तरत्रानुवादादाह– **तेजःस्वरूपिण इति** ॥ स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति वाक्यं व्याचष्टे– **तानादायेति** ॥ स यत्रैव चाक्षुष इत्युत्तरत्रानुवादाच्चक्षुःस्थानादित्युक्तम् । अथारूपज्ञो भवतीत्युक्तरूपाज्ञत्वं प्रकृतचाक्षुषपुरुषस्य विष्णोरुच्यत इति

प्रतीतिं परिहरन् अथारूपज्ञो भवतीत्येतद् व्याचष्टे– **तदेति** ॥ अनेन तदा कस्यापि ज्ञानाभावेनारूपज्ञ इति विशिष्योक्तिः कथमिति शङ्का परिहृता । रूपशब्दस्योपलक्षकत्वाङ्गीकारात् । ब्रह्मसमाश्रित इत्युक्त्या जीवस्याप्रकृतत्वशङ्का निरस्ता । बल्यं न्येत्येति ब्रह्मसमाश्रितत्वेन प्रकृतत्वात् । ननु अथैनमेते प्राणा इत्यत्रैनमिति पूर्वप्रकृतजीवपरामर्शप्रतीतेः कथं विष्णुमिति व्याख्यानमित्यत आह– **एनमिति** ॥ जीवपरत्वे प्राणानां तदभिगमनं न स्यादिति बाधकसूचनायाभिसमायन्तीत्यनुवादः । स चाक्षुषः पुरुषो जीवो यत्र यदा पराक् बहिः पर्यावर्तते तदा अरूपज्ञो भवतीति प्रतीतिनिरासाय किञ्चिदध्याहारेण तद् व्याचष्टे– **पराक्स्थित इति** ॥ बहिर्व्यापारं कुर्वन् स्थित इत्यर्थः । प्रत्यक् अन्तर्हृदयस्थानम् । अन्यथा यथाश्रुतार्थाङ्गीकारे उक्तानुवादरूपत्वानुपपत्तेः । चाक्षुषो भगवानित्युक्त्या भगवतश्चक्षुःस्थत्वमुक्तं तत्र प्रमाणमाह– **इन्ध इति** ॥ १ ॥

उपनिषत्——

**एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति स विज्ञानमेवान्ववक्रमति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥**

भाष्यम्—

**हृदये संस्थितो जीवो विशेषेण हरिस्तथा।**
**चक्षुरादिषु रूपाणि जाग्रत्काले तयोस्सदा॥**
**बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः।**
**हृदयस्थेन रूपेण तदा जीवो न किञ्चन॥**
**जानातीति विदुः प्राज्ञास्तदा विष्णोः स्वतेजसा।**
**द्योतते हृदयाग्रं च तेन द्वारेण केशवः।**
**निष्क्रामेज्जीवमादाय प्राण एनमनुव्रजेत्॥**
**प्राणमन्ये तथा देवा विद्या कर्म च योग्यता॥**

इति महामीमांसायाम्॥

**कर्माभिमानी गरुडो ब्रह्मा ज्ञानाभिमानवान्।**
**पूर्वपज्ञा योग्यता स्याद्रमा तदभिमानिनी॥**
**एतेऽपि विष्णुं गच्छन्तमनुयान्ति सदैव हि।**
**वायुर्ज्ञानात्मकश्चैव प्राणात्मक इति द्विधा॥**
**अनुयाति हृषीकेशं सर्वैर्देवैः समन्वितः॥ इति च॥**

टिप्पणी—

एकीभवति न पश्यतीत्याहुरित्यादिवाक्यं अप्रतिपत्तिविप्रतिपत्तिनिरासाय व्याख्यातुं किञ्चित्प्रमेयमाह– **हृदय इति**॥ ननु जीवस्य हृदयस्थत्वे सर्वदेहगतस्पर्शादि-ज्ञानं चक्षुरादिना रूपादिज्ञानं कथं स्यादित्यत आह– **विशेषेणेति**॥ किं तत इत्यत आह– **चक्षुरादिष्विति**॥ तयोर्जीवेशयोः रूपाणि जाग्रत्काले चक्षुरादिषु बहूनि सन्ति अतः सर्वगतः स्पर्शादिज्ञानोपपत्तिः। जीवपक्षे रूपाणीत्यस्य प्रकाशगुणेन विशेषसन्निधानं विवक्षितम्। यथोक्तमैतरेयभाष्ये– जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवदिति। इदानीं तद् वाक्यं व्याचष्टे– **तान्येवेति**॥ तानि चक्षुरादिषु स्थितानि जीवरूपाणि विष्णुरूपाणि च हृदयस्थेन जीवरूपेण विष्णुरूपेण च इत्याहुरित्यस्यार्थः

इति विदुः प्राज्ञा इति । ननु देहान्तः सूर्यादितेजसोऽभावात् केन हृदयाग्रद्योतनमित्याशङ्कां परिहरन् तस्य हैतस्येति वाक्यं व्याचष्टे– **तदेति** ।। स्वतेजसा स्वरूपभूततेजसा । तेन प्रद्योतेनैष आत्मा निष्क्रामतीति वाक्यं जीवपरत्वनिरासाय व्याचष्टे– **तेनेति** ।। तमुत्क्रामन्तं प्राणोऽनूत्क्रमतीत्यस्यार्थ-माह– **प्राण इति** ।। प्राणमनूत्क्रामन्तमित्यादेरर्थमाह– **प्राणमन्य इति** ।। अन्ये देवाः प्राणमनुव्रजेयुः । अत्र विशेषस्तु 'अन्येषां म्रियमाणानां प्राणा भागत एवतु । देवतास्वेकतां यान्ति भागतोऽनुव्रजन्ति तम् । ज्ञानिनां मुच्यमानानां नैव यान्ति स्म देवताः । तेनैव सह संयान्ति ततोऽनूत्क्रमणा श्रुतिः' इति वचनादवगन्तव्यः । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेत्य-स्यार्थमाह– **विद्येति** ।। विद्याकर्मयोग्यताशब्दैः प्रसिद्धविद्यादिकमेवोच्यत इति प्रतीतिनिरासाय तेषां शब्दानां विवक्षितमर्थं प्रमाणेनाह– **कर्मेति** ।। न केवलं ब्रह्मैव ज्ञानाभिमानी विष्णुमनुगच्छति किन्तु वायुरपि तर्हि तस्य प्राणोऽनूत्क्रमतीत्यनुगमनस्याभिहितत्वातर् पुनरुक्तिरित्याशङ्कां परिहरति– **वायु-रिति** ।। प्राणात्मकश्चेति द्विधैवेति सम्बन्धः ।।

**भाष्यम्**—

[उत्क्रमणद्वाराणि]

**देवलोके चिरं रत्वा यस्तु मुक्तिं व्रजिष्यति ।**
**सतु तद्देवताद्वारेणोत्क्रामति न संशयः ।।**
**विष्णोर्लोकं परं गच्छन्नुत्क्रामेन्मूर्ध्न एव तु ।**
**तथैव ब्रह्मणो लोकं सुषुम्नाया विभेदतः ।। इत्यध्यात्मे ।।**

**सविज्ञानो भवति । जीवेन सहितो भवति । स विज्ञानं जीवमेवान्ववक्रामति । जीवमारुह्य गच्छति भगवान् प्राज्ञेनात्मनाऽन्वारूढ इति ह्युक्तम् ।**

**'यो विज्ञाने तिष्ठन्य आत्मनि तिष्ठन्' इत्युभयोर्जीवाभिप्रायेण हि पाठः । 'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति भगवद्वचनम् । 'विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र' इति च ।**

**टिप्पणी—**

ननु हृदयाग्रप्रद्योतनप्रकाशितद्वारेण गच्छन् ज्ञानी मूर्ध्न एव गच्छतीति प्रतीयते निर्भिद्य मूर्धन् व्यसृजेत्परङ्गत इति वचनात् । अतश्चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्य इत्युक्तिः कथमित्यत आह– **देवलोक इति** ।। यद्देवलोक इत्यर्थः । तद्देवताद्वारेण तद्देवताभिमतचक्षुरादिद्वारेण । ब्रह्मणश्चतुर्मुखस्य लोकं गच्छन्नपि तथैव मूर्ध्न एवोत्क्रामेत् तर्ह्यनयोः को विशेष इत्यत आह– **सुषुम्नाया विभेदत इति** ।। विष्णुलोकं गच्छन् सुषुम्नया मूर्धानं गत्वोत्क्रामेत् ब्रह्मलोकं गच्छंस्तु सुषुम्नाप्रभेदेन मूर्धानं गत्वोत्क्रामतीति तयोर्विशेष इत्यर्थः । स विज्ञानो भवतीत्यस्य स परमात्मा विज्ञानो भवतीत्यर्थप्रतीतिनिरासाय तदनूद्य व्याचष्टे– **स विज्ञान इति** ।। नन्वेवं स विज्ञानमेवान्ववक्रामतीत्यस्य जीवसहितं भगवन्तमन्वक्रामतीत्यर्थः स्यात् नचासौ युक्तः । जीवसहितभगवन्तं प्रतिगन्तुरभावादित्यतस्तद् वाक्यं यथावद् व्याचष्टे– **स इति** ।। ननु जीवः पूर्वमेव भगवन्तं प्राप्तोऽस्त्येव । बल्सं न्येतीत्युक्तत्वात् तथाच स भगवान् जीवमन्ववक्रामतीति कथमुच्यत इत्यतस्तदभिप्रायमाह– **जीवमिति** ।। भगवान् जीवमारुह्य गच्छतीत्यत्र प्रमाणमाह– **प्राज्ञेनेति** ।। नन्वत्र विज्ञानशब्दो जीवपरः कुत इति चेत् यो विज्ञाने तिष्ठन्नित्यन्तर्यामिब्राह्मणे माध्यन्दिनशाखिनां आत्मशब्दस्य जीवाभिप्रायेण पाठात् । तत्समाख्ययात्रापि विज्ञानशब्दस्य जीवपरत्वोपपत्तेरिति भावेनाह– **य इति** ।। उभयोः काण्वमाध्यन्दिनशाखिनो-र्विज्ञानात्मशब्दयोः जीवाभिप्रायेण पाठ इत्यत्र नियामकं सूत्रं पठति– **शारीरश्चेति** ।। नच स्मार्तमिति पूर्वसूत्रान्नञोऽनुकर्षणार्थश्चशब्दः । शारीरो जीवश्च नान्तर्यामी कुतः यतः उभयेऽपि काण्वमाध्यन्दिनाश्च यो विज्ञाने तिष्ठन्निति य आत्मनि तिष्ठन्निति एनं जीवमन्तर्यामिणो भेदेनाधीयत इति भगवद्वचनेन विज्ञानात्मशब्दयोर्जीवपरत्वोक्तेस्तयोर्जीवाभिप्रायेण पाठ इति सिद्धमित्यर्थः । विज्ञानशब्दस्य जीववाचित्वे स्पष्टं च प्रमाणमाह– **विज्ञानात्मेति** ।। तदेतदक्षरं वेदते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति वाक्यशेषः ।

विज्ञानात्मा विज्ञानस्वरूपो जीवः प्राणाश्चक्षुरादयः भूतानि पृथिव्यादीनि सर्वैर्देवैरभिमानिभिः सूर्याद्यैस्सह यत्र यस्मिन्नक्षरे सम्प्रतिष्ठति तदेतदक्षरं वेदते विजानाति यः पुरुषः स सर्वज्ञः सर्वं परब्रह्माविवेशैव ध्रुवमाविशत्येवेत्यर्थः । नचात्र विज्ञानात्मशब्दो ब्रह्मपरः यत्र सम्प्रतिष्ठन्तीत्युक्तिविरोधात् । किञ्च षट्प्रश्नोपनिषदि पूर्वोक्तार्थे ह्ययं मन्त्र उदाह्रियते पूवोक्तश्चार्थो जीवस्य विज्ञानरूपत्वं सुषुप्तौ कस्य सुखं भवतीति पृष्टे शरीरे सुखं भवतीत्युक्तत्वात् शरीरशब्दस्य ज्ञानात्मकत्वेन भगवत्सादृश्ययुक्तजीवपरत्वात् । यथोक्तं 'सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुखं भवेत्' इति ॥

**भाष्यम्——**

[मरणं भगवदधीनम्]

**एष आत्मा निष्क्रामतीति जीवाङ्गीकारे 'शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्यादिकमयुक्तं स्यात् । नहि जीवः शरीरं निहन्तययाविद्यां गमयति रूपान्तरं वा करोति । नच सर्वमयत्वं जीवस्य । ब्रह्मेति विशेषणाच्च ।**

**टिप्पणी——**

ननु तेन प्रद्योतेनैष आत्मा जीवो निष्क्रामतीत्येवार्थः किन्न स्यात् । बाधकाभावात् । अतः किं विष्णुपरतया व्याख्यानेनेत्यतस्तत्र बाधकमाह– **एष इति** ।। यद्यत्रात्मशब्दो जीवपरस्तर्ह्युत्तरत्रापि अयमात्मेदं शरीरं निहत्येत्यत्र स वा अयमात्मा ब्रह्मेत्यत्र चात्मशब्दो जीवपर इत्यङ्गीकारापातेन इदं शरीरं निहत्येत्यादिकमपि जीवकर्तृकमित्यङ्गीकर्तव्यं स्यात् । नच तद् युक्तमित्यर्थः । कुतो न युक्तमित्यत आह– **नहीति** ।। स वा अयमात्मा ब्रह्मेत्यत्रात्मशब्दस्य जीवपरत्वायोगे हेतुमाह– **नचेति** ।। अत्रात्मशब्दस्य जीवपरत्वे विज्ञानमयत्वादेः कथञ्चित्तस्मिन् सम्भवेऽपि सर्वमय इत्युक्तं सर्वप्राधान्यं जीवस्य कथमपि न युज्यते । नच सर्वमय इति सर्वस्वरूपत्वमुच्यत इति वाच्यम् । त्वयापि जीवस्य विशिष्टस्य सर्वस्वरूपत्वानङ्गीकारात् ।

जीवचैतन्यस्य सर्वचैतन्याभेदार्थत्वे च लक्षणापातात् । अतो नायमात्मशब्दो जीवपर इत्यर्थः । तत्रैव हेत्वन्तरमाह– **ब्रह्मेति** ॥

उपनिषत्——

**तद्यथा तृणजलूका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरत्येवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ॥ ३ ॥**

भाष्यम्——

**यथा तृणजलूकैवं भगवान् पुरुषोत्तमः ।**
**जीवस्य सूक्ष्मरूपं तु प्राप्य स्थूलं परित्यजेत् ॥**
**इदं शरीरं भूतेषु विलापयति केशवः ।**
**अविद्यां चैव जीवस्य गमयेज्ज्ञानसर्जनात् ।**

टिप्पणी——

ननु मुच्यमानस्य देहान्तरप्राप्तेरसम्भवात्कथं तृणजलूका दृष्टान्त इत्यतस्तज्जीवपरमिति प्रतीतिनिरासाय प्रमाणेन व्याचष्टे– **यथेति** ॥ अयमात्मेत्यस्यार्थो भगवान्पुरुषोत्तम इति । जीवस्य सूक्ष्मरूपं सूक्ष्मशरीरं लिङ्गशरीरं प्राप्येत्यनेनान्यमाक्रममाक्रम्येत्येतद् व्याख्यातं आत्मानमुपसंहरतीत्यस्यार्थः स्थूलं देहं परित्यजेदिति । इदं शरीरं निहत्येत्यस्यार्थमाह– **इदमिति** ॥ अविद्याङ्गमयित्वेप्यस्यार्थमाह– **अविद्या चैवेति** ॥ ज्ञानसर्जनादेवेत्यन्वयः ॥ ३ ॥

उपनिषत्——

[योग्यानामेव मुक्तिः]

**तद् यथा पेशस्करी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुत एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं**

वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

भाष्यम्—

स्वर्णकारो यथा स्वर्णमलमग्नौ निहत्य च ।
शुद्धेन तेन चात्मेष्टं कुरुते रूपमञ्जसा ॥
एवं स भगवान् विष्णुर्जीवस्वर्णस्य यन्मलम् ।
अविद्याकामकर्माद्यमात्माग्नौ नाश्य सर्वकृत् ।
स्वेच्छया कुरुते रूपं यद्योग्यं तस्य मुक्तिगम् ॥
पितृजीवस्य पित्र्यं स गान्धर्वं तस्य चैव हि ।
दैवं तु देवजीवस्य प्राजापत्यं प्रजापतेः ॥
ब्रह्मणो ब्राह्ममेवेति नित्यानन्दस्वरूपकम् ।
न योग्यतां विना क्वापि पूर्वप्रज्ञाश्रुतेः क्वचित् ।
यदा मुक्तो भवेद् ब्रह्मा तदा ब्रह्मा स मुख्यतः ।
एवं प्रजापतिश्चैव तथैवान्येऽपि सर्वशः ।
यथा हि स्वर्णरूप्याद्यं मलहानौ हि तद्भवेत् ।
पूर्वं तु योग्यतामात्रं द्विजत्वं बालके यथा ॥ इत्यादि च ॥

टिप्पणी—

तद् यथा पेशस्कारी पेशसो मात्रामुपादायेत्यादि व्याचष्टे— **स्वर्णकार इति** ॥ कल्याणतरमित्यस्यार्थः स्वर्णमलमग्नौ निहत्येति आत्मेष्टं रूपं रुचककटकादिकं आत्माग्नौ आत्मज्ञानाग्नौ स्वेच्छयाप्ययोग्यानां योग्यं रूपं करोति किमित्यत आह— **यद्योग्यमिति** ॥ एतदेव विवृण्वन् पित्र्यं वेत्यादेरर्थमाह— **पितृजीवस्येति** ॥ पित्र्यं रूपं कुरुत इति सम्बन्धः । तस्य गन्धर्वजीवस्य गान्धर्वमेवेति सम्बन्धः । प्रजापतेः रुद्रस्य । ननु भवत्वेवमुत्सर्गः तथापि क्वापि देशे क्वापि काले तत्तद्योग्यतातिक्रमेणापि करोति किं नेत्याह— **नेति** ॥ विना

रूपं कुरुते इत्यनुवर्तते । ननु स्यादेतद् यदि योग्यतैव सिद्धा स्यात् सैव कुत इत्यत आह— **पूर्वप्रज्ञेति** ।। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतेर्योग्यतासिद्धिरित्यर्थः । ननु पित्रादिजीवस्य पित्र्यादिरूपं कुरुत इति कथं पित्रादीनां पित्र्यादे रूपस्य पूर्वमेव सिद्धत्वात् सिद्धस्य करणायोगादित्यतः तदभिप्रायमाह— **यदेति** ।। ब्रह्मा यदा मुक्तो भवेत् तदैव स मुख्यतो ब्रह्म एवमेव प्रजापतिरपि रुद्रोऽपि शेष इति यावत् यदा मुक्तो भवेत् तदैव मुख्यतः प्रजापतिः अन्येऽपि देवाद्या यदा मुक्ता भवेयुस्तदैव ते मुख्यतो देवाद्याः मुक्तेः पूर्वं तु ब्रह्मादीनां ब्रह्मत्वादियोग्यतामात्रं न मुख्यतो ब्रह्मत्वादिकं अविद्यावृतत्वादित्यर्थः । तथाच पूर्वं विद्यमानमपि पित्र्यादिरूप-मविद्यावृतं तन्निवर्तनेनैव शुद्धं करोतीति भावेनैव तत्करोतीति व्यपदेशो नतु पूर्वमविद्यमानकरणाभिप्रायेणेति भावः । अत्र दृष्टान्तमाह— **यथा हीति** ।। स्वर्णरूप्याद्यं तन्मयरुचककटकादिकं मलहानावेव तद्भवेत् मुख्यतः स्वर्णरूप्या-दिमयरुचककटकादिकं भवेत् पूर्वं मलसद्भावादशायां तु योग्यतामात्रं न मुख्यतः सुवर्णादिमयरुचककटकादिकमित्युच्यत इत्यर्थः । स्वर्णरूपादीति पाठेऽपि स्वर्णमयं रुचककटकादीत्येवार्थः । एकस्यैव पूर्वं योग्यतामात्रं पश्चादतिशयभावेन मुख्यतस्तद्भवनमित्यत्र स्पष्टं दृष्टान्तमाह— **द्विजत्वमिति** ।। बालके अनुपनीते यथा द्विजत्वं द्विजत्वयोग्यतैव नतु मुख्यतो द्विजत्वं उपनयनरूपसंस्कारे च यथा मुख्यतो द्विजत्वं तथेत्यर्थः ।

भाष्यम्——

**नह्यमुक्तानां कल्याणतरत्वम् । नच मृगादीनां कल्याणत्वमपि । मरण-मात्रं चेदत्रोच्यते तदा कल्याणतरमिति विशेषणं व्यर्थमेव स्यात् । पूर्वोक्तश्रोत्रियावृजिनाकामहतदेवादीनां चात्रोक्तिः । पूर्वाननुभूतत्वान्नवतरं च भवति ।**

> **अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।**
> **तथैव सुमहत् तेजः करोति भगवान् महत् ।।**

**अतो नवतरं चैतद् ब्रह्मादीनां करोत्यजः ॥**

**अन्येषां वा भूतानां मनुष्यादीनाम्। नासुरादीनां भविष्यतीति च।**

**टिप्पणी—**

एवं पित्र्यं वा गान्धर्वं वेत्यादिकं मुक्तपरत्वेन व्याख्यायेदानीं पित्र्यं पितृलोके भोगयोग्यं शरीरं कुरुते। एवं गान्धर्वमित्यादि अन्येषां भूतानां तिर्यगादि-सम्बन्धिशरीरं कुरुत इति यत्परेणामुक्तपरतया व्याख्यातं तद्दूषयति— **नहीति** ॥ किञ्चामुक्तानां पित्रादीनां कल्याणतरत्वाभावेऽपि कल्याणमात्रत्वं सम्भावितं तेषामविद्याकामकर्मादिरूपमलसद्भावेऽपि शारीरमलाभावात्। अन्येषां भूतानामित्युक्तानां तिर्यगादीनां कल्याणत्वमपि न सम्भवति। शारीरमलस्यापि सद्भावादिति भावेनाह— **नचेति** ॥ ननु अयमात्मेदं शरीरं निहत्य पातयित्वा अविद्यां गमयित्व चेतनं कृत्वा अन्यन्नवतरं कल्याणतरं रूपं शरीरं कुरुत इति मरणमात्रमेवात्रोच्यते मुक्तिरूपमरणे शरीरान्तरग्रहणायोगात् अतः कथं मुक्तपरत्वेन व्याख्यानमित्यत आह— **मरणमात्रं चेदिति** ॥ व्यर्थं विगतार्थं उक्तरीत्या विरुद्धार्थं च। किञ्च पित्र्यं गान्धर्वं वेत्यादिनोक्ताः पित्रादयो नामुक्ताः। स एकः पितॄणां जितलोकानामानन्द इत्यादिना पूर्वब्राह्मणोक्तानां पित्रादीनामेवात्रोक्तत्वात् तेषां च जितलोकत्वश्रोत्रियत्वादिभि-र्मुक्तत्वस्य निर्णीतत्वात्। नच तत्र पितरो गन्धर्वाः कर्मदेवाः आजानदेवाः प्रजापतिर्ब्रह्मा चेति षडुच्यन्ते अत्र पुनः पित्र्यं वेत्यादिना पञ्चैव अतः कथं तत्रोक्तानामेवात्रोक्तिरिति वाच्यम्। दैवमित्यस्य कर्मदेवाजानदेवसम्बन्धीति व्याख्यानात् इति भावेनाह— **पूर्वोक्तेति** ॥ ननु पित्र्यं वेत्याद्युक्तानां पित्रादीनाममुक्तत्वे यथा कल्याणतरत्वमयुक्तं तथा तेषां मुक्तत्वाङ्गीकारे नवतरत्वमनुपपन्नं पूर्वमविद्यमानस्वरूपप्राप्तेरभावादित्यत आह— **पूर्वेति** ॥ कल्याणतरत्वसमुच्चयार्थश्चशब्दः। प्रकारान्तरेणापि नवतरत्वं प्रमाणेन घटयति— **अल्पेति** ॥ संसृतौ जीवरूपमल्पतेज एव तथा परिमाणतोऽप्यल्पमेवास्ति हि यस्मात् संसृतावल्पतेजोजीवरूपं मुक्तौ सुमहत्तेजः करोति। तथैव संसृतावल्पं परमं सूक्ष्मं जीवरूपं मुक्तौ महत् महापरिमाणवत् करोति। अतो ब्रह्मादीनामेतद्रूपं नवतरं करोतीत्युच्यत इत्यर्थः। ननु पूर्व-

ब्राह्मणे स मनुष्याणां परम आनन्द इति चक्रवर्तिनोऽभिहिताः नचात्र तेऽभिधीयन्ते अतः कथं तत्रोक्तानामेवात्रोक्तिरित्यतः अन्येषां वा भूतानामित्यनेन तेऽप्युक्ता एवेत्याह– **अन्येषां वेति** ॥ मनुष्यादीनां चक्रवर्त्यादीनामित्यर्थः । पूर्वब्राह्मणे मनुष्यपदेन च चक्रवर्तिनामुक्तत्वात् । आदिपदेन मनुष्योत्तमा ग्राह्याः । पूर्वब्राह्मणे च चक्रवर्तिभ्यो नीचा मनुष्योत्तमा ग्राह्या एव । अन्येभ्योऽपि विमुक्तेभ्य आनन्दश्चक्रवर्तिनामित्युक्तत्वात् । नन्वन्येषां भूतानामिति सामान्यत एवोक्तत्वात्तेनोक्तव्यतिरिक्तभूतमात्रग्रहणं किन्न स्यादिति चेन्न । तमोयोग्यानां नित्यसंसारिणां च कल्याणतरं मौक्तं रूपं न भविष्यतीति प्रमाणसिद्धत्वेन तेन तेषां ग्रहणायोगादिति भावेनाह– **नासुरादीनामिति** ॥

उपनिषत्—

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमय-स्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोध-मयो धर्ममयोऽधर्ममयस्सर्वमयस्तद् यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेनाथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुभर्वति यत्क्रतुर्भवति तत्कर्म कुरुते यत् कर्म कुरुते तदभिसम्पद्यते ॥ ५ ॥**

भाष्यम्—

[ जीवेषु तारतम्यमप्रतिहतम् ]

[सुवर्णतारतम्यमिव जीवतारतम्यम्]

मयं तु मानुषं स्वर्णं पीतं गान्धर्वमेव च ।
इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम् ।

दैवं चामीकरं नाम प्रोद्यदादित्यसन्निभम् ।
नैजो विशेषः स्वर्णानामेतेषां सर्वदैव च ।
नाग्न्यादिनाऽपि समतां यान्ति तानि कथञ्चन ।
एवं मानुषगन्धर्वपितृदेवाः प्रजापतिः ।
ब्रह्मेति क्रमशो जीवा विशिष्टा उत्तरोत्तरम् ।
स्वभावेनैव मुक्तानां स्वभावो व्यक्तिमाव्रजेत् ।। इत्यादि च ।।

'स यत्रायमणिमानं न्येति' 'तस्य ह वै तस्य हृदयस्याग्रं प्रद्योतते' 'तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो विमुक्ताः' 'तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च' इत्येवमादेश्च मुक्तविषयमेवैतत्। मुक्तविषयत्वेन चैतत् प्रकरणं सूचयामास भगवान् । 'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्याद्' इत्यादिना।

टिप्पणी—

ननु यदि पूर्वब्राह्मणोक्तानामेव पित्रादीनामत्रोक्तिस्तर्हि तद्वदेवात्रापि तेषां तारतम्यं विवक्षितमिति वक्तव्यं नच तद् युक्तं तथात्वे सुवर्णदृष्टान्तानानुगुण्यात् । नहि स्वर्णे स्वाभाविकं तारतम्यं वर्तत इत्याशङ्कां प्रमाणेन परिहरति— **मयं त्विति** ।। तुशब्द एवार्थः पीतमेवेति सम्बन्धः । यतोऽयं नैजो विशेषः अतोऽग्न्यादिनापि तानि मानुषस्वर्णादीनि समतां न यान्ति । अग्न्यादिनेत्यादिपदेनौषधग्रहणं स्वभावेनैव विशिष्टा इति सम्बन्धः । किञ्च पित्र्यं वेत्यादिनोक्ताः पित्रादयो मुक्ता एवेत्यङ्गीकार्यं एतत्प्रकरणस्य मुक्तपरत्वात् तदेव कुत इति चेत् एतत्प्रकरणोपक्रमे स यत्रायमणिमानं न्येति स यत्रायमात्मा बल्यं न्येत्येति भगवत्प्राप्तेरुक्तत्वात् । तस्य हैतस्येति हृदयाग्रद्योतनलिङ्गस्योक्तत्वाच्च उक्तार्थे तेन धीरा इति तेनैति च यस्यानुवित्त इति च मुक्तप्रतिपादकमन्त्रोदाहरणाच्चेति भावेनाह— **स यत्रेति** ।। एतत्प्रकरणस्य मुक्तविषयत्वे नियामकान्तरमाह— **मुक्तविषयत्वेनेति** ।।

भाष्यम्—

[निर्गुणमुक्तिः प्रमाणशून्या]

नचान्या मुक्तिरस्तीत्यत्र किञ्चिन्मानम् । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'एतमानन्दमयमात्मानमुपसङ्क्रम्य इमांल्लोकान् कामान्नी कामरूप्यनुसञ्चरन्' 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' 'स य एवंविदेवं पश्यन्नेवं मन्वानस्तस्य सर्वेषु लोकेषु कामचारो भवति' 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा पुनश्चैकादश स्मृतः' 'नह्यस्य कर्म क्षीयतेऽस्माद् ह्येवात्मनो यद् यत् कामयते तत् तत् सृजते' 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम ॥' 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' 'परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् । यज्ज्ञात्वा मुनयस्सर्वे परां सिद्धिमितो गताः' 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' 'न वर्तते यत्र रजस्तमस्तयो सत्वं च मिश्रं नच कालविक्रमः । न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः । श्यामावदाताः शतपत्रलोचनाः पिशङ्गवस्त्राः सुरुचः सुपेशसः ॥' इत्यादिश्रुतिस्मृतीतिहासपुराणेषु तेषां निर्गुणमुक्तिविषयत्वेन प्रसिद्धेष्वेव स्थलेषु मुक्त्यनन्तरं भोगोक्तेश्च ।

टिप्पणी—

ननु 'तदोकोग्रज्वलनम्' इति सूत्रस्य मुक्तविषयत्वेऽपि सगुणमुक्तविषयत्वमेव न निर्गुणमुक्तविषयत्वं हृदयाग्रज्वलनप्रकाशितमार्गेणोत्क्रान्तस्य अर्चिरादिना तत्प्रथितेरित्यादिना अर्चिरादिमार्गोक्त्या तत्र तेषां भोगप्रतीतेः । नच निर्गुणमुक्तौ भोगोऽस्ति तथाच कथमेतत्सूत्रबलादेतत्प्रकरणस्य निर्गुणमुक्तिपरत्वसिद्धिरिति चेन्न । स्यादेतत् यदि भोगरहिता निर्गुणमुक्तिर्नाम काचित्स्यात् नच साऽस्ति तत्र प्रमाणाभावादित्याह– **नचेति** ॥ न केवलं प्रमाणाभावादन्या मुक्तिर्नास्ति

अपितु श्रुतिस्मृतीतिहासपुराणेषु निर्गुणमुक्तिविषयत्वेन प्रसिद्धेष्वेव स्थलेषु तेषां मुक्तानां मुक्त्यनन्तरभोगोक्तेश्चेत्याह– **सोऽश्नुत इति** ।। तेषां निर्णये मुक्तिविषयत्वेनेति पाठे तेषां श्रुतिस्मृतीतिहासपुराणवाक्यानां निर्णये कृत इत्यर्थः। परममुक्तिविषयत्वेनेत्यर्थः। नच 'सोऽश्नुत' इति वाक्यं गौणमुक्तिविषयं ब्रह्मविदाप्नोति परमित्युक्तौ किं तद् ब्रह्म किंच तद्वेदनं कीदृशी च तत्प्राप्तिरिति शङ्कात्रयोत्पत्तौ आद्यशङ्काद्वये 'सत्यं ज्ञानम्' इति 'यो वेद' इति च वाक्यद्वयेन परिहृते तृतीयशङ्कापरिहारार्थं ह्येतदुच्यते। नच गौणमुक्तौ परब्रह्मप्राप्तिरस्तीति भावः। नचानन्दमयशब्दो न परब्रह्मपरः किन्तु कोशपर इति वाच्यम्। तथात्वे उपसङ्क्रम्येति तत्प्राप्तेः फलत्वेन कथनायोगात्। नहि कोशप्राप्तिः फलं नचानन्दमयमात्मानमतिक्रम्येत्यर्थो वाच्यः। तथात्वे उपशब्दविरोधात्। त्वः कश्चिद् ब्रह्मा ऋचां पोषं पोषणं पुपुष्वान्कुर्वन्नास्ते त्वः कश्चिद् ब्रह्मा शक्करीषु ऋक्षु आरूढं गायत्रं साम गायतीति मुक्तस्य ब्रह्मणः ऋक्पोषणकर्तृत्वादि-भोगः प्रतीयते अनेकब्रह्मप्रतीतेरिदं परममुक्तिविषयम्। नहि सगुणमुक्तावनेके ब्रह्माणः सन्ति। स एकधेत्यादिनोक्तं बहुरूपत्वमपि भोग एव। विजानतां मुनीनामात्मा स्वामी हिरण्यगर्भोऽपि परमात्मानं प्राप्य तादृगेव भवतीति परमात्म-साम्यप्राप्तिरूपो भोग उच्यते। परमं साम्यं स्वरूपानन्दाविर्भावरूपं मम साधर्म्यमागता इत्यस्य परममुक्तिपरत्वसिद्ध्यर्थं पूर्वोत्तरवाक्योदाहरणम्।

**भाष्यम्——**

[मुक्तानां शरीरं विद्यते]

**अशरीरा क्रिया गौणदेहादेस्ते ह्यभावतः।**
**चिदानन्दशरीरादेः सदेहाद्या विमोक्षिणः।।**
**अनिन्द्रिया अनाहारा अनिष्यन्दाः सुगन्धिनः।। इत्यादेश्च।।**

**टिप्पणी——**

ननु श्यामावदाताः शतपत्रलोचना इत्यादिना मुक्तानां शरीरं प्रतीयते स तत्र पर्येतीत्यादिना क्रिया च तच्चाशरीरं वा वसन्तमित्यादिप्रमाणविरुद्धमित्यतः

तयोर्विरोधं परिहरति– **अशरीरेति** ।। ते विमोक्षिणः सत्वादिगुणमयदेहादेरभावत अशरीरक्रिया उच्यन्ते चिदानन्दशरीरादेः सदेहाद्या उच्यन्त इत्यर्थः । किमेवं प्रमाणद्वयव्यवस्थाकल्पनया सर्वथा देहाद्यभाव एवार्थः किं न स्यात् इति चेन्न । इन्द्रियादिशून्यानामपि भोगोक्तेस्तदन्यथानुपपत्त्योक्तव्यवस्थाया अङ्गीकार्यत्वादिति भावेनाह– **अनिन्द्रिया इति** ।। ४ ।।

**भाष्यम्**——

**मयट् प्राचुर्ये स्वरूपे च ।**

**आत्मायमाततत्वाद्धि ब्रह्म पूर्णगुणत्वतः ।**
**दूरस्थत्वात् स इत्युक्तः समीपस्थो ह्ययं स्मृतः ।।**
**पूर्णज्ञानस्वरूपत्वाद् विज्ञानमय ईर्यते ।**
**सर्वमन्तृस्वरूपत्वात् स एवोक्तो मनोमयः ।।**
**बलपूर्णस्वरूपत्वात् स प्राणमय ईरितः ।**
**सर्वद्रष्टृस्वरूपत्वाच्चक्षुर्मय इतीर्यते ।**
**सर्वश्रोतृस्वरूपत्वात् स श्रोत्रमय ईरितः ।**
**सर्वाधारात् सुगन्धत्वात् पृथिवीमय उच्यते ।**
**सर्वतृप्तिकरत्वाच्च विष्णुरापोमयः स्मृतः ।**
**सर्वकर्तृस्वरूपत्वाच्छ्रुतो वायुमयो हरिः ।**
**अवकाशप्रदातृत्वादाकाशमय ईर्यते ।**
**पूर्णतेजःस्वरूपत्वात्तेजोमय उदाहृतः ।**
**सृष्ट्यादीच्छास्वरूपत्वात् स्मृतः काममयो हरिः ।**
**सर्वदुष्टप्रतीपत्वात् स हि क्रोधमयो मतः ।**
**सुखादिधर्मरूपत्वाज्ज्ञेयो धर्ममयः प्रभुः ।**
**अप्राकृतस्वरूपत्वादनेतन्मय एव च ।**

**टिप्पणी**——

विज्ञानमयो मनोमय इत्यादौ मयटो विकारार्थत्वप्रतीतिनिरासायार्थद्वयमाह–

**मयडिति** ।। स वा अयमात्मेत्यादिकं जीवपरमिति परकीयव्याख्याननिरासाय तावत्पदचतुष्टयं प्रमाणेन व्याचष्टे– **आत्मेति** ।। विज्ञानमय इत्यादिशब्दपञ्चकं व्याचष्टे– **पूर्णेत्यादिना** ।। मयटः प्राचुर्यार्थत्वमभिप्रेत्य पूर्णेत्युक्तं स्वरूपार्थत्वमभिप्रेत्य स्वरूपत्वादियुक्तम् । एवमुत्तरत्रापि । सर्वं मनुत इति सर्वमन्ता तत्स्वरूपत्वा-दित्यर्थः । एवं सर्वद्रष्टृस्वरूपत्वादित्यादिकं व्याख्येयम् । पृथिवीमय इत्यादिशब्दपञ्चकस्यार्थमाह– **सर्वाधारादिति** ।। पृथिवीवद्धारकत्वाद्गन्धवत्त्वाच्च पृथिवीत्युच्यते । मयटः प्राचुर्यार्थत्वेन सर्वाधारत्वात्सुगन्धत्वाच्च पृथिवीमय इत्युच्यत इत्यर्थः । एवमप्तृप्तिकरत्वादाप इत्युच्यते सर्वतृप्तिकरत्वादापो मयः स्मृत इत्यादि व्याख्येयम् । अवकाशप्रदातृत्वादाकाश ईर्यते सर्वेषामवकाशप्रदातृत्वात् स्वातन्त्र्येणावकाशप्रदातृत्वाद्वा आकाशमय इत्यर्थः । पूर्णतेजःस्वरूपत्वादित्यनेन मयटोऽर्थद्वयमुक्तम् । काममयः क्रोधमयो धर्ममय इति पदत्रयं व्याचष्टे– **सृष्ट्यादीति** ।। अतेजोमयअकाममयः अक्रोधमयः अधर्ममय इति शब्दचतुष्टयस्य विरोधपरिहारायार्थमाह– **अप्राकृतेति** ।। प्राकृतेजःस्वरूपत्वाद्यभावादेवातेजोमय इत्याद्युक्त इत्यर्थः । यद्वा अतेजोमय इत्यादिवदविज्ञानमय इत्याद्यपि ग्राह्यमिति भावेन तस्यार्थमाह– **अप्राकृतेति** ।। प्राकृतविज्ञानादिस्वरूपत्वाभावादेवा-विज्ञानमय इत्याद्युक्त इत्यर्थः ।

**भाष्यम्**—

**अपार्थिवो हरेर्गन्धो न तृप्तिश्चाप्यबात्मिका ।**
**नाग्नेयं तस्य तेजोऽपि नच वायुर्बलं हरेः ।**
**श्रोत्राद्या नास्य चाकाशो मनस्तत्त्वं न तन्मनः ।**
**बुद्धितत्त्वं न तद्बुद्धिर्नाहमस्याहमुच्यते ।**
**महदात्मकं न तच्चित्तं प्रकृतिर्नास्य चेतना ।**
**प्रकृत्यादिगुणा यस्मात्तद्गुणप्रतिबिम्बकाः ।**
**अतः सर्वमयो विष्णुः सर्वाद्यत्वादतन्मयः ।**
**चिदानन्दात्मकास्तस्य गुणाः सर्वगुणात्मकाः ।**

**सर्वदाऽतः सर्ववैलक्षण्यमेषां प्रकीर्तितम् ।**
**क्रोधः क्षमात्मको यस्य चिदानन्दात्मकस्तथा ।**
**अन्यक्रोधसमः क्रोधस्तस्य विष्णोः कथं भवेत् ।**

**टिप्पणी—**

अविज्ञानमय इत्यादीनामतेजोमय इत्यन्तानां शब्दानामर्थान्तरं क्रमाविवक्षयाह– **अपार्थिव इत्यादिना** ।। हरेर्गन्धो पार्थिवो यतोऽतो पृथिवीमय इत्युच्यत इत्यादि व्याख्येयम् । अस्य श्रोत्राद्याः श्रोत्रचक्षुःप्राणाः श्रोत्राद्याः प्रसिद्धश्रोत्रादितत्त्वात्मकाः न भवन्ति । अस्याकाश आकाशतत्त्वात्मको न भवतीति योज्यम् । अविज्ञानमय अमनोमय इत्येतदपि मनःप्रभेदान्तरराहित्योपलक्षकमिति भावेनाह– **नाहमिति** ।। सर्वात्मकत्व-प्रतीतिनिरासाय सर्वमय इत्येतद् व्याचष्टे– **प्रकृत्यादीति** ।। प्रकृत्यादीनां रमादीनां गुणा आनन्दाद्याः परमात्मगुणप्रतिबिम्बभूताः यस्मादतो विष्णुः सर्वमयः सर्वप्रधानः सर्वगुणस्वरूपश्चेत्यर्थः । सर्वात्मकत्वमेवार्थः किन्न स्यादित्यत आह– **सर्वाद्यत्वादिति** ।। प्रकृत्यादिसर्वोपजीव्यत्वात् प्रकृत्यादिसर्वात्मको न भवतीत्यर्थः । अविज्ञाानमय इत्यादिवदसर्वमय इत्यपि ग्राह्यमिति भावेन तथोक्तौ वा हेतुमाह– **सर्वाद्यत्वादिति** ।। असर्वमय इत्युक्तौ हेत्वन्तरमाह– **चिदानन्देति** ।। तस्य गुणाः सर्वदा चिदानन्दात्मकाः न केवलमेतावत् किन्तु सर्वगुणात्मकाश्च यतोऽत एषां भगवद्गुणानां सर्ववैलक्षण्यमसर्वमय इत्यनेन प्रकीर्तितमित्यर्थः । ननु भगवतः क्रोधरूपगुणः प्रज्वलनात्मको चिदानन्दात्मकश्चाङ्गीकार्यः तथाच कथमेवमुक्तमित्यत आह– **क्रोध इति** ।। कुत इत्यत आह– **अन्येति** ।। जीवक्रोधसदृश इत्यर्थः ।

**भाष्यम्—**

**एवं सर्वगुणास्तस्य सर्वेभ्योऽपि विलक्षणाः ।**
**पूर्वप्रज्ञानुसारेण विमुक्तस्तमुपेष्यति ।**

अनादिकालसम्बन्धा या प्रज्ञा विष्णुसंश्रया ।
पूर्वप्रज्ञेति सा प्रोक्ता ब्रह्मादेस्तारतम्यतः ॥

—इत्यादि च महामीमांसायाम् ॥

वर्तमानं यतो विष्णोर्वशे तस्मदिदम्मयः ।
अतीतानागतं यस्मात् तद्वशेऽतो ह्यदोमयः ॥
प्राधान्ये च मयट् प्रोक्तः स्वरूपे च यतो भवेत् ।
इदम्रूपोऽप्यदोरूपस्ततो नित्यत्वतो हरिः ॥
अस्य तस्य प्रधानश्च नित्यपूर्णबलत्वतः ॥ इत्यादि च ॥
यथा पूर्वं तथेदानीमिति विष्णुस्तदुच्यते ।
यथा बाह्ये तथैवान्ते ततो यदिति चोच्यते ॥
यथेदानीं तथा नित्यं यस्मादेष भविष्यति ।
अत एतदिति प्रोक्तो वासुदेवो जगत्पतिः ॥

**टिप्पणी—**

एवं क्रोधस्येतरवैलक्षण्यमुपपाद्येतरेषामपि गुणानां तदुपपादयति– **एवमिति** ॥ सर्वेभ्योऽन्यगुणेभ्यः । नन्वस्त्वेवं स वा अयमात्मेत्यादेर्व्याख्यानं तथाप्यसङ्गतमेतत्कथमुच्यत इत्याशङ्कां परिहरति– **पूर्वेति** ॥ तमुक्तमाहात्म्यविशिष्टं तथाच स यत्रायमात्माबल्यमित्यादिना मुक्तप्राप्यत्वेन प्रकृतपरमात्ममाहात्म्यप्रतिपादकत्वान्नासङ्गतिरिति भावः । पूर्वप्रज्ञा नाम केत्यत आह– **अनादीति** ॥ विष्णुसंश्रया विष्णुविषयिका इदंमय अदोमय इति शब्दयोरर्थावाह– **वर्तमानमिति** ॥ इदंमयादोमयशब्दाभ्यां कथमुक्तार्थलाभ इत्यतस्तदुपपादयंस्तस्यैव शब्दद्वयस्यार्थान्तरमाह– **प्राधान्ये चेति** ॥ यतः प्राधान्ये मयट्प्रोक्तो भवेत् तत अस्य वर्तमानस्य जगतः प्रधानो हरिरिदं मयशब्देनोच्यते तस्यातीतानागतस्य जगतः प्रधानो हरिरदोमयशब्देनोच्यते । हरेरस्यैतस्य प्राधान्ये हेतुमाह– **नित्येति** ॥ तथाच वर्तमानस्यातीतानागतस्य च जगतो विष्णुवशत्वं लभ्यत इति भावः । यतः स्वरूपे मयट्प्रोक्तो भवेत् तत इदं रूपो वर्तमानकालावच्छिन्नो हरिरिदं

मयशब्देनोच्यते। अदोरूप अतीतानागतकालावच्छिन्नो हरिरदोमयशब्देनोच्यते। वर्तमानातीतानागतरूपत्वे हेतुमाह– **नित्यत्वत इति** ॥ अनादिनित्यत्वत इत्यर्थः । तत् यत् एतत् इति पदत्रयस्य प्रसिद्धार्थत्वप्रतीतिनिरासायार्थान्तरं प्रमाणेनाह– **यथेति** ॥ अतीतवर्तमानकालयोरेकप्रकारत्वं तच्छब्दार्थः । ब्रह्माण्डात् शरीराद् वा बहिरन्तश्चैकप्रकारत्वं यच्छब्दार्थः। वर्तमानभविष्यत्कालयोरेकप्रकारत्वमेतच्छब्दार्थ इत्यर्थः ।

**भाष्यम्——**

[पुण्यपापकारयिता भगवान्]

**स यथा करोति पुरुषं तथैवायं भविष्यति ।**
**साधुर्भवति साधुं चेत्करोति पुरुषोत्तमः ॥**
**पापो भवति पापं चेत्स करोति जनार्दनः ।**
**तत्प्रेरितेन पुण्येन पुण्यो भवति मानवः ॥**
**तत्प्रेरितेन पापेन तथा पापः पुमान् भवेत् ।**
**आहुश्च तत्कामाधीनं जीवमेनं सदैव हि ॥**
**तत्कामादस्य कामः स्याद् यथाकामस्तथा भवेत् ।**
**कामानुसारिणी निष्ठा कर्मनिष्ठानुसारतः।**
**फलं कर्मानुसारेण विष्णोः काममयस्ततः ॥**
**जीवोऽयं सर्वदैव स्यान्नान्यथा तु कथञ्चन ॥** इत्यादि च ॥

**टिप्पणी——**

यथाकारीत्यादिकं जीवपरमिति प्रतीतिनिरासाय तावत्स यथाकारी यथाचारी तथा भवतीति वाक्यं व्याचष्टे– **स इति** ॥ साधुकरी साधुर्भवति पापकारी पापो भवतीति वाक्यं व्याचष्टे– **साधुरिति** ॥ पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति वाक्यं व्याचष्टे– **आहुश्चेति** ॥ काममयः कामप्रधानकः योग्यतया हरेरित्यस्य लाभः तस्य लब्धार्थमाह– **तत्कामाधीनमिति** ॥ स यथाकामो भवति तत्क्रतुर्भवतीति वाक्यं व्याचष्टे– **यथाकाम इति** ॥

तथा भवेत्तथाकामो भवेत्। नन्वेवं परमात्मा यदि जगत्सृष्ट्यादिकामस्तदाऽयमपि तत्कामः स्यात् किमित्यतस्तदभिप्रायमाह– **तत्कामादस्य कामः स्यादिति** ।। प्रकारान्तरेणापि स यथाकामो भवति तत्क्रतुर्भवतीति वाक्यं व्याचष्टे– **कामानुसारिणी निष्ठेति** ।। भगवत्कामानुसारिणीत्यर्थः। यत्क्रतुर्भवति तत्कर्म कुरुत इत्यस्यार्थमाह– **कर्मनिष्ठानुसारत इति** ।। यत्कर्म कुरुते तदभिसम्पद्यत इत्येतद् व्याचष्टे– **फलं कर्मानुसारेणेति** ।। स यथाकाम इत्यादिकं प्रकृतासङ्गतं किमर्थमुच्यत इत्यतो जीवस्य विष्णुकाममयत्वोपपादकं तदिति नासङ्गतमित्याह– **विष्णोरिति** ।। हि यस्मात्तत्कामादस्य कामः स्यात् यस्माच्च तत्कामानुसारिणी निष्ठा निष्ठानुसारतः कर्म कर्मानुसारतः फलं ततोऽयं जीवः विष्णोः काममय इति सम्बन्धः।

**भाष्यम्—**

**[सर्वप्रमाणविरुद्धः जीवेश्वराभेदः]**

**जीवेश्वराभेदाङ्गीकारे 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रविरोधः। 'प्राज्ञेनात्मनाऽन्वारूढः प्राज्ञेनात्मना सम्परिष्वक्तः' इत्यादि श्रुतिविरोधश्च।**

**नच व्यावहारिकभेदो नाम कश्चिदस्तीत्यत्र किञ्चिन्मानम्। भ्रान्तिभेदत्वे श्रुतिसिद्धत्वमेव न स्यात्।**

**टिप्पणी—**

अस्त्वेवं स वा अयमात्मेत्यादिकमीश्वरपरं, बाधकाभावाज्जीवपरमपि किन्न स्यात्। नच ब्रह्मेति विशेषणाच्चेति बाधकमप्युक्तमिति वाच्यम्। जीवस्य ब्रह्माभिन्नत्वाभिप्रायेण तद्विशेषणसम्भवादिति चेन्न। स्यादेतदेवं यदि जीवेश्वराभेद एव भवेत् नचैतदस्ति तदङ्गीकारे प्रमाणविरोधापत्तेरिति भावेन तावत्सूत्रविरोधमाह– **जीवेति** ।। सुषुप्त्युत्क्रान्त्योः प्रकरणयोः जीवस्य परमात्मनो भेदेन व्यपदेशान्न जीवस्येश्वराभेद इत्यर्थः। सूत्रोपात्तश्रुतिविरोधं च दर्शयति– **प्राज्ञेनेति** ।। ननु श्रुतिसूत्रयोर्जीवेश्वरभेदोक्तावपि न तयोरभेदाङ्गीकारे तद्विरोधः। श्रुतिसूत्रयोर्मिथ्याभूतभेदपरत्वेन पारमार्थिकाभेदाविरोधित्वादिति

चेन्न । सुषुप्त्युत्क्रान्तिप्रकरणयोः मोक्षपरतायाः प्रागुपपादितत्वात् । मोक्षे च विद्यमानस्य भेदस्य मिथ्यात्वं नाम परिभाषामात्रम् । किञ्च जीवेश्वरभेदस्य मिथ्यात्वे स भेदः किं व्यावहारिकः प्रतिभासिको वा भवेत् । न तावदाद्यः जीवेश्वरभेदस्य व्यावहारिकत्वे प्रमाणाभावात् । न तावत्तत्र प्रत्यक्षं मानं ईश्वरस्याप्रत्यक्षत्वात् । प्रत्यक्षस्य भेदव्यावहारिकत्वागोचरत्वाच्च । अनुमानं तु स्यात् यदि कोऽपि भेदो व्यावहारिके भवेत् । तत्सत्वे तद्दृष्टान्तेनास्यापि भेदस्य व्यावहारिकत्वानुमानसम्भवात् । नच तदस्ति तत्र प्रमाणाभावादित्याह– **नचेति** ॥ यद्वा प्रमाणाभावेन भेदमात्रस्यैव व्यावहारिकत्वाभावे जीवेशभेदव्यावहारिकत्वस्य सुतरामयुक्तत्वादित्याह– **नचेति** ॥ द्वितीयं दूषयति– **भ्रान्तिभेदत्व इति** ॥ भ्रान्तिसिद्धभेदत्वे प्रातिभासिकत्वे इति यावत् । यद्वा मास्तु व्यावहारिको भेदः कश्चिदस्तीत्यत्र किञ्चित्प्रमाणम् । तथापि भ्रान्तिसिद्धश्चन्द्रभेदोऽस्त्येव । तथाच तद्दृष्टान्तेन जीवेशभेदस्यापि भ्रान्तिसिद्धत्वसिद्धेः तत्परत्वं श्रुतिसूत्रयोः स्यादित्यत आह– **भ्रान्तिभेदत्व इति** ॥

**भाष्यम्**——

**नहि निर्दोषश्रुतिवाक्यसिद्धं भ्रान्तमिति युक्तम् । उन्मत्तवाक्यवत् सर्व-वेदस्याप्रामाण्यप्रसक्तेः । नच स्वविषयस्य भ्रमत्वादन्यप्रामाण्यं नाम किञ्चित् । तन्मते ह्युन्मत्तवाक्यविषयस्याप्यनिर्वचनीयत्वमेव ।**

**टिप्पणी**——

ननु जीवेशभेदस्य भ्रान्तिसिद्धत्वे श्रुतिसिद्धत्वं कुतो न स्यात् न भ्रान्तिसिद्धश्चन्द्रभेदो यज्ञदत्तादिवाक्यसिद्धो न भवतीति चेन्न । स्यादेव भ्रान्तिसिद्धस्यापि चन्द्रभेदस्य यज्ञदत्तादिवाक्यसिद्धत्वं तस्य दुष्टत्वेनाप्रमाणत्वात् । श्रुतेश्च निर्दोषवाक्यत्वेन प्रमाणत्वात् । तत्सिद्धभेदस्य भ्रान्तिसिद्धत्वायोगादित्यत आह– **नहीति** ॥ भ्रान्तं भ्रान्तिविषयः । ननु श्रुतिवाक्यसिद्धस्यापि

जीवेश्वरभेदस्य भ्रान्तिसिद्धत्वमस्तु को दोष इति चेत् । तथा सति तत्सिद्धस्य जीवब्रह्माभेदादेरपि भ्रान्तिसिद्धत्वं स्यात् अविशेषात् । अस्तु तदपीति चेत्तत्राह– **उन्मत्तवाक्यवदिति** ।। वाक्यस्य भ्रमसिद्धार्थप्रतिपादकत्वेऽप्यप्रामाण्यं कुतः? दृष्टान्ते कारणान्तरसम्भवादिति चेन्न । यावता तदेव वाक्यस्याप्रामाण्यं यत्स्वविषयस्य भ्रमसिद्धत्वमेव । नच तदतिरिक्तमप्रामाण्यं नाम अस्ति येन दृष्टान्ते कारणान्तरसम्भवः इत्याह– **नचेति** ।। ननु जीवेशभेदस्य भ्रमसिद्धत्वेऽपि तत्प्रतिपादकवाक्यस्य प्रामाण्यं युक्तं अभेदबोधकागमवत्तत्त्वावेदकत्वलक्षणप्रामाण्याभावेऽपि जीवब्रह्मभेदस्यानिर्वाच्यत्वेन तत्प्रतिपादकवाक्यस्याऽतत्त्वावेदकप्रमाणत्वोपपत्तेरिति चेन्न । तथा सति त्वन्मते उन्मत्तवाक्यप्रतिपाद्यार्थस्यापि अनिर्वाच्यत्वेन तस्याप्यतत्त्वावेदकप्रमाणत्वापत्तेरित्याह– **तन्मत इति** ।। ननून्मत्तवाक्यं प्रतिभासिकार्थप्रतिपादकमित्यप्रमाणं श्रुत्यादिकं तु व्यावहारिकभेदप्रतिपादकमिति प्रमाणं स्यादिति चेन्न । व्यावहारिकभेदे मानाभावेन श्रुत्यादेस्तत्परत्वायोग इत्युक्तत्वात् । जीवेशभेदस्यापि भ्रान्तिसिद्धत्वाङ्गीकारे प्रातिभासिकत्वस्याप्यापाताच्च । प्रातिभासिकत्वे भ्रान्तिसिद्धत्वस्यैव प्रयोजकत्वात् । ब्रह्मज्ञानान्यबाध्यभ्रमसिद्धत्वादेः गौरवकरत्वेनाप्रयोजकत्वात् । अन्यथा प्रवृत्तिमात्रे संसर्गज्ञानं न कारणं किन्तु प्रवृत्तिविशेषं प्रत्येव । वह्निमात्रे धूममात्रं न प्रयोजकं किन्तु धूमविशेष एवेत्यपि स्यादिति ।

**भाष्यम्**——

[जीवेश्वरभेदः न असत्यः]

**'सत्यः सो अस्य महिमा गृणे शवः'** । **'त एते सत्याः कामाः'** **इत्यादिश्रुतिभिर्भगवद्गुणानां सत्यत्वमेव ज्ञायते ।**

**'सत्यमेनमनु विश्वे मदन्ति रातिं देवस्य गृणतो मघोनः' इति सर्वजीवानां भगवदनुजीवनं च सत्यमित्येवोच्यते । तदा कथं जीवभेदस्यासत्यता? नच सर्वविध्यर्थं क्रियासिद्धस्य कुत्रचिद् बाधो दृष्टः ।**

**टिप्पणी—**

किञ्च न केवलं प्रमाणाभावाच्छ्रुत्यादेर्नापारमार्थिकभेदपरत्वं किन्तु जीवेश्वरौ भिन्नौ विरुद्धधर्माधिकरणत्वाद्धटपटवदिति अनुमानविरुद्धत्वाच्च । नचासिद्धिः श्रुत्यादिषु भगवतः स्वातन्त्र्यादेः जीवस्य तदनुजीवनादेश्च श्रवणात् । नन्वस्त्वेवं जीवेश्वरभेदसाधनं, नैतदस्माकं विरोधि । अस्माभिरपि असत्यस्य जीवेश्वरभेदस्याप्युपगमात् । नच विरुद्धधर्माधिकरणत्वानुपपत्तिः । तस्याप्यसत्यत्वाभ्युपगमादित्यत आह– **सत्य इति** ।। स पूर्वोक्तः अस्य महिमा सत्यः विप्रप्रधानकेषु यज्ञेषु शवः सुखमुद्दिश्य तं गृणे इत्यर्थः । गृणतो मघोनो देवस्य रातिमिष्टं एनं परमात्मानं विश्वे जीवाः अनुमदन्ति अनुजीवन्तीत्येतत्सत्यमित्यर्थः । अस्त्वेवं विरुद्धधर्माधिकरणत्वस्य सत्यत्वं किं तत इत्यत आह– **तदेति** ।। किञ्च न जीवेश्वरभेदोऽसत्यः अस्तीति विधिप्रत्ययसिद्धत्वात् संसारमोचनाद्यर्थक्रियासमर्थत्वाच्च । नच प्रत्ययसिद्धत्वमेव हेतुरस्त्विति वाच्यम् । शुक्तिकामेवायं रजतत्वेन जानातीत्यनुवादरूपप्रतीतिविषयशुक्तिरूप्यादौ व्यभिचारापत्तेः । नचैवमपि व्यभिचारः । सर्वविधिप्रत्ययसिद्धस्य हेतुत्वात् न च सर्वेषामेकस्मिन्नर्थे भ्रान्तिरस्ति नचासिद्धः श्रुत्यादिना सार्वज्ञ्यादिगुणं परमात्मानं प्रत्यक्षेण तद्विरुद्धमात्मानं च पश्यतः तद्भिन्नोऽहमिति प्रतीतेः सर्वानुभवसिद्धत्वाद् यथोक्तम्—अज्ञता चाल्पशक्तित्वमित्यादि । नन्वस्तु सर्वविधिप्रत्ययसिद्धत्वमर्थक्रियासमर्थत्वं वा मास्त्वसत्यत्वाभाव इत्यत आह– **नचेति** ।। सर्वविधिसिद्धस्यार्थक्रियाकारित्वेन सिद्धस्येत्यर्थः । स्यादेवं यदि सर्वविधिप्रत्ययसिद्धस्यार्थक्रियासमर्थस्यापि कुत्रचिद्बाधः स्यात् । नचासौ दृष्टः । तेनासत्यत्वाभावे सर्वविधिप्रत्ययसिद्धत्वादिकमेव प्रयोजकमिति भावः । ननु भयकम्पाद्यर्थक्रियाकारिणः रज्जुसर्पादेः स्वप्नार्थस्य च बाधो दृष्ट एवेति चेन्न । रज्जुसर्पादिज्ञानस्यैव भयकम्पनादिजनकत्वात् । तस्य चाबाध्यत्वात् । स्वप्नार्थस्य सृष्ट्युक्त्या तत्सत्यत्वस्योक्तत्वादिति ।

**भाष्यम्—**

**'नहास्य कर्म क्षीयतेऽस्माद्ध्येवात्मनो यद् यत् कामयते तत् तत् सृजते' इति मुक्त्यनन्तरमपि तदधीनत्वप्रतीतेश्च।**

**न भेदस्यासत्यता। नहि संसारावस्थायामक्षीणकर्मता भवति। नच मुख्यार्थं परित्यज्यामुख्यो युक्तः। अतः सत्य एव भेदः। स भगवान् यथाधिकारी यथा कारयति यथाचारी यथा चारयति तथा भवति। स भगवान् यथाकामो भवति तथाकामो जीवो भवति। इत्थं कामोऽस्य भूयादिति भगवदिच्छावशादस्य कामो भवतीत्यर्थः। क्रतुरितीत्थं करिष्याम्येवेति निश्चयरूपः कामः। स भगवदिच्छया हि भवति। 'कामेन मे काम आगात्' इति च श्रुतिः।**

**टिप्पणी—**

इतोऽपि न जीवेश्वरभेदस्यासत्यत्वमित्याह– **न हास्येति** ॥ नन्वत्र मुक्तिवाचकपदाभावात्संसार एवात्माधीनत्वं जीवस्योच्यत इति किन्न स्यादित्यत आह– **नहीति** ॥ नन्वक्षीणकर्मत्वं नामाक्षीणकर्मफलत्वमेव। तच्च संसारावस्थायामप्यस्त्येव सर्वात्मना कर्मफलस्याक्षीणत्वाभावेऽपि बहुकालानु-वृत्तत्वाभिप्रायेण तदुक्त्युपपत्तेरित्यत आह– **नचेति** ॥ असति बाधक इति शेषः। एवमुपपादितं जीवेशभेदासत्यत्वाभावमुपसंहरति– **अत इति** ॥ ननु स भगवान्यथाकरी यथाचारी यादृशं कर्म यादृशमाचारं च करोति तथा भवतीत्यर्थप्रतीतेः स यथा करोति पुरुषमिति कथं व्याख्यानमित्यत आह– **स इति** ॥ जीवमिति शेषः। तथा भवति जीव इति शेषः। नच कर्माचारयोर्भेदाभावः। आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिद इत्युक्तेः। स यथाकामो भवति तत्क्रतुर्भवतीति वाक्यं यथाकामस्तथा भवेदिति प्रमाणेन व्याख्यातमप्यस्फुटीभूतत्वाज्जीवो यथाकामो भवतीति प्रतीतिनिरासाय व्याचष्टे– **स भगवानिति** ॥ तत्क्रतुरित्यस्यार्थस्तथाकाम इति। ननु भगवतो जगत्सृष्ट्यादिकामत्वे जीवस्य तत्कामाभावात्कथमेतदित्यतः तत्कामादस्य कामः स्यादिति प्रमाणोक्तं तात्पर्यं विवृणोति– **इत्थमिति** ॥

क्रतुशब्दस्य ज्ञानवाचकत्वात्तत्क्रतुरित्यस्य तथाकाम इति कथं व्याख्यानमित्यत आह– **क्रतुरिति** ॥ अथवा कामानुसारिणी निष्ठेति क्रतुशब्दो निष्ठापरतया व्याख्यातः। तत्र निष्ठाक्रतुशब्दयोरेकार्थत्वसिद्ध्यर्थं क्रतुशब्दार्थमाह– **इत्थमिति** ॥ अस्त्वेवं क्रतुः निश्चयरूपः कामः, स भगवदिच्छया भवतीत्यत्र किं मानमित्यत आह– **स इति** ॥ हीति दैववशेन अस्येत्थमिच्छा जातेति लोकप्रसिद्धिं प्रमाणयति । श्रुतिं चाह– **कामेनेति** ॥ यद्वा हिशब्दसूचितां श्रुतिमाह– **कामेनेति** ॥ मृत्योः कामेन मे काम आगादित्यर्थः ॥ ५ ॥

उपनिषत्—

**तदेष श्लोको भवति ॥**

**तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य।**
**प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययम् ॥**
**तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति नु कामय-मानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्म-कामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥**

भाष्यम्—

अयोग्यकामराहित्यान्मुक्तो निष्काम उच्यते।
अ इत्युक्तः परो विष्णुस्तत्कामोऽकाम ईरितः ।
तथाऽकामयमानः स योग्यकामस्य चापि तु ।
कादाचित्कसमुद्भूतेर्भगवत्कामनां विना।
कामितस्याखिलस्याप्तेराप्तकामश्च मुक्तिगः।
चिदानन्दात्मकं रूपं कामत्वेन भविष्यति ।
यतस्तेनैवात्मकाम इति मुक्तोऽभिधीयते।

**मुक्तस्य न पुनः प्राणा उत्क्रामन्ति कदाचन ।**
**जीवोऽपि ब्रह्मशब्दोक्तो जडाद्गुणबृहत्त्वतः ।**
**प्राप्नोति परमं ब्रह्म प्रलये प्रलये सदा ।**
**अन्यदा स्वेच्छया विष्णोः स्वरूपाद्बहिरेष्यति ।**
**स्वेच्छयान्तर्बहिर्वैवं रमते मुक्त आत्मवान् ॥ इत्यादि च ॥।**

**नचामुक्तस्य कथञ्चिदाप्तकामता मुख्यतः ।**

**टिप्पणी—**

अथाकामयमान इत्यादिकममुक्तपरमिति प्रतीतिनिरासायाकामयमानाकाम-निष्कामशब्दानां पुनरुक्तिं परिहरन् प्रमाणेन मुक्तपरतया व्याचष्टे– **अयोग्येति** ॥ तथाशब्द उपमार्थः । अकामयमानश्चेति चशब्दान्वयः । राहित्यादित्यनुवर्तते । मुक्तस्यायोग्यकामो नास्त्येव । योग्यकामस्यापि सर्वस्य सर्वदा न समुद्भूतिः । किन्तु कस्यचित्कदाचिदेव । तथाच योग्यकामस्यापि कादाचित्कसमुद्भूतेरपि भगवत्कामनां विना राहित्यात्सो कामयमान इतीरित इत्यर्थः । आप्तकामा-त्मकामशब्दार्थावाह– **कामितस्येति** ॥ कामत्वेन काम्यत्वेन । ननु तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीत्यादिना प्राणानामुत्क्रान्त्युक्तेर्न तस्य प्राणा उत्क्रामन्तीति कथमित्यत आह– **मुक्तस्येति** ॥ जीवो ब्रह्मैव सन् ब्रह्माप्येतीति जीवस्य ब्रह्मात्मकत्वमुच्यत इति परव्याख्याननिरासाय प्रथमब्रह्मशब्दपदार्थमाह– **जीवोऽपीति** ॥ तथाच ब्रह्मैव सन्नित्यस्य जीव एव सन् जीवाभावमविहायैवेत्यर्थः । द्वितीयब्रह्मशब्दस्यापि जीवपरत्वशङ्कानिरासायेदानीं तद् वाक्यं व्याचष्टे– **प्राप्नोतीति** ॥ नन्वकामयमानत्वादिविशिष्टो मुक्तः पूर्वमेव परब्रह्मप्राप्तः अकामयमानत्वादेः तत्प्राप्त्युत्तरकालीनत्वात् तथाच मुक्तो ब्रह्मैव सन् ब्रह्माप्येतीति कथमुच्यत इत्युक्तम् ॥ **प्रलये प्रलय इति** ॥ तर्ह्यन्यदापि ब्रह्मप्राप्तेः सद्भावात् किं विशिष्योच्यते प्रलय इति तत्राह– **अन्यदेति** ॥ प्रलये तु न विष्णोः स्वरूपाद्बहिरप्येतीति विशेष इत्यर्थः । प्रलये अन्यदा वा विष्णोरन्तर्बहिर्वा स्थितस्य मुक्तस्य किं दुःखादिकं भवति नेत्याह–

**स्वेच्छयेति** ॥ रमत एवेत्यन्वयः । यद्वा ब्रह्म समश्नुत इत्युत्तरमन्त्रानुसारेण ब्रह्माप्येतीत्येतद्भोगार्थत्वेन व्याचष्टे– **स्वेच्छयेति** ॥ स्वेच्छयेत्युक्त्या प्राप्तां मुक्तस्य स्वातन्त्र्यशङ्कां पराचष्टे– **आत्मवान् भगवत्स्वामिक इति** ॥ अथाकामयमान इत्यादिकं मुक्तपरतया प्रमाणेन व्याख्याय अमुक्तपरतया व्याख्याने बाधकमाह– **नचेति** ॥ अमुक्तस्य उक्तनिष्कामत्वाकामत्वा-कामयमानत्वानां कथञ्चिज्जीवन्मुक्तविवक्षया सम्भवेऽपि आप्तकामता न कथञ्चित्सम्भवति । प्रायः कामितस्याप्तेराप्तकामतापि सम्भवतीति चेत् आप्ताखिलकामत्वस्यैवाप्तकामशब्दमुख्यार्थत्वात् । मुख्ये च सत्यमुख्य-ग्रहणायोगात् । मुख्यतः आप्तकामता चामुक्तस्य कथमपि न सम्भवतीत्यर्थः ।

**भाष्यम्—**

[ब्रह्मैव सन् ब्रह्माप्येति इति श्रुत्यर्थः]

**ब्रह्माप्येतीति वचनात् पूर्वब्रह्मशब्दो जीववाच्येव। यद्यज्ञाननाशात् परिज्ञानमात्रं तदा स्वस्य ब्रह्मतां विजानातीत्येव स्यात् ।**

**नतु ब्रह्माप्येतीति । नहि राजपुत्रः पूर्वमात्मानमजानन् पश्चाद्राजपुत्र इति विज्ञाय राजपुत्रमप्येतीत्युच्यते। किन्तु राजपुत्रत्वेनात्मानं व्यजानादित्ये-वोच्यते। विस्मृतकण्ठमणिरपि विज्ञात इत्येवोच्यते, नतु प्राप्त इति। अतः पूर्वब्रह्मशब्दो जीववाच्येव।**

**टिप्पणी—**

यदुक्तं– जीवोऽपि ब्रह्मशब्दोक्त इति पूर्वब्रह्मशब्दो जीववाचीति। तदयुक्तम् । ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वादित्यत आह– **ब्रह्मेति** ॥ परब्रह्मण मुख्योऽप्ययं ब्रह्मशब्दः जीववाच्येवेत्यङ्गीकर्तव्यं परब्रह्मार्थत्वाङ्गीकारे श्रुतब्रह्म-प्राप्तिविरोधात्। नहि स्वयं ब्रह्मभूतस्य तत्प्राप्तिर्नामास्ति प्राप्तप्राप्ययोर्भेदनियमात् । मुख्यार्थविरोधे चामुख्यार्थग्रहणस्य न्याय्यत्वादिति भावः। ननु पूर्वब्रह्मशब्दस्य परब्रह्मार्थकत्वेन जीवस्य परब्रह्मत्वाङ्गीकारेऽपि न तत्प्राप्तिकथनं विरुद्धं

ब्रह्मैव हि स्वाविद्यया संसरति स्वविद्यया च मुच्यत इत्यङ्गीक्रियते । तथाच पूर्वमज्ञातपरब्रह्मत्वेऽपि जीवोऽज्ञाननाशे स्वस्य विद्यमानमेव परब्रह्मत्वं जानातीत्यभिप्रायेण प्राप्तिकथनोपपत्तेः । यथा कश्चित्किल राजपुत्रो व्याधगृहे संवर्धितः पूर्वमात्मानं राजपुत्रत्वेनाजानन् पश्चाज्जानन्राजपुत्रत्वं प्राप्त इत्युच्यते यथा वा पूर्वं स्वसमीपे स्थितो विस्मृतः कण्ठमणिः पश्चाद् विज्ञातः प्राप्त इत्युच्यत इत्याशङ्क्याह– **यद्यज्ञानेति** ॥ दृष्टान्तद्वयेऽपि तथालौकिकव्यवहाराभावं दर्शयति– **नहीति** ॥ आत्मानं राजपुत्रत्वेनाजानन् विस्मृतश्चासौ कण्ठमणिश्चेति विग्रहः । ब्रह्मैवेति पूर्वब्रह्मशब्दस्य जीववाचित्वमुपपाद्योपसंहरति– **अत इति** ॥ यतः परब्रह्मवाचकत्वे ब्रह्माप्येतीति श्रुतब्रह्मप्राप्तिविरोधोऽत इत्यर्थः ॥

**उपनिषत्**—

[मुक्तौ मरणं न भवति]

**तदेष श्लोको भवति ॥**

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥**

**तद् यथाऽहिर्निर्लयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥**

**भाष्यम्**—

'अथ मर्त्योऽमृतो भवति' अथ मुक्त्यनन्तरं न कदाचिन्मृतिरस्य भविष्यतीत्यर्थः । मुक्त एव परे ब्रह्मणीच्छया प्रविशति निःसरति च । दर्शनादीन् ब्रह्मणो भोगांश्च करोति । स्वरूपभूताः कामा मुक्तानां भवन्तीत्यतो हृदि श्रिता इति विशेषणम् । हृदयस्यैव मोचनात्तत्स्थाः कामा मुक्तानामपगच्छन्तीति युक्तमेव । नह्यमुक्तस्य कदाचित्सर्वे कामा मुच्यन्ते । सुप्त्यादावप्यभिभव एव वासनाया विद्यमानत्वात् । वासनाया हि पुनरुद्भवः ।

**टिप्पणी—**

अथ मर्त्योऽमृतो भवतीत्यस्य यतः सर्वकामप्रहाणं अथ ततो हेतोस्तदा मर्त्योऽमृतो भवति। किं तदमृतत्वं केत्यत उक्तम् ॥ **अत्रेति** ॥ अत्रास्मिन् शरीरे स्थितस्सन् ब्रह्म समश्नुते तद्भावं भुङ्क्ते इति व्याख्यानमसत्। सर्वकामप्रहाणस्यैव मोक्षत्वेन तस्य तत्साधनत्वाभावात् जीवस्य ब्रह्म-भावस्याप्रामाणिकत्वाच्चेति भावेन तदनूद्य व्याचष्टे– **अथेति** ॥ तथाच न तस्य प्राणा उत्क्रामन्तीत्युक्तार्थे इदं प्रमाणमिति भावः। अत्र ब्रह्म समश्नुत इति मोक्षे ब्रह्मणो मुक्तभोग्यत्वमुच्यते तदयुक्तं असङ्गतं च पूर्वमस्यार्थस्यानुक्तत्वेनोक्तार्थेऽस्य प्रमाणत्वायोगादित्यतो ब्रह्म समश्नुत इत्यस्य ब्रह्म प्राप्नोतीत्यर्थमभिप्रेत्य तत्तात्पर्यमाह– **मुक्त एवेति** ॥ मुक्त एवेत्यवधारणेनाथाकामयमान इत्यादेरमुक्तपरत्वाङ्गीकारे अत्र ब्रह्म समश्नुत इति मन्त्रोऽसङ्गतः स्यात्। तस्यामुक्तेऽसम्भवादिति सूचयति। समित्यस्यार्थः स्वेच्छयेति। समश्नुत इत्यस्य भोगं करोतीत्यर्थमभिप्रेत्याह– **दर्शनादीनीति** ॥ भोगानित्यस्य विवरणं ब्रह्मणो दर्शनादीनिति कर्मणि षष्ठी। यद्वा षट्सु द्वितीयेति सूत्रात्पञ्चम्यर्थे द्वितीयेति भावेन ब्रह्मण इत्युक्तं ब्रह्म प्रसादादित्यर्थः। एतदनुसारेण ब्रह्माप्येतीत्येतद् भोगार्थत्वेनापि व्याख्येयमिति नासङ्गतिरिति भावः। यदा सर्वे प्रमुच्यन्ते कामायेस्येत्येतावता पूर्णत्वाद्धृदि श्रिता इति विशेषणं व्यर्थं व्यावर्त्याभावादित्यत आह– **स्वरूपभूता इति** ॥ यदीदं विशेषणं न स्यात् तदा सर्वकामविमोचनोक्तिर्बाधिता स्यात् मुक्तानां स्वरूपभूतकामसद्भावात्। अतोऽन्तःकरणस्थानामेव कामानां निवृत्तिं प्रतिपादयितुं तद्विशेषणमित्यर्थः। ननु मुक्तस्यापि हृदिस्थाः सर्वे कामाः मुच्यन्त इति कुत इत्यत आह– **हृदयस्यैवेति** ॥ अथाकामयमान इत्यादेरमुक्तपरत्वाङ्गीकारे तत्रोदाहृतश्लोके यदा सर्वे प्रमुच्यन्ते इत्येतदयुक्तं स्यादित्याह– **नहीति** ॥ नन्वमुक्तस्यापि सुप्तिमोहयोस्सर्वकामविमोचनमस्त्येव। तदा कामानामनुपलम्भात् 'यत्र सुप्तो न कञ्चन कामं कामयते' इत्यादिश्रुतेश्च। तत्कथमेवमुक्तमिति

चेन्न । सुप्त्यादावप्यात्मनः कामसद्भावात् । नच श्रुत्यानुपलम्भेन च विरोधः । विद्यमानानामपि कामानां तदानीमव्यक्तत्वेन श्रौताभावव्यवहारस्यानुपलम्भस्य चोपपत्तेरित्याशयवानाह– **सुप्त्यादाविति** ॥ आदिपदेन मोहग्रहणम् । अभिभवोऽव्यक्तिः । एवपदेन अभावव्यावृत्तिः । ननु सुप्त्यादौ कामसद्भावे सिद्धे युक्तमव्यक्तिकल्पनम् । स एव कुत इत्यत आह– **वासनाया इति** ॥ कामवासनाया इत्यर्थः । वासनारूपेण कामस्य सुप्त्यादावनुवर्तमानत्वादिति यावत् । स्यादेतत् यदि तदा कामवासनासद्भाव एव सिद्धः स्यात् स एव कुत इत्यत आह– **वासनाया हीति** ॥ वासनाया इति षष्ठी पुनरुद्भवोऽभिव्यक्तिः । अयमाशयः । यत्कामो देवदत्तः स्वापमाप्नोति तस्यैव कामस्योत्थापनान्तरं पुनरुद्भवः तावदस्ति भोजनादिकामनया सुप्तस्य पुनरुत्थापितस्य तद्विषयकव्यवहारस्यैव कदाचिद्दर्शनेन तदा तस्य काम-सद्भावानुमानात् । नचासावुत्थानानन्तरमेवोत्पन्नः । तदा देवदत्तस्यावशत्वात् । वस्तुदर्शने अनुमानादिनेष्टसाधनताज्ञाने च सति खलु कामोदयः स्यात् । नचावशस्यैवंविधा कामसामग्री कल्पयितुं शक्या । अतः प्राक्तनस्य सुप्त्यादावनुवर्तमानस्य पुनरुद्भवो वाच्यः । नच प्राक्तनस्यापि कामस्याभिव्यक्तस्यैव तदाऽनुवर्तमानत्वं वक्तुं शक्यम् । श्रुत्यनुपलम्भबाधपरिहारोपायाभावात् तस्माद् वासनारूपेण विद्यमानस्य सहकारिविशेषलाभे पुनरुद्भवो भवतीत्यङ्गीकार्यम् । तथाच यदि सुप्त्यादौ कामवासनैव न स्यात् । तदा कस्य पुनरुद्भवः स्यादिति । उक्तं च 'यत्कामः स्वापमाप्नोति तदेवोत्थापितः पुनः । अवशोऽपि व्याहरति कुतः सुप्तावकामता'इति ।

**भाष्यम्**——

**यावद्विमुच्येत्पुरुषस्तावत्कामा हृदि स्थिताः ।**
**चित्ताभावाद् विमुक्तस्य स्युः कामास्तद्गताः कुतः ॥**
**स्वरूपभूतचित्तेन कामाद्याः स्युः सुखात्मकाः ।**
**दुःखात्मकाः प्राकृता वा मुक्तानां न कथञ्चन ॥** इति ब्रह्मतर्के ॥

**अयं जीवोऽथ मुक्त्यनन्तरमेवाशरीरो भवति । अमृतः कदाऽपि न मृतः। प्राणाख्यं ब्रह्मैव ।**

**'कतम एको देव इति प्राण इति । स ब्रह्म त्यदित्याचक्षते' इत्यादि श्रुतेः । तेज एव च । तेज इति श्रीः ।**

**अन्येषाममृतत्वं तु भवेद् विष्णोः प्रसादतः ।**
**नित्यामृतः स भगवान् श्रीश्च नान्यः कथञ्चन ।। इति नारदीये ।।**
**प्राणस्तु भगवान् विष्णुः सर्वनेतृत्वतो विभुः ।**
**तेजस्तु सर्वतेजस्त्वाच्छ्रीरेव समुदाहृता ।। इति च ।।**

**टिप्पणी—**

एवं यदा सर्व इति मन्त्रं मुक्तपरतया व्याख्याय तस्यामुक्तपरत्वाङ्गीकारे बाधकमुक्तं तत्र प्रमाणमाह– **यावदिति** ।। मोक्षे तु न हृदिस्थाः कामा इति शेषः । कुत इत्यत आह– **चित्ताभावादिति** ।। मुक्तानां चित्ताभावे स्वरूपभूताः कामाद्याः कथं स्युरित्यत आह– **स्वरूपभूतचित्तेनेति** ।। सुखात्मका इति स्वरूपभूतचित्तस्य सुखात्मकत्वादिति भावः ।। **दुःखात्मका इति** ।। तमसि पतितानामिव तादृशचित्ताभावादित्यर्थः । अथ तस्मात्पूर्ववत् शरीराभिमानशून्यत्वात् अयं जीवन्मुक्तोऽप्यशरीर एव । अत एवामृतः शरीरस्यैव तद्धर्मत्वात् । अत एव प्राणः प्राणितीति प्राणः साक्षी ब्रह्मैवाशनादिवर्जितः परमात्मैव । किं पुनस्तत्तेज एव विज्ञानज्योतिरेवेति एकवाक्यतया अथायमशरीर इत्यस्य परकीयव्याख्यानमसत् । जीवन्मुक्तस्य परब्रह्मत्वायोगादिति भावेन वाक्यभेदमङ्गीकृत्याथायमशरीर इति वाक्यं जीवस्येश्वराद् वैलक्षण्यप्रतिपादकतया व्याचष्टे– **अयं जीव इति** ।। अशरीरो भवति अमृतो भवतीत्यर्थः । जीवादीश्वरस्य वैलक्षण्यप्रतिपादनायामृतः प्राणः ब्रह्मैवेति वाक्यं प्रवृत्तमिति भावेनामृतशब्दार्थमाह– **अमृत इति** ।। नन्विदममृतत्वं मुख्यप्राणस्यायुक्तमित्यतः प्राणो ब्रह्मैवेत्येतद् व्याचष्टे– **प्राणाख्यमिति** ।। प्राणशब्दस्य ब्रह्मवाचकत्वे श्रुतिमाह– **कतम इति** ।। उर्वरितस्य तेज

एवेत्यस्यानन्वयशङ्कां वारयितुं तदपि पृथग्वाक्यमिति भावेनाह– **तेज एवेति** ॥ जीवव्यावृत्त्यर्थमेवशब्दः । परब्रह्मसमुच्चयार्थश्चशब्दः । तेज एव च कदापि न मृतमिति सम्बन्धः । तेजःशब्दार्थमाह– **तेज इति** ॥ उच्यत इति शेषः । मुक्त्यनन्तरमेव जीवोऽमृतो भवति । परब्रह्मतेजश्च नित्यामृतमित्यर्थं प्रमाणेन द्रढयति– **अन्येषामिति** ॥ प्राणशब्दस्य परब्रह्मवाचकत्वे प्रमाणान्तरं वदन् तेजःशब्दस्य श्रीवाचकत्वे प्रमाणमाह– **प्राणस्त्विति** ॥ ७ ॥

**उपनिषत्**—

[मुक्तिप्रदः भगवान् विष्णुः]

**तदेते श्लोका भवन्ति ॥**

**अणुः पन्था विततः पुराणो मां स्पृष्टोऽनुवित्तो मयैव ।**
**तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वो विमुक्ताः ॥**

**भाष्यम्**—

तत्प्राप्तेः सुखहेतुत्वात् पन्था इति हरिः श्रुतः ।
अणुश्च विततश्चासौ यतोऽन्तर्बहिरेव च ॥
श्रिया स्पृष्टः श्रीपतित्वादनु वित्तस्तथैव च ।
तस्य प्रसादात् संयान्ति तल्लोकं सर्वमोक्षिणः ॥
ऊर्ध्वः स भगवान् सर्वविशिष्टो यत् सदैव हि ।

**टिप्पणी**—

इदानीमणुः पन्था इति मन्त्रमन्यथाप्रतीतिनिरासाय व्याचष्टे– **तत्प्राप्तेरित्यादिना सदैव हीत्यन्तेन** ॥ अनेन पन्था इति ऐकात्म्यज्ञानलक्षणो मार्ग इत्यपहस्तितम् । तस्यानर्थहेतुत्वेन मोक्षहेतुत्वाभावात् । मां स्पृष्ट इत्यस्यार्थः श्रिया स्पृष्ट इति । अनुवित्तो मयैवेत्यस्यार्थोऽनुवित्तस्तयैवेति । तेनेत्यस्यार्थस्तस्य प्रसादादिति । विमुक्ता इति बहुवचनाभिप्रायः सर्वमोक्षिण इति ॥ ८ ॥

उपनिषत्—

तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च ।
एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्मवित् पुण्यकृत् तैजसश्च ॥

भाष्यम्—

रूपमाहुः पञ्चविधं तस्य विष्णोर्महात्मनः ।
शुक्लं तु वासुदेवाख्यमनिरुद्धं तु नीलकम् ॥
सङ्कर्षणं पिङ्गलं च प्रद्युम्नं हरितं स्मृतम् ।
नारायणं लोहितं स्यात्पञ्चरूपाण्यजे हरौ ।
पञ्चबेदविभिन्नो यस्त्वभिन्नोऽपि स्वरूपतः ।
स पन्था ब्रह्मणा ज्ञातः पद्मजेनैव सन्ततम् ।
परब्रह्मस्वरूपज्ञो महातेजः श्रियस्तथा ।
सम्यक् स्वरूपविज्ञानात् तैजसत्वेन कीर्तितः ।
भगवत्कर्मकर्तृत्वात् पुण्यकृच्चाभिधीयते ।
एवंविधोऽपि तस्यैव प्रसादाद् याति तां गतिम् ।
अतः पन्थास्समुद्दिष्टो भगवान् केशवः स्वयम् ।
स्वगताखिलभेदेन विहीनोऽपि स सर्वदा ।
सर्वेषां व्यवहाराणां भेदोत्थानां स ईश्वरः ।
अभिन्नोऽपि ह्यतो भिन्नः पञ्चभेदादिना मृषा ।

टिप्पणी—

तस्मिंच्छुक्लमिति मन्त्रं व्याचष्टे– **रूपमिति** ॥

तस्मिन्नित्यस्यार्थोऽजे हराविति । एष इत्यस्य परामृश्यं दर्शयन्नेष पन्था ब्रह्मणा ह्यनुवित्त इत्येतद् व्याचष्टे– **पञ्चेति** ॥ स्वरूपतोऽभिन्नोऽपि पञ्चप्रकारेण विभक्तो यः स पन्था इत्यन्वयः । ब्रह्मणामनेकत्वात्पद्मजेनेत्युक्तम् । ब्रह्मवित्पुण्यकृत्तैजसश्चेत्येतद् व्याचष्टे– **परब्रह्मेति** ॥ एवंविधोऽपीत्यनेन

तैजसश्चेति चशब्दोऽपिशब्दार्थ इत्युक्तं भवति। तेनैतीत्यस्यार्थमाह– **तस्यैवेति** ।। तां गतिं तल्लोकमित्युक्तां गतिमिति शेषोक्तिः। तेनैति ब्रह्मविदित्येतत् एष पन्था इत्यत्र हेतुप्रतिपादकमित्याह– **अत इति** ।। स्वलोकप्राप्तिहेतुत्वात्। ननु स्वरूपतोऽभिन्नः पञ्चभेदविभिन्न इति यदुक्तं तत् विरुद्धमित्यतो विरोधं परिहरति– **स्वगतेनेति** ।। स्वगतैः अखिलैः गुणावयवादिभिः भेदेन विहीनोऽपि सन् भेदोत्थानामन्यत्र भेदनिमित्तकानामयं गुणोऽयं गुणी पञ्चरूप इत्यादीनां सर्वेषां व्यवहाराणां घटने ईश्वरः समर्थो हि यस्मादत एव स्वरूपतोऽभिन्नोऽपि पञ्चभेदादिना भिन्न इत्युच्यते । नान्यथेत्येतदमृषेत्यर्थः ।। ९ ।।

**उपनिषत्—**

[मिथ्याज्ञाननिन्दा कर्तव्या]

**अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायां रताः ।। १० ।।**

**भाष्यम्—**

**अन्यथोपासका येऽस्य ते यान्ति ह्यधरं तमः ।**
**ततः किञ्चिद् विशेषेण दुर्ज्ञानस्याविनिन्दकाः ।**
**सम्यगाचार्यवचनमविज्ञाय विरोधिनि ।**
**सत्वबुद्धिं यतः कुर्युरतस्तेऽधिकपापिनः ।**
**अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो हि दोषवान् ।**

**टिप्पणी—**

अन्धन्तमः प्रविशन्तीति मन्त्रमप्रतीत्यन्यथाप्रतीतिनिरासाय प्रमाणेन व्याचष्टे– **अन्यथेति** ।। श्रुतावविद्यापदं विषयिवाचकं विषयस्यान्यथाकारस्य लक्षकमित्यभिप्रेत्याविद्यामुपासत इत्येतत् अन्यथोपासका इति व्याख्यातम्। ततः अन्यथोपासकप्राप्यतमसः। भूय एवेत्यस्यार्थमाह– **किञ्चिद्विशेषेणेति** ।। श्रुतावुशब्दोऽवधारणार्थो विद्यायामित्यनेन सम्बद्ध्यते । तेन विद्यायां

यथार्थज्ञान एव रताः नत्वन्यथाज्ञाननिन्दां कुर्वन्तीत्येषोऽर्थो लभ्यते । अत उक्तम्– **दुर्ज्ञानस्याविनिन्दका इति** ॥ अन्यथोपासकापेक्षया दुर्ज्ञाना विनिन्दकाः किञ्चिद् विशेषेण तमो यान्तीति कुत इति चेन्न । तदपेक्षया तेषामधिकपापित्वात् । तदपि कुतः । उभयोरपि दुर्ज्ञानाविनिन्दकत्वाविशेषादित्यत आह– **सम्यगिति** ॥ विद्यायां रता इत्युक्तत्वेन तेषां समीचीनाचार्योपदेश-स्तावत्प्राप्तः । सम्यगाचार्यवचनं ब्रह्मनिर्गुणत्वादिनिन्दापरं सम्यगबाधितार्थं अविज्ञायाचार्योक्तार्थविरोधिनि ब्रह्मनिर्गुणत्वादौ सत्वबुद्धिं यतः कुर्युस्ततस्ते अन्यथोपासकापेक्षयाऽधिकपापिन इत्यर्थः । नत्वन्यथोपासका अपि ब्रह्मनिर्गुणत्वादौ सत्वबुद्धिकारिण एव ततः कथं ते अधिकपापिन इत्यत आह– **अप्राप्तत्यागिन इति** ॥ अन्यथोपासको ह्यप्राप्तत्यागी तस्य विद्यारतत्वाभावेन समीचीनाचार्योपदेशाभावे दुर्ज्ञाननिन्दनस्याप्राप्तत्वात् । अयं तु प्राप्तनिष्ठाहीनः सम्यगाचार्योपदेशप्राप्ते दुर्ज्ञाननिन्दने निष्ठाशून्यत्वात् । अप्राप्तत्यागिनः प्राप्तनिष्ठाहीनो ह्यधिकदोषवानिति । आचार्योपदेशाभावेन अप्राप्तनित्यकर्मादि-त्यागिनः आचार्योपदेशादिना प्राप्तनित्यकर्मादौ निष्ठाहीनो दोषवानिति लोकप्रसिद्धमिति हिशब्देन दर्शयति ॥ १० ॥

**उपनिषत्—**

[गुरुषु सत्सु नचेदिहावेदीन्महती विनष्टिः]

**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।**
**तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधोजनाः ॥ ११ ॥**

**भाष्यम्—**

नित्यदुःखस्वरूपत्वादनन्दं तत्तमो मतम् ।
बोधके विद्यमानेऽपि ये विदुर्न परं हरिम् ।
तेऽपि यान्ति तमो घोरं नित्योद्रिक्तासुखात्मकम् ॥ इत्यादि च ॥

बुधः सकाशेऽप्यविद्वांस इत्यर्थः ।

**बोधनाज्ज्ञानवान् भुत् स्यात् तत्सकाशाच्च ये हरिम् ।**
**न विदुस्ते तमो यान्ति सर्वदुःखात्मकं परम् ॥**

**टिप्पणी—**

अनन्दा इत्युक्तानन्दशब्दार्थमाह– **नित्येति** ॥ नन्दः सुखम् । नञो विरुद्धार्थत्वेन अनन्द इति तद्विरुद्धं दुःखमुच्यते । मुख्ये सत्यमुख्यग्रहणायोगात् नित्यदुःखस्वरूपत्वादियुक्तम् । इदानीमनन्दा नाम ते लोका इति मन्त्रं व्याचष्टे– **बोधक इति** ॥ अविद्वांसो बुध इत्यस्य बोधके विद्यमानेऽपि ये विदुर्न परं हरिमिति कथं व्याख्यानम् । ततः तस्याप्रतीतेरित्यतस्तद् व्याचष्टे– **बुध इति** ॥ ननु बुध इत्यस्य प्रथमान्तत्वात् कथं बुधः सकाशेऽपीत्युक्तमित्यतः षष्ठ्यन्तमेव तदित्यभिप्रेत्य तन्मन्त्रव्याख्यानरूपं स्पष्टं प्रमाणमाह– **बोधनादिति** ॥ ११ ॥

**उपनिषत्—**

[जीवस्य ब्रह्माभेदे दुःखं कुतः?]

**आत्मानं चेद् विजानीयादयमस्मीति पूरुषः ।**
**किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥**

**भाष्यम्—**

**यदि जीवः परात्मानमयमस्मीति वेदितुम् ।**
**योग्यः शरीरच्छेदादेः कथं दुःखी तदा भवेत् ॥**
**दुःखी शरीरसम्बन्धाज्जीवो विष्णोः प्रसादतः ।**
**अदुःखी विप्रुडानन्दं मुक्त एव च भोक्ष्यति ।**
**नित्यमुक्तः पूर्णसुखः स्वतन्त्रः पुरुषोत्तमः ।**
**परतन्त्रः कथं जीवो योग्यः सोऽस्मीति वेदितुम् ।**
**तस्मात् सोऽस्मीति नैवायं विजानीयात् कदाचन ।**
**तदीयोऽस्मीति जानीयात् सर्वदैव बुधस्ततः ॥ इति च ॥**

**टिप्पणी—**

आत्मानं चेद् विजानीयादिति मन्त्रं व्याचष्टे– **यदीति** ।। आत्मानमित्यस्यार्थः परमात्मानमिति । विजानीयादित्यस्यार्थो वेदितुं योग्यो भवेदिति । पुरुष इत्यस्य जीव इति शरीरमनुसंज्वरेदित्यस्यार्थः शरीरच्छेदादेर्दुःखी भवेदिति । किमिच्छन् कस्य कामायेत्यस्य तात्पर्यं कथमिति । यदि जीवस्तथा वेदितुं योग्यस्तदा दुःखी न स्यादित्युक्ततर्कस्य विपर्यये पर्यवसानमाह– **दुःखीति** ।। ननु जीवस्य स्वतो दुःखशून्यत्वादिष्टापत्तिः विपर्ययपर्यवसाने च बाध इत्यत उक्तम् **शरीरसम्बन्धादिति** ।। ननु संसारिणो जीवस्य दुःखित्वेन परमात्माहमस्मीति ज्ञातुमयोग्यत्वेऽपि मुक्तस्य तद्योग्यता स्यादेव तस्य परमात्मवददुःखित्वादानन्दभोक्तृत्वाच्चेत्यत आह– **विष्णोरिति** ।। प्रसादत एवेति विप्लुडानन्दमेवेति च एवशब्दसम्बन्धः । ननु यदि परमात्माऽपि एवंविधस्तदा कथं मुक्तस्सोऽस्मीति वेदितुमयोग्यस्स्यादित्यत आह– **नित्यमुक्त इति** ।। विष्णोः प्रसादतोऽदुःखीत्यस्य प्रतियोगी नित्यमुक्त इति विप्लुडानन्दं भोक्ष्यतीत्यस्य प्रतियोगी पूर्णसुख इति । स्वतन्त्र इत्यस्य प्रतियोगिनमाह– **परतन्त्र इति** ।। एवं विरुद्धधर्माधिकरणत्वेनोभयोर्भेदे निश्चिते जीवः सोऽसीति वेदितुं कथं योग्यः स्यादित्यर्थः । किं तत इत्यत आह– **तस्मादिति** ।। तर्हि कथं ज्ञातव्य इत्यत आह– **तदीयोऽस्मीति** ।। १२ ।।

**उपनिषत्—**

[परमात्मविदः न भयं किञ्चन]

**यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्सन्दोघे गहने प्रविष्टः ।**
**स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ।।१३।।**

**इहैव सन्तोऽथ विद्मस्तद्वयं न चेदिहावेदीर्महती विनष्टिः ।**
**य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ।। १४ ।।**

**यदैतमनुपश्यन्त्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न ततो विजिगुप्सते ॥ १५ ॥**

भाष्यम्—

**यस्य ज्ञातो नित्यबुद्धो भगवान् पुरुषोत्तमः ।**
**तस्य लोकः स एवैको यो लोकः परमात्मनः ।**
**स हि विष्णुः परो वायोरपि कर्ता प्रकीर्तितः ।**
**विश्वो वायुः समुद्दिष्टः पूर्णत्वाज्जीवसङ्घतः ।**
**तदन्यस्यापि सर्वस्य कर्तैको विष्णुरेव हि ।**
**प्रविष्टो गहने देहमध्ये सन्दोहनामनि ।**
**तज्ज्ञानी याति तं लोकं तत्प्रसादाच्च वर्तते ।**

टिप्पणी—

यस्यानुवित्त इति मन्त्रमन्वयक्रमेण व्याचष्टे– **यस्येति** ॥ येनेत्यर्थः । अनुवित्त इत्यस्यार्थो ज्ञात इति प्रतिबुद्ध इत्यस्यार्थो नित्यबुद्ध इति आत्मेत्यस्यार्थो भगवान्पुरुषोत्तम इति तस्य लोकः स उ लोक एवेत्यस्यार्थमाह– **तस्येति** ॥ उशब्दार्थ एक इति प्रधान इत्यर्थः । स विश्वकृत् स हि सर्वस्य कर्तेत्यनयो-रेकार्थतापरिहाराय तद् व्याचष्टे– **स हीति** ॥ विश्वकर्तेत्यस्य वायोरपि कर्तेति कथं व्याख्यानमित्यत आह– **विश्व इति** ॥ तर्हि सर्वस्य कर्तेत्युक्त्यैव सर्वमध्यपतितवायुकर्तृत्वस्यापि लाभात्तद्व्यर्थं स्यादित्यत आह– **तदन्यस्यापि सर्वस्येति** ॥ वाय्वन्यस्यापीत्यर्थः । यद्वा विष्ण्वन्यस्यापीत्यर्थः । हि यस्मा-दन्यस्य सर्वस्यापि कर्ताऽतो वायोरपि कर्तेति योजनान्न वैयर्थ्यम् । स्वात्मानं प्रति स्वस्य कर्तृत्वासम्भवादन्यस्येत्युक्तम् । अस्मिन् सन्दोघे गहने प्रविष्ट इत्येतद् व्याचष्टे– **सन्दोघनामनीति** ॥ सन्दोह इति पाठस्याप्ययमेवार्थः । इहैव सन्त इत्यस्य तात्पर्यमाह– **तज्ज्ञानीति** ॥ यदैतमनुपश्यन्तीत्यस्य तात्पर्यमाह– **तत्प्रसादादिति** ॥ १३-१५ ॥

उपनिषत्—

[भगवान् नित्यमुक्तः सर्वाधारः]

**यस्मादर्वाक् संवत्सरोऽहोभिः परिवर्तते ।**
**तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥**

भाष्यम्—

**न वत्सराश्च नाहानि यस्य नित्याविकारतः ।**
**ज्योतिषां ज्योतिरचलं तद्देवाः समुपासते ।**

टिप्पणी—

यस्मादर्वाक् संवत्सर इति मन्त्रं व्याचष्टे– **न वत्सराश्चेति** ॥ वत्सरादिकृतविकारो नास्तीत्यर्थः । तत्र हेतुमाह– **नित्याविकारत इति** ॥ ज्योतिषामादित्यादीनां ज्योतिष्ट्वप्रदमित्यर्थः । आयुरित्यस्यार्थो चलमिति ॥ १६ ॥

उपनिषत्—

**यस्मिन् पञ्च पञ्च जना आकाशश्च प्रतिष्ठितः ।**
**तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥ १७ ॥**
**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम् ।**
**मनसो मनो ये विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥१८॥**

भाष्यम्—

**प्राणश्चक्षुस्तथैवान्नं मनः श्रोत्रं च पञ्चमम् ।**
**मूलप्रकृतिसंयुक्तं यद्गतं प्रतिपूरुषम् ।**

टिप्पणी—

यस्मिन्पञ्च पञ्च जना आकाशश्च प्रतिष्ठित इति मन्त्रं व्याचष्टे– **प्राण इति** ॥ पञ्च पञ्चेति द्विरुक्तेस्तात्पर्यं प्रतिपुरुषमिति । प्राणस्य प्राणमिति वाक्यशेषपर्यालोचनयाऽन्नमत्र विवक्षितमिति न ज्ञायत इति चेन्न । माध्यन्दिन-

शाखायां प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन इत्युक्तत्वेन तदभिप्रायेणात्रान्नग्रहणात् । एतदभिप्रायेणोक्तं सूत्रकृता [१]'प्राणादयो वाक्यशेषात्'इति (ब्र.सू.१.४.१३)। तर्ह्येतदुपनिषदुक्ताः पञ्च जनाः क इति चेद् वाक्यशेषे परमात्मनः प्राणचक्षुःश्रोत्रमनसां चतुर्णामेव प्राणादिप्रदत्वोक्त्या प्राणादिचतुर्णामेव परमात्माश्रितत्वावगमेऽपि पूर्ववाक्ये ज्योतिषां ज्योतिरिति ज्योतिषां ज्योतिष्ट्वप्रदत्वोक्त्या ज्योतिषः परमात्माश्रितत्वावगमात् तेन सह पञ्चत्वसम्भवात्। तथाचोक्तं सूत्रकृता [१]'ज्योतिषैकेषामसत्यन्ने' इति(ब्र.सू.१.४.१४) । उक्तं च भाष्ये 'तद्देवा ज्योतिषां ज्योतिरित्यनेन काण्वानां पञ्चकम्'इति । अत्र ज्योतिरन्नशब्दयोरेकार्थत्वं पृथक्पञ्चकं त्वित्युपपन्नमिति टीकोक्तमनुसन्धेयम्। अत्र पञ्चजनादिशब्दानां प्राणादिपरत्वेऽपि इदं वाक्यं विष्णुपरं भवत्येवेति भावेनैवं व्याख्यातम् । सूत्रभाष्ये तु समन्वयपादोपपत्त्यर्थं पञ्चजनादिशब्दा अपि विष्णुपरा एवेत्युक्तमित्यवधेयम् । यद्वा तदुक्तरीत्या अत्रापि प्राणादिशब्दास्तत्तन्नियामकभगवत्परा एव । नचैवमाधाराधेयभावानुपपत्तिः । शरीरनियामकेश्वराधारप्राणादिषु भगवद्रूपाणां अवस्थितिमात्रेणाधाराधेयभावोपपत्तेरिति ॥ १७-१८ ॥

**उपनिषत्—**

**[भगवान् स्वगतभेदविवर्जितः]**

**मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

**भाष्यम्—**

**तस्य रूपगुणाद्येषु न कश्चिद्भेद इष्यते ।**
**तद्भेददर्शी संयाति मृत्योर्मृत्य्वभिधं तमः ॥**

**टिप्पणी—**

नेह नानास्ति किञ्चनेति वाक्यमन्यथाप्रतिपत्तिनिरासाय व्याचष्टे– **तस्येति** ॥ मृत्योः स मृत्युमिति मन्त्रं व्याचष्टे– **तद्भेदेति** ॥ १९ ॥

उपनिषत्—

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।
विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥ २० ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायेद् बहूञ्छब्दान् वाचो विग्लापनं हि तदिति ॥२१॥

भाष्यम्—

तस्मादेकप्रकारेण द्रष्टव्यो भगवान् हरिः ।
परिमाणविहीनत्वादप्रमेय इतीरितः ।

**इत्यादिवचनादप्रमेयत्वमवाच्यत्वममनोविषयत्वं च सर्वात्मना न मनसैवानुद्रष्टव्यमित्युक्तत्वात्।**

टिप्पणी—

एकधैवानुद्रष्टव्यमित्येतदुपसंहारपरमिति नेह नानास्ति किञ्चनेत्यनेन गतार्थमित्याह– **तस्मादिति** ॥ एतदप्रमेयमित्युक्ताप्रमेयशब्दार्थमाह– **परिमाणेति** ॥ परिमितिविहीनत्वादित्यर्थः । अत्राप्रमेयत्वं सर्वात्मना प्रमित्यविषयत्वमुच्यत इति व्याख्यानं प्रमाणविरोधेन पराचष्टे– **इत्यादिवचनादिति** ॥ अवाच्यत्वामनोविषयत्वयोर्ग्रहणं प्रसङ्गात् परमतप्रतिक्षेपार्थम् । इत्यादीत्यादिपदेनाप्रसिद्धेरवाच्यं तदित्यादिवचनपरिग्रहः । यद्वा यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति श्रुतावाच्यत्वामनोविषयत्वयोरुक्तत्वात्सर्वात्मना प्रमित्यविषयत्वमेवाप्रमेयत्वमिति वाच्यमित्यत आह– **अवाच्यत्वममनोविषयत्वं चेति** ॥ अप्रमेयत्वममनोविषयत्वं च सर्वात्मनेत्यत्र हेत्वन्तरमाह– **मनसैवेति** ॥

भाष्यम्—

[ब्रह्म अवाच्यं न]

**नच केनाप्यवाच्यस्य लक्षणा दृष्टा । क्षीरमाधुर्यविशेषादेरपि तत्तच्छब्देनैव वाच्यत्वात् ।**

**विशदं क्षीरमाधुर्यं गुडे तीक्ष्णं घृते स्थिरम् ॥ इत्यादि च ॥**

**टिप्पणी—**

ननु सर्वात्मना शब्दावाच्यत्वाङ्गीकारे को दोष इति चेत् । तथा सति वेदाप्रतिपाद्यत्वापत्त्या वेदान्तानामखण्डार्थनिष्ठताभ्युपगमव्याघातात् । ननु निर्गुणे ब्रह्मणि शब्दप्रवृत्तिनिमित्ताभावेन वाच्यत्वाभावेऽपि लक्षणया सर्ववेदप्रतिपाद्यत्वं भविष्यतीति चेत्तत्राह– **नचेति** ॥ लोके हि केनचित्पदेन वाच्यस्यैव केनचित्पदेन लक्ष्यत्वं दृष्टम् । यथा तीरपदवाच्यस्य तीरस्य गङ्गापदलक्ष्यत्वम् । नच केनापि पदेनावाच्यस्य लक्ष्यत्वं दृष्टम् । येन सर्वशब्दावाच्यस्यापि ब्रह्मणो लक्ष्यत्वं स्यात् । तथाच विप्रतिपन्नं न लक्ष्यं केनापि पदेनावाच्यत्वात् व्यतिरेकेण तीरवदित्यनुमानविरुद्धत्वान्न लक्षणया वेदप्रतिपाद्यत्वमित्यर्थः । सर्वपदार्थानां लक्षणायोग्यत्वान्न सपक्षत्वमिति नासाधारण्यम् । नन्विक्षुक्षीरगुडादीनां माधुर्यविशेषास्तावद् विद्यन्ते । अनुभव-सिद्धत्वात् । नच ते केनापि पदेन वाच्याः । तद्वाचकपदाभावात् । तथापि लक्ष्या दृश्यन्ते । अन्यथा वाग्व्यवहाराभावप्रसङ्गात् । अतस्तत्र व्यभिचारः । यथोक्तं 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । भेदस्तथापि नाख्यातुं सरस्वत्यापि शक्यते' इति । तथाच यथा केनापि पदेनावाच्यानामिक्षुक्षीर-माधुर्यविशेषाणां लक्ष्यत्वं तथा ब्रह्मणोऽपि केनापि पदेन अवाच्यस्य लक्ष्यत्वं स्यादित्यत आह– **क्षीरेति** ॥ तत्तच्छब्देनैव क्षीरमाधुर्यविशेषादिशब्देनैव । ननु वाचकत्वं पदस्य धर्मः माधुर्यविशेष इति च न पदं किन्तु वाक्यं अनेक-पदात्मकत्वात् । अतः कथं तच्छब्देनैव वाच्यत्वमुक्तमिति चेत् ऐकपद्यमैकस्वर्यं समासप्रयोजनमिति शाब्दैरङ्गीकृतत्वात् । अथवा तत्तच्छब्देन सूदशास्त्रप्रसिद्धेन विशदादिशब्देन वाच्यत्वादित्यर्थः । तत्र प्रमाणमाह– **विशदमिति** ॥

**भाष्यम्—**

[ब्रह्म न निर्गुणम् ]

**नच निर्गुणस्य सत्वमेवास्ति । गुणभेदादीनामपि सन्त्येव गुणाः । नचानवस्था स्वनिर्वाहकत्वात् ।**

**अवाच्यममनोगम्यमगुणं चेत्कुतोऽस्ति तत् ।**
**तस्मादेवं वदन् वस्तुशून्यतामर्थतो वदेत् ॥**
**गुणाश्च गुणिनः सर्वे स्वेनैव गुणिनो गुणाः ॥ इत्यादि च ॥**

**टिप्पणी—**

ननु ब्रह्म तावन्निर्गुणं केवलो निर्गुणश्चेति श्रुतेः । नच तत्र शब्दानां वचनवृत्तिः सम्भवति प्रवृत्तिनिमित्ताभावात् । नच सर्वथा शब्दाप्रतिपाद्यं ब्रह्म सत्यज्ञानादिवाक्यानां निर्विषयत्वापातात् समन्वयसूत्रानुपपत्तेश्च । अतः केनापि शब्देन अवाच्यस्यापि लक्षणाङ्गीकार्येत्यत आह– **नचेति** ॥ स्यादेतदेवं यदि ब्रह्म निर्गुणमेव भवेत् । नच तदस्ति । तथा सति ब्रह्मणः सत्वस्यैवाभावप्रसङ्गात् । नच निर्गुणस्य वस्तुनः सत्वं लोके दृष्टं येन तथा सम्भावयामः । निर्गुणश्चेति श्रुतिः सत्वादिगुणाभावपरा । अन्यथा एको देव इत्यादिनोक्तानामपि गुणत्वाद् व्याघातः । अतो ब्रह्मणः सत्वसिद्ध्यर्थं सगुणत्वमेवाङ्गीकर्तव्यमिति तस्य वाच्यत्वाङ्गीकारे न काप्यनुपपत्तिरिति भावः । ननु गुणादिपञ्चकस्य निर्गुणत्वं पदार्थविदो मन्यन्ते तथाच तद्वद् ब्रह्मणोऽपि सत्त्वं किं न स्यादिति चेन्न वैषम्यात् । निर्धर्मकस्य वस्तुनः सत्वमेव नास्तीत्यत्र विवक्षितं नहि गुणादीनां निर्धर्मकत्वं केऽप्यभ्युपयन्ति गुणत्वादीनामेव धर्माणां तत्र स्वीकारात् । किञ्च सत्यत्वमभ्युपगम्यते वैशेषिकादिभिर्गुणादिपञ्चकस्य निर्गुणत्वं तद् वस्तुतो न सम्भवति कुत इत्यत आह– **गुणभेदादीनामिति** ॥ गुणभेदो गुणविशेषः । आदिपदेन कर्मभेदादिग्रहणम् । यद्वा गुणश्च भेदोऽन्योन्याभावश्चेति गुणभेदौ तावादी येषां कर्मादीनां गुणभेदादयः तेषां गुणभेदादीनामिति विग्रहः । अयमाशयः । गुणभेदादीनां निर्गुणत्वं कस्मादङ्गीकर्तव्यम् । न तावत्प्रतीत्यभावात् । चतुर्विंशतिर्गुणाः रूपं रसात्पृथक् कर्म पञ्चविधं सामान्यं त्रिविधं एकः समवायः घटान्योन्याभाव एक इत्यादिप्रतीतेर्दुरपह्नवत्त्वात् । नचेयं भ्रान्तिः बाधकाभावात् । किञ्च यद्यपि गुणे संयोगादिव्यवहारं द्रव्ययोरेव संयोग इति दुर्दर्शनाभ्यासवान् जनो न

करोति । तथापि घटपटयोः संयुक्तयोस्तद्गतरूपे अपि संयुक्ते इति लोकः करोत्येव । किञ्च रूपेण युक्तो घट इति सर्वेऽपि व्यवहरन्ति । तथापि संयुक्त इति न व्यवहरन्तीति चेत् ध्वंसप्रध्वंसशब्दयोरिवानयोरर्थभेदास्फुरणात् । द्रव्याणां कर्मसंयोगेत्यादौ जैमिन्यादिभिः परीक्षकैरद्रव्यसम्बन्धेऽपि संयोग-व्यवहाराच्च । ननु गुणादिपञ्चकस्य अद्रव्यत्वात्कथं तत्र गुणादिसद्भाव इति चेत्कथमेतन्निश्चितं भवता । द्रव्यस्यैव गुणवत्त्वमिति प्रतीतेरुभयत्राविशिष्टत्वात् । ननु चतुर्विंशतिर्गुणा इत्यादिव्यवहार एव न प्रतीतिः । सचोपचार एवेति चेन्न । बाधकाभावात् । अन्यथा द्रव्येऽपि तथात्वापत्त्या सङ्ख्यादि-गुणासिद्धिप्रसङ्गः । ननु प्रतीत्यनुरोधेन तावदेकत्र सङ्ख्यादिकमङ्गीकर्तव्यं तत्र द्रव्येष्वेव तदङ्गीकारेण सर्वस्योपपत्तावन्यत्र न तदङ्गीकार आवश्यकः । अतोऽन्यत्र सङ्ख्यादिव्यवहार उपचार एवेति चेन्न । उपचारनिमित्ताभावेन तदयोगे तत्रापि तद्व्यवहारस्य मुख्यत्वावश्यम्भावात् । तथाहि न तावदेकार्थसमवायो निमित्तं, द्रव्ये चतुर्विंशतित्वनियमाबावात् प्रत्येकं रूपादिषु तत्प्रसङ्गाच्च । अपर्यायचतुर्विंशतिशब्दवाच्यत्वमिति चेन्न । शब्देऽपि चतुर्विंशतित्वाभावात् । चतुर्विंशतिपुरुषोच्चारितापर्यायशब्दवाच्यत्वमिति चेत् रूपरसादिशब्दोच्चारयितृ-पुरुषाणां चतुर्विंशतित्वे मानाभावात् । बधिरादीनां रूपादिषु सङ्ख्या-व्यवहाराभावप्रसङ्गाच्च । ननु रूपं रसात्पृथगिति प्रतीतिराश्रयगतं पृथक्त्वमपेक्ष्यैवेति चेन्न । समानाधिकरणरूपरसयोस्तथा प्रतीतेरनुभवसिद्धत्वात् । सा प्रतीतिः रूपे रसान्योन्याभावमवगाहत इति चेन्न । तथा सति घटः पटात्पृथगिति प्रतीतेरप्यन्योन्याभावविषयकत्वोपपत्तौ पृथक्त्वविलोपापातादिति । ननु तथापि गुणादिपञ्चकस्य गुणवत्त्वमङ्गीकर्तुं शक्यम् । एकत्वमेकं पृथक्त्वं पृथक् भेदो भिन्न इत्यादिप्रतीत्यैकत्वादिष्वप्येकत्वाद्यङ्गीकारापातात् । अन्यथा रूपादिष्वपि तदभावापातात् । तथाच तत्राप्येकत्वादावेकत्वाद्यन्तरमङ्गी-कर्तव्यमित्यनवस्थापातादित्यत आह– **नचेति** ॥ कुतो नेत्यत आह– **स्वनिर्वाहकत्वादिति** ॥ स्यादेवमनवस्था यद्येकत्वादौ विद्यमानमेकत्वादिकं

ततो भिन्नं स्यात् नचैवं स्वस्यैव स्वैकत्वादिव्यवहारनिर्वाहकत्वाभ्युपगमात्। अन्यथा प्रमेयत्वे प्रमेयत्वान्तरस्याप्यङ्गीकारापातेनानवस्थापातादित्यर्थः। उक्तमर्थं प्रमाणेन द्रढयति– **अवाच्यमिति** ॥ यतो ब्रह्म गुणं ततोऽवाच्यममनोगम्यमिति यद्यङ्गीक्रियते तदा वक्तव्यं तद्गुणं चेत्कुतोऽस्तीति। अगुणत्वेन तस्य सत्त्वमेव न स्यादिति यावत्। फलितमाह– **तस्मादिति** ॥ ब्रह्मरूपं च वस्तु अगुणमिति वदन्नित्यर्थः। शून्यतां ब्रह्मण इति शेषः। यद्वा वस्तुशून्यतामित्येकं पदम्। अनवस्थापरिहाराय गुणाः स्वेनैव गुणिन इत्युक्तम् ॥ २१ ॥

उपनिषत्—

[यज्ञाध्ययनादीनां उद्देशः सन्न्यासः]

**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्त्येतद्ध स्म वैतत् पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो**

**नहि सज्जतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥**

**भाष्यम्—**

सर्वमस्य वशे यस्माद् हरिः सर्ववशी ततः ।
सर्वस्य ब्रह्मरुद्रादेरन ईशान एव च ॥
गुणाधिकः पालकश्चेत्यतोऽधिपतिरीरितः ॥ इति च ॥

भूत एवाधिपतिर्नास्याधिपत्यमादिमत् ।

नित्यबोधात्मकत्वाद् यो मुनिः प्रोक्तो जनार्दनः ।
तं विद्वांश्च मुनिर्नाम बोधस्तस्याप्यमुख्यतः ॥
यं विदित्वा विमुक्ताश्चायुक्तकामविवर्जिताः ।
उत्पत्तिलयहीनाश्च नित्यानन्दैकभोगिनः ।
आनन्दभिक्षां विष्णूत्थां चरन्त्यज्ञानवर्जिताः ।
स एष मोक्षदो विष्णुर्यत् कल्याणं कृतं मया ।
पापं कृतं मयेत्येतन्न कदाचित् करिष्यति ।
कृते मया पुण्यपापे इति यच्चेतनात्मनाम् ।
तत्सर्वमत एवोक्तं विष्णोः सर्वेश्वरेश्वरात् ।
तीर्णो हि वर्तते नित्यं पुण्यपापे जनार्दनः ।
नैनं कदाचित् तपतः पुण्यपापे जनार्दनम् ॥ इति च ॥

**टिप्पणी—**

सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरित्येतेषां पुनरुक्तिपरिहारायार्थभेदमाह— **सर्वमिति** ॥ ईशानपदान्तर्गतानशब्दार्थमाह— **ब्रह्मरुद्रादेरिति** ॥ अनश्श्रेष्टक इत्यर्थः । अधीत्यस्यार्थो गुणाधिक इति पतिरित्यस्य पालक इति । सर्वस्याधिपतिरित्यनेन गतार्थतापरिहाराय भूताधिपतिशब्दं व्याचष्टे— **भूत**

**एवेति** ।। तात्पर्यमाह– **नास्येति** ।। ननु ब्रह्मापरोक्षज्ञानात्पूर्वमेव मननशीलत्वस्य सिद्धत्वात्तं विदित्वा मुनिर्भवतीति कथमुच्यत इत्यत आह– **नित्य इति** ।। तत्र हेतुमाह– **बोध इति** ।। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायेति वाक्यं व्याचष्टे– **यं विदित्वेति** ।। अथ भिक्षाचर्यं चरन्तीति भिक्षाचरणोक्त्या प्राप्तं दुःखं निवारयति– **उत्पत्तीति** ।। तर्हि कथं तेषां भिक्षाचरणमित्यत आह– **आनन्दभिक्षामिति** ।। एतमु हैवैतेन तरतः पापमकरवं कल्याणमकरवं इत्यंशं व्याचष्टे– **स एषमिति** ।। यदि विष्णुरेतन्न करोति तर्हि कः करोति जीव इति चेत् सोऽपि किं स्वातन्त्र्येण तथा करोतीति जिज्ञासायां प्राप्तमतः पापमकरवमित्यतः कल्याणमकरवमिति वाक्यं व्याचष्टे– **कृते मयेति** ।। श्रुतावु हैवेत्यस्यात्रान्वयः । उशब्दोऽवधारणार्थः । उशब्दैवशब्दयोरतःशब्दद्वयेनान्वय इति भावेनोक्तम् ।। **अत एवेति** ।। प्रसिद्ध्यर्थकस्य हेत्यस्यार्थ उक्तमिति । उभे उ हैवैष एते तरतीति वाक्यं ब्रह्मज्ञानिपरमिति निरासाय व्याचष्टे– **तीर्ण इति** ।। नैनं कृताकृते तपत इति वाक्यं व्याचष्टे– **नैनमिति** ।। २२ ।।

**उपनिषत्**—

[भगवान् कर्मलेपरहितः]

**तदेतदृचाभ्युक्तम् ।**

**एष नित्यो महिमा ब्राह्मणस्य**

**न कर्मणा वर्धते नो कनीयान् ।**

**तस्यैव स्यात् पदं वित्तं विदित्वा**

**न लिप्यते कर्मणा पापकेनेति ।। २३ ।।**

**तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं**

**पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राळिति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥ २४ ॥**

**भाष्यम्—**

**शान्तिस्तु भगवन्निष्ठा दमो मदविनिग्रहः ।**
**हृदिस्थविष्णौ सन्तोषः सदैवोपरमः स्मृतः ।**
**तितिक्षा द्वन्द्वसहता क्षमा क्रोधासमुत्थितिः । इति शब्दनिर्णये ॥**
**सर्वः पूर्णः समुद्दिष्टस्तथा ज्ञेयो जनार्दनः ।**
**रागसन्देहपापानि तथा जानंस्तरिष्यति ।**
**नित्यं हि रागपापादेर्मुक्तो यत् पुरुषोत्तमः ।**
**वेदाख्यब्रह्मणाऽण्यत्वाद् विष्णुर्ब्राह्मण उच्यते ।**
**पूर्णत्वाज्ज्ञानरूपत्वाद् ब्रह्मलोकश्च स प्रभुः ।**

**टिप्पणी—**

तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वेत्युक्तशान्त्यादिपदार्थानाह– **शान्तिस्त्विति** ॥ सर्वमात्मानं पश्यतीति वाक्यमैक्यमुच्यत इति प्रतीतिनिरासाय व्याचष्टे– **सर्व इति** ॥ नैनं पाप्मा तरति सर्वं पाप्मानं तरतीत्यादिपापतरणोक्तिरूपलक्षणम् । विपापो विरजो विचिकित्स इति परमात्मनो रागसन्देहाभावयोरप्युक्तेरिति भावेनाह– **रागेति** ॥ विपापो विरजो विचिकित्स इति वाक्यस्य ज्ञानिपरत्वे पुनरुक्तिप्रसङ्गात्तत्र हेतुप्रतिपादकतया व्याचष्टे– **नित्यं हीति** ॥ आदिशब्देन सन्देहग्रहणम् । ननु वर्णशून्यत्वाद् विष्णोः कथं ब्राह्मणो भवतीत्युक्तमित्यत आह– **वेदाख्येति** ॥ स्वरव्यत्यासस्त्वाधिक्यार्थ इति भावः । नित्यं हीत्यस्यात्रापि सम्बन्धः । अण्यत्वाद्गम्यत्वात् । अण पण गताविति धातोः । एष ब्रह्मलोक इत्येतत् षष्ठीसमासप्रतीतिनिरासाय व्याचष्टे– **पूर्णत्वादिति** ॥ २३-२४ ॥

उपनिषत्—

[तत्त्वज्ञानेन सम्पत्, विपत्परिहारश्च]

**स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥ २५ ॥ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेद ॥ २६ ॥**

इति शारीरब्रह्मणम् ॥ ४ ॥

भाष्यम्—

**न मरिष्यतीति ह्यमरो न मृतो यत् ततोऽमृतः ।**
**ब्रह्मायमाप्तकामत्वादेवं यो वेद तं परम् ।**
**आप्तकामोऽभयश्चैव भवेद् विष्णोरनुग्रहात् ॥ इति च ॥**
**परमार्थेऽविचिकित्सा ब्रह्मणो भवतीति नित्यमेव तथा भवतीत्यर्थः ।**
**अभूद्भविष्यति भवत्येवमाद्यपदानि तु ।**
**नित्यभावाभिधायीनि यत्र वाच्या हरेर्गुणाः ॥ इति शब्दनिर्णये ॥**

इति शारीरब्राह्मणम् ॥ ४ ॥

टिप्पणी—

अमरोऽमृत इत्यनयोः पुनरुक्तिपरिहारायार्थमाह– **नेति** ॥ अत्र ब्रह्मत्वं नाम यदि पूर्णगुणत्वं तदा ब्रह्मलोक इत्युक्तब्रह्मशब्देन पुनरुक्तिः स्यादित्यत आह– **ब्रह्मायमिति** ॥ अभयं हि वै ब्रह्म भवति य एवं वेदेति फलवाक्यं व्याचष्टे– **एवमिति** ॥ ज्ञानिनः सन्देहो नास्तीत्युक्तं तत्र विशेषमाह– **परमार्थे भगवतीति** ॥ ब्राह्मणो भवतीति वर्तमानप्रयोगेण भगवतोऽतीत-भविष्यत्कालयोर्वेदप्राप्यत्वं नास्तीति प्रतीतिं निवारयन्नाह– **ब्राह्मण इति** ॥ यद्वा ननु विपापो विरजो विचिकित्सो ब्राह्मणो भवतीत्यत्र भवतीति वर्तमानप्रयोगेण विपापत्वादीनां वर्तमानत्वमेव प्रतीयते । अतः कथं नित्यं हि पापरागादेर्मुक्त इत्यादिव्याख्यानमित्यत आह– **परमार्थ इति** ॥

अविचिकित्सो ब्राह्मणो भवतीति वर्तमानप्रयोगस्य नित्यमेव तथा भवतीत्यर्थः। कुतः। नहि घटो भवतीत्युक्ते नित्यमेव तथा भवतीत्यर्थः प्रतीयत इत्यत उक्तम्॥ **परमार्थ इति**॥ विषयसप्तमीयम्। विपापत्वादिकं खलु ब्रह्मणो विशेषणमुच्यते। तस्य च यदि भवतीत्यनेन वर्तमानमेवोच्यते तदा तद्भगवद्विशेषणपरं न स्यात्। तथात्वे भगवत इतरसाधारण्यापत्त्या उक्तमार्थत्वाभावप्रसङ्गात्। अतः परमार्थे भगवति विषये अविचिकित्सो ब्राह्मणो भवतीत्यस्य नित्यमेव तथा भवतीत्यर्थो वक्तव्य इति भावः। अत्र यद्यपि विपापो विरजोऽविचिकित्सो ब्राह्मणो भवतीत्यनुवादो युक्तः। तथापि लाघवादविचिकित्सो ब्राह्मणो भवतीत्युक्तम्। नचैवं ब्राह्मणो भवतीत्येव वक्तव्यमिति वाच्यम्। तथा सति भवतीत्यस्य तत्रैवान्वयप्रतीतिप्रसङ्गादिति। भगवति प्रतिपाद्ये भवतीत्यस्य नित्यभावनाभिधायकत्वं कुत इत्यतस्तत्र प्रमाणमाह— **अभूदिति**॥ २४॥

**अथ खण्डार्थः**

स पूर्वोक्तः अयं प्रसिद्धः आत्मा मुच्यमानो जीवः यत्र यदा बल्यं सर्वेषां बलकारिणं विष्णुं न्येत्य नितरामेत्य प्राप्य मृतेः पूर्वं सम्मोहमिव विमुग्धत्वमेव न्येति प्राप्नोति। मृतेः पूर्वं विमुग्धत्वं प्राप्य यदा विष्णुं प्राप्नोतीति यावत्। अथ तदा एनं बल्यं विष्णुं एते प्राणाः स्वस्वलोकस्थास्तेजःस्वरूपिणो देवाः अभिसमयन्ति स चक्षुःस्थो विष्णुः तेजोमात्रास्तेजःस्वरूपभूताः एता देवताः समभ्याददानश्चक्षुःस्थानाद्धृदयमेवान्ववक्रामति गच्छति तदनन्तरं भाव्यवस्थामाह— **स इति**॥ स एष चाक्षुषो दक्षिणाक्षिस्थः पुरुषः पूर्णषड्गुणो भगवान् पराक्स्थितो बहिर्व्यापारं कुर्वन् स्थितो यत्र यदा प्रत्यक् पर्यावर्तते अन्तरा गच्छति हृदयं प्रति गच्छतीति यावत् अथ तदा विष्ण्वाश्रितो जीवोऽरूपज्ञो भवति रूपाज्ञो भवति तदा न किञ्चिज्जानातीत्यर्थः॥ १॥

ननु भगवतो हृदयं प्रति गमने जीवः किमपि न जानातीति कुत इत्यत आह— **एकीभवतीति**॥ जीवेश्वरौ विशेषेण हृदयस्थौ तयोरंशास्तु चक्षुरादिषु

स्थिताः तदा च यदा चक्षुःस्थः परमात्मांशो जीवांशश्च हृदयस्थेन परमात्मरूपेण जीवरूपेण च एकीभवति तदाऽयं जीवो न पश्यति इत्याहुर्विद्वांसः एवं यदा घ्राणादिस्थः परमात्मांशो जीवांशश्च हृदयस्थेन परमात्मरूपेण जीवरूपेण चैकीभवति तदा जीवो न जिघ्रतीत्याद्याहुरिति योज्यम्। तदुत्तरभाविनीमवस्थामाह– **तस्य हेति** ॥ तस्य परमात्मानं प्राप्तस्य एतस्य किञ्चिदप्यजानतो मुच्यमानजीवस्य यद्धृदयं तस्याग्रं विष्णोः स्वरूपभूततेजसा प्रद्योतते प्रज्वलति । तेन प्रद्योतेन प्रकाशितद्वारेण एष आत्मा विष्णुः जीवमादाय शरीरान्निष्क्रामति । केन द्वारेणेत्याशङ्कायामाह– **चक्षुष इति** ॥ यद्विमुच्यमानो जीवः आदित्यलोके चिरं रत्वा मुक्तिगमनयोग्यः तर्हि जीवमादाय चक्षुष एव आदित्याभिमतचक्षुर्द्वारेणैव एष आत्मा निष्क्रामतीति सम्बन्धः । यदि मुच्यमानो विष्णुलोक एव ब्रह्मलोक एव वा रमणयोग्यस्तर्हि तमादाय मूर्ध्न एव निष्क्रामति । यदि श्रोत्राद्यभिमानिदेवलोके चिरं रत्वा मुक्तिगमनयोग्यस्तर्हि तमादायान्येभ्यः शरीरदेशेभ्य एव तत्तद्देवताभिमतशरीरावयवेभ्यः श्रोत्रादिभ्य एव निष्क्रामति । एवमुत्क्रामन्तं विष्णुं अनु अनुसृत्य प्राणो मुख्यप्राणः उत्क्रामति। एवमुत्क्रामन्तं प्राणमनुसृत्य सर्वे प्राणाः शरीरस्थाः देवा अनूत्क्रामन्ति । उत्क्रमणकाले परमात्मा कथं गच्छतीत्यत आह– **स विज्ञान इति** ॥ स विष्णुः सविज्ञानो विज्ञानेन जीवेन सहितो भवति। ननु पूर्वमेव जीवसाहित्यसद्भावात्किमिदानीं जीवसाहित्यमुच्यत इत्यतस्तदेव विशदयति– **स इति** ॥ स भगवान्विष्णुः विज्ञानं जीवमेव आरुह्य अन्ववक्रामति गच्छतीत्यर्थः । एवं तं जीवमारुह्य गच्छन्तं भगवन्तं अनु अनुसृत्य विद्याकर्मणी विद्यकर्माभिमानिनौ समन्वारभेते गच्छतः । न केवलमेतावत् किन्तु पूर्वप्रज्ञा च योग्यताभिमानिनी च गच्छतीत्यर्थः । अत्र विद्याभिमानिनौ ब्रह्मवायू कर्माभिमानी गरुडः योग्यताभिमानिनी रमेति ज्ञेयम् ॥ २ ॥

तेनैष निष्क्रामतीत्युक्तं निष्क्रमणं विविच्य दर्शयति– **तद्यथेति** ॥ तत् निदर्शनं यथा तृणजलूका तृणस्यान्तमवसानं गत्वा अन्यमाक्रमं आक्रम्यत

इत्याक्रमोऽवष्टम्भस्तमाक्रमं तृणान्तरं आक्रम्य प्राप्य आत्मानं पूर्वतृणात् उपसंहरत्यादत्ते पूर्वतृणं परित्यजतीति यावत् । एवमेवायमात्मा विद्यादानेन अविद्यां गमयित्वा इदं शरीरं निहत्य परित्यज्य अन्यमाक्रमं जीवस्य सूक्ष्मं रूपं आक्रम्य प्राप्य आत्मानं जीवस्य स्थूलदेहात् उपसंहरति आदत्ते। स्थूलदेहं परित्यजतीति यावत् ॥ ३ ॥

ननु परमात्मा मुक्त्ययोग्येभ्योऽपि मुक्तिं प्रयच्छति किं नेति सदृष्टान्तमाह– **तद्यथेति** ॥ तद् यथा वक्ष्यमाणनिदर्शनं यथा पेशस्कारी स्वर्णकारः पेशसः सुवर्णस्य मात्रामंशमुपादाय अन्यत् अन्यदिव नवतरं प्रागननुभूतत्वात् कल्याणतरं मलापकर्षणात् रूपरुचकादिकं तनुते करोति एवमेवायमात्मा परमात्मा जीवस्य स्वर्णमलस्थानीयमिदं शरीरं निहत्य अविद्यां गमयित्वाऽन्यदिव नवतरं प्रागननुभूतत्वात् कल्याणतरं रूपं तत्तद्योग्यं कुरुते । तदेवाह– **पित्र्यमिति** ॥ पितृजीवस्य पित्र्यमेव रूपं गन्धर्वजीवस्य गान्धर्वमेव रूपं देवजीवस्य दैवमेव रूपं प्रजापतेः रुद्रस्य प्राजापत्यं रूपं ब्रह्मणश्चतुर्मुखस्य ब्राह्ममेव रूपं अन्येषां भूतानां मनुष्योत्तमादीनां तत्तद्योग्यमेव रूपं करोतीति प्रत्येकं सम्बन्धः । अत्र सुवर्णस्यैव यथा रुचकादिभावः सुवर्णकारेण क्रियते न यस्य कस्यचिद्द्रव्यस्य तथा मुक्तियोग्यानामेवेश्वरेण मुक्तत्वं क्रियते नान्येषामित्युच्यते ॥ ४ ॥

एवं मोक्षदस्य परमात्मनो महिमानमाह– **स वा इति** ॥ मुक्तप्राप्यत्वेन प्रकृतः परमात्मा स दूरस्थो वा अयं समीपस्थः आत्मा व्याप्तः ब्रह्म गुणपरिपूर्णं विज्ञानमय इत्यादौ तेजोमय इत्यादिवत् अविज्ञानमय इत्याद्यपि ग्राह्यम् । विज्ञानमयः पूर्णविज्ञानस्वरूपः प्राचुर्यस्य स्वरूपत्वस्य च मयडर्थत्वात् । अविज्ञानमयः यस्य बुद्धिर्बुद्धितत्त्वात्मिका न भवति मनोमयः सर्वमन्तृस्वरूपः यस्य मनो मनस्तत्त्वात्मकं न भवति सोऽमनोमयः प्राणमयः पूर्णबलस्वरूपः यस्य प्राण अहङ्कारकार्यप्राणतत्त्वात्मको न भवति सोऽप्राणमयः चक्षुर्मयः सर्वद्रष्टृस्वरूपः यस्य चक्षुश्चक्षुस्तत्त्वात्मकं न भवति सोऽचक्षुर्मयः

श्रोत्रमयः सर्वश्रोतृस्वरूपः यस्य श्रोत्रं श्रोत्रतत्त्वात्मकं न भवति सोऽश्रोत्रमयः पृथिवीमयः पृथिवीवत्सर्वाधारः सुगन्धस्वरूपो वा यस्य गन्धः पार्थिवो न भवति सोऽपृथिवीमयः आपोमयः सर्वतृप्तिकरः यस्य तृप्तिरबात्मिका भवति सोऽनापोमयः वायुमयः सर्वकर्तृत्वस्वरूपः यस्य बलं वाय्वात्मकं न भवति सोऽवायुमयः आकाशमयः अवकाशप्रदातृस्वरूपः यस्याकाश आकाशतत्त्वात्मको न भवति सोऽनाकाशमयः तेजोमयः पूर्णतेजःस्वरूपः अतेजोमयः यस्य तेजो नाग्नेयं भवति काममयः सृष्ट्यादीच्छास्वरूपः अकाममयः प्राकृतेच्छाशून्यः क्रोधमयः सर्वदुष्टप्रतीपस्वरूपः अक्रोधमयः जीवक्रोधसदृशक्रोधशून्यः धर्ममयः आनन्दादिधर्मस्वरूपः अधर्ममयः प्राकृतसुखादिधर्मशून्यः सर्वमयः प्रकृत्यादिसर्वप्रधानः सर्वगुणस्वरूपश्च प्रकृत्यादिसर्वात्मको न भवतीति वा यस्य गुणाः सर्वविलक्षणा इति वा असर्वमयः तत् अतीतवर्तमानकालयोरेकप्रकारं यद् ब्रह्माण्डाच्छरीराद्बहिरन्तश्च एकप्रकारं एतद् वर्तमानभविष्यकालयोः एकप्रकारं इदंमयो वर्तमानजगत्प्रधानः वर्तमानस्वरूपश्च अदोमय अतीतानागतजगत्प्रधानः अतीतानागतस्वरूपश्च । यदर्थं महिमोक्तिस्तदाह– **इतीति** ।। इति एवं महिमविशिटो यतः अतः भगवान्यथाकारी जीवं यथा करोति यथाचारी आचारयति तथा भवति जीवः तदेव विवृणोति– **साधुकारीति** ।। यदि स भगवान्साधुकारी जीवं साधुं करोति तदा स जीवः साधुर्भवति पापकारी यदि जीवं पापं करोति तदा स पापो भवतीत्यर्थः । परमात्मापि स्वतो साधुं साधुं करोति स्वतो पापं पापं करोति किन्नेत्याह– **पुण्य इति** ।। ईश्वरप्रेरितेन पुण्येन जीवः पुण्यो भवति । तत्प्रेरितेन पापेन पापो भवति । यद्वा ईश्वर एव जीवं साधुं पापं च यदि करोति तर्हि कृतं पुण्यपापाभ्यामित्यत आह– **पुण्य इति** ।। ईश्वराधीनत्वं जीवस्य वृद्धसम्मत्या द्रढयति– **अथो इति** ।। अथो तस्मादेव जीवस्य ईश्वराधीनत्वादेव खलु अयं पुरुषो जीवः काममयो विष्णोरिच्छाधीन इत्याहुर्विद्वांसः । कुतः स भगवान्यथाकामो भवति । तत्क्रतुस्तत्कामो जीवो भवति । यत्क्रतुर्यन्निष्ठावान्

जीवो भवति तत्तादृशं कर्म कुरुते । यादृशं कर्म कुरुते तादृशं फलं प्राप्नोति । अतः परमात्मेच्छाधीनो जीव इत्यर्थः ॥ ५ ॥

निष्ठानुसारेण कर्म कुरुते कर्मानुसारेण फलं प्राप्नोतीत्युक्तार्थे मन्त्रोऽस्तीत्याह– **तदेष इति** ॥ तत्तत्रोक्तार्थे एष वक्ष्यमाणः श्लोको भवति । तदुपादत्ते– **तदेवेति** ॥ अस्य शरीरिणः लिङ्गं शरीरं मनश्च यत्र यस्मिन्फले निषक्तं नितरां सक्तं तत्र फले सक्तः पुरुषः तदेव फलं तत्साधनीभूतस्वकृतकर्मणा सह एति । अयं पुरुषः इह लोके यत्किञ्चित्कर्म करोति तस्य कर्मणः अन्तमवसानं प्राप्य तस्माल्लोकात्कर्मफलभूतात्स्वर्गादेः पुनरस्मै लोकाय एति आगच्छति किमर्थं कर्मणे कर्मकर्तुरिति । मुक्तामुक्तयोरुभयोरपि प्रकृतत्वात्को वा अत्र प्रतिपाद्य इत्यतो ब्राह्मणं स्वयमाह– **इति नु कामयमान इति** ॥ निरूपित इति शेषः । एवं संसारिस्वरूपं निरूप्य मुक्तस्वरूपमाह– **अथेति** ॥ अथशब्दः संसारिप्रकरणविच्छेदार्थः । योऽकामः अकारवाच्यविष्णुकामः निष्कामः अयोग्यकामरहितः योग्यकामस्यापि न सर्वस्य सर्वदा समुद्भूतिः किन्तु कस्यचित्कदाचिदेव । सा योग्यकामस्य कादाचित्कसमुद्भूतिरपि भगवत्कामानां विना नेत्यकामयमानः आप्ताः कामाः काम्या येनासावाप्तकामः । आत्मैव कामः काम्यश्चिदानन्दात्मकत्वादित्यात्मकामो मुक्तः । तस्य प्राणा मुक्त्यनन्तरं पुनः नोत्क्रामन्ति । ननु जीवभावपरित्यागेन मुक्तस्य परब्रह्मवदेव स्वातन्त्र्यप्राप्तौ कथमुक्तमकामत्वादिकं तदपरित्यागेऽपि मुक्तस्यान्यदा प्राणानामुत्क्रान्त्यभावेऽपि महाप्रलये स्यादित्यत आह– **ब्रह्मैवेति** ॥ स मुक्तो ब्रह्मैव सन् जीव एव सन् जीवभावमविहायैव परं ब्रह्माप्येति प्रतिप्रलये परं ब्रह्माप्नोतीत्यर्थः ॥ ६ ॥

न तस्य प्राणा उत्क्रामन्तीत्युक्ते मुक्तस्य मरणाभावे ब्रह्माप्येतीत्युक्तब्रह्मप्राप्तौ च प्रमाणमाह– **तदेष इति** ॥ मन्त्रं पठति– **यदेति** ॥ अस्य जीवस्य ये हृदि श्रिताः अन्तःकरणस्थाः कामाः ते सर्वे यदा प्रमुच्यन्ते तदा मुक्तो भवति । अनेन मुक्तस्याकामत्वनिष्कामत्वादिकं कुत इत्यत्र हेतुरुक्तो

भवति । अथ मुक्त्यनन्तरं मर्त्यः पूर्वं मरणशीलः मुक्त्यनन्तरममृतो भवति । कदाचिदस्य मृतिर्न भवतीत्यर्थः । अत्र मुक्तौ प्रलये वा ब्रह्म समश्नुते प्राप्नोति । ननु न तस्य प्राणा उत्क्रामन्तीति मुक्तस्य मरणाभाव उक्तः स न युक्तः । तथात्वे ईश्वरान्मुक्तस्य विशेषाभावापत्तेरिति चेन्न मुक्तस्य पूर्वं शरीरिण एव सतः शरीरत्यागानन्तरमेवाशरीरत्वं परमात्मनस्तु सर्वदा अशरीरत्वमिति वैलक्षण्यादिति भावेनाह– **तद्यथेति** ।। तत् निदर्शनं यथा अहिः सर्पो निलीयतेऽस्यामिति अहिनिलयनी सर्पत्वक् वल्मीके प्रत्यस्ता प्रक्षिप्ता मृता सर्पेण त्यक्ता शयीत एवमेवेदं शरीरं जीवेन परित्यक्तं शेते । अथ शरीरत्यागरूपमुक्त्यनन्तरमेव अयं जीवः अशरीरो भवति । प्राण अमृतः कदापि न मृतः । कः प्राण इत्यत आह– **ब्रह्मैवेति** ।। न केवलं प्राणाख्यं परं ब्रह्मैव नित्यमुक्तं किन्तु श्रीरपीत्याह– **तेज इति** ।। तेजः श्रीरेवामृतं कदापि न मृतमित्यर्थः । एवं श्रुतो राजा गुरुदक्षिणां प्रतिजज्ञे इत्याह– **सोऽहमिति** ।। ७ ।।

भगवान्मोक्षदातेत्याद्युक्तार्थे मन्त्राः सन्तीत्याह– **तदेत इति** ।। तत् तत्र पूर्वोक्तार्थे एते वक्ष्यमाणाः श्लोकाः प्रमाणत्वेन भवन्ति । तानुपादत्ते– **अणुरित्यादिना** ।। अणुर्विततो व्याप्तः पन्थाः सुखहेतुप्राप्तिमान् पुराणोऽनादिः मां श्रियं श्रिया स्पृष्टः मयैव श्रियैवानुवित्तो ज्ञातः ऊर्ध्वः सर्वविशिष्टो भगवान् यः तेन तत्प्रसादेन धीरा ब्रह्मविदः इतः संसाराद् विमुक्ताः स्वर्गं स्वरूपभूतरमणज्ञानात्मकं लोकं वैकुण्ठादिकमपि यन्ति प्राप्नुवन्तीत्यर्थः ।। ८ ।।

ननु भगवज्ज्ञानाद्रमाज्ञानान्निवृत्तकर्मानुष्ठानाच्च मोक्षो भविष्यति तत्र का भगवत्प्रसादस्यापेक्षा अतः कथं भगवतो निरुक्तपथित्वमित्यतः शुक्लस्य नीलस्येत्युक्तार्थे मन्त्रं वदन्नाह– **तस्मिन्निति** ।। तस्मिन् हरौ शुक्लं वासुदेवाख्यं नीलमनिरुद्धाख्यं पिङ्गलं सङ्कर्षणाख्यं हरितं प्रद्युम्नाख्यं लोहितं नारायणाख्यमिति पञ्चरूपाणि सन्तीत्याहुः । एष पञ्चरूपो भगवान् पन्था ब्रह्मणा चतुर्मुखेनाऽनुवित्तो ज्ञातः । हेतिप्रमाणसिद्धिमाह । किं प्रकृत इत्यतः पथित्वमेव दर्शयति–

**तेनेति** ।। ब्रह्मवित् परब्रह्मज्ञानी तैजसः महातेजोभूतश्रीस्वरूपज्ञानी पुण्यकृद् भगवत्कर्मकर्तापि तेनैव भगवता तत्प्रसादेनैव स्वर्गं लोकमित्युक्तां गतिमेति यस्मात् तस्माद्भगवान्पन्था इत्यर्थः ।। ९ ।।

एवं यथावत्परमात्मादिज्ञानं भगवत्प्रसादद्वारा मोक्षसाधनमित्युक्तं न केवलमेतावत् किन्नामान्यथाज्ञानिनिन्दासमुच्चितमेवेति भावेन यथावज्ज्ञानस्येवान्यथा-ज्ञाननिन्दाया अप्यावश्यकत्वोपपादनायान्यथाज्ञानाऽनिन्दनस्यान्यथाज्ञानापेक्षया-धिक्येनानर्थसाधनत्वं मन्त्रेणाह– **अन्धन्तम इति** ।। ये अविद्यां विरुद्धविद्यां मिथ्याज्ञानं तद्विषयमन्यथाकारं ब्रह्मनिर्गुणत्वादिकमुपासते ते अन्धन्तमः प्रविशन्ति । ये विद्यायां यथार्थज्ञान एव रताः नत्वन्यथाज्ञाननिन्दां कुर्वन्ति ते ततोऽन्यथोपासकाद्भूय एव किञ्चिद् विशेषेण तमः प्रविशन्तीत्यर्थः ।। १० ।।

ननु भगवज्ज्ञानं कदा सम्पादनीयमिति चेत् सम्यग्ज्ञानिन्युपदेष्टरि सत्येव अन्यथा अनर्थसद्भावादिति भावेन तत्र मन्त्रमाह– **अनन्दा इति** ।। यद्वा न केवलमन्यथाज्ञानिनस्तदनिन्दकस्य च तमःप्राप्तिः । किन्तु गुरूपदेशोल्लङ्घिनश्च अतो भगवदुपदेष्टरि सति भगवत्स्वरूपं ज्ञातव्यमेवेति भावेन तत्र मन्त्रमाह– **अनन्दा इति** ।। बुधः बोधयतीति भुत् ज्ञानी तस्मात् ज्ञानिनः ये भगवत्स्वरूपमविद्वांसो जनाः ते प्रेत्य अन्धयतीत्यन्धेन तमसा वृताः अनन्दाः सुखविरुद्धदुःखरूपाः ते प्रसिद्धा ये लोकाः तानभिगच्छन्तीत्यर्थः ।। ११ ।।

येऽविद्यामुपासते इत्यन्यथोपासकस्य तमःप्राप्तिरित्युकतं तत्र कोऽयमन्यथाकारो यदुपासकस्य तमःप्राप्तिरिति चेज्जीवेश्वराभेद एवान्यथाकारः तत्पक्षे दोषसद्भावादिति भावेन तत्पक्षे दोषमाह– **आत्मानमिति** ।। चेद् यदि पुरुषो जीवः अयं परमात्मा अहमस्मीति परमात्मानं विजानीयात् विज्ञातुं योग्यः स्यात् तर्हि किमिच्छन् तस्यैव विवरणं कस्य कस्मै कामायेति कथमिति यावत् शरीरं शरीरेच्छादिकमनुसञ्चरेत् दुःखी भवेदित्यर्थः । यदि जीवः स्वस्य परमात्मत्वानुसन्धानयोग्यः स्यात्तर्हि दुःखी न स्यात् परमात्मनो दुःखाभावादिति भावः ।। १२ ।।

भगवज्ज्ञानं मोक्षसाधनमित्यत्र मन्त्रान्तरं पठति– **यस्येति** ।। हि यस्मात्स आत्मा सर्वस्य कर्ता तस्माद् विश्वकृद् वायोरपि कर्ता अस्मिन्सन्दोहे देहे विद्यमानं यद्गहनं हृद्गुहास्थानं तस्मिन्प्रविष्टः प्रतिबुद्धः सर्वज्ञस्स आत्मा यस्य येनोपासकेनानुवित्तो ज्ञातः तस्योपासकस्य उ एकः प्रधानः स एव लोको भवति स कः यो लोकः परमात्मन इति शेषः ।। १३ ।।

सद्गुरूपदेशेनैव ज्ञानं सम्पादनीयं तदुल्लङ्घने चानर्थहेतुरितीममर्थं मन्त्रान्तरेण द्रढयति– **इहेति** ।। बुध इत्युक्तो ज्ञानी इहेति परामृश्यते इह ज्ञानिबोधके विद्यमान एव सन्तः सज्जना वयं तत् ब्रह्म विद्मः जानीमः । वेदपुरुषवचनमेतत् । कालान्तरे सम्पादयिष्ये ब्रह्मज्ञानं इति वदन्तं प्रत्याह– **नेति** ।। तस्मिन्बोधके सत्यपि चेद् यदि नावेदीः परं ब्रह्म न जानीयाः तर्हि महती विनष्टिः । सद्गुरूपदेशजज्ञानस्य किं फलमित्यत आह– **य एतदिति** ।। एतत्परं ब्रह्म सद्गुरूपदेशेनेति शेषः । न चेदवेदीर्महती विनष्टिरित्युक्तमेव विवृणोति– **अथेतरे इति** ।। गुरूपदेशोल्लङ्घिन इत्यर्थः । दुःखमेव अन्धन्तम इत्यर्थः ।। १४ ।।

ज्ञानमाहात्म्यप्रतिपादकमन्त्रमाह– **यदेति** ।। ये भूतभव्यस्येशानं देवं क्रीडादिगुणमेनमात्मानं यदाऽञ्सा अनुपश्यन्ति ततस्तदनन्तरम् । न विजुगुप्सते भयाभावादात्मानं गोप्तुं नेच्छति । यथोक्तं 'यः पश्येत्स भयाभावान्नात्मानं गोप्तुमिच्छति' इति (ईश. ६) ।। १५ ।।

तद् यदेतदिदंमयमित्यत्र तदेतच्छब्दाभ्यामुक्ते विष्णोर्भूतभविष्यतद्वर्तमानकालेष्वेकप्रकारत्वे अमृतः प्राण इत्युक्तामृतत्वे च मन्त्रं पठति– **यस्मादिति** ।। अहोभिः सह संवत्सरो यस्मादर्वाक् परिवर्तते यस्मिन्स्वव्यापरं कर्तुमसमर्थ इति यावत् तज्ज्योतिषां ज्योतिः ज्योतिष्ट्वप्रदं आयुरचलममृतं नित्यमुक्तं देवा उपासते हेति प्रसिद्धिमाह ।। १६ ।।

ब्रह्मज्ञानस्यैव मोक्षसाधनत्वे मन्त्रान्तरं पठति– **यस्मिन्निति** ।। यस्मिन्पञ्च पञ्च जनाः प्रतिपुरुषं पञ्चजनाः प्रतिष्ठिताः आकाशो मूलप्रकृतिश्च प्रतिष्ठितः

तमेवात्मानं मन्ये विजानीयां किं तज्ज्ञानेनेत्यत आह– **अमृतमिति** ।। अमृतं नित्यमुक्तं ब्रह्म विद्वानमृतो मुक्तो भवतीति ।। १७ ।।

आत्मनि प्रतिष्ठिताः पञ्च जनाः क इति चेत् ज्योतिषां ज्योतिरिति ज्योतिर्नियामकत्वोक्त्या पञ्चानां मध्ये ज्योतिरेकमुक्तमेव इतरे प्राणादय एवेति भावेन भूतलादेर्घटाद्याधारवत् न पञ्चजनाधारत्वं परमात्मनः किन्तु तन्नियामकत्वेनेति वदन् तथा परमात्मज्ञानिनः फलमाह– **प्राणस्येति** ।। प्राणं प्राणत्वप्रदं निचिक्युः प्राप्तवन्तः ।। १८ ।।

ननु मोक्षसाधनं ब्रह्मापरोक्षज्ञानं केन करणेन सम्पादनीयमित्यत आह– **मनसैवेति** ।। शुक्लस्य नीलस्य इत्यादिना बहुरूपत्वोक्त्या रूपाणां परस्परं मूलरूपेण च स वा अयमात्मा ब्रह्म विज्ञानमय इत्यादिना गुणानामुक्त्या गुणानां परस्परं गुणिना च भेदः प्राप्तः । तन्निराचष्टे– **नेहेति** ।। इह ब्रह्मणि किञ्चन रूपगुणादि नाना भिन्नं नास्तीत्यर्थः । कुतो नास्तीति चेत् यतो भेदाभेददर्शिनोऽप्यनर्थसद्भावः किमु भेदमात्रदर्शिन इति भावेन भेदाभेददर्शिनोऽनर्थं प्रमाणेनाह– **मृत्योरिति** ।। य इह ब्रह्मणि रूपं गुणादिकं नानेव भिन्नाभिन्नं पश्यति स मृत्योर्मृत्युमन्धन्तमः प्राप्नोतीत्यर्थः ।। १९ ।।

तर्हि कथं भगवान् ज्ञातव्य इत्यत आह– **एकधैवेति** ।। यस्माद्भेदज्ञानेऽनर्थसद्भावः तस्मादप्रमेयं परिमितिरहितं ध्रुवं नित्यमेतद् ब्रह्मैकप्रकारेणैव द्रष्टव्यमित्यर्थः । परमात्मापरोक्षज्ञाने मनः करणमित्युक्तं न तावन्मात्रेण तद्भवति किन्तु श्रवणादिसाधनादपीति भावेन साधनान्तरमाह– **विरज इति** ।। धीरो मनोधैर्यवान् ब्राह्मणो ब्रह्माणनयोग्यो विरजो निर्दोषः आकाशान्मूलप्रकृतेः पर उत्तमः केनापि प्रकारेण न जायत इत्यजः महान् परिमाणतः ध्रुवो नित्यः तमेव आत्मानमेव परोक्षतो विज्ञाय प्रज्ञामपरोक्षज्ञानं कुर्वीत सम्पादयेदित्यर्थः । तमेव विज्ञायेति परमात्मन एव वेदादिना विज्ञेयत्वमुक्तं तद्व्यावर्त्यमाह– **नेति** ।। शब्दान् वेदादिरूपान् बहून् मुखतो हरहिरण्य-गर्भादिरूपबह्वर्थप्रतिपादकान् नानुध्यायेत् नानुचिन्तयेत् । कुतः तद्बह्वर्थ-

प्रतिपादकवेदाध्ययनादिकं वाचो वागिन्द्रियस्य विग्लापनं श्रमकरमित्यर्थः। इतिशब्दः श्लोकसमाप्तिद्योतकः ॥ २०-२१ ॥

नन्विदं प्रकरणं चतुर्मुखपरमेवेति प्रतीयते। अज आत्मा महानित्यजादिशब्द-श्रवणात्। तेषां च विष्णुजातत्वयोगेन आत्मा विरिञ्चः सुमहानित्याभिधानेन महत्तत्त्वाभिमानित्वेन च तत्र सम्भवादित्यत आह– **स वा एष इति**॥ एष मन्त्रोक्तो महानज आत्मा स वै स एव। स क इत्यतो योऽयं विज्ञानमयः पुरुषः प्राणेषु हृद्यन्तर्ज्योतिरित्युक्त एवेति भावेन तद्वाक्य-मर्थतोऽनुवदति– **योऽयमिति**॥ योऽयं विज्ञानपूर्णः प्राणेषु शेते तिष्ठति य एष प्रसिद्धः अन्तर्हृदये हृदयान्तर्वर्तमान आकाशस्तस्मिन् शेते इत्युक्तस्स एवेत्यर्थः। पूर्वोक्तश्च भगवानेवेति भावः। ननु यदुक्तं भगवज्ज्ञानमेव मोक्षसाधनमिति। तन्न। वेदाध्ययनयज्ञदानतपआदीनामपि मोक्षसाधनत्व-श्रवणादित्यतो न तेषां साक्षान्मोक्षसाधनत्वं किन्तु तत्साधनब्रह्मज्ञानसाधनत्वमेवेति भावेन यन्महिमविशिष्टभगवज्ज्ञानं मोक्षसाधनं तदुक्तिपूर्वकं वेदानुवचनादे-र्ब्रह्मज्ञानसाधनत्वमाह– **सर्वस्येत्यादिना**॥ अत्र सर्वत्र यच्छब्दोऽनुवर्तनीयः। तस्य मे तमिति तच्छब्देनान्वयः। यद्वा स वा एष महानजः इत्यादिकमसम्भेदायेत्यन्तं मोक्षसाधनज्ञानविषयभगवन्माहात्म्यप्रतिपादकमेव। एवं सति प्रथमवाक्ये यच्छब्दोऽनुकर्षणीयः। तथाचायमर्थः। यः स वै मुक्तनियामकत्वेनोक्तः एष महानज आत्मा यश्चायं प्रसिद्धो विज्ञानपूर्णः प्राणेषु य एषोऽन्तर्हृदये हृदयस्यान्तराकाशस्तस्मिंश्च शेते यश्च सर्वं स्ववशे वर्तत इति सर्वस्य वशी सर्वस्येशस्य ब्रह्मरुद्रादेरनश्चेष्टक इति सर्वस्येशानः सर्वस्य ब्रह्मरुद्रादेः सकाशादधि अधिको गुणैः सर्वस्य पतिः पालकश्चेति सर्वस्याधिपतिः यश्च स प्रसिद्धः जीववत्साधुना कर्मणा तत्फलेन सुखेन भूयान् न भवति नित्याभिपूर्णत्वात् असाधुना कर्मणा तत्फलेन दुःखेन कनीयान्नो एव भवति तदभोक्तृत्वात् यश्चैषः प्रसिद्धः सर्वेश्वरः सर्वेश्वरत्वं न सादि किन्तु यश्चैष भूत एवाधिपतिर्नास्याधिपत्यमादिमदिति भूताधिपतिः यश्चैष भूत एव पालः

पालकः यश्चैष एषां लोकानां असम्भेदायासाङ्कर्याय एषां लोकानां विधरणः विधारणसमर्थः न केवलं सामर्थ्यमात्रं किन्तु एषां लोकानां सेतुराश्रयश्च तमेतमुक्तगुणवन्तं भगवन्तं ब्राह्मणाः ब्रह्माणनयोग्याः वेदानुवचनेन वेदाध्ययनेन यज्ञेन दानेन तपसा कायक्लेशात्मकेन अनाशकेनानशनव्रतेन विविदिषन्ति वेत्तुमिच्छन्तीति। अनाशकेन शरीरनाशाकरणेन तपसेति विशेषणविशेष्यभावो वा। अश्वेन जिगमिषतीत्यत्र यथाश्वस्य धात्वर्थगमनसाधनत्वमेव नत्विच्छासाधनत्वं एवमत्रापि यज्ञादेर्धात्वर्थवेदनसाधनत्वमेवोच्यत इत्यवगन्तव्यम्। वेदनेन किं स्यादित्यत आह– **एतमेवेति**॥ एतं पूर्वोक्तं महिमानं परमात्मानमेव विदित्वा मुनिर्ज्ञानस्वरूपो मुक्तो भवतीति यावत्। किञ्चैनं भगवन्तमेव लोकमाश्रयं इच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति निषिद्धकाम्यकर्मत्यागलक्षणसन्यासं स्वीकुर्वन्ति। यद्वा लोकमाश्रयमिच्छन्तः प्रव्रजनशीलाः एतमेव प्रतिप्रव्रजन्ति गच्छन्ति। श्रुतिः स्वोक्तार्थे पूर्वाचारं प्रमाणयति– **एतदिति**॥ तदेतद् भगवानेवाश्रय इति प्रमेयं विद्वांसः पूर्वेऽपि प्रजा उपलक्षणमेतत् निषिद्धं वस्तु न कामयन्ते ह स्म वा इति निपातत्रयं सुप्रसिद्धिद्योतकं प्रजाद्यकामने कारणं निरूपयति– **किमिति**॥ येषां नोऽस्माकमयं पूर्वोक्तमहिमविशिष्टो भगवानात्मा स्वामी अयं लोक आश्रयश्च ते वयं किं प्रजया करिष्याम इति भावेन प्रजां न कामयन्त इति सम्बन्धः। तर्हि ते किं कृतवन्त इत्यत आह– **ते हीति**॥ व्याख्यातमेतत्। यज्ज्ञानादेषणात्रयव्युत्थानलक्षणो मोक्षो यस्माच्चानन्दादिभिक्षा तस्य महिमानमाह– **स एष इत्यादिना**॥ महिमान्तरमाह– **एतमिति**॥ अहं पापमकरवं कृतवानिति अहं कल्याणमकरवं कृतवानिति एते भावने एतमु भगवन्तमेव नैव तरतो नैव व्याप्नुतो न जीवमपि जीवं तु व्याप्नुत एव। जीवं किं स्वातन्त्र्येण व्याप्नुते नेत्याह– **अतः पापमिति**॥ एवेत्यनुवर्तते। अहं पापमकरवमिति यच्चिन्तनं जीवस्य तदत एव परमेश्वरादेव कल्याणमकरवमिति यच्चिन्तनं जीवस्य तदप्यत एवेत्यर्थः। ननु परमात्मा पुण्यपापप्राप्तावपि

तादृशीं भावनां करोति किन्नेत्याह– **उभे इति** ।। एष परमात्मैव एते पुण्यपापे तरति नित्यतीर्णो वर्तते। ननु भगवतः पुण्यपापतरणं न तावदनाश्रयत्वं सर्वाश्रयत्वात् नापि तदननुभवः सर्वज्ञत्वात् अतः किं तत्तरणं नामेत्यत आह– **नैनमिति** ।। कृताकृते नित्यकर्मानुष्ठानानुष्ठाननिमित्तकपुण्यपापे । एनं भगवन्तं न तपतः तत्कृतनीचोच्चत्वादिलक्षणविकारो नास्तीत्यर्थः ।। २२ ।।

उक्तार्थे प्रमाणमप्यस्तीत्याह– **तदेतदिति** ।। ब्रह्मणा वेदेन गम्यत इति ब्राह्मणो विष्णुः तस्यैष पूर्वोक्तो महिमा नित्यः कुतः शुभकर्मणा न वर्धते पापकर्मणा नो कनीयान् । अस्त्वेवं भगवत्स्वरूपं किं मया कार्यमित्यतः तज्ज्ञानं सम्पादनीयमित्याह– **तस्यैवेति** ।। तस्य नित्यमहिम्नः कर्मफलशून्यस्य विष्णोरेव पदवित् स्वरूपज्ञानी स्यात् । किं तज्ज्ञानेनेत्यत आह– **तं विदित्वेति** ।। इतिशब्द ऋक्समाप्तिद्योतकः ।। २३ ।।

एवं भगवज्ज्ञानस्य मोक्षसाधनत्वात् तत्कामोऽन्योपि तज्ज्ञानं सम्पादयेदित्याह– **तस्मादिति** ।। तस्माद्भगवज्ज्ञानस्य मोक्षसाधनत्वात् एवंविद् भगवज्ज्ञानं मोक्षसाधनमिति ज्ञानवान् शान्तो भगवन्निष्ठो दान्तो निगृहीतमदः उपरत उप समीपे वर्तमाने स्वहृदिस्थे विष्णौ रमतीत्युपरतः तितिक्षुः द्वन्द्वं सहिष्णुः समाहितो यथावस्तुज्ञानी भूत्वाऽऽत्मन्येव स्वस्मिन्नेव विद्यमानमात्मानं पश्यति पश्येत् । केन प्रकारेणेत्यत आह– **सर्वमिति** ।। आत्मानं सर्वं पूर्णं पश्यति पश्येदित्यर्थः। यद्वा न केवलं श्रवणमननादिरूपपरोक्षज्ञानमेवापरोक्ष-ज्ञानसाधनं किन्तु शान्त्यादिसहितमितिवज्ज्ञानस्य मोक्षसाधनत्वे ज्ञानिनामाचारं प्रमाणयति– **तस्मादिति** ।। भगवज्ज्ञानिनः फलमाह– **नैनमिति** ।। एनं ज्ञानिनं पाप्मा न तरति न प्राप्नोति। किन्त्वयमेव सर्वं पाप्मानं तरतीति । नैनं पाप्मा तरतीत्युक्तं विवृणोति– **नैनं पाप्मा तपतीति** ।। सर्वं पाप्मानं तरतीत्युक्तं विवृणोति– **सर्वं पाप्मानं तपतीति** ।। एवं नैवं रजस्तरति सर्वं रजस्तरति नैनं विचिकित्सा तरति सर्वां विचिकित्सां तरतीत्यपि ग्राह्यम्। एवं ज्ञानिनः पापरागसन्देहाभावा अभिहिताः। तत्कुत इत्यतस्तदुपास्यस्य

पालकः यश्चैष एषां लोकानां असम्भेदायासाङ्कर्याय एषां लोकानां विधरणः विधारणसमर्थः न केवलं सामर्थ्यमात्रं किन्तु एषां लोकानां सेतुराश्रयश्च तमेतमुक्तगुणवन्तं भगवन्तं ब्राह्मणाः ब्रह्माणनयोग्याः वेदानुवचनेन वेदाध्ययनेन यज्ञेन दानेन तपसा कायक्लेशात्मकेन अनाशकेनानशनव्रतेन विविदिषन्ति वेत्तुमिच्छन्तीति। अनाशकेन शरीरनाशाकरणेन तपसेति विशेषणविशेष्यभावो वा। अश्वेन जिगमिषतीत्यत्र यथाश्वस्य धात्वर्थगमनसाधनत्वमेव नत्विच्छासाधनत्वं एवमत्रापि यज्ञादेर्धात्वर्थवेदनसाधनत्वमेवोच्यत इत्यवगन्तव्यम् । वेदनेन किं स्यादित्यत आह– **एतमेवेति** ॥ एतं पूर्वोक्तं महिमानं परमात्मानमेव विदित्वा मुनिर्ज्ञानिस्वरूपो मुक्तो भवतीति यावत् । किञ्चैनं भगवन्तमेव लोकमाश्रयं इच्छन्तः प्रार्थयन्तः प्रव्राजिनः प्रव्रजनशीलाः प्रव्रजन्ति निषिद्धकाम्यकर्मत्यागलक्षणसन्यासं स्वीकुर्वन्ति । यद्वा लोकमाश्रयमिच्छन्तः प्रव्रजनशीलाः एतमेव प्रतिप्रव्रजन्ति गच्छन्ति । श्रुतिः स्वोक्तार्थे पूर्वाचारं प्रमाणयति– **एतदिति** ॥ तदेतद् भगवानेवाश्रय इति प्रमेयं विद्वांसः पूर्वेऽपि प्रजा उपलक्षणमेतत् निषिद्धं वस्तु न कामयन्ते ह स्म वा इति निपातत्रयं सुप्रसिद्धिद्योतकं प्रजाद्यकामने कारणं निरूपयति– **किमिति** ॥ येषां नोऽस्माकमयं पूर्वोक्तमहिमविशिष्टो भगवानात्मा स्वामी अयं लोक आश्रयश्च ते वयं किं प्रजया करिष्याम इति भावेन प्रजां न कामयन्त इति सम्बन्धः। तर्हि ते किं कृतवन्त इत्यत आह– **ते हीति** ॥ व्याख्यातमेतत् । यज्ज्ञानादेषणात्रयव्युत्थानलक्षणो मोक्षो यस्माच्चानन्दादिभिक्षा तस्य महिमानमाह– **स एष इत्यादिना** ॥ महिमान्तरमाह– **एतमिति** ॥ अहं पापमकरवं कृतवानिति अहं कल्याणमकरवं कृतवानिति एते भावने एतमु भगवन्तमेव नैव तरतो नैव व्याप्नुतो न जीवमपि जीवं तु व्याप्नुत एव। जीवं किं स्वातन्त्र्येण व्याप्नुते नेत्याह– **अतः पापमिति** ॥ एवेत्यनुवर्तते। अहं पापमकरवमिति यच्चिन्तनं जीवस्य तदत एव परमेश्वरादेव कल्याणमकरवमिति यच्चिन्तनं जीवस्य तदप्यत एवेत्यर्थः । ननु परमात्मा पुण्यपापप्राप्तावपि

तादृशीं भावनां करोति किन्नेत्याह– **उभे इति** ।। एष परमात्मैव एते पुण्यपापे तरति नित्यतीर्णो वर्तते । ननु भगवतः पुण्यपापतरणं न तावदनाश्रयत्वं सर्वाश्रयत्वात् नापि तदननुभवः सर्वज्ञत्वात् अतः किं तत्तरणं नामेत्यत आह– **नैनमिति** ।। कृताकृते नित्यकर्मानुष्ठानानुष्ठाननिमित्तकपुण्यपापे । एनं भगवन्तं न तपतः तत्कृतनीचोच्चत्वादिलक्षणविकारो नास्तीत्यर्थः ।। २२ ।।

उक्तार्थे प्रमाणमप्यस्तीत्याह– **तदेतदिति** ।। ब्रह्मणा वेदेन गम्यत इति ब्राह्मणो विष्णुः तस्यैष पूर्वोक्तो महिमा नित्यः कुतः शुभकर्मणा न वर्धते पापकर्मणा नो कनीयान् । अस्त्वेवं भगवत्स्वरूपं किं मया कार्यमित्यतः तज्ज्ञानं सम्पादनीयमित्याह– **तस्यैवेति** ।। तस्य नित्यमहिम्नः कर्मफलशून्यस्य विष्णोरेव पदवित् स्वरूपज्ञानी स्यात् । किं तज्ज्ञानेनेत्यत आह– **तं विदित्वेति** ।। इतिशब्द ऋक्समाप्तिद्योतकः ।। २३ ।।

एवं भगवज्ज्ञानस्य मोक्षसाधनत्वात् तत्कामोऽन्योपि तज्ज्ञानं सम्पादयेदित्याह– **तस्मादिति** ।। तस्माद्भगवज्ज्ञानस्य मोक्षसाधनत्वात् एवंविद् भगवज्ज्ञानं मोक्षसाधनमिति ज्ञानवान् शान्तो भगवन्निष्ठो दान्तो निगृहीतमदः उपरत उप समीपे वर्तमाने स्वहृदिस्थे विष्णौ रमतीत्युपरतः तितिक्षुः द्वन्द्वं सहिष्णुः समाहितो यथावस्तुज्ञानी भूत्वाऽऽत्मन्येव स्वस्मिन्नेव विद्यमानमात्मानं पश्यति पश्येत् । केन प्रकारेणेत्यत आह– **सर्वमिति** ।। आत्मानं सर्वं पूर्णं पश्यति पश्येदित्यर्थः । यद्वा न केवलं श्रवणमननादिरूपपरोक्षज्ञानमेवापरोक्ष-ज्ञानसाधनं किन्तु शान्त्यादिसहितमितिवज्ज्ञानस्य मोक्षसाधनत्वे ज्ञानिनामाचारं प्रमाणयति– **तस्मादिति** ।। भगवज्ज्ञानिनः फलमाह– **नैनमिति** ।। एनं ज्ञानिनं पाप्मा न तरति न प्राप्नोति । किन्त्वयमेव सर्वं पाप्मानं तरतीति । नैनं पाप्मा तरतीत्युक्तं विवृणोति– **नैनं पाप्मा तपतीति** ।। सर्वं पाप्मानं तरतीत्युक्तं विवृणोति– **सर्वं पाप्मानं तपतीति** ।। एवं नैवं रजस्तरति सर्वं रजस्तरति नैनं विचिकित्सा तरति सर्वां विचिकित्सां तरतीत्यपि ग्राह्यम् । एवं ज्ञानिनः पापरागसन्देहाभावा अभिहिताः । तत्कुत इत्यतस्तदुपास्यस्य

भगवतो नित्यं पापरागसन्देहशून्यत्वादित्याह– **विपाप इति** ।। विष्णुर्नित्यं विपापो विरजोऽविचिकित्सो ब्रह्मणा वेदेन गम्यत इति ब्राह्मणो भवति यतः अतस्तज्ज्ञान्यपि तादृश इत्यर्थः । हे सम्राट् एष परमात्मा ब्रह्मलोकः पूर्णज्ञानस्वरूप इति होवाच याज्ञवल्क्यः । एवं श्रुतभगवत्तत्त्वो राजा गुरुदक्षिणां प्रतिजज्ञे इत्याह– **सोऽहमिति** ।। भगवते पूज्याय ते विदेहानपि मयानुभूयमनानपि विदेहदेशान् दास्याय मां च मयापि सह दास्यामीत्यर्थः ।। २४ ।।

विद्यान्तरमुपदिशति– **स वा इति** ।। अन्नमत्तीत्यन्नादः वसु दैवमानुषात्मकं ददातीति वसुदानः । तज्ज्ञानिनः फलमाह– **विन्दत इति** ।। २५ ।।

विद्यान्तरमाह– **स वा इति** ।। अजरो जराशून्यः न मरिष्यतीत्यमरः न मृत इत्यमृतः अभयो भयशून्यः ब्रह्माप्तकामः । ब्रह्मणोऽभयत्वं कुत इत्यतस्तदेतदमृतमभयमेतत् ब्रह्मेति श्रुतिप्रसिद्धमित्याह– **अभयं वै ब्रह्मेति** ।। तज्ज्ञानिनः फलमाह– **अभयं हीति** ।। य एवं वेद तस्य ब्रह्माऽभयं भवति भयराहित्याय भवतीत्यर्थः । यद्वा य एवं वेद सोऽभयं भयरहितः ब्रह्माप्तकामो भवतीति प्रसिद्धमित्यर्थः ।। २६ ।।

इति शारीरब्राह्मणम् ।। ४ ।।

**उपनिषत्—**

## अथ मैत्रेयीब्राह्मणम्

[मैत्रेय्याः अध्यात्मनिष्ठा]

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ।। १ ।। मैत्रयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरेऽहमस्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ।। २ ।। सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा**

**पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवता जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेत्थ तदेव मे ब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियामवृद्धन्त तर्हि भवत्येतद् व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥**

**भाष्यम्—**

**प्रियां वाचमवर्धयद् भवती ।**

**टिप्पणी—**

प्रिया वै खलु नो भवती सती प्रियामवृधदित्यत्र प्रियमवृधद् वृद्धमभवदिति यथाश्रुतप्रतीतिरनुपपन्ना प्रियस्य स्वत एव वर्धनायोगाद् भवती त्वं पूर्वमपि नः प्रियैव सतीदानीमतिप्रियं प्रीतिमवृधद् वर्धितवत्यसीति व्याख्यानमयुक्तम् । अवृधदित्यस्य अन्तर्णीतणिच्त्वेन यथाश्रुतेनैवोपपत्तौ त्वमित्यध्याहृत्य तदुपपत्तये वर्धितवत्यसीति प्रतिपादनायोगात् बह्वध्याहारापाताच्च । प्रियशब्दस्य प्रीतिविषय-वाचकत्वेन प्रीतिवाचकत्वायोगाच्च । प्रियं भाषस इति प्रागुक्तविरोधाच्चेति भावेन प्रियमवृधदिति वाक्यं कर्तृप्रदर्शनपूर्वकं व्याचष्टे– **प्रियामिति** ॥ तथापि प्रियं वचनमिति वक्तव्यमिति चेत्सत्यं अर्थानुवादोऽयमित्यदोषः । शाखान्तरा-भिप्रायेण वा । एतदुपनिषत्पुस्तकेष्वपि क्वचित्प्रियामवृधदिति पाठोपलम्भाच्च ।

**उपनिषत्—**

[भगवत्सन्निधानेनैव सर्वं प्रियं भवति, तत्साक्षात्कार एव मोक्षसाधनम्]

**सा होवाच न वा अरे पत्युः कामाय पतिः प्रियो**

भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामायसर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम् ॥ ६ ॥

[देवास्सर्वे भगवदधीनाः]

ब्रह्म तं परादाद् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद् योऽन्यत्रात्मनो क्षत्रं वेद । लोकास्तं परादुर्योऽन्यत्रात्मनो

लोकान् वेद । देवास्तं परादुर्योऽन्यत्रात्मनो देवान् वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान् वेद भूतानि तं परादुयोऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद् योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदं सर्वं यदयमात्मा ॥

[दृष्टान्तत्रयनिरूपणपूर्वकं सृष्टिकर्तृत्वप्रतिपादनम्]

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दांञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः । स यथा शङ्खस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दांञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

[सर्वशास्त्राणि हयग्रीवादेव निःसृतानि]

स यथाऽऽर्द्रैन्धाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ ११ ॥

[सोदाहरणं भगवतः सर्वाश्रयत्वप्रतिपादनम्]

स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां

**त्वगेकायनमेवं सर्वेषां रसानां जिह्वैकायनमेवं सर्वेषां गन्धानां नासिकैकायनमेवं सर्वेषां रूपाणां चक्षुरेकायनमेवं सर्वेषां शब्दानां श्रोत्रमेकायनमेवं सर्वेषां सङ्कल्पानां मन एकायनमेवं सर्वासां विद्यानां हृदयमेकायनमेवं सर्वेषां कर्मणां हस्तावेकायनमेवं सर्वेषामानन्दानामुपस्थ एकायनमेवं सर्वेषां विसर्गाणां पायुरेकायनमेवं सर्वेषामध्वनां पादावेकायनमेवं सर्वेषां देवानां वागेकायनं स यथा जीवस्वरूपं अन्तर्बहिश्च एकरूपमेव सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥**

भाष्यम्—

**बाह्याभ्यन्तरविशेषाभावेन सर्वत्र लवणरसघन एव । न वा अहमिमं विजानातीति । अहेयमिमं परमात्मानं जीवो न विजानातीति ।**

टिप्पणी—

स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवेत्यत्र न विद्यते अन्तरमन्तस्थं बाह्यं च यस्मात्तदनन्तरमबाह्यमिति सैन्धवघनस्य सूक्ष्मत्वं व्याप्तत्वं चोच्यत इति प्रतीतिनिरासाय तद्विशेषणस्योपयोगं दर्शयंस्तद् वाक्यं व्याचष्टे– **बाह्येति** ॥ अनेन न विद्यते अन्तस्मिन्बाह्ये च विशेषो यस्य तदनन्तरमबाह्यमित्यर्थ उक्तो भवति । तच्च विशेषणं हेत्वर्थगर्भमिति भावेन विशेषाभावेनेत्युक्तम् । कृत्स्न इत्यस्यार्थः ॥ **सर्वत्रेति** ॥ रसघन इति कस्य रस इति न प्रतीयते अत उक्तम् ॥ **लवणेति** ॥

उपनिषत्—

**सा होवाच मैत्रेय्यत्रैव मा भगवान् मोहान्तमापीपिपन्न वा अहमिमं विजानातीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥ १३ ॥**

भाष्यम्—

**अत्रैव भगवान् मोहान्तं मोहाख्यं नाशमापीपिपत् प्रापयामास। अतोऽहं ब्रह्मास्मीत्यादिष्वप्यहंशब्दोऽहेयत्ववाचीति सिद्धम् । अन्यथा कथमहं विजानातीति युज्यते?**

टिप्पणी—

अत्रैव मा भगवन् मोहान्तमापीपिपन् नवा अहमिमं विजानातीति यथाश्रुतप्रतीतिनिवारणाय तदनूद्य समग्रवाक्यं अन्वयप्रदर्शनपूर्वकं व्याचष्टे– **न वा इति** ॥ अहमित्यस्यार्थोऽहेयमिति । जीव इति कर्तुरध्याहारः । मुक्त इत्यर्थः । मोहस्यान्त इति भ्रमनिरासाय मोहाख्यं नाशमित्युक्तम् । एवमत्र अहंशब्दस्याहेयार्थकत्वात् यत्प्रागुक्तमस्माभिः तदात्मानमेवावेदहं ब्रह्मास्मीत्यादिष्वहंशब्दोऽहेयत्ववाचीति तदपि सिद्धमित्याह– **अत इति** ॥ स्यादेतत् यद्यत्रैवाहंशब्दोऽहेयत्वार्थकः स्यात् तदेव कुतः अस्मच्छब्दरूपत्वाङ्गीकारे बाधकाभावादित्यत आह– **अन्यथेति** ॥ अस्मद्युत्तम इति विजानामीत्युत्तमपुरुषप्रयोगापत्तेरिति भावः । ननु विजानातीत्येतत् विजानामीति पुरुषव्यत्यासेन व्याख्यायत इति चेत् तथात्वे न वा अहमिमं विजानातीत्यस्य न प्रेत्य सञ्ज्ञास्तीति याज्ञवल्क्योक्त्यनुवादरूपत्वानुपपत्तेः । याज्ञवल्क्येन हि मोक्षे भूतानां विनाशाद्भूतजं ज्ञानं नास्तीति भावेन न प्रेत्य सञ्ज्ञास्तीत्युक्ते तमभिप्रायमजानती मैत्रेयी मुक्तस्य ज्ञानसामान्यनिषेधोऽनेन कृत इति बुद्ध्वा खलु पृच्छति– **अत्रैवेति** ॥ तथाच यदि अहमिमं परमात्मानं न विजानामीत्यर्थः

स्यात् तदा कथं तस्य तदनुवादरूपत्वं स्यात् अतस्तत्सिद्ध्यर्थमस्मदुक्त एवार्थोऽङ्गीकार्य इति । ननु न वा अहमित्येतत् न याज्ञवल्क्योक्तानुवादरूपं अत्रैव वस्तुनि प्रज्ञानघन एव न प्रेत्य सञ्ज्ञास्तीति मोहान्तमापीपिपत् अतोऽहमिमं न विजानामीति व्याख्यानादिति चेन्न । उक्तरीत्या न वा अहमित्यस्यैव न प्रेत्य सञ्ज्ञास्तीत्यनुवादरूपत्वोपपत्तौ अध्याहारेणैवं व्याख्यानायोगात् ।

उपनिषत्—

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरं रसयते तदितर इतरमभिवदति तदितर इतरं शृणोति तदितर इतरं मनुते तदितर इतरं स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं जिघ्रेत् तत् केन कं रसयेत् तत् केन कमभिवदेत् तत् केन कं शृणुयात् तत् केन कं मन्वीत तत् केन कं स्पृशेत् तत् केन कं विजानीयाद् येनेदं सर्वं विजानाति तं केन विजानीयात् स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १४ ॥**

इति मैत्रेयीब्राह्मणम् ॥ ५ ॥

भाष्यम्—

एतावद् विज्ञातुः परमात्मनो विज्ञानादिकमेव ह्यमृतत्वं मोक्षः ।

**विष्णोर्ज्ञानादिकं मोक्षस्तदभावे कुतः सुखम् ।**
**ज्ञेयाभावान्न हि ज्ञानं ज्ञानाभावे हि शून्यता ॥**
**तस्माज्ज्ञेययुतो मोक्षः सुखरूपत्वतः सदा ॥ इति ब्रह्मतर्के ॥**

**इति मैत्रेयीब्राह्मणम् ॥ ५ ॥**

**टिप्पणी—**

ननु तथापि मुक्तोऽहेयं परमात्मानं न विजानातीत्येतत्कथं प्रागुक्तज्ञान-सामान्यनिषेधानुवाद इति चेन्न । यदि मुक्तस्य ज्ञानमेव न स्यात् तदा परमात्मज्ञानमपि न स्यात् तथा ज्ञानं च मिथ्याज्ञानमिति मैत्रेय्याशयादिति । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहारेत्यत्रैतावदेवोक्त-रूपात्मज्ञानमेवामृतत्वं मोक्षसाधनमिति प्रतीतिनिरासाय व्याचष्टे– **एतावदिति** ॥ विज्ञातुर्जीवस्य । आदिशब्देन विषयपरिज्ञानं गृह्यते । हिशब्देन प्रमाणप्रसिद्धिमाह । पूर्वं याज्ञवल्क्यः न वा अरे अहं मोहं ब्रवीमि त्वमेव मदभिप्रायमज्ञात्वा अन्यथा कल्पयसीत्युक्त्वा मोक्षे विप्रतिपत्तीर्निराकुर्वन् आत्मनाशं मोक्षं वदतां बौद्धानामन्तमविनाशी वा अरेऽयमात्मा इत्यनेन निराकृत्य अशेषविशेषगुणोच्छेदो मोक्ष इति वैशेषिकमतं न विद्यते उच्छित्तिर्नाशो येषां ते अनुच्छित्तयः अनुच्छित्तयो धर्मा ज्ञानाद्या यस्यासावनुच्छित्तिधर्मेत्यनेन निराकृत्य निर्विशेषचैतन्यमात्रावशेषो मोक्ष इति मतेऽनिष्टमापादयितुं यत्र हीत्यादिना व्यतिरेकव्याप्तिमुक्त्वा यत्र त्वस्य सर्वमात्मैवाभूदित्यादिना तन्मते विषयभोगः स एष नेति नेतीत्याद्युक्तमाहात्म्यवतो येनेदं सर्वं विजानाति तत्परब्रह्म केन विजानीयादिति परमात्मज्ञानं विज्ञातारमरे केन विजानीयादिति स्वस्वरूपज्ञानं च न स्यादित्युक्त्वा तत्रेष्टापत्तिपरिहाराय मैत्रेय्येतावदरे खल्वमृतत्वमित्युच्यते तथाच तद्वाक्यस्यास्मदुक्त एवार्थो न परोक्त इति भावः । अत्र प्रमाणमाह– **विष्णोरिति** ॥ अत्रादिशब्देन जीवस्य विषयस्य च ज्ञानं गृह्यते । ननु विगलिताखिलभेदे मोक्षे क्व विष्ण्वादिकं कुतस्तरां तज्ज्ञानमित्यत आह– **तदभाव इति** ॥ विष्ण्वाद्यभावे सुखं न स्यादिति

कुत इत्यत आह– **ज्ञेयेति** ।। मा भूज्ज्ञानं मोक्ष इत्यत आह– **ज्ञानाभाव इति** ।। शून्यता । आत्मनः स्यादिति शेषः । आत्मनो ज्ञानस्वरूपत्वादित्यर्थः । तथाच कस्य सुखं स्यादिति भावः । विपर्यये पर्यवसानमाह– **तस्मादिति** ।। सुखरूपत्वतो ज्ञानरूपस्यात्मनः सद्भावोऽवश्यमपेक्षितः । ज्ञानं च ज्ञेयसापेक्षमिति ज्ञेययुक्तो मोक्ष इत्यर्थः । अत्र ब्राह्मणार्थः पूर्वमेवोक्तः ।।

इति मैत्रेयीब्राह्मणम् ।। ५ ।।

**उपनिषत्**——

### अथ वंशब्राह्मणम्

**अथ वंशः पौतिमाष्यो गौपवनात् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनात् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ।। १ ।। आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद् गार्ग्यो गौतमाद् गौतमः सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद् गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्य-न्दिनायनान्माध्यन्दिनायनः सौकरायणात् सौकरायणः काषायणात् काषायणः सायकायनात् सायकायनः कौशिका-यनेः कौशिकायनिः ।। २ ।। घृतकौशिकाद् धृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासु रायण-स्त्रैवर्णेस्त्रैवर्णिरौपबन्धनेरौपबन्धनिरासुरेरासुरिर्भारद्वाजाद् भारद्वाज आत्रेयादात्रेयो माण्डेर्माण्टिर्गौतमाद् गौतमो वात्स्याद् वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात् काप्यात्**

कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवाद् गालवो विदर्भीकौण्डिन्याद् विदर्भीकौण्डिन्यो वत्सनपादो बाभ्रवाद् वत्सनपादाद् बाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसादायस्याङ्गिरस आभूतेस्त्वाष्ट्रादाभूति-स्त्वाष्ट्रो विश्वरूपात् त्वाष्ट्राद् विश्वरूपस्त्वाष्ट्रोऽश्विभ्या-मश्विनौ दधीच आथर्वणादध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात् प्रध्वंसन एकऋषेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिः व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनकात् सनकः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ६ ॥

इति वंशब्राह्मणम् ॥ ६ ॥

इति बृहदारण्यके षष्ठोऽध्यायः

भाष्यम्—

अवरेभ्योऽपि शृण्वन्ति परमाश्च कचित् कचित् ।
लीलयैव न चैतेषां परमत्वं विहीयते ॥ इति च ॥

इति वंशब्राह्मणम् ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः

टिप्पणी—

अध्यायद्वयोक्तविद्यासु बुभुत्सश्रद्धाजननार्थं तासां विद्यानां प्रवर्तकान् ऋषीनाह— **अथ वंश इत्यादिना** ॥ अत्रोपदेष्टारः सर्वेऽपि न नियमेन श्रोतृभ्योऽधिकाः अश्विभ्यामाथर्वण आधिक्याभावादिति भावेनाह— **अवरेभ्य इति** ॥

इति वंशब्राह्मणम् ॥ ६ ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्बृहदारण्यकभाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तममुनिविरचितायां षष्ठोऽध्यायः

# अथ सप्तमोऽध्यायः

उपनिषत्—

## अथ प्रथमं ब्राह्मणम्

[मूलावताररूपाणां नास्ति भेदः]

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

भाष्यम्—

अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः ।
पूर्णं च तत्परं रूपं पूर्णात्पूर्णाः समुद्गताः ॥
परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ।
न देशकालसामर्थ्यैः पारावर्यं कथञ्चन ॥
पूर्वरूपस्य पूर्णस्य पूर्णं यदवतारगम् ।
रूपं तदात्मन्यादाय पूर्णमेवावतिष्ठते ।
लौकिकव्यवहारो यो भूभारक्षपणादिकः ॥
तदद्दृष्टिं विना नान्यो लयः कृष्णादिनां क्वचित् ।

टिप्पणी—

चतुर्ष्वध्यायेषूक्तानां विद्यानाम् अखिलाः शेषभूताः सप्तमाष्टमाभ्यां निरूप्यन्ते । पूर्वं 'शुक्लस्य नीलस्य' इत्यादिना भगवदवतारा अभिहिता । तत्र मूलरूपस्या-वताररूपस्य च परावरत्वेन पूर्णत्वापूर्णत्वे स्यातामित्याशङ्का पूर्णमद इति प्रथमब्राह्मणेन अपाक्रियते । अप्रतिपत्तिविप्रतिपत्तिनिरासाय तद्ब्राह्मणं प्रमाणेन व्याचष्टे– **अवतारा इत्यादिना** ॥ पूर्णमिदमिति एकस्यैवावतारस्य पूर्णत्वमुच्यत इति शङ्कानिरासाय तस्यार्थमाह– **अवतारा इति** ॥ पूर्णमद इत्यस्यार्थमाह– **पूर्णं चेति** ॥ परं मूलरूपमित्यर्थः । पूर्णात्पूर्णमुदच्यत इत्यस्यार्थमाह– **पूर्णादिति** ॥

ननु मूलरूपस्य परत्वेन अवताररूपस्यावरत्वेन देशकालसामर्थ्यैर्विशेषावगमात् कथमुभयोः पूर्णत्वमित्यत आह– **परावरत्वमिति** ।। पूर्वमेवाभिव्यक्तत्वान्मूलरूपं परमित्युच्यते । अनन्तरमभिव्यक्तत्वादवताररूपमवरमित्युच्यत इत्यर्थः । मात्रपद-व्यवच्छेद्यमाह– **नेति** ।। पूर्णस्य पूर्णमादायेति वाक्यं व्याचष्टे– **पूर्वेति** ।। अवतारत्वेन गम्यत इत्यवतारगम् । ननु ब्रह्मादीनां स्वात्मन्यादानवत् स्वावताररूपादानस्यापि देहलयरूपत्वे कथं तस्य पूर्णत्वं स्यादित्यत आह– **लौकिकेति** ।। लोकविषय इत्यर्थः । तदृदृष्टिं भूभारक्षपणादिव्यवहारदृष्टिं कृष्णादिनां कृष्णादीनां, ह्रस्वः छान्दसः । एतेन 'अदः परोक्षं निरुपाधिकं ब्रह्म पूर्णं इदं नामरूपोपाधिविशिष्टमपि स्वरूपेण पूर्णं नतु विशिष्टरूपेण तदिदं विशिष्टरूपं पूर्णात्कारणात्मनः सकाशात् पूर्णमेवोदच्यते उद्गच्छति पूर्णात्मभावस्य त्यागायोगात् पूर्णस्य कार्यात्मनो ब्रह्मणः पूर्णं पूर्णत्वमेकरसत्वलक्षणमादाय विद्यया आविद्यकोपाधिसंसर्गतिरस्कारपूर्वकं पूर्णमेव निरन्तरप्रज्ञानघनैकरसस्वभावं केवलं ब्रह्मावशिष्यते' इति परकीयव्याख्यान-मपास्तम् । विशिष्टाविशिष्टब्रह्मसद्भावे मानाभावात् उदाहृतप्रमाणविरोधाच्च ।।

**उपनिषत्**—

**ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणी-**
**पुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदेनैन यद्वेदितव्यम् ।।**

**इति प्रथमं ब्राह्मणम्**

**भाष्यम्**—

**ओताः सर्वगुणाः यस्मादस्मिन्नों विष्णुरुच्यते ।**
**खं प्रकाशस्वरूपत्वाद् ब्रह्म तद् व्याप्तरूपतः ।**
**पुनः खं सुखरूपत्वात्पुराणं तदनादितः ।**
**वायोश्च रतिदं यस्माद्वायुरं ब्रह्म तत्परम् ।**
**ख्यातत्वाच्चापि तत्खं स्याद्रौहिणेयस्तथाऽवदत् ।**

**वेदोऽयं ज्ञानरूपत्वादिति यं ब्राह्मणा विदुः ।**
**निर्दोषत्वाद इत्युक्तस्तेन वेद्यं सदाऽखिलम् ॥** इति च ॥
**बाह्लीकसुता हि रोहिणी । अतो बलभद्रः कौरव्यायणीपुत्रः ।**

**इति प्रथमं ब्राह्मणम्**

**टिप्पणी—**

ॐ खं ब्रह्म खं पुराणं वायुरं खम् इत्येतद् व्याचष्टे– **ओता इति** ॥ अस्मिन् विष्णौ ओता इत्यन्वयः । खमिति त्रिवारमुक्तस्यैकार्थताप्रतीतिनिरासायार्थमाह– **खमिति** ॥ इति ह स्माह कौरव्यायणीपुत्र इत्यस्यार्थमाह– **रौहिणेय इति** ॥ वेदोऽयं ब्राह्मणा विदुरित्येतद् व्याचष्टे– **वेदोऽयमिति** ॥ वेदोऽनेनैन यद्वेदितव्य-मित्यत्रैनेत्येतत् अशब्दस्य तृतीयान्तमिति भावेन तदर्थमाह– **निर्दोषत्वादिति** ॥ तद्वाक्यं व्याचष्टे– **तेनेति** ॥ कौरव्यायणीपुत्र इत्येतत् रौहिणेय इति व्याख्यां तद्घटयति– **बाह्लीकेति** ॥ हि यस्माद्बाह्लीकः कौरव्यः तत्सुता च रोहिणी कौरव्यायणीत्युच्यते । अतस्तत्पुत्रो बलभद्रः कौरव्यायणीपुत्र इत्युच्यते इत्यर्थः ॥

**ततश्चायं खण्डार्थः**

अदो मूलरूपं पूर्णं इदमवताररूपं च पूर्णं पूर्णान्मूलरूपात् पूर्णं अवताररूपं उदच्यते उद्गच्छति पूर्णस्य मूलरूपस्य पूर्णं यदवताररूपं तदात्मन्यादायैकीभूय पूर्णं मूलरूपमेवावतिष्ठते । तस्यैव ब्रह्मणो मूलरूपस्य स्वरूपमाह– **ओमिति** ॥ तन्मूलरूपं सर्वगुणपरिपूर्णत्वादोमित्युच्यते प्रकाशरूपत्वात्खं व्याप्तत्वाद् ब्रह्म सुखरूपत्वात्खं अनादित्वात् पुराणं वायोः रतिदत्वाद्वायुरं ख्याततत्वात्खमिति कौरव्यायणीपुत्रो बलभद्र आह स्म अयं परमात्मा ज्ञानरूपत्वाद्वेद इति यं ब्राह्मणा विदुस्तेन वेदेन ज्ञानरूपेण एन निर्दोषत्वादकारवाच्येन यदिदं प्रसिद्धं तत्सर्वं वेदितव्यमित्यर्थः ॥

इति प्रथमं ब्राह्मणम् ॥ ७.१ ॥

उपनिषत्—

[दमं दानं दयां चेति त्रयं शिक्षेत्]

त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भगवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षर-मुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत् त्रयं शिक्षेद्दमं दानं दयामिति ॥ ३ ॥

इति द्वितीयं ब्राह्मणम्

भाष्यम्—

ज्ञानदानं तु देवानां फलदानं च कर्मणाम् ।
विष्णुना विहितं पूर्वं पुनर्देवनरासुराः ॥
ब्रह्माणमपि पप्रच्छुर्देवानां सद्गुणोच्छ्रितेः ।
अनहङ्कारमात्रं तु ब्रह्मणा विहितं सदा ।
सर्वोच्चमोक्षसम्प्राप्त्यै नराणां ज्ञानसाधनम् ॥

**देवादीनां दानमेव हविरादेः प्रकीर्तितम् ।**
**तमःप्राप्तिविलम्बाय दैत्यानां विहिता दया ।।** **इति प्रवृत्ते ।।**

**इति द्वितीयं ब्राह्मणम्**

**टिप्पणी—**

सर्वप्राणिसाधारणानुष्ठेयमाह– **त्रया इति** ।। देवादीन् सृजता भगवता तत्तत् कर्तव्यस्योपदिष्टत्वात्पुनः कस्माद्ब्रह्माणं पप्रच्छुरित्यत आह– **ज्ञानदानमिति** ।। उपलक्षणमेतत् देवानां दया दमश्च मनुष्याणामसुराणां च दानादित्रयमपि विहितमिति ग्राह्यम् । विशेषं बुभुत्सव इति शेषः । यद्वा अत्र देवानां दमस्य मनुष्याणां दानस्य असुराणां दयाया विहितत्वेन देवानां दानं नास्तीति प्रतीयते तदनुपपन्नम् । ज्ञानदानमेव देवानां विहितं इत्यादि श्रुत्या देवानां ज्ञानदानस्य मनुष्यकृतकर्मफलदानस्य च प्रमितत्वादित्यत आह– **ज्ञानदानं त्विति** ।। विष्णुनैव तस्य विहितत्वान्न तद्ब्रह्मणा विहितमिति भावः । देवा ऊचुः ब्रवीतु नो भवानिति । अथ हैनं मनुष्या ऊचुः अथ हैनमसुरा ऊचुरिति वाक्यत्रयं व्याचष्टे– **पुनरिति** ।। तेभ्यो हैतदक्षरमुवाच द इतीति देवानां दमो विहितः । तत्र दमो नाम नेन्द्रियनिग्रहः अपरोक्षज्ञानिनां तेषां स्वत एव निगृहीतेन्द्रियत्वादत आह– **देवानामिति** ।। देवानामनहङ्कारमात्रं विहितमित्यन्वयः । ऐश्वर्यादिना अहङ्कारो न कर्तव्य इति विहितमित्यर्थः । मात्रपदं दानव्यवच्छेदार्थः । तत्किमर्थमित्यत आह– **सद्गुणोच्छ्रितेरिति** ।। ज्ञानभक्त्यादिगुणवृद्ध्यर्थमित्यर्थः । ननूत्पन्नापरोक्षज्ञानानां तेषां मोक्षस्य निश्चितत्वात्किं सद्गुणवृद्ध्येत्यत आह– **सर्वोच्चेति** ।। ज्ञानमात्रेण संसारनिवृत्तिरूपमोक्षस्य सिद्धत्वेऽपि आनन्दातिशयविशिष्टो मोक्षो न सिद्ध्यतीति तदर्थं साऽपेक्षितेति भावः । तेभ्यो हैतदेवाक्षरमुवाच द इत्यादिना मनुष्याणां दानं विहितं तत्कस्य दानं कस्मै च दातव्यं किमर्थं चेत्यत आह– **नराणामिति** ।। देवादीनां हविरादेर्दानमेव नराणां ज्ञानसाधनं प्रकीर्तितमित्यन्वयः । ननु देवानां दमवत् मनुष्याणां दानमपि सद्गुणवृद्धिद्वारा सर्वोच्चमोक्षकारणं किन्नेत्यतो वाऽह– **नराणामिति** ।। ज्ञानसाधनमेवेत्यन्वयः । अनुत्पन्नापरोक्षज्ञानत्वात्तेषामिति भावः ।

असुराणां दयोपदेशे निमित्तमाह– **तम इति** ।। तद्विलम्बे च साधनानुष्ठानाधिक्ये दुःखाधिक्यसिद्धिरिति भावः ।।

**अथ खण्डार्थः**

त्रयस्त्रिविधाः प्रजापतेर्ब्रह्मणोऽपत्यानि प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यं ब्रह्मचारिव्रतं कृत्वोषुः । के ते त्रय इत्यत आह– **देवा इति** ।। तत्र देवा ब्रह्मचर्यमुषित्वा भवान्नोऽस्माकं ब्रवीत्वित्यूचुः । एवं पृष्टो ब्रह्मा तेभ्यो देवेभ्य एतद्वक्ष्यमाणमक्षरमुवाच ह । किं तदक्षरमित्यत आह– **द इतीति** ।। द इत्येकमक्षरमुपदिश्यत तदभिप्रायो ज्ञातः किमिति पृच्छति– **व्यज्ञासिष्ठा इति** ।। एवं पृष्टा देवा व्यज्ञासिष्मैति होचुः । तर्ह्यनुवदतेत्यत आह– **दाम्यतेति न आत्थेति** ।। एवमभिप्रायोद्घाटने ब्रह्मा भवत्ययं ममाभिप्राय इत्याह– **ओमिति होवाचेति** ।। १ ।।

एवमुत्तरत्रापि ।। २ ।।

यदेतद्ब्रह्मणोपदिष्टं तदेतदेव एषा दैवी वागप्यनुवदति का सेत्यत आह– **स्तनयित्नुरिति** ।। अनुवादप्रकारं दर्शयति– **दद द इतीति** ।। त्रिवारमुक्तस्याभिप्रायमाह– **दाम्यतेति** ।। तत्तस्माद् ब्रह्मणोपदिष्टत्वात् अद्यतनोऽपि एतत्त्रयं शिक्षेत् । किं तत्त्रयम् ।। **दमं दानं दयामिति** ।। शिक्षेदिति प्रत्येकं सम्बन्धः ।।

इति द्वितीयं ब्राह्मणम् ।। ७.२ ।।

**उपनिषत्**—

[विष्णुचतुमुखयोः हृदयमिति नाम]

**एष प्रजापतिर्यद्धृदयमेतद् ब्रह्मैतत् सत्यं तदेतत् त्र्यक्षरं हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ।।**

इति तृतीयं ब्राह्मणम्

भाष्यम्—

हरणाद् यज्ञभागादेर्ज्ञानादेर्दानतस्तथा।
यानादव्यवधानेन परस्य ब्रह्मणस्तथा॥
ब्रह्मा हृदय इत्युक्तस्तस्यैवंविदपि ध्रुवम्।
हृतिदानस्वर्गयानपात्रं स्यात्तत्प्रसादतः।
हृत्वैवास्मै ददत्यद्धा स्वकीयाश्चान्य एव च॥ इति निर्णये॥

परमात्मा च प्रजापतिः॥

इति तृतीयं ब्राह्मणम्

टिप्पणी—

पूर्वप्रकृतचतुर्मुखस्यैव स्वरूपमाह— **एष प्रजापतिरिति**॥ तत्र प्रजापतिशब्द-वाच्यस्य चतुर्मुखस्य हृदयशब्दवाच्यत्वमुक्तम्। तत्र किं निमित्तमित्यतः अभि-हरन्तीति ददतीति एतीति फलवाक्यानुसारेण तन्निमित्तं वदन् ब्राह्मणं व्याचष्टे— **हरणादिति**॥ हरणात् हृ, दानतो दः, अव्यवधानेनान्यद्द्वारमन्तरेण परस्य ब्रह्मणो यानात्प्राप्तेर्यः 'अभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद' 'ददत्यस्मै स्वाश्चान्ये च य एवं वेद' 'एति स्वर्गं लोकं य एवं वेद' इति फलवाक्यत्रयं व्याचष्टे— **तस्येति**॥ अभिहरन्ति ददतीत्यनयोरेकार्थत्वप्रतीतिं निराकुर्वन् हृति दानेत्युक्तं विवृणोति— **हृत्वैवेति**॥ अन्यस्मादिति शेषः। न केवलमेतावद्ब्राह्मणे पूर्वब्राह्मणप्रकृतचतुर्मुख एवैष प्रजापतिरिति प्रजापतिशब्देनोच्यते किन्तु परमात्मा चेत्याह— **परमात्मा चेति**॥ अन्यथा एतत् ब्रह्मैतत्सत्यमित्यस्य चतुर्मुखे मुख्यतोऽनुपपत्तेरिति भावः॥

इति तृतीयं ब्राह्मणम्॥ ७.३॥

उपनिषत्—

[वासुदेवः सत्यः कुतः?]

**तद्वैतदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमान् लोकान् जित इन्वसावसत्**

**य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यं ह्येव ब्रह्म ॥**

इति चतुर्थं ब्राह्मणम्

**भाष्यम्—**

ततत्वादेकरूपत्वात्तत्परं ब्रह्म कीर्तितम्।
तदेव तादृशं प्रोक्तं नैवान्यत्तादृशं क्वचित्॥
तदेतत्सत्यमेवासीद्वासुदेवाख्यमव्ययम्॥ इति ब्रह्मतर्के॥

तदेव हि तत्। तन्नारायणाख्यं परं ब्रह्मैतदेव सत्यं वासुदेवाख्यमासीदित्यर्थः।

स्वस्मात्स्वयं समुत्पन्नो वासुदेवात्मना प्रभुः।
सत्यं ब्रह्मेति यो वेद महायाज्यं तु तं परम्॥
प्राप्नोत्येव हि तल्लोकाञ्जीवन्नप्युत्तमो भवेत्॥ इति प्रध्याने॥
स्वभागहरणाद्दानात्फलानां यापनान्नृणाम्।
हृदयं भगवान् विष्णुः सत्यं तद्गुणरूपतः॥ इति सत्तत्वे॥

इति चतुर्थं ब्राह्मणम्

**टिप्पणी—**

प्रकृतभगवतो वासुदेवाख्यावतारनिरूपणेन एतत्सत्यमित्युक्तं विवृणोति— **तद्वैतदिति ब्राह्मणेन** ॥ तद्व्याचष्टे— **ततत्वादिति** ॥ अनेन प्रथमतच्छब्दस्य अर्थद्वयमुक्तम्॥ ततत्वाद्व्याप्तत्वात्। एकरूपत्वादतीतवर्तमानकालयोरिति शेषः। यथोक्तं पुरस्तात्- 'यथापूर्वं तथेदानीमिति विष्णुस्तदुच्यते' इति। यद्वा ततत्वादिति तच्छब्दार्थः वर्तमानानागतकालयोरेकरूपत्वादिति एतच्छब्दार्थः। यथोक्तं पुरस्तात्- 'यथेदानीं तथा नित्यं यस्मादेष भविष्यति। अत एतदिति प्रोक्तः' इति। परं ब्रह्म तदिति कीर्तितमित्युपलक्षणं एतदिति कीर्तितमित्यपि ग्राह्यम्। ननु व्याप्तमेकरूपं च वस्तु परमात्मसदृशमन्यदप्यस्ति किन्नेत्याह— **तदेवेति** ॥ परं ब्रह्मैवेत्यर्थः। एतत्तदा स सत्यमेवेति वाक्यं अन्वयक्रमेण व्याचष्टे— **तदेतादिति** ॥ ननु तदेव तादृशं प्रोक्तमित्येतत्कस्य व्याख्यानमिति न प्रतीयते इत्यतस्तद्व्याख्येयप्रदर्शनाय

श्रुतावन्वयमाह– **तदेव हि तदिति** ॥ अनेन द्वितीयैतच्छब्दोपरिगतस्य एवशब्दस्य प्रथमतच्छब्देनान्वयः । तदा सेति तच्छब्दस्यात्रापि सम्बन्ध इत्युक्तं भवति । हेत्यस्यानुवादो हीति । तथाच स्मृतौ तदित्यस्यार्थस्तादृशमिति हशब्दार्थः प्रोक्तमितीति भावः । ननु 'तदेतत्सत्यमेवासीत्' इति स्मृतौ तदेतदित्यनुवादांशः सत्यमेवेत्येवशब्दश्चान्ययोगव्यवच्छेदक इति प्रतीयते तदनुपपन्नम् । अनुवादे व्यर्थत्वात् सङ्कर्षणादिरूपान्तरस्यापि सद्भावादित्यतः स्मृत्यर्थमाह– **तदिति** ॥ तथाचैवशब्दः प्रसिद्ध्यर्थक इति भावः । स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकानिति फलवाक्यं व्याचष्टे– **स्वस्मादिति** ॥ तत्र प्रथमज-मित्यस्यार्थकथनमेतत् महद्यक्षमित्यस्यार्थो महायाज्यमिति ॥ जित इन्वसावसदिति वाक्यं व्याचष्टे– **प्राप्नोत्येवेति** ॥ जयतीमाँल्लोकानित्युक्तः एतल्लोकजयो नाम क इत्यत आह– **जीवन्निति** ॥ ननु परमात्मा च प्रजापतिरित्यनेन एष प्रजा-पतिर्यद्धृदयमिति ब्राह्मणं परमात्मपरमित्युक्तम् । तत्र परमात्मनो हृदयशब्दवाच्यत्वे किं निमित्तम् ? नच 'हरणाद्यज्ञभागादेः' इत्युक्तमेवेति वाच्यम् । यानादव्यवधानेन परस्य ब्रह्मण इत्यस्य विष्णावनुपपत्तेरित्यतः प्रकारान्तरेण हृदयशब्दनिर्वचन-पूर्वकमेतत्सत्यमित्येतद्व्याचष्टे– **स्वभागेति** ॥

**भाष्यम्**——

**प्रजापतिरिति ब्रह्मा वेदेषूक्तो ह्यमुख्यतः ।**
**यस्मिन्नूषुर्ब्रह्मचर्यं देवासुरनरोऽब्जजे ॥**
**एष वै भगवान्विष्णुर्मुख्यतस्तु प्रजापतिः ।**
**यज्ज्ञानान्मुक्तिमायाति स्वर्गाख्यां हृदयं च सः ॥**
**हृदि सद्दानयानेभ्यः सत्यं सद्गुणरूपतः ।**
**यत्तद्धृदयमित्युक्तं ब्रह्म तत्सत्यतामगात् ॥**
**सत्यत्वं सदनीयत्वमासाद्यं यन्मुमुक्षुभिः ।**
**एवं तद्ब्रह्म यो वेद स हि लोकानिमाञ्जयेत् ॥**

**एतल्लोकजयो नाम धर्मज्ञानादिपूर्णता ।**

**जित एव ह्यसौ लोको यदा वेद जनार्दनम् ॥ इति गुणपरमे ॥**

**परलोको जित एवाभवदित्यर्थः ।**

**टिप्पणी—**

चतुर्मुखपरमात्मनोरुभयोरपि एष प्रजापतिरिति प्रजापतिशब्दवाच्यत्वमुक्तं तत्र तयोः किं साम्येन तच्छब्दवाच्यत्वं नेत्याह– **प्रजापतिरिति** ॥ अमुख्यतः प्रजापतिशब्दवाच्यो ब्रह्मा एष प्रजापतिरित्यत्र प्रतिपाद्यत्वेन कुतोऽङ्गीकार्य इति चेत् त्रयाः प्राजापत्या इति पूर्वब्राह्मणे तावत् चतुर्मुख एव प्रजापतिशब्दवाच्यः । तथाचैष प्रजापतिरित्यत्र तस्यापि ग्रहणे बाधकाभावात्सोऽपि प्रतिपाद्य इति भावेनाह– **यस्मिन्निति** ॥ देवासुरनर इति नृशब्दो बहुवचनान्तः । तर्हि को मुख्यतः प्रजापतिशब्दाभिधेय इत्यत आह– **एष इति** ॥ कुतोऽत्र विष्णोरेव मुख्यतः प्रतिपाद्यत्वमिति चेत् एति स्वर्गं लोकं य एवं वेदेति तज्ज्ञानान्मोक्षोक्तेः । नह्यन्यज्ञानान्मोक्षः सम्भवतीति भावेन तद्वाक्यं व्याचष्टे– **यज्ज्ञानादिति** ॥ यद्धृदयमिति व्याचष्टे– **हृदयं च स इति** ॥ स ब्रह्मा न केवलं प्रजापतिरित्येवोक्तः । किन्तु हृदयं च अमुख्यतो हृदयशब्दावाच्यश्चेत्यर्थः । तत्र निमित्तं हरणादिति पूर्वोक्तमेवाह– **हृतीति** ॥ सतो ज्ञानादेर्दानं सद्दानम् । यानं परब्रह्मणः अव्यवधानेन यानम् । यद्वा स विष्णुः न केवलं मुख्यतः प्रजापतिरेव किन्तु हृदयं चेत्यर्थः । तत्र निमित्तं स्वभागहरणादित्युक्तमेवाह– **हृतीति** ॥ यानं यापनम् । एतत्सत्यमित्यस्यार्थमाह– **सत्यमिति** ॥ इदमप्युभयपरतया योज्यम् । ननु यथा एष प्रजापतिरिति ब्राह्मणमुभयपरं तथा तद्वैतदेवेति ब्राह्मणमपि किन्नेति भावेनाह– **यत्तदिति** ॥ सत्यतां सत्याख्यं रूपान्तरं वासुदेवाख्यम् । केयं सत्यतेत्यत आह– **सत्यत्वमिति** ॥ सदनीयत्वमपि तस्यास्ति किमित्यत आह– **आसाद्य-मिति** ॥ प्राप्यमित्यर्थः । स यो हैतमिति फलवाक्यं व्याचष्टे– **एवमिति** ॥ ननु एतल्लोकजयो ह्येतल्लोकप्राप्तिरेव तस्य च दुःखहेतुत्वात् कथं तत्फलमित्यत आह– **एतल्लोकेति** ॥ अनेन जीवन्नप्युत्तमो भवेदित्युक्तं विवृतं जित इन्वसावसदिति

फलवाक्यान्तरं व्याचष्टे– **जित एवेति** ।। असौ लोकः परलोकः । अनेन प्राप्नोत्येव हि तल्लोकानित्युक्तं विवृतम् । जित इन्वसावसदिति वाक्यं 'इनु इत्थं यथा सत्यब्रह्मणानृतशत्रुर्जितस्थोपासकेनाप्यसौ शत्रुर्जितस्तथा भूतः सन्नसच्च नष्टश्च भवेत्' इति परेण व्याख्यातम् । तदसत् उदाहृतप्रमाणविरोधात् । शत्रोरप्रकृतत्वेन असावित्यनेन तद्ग्रहणायोगाच्चेति भावेन तद्वाक्यं स्पष्टं व्याचष्टे– **परलोक इति** ।। श्रुतावसावित्यनन्तरं लोक इत्यनुवर्तत इति भावेन तदर्थोक्तिः– **परलोक इति** ।। इन्वित्यस्यार्थ एवेति । असदित्यस्यार्थोऽभवदिति ।। ३-४ ।।

ततश्चायं ब्राह्मणद्वयार्थः–एष विष्णुर्विरिञ्चो वा प्रजापतिः प्रजानां पालनात् हृदयं च हृदयशब्दवाच्यश्च । तत्र निमित्तं भाष्य एवोक्तम् । यत् हृदयमेतत् ब्रह्म स्वस्वरूपापेक्षया पूर्णम् । एतत्सत्यं सद्गुणरूपत्वात् । परमात्मा विरिञ्चो वा हृदयशब्दार्थत्वेनोपास्य इत्युक्तम् । इदानीं तच्छब्दगतवर्णार्थत्वेनाप्युपास्य इति भावेनाह– **तदेतदिति** ।। हृदयमिति यत् तदेतत् त्र्यक्षरं तदेव विवृणोति– **हृ इत्येकमक्षरमिति** ।। स्वभागहरणनिमित्तेन हृ इत्येकाक्षरेण विरिञ्चस्य विष्णोर्वा उपासकस्य फलमाह– **अभिहरन्तीति** ।। य एवं हृ इत्येकाक्षरेण परमात्मानं विरिञ्चं वा वेदोपास्ते अस्मा उपासकाय स्वाः स्वकीयाश्चान्ये चाभिहरन्ति शत्र्वादिभ्यो बलिं हरन्तीत्यर्थः । द इत्येकमक्षरं तथोपासकस्य फलमाह– **ददतीति** ।। य एवं द इत्येकाक्षरेण वेदोपास्ते अस्मै स्वाश्चान्ये चान्येभ्यो हृत्वा ददतीत्यर्थः । यमित्येकमक्षरम् । य एवं वेद सः स्वर्गं लोकं मुक्तिरूपमेति ।।

**इति तृतीयं ब्राह्मणम् ।। ३ ।।**

**तद्वैतदिति** ।। पूर्वं प्रकृतं परब्रह्म तत् ततत्वात् एतद्वर्तमानानागतकालयोः एकप्रकारत्वात् व्याप्तमेकरूपं च वस्तु अन्यदप्यस्ति किन्नेत्यतोऽप्याह– **तद्वेति** ।। एतदेवेत्येवशब्दोऽत्र सम्बद्ध्यते तदा सेति तच्छब्दोऽत्रापि सम्बद्ध्यते । तदेव ह तत् तदेव परं ब्रह्मैव तादृशं प्रोक्तं नान्यदित्यर्थः । तस्य विष्णोः प्रथमावतारमाह– **एतत्तदाऽऽस सत्यमेवेति** ।। तन्नारायणाख्यं परब्रह्मैतदेव सत्यं वासुदेवाख्यमासे-

त्यर्थः । सत्याख्यवासुदेवस्य ब्रह्मत्वेनोपासकस्य फलमाह– **स य इति** ।। सोऽधिकारी महद्यज्ञं महायाज्यं प्रथमजं स्वस्मादेव नारायणात्प्रथमत अवतीर्णं एतं वासुदेवं सत्यं ब्रह्मेति वेद स इमाँल्लोकान् जयति धर्मज्ञानादिपरिपूर्णो भवतीत्यर्थः । न केवलमेतावत् योऽधिकारी महद्यज्ञं प्रथमजमेतमेवं वेद । एवं शब्दार्थं विवृणोति– **सत्यं ब्रह्मेति** ।। तेनासौ परलोको जित इनु जित एवासत् अभवदित्यर्थः । एवं ब्रह्मत्वेन सत्योपासकस्य फलसद्भावात्सत्यं ब्रह्म भवत्येवेत्याह– **सत्यं ह्येवेति** ।।

**इति चतुर्थं ब्राह्मणम् ।। ७.४ ।।**

**उपनिषत्—**

**[भगवतः प्रथमावतारः वासुदेवः]**

**आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवांस्ते देवाः सत्यमेवोपासते ।। १ ।।**

**भाष्यम्—**

**सदा सर्वगुणापानादापो नारायणः स्मृतः ।**
**द्वितीयं रूपमसृजद्वासुदेवं स आत्मनः ।।**
**ब्रह्म सत्यमिति प्राहुर्वासुदेवाभिधं प्रभुम् ।**
**तस्माद्ब्रह्माऽजनि ततो देवाः सर्वेऽपि जज्ञिरे ।।**
**तस्माद्ब्रह्मादयो देवा वासुदेवमुपासते ।।**

**टिप्पणी—**

नारायणाख्यं परं ब्रह्म सत्यं वासुदेवाख्यमासीदित्युक्तं तदेव विवृणोति– **आप इति ब्राह्मणेन** ।। अत्राप्शब्दो न प्रसिद्धोदपरः । तासां कार्यत्वेन महाप्रलयेऽवस्थानायोगात् । नच अव्याकृतात्मनाऽवस्थिता एवापो ग्राह्या इति वाच्यम् । तथापि तासां सत्याख्यपरब्रह्मसर्जकत्वायोगात् । नच सत्यशब्देन चतुर्मुखः ब्रह्म प्रजापतिमित्युत्तरवाक्यविरोधादिति भावेन ब्राह्मणं प्रमाणेन व्याचक्षाणा-

स्तावदप्शब्दार्थमाह– **सदेति** ।। ता आपः सत्यमसृजन्तेति वाक्यं सत्यं सत्यवचनमिति प्रतीतिनिरासाय व्याचष्टे– **द्वितीयमिति** ।। आत्मनो द्वितीयं रूपमित्यन्वयः । सत्यं कर्तृ ब्रह्मा सृजतेति निरासाय सत्यं ब्रह्मेत्येतद्व्याचष्टे– **ब्रह्मेति** ।। ब्रह्म प्रजापतिमित्येतदसृजतेति पदानुवृत्त्या व्याचष्टे– **तस्मादिति** ।। प्रजापतिर्देवानि-त्येतत्पूर्ववद्व्याचष्टे– **तत इति** ।। ते देवाः सत्यमेवोपासत इत्यत्र देवशब्देन प्रजापतिजन्यदेवानामेव ग्रहणमिति प्रतीतिं निवारयंत्सत्यस्यैवोपास्तौ निमित्तमाह– **तस्मादिति** ।। तदुत्पन्नत्वादित्यर्थः ।। १ ।।

उपनिषत्—

**तदेतत् त्र्यक्षरं सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतं सत्यभूयमेव भवति नैव विद्वांसमनृतं हिनस्ति ।। २ ।।**

भाष्यम्—

**ततत्वादन्यथाज्ञानं तीत्येव समुदीर्यते ।।**
**तस्याधस्तात्सदात्मा तु सादयन्ननृतं हरिः ।**
**उपरिष्टाच्च यन्नामा नाशयन्ननृतं स्थितः ।**
**एवं यो वेद तं विष्णुं नास्य मिथ्यादृशिर्भवेत् ।।**
**योग्यतापेक्षयोपासाऽथापरोक्ष्याच्च तत्फलम् ।**
**सम्यग्ददात्यन्यथा च भवेदेवोपकारिणी ।।**
**अत्ययोग्याय चेत्सा स्याद्विपरीतफलप्रदा ।**
**वैपरीत्यं तु विघ्नः स्यान्न तु पापं कथञ्चन ।।** इत्याधारे ।।

टिप्पणी—

मध्यतोऽनृतमिति तीत्येततदनृतवाचकमित्युक्तम् । तत्रानृतशब्दार्थं वदंस्तद्व्याचष्टे– **ततत्वादिति** ।। पुरुषेषु व्याप्तत्वादित्यर्थः । तदेतदनृतमुभयतः

सत्येन परिगृहीतमित्येतद्व्याचष्टे– **तस्येति** ।। सदात्मा साधुस्वरूपो वासुदेवाख्यः सादनात्सकारवाच्यो हरिः । अनृतमज्ञानं सादयन् अल्पं कुर्वन् तस्य ज्ञानस्याधस्तात् स्थितः सदात्मा वासुदेवाख्यो विनाशनात् यंनामा हरिरनृतं नाशयंस्तस्योपरिष्टाच्च स्थित इत्यन्वयः । अत्रोभयत्र सदात्मेत्युक्त्या प्रथमोत्तमे अक्षरे सत्यं इत्येतदपि व्याख्यातम् । नैवं विद्वांसमनृतं हिनस्तीति फलवाक्यं व्याचष्टे– **एवमिति** ।। वेद उपास्ते । नन्वेवमुपासना सर्वेषामपि स्यात्किमित्यत आह– **योग्यतेति** ।। यद्वा ते देवाः सत्यमेवोपासते इत्युक्तत्वेनास्यामुपासनायां देवानामेवाधिकारः किमित्यत आह– **योग्यतापेक्षयेति** ।। योग्यतापेक्षयाऽन्येषामपि सोपासा स्यादित्यर्थः । योग्यानामप्युपासनैवोक्तं फलं दिशति किमित्यत आह– **अथेति** ।।आपरोक्ष्यादिति ल्यब्लोपनिमित्ता पञ्चमी उपासा स्वपूर्त्यनन्तरं अपरोक्षज्ञानमुत्पाद्यैव तत्फलं सम्यग्ददाति । अन्यथाऽपरोक्षज्ञानोत्पत्त्यभावेऽपि उपकारिणी भवेदेवेत्यर्थः । तर्ह्यत्ययोग्येन कृतापि सोपकारिणी भवेत्किन्नेत्याह– **अत्ययोग्यायेति** ।। नन्वयोग्यकृताया अपि भगवदुपासाया नरकादिविपरीतफलप्रदत्वं कथमित्यत आह– **वैपरीत्यमिति** ।। उक्तं च 'स्वाधिकाराधिको यत्नः प्रायशो नोपपद्यते । कथञ्चिदधिके यत्ने दोषः कश्चित्समापतेत्' इति ।। २ ।।

**ततश्चायं खण्डार्थः**

आ सम्यक् सर्वान् पिबतीत्यापो नारायण एव इदमग्रे अस्याग्रे आसुरास शब्दस्वभावत्वाद्बहुवचनम् । ता आप अप्शब्दवाच्यो नारायणः सत्यं सत्याख्यमात्मनो द्वितीयं रूपं वासुदेवाख्यं असृजन्तासृजन् । तद्वासुदेवाख्यं द्वितीयं रूपं सद्गुणरूपत्वात्सत्यं पूर्णत्वाद्ब्रह्मेत्याहुर्विद्वांसः ब्रह्म वासुदेवाख्यं प्रजापतिं चतुर्मुखमसृजत् । स प्रजापतिर्ब्रह्मा । देवान् शेषादीन् । असृजत् । ते वासुदेवोत्पन्ना ब्रह्माद्या देवाः स्वपितरं सत्यमेव वासुदेवाख्यमुपासते । सत्यस्योपास्तिप्रकारं वक्तुमाह– **तदेतदिति** ।। सत्यमिति यत् तदेतदक्षरं कथमित्यत आह– **सदित्येकमक्षरमिति** ।। तीत्येकमक्षरमित्यत्र हलन्ततकारनिर्देशार्थं इकारानुबन्धः । तत्र प्रथमान्तिमाक्षरयोरर्थमाह– **प्रथमेति** ।। उत्तमशब्द अन्तिमशब्दार्थः । प्रथमोत्तमे

अक्षरे सकारयकारौ सत्यं वासुदेववाचकौ इत्यर्थः । मध्यतो विद्यमानमक्षरं तीत्येतदनृतं मिथ्याज्ञानवाचकमित्यर्थः । तदेतदनृतं मिथ्याज्ञानं उभयतः पूर्वोत्तरतः । सत्येन वासुदेवेन सकारयकारवाच्येन परिगृहीतमन्तर्भावितं सादनात्सकारवाच्यो वासुदेवोऽज्ञानं सादयन् तदधस्तात्स्थितः नाशनाद्यकारवाच्यो वासुदेवोऽज्ञानं नाशयन् तदुपरिष्टात्स्थित इत्यर्थः । एवं पूर्वोत्तराभ्यां सत्येन परिगृहीतत्वादनृतं सत्यभूयमेव सत्यशब्दवाच्यवासुदेवप्रधानकमेव भवति । एवंवेत्तुः फलमाह– **नैवमिति** ॥ एवं विद्वांसमनृतं मिथ्याज्ञानं हिनस्ति नास्य मिथ्याज्ञानं भवेदित्यर्थः ॥ २ ॥

इति पञ्चमं ब्राह्मणम् ॥ ७.५ ॥

उपनिषत्—

[दक्षिणाक्षणि सूर्यमण्डले च सत्यनामकः वासुदेवः]

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्र-मिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥ १ ॥**

भाष्यम्—

स वासुदेवो भगवानादित्यस्थो जनार्दनः ।
आदित्यनामा सम्प्रोक्तो आदानाद्धविषां सदा ।
स एव दक्षिणाक्षिस्थस्तच्च रूपद्वयं हरेः ।
अन्योऽन्यस्मिन्स्थितं नित्यं प्राणैश्च सह रश्मिभिः ॥
दक्षिणाक्षिस्थितो विष्णुर्यदाऽस्मादुत्क्रमिष्यति ।
तदैव म्रियमाणस्तु जीवः पश्येद्विरश्मिकम् ॥

**सूर्यस्य मण्डलं नास्य प्रतीयन्ते हि रश्मयः ।**
**तत्क्षणे नियमेनैव केषाञ्चित्सप्तभिर्दिनैः ।**

**टिप्पणी—**

तस्यैव वासुदेवस्योपासनास्थानमाह– **तदिति ब्राह्मणेन** ।। तत्र सत्याख्यस्य वासुदेवस्यादित्याभेद उच्यत इति प्रतीतिनिरासाय तद्व्याचष्टे– स इति ।। तत्र निमित्तमाह– **आदानादिति** ।। यश्चायं दक्षिणेऽक्षन्पुरुष इत्येतद्व्याचष्टे– **स एवेति** ।। तावेतावन्योन्यस्मिन्प्रतिष्ठितौ इति वाक्यं व्याचष्टे– तच्चेति ।। ननु दक्षिणाक्षिस्थं रूपमादित्ये आदित्यस्थं रूपं दक्षिणाक्षिणि तिष्ठतीत्येतदसम्भावित-मित्यत उक्तमुपनिषदि रश्मिभिरिति, तस्यार्थमाह– **प्राणैरिति** ।। स यदोत्क्रमिष्यन् भवतीत्यादि व्याचष्टे– **दक्षिणेति** ।। शुद्धमित्यस्यार्थो विरश्मिकमिति । किं रश्म्यभावादेव विरश्मिकं नेत्याह– **नास्येति** ।। तदैवेत्युक्तं विवृणोति– **तत्क्षण इति** ।। सप्तभिर्दिनैः सप्तदिनात्पूर्वम् ।।

**ततश्चायं खण्डार्थः**

तत्प्रसिद्धं यत्सत्यं वासुदेवाख्यं पूर्वोक्तं तदसौ असौ कः एतस्मिन्परिदृश्यमाने मण्डले य एष पुरुषो वर्तते स आदित्यः आदित्यस्थो हविषामादानाद् आदित्यनामा योऽयं दक्षिणेऽक्षन् अक्षणि पुरुषो वर्तते स चेति योजना । न केवलमादित्यस्थं वासुदेवस्य रूपमादित्य एवाक्षिस्थं रूपं अक्षण्येव वर्तते किन्तु तावेतावादित्या-क्षिस्थौ परमात्मानावन्योन्यस्मिन्प्रतिष्ठितौ आदित्यस्थश्चक्षुषि चक्षुःस्थश्च आदित्ये वर्तत इत्यर्थः । नन्वेतदसम्भावितमित्यत आह– **रश्मिभिरिति** ।। एष आदित्यस्थो हरी रश्मिभिः सहास्मिन् चक्षुषि प्रतिष्ठितः आदित्यरश्मयश्चक्षुषः उपकारकतया चक्षुष्यपि तिष्ठन्तीति आदित्यस्थश्चक्षुष्यपि तिष्ठतीत्यर्थः । अयं दक्षिणाक्षिस्थः परमात्मा प्राणैश्चक्षुरादिभिः सहामुष्मिन्नादित्ये प्रतिष्ठितः चक्षुरादयः प्राणाः सूर्यमण्डलमपि प्रकाशयंस्तस्मिंस्तिष्ठन्तीति अयममुष्मिन् प्रतिष्ठित इत्यर्थः । दक्षिणाक्षिस्थस्यैवादित्यस्थत्वे हेतुमाह– **स इति** ।। दक्षिणाक्षिस्थो भगवान्

यदास्माद्देहादुत्क्रमिष्यन्नुत्क्रन्तीच्छुर्भवति तदैव तत्क्षण एव तत्सप्तदिनात्पूर्वं वा म्रियमाणो जीव एतत्सूर्यमण्डलं शुद्धमेव विरश्मिकमेव पश्यति । रश्म्यभवाद्विरश्मिकं पश्यति किन्नेत्याह– **नैनमिति** ।। एते विद्यमाना अपि रश्मयः एनं म्रियमाणं न प्रत्याययन्ति नास्य प्रतीयन्त इत्यर्थः ।।

इति षष्ठं ब्राह्मणम् ।। ७.६ ।।

उपनिषत्—

[भगवतो वासुदेवस्य अवयवाः]

**य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षर तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ।। १ ।। योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ।। २ ।।**

इति सप्तमं ब्राह्मणम्

भाष्यम्—

तस्य विष्णोः शिरो नाम भावनाद्भूरिति स्मृतम् ।
भावनं रक्षणं प्रोक्तं दृष्ट्या वाचा च रक्षति ।।
उत्पादनाद्भुनामा स्याद्दक्षिणो बाहुरस्य तु ।
विनाशनाद्व इत्युक्तः सव्यो बाहुः परात्मनः ।
स्वित्यानन्दस्समुद्दिष्टो वरिति ज्ञानमुच्यते ।।
मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम् ।
दक्षिणश्चैव सव्यश्च क्रमाद्वर्णद्वयोदितौ ।।

**पादावस्य हि तत्प्राप्तिर्मुक्तिरित्यभिधीयते ।।**
**अहमेषो ह्यहेयत्वाज्जीवेन सह भावतः ।**
**असावहरिति प्रोक्तः सर्वलोकप्रकाशनात् ।**
**तद्वेदनात्सर्वपापं हन्ति चैव जहाति च ।**
**कानिचिद्धन्ति पापानि कल्यादीन् स जहाति च ।। इति प्रवृत्ते ।।**

**टिप्पणी—**

सूर्याक्षिस्थितयोर्वासुदेवरूपयोः ध्यानार्थं तदवयवनामानि तयो रहस्यं नाम चाह– **य एष इति ब्राह्मणेन** ।। तत्र तस्य भूरिति शिर इत्यादित्यक्षिस्थविष्णुशिरसो भूर्नामकत्वमुक्तं तत्र निमित्तं दर्शयंस्तद्व्याचष्टे– **तस्येति** ।। आदित्याक्षिस्थस्येत्यर्थः। भावनं नाम किमित्यत आह– **भावनमिति** ।। भू सत्तायामिति धातुः सत्ता च रक्षणरूपैवेत्यर्थः । उत्पादनहेतुत्वेन भूशब्दवाच्यत्वस्य दक्षिणबाहोर्वक्ष्यमाणत्वादेवं व्याख्यातम् । तर्हि शिरसः कथं रक्षणहेतुत्वमित्यत आह– **दृष्ट्येति** ।। विष्णुर्दृष्ट्या वाचा च भक्तान् रक्षति । दृष्ट्यादिकं च शिरोऽन्तर्भूतमित्यर्थः । भुव इति बाहू इति वाक्यं व्याचष्टे– **उत्पादनादिति** ।। वा गतिगन्धनयोरिति धातोः वातेर्गत्यर्थत्वात् स नष्ट इत्यर्थे स गत इति प्रयोगात् गतिश्च विनाश इति भावेनाह– **विनाशनादिति** ।। सुवरिति प्रतिष्ठेति वाक्यं व्याचष्टे– **स्वित्यानन्द इति** ।। तद्दानात् स्वरूपभूतानन्दज्ञानदानात् । कः पादः किं वर्णनात्मक इत्यत आह– **दक्षिणश्चेति** ।। क्रमादेवेत्यन्वयः । दक्षिणश्च सव्यश्चेत्यस्य पादावित्यन्वयः । मुक्तिदानेनेति भगवत्पदद्वयस्य मुक्तिदातृत्वमुक्तं तत्र किं मानमित्यत आह– **हि तत्प्राप्तिरिति** ।। हि यस्माद्भगवत्पदप्राप्तिर्मुक्तिरित्यभिधीयते, 'भेजे खगेन्द्रध्वजपादमूलम्' इत्यादौ । तस्मात्पदद्वयस्य मुक्तिदातृत्वमुपपन्नमित्यर्थः । तस्योपनिषदहमित्यत्राक्षिस्थस्य जीवस्याहमिति नामोक्तमित्यसत् । जीवस्याक्षणि पृथक् शिरो बाह्वादेरभावात् । हृदि स्थितमेव तस्य रूपं जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवतीत्युक्तं प्राक् । तस्मादक्षिस्थस्य विष्णोरेवाहमिति रहस्यं नामोक्तम् । तस्यार्थमाह– **अहमिति** ।। एष दक्षिणाक्षिस्थः । अहेयत्वं कथमित्यत

आह– **जीवेनेति** ॥ तस्योपनिषदहरिति वाक्यं व्याचष्टे– **असाविति** ॥ असावादित्यस्थः प्रकाशनादिति । 'अहर्दिनं प्रकाशश्च' इति वचनादित्यर्थः । 'हन्ति पाप्मानं जहाति च य एवं वेद' इति वाक्यं व्याचष्टे– **तद्वेदना-दिति** ॥ तद्वेदनादेवेति सम्बन्धः । कानिचिज्जहाति चेत्यन्वयः । तदेव विवृणोति– **हन्तीति** ॥

**ततश्चायं खण्डार्थः**

य एष प्रसिद्धः एतस्मिन् मण्डले वर्तमानः पुरुषः पूर्णषड्गुणो वासुदेवः । तस्य शिरोभावनाद्रक्षणाद्भूरित्युच्यते । भूरित्यस्य शिरोनामत्वे युक्तिमाह– **एकं हीति** ॥ हि यस्माच्छिर एकमेतद्भूरित्यक्षरं चैकमतः साम्याच्छिरसो भूरिति नामवत्त्वं उपपन्नमित्यर्थः । तस्य बाहू भुव इत्युच्येते उत्पादनाद्दक्षिणो बाहुर्भुज इत्युक्तः । विनाशनात्सव्यो बाहुर्व इत्युक्त इत्यर्थः । तत्र पूर्ववद्युक्तिमाह– **द्वाविति** ॥ तस्य प्रतिष्ठा पादः सुवरित्युच्यते । तस्य दक्षिणः पादः स्वरूपभूतानन्ददानात् स्वित्युक्तः सव्यः पादः स्वरूपभूतज्ञानदानाद्वरित्युक्त इत्यर्थः । तत्र युक्तिमाह– **द्वे इति** ॥ आदित्यस्थस्य विष्णोः रहस्यं नामाह– **तस्येति** ॥ सर्वलोकप्रकाशनादहरिति तस्योपनिषद्रहस्यं नाम । एवंवेत्तुः फलमाह– **हन्तीति** ॥ य एवं वेद स पाप्मानं सर्वं हन्ति कल्यादीन् पापप्रेरकान् सञ्जहाति चेत्यर्थः ॥ ३ ॥

योऽयमित्यादिकं पूर्ववदुक्तार्थम् ॥ ४ ॥

इति सप्तमं ब्राह्मणम् ॥ ७.७ ॥

उपनिषत्—

[जीवहृद्गतभगवद्रूपम्]

**मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥**

**इति अष्टमं ब्राह्मणम्**

**भाष्यम्—**

> **मनोमयो ज्ञानमयः प्रधानं मय उच्यते ।**
> **महाज्ञानात्मकश्चैव भारूपः सद्गुणात्मकः ॥**
> **सर्वप्रकाशको विष्णुः................ ॥**

**टिप्पणी—**

एवमादित्याक्षिस्थत्वेन भगवदुपासनामुक्त्वा हृत्स्थत्वेनापि तदुपासनं कर्तव्यमिति भावेन तद्गुणानाह– **मनोमय इति ब्राह्मणेन** ॥ तत्र मनोमय इति मनोविकारित्व-मुच्यत इति प्रतीतिनिरासाय तदनूद्य व्याचष्टे– **मनोमय इति** ॥ 'मन अवबोधने' इति धातोर्मनःशब्दस्य ज्ञानवाचित्वाज्ज्ञानमय इत्युक्तम् । मयटो विकारार्थत्व-प्रतीतिनिरासायार्थमाह– **प्रधानमिति** ॥ तादात्म्यं चेति ग्राह्यम् । वक्ष्यमाणश्च-शब्दोऽत्र सम्बद्ध्यते । तेन वा तादात्म्यसमुच्चयः । अस्त्वेवं मयटोऽर्थद्वयं ततो ज्ञानमय इत्यस्य कोऽर्थो लभ्यत इत्यत आह– **महाज्ञानात्मक इति** ॥ एवकारो विकारार्थत्वनिवारणार्थः । भारूपः प्रकाशरूपः सत्य इत्यस्य व्याख्यानं सद्गुणात्मक इति । सर्वमिदं प्रशास्ति यदिदं किञ्चेत्यस्यार्थः सर्वप्रशासको विष्णुरिति ॥

**ततश्चायं खण्डार्थः**

अयं पुरुषः पूर्णषड्गुणो भगवान् मनोमयो महाज्ञानात्मकः भाः प्रकाशरूपस्सत्यः सद्गुणात्मकः व्रीहिर्वा यवो वा यथा यत्प्रमाणः तथा तत्परिमाणः सन् तस्मिन् प्रसिद्धेऽन्तर्हृदये हृदयान्तस्तिष्ठति योगिभिर्दृश्यते वा स एष हृत्स्थः परमात्मा सर्वस्येशानः सर्वस्याधिपतिः यदिदं प्रसिद्धं किञ्चेदं सर्वं जगत्प्रशास्तीत्यर्थः ॥

इति अष्टमं ब्राह्मणम् ॥ ७.८ ॥

**उपनिषत्—**

**[भगवतः विद्युदिति नाम]**

**विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युत् विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥**

**इति नवमं ब्राह्मणम्**

**भाष्यम्—**

**..................विद्युत्सर्वस्य वेदनात् ॥**
**य एनं वेद वेत्तारं सर्वस्य परमेश्वरम् ॥**
**पापेभ्यो मोचयित्वैनं स्वात्मानं वेदयेद्धरिः ॥ इति माहात्म्ये ॥**

**टिप्पणी—**

भगवद्विषयं विद्यान्तरमुपदिशति– **विद्युदिति ब्राह्मणेन** ॥ तद्व्याचष्टे– **विद्युदिति** ॥ विष्णुरित्यत्रापि सम्बद्ध्यते विदानाद्विद्युदिति विद्युच्छब्दनिर्वचनं कृतम् । तत्र विदानादित्यस्यार्थमाह– **सर्वस्य वेदनादिति** ॥ य एवं वेद विद्युद्ब्रह्मेतीत्यत्र एवंशब्दो व्यर्थः । व्याख्यानव्याख्येयभावश्चाऽगतिका गतिरित्याशङ्कापरिहाराय तद्व्याचष्टे– **य एनमिति** ॥ एनं वेत्तारमिति विद्युद्ब्रह्मेतीत्यर्थः । एवंशब्दार्थः सर्वस्य परमेश्वरमिति । ततश्च पूर्वब्राह्मणोक्त-परामर्शकतया न तस्य वैयर्थ्यमिति भावः । ततश्च पूर्वब्राह्मणोक्तप्रकारेण भगवज्ज्ञानिनोऽपि इदमेव फलम् । अत एव पूर्वब्राह्मणे फलानुक्तिः । विद्यत्येनं पाप्मन इति वाक्यं व्याचष्टे– **पापेभ्य इति** ॥

**ततश्चायं खण्डार्थः**

विद्युद्ब्रह्मेत्याहुर्विद्वांसः । तत्र निमित्तमाह– **विदानादिति** ॥ सर्वस्य वेदनात्खण्डनाद्वा विद्युत् । उपासकस्य तदनुरूपं फलमाह– **विद्यत्येनमिति** ॥ योऽधिकारी एवं पूर्वब्राह्मणोक्तप्रकारेण विद्युद्ब्रह्मेति च वेद एनं वेत्तारं तेन ज्ञातो हरिः पाप्मनो विद्यति मोचयति । न केवलमेतावत् । किन्तु एनं स्वात्मानं विद्यति वेदयतीत्यर्थः ॥

इति नवमं ब्राह्मणम् ॥ ७.९ ॥

**उपनिषत्—**

[वाग्देव्याः गोरूपम्]

**वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्-कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति**

**स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥**

इति दशमं ब्राह्मणम्

**भाष्यम्—**

**सरस्वती तु गोरूपा तस्या देवादयोऽखिलाः ।**
**स्तनानेवोपजीवन्ति तस्या वायुः पतिः प्रभुः ॥**
**वत्सो मनोऽभिमान्यस्याः सरस्वत्याः सदाशिवः ॥**

**इति प्रभञ्जने ॥**

**टिप्पणी—**

सर्वविद्यासिद्ध्यङ्गभूतसरस्वतीविषयां विद्यामाह– **वाचमिति ब्राह्मणेन** ॥ अत्र वाग्धेनुत्वमविद्यमानमेवोपासनार्थमुच्यत इति प्रतीतिनिरासाय ब्राह्मणं प्रमाणेन व्याचष्टे– **सरस्वतीति** ॥ **स्तनानेवेति** ॥ स्वाहाकारादिषु चतुर्षु सरस्वतीस्तन-सन्निधानादित्यर्थः । तस्याः प्राण ऋषभ इति वाक्यं व्याचष्टे– **तस्या इति** ॥ मनो वत्स इत्यस्यार्थमाह– **वत्स इति** ॥

**अथ खण्डार्थः**

धेनुं गोरूपां वाचं वागभिमानिनीं सरस्वतीमुपासीत । किमित्युपासनीय-मित्यतो देवाद्युपजीव्यस्तनवत्त्वेनेति वक्तुमाह– **तस्या इति** ॥ तस्याः गोरूपायाः सरस्वत्याश्चत्वारः स्तनाः । के त इत्यत आह– **स्वाहाकार इति** ॥ स्वाहा-काराभिमानीत्यादि व्याख्येयम् । तस्यैतस्याः द्वौ स्तनौ देवा उपजीवन्ति कौ तावित्यत आह– **स्वाहाकारमिति** ॥ मनुष्याः पितर उपजीवन्तीति सम्बन्धः । तस्याः गोरूपायाः वाचः प्राणो मुख्यवायुः ऋषभः पतिः मनो मनोभिमानी रुद्रो वत्स इत्युपासीतेति सम्बन्धः ॥

इति दशमं ब्राह्मणम् ॥ ७.१० ॥

उपनिषत्—

[जाठराग्निगतभगवद्रूपस्य वैश्वानर इति नाम]

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत् कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ १ ॥**

इत्येकादशं ब्राह्मणम्

भाष्यम्—

अग्निनामा तु भगवानौदर्याग्नौ प्रतिष्ठितः ।
विश्वैर्गुणैः समेतत्वादनन्तत्वाच्च स प्रभुः ।
वैश्वानर इति प्रोक्तः सोऽग्निरङ्गप्रणेतृतः ।
तस्य विष्णोः स्तुतिरियं क्रियते वायुना सदा ॥
कर्णौ पिधाय या नित्यं श्रोतुं शक्याऽखिलैस्सदा ॥

इति मन्त्रमालायाम् ॥

टिप्पणी—

भगवद्विषयां विद्यान्तरमाह— **अयमग्निरिति** ॥ अग्निर्वैश्वानर इति वैश्वानरशब्दस्य प्रसिद्धाग्निशब्दसामानाधिकरण्येन ब्राह्मणग्निपरमिति प्रतीतिनिरासाय प्रमाणेन व्याचष्टे— **अग्निनामा त्विति** ॥ कुत इत्यत आह— **अग्नौ प्रतिष्ठित इति** ॥ योऽयमन्तःपुरुष इत्यादिवाक्यानुरोधादौदर्येत्यग्निविशेषणम् । वैश्वानरशब्दार्थमाह— **विश्वैरिति** ॥ विश्वगुणसम्बन्धित्वात् वैश्वः आ सम्यक् नरीयत इत्यानरः वैश्वश्चासावानरश्चेति वैश्वानर इत्यर्थः । आनर इत्यस्यार्थोऽनन्तत्वादिति । 'अग्निनामा तु भगवान्' इत्युक्तम् । तत्राग्निशब्दं निर्वक्ति— **सोऽग्निरिति** ॥ तस्यैष दोषो भवतीत्यादि व्याचष्टे— **तस्येति** ॥

**अथ खण्डार्थः**

योऽयं प्रसिद्धः अन्तःपुरुषे पुरुषस्यान्तर्वर्तते अयमग्निर्जाठराग्निस्थोऽग्निनामा भगवान् वैश्वानरः विश्वगुणसम्बन्धित्वाद्वैश्वः आसम्यक् नरीयत इत्यानरः वैश्वश्चासावानरश्चेति वैश्वानरः । तस्य व्यापारमाह– **येनेति** ॥ यदिदं प्रसिद्धं पुरुषैरद्यते इदमन्नं येन पच्यते अयमग्निरिति सम्बन्धः । एष वायुना क्रियमाणो घोषस्तस्य विष्णोः स्तुतिरूपो भवति । कः यं घोषं कर्णावपिधाय एतदेष पुरुषः शृणोति । स विष्णुर्यदाऽस्मच्छरीरादुत्क्रमिष्यन् भवति तदा म्रियमाणो जीव एनं घोषं न शृणोति तदेव मरणसूचकमित्यर्थः ॥

इत्येकादशं ब्राह्मणम् ॥ ७.११ ॥

**उपनिषत्**——

[अर्चिरादिमार्गः]

**यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वं आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्वं आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन् वसति शाश्वतीः समाः ॥**

इति द्वादशं ब्राह्मणम्

**भाष्यम्**——

प्रवहं वायुपुत्रं च सूर्यसोमौ च विद्युतम् ।
प्राप्य प्रधानवायुं च याति तत्परमं पदम् ॥ इति ब्रह्माण्डे ॥

**टिप्पणी**——

'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते' इत्युक्तप्रकारेणोत्क्रान्तोऽपरोक्षज्ञानी केन मार्गेण भगवन्तं प्राप्नोतीत्यतो मार्गमाह– **यदा वा इति ब्राह्मणेन** ॥ स

वायुमागच्छतीति वायुशब्दः प्रधानवायुपरः इति प्रतीतिनिरासाय तद्व्याचष्टे– **प्रवहमिति** ।। अन्यथा पूर्वगमनानुपपत्तेरित्यर्थः । यथोक्तम्- 'आतिवाहिकस्तल्लिङ्गात्' (ब्र.सू. ४.३.३) इति । ननु 'स वायुमागच्छति' इति श्रुतौ वायुर्यदि प्रधानवायुस्तर्हि तस्य प्राप्यत्वमेव न स्यात् श्रुतावनुक्तत्वात् । अनुक्तोऽपि ग्राह्य इति चेत् तर्हि पूर्वोक्तो मुख्यवायुरुत्तरोक्तः प्रवह इति किं न स्यादिति चेन्न । द्यौर्वाव विद्युत् तत्पतिं वायुमुपगम्येत्युत्तरप्राप्यस्य वायोर्विद्युदाख्यसरस्वती-पतित्वविशेषणात् मुख्यत्वसिद्धेः । पूर्वप्राप्यस्य वायोः प्रवहत्वसिद्धेरिति भावेनाह– **विद्युतं प्रधानवायुं च प्राप्येति** ।। यथोक्तम्- 'उभयव्यामोहात्तत्सिद्धेः' (ब्र.सू. ४.३.५) इति । नात्र वायोः प्रथमप्राप्यत्वं मन्तव्यम् । तथात्वे तेऽर्चिषमभिसम्भ-वन्ति अर्चिषोऽहरित्युत्तराध्यायगतवाक्यविरोधात् । नचाधिकारिभेदेनोभयोरपि प्रथमप्राप्यत्वम् । द्वे सृती अशृणवमित्यत्र ज्ञानिनामेकमार्गस्यैवोक्तत्वात् । अत एव सूत्रकारः 'अर्चिरादिना तत्प्रथितेः' इत्याह । एतद्वाक्यस्य वायोर्द्वितीय-प्राप्यत्वपरत्वोपपत्तेः । तथाच श्रुतिः । 'इतो गतो द्वितीयां गतिं वायुमागच्छति' इति । अत एव सूत्रकारोऽपि 'वायुशब्दादविशेषविशेषाभ्याम्' (ब्र.सू. ४.३.२) इत्याह । नचैवमर्चिषोऽहरिति वाक्यविरोधः तत्राह्नो द्वितीयप्राप्यत्वावगमात् अधिकारिभेदेनोभयोरपि द्वितीयप्राप्यत्वस्य च निरस्तत्वादिति वाच्यम् । द्वितीयां गतिमिति निरवकाशवाक्यबलेन तद्वाक्यस्याह्नस्तृतीयप्राप्यत्वपरत्वात् । तथापि नायमेवाशेषमार्गक्रमः किन्तु 'उत्क्रान्तस्तु शरीरात्स्वाद्गच्छत्यर्चिषमेव तु । ततो हि वायोः पुत्रं च योऽसौ नाम्नातिवाहिकः । ततोऽहःपूर्वपक्षं वाप्युदक्संवत्सरं तथा । तटितं वरुणं चैव प्रजापं सूर्यमेव च । सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा । ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम्' इति प्रमाणान्तरादुक्त एव । एवञ्च तदनुसारेणात्रापि वायोः पूर्वमर्चिषो वायोरनन्तरमहरादीनां प्रजापत्यन्तानां सोमानन्तरं वैश्वानरेन्द्रध्रुवाणां ग्रहणमिति ज्ञेयम् ।।

### अथ खण्डार्थः

यदा यस्मिन् काले पुरुषोऽपरोक्षज्ञानी अस्माल्लोकाच्छारीरात्प्रैति उत्क्रान्तो

गच्छति । सोऽर्चिर्द्वारा वायुं प्रवहं वायुमागच्छति । अन्येषामविद्यमाना वायुप्राप्तिरुत्क्रान्तस्यैव कुत इति चेदन्येषामयोग्यत्वात्स्वलोकप्रवेशने मार्गं न ददाति वायुरस्य तु ददातीत्याह– **तस्मा इति** ।। स वायुस्तस्मै उत्क्रान्तपुरुषाय तदागमनायेति यावत् । तत्र स्वलोके विजिहीते आगमनमार्गे छिद्रं करोतीत्यर्थः । कियत्परिमाणं यथा रथचक्रस्य खं छिद्रं एवं स वायुस्तस्मै स्वलोकं प्राप्ताय ज्ञानिने ज्ञानिनः स्वलोकादुत्तरलोकगमनायेति यावत् । यत्र लोके विजहीते गमनमार्गे विवरं करोति यथा रथचक्रस्य खं छिद्रमित्यपि योज्यम् । स ज्ञानी तेन छिद्रेणोर्ध्व ऊर्ध्वं आक्रमते गच्छति । लम्बरस्य वाद्यविशेषस्य । ततः क्व गच्छतीत्यत आह– **स आदित्यमिति** ।। स ज्ञानी अहरादिद्वारा आदित्यमागच्छतीत्यर्थः । ततः क्व गच्छतीत्यत आह– **स चन्द्रमसमिति** ।। तर्हि क विश्राम इत्यत आह– **सलोकमिति** ।। सः चन्द्रलोकाद्वैश्वानरादिद्वारा मुख्यवायुं प्राप्तो ज्ञानी अशोकमहिमं शोकराहित्याख्यमाहात्म्यविशिष्टम् । अशोकं शोकरहितं अहिमं हिमादिदुःखरहितं वा लोकं सत्यलोकं विष्णुलोकं वा गच्छति तस्मिँल्लोके शाश्वतीस्समाः बहून् संवत्सरान् चतुर्मुखमुक्तिपर्यन्तं वसतीत्यर्थः ।।

इति द्वादशं ब्राह्मणम् ।। ७.१२ ।।

उपनिषत्——

[रोगजन्यदुःखम्, शवदाहादिकं च परमं तपः]

**एतद्वै परमं तपो यद्व्याधितस्तप्यते परमं हैव स लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यं हरन्ति परमं हैव स लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमं हैव स लोकं जयति य एवं वेद ।।**

इति त्रयोदशं ब्राह्मणम्

**भाष्यम्—**

**व्याधीञ्छवहृतिं चैव शवदाहादिकं तथा ।**
**विष्णवे तप इत्येव चिन्तयन्याति तत्परम् ।। इति च ।।**
**अक्लेशितोऽपि क्लेशादीनतीतैष्यानपीह यः ।**
**विष्णवे तप इत्येव प्रार्पयेत्स परं व्रजेत् ।।**
**विष्णोः स्वरूपवेत्ता चेदन्यथा न कथञ्चन ।**
**यथा स्वरूपवेत्तुः स्यादेकैकाऽपि ह्युपासना ।।**
**मोक्षाय सहिताः सर्वा अप्यज्ञस्य नतु क्वचित् ।**
**यथावत्केशवं ज्ञात्वा स्वयोग्यैकामुपासनाम् ।।**
**अपि कृत्वा हरिं दृष्ट्वा मुच्यते नात्र संशयः ।। इति ब्रह्मतर्के ।।**

**टिप्पणी—**

ननु व्याध्यादिग्रस्तस्य मोक्षसाधनानुष्ठानासम्भवात्कथं तस्योक्तो मार्ग इत्यतो व्याध्यादिकमपि तपोरूपत्वान्मोक्षसाधनमेवेत्याह– **एतद्वा इति ब्राह्मणेन** ।। तत्र सर्वेषामपि व्याधिशवहृतिशवदाहानामेव परमतपस्त्वमुच्यत इति प्रतीतिनिरासाय ब्राह्मणं प्रमाणेन व्याचष्टे– **व्याधीनिति** ।।ननु व्याधिर्विष्णवे तप इति चिन्तयितुं शक्यते न शवहृतिशवदाहौ तदा स्वस्य मृतत्वादित्यत आह– **अक्लेशितोऽपीति** ।। न व्याध्यादिप्राप्तावेव तस्य विष्णुं प्रति तपस्त्वचिन्तनं किन्तु अतीतानागतमपि व्याध्यादिकं विष्णुं प्रति तप इति चिन्तनीयमिति भावः । ननूक्तप्रार्थनस्यैव परप्राप्तिरूपमोक्षसाधनत्वे 'ब्रह्मविदाप्नोति परम्' इत्यादिवाक्यविरोध इत्यत आह– **विष्णोरिति** ।। ननु विष्णुस्वरूपज्ञानिनो यद्ध्याधितस्तप्यत इत्युक्तमुपासनात्रयं पूर्णमद इत्युक्तोपासना वा मिलित्वैव मोक्षसाधनं उतैकापीति जिज्ञासायामाह– **यथेति** ।। अपिशब्देन किमु मिलिता इति कैमुत्यमभिप्रैति । ननु यथावद्विष्णुज्ञानिन एकैकाप्युपासना यदि मोक्षसाधनं तर्ह्यज्ञस्य सर्वा अपि मिलिता मोक्षसाधनं भवेयुरित्यत आह– **सहिता इति** ।। क्वचित्कदाचित् मोक्षाय न स्युः किं तत्

मोक्षायेत्यत उक्तमुपसंहरति– **यथावदिति** ।। तस्मादिति शेषः । यद्वा विष्णुस्वरूपवेत्तुः एकैकोपासना किं साक्षान्मोक्षाय भवति नेत्याह– **यथावदिति** ।। १३ ।।

**अथ खण्डार्थः**

एतद्वै परमं तपः किं यद्व्याधितस्तप्यते व्याधिस्तपो विष्णवे तप इति चिन्तनम् । तस्य फलमाह– **परममिति** ।। य एवं व्याधिस्तपो विष्णुं प्रति तप इति वेद स परमं हैव लोकं जयति प्राप्नोति यं प्रेतं मां अरण्यं प्रति हरन्ति ज्ञातयस्तद्विष्णुं प्रति तप इति यत्प्राक्कालीनं चिन्तनमेतद्वै परमं तपः यं प्रेतं मामग्नावभ्यादधति तद्विष्णुं प्रति तप इति यत्प्राक्कालीनं चिन्तनमेतद्वै परमं तप इत्यर्थः ।।

इति त्रयोदशं ब्राह्मणम् ।। ७.१३ ।।

उपनिषत्——

[वायुब्रह्मणोः अन्योन्यता]

**अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वान्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह्येव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किंस्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिनामा प्रातृदः कस्त्वेनयोरेकधा भूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै वि अन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ।।**

इति चतुर्दशं ब्राह्मणम्

**भाष्यम्—**

> **अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः ।**
> **अन्योऽन्यानुप्रविष्टौ तौ सर्वदैव सुसंस्थितौ ॥**
> **वायुं विना ब्रह्मणोऽपि शरीरं पूतिमेष्यति ।**
> **वायुश्च शोषमायाति विना ब्रह्माणमञ्जसा ॥**
> **तयोरेवं परिज्ञानी वासिष्ठः पाणिनामकः ॥**
> **ब्रह्मवायुविदे कार्यं किं मया साध्वसाधु वा ॥**

**टिप्पणी—**

ब्रह्मवायुविषयां विद्यामाह— **अन्नमिति** ॥ तत्रान्नप्राणशब्दयोः प्रसिद्धार्थत्व-प्रतीतिनिरासाय व्याचष्टे— **अन्नाभिमानीति** ॥ एते त्वेव देवते एकधा भूयं भूत्वा परमतां गच्छत इति वाक्यं तयोरैक्यमुच्यत इति प्रतीतिनिरासाय व्याचष्टे— **अन्येति** ॥ एकधा भूयं भूत्वेत्यस्यार्थः अन्योन्यानुप्रविष्टाविति, परमतां गच्छन्त इत्यस्यार्थः सुसंस्थिताविति, श्रुतौ भूत्वैवेत्येवकारसम्बन्ध इति भावेन तदभिप्रायोक्तिः सर्वदै-वेति । ननु किमन्योन्यानुप्रवेशेन ब्रह्मवाय्वोः स्वत एव समर्थत्वादित्यतः प्राप्तं पूयति वाऽन्नमृते प्राणात् शुष्यति वै प्राण ऋतेऽन्नादिति वाक्यद्वयं व्याचष्टे— **वायु-मिति** ॥ वायुर्वायुदेहः तद्धस्माह प्रातृदः पितरमिति वाक्यं व्याचष्टे— **तयोरिति** ॥ तयोरेवं परिज्ञानीत्यनेन तद्धस्मेति तच्छब्दस्योक्तप्रकारेण तयोर्ज्ञानित्वादित्यर्थः । उक्तो भवति । प्रातृद इत्यस्यार्थो वासिष्ठ इति । स ह स्माह पाणिनामा प्रातृद इत्युत्तरत्रानुवादात् पाणिनामक इत्युक्तं वसिष्ठं प्राब्रवीदित्युत्तरेणान्वयः । किंस्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति वाक्यं व्याचष्टे— **ब्रह्मेति** ॥

**भाष्यम्—**

> **नासाधुना बाधयितुं शक्योऽसौ साधुनाऽपि वा ।**
> **नार्थोऽस्य कृतकृत्यत्वाद्यदि वेद परं हरिम् ।**
> **इति प्रशस्य तज्ज्ञानं वसिष्ठं प्राब्रवीत्ततः ॥**
> **अन्योऽन्यानुप्रवेशेन ब्रह्मवाय्वोर्विशेषतः ।**

**प्रयोजनं कस्य भवेदिति तं प्रातृदोऽब्रवीत् ।।**
**ब्रह्मा निवेशनीयः स्याद्वायुश्चास्य रतिप्रदः ।।**
**अतः प्रयोजनं तुल्यमन्योऽन्यात्मप्रवेशनात् ।। इति सन्धाने ।।**

**टिप्पणी—**

ब्रह्मवायुविदे कीदृशं साधु कीदृशमसाधु कुर्यामिति प्रश्नः क्रियत इति प्रतीतिनिरासाय किंशब्दस्याक्षेपार्थत्वमभिप्रेत्य तदभिप्रायमाह— **नेति** ।। असौ ज्ञानी असाधुना अपकारेण साधयितुं स्ववशीकर्तुं न शक्यः । अपकारस्य तस्मिन्विफलत्वात् । साधुनोपकारेणापि साधयितुं स्ववशीकर्तुं न शक्यः यतः कृतकृत्यत्वादस्यार्थः प्रयोजनं नास्तीत्यर्थः । न केवलं ब्रह्मवायुमात्रज्ञानिन एवं सामर्थ्यं किन्त्वित्यत आह— **यदीति** ।। इति प्रशस्य तज्ज्ञानमित्यनेन किंस्विदेवं विदुष इत्येतदेव प्रश्नवाक्यमिति व्याख्यानमपास्तम् । पितरमित्यस्यार्थो वसिष्ठमिति । ततः प्रशंसनानन्तरं कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति प्रश्नवाक्यस्यान्योन्यानुप्रवेशं कृत्वाऽनयोर्मध्ये कः प्रयोजनं प्राप्नोतीत्यर्थः प्रतीयते तदनुपपन्नम् । वायुप्रवेशेन ब्रह्मणः ब्रह्मप्रवेशेन वायोश्च प्रयोजनस्योक्तत्वादित्यतः प्रश्नवाक्यस्यान्योन्यानुप्रवेशं कृत्वाऽनयोर्मध्ये कः प्रयोजनं प्राप्नोतीत्यर्थः प्रतीयते तदनुपपन्नम् । वायुप्रवेशेन ब्रह्मणः ब्रह्मप्रवेशेन वायोश्च प्रयोजनस्योक्तत्वादित्यतः प्रश्नवाक्याभिप्रायमाह— **अन्योन्येति** ।। ब्रह्मवाय्वोरन्योन्यानुप्रवेशेन सामान्यप्रयोजनं शोषणाद्यभावरूपमस्त्येव विशेषतः प्रयोजनं कस्य भवेदिति प्राब्रवीदिति सम्बन्धः । तस्मा उ हैतदुवाचेत्येतत् कर्तृप्रदर्शनपूर्वकं व्याचष्टे— **तं प्रातृद** इति ।। नन्वेवं प्रश्नस्य वीतिरमित्युपदेशः कथं परिहार इत्यतस्तदभिप्रायमाह— **ब्रह्मेति** ।। निवेशनीयो वायुना अस्य ब्रह्मणः अन्योन्ययोरात्मनि प्रवेशनादित्यर्थः ।।

**ततश्चायं खण्डार्थः**

अन्नमन्नाभिमानी ब्रह्मा ब्रह्मेति भगवन्तं विना स्वकार्येऽनन्यापेक्षमित्येके आहुः । किं तज्ज्ञानिनां मतं नेत्याह— **तन्न तथेति** ।। कुत इत्यत आह— **पूयति वेति** ।।

यस्मादन्नमन्नाभिमानिब्रह्मदेहः प्राणात् मुख्यवायोः ऋते पूयति वै तस्मान्न तथेत्यर्थः । मतान्तरमाह– **प्राण इति** ।। प्राणो मुख्यवायुर्ब्रह्मेति भगवन्तं विना स्वकार्येऽ-नन्यापेक्षमित्येके आहुः तदपि न ज्ञानिमतं इत्याह– **तन्न तथेति** ।। कुत इत्यत आह– **शुष्यतीति** ।। प्राणो मुख्यवायुदेहः अन्नादृते शुष्यति वै तस्मान्न तथा तर्हि कः सिद्धान्त इत्यत आह– **एते त्विति** ।। एते अन्नप्राणाख्ये ब्रह्मवायुरूपदेवते एकधा भूयमन्योन्यानुप्रवेशं भूत्वा प्राप्यैव तु सर्वदैव परमतं गच्छतः सुसंस्थिता वित्यर्थः। कुत एवमन्योन्यानुप्रवेशेनानयोः सुसंस्थितत्वमित्यतस्तज्ज्ञानि-प्रशंसामाख्यायिकामाह– **तद्धेति** ।। तत्तस्मात्तयोरेवं परिज्ञानित्वात्प्रातृदः प्रतृदस्य वसिष्ठस्यापत्यं पुमान् प्रातृदः पितरं वसिष्ठमाह स्म हेत्यास्वादने । किमिति अहमेवमुक्तप्रकारेण ब्रह्मवायुस्वरूपविदुषे किंस्विदेव साधु कुर्यां कृतकृत्यत्वेन प्रयोजनशून्यत्वादुपकारेण असौ स्ववशीकर्तुं न शक्यत इति यावत्। अस्मै एवंविदुषे किमेवासाधु कुर्यां अपकारस्य तस्मिन्विफलत्वात्तेनाप्यसौ स्ववशीकर्तुं न शक्यत इत्यर्थः । इत्याहेत्यन्वयः । एवं स्वपितरं प्रति ब्रह्मवायुज्ञानिनं प्रशस्येदानीं पृच्छतीत्याह– **स इति** ।। स पाणिनामा पाणिनामकः प्रातृदः स्वपितरं प्रतृदं प्रत्याह स्म किमिति एकधाभूयं भूत्वान्योन्यानुप्रवेशं प्राप्य अनयोर्ब्रह्मवाय्वोर्मध्ये कः परमतां गच्छति प्रयोजनविशेषं प्राप्नोतीति एवं पुत्रेण पृष्टः प्रतृदो वसिष्ठस्तस्मै पुत्रायैतद्वक्ष्यमाणमेवोवाच आह । किमिति ।। **वीतीति** ।। वीत्यस्यार्थमाह– **अन्नं वै वीति** ।। कुत इत्यत आह– **अन्ने हीति** ।। हि यस्मादिमानि सर्वाणि अन्ने अन्नाभिमानिचतुर्मुखे विष्टानि प्रविष्टानि भवन्ति अतोऽन्नं वीत्युच्यते ।। **रमिति** ।। उवाचेति सम्बन्धः । तस्यार्थमाह– **प्राणो वै रमिति** ।। तदुपपादयति– **प्राणे हीति** ।। निमित्तसप्तमी । सर्वभूतैर्निवेशनीयत्वाद्वायुनापि निवेशनीयो ब्रह्मा । सर्वभूतरतिप्रदत्वाद्ब्रह्मणोऽपि रतिप्रदो वायुरतोऽन्योन्यप्रवेशेनोभयोः प्रयोजनं तुल्यमेव नतु विशेष इति भावः । एवं ज्ञानिनः फलमाह– **सर्वाणीति** ।।

**इति चतुर्दशं ब्राह्मणम् ।। ७.१४ ।।**

उपनिषत्—

[उक्थादिनामकः प्राणः]

उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयत्युद्धास्मा उक्थविद् वीरस्तिष्ठत्युक्थस्य सायुज्यं सलोकतां जयति य एवं वेद ॥

इति पञ्चदशं ब्राह्मणम् ॥ १५ ॥

यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यं सलोकतां जयति य एवं वेद ॥

इति षोडशं ब्राह्मणम् ॥ १६ ॥

साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यं सलोकतां जयति य एवं वेद ॥

इति सप्तदशं ब्राह्मणम् ॥ १७ ॥

क्षत्रं प्राणो वै क्षत्रं प्राणे हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्रमत्र प्राप्नोति क्षत्रस्य सायज्यं सलोकतां जयति य एवं वेद ॥

इति अष्टादशं ब्राह्मणम् ॥ १८ ॥

भाष्यम्—

उत्थापनादुक्थनामा मोक्षे प्राप्यो यतोऽखिलैः ।
यजुश्चाथ क्षतत्राणात्क्षत्रं सम्यक्त्वकारणात् ॥
सर्वेषां साम च प्रोक्तो वायुरेव जगत्पतिः ॥ इति च ॥

टिप्पणी—

प्रकृतमुख्यप्राणस्यैवोक्थत्वादिमाहात्म्यं तदुपासनार्थमाह– **उक्थमिति ब्राह्मणेन** ॥ तद्व्याचष्टे– **उत्थापनादिति** ॥ सर्वस्योत्थापनादित्यर्थः । अनेन प्राणो वा उक्थं प्राणो हीदं सर्वं उत्थापयतीत्येतद्व्याख्यातम् । प्राणो वा यजुः प्राणे हीमानि भूतानि सर्वाणि युज्यन्त इत्येतद्वाक्यं व्याचष्टे– **मोक्ष इति** ॥ वायोर्ब्रह्मत्वानन्तरं यदा मोक्षस्तदा यद्वा मोक्षे अखिलैर्गम्ये सति अखिलैर्मुच्यमानैः प्राप्यः वायोर्ब्रह्मप्रापकत्वादित्यर्थः । प्राणो वै क्षत्रं त्रायते हैनं प्राणः क्षणितोरिति वाक्यं व्याचष्टे– **अथेति** ॥ अथशब्दः प्रकारान्तरत्वद्योतकः । प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चीति वाक्यं व्याचष्टे– **सम्यक्त्वेति** ॥ कारणत्वादित्यर्थः । अत्र सर्वत्रापि हेतुर्जगत्पतिरिति ॥

**अथ खण्डार्थः**

उक्थमित्युपासीत किमुक्थमित्यत आह– **प्राणो वा उक्थमिति** ॥ कुत इत्यत आह– **प्राणो हीति** ॥ उत्थापयति उत्पादयति । तथोपासकस्य फलमाह– **उदिति** ॥ य एवं वेदास्मै ज्ञानिने उक्थवित् उक्थत्वेन प्राणज्ञानी वीरः पुत्रः उत्तिष्ठति ह न केवलमेतावत् य एवं वेद स उक्थस्योक्थनामकस्य प्राणस्य सायुज्यं सलोकतां च स्वयोग्यतानुसारेण जयति प्राप्नोति ॥

यजुरित्युपासीत किं यजुरित्यत आह– **प्राण इति** ॥ कुत इत्यत आह– **प्राणे हीति** ॥ मोक्ष इति शेषः । तथोपासकस्य फलमाह– **युज्यन्त इति** ॥ य एवं वेदास्मै अस्य श्रैष्ठ्याय सर्वाणि भूतानि युज्यन्ते ह अयं नः श्रेष्ठो भवत्विति प्रयतन्त इत्यर्थः । य एवं वेद स यजुषः यजुर्नामकप्राणस्य सायुज्यं सलोकतां च स्वयोग्यतानुसारेण जयति ॥

सामेत्युपासीत किं साम प्राणो वै साम कुतः हि यस्मादिमानि सर्वाणि भूतानि प्राणो निमित्तसप्तमीयं सम्यञ्चि सर्वभूतसम्यक्त्वकारणमित्यर्थः । य एवं वेदास्मै अस्य सर्वाणि भूतानि सम्यञ्चि कोऽपि न विरोधं करोतीत्यर्थः । न केवलमेतावत् अस्य श्रैष्ठ्याय च कल्प्यन्ते समर्था भवन्ति । साम्न इत्यादि पूर्ववत् ॥

क्षत्रमित्युपासीत किं क्षत्रं प्राणो वै क्षत्रं कुतः प्राण एव क्षत्रमित्यतस्तत्प्रसिद्धमित्याह– **प्राणो हि क्षत्रमिति** ।। प्राणे क्षत्रशब्दं निर्वक्ति– **त्रायत इति** ।। प्राणः क्षणितोः क्षतादेनं जीवं त्रायते ह यस्मात्तस्मात्प्राणः क्षत्रं तथोपासकस्य फलमाह– **प्रक्षत्रमिति** ।। य एवं वेद स प्रक्षत्रं प्राणादेव प्रकृष्टरक्षणं अक्षत्रं प्राणादन्येनारक्षणं च प्राप्नोति क्षत्रस्य क्षत्राख्यस्य प्राणस्य सायुज्यं सलोकतां च जयति ।। ४ ।।

।। १५-१८ ब्राह्मणानि ।।

उपनिषत्——

[गायत्र्युपासनम्]

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेव पदं वेद ।। १ ।। ऋचो यजूंषि सामानीत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ।। २ ।। प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद ।। ३ ।।**

भाष्यम्——

ऋग्यजुःसामसंस्थो यो भगवान् पुरुषोत्तमः ।
स द्वितीयपदेनोक्तो गायत्र्याः प्रथमेन तु ।।
भूम्यन्तरिक्षस्वर्गस्थस्तृतीयेन समीपगः ।

टिप्पणी——

सर्वेषां गायत्र्या अपेक्षितत्वात्तन्निष्ठां विद्यामाह– **भूमिरन्तरिक्षमिति ब्राह्मणेन** ।।

अत्र भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि अष्टाक्षरं ह वा एकं गायत्र्यैपदमित्यादिना-ष्टाक्षरत्वसाम्यमुक्त्वा तज्ज्ञानिनो लोकाधिपतित्वादिकं फलमुच्यते तदयुक्तमति-प्रसङ्गादित्यतस्तदभिप्रायमाह– **ऋग्यजुरिति** ॥ अनेन ऋचो यजूंषि सामानी-त्यादेरभिप्राय उक्तः। भूमिरन्तरिक्षमित्यादेरभिप्रयमाह– **प्रथमेन त्विति**। तुशब्दः पदेनेत्यस्यानुकर्षणार्थः । गायत्र्या इत्यस्यात्रापि सम्बन्धः । प्राणोऽपान इत्यादेरभिप्रायमाह– **तृतीयेनेति** ॥ ७.१९ ॥ १-३ ॥

उपनिषत्——

**अथास्या एतदेव तुरीयं दर्शतं पदं परो रजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपति एवं हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ४ ॥**

भाष्यम्——

चतुर्थपादो गायत्र्याः प्रणवः समुदीरितः ॥
तद्वाच्यो भगवान् सूर्यमण्डलस्था तु या रमा।
सत्वात्मिक्येव तत्संस्थो रज आख्यप्रधानतः ॥
परः परोरजस्तस्माद्य एवं वेद तं प्रभुम्।
लोकानां चैव वेदानां सर्वेषां प्राणिनामपि।
सदैवाधिपतिर्भूत्वा यशःश्रीमांश्च जायते।
गायत्र्युपासने योग्यो ब्रह्मैव हि चतुर्मुखः।
तस्मादुक्तफलं सर्वं सर्वोपासा च तस्य हि।
अंशेनोपासनाऽन्येषां फलमल्पं च योग्यतः।
गायत्र्या न ह्ययोग्योऽपि द्विजो योग्योऽपि न क्वचित्।
ऋते विरिञ्चं तस्मात्तु तस्यैव ह्यखिलं फलम् ॥

**टिप्पणी—**

ननु 'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्' इति त्रिपदाया एव गायत्र्याः सांव्यावहारिकत्वाच्चतुर्थपादस्यैवानुपलम्भात्कथमेतदेव तुरीयं पदमित्यत आह– **चतुर्थ पाद इति** ।। चतुर्थपादप्रतिपाद्यमाह– **तद्वाच्य इति** ।। ननु य एष तपतीति सूर्यस्य तद्वाच्यत्वोक्तेः कथं भगवांस्तद्वाच्य इत्यतस्तत्र विशेषमाह– **सूर्येति** ।। परो रजा इति शब्दं भगवति निर्वक्ति– **रज आख्येति** ।। प्रधानतश्चेतनप्रकृतितः चेतनप्रकृतेः रज आख्यत्वं रञ्जनादेव नतु तदुपलक्षित-गुणत्रयवत्त्वेन दोषित्वेनेति भावेन प्राक् सत्वात्मिकेत्युक्तं ज्ञानानन्दरूपैवेत्यर्थः । यस्माद्रजआख्यप्रधानतः परस्तस्मात्परोरजा इति सम्बन्धः । अत्र यद्यपि सूर्य-मण्डलस्थस्यैव भगवतश्चतुर्थपादप्रतिपाद्यत्वं वक्तुं शक्यम् । यद्वक्ष्यति सूर्यमण्डलगो विष्णुरिति तथापि तत्र परोरजा इत्यस्यानुपयोगात् तदनुरोधेन सूर्यमण्डलस्था तु या रमा तत्स्थ इति विशेष उक्तः । एवं गायत्रीपादचतुष्टयप्रतिपाद्यभगवज्ज्ञानिनः स यावदेषु त्रिषु लोकेषु तावद्ध जयति स यावती यं त्रयी विद्या तावद्ध जयति स यावदिदं प्राणिति तावद्ध जयति श्रिया यशसा तपतीति वाक्यचतुष्टयेन फलमुक्तं तद्व्याचष्टे– **य एवमिति** ।। यस्य कस्यापि गायत्र्युपासकस्योक्तं फलं भवतीति निरासायाह– **गायत्र्युपासन इति** ।। नवानां ब्रह्मणां सत्वाच्चतुर्मुख इत्युक्तं हि यस्मात् गायत्र्युपासने गायत्रीप्रतिपाद्यभगवदुपासने ब्रह्मैव मुख्यतो योग्यः तस्मात् सर्वोपासा पादचतुष्टयप्रतिपाद्यभगवदुपासना तस्यैव हि यस्मात्तस्यैव सर्वोपासा तस्मादुक्तं सर्वं फलं च तस्यैवेति सम्बन्धः । तर्ह्यन्येषां कथमित्यत आह– **अंशेनेति** ।। ननु किमन्येषामेकदेशेनोपासनाङ्गीकारेण ब्रह्मातिरिक्ताः गायत्र्युपासने योग्या एव न भवन्तीति किं न स्यादित्यत आह– **गायत्र्या इति** ।। वेदानधिकारिण एवायोग्यत्वाद्द्विज इत्युक्तम् । द्विजस्तु वेदाधिकारी वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेत्युक्तेः । तर्हि सर्वेषामपि द्विजानां गायत्र्युपासने योग्यत्वादुक्तं फलं सर्वेषां स्यादेवेत्यत आह– **योग्योऽपीति** ।। मुख्ययोग्योऽपीत्यर्थः । न योग्यमात्राणां सर्वफलप्राप्तिः । किन्तु मुख्ययोग्यस्यैव । मुख्ययोग्यस्तु विरिञ्चमृते कोऽपि नास्तीति तस्यैवाखिलं फलमित्यर्थः ।

**भाष्यम्——**

**यः परोरजास्तपति स तुरीयपदेन प्रणवेन पद्यते। तुरीयं पदं ददृश इव दृष्ट इव। तदधीनतेजःपुञ्जस्य सूर्यमण्डलस्य दृष्टत्वात्।**

**सूर्यमण्डलगो विष्णुः सर्वेषां दृष्टवत्स्थितः।**
**यस्मात्तदुत्थितं तेजोमण्डलं दृश्यतेऽखिलैः॥ इति त्रैविद्ये॥**

**सर्वं रजः सर्वां प्रकृतिम्।**

**रञ्जनात्प्रकृतिः प्रोक्ता रज इत्येव वैदिकैः।**
**तस्या अप्युत्तमो विष्णुर्यतोऽतः स परोरजाः॥**

**टिप्पणी——**

तुरीयं दर्शतं पदं परोरजा य एष तपतीति वाक्यमन्वयं दर्शयन्किञ्चिद्व्याचष्टे– **य इति**॥ तुरीयमित्यस्यार्थः तुरीयपदेन प्रणवेनेति। पदमित्यस्यार्थः पद्यत इति। अत्रेति शब्दोऽध्याहार्यः स तु हीयपदमित्यन्वयः। एष सूर्यमण्डलगो विष्णुर्ददृशे इव स्वयं दृष्टवानिव वस्तुतो न दृष्टवानिति प्रतीतिनिरासाय तदनूद्य व्याचष्टे– **ददृश इवेति**॥ ननु सूर्यमण्डलान्तर्गतस्य भगवतोऽन्यैरदृष्टत्वादेव दृष्ट इवेत्युक्तिरपि कथमित्यत आह– **तदधीनेति**॥ तस्यादृष्टत्वेऽपीति शेषः। अत्र प्रमाणमाह– **सूर्येति**॥ सूर्यमण्डलस्थरमागत इत्यर्थः। परोरजा इति पदमनूद्य श्रुतौ व्याख्यातं परोरजा इति सर्वमुह्येवैष रज उपर्युपरि तपतीति तत्र रजः कर्तृ सर्वमुपर्युपरि तपतीति प्रतीतिनिरासायान्वयमाह– **सर्वं रज इति**॥ तद्व्याचष्टे– **सर्वां प्रकृतिमिति**॥ रजःशब्दस्य केन निमित्तेन प्रकृतिवाचकत्वमित्यतस्तत्र प्रमाणमाह– **रञ्जनादिति**॥ शोभनादित्यर्थः। सर्वं रज उपर्युपरि तपतेत्यस्य परोरजा इत्येतद्व्याख्यानत्वं कथमित्यत आह– **तस्या अपीति**॥ ७.१९.४॥

**उपनिषत्——**

**[गायत्र्येव सावित्री]**

**सैषा गायत्र्येतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वैतत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं**

द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयाद-हमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलं सत्यादो जीय इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयांस्तत्रे प्राणा वै गयास्तत्प्राणांस्तत्रे तद्यद्गयांस्तत्रे तस्माद्गायत्री नाम स यामेवामूं सावित्रीमन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणांस्त्रायते ॥ ५ ॥

भाष्यम्—

अभिमानिनी तु गायत्र्या मुख्या श्रीः परिकीर्तिता।
ब्रह्माण्यमुख्याऽतो ज्ञेया सा तु ब्रह्माणमाश्रिता।
ब्रह्मा तु मुख्यगायत्रीं सा परोरज आश्रयेत्॥ इति च ॥

तद्वा एतज्जगत्सत्ये प्रतिष्ठितम्। भूमिरन्तरिक्षं द्यौरित्यादिना प्रस्तुतत्वात्।

तद्वा एतज्जगत्सर्वं चक्षुः सूर्याभिमानिनी।
विराण्नामविशेषाख्ये सर्वदा सम्पतिष्ठितम्॥
शेषः प्रतिष्ठितो वायौ स ह्यसद्बलवत्तरः।
स सत्य इति सम्प्रोक्तः सन्नस्मिन्याति यद्धरिः॥
वायुः समाश्रितो देवीं मुख्यां गायत्रिनामिकाम्।
सा चात्मनामधिपतिमेवं परममाश्रिता।

टिप्पणी—

सैषा गायत्र्यैतस्मिंस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठितेति वाक्यस्थगायत्री-शब्दाभिधेयमाह— **अभिमानिनी त्विति**॥ तर्ह्यनयोः कथं परोरजसि प्रतिष्ठितत्व-मित्यतो ब्रह्माण्याः परम्परया श्रियस्तु साक्षादेवेति भावेनाह— **सा त्विति**॥ मुख्यगायत्रीं मुख्यगायत्र्यभिमानिनीं तद्वै तत्सत्ये प्रतिष्ठितमित्यस्य तद्वै तत्तुरीयं

पदं सत्ये प्रतिष्ठितमिति व्याख्यानमसत्। तुरीयपदस्यानन्याश्रितत्वेन सत्याश्रितत्वायोगात्। तद्वै तदिति तत्परामर्शायोगादिति भावेनाह– **तद्वा एतदिति** ॥ जगतो प्रकृतत्वात्कथं तदेतच्छब्देन तस्य परामर्श इत्यत आह– **भूमिरिति** ॥ प्रमाणविरुद्धं च परव्याख्यानमिति भावेन तत्र प्रमाणमाह– **तद्वा इति** ॥ चक्षुर्वै सत्यमित्यत्र न तावच्चक्षुःशब्देन जडमुच्यते। नापि तदभिमानी सूर्यः। उभयोरपि भूमिरन्तरिक्षमित्यादिना प्रस्तुतजगदाश्रयत्वाभावादिति भावेनाह– **चक्षुःसूर्याभिमानिनीति** ॥ चक्षुःशब्दाभिधेयसूर्याभिमानिनीत्यर्थः। अभिमन्यमानवाचकस्याभिमानिनि मुख्यत्वात्सूर्याभिमानी शेषः चक्षुःशब्दवाच्य इति भावः। विराण्नामनीति प्रमाणान्तरसङ्ग्रहाय तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलमिति वाक्यं व्याचष्टे– **शेष इति** ॥ तस्मादाहुर्बलं सत्यादोजीय इति हेतुवाक्यं व्याचष्टे– **स हीति** ॥ बलवत्तर इत्युक्त्या बलशब्दोऽपि प्राणे व्याख्यातः। सत्यशब्दं शेषे निर्वक्ति– **स सत्य इति** ॥ सन् निर्दुष्टो हरिरस्मिन् याति वर्तत इति शेषः। सत्य इति सम्प्रोक्त इत्यर्थः। बलं सत्यादोजीय इत्यनन्तरं तद्वै तद्बलं गायत्र्यां प्रतिष्ठितमिति ग्राह्यम्। अन्यथा इत्येवमेषा गायत्रीत्यनुवादानुपपत्तेरिति भावेनाह– **वायुरिति** ॥ इत्येवमेषा गायत्र्यध्यात्मं प्रतिष्ठितेति वाक्यं व्याचष्टे– **सा चेति** ॥ अनेन उशब्दश्चशब्दार्थ इत्युक्तं भवति। यथा जगत्सत्ये प्रतिष्ठितं सत्यं बले बलं गायत्र्यामेवमित्यर्थः। अध्यात्मशब्दार्थ आत्मनामधिपतिमिति।

भाष्यम्—

> **प्राणानां रक्षणादेव गायत्री सा प्रकीर्तिता ॥**
> **सावित्रीति च यामाह स विष्णुः परतोरजाः।**
> **एषैव सा हि गायत्री सविता हि जनार्दनः।**
> **तस्माद्धि सूयते सर्वं सावित्री च तदाश्रिता।**
> **आदित्यस्तत्प्रतीकत्वात्सवितेति प्रकीर्तितः।**
> **प्रतिमायां च तच्छब्दः प्रयोज्यो ह्युपचारतः।**
> **यस्मा आह स विष्णुस्तां गायत्रीं जगदीश्वरः।**

**ब्रह्मणे तस्य सा प्राणान् सर्वदा पाति पुत्रवत् ।**
**ब्रह्मा हि पुत्रस्तस्यास्तु तत्पुत्रा इतरेऽखिलाः ।**

**टिप्पणी——**

चतुर्मुखादिव्यावृत्त्यर्थं परममिति सा हैषा गयांस्तत्रे प्राणा वै गया इत्यादिना गायत्रीशब्दो निरुच्यते तद्व्याचष्टे– **प्राणानामिति** ॥ सा देवी स यामेवामूं सावित्रीमन्वाहेति वाक्यं स आचार्यः माणवकं प्रति अमुं सावित्रीमाहेति प्रतीतिनिरासाय व्याचष्टे– **सावित्रीति चेति** ॥ यां गायत्रीनामिकां देवीं स इत्यनुवादेन विष्णुरिति व्याख्यानं तस्य प्रकृतत्वप्रदर्शनायोक्तम् ॥ **परतो रजा इति** ॥ आचार्यस्त्वप्रकृत इति भावः । ननु गायत्रीसावित्र्योः भिन्नत्वात्कथं गायत्रीमेष सावित्रीमाहेत्यत उक्तम् ॥ **श्रुतावेषैव सेति** ॥ तद्व्याचष्टे– **एषैवेति** ॥ हीति प्रसिद्धिमाह । ननु गायत्रीनामिका श्रीः कथं सावित्रीत्युच्यते । तस्याः सवितृशब्दवाच्यसूर्यसम्बन्धित्वायोगादित्यतः सावित्रीशब्दार्थं वक्तुं तावत्सवितृशब्दार्थमाह– **सविता हीति** ॥ तत्र निमित्तमाह– **तस्मादिति** ॥ इदानीं सावित्रीशब्दार्थमाह– **सावित्री चेति** ॥ यदि सविता जनार्दनस्तर्हि सवितृमण्डलमध्यवर्तीत्यादावादित्येऽपि सवितृशब्दप्रयोगः कथमित्यत आह– **आदित्य इति** ॥ आदित्यस्य सवितृनामकभगवत्प्रतिमात्वेऽपि सवितृनामकत्वं कुत इत्यत आह– **प्रतिमायामिति** ॥ यथाकथञ्चिदादित्येऽपि सवितृशब्दप्रयोगात् प्रकृते स एव वाच्यः किन्न स्यादित्याशङ्का उपचारत इत्यनेन परास्ता । मुख्ये सत्यमुख्यग्रहणायोगादिति भावः । स यस्मा अन्वाह तस्य प्राणांस्त्रायते इति वाक्यं व्याचष्टे– **यस्मा इति** ॥ यस्मै ब्रह्मण इत्यन्वयः । अपुत्रस्यैव ब्रह्मणः प्राणान्पुत्रवत्पातीति निरासायाह– **ब्रह्मा हीति** ॥ ७.१९.५ ॥

**उपनिषत्——**

**तां हैतामेते सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुभेतद्वाचमनुब्रूम इति तन्न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह**

**वा अप्येवंविद् बह्विव प्रतिगृह्णाति न ह वै तद्गायत्र्या एकं च न पदं प्रति ॥ ६ ॥**

**भाष्यम्—**

**तामाहुः परमां देवीं वृणीमह ऋगात्मिकाम् ।**
**नैव सा प्रतिमा मुख्या गायत्री परमा स्मृता ।**
**गायत्रीमुख्यवेत्तारो योग्या ब्रह्मपदस्य ये ।**
**तेषां प्रतिग्रहाद्दोषो न कश्चन भविष्यति ।**
**न चैकपदविज्ञानफलायालं सुखानि च ।**

**टिप्पणी—**

तां हैतामेके सावित्रीमनुष्टुभमन्वाहुरिति वाक्यं व्याचष्टे— **तामिति** ॥ 'तत्सवितुर्वृणीमहे वयं देवस्य भोजनम् । श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहि ।' इति ऋगात्मिकामित्यर्थः । श्रेष्ठं सर्वधातॄणामुत्तमं भगस्य समस्तैश्वर्यादिगुणस्वरूपस्य विष्णोः पुरुषं तुरं वायुं धीमहि ध्यायेमहि यस्मात् तस्मात् सवितुर्जगत्प्रसवितुर्देवस्य विष्णोः सकाशाद् वयं भोजनं वृणीमहे प्राप्नुम इत्यर्थः । 'तन्न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयात्' इत्येतद्व्याचष्टे— **नैवेति** ॥ यदि ह वा अप्येवंविदित्यादिना गायत्रीवेत्तुः फलमुच्यते । यस्य कस्यापि तद्वेत्तुरिदं फलमुच्यते इति प्रतीतिनिरासायाह— **गायत्रीति** ॥ यदि ह वा अप्येवंवित् बह्विव प्रतिगृह्णाति न ह वै तद्गायत्र्या एकं च न पदं प्रतीतिवाक्यसिद्धमर्थमाह— **तेषामिति** ॥ तद्वाक्यं व्याचष्टे— **नचेति** ॥ प्रतिग्रहजन्यानि च सुखानि गायत्र्या एकपदविज्ञानफलाय नालमित्यर्थः ॥ ७.१९.६ ॥

**उपनिषत्—**

**स य इमान् त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतद् द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं**

पदं परोरजा य एष तपति नैव केनचनाप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ७ ॥

**भाष्यम्—**

**विष्णोर्यदा भगवतो लोकान् वेदांश्च चेतनात् ।**
**विरिञ्चिजन्मन्यखिलान् प्रतिगृह्णन्ति कृत्स्नशः ।**
**गायत्रीपदविज्ञानफलमात्रं तदा भवेत् ।**
**प्रणवप्रतिपाद्यं यत्तुरीयं भगवत्पदम् ।**
**सर्वगं वासुदेवाख्यं न तत्केनचिदाप्यते ।**
**गायत्रीत्रिपदज्ञेयमनिरुद्धादिकं त्रयम् ।**
**ब्रह्मा व्याप्नोति मुक्तः सन् वासुदेवं न कश्चन ।**

**टिप्पणी—**

ननु गायत्रीमुख्यवेत्तॄणां ब्रह्मपदयोग्यानां प्रतिग्रह एव न सम्भवति । दातुरभावात् । अतः कथं प्रतिग्रहाद्दोषो नेत्याद्युक्तमित्याशङ्कां परिहरन् स य इमांस्त्रींल्लोकानित्यादि सोऽस्या एतत्तृतीयं पदमाप्नुयादित्यन्तं वाक्यं व्याचष्टे– **विष्णोरिति** ॥ ब्रह्मपदयोग्यानामपि जन्मान्तरे लोकव्यापारानधिकृतत्वेन प्रतिग्रहासम्भवाद्विरिञ्चजन्मनीत्युक्तम् । अखिलांल्लोकानिति सम्बन्धः । तेन पूर्णानित्येतदुक्तार्थं कृत्स्नशो वेदान् चेतनानिति सम्बन्धः । तेन यावतीयं त्रयी विद्या तावदिति यावदिदं प्राणि तावदिति च वाक्यं व्याख्यातम् । फलमात्रं फलैकदेशः अथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैव केन चनाप्यमिति वाक्यं व्याचष्टे– **प्रणवेति** ॥ सोऽस्या एतत्प्रथमं पदमाप्नुयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयात् सोऽस्या एतत्तृतीयं पदमाप्नुयादिति वाक्यत्रयं गायत्रीपदविज्ञानफलमात्रपरमिति व्याख्यातम् । इदानीं चतुर्थपादप्रतिपाद्यवासुदेवस्यैव केनाप्यप्राप्यत्वं कथमित्याशङ्कानिरासाय प्रकारान्तरेण व्याचष्टे– **गायत्रीति** ॥

**भाष्यम्—**

**लोकस्थमनिरुद्धं च प्रद्युम्नं वेदगं तथा।**
**सङ्कर्षणं वायुसंस्थं व्याप्य ब्रह्मा विमुक्तिगः।**
**गायत्रीज्ञानसामर्थ्यात्प्रणवज्ञानशक्तितः।**
**वासुदेवं च सम्पश्येन्न व्याप्नोति कथञ्चन।**
**अनन्तत्वाद्वासुदेवः कथं व्याप्यो भवेत्प्रभुः।**
**वर्णत्रयात्मकप्रकृतिमतीतः सूर्यमण्डले।**
**गुणत्रयात्मिकां बाह्ये यतोऽतः स परोरजाः।**
**यतो न व्याप्यते सोऽसौ ब्रह्मणाऽपि कथञ्चन।**
**अतः प्रतिग्रहो नास्य वासुदेवस्य विद्यते॥ इति प्रकाशिकायाम्॥**

**तावदेतावत्प्रतिगृह्णीयादिति तस्यैव सामस्त्येन ग्रहणार्थम्। एतावदेव मम हस्ते विद्यत इतिवत्। नह्यन्यदेतावत्प्रतिग्राह्यमस्ति।**

**टिप्पणी—**

ननु मुक्तब्रह्मणोऽनिरुद्धादिव्यापकत्वं कुत इति चेत्। गायत्रीत्रिपद-ज्ञेयानिरुद्धादिमूर्तित्रयस्य लोकवेदवायुस्थत्वेन परिच्छिन्नत्वात् मुक्तब्रह्मणोऽपि तावद्रूपेण तत्र स्थितत्वात्तद्व्याप्तिसम्भवादिति भावेनाह– **लोकस्थमिति**॥ अनिरुद्धादिरूपत्रयस्य क्रमेण पादत्रयप्रतिपाद्यत्वात्तस्य च भूमिरन्तरिक्षमित्यादिना लोकवेदवायुस्थत्वोक्तेर्लोकस्थमनिरुद्धमित्याद्युक्तम्। विमुक्तिगो ब्रह्मा गायत्री ज्ञानसामर्थ्याद्व्याप्त्या संपश्येदित्यन्वयः। ननु वर्णानामपरिच्छिन्नत्वेन तदात्मक-वेदगतस्य प्रद्युम्नस्यापि वासुदेववदपरिच्छिन्नत्वात्कथं ब्रह्मणस्तद्व्याप्तिरिति चेन्न। वर्णानामपरिच्छिन्नत्वेऽपि परिच्छिन्नपुरुषोच्चरितध्वनिजन्याभिव्यक्तिविशिष्टानां क्रमविशेषविशिष्टानामेव वेदत्वात्। तेषां च परिच्छिन्नत्वादिति भावः। यदि वासुदेवं न व्याप्नोति तर्हि गायत्रीचतुर्थपादप्रणवपरिज्ञानं व्यर्थं स्यादित्यत आह– **प्रणवेति**॥ चशब्दोऽवधारणे संपश्येदेवेत्यन्वयः। कुतो न व्याप्नोतीत्यतः

सर्वगमित्युक्तमेव हेतुं व्यनक्ति– **अनन्तत्वादिति** ।। ननु तुरीयपादप्रतिपाद्य-वासुदेवस्यापि परोरजा य एष तपतीति सूर्यमण्डलस्थत्वोक्तेः कथमपरिच्छिन्नत्व-मित्याशङ्कां परिहरन् सर्वमुह्येवैष रज उपर्युपरि तपतीति वाक्यानुसारेण परोरजा इत्यस्यार्थमाह– **वर्णत्रयात्मेति** ।। अनेन सर्वं रजः सर्वां प्रकृतिमित्युक्तं विवृतं भवति । सूर्यमण्डले स्थितो वासुदेवः शुक्लकृष्णकनीनिकालक्षणवर्णत्रयाभि-मानिप्रकृतिमतीतो बाह्ये स्थितो वासुदेवः सत्वरजस्तमोगुणाभिमानिनीं प्रकृतिम् अतीतो यतोऽतः स परोरजा इत्यर्थः । तथाच सूर्यमण्डलगतस्य परिच्छिन्नत्वेऽपि रूपान्तरस्यापरिच्छिन्नत्वान्नानुपपत्तिरिति भावः । अनेन परोरजा इत्यत्र कनीनिकावाचकः रजोगणवाचको वा रजःशब्दोऽन्योपलक्षक इत्युक्तं भवति । कुत उ एतावत्प्रतिगृह्णीयादिति वाक्यं सहेतुकं व्याचष्टे– **यत इति** ।। अनिरुद्धादिकं ब्रह्मणा व्याप्यमतस्तत्सकाशाद्ब्रह्मणो लोकादिप्रतिग्रहोऽस्त्येव । सोऽसौ बाह्ये स्थितो वासुदेवो ब्रह्मणापि न व्याप्यते यतोऽत अस्य वासुदेवस्य सकाशाद्ब्रह्मणः प्रतिग्रहो नास्तीत्यर्थः । यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयादित्यादेः कृत्स्नशो वेदांश्चेतनान् प्रतिगृह्णन्तीति व्याख्यानमसत् । यावतीयं त्रयी विद्या तावत्तावदवच्छिन्नं वस्त्वन्तरं यः प्रतिगृह्णीयादिति व्याख्यानेन सर्ववेदसर्वप्राणिपरिमितवस्त्वन्तरस्य प्रतिग्राह्यत्वप्रतीतेरित्यतस्तद्दूषयितुं स्वयं तावद्व्याचष्टे– **तावदिति** ।। तावदित्यनुवादेनैतावदिति व्याख्यातं तस्यैव वेदादेरेव सामस्त्येन ग्रहणार्थं नत्वेतावद्वस्त्वन्तरग्रहणार्थमित्यर्थः । नन्वस्तु तावच्छब्द एतावदर्थकः तथाप्येतावच्छब्देनापि तस्यैव सामस्त्येन ग्रहणमिति कुत इत्यतस्तत्र प्रयोगं दर्शयति– **एतावदेवेति** ।। यथा एतावदेव मम हस्ते विद्यत इत्यत्रैतावच्छब्देन हस्ते विद्यमानं यावत् तस्यैव सङ्ग्रहः । नतु तत्सदृशवस्त्वन्तरस्य एवमत्रापीत्यर्थः । ननु इदं यावत्तावदन्यत्रास्ति इत्यादौ तावच्छब्दस्य तावदवच्छिन्नवस्त्वन्तरेऽपि प्रयोगादत्र तावदवच्छिन्नवस्त्वन्तरवाचकत्वं किं न स्यादित्यत आह– **नहीति** ।। स्यादेवं यदि सर्ववेदातिरिक्तं तत्सदृशं शब्दजातं सर्वप्राणिव्यतिरिक्तं तत्सदृशं चेतनजातं वा स्यात् नच तदस्ति । अतस्तावच्छब्द एवातवदर्थक इति भावः ।। ७.१९.७।।

उपनिषत्—

तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्य-पदसि नहि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा नहैवास्मै स काम ऋद्ध्यते यस्मा एवमुपतिष्ठतेऽहमतः प्रापमिति वा ॥ ८ ॥

भाष्यम्—

अष्टाक्षरत्वाद्गायत्र्याः प्रोक्ता सैकपदीति च।
प्रणवेन सहैतास्तु गायत्र्याश्चतुरस्तदा॥
अकाराद्यतिशान्तान्तः प्रणवोऽष्टाक्षरो यतः।
पादः प्रणवसंयुक्तो गायत्री सा पृथग्यदा।
द्विपदीति तदा प्रोक्ता त्रिपदी स्वपदैस्त्रिभिः।
चतुष्पदी सप्रणवा ब्रह्मणोऽन्यैर्न गम्यते।
अपदी च ततः प्रोक्ता गायत्र्येवमुपस्थिता।
कामाप्राप्तिमपूर्तिं वा शत्रवे सा करिष्यति।
असावदो मैव प्रापन्नास्मै कामः समृध्यताम्।
उपस्थिता चेदित्थं सा यद्यदोहं समाप्नुयात्।
इति सा कामपूर्तिं च स्वस्य सम्यक्करिष्यति।
सम्यग्ब्रह्मपदावाप्तिं तद्योग्यां मुक्तिमेव च।
ब्रह्मणोपासितो दद्याद्गायत्र्याः पुरुषोत्तमः।
अलेपं सर्वपापेभ्यो विशेषेण प्रतिग्रहात्।
तद्योग्यां मुक्तिमन्येषां यथायोग्यमुपासितः।

**टिप्पणी—**

तस्या उपस्थानं गायत्र्यस्यैकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यस इत्यत्रैकपदीत्वादिकमुक्तं तद्विरुद्धमित्यतस्तावदेकपदीत्वं घटयति– **अष्टाक्षरत्वा-दिति** ।। ननु गायत्र्याश्चतुर्विंशत्यक्षरत्वात् प्रणवसहितायास्तु ततोऽप्यधिकाक्षरत्वात् कथमष्टाक्षरत्वमित्यत आह– **प्रणवेनेति** ।। यदा गायत्र्या एकपदीत्वविवक्षा तदा प्रणवेन सहैता गायत्र्यश्चतुर इति ज्ञेयम् । तथाच गायत्रीचतुष्ट्वविवक्षायां प्रत्येकमेकैकस्यापि पादस्य गायत्रीत्वात्तस्य चाष्टाक्षरत्वमस्त्येवेति भावः । नन्वेवं प्रणवस्यापि गायत्रीत्वात्तस्य कथमष्टाक्षरत्वमित्यत आह– **अकारादीति** ।। प्रणव अकारोकारमकारनादबिन्दुकलाशान्तातिशान्तरूपाष्टाक्षरात्मको यतः अतस्स एकः पाद इत्यर्थः । गायत्र्या द्विपदीत्वं घटयति– **पाद इति** ।। यदा प्रणवसंयुक्तः प्रणवरूपः पादः पृथक् एकदेशः सा त्रिपदा गायत्री पृथगेकदेशः तदा द्विपदीति प्रोक्तेत्यर्थः । यद्वा प्रणवसंयुक्तः पादो यदा पृथग्गायत्री सा तदा द्विपदी प्रोक्ते-त्यर्थः । त्रिपदीत्वं घटयति– **त्रिपदीति** ।। इदानीं प्रणवस्य गायत्रीत्वविवक्षा नास्तीति ज्ञेयम् । चतुष्पदीत्वं घटयति– **चतुष्पदीति** ।। अपदसि नहि पद्यसे इति कथं ब्रह्मणा ज्ञेयत्वादित्यतः तद्वाक्यं व्याचष्टे– **ब्रह्मण इति** ।। एतेन 'त्रैलोक्यपदेनैकपदी त्रयी विद्यापदेन द्विपदी प्राणाद्यात्मकपादेन त्रिपदी मण्डलान्तर्गतपुरुषलक्षणेन पादेन चतुष्पदी' इति व्याख्यानमपि निरस्तम् । त्रयी विद्यादिपादान्तरेणापि एकपदीत्वसम्भवात् । मण्डलान्तर्गतपुरुषस्यार्थरूपत्वेन शब्दपादत्वासम्भवाच्च । तस्या उपस्थानमित्यस्यार्थं वदन् न हैवास्मै सकाम ऋध्यत इति फलवाक्यं द्वेधा व्याचष्टे– **कामाप्राप्तिमिति** ।। काम्याप्राप्तिमीषत्प्राप्तावपि तदपूर्तिं वेत्यर्थः । अनेन ऋध्यत इत्यस्यार्थद्वयमुक्तं भवति । ननु फलान्तरार्थमुपासनेऽपि शत्रवे कामाप्राप्तिमपूर्तिं वा करोति किं नेति भावेन प्रवृत्तं असावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समृद्धीति वा वाक्यं व्याचष्टे– **असाविति** ।। असौ शत्रुः अदः काम्यं मैव प्रापन्नैव प्राप्नोतु सा गायत्री इत्थमुपस्थिता चेत्तर्हि कामाप्राप्तिमपूर्तिं वा शत्रवे करिष्यतीति सम्बन्धः । श्रुतौ अहमदः प्रापमिति वा यस्मा एवमुपतिष्ठते अस्मै

सकाम ऋध्यत इति सम्बन्धमभिप्रेत्य तद्वाक्यं व्याचष्टे– **यदीति** ॥ इतिशब्दात्परत उपस्थितेत्यनुवर्तते। नन्वेतदयुक्तं अयोग्येन मम सत्यलोकाधिपत्यं भवेदित्युपासनेऽपि तदलाभात्स्वस्य कामपूर्तेरैहिकत्वेन गायत्र्या ऐहिकमात्रफलसाधनत्वप्राप्तेश्च गायत्र्याः शब्दरूपत्वेन जडत्वादुक्तफलदानासामर्थ्याच्चेत्यत आह– **सम्यगिति** ॥ तर्ह्यन्येषां कथमित्यत आह– **अलेपमिति** ॥

उपनिषत्—

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथꣳ हस्तीभूतो वहसीति मुखꣳ हास्याः सम्राण्न विदाचकारेति होवाच तस्याग्निरेव मुखं यदि ह वा अपि बह्विवाग्नावभ्यादधति सर्वमेव तत्सन्दहत्येवꣳ हैवैवंविद्यद्यपि बह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः सम्भवति ॥ ९ ॥**

इति एकोनविंशं ब्राह्मणम् ॥ १९ ॥

भाष्यम्—

वक्तव्यो भगवान् विष्णुर्गायत्र्या मुखसंस्थितः।
अग्निमण्डलगो नित्यमग्निनामाऽग्रणीत्वतः।
गायत्र्यास्तु परिज्ञानं ज्ञाते मुख्यगते हरौ।
सफलं भवेदन्यथा तु न सम्यक्फलदं भवेत्।
गायत्रीमुखगो विष्णुर्ज्ञेयः सर्वात्मना ततः।
संहर्ता सर्वदोषाणामग्निस्थः सर्वदाहकः।
नित्यानन्दोऽग्निवर्णश्च रामः परशुभृत्सदा ॥

इति गायत्रीसंहितायाम् ॥

**टिप्पणी—**

तस्या अग्निरेव मुखमिति वाक्यं व्याचष्टे– **वक्तव्य इति** ।। ज्ञातव्य इत्यर्थः । मुखसंस्थितः प्रथमाक्षरगः । तर्ह्यग्निर्मुखमिति कथमुच्यत इत्यत आह– **अग्निमण्डलग इति** ।। गायत्रीप्रतिपाद्यभगवत्परिज्ञानेनैव फललाभोपपत्तौ किं मुखस्थविष्णुज्ञानेनेत्यत आह– **गायत्र्या इति** ।। मुखस्थहरिज्ञानाभावे गायत्रीप्रतिपाद्यहरिज्ञानं किं व्यर्थं नेत्याह– **अन्यथा त्विति** ।। किं तत इत्यत आह– **गायत्रीति** ।। एवं विद्यद्यपि बह्विव पापं करोति सर्वमेव तत्संप्सायेति फलवाक्यं व्याचष्टे– **संहर्तेति** ।। सर्वदाहक इत्यनेन यदि ह वा अपि बह्विवाग्नावभ्यादधाति सर्वमेव तत्सन्दहतीति वाक्यं व्याख्यातम् । अग्निस्थरूपं कीदृशं किमित्यत आह– **नित्येति** ।।

**अथ खण्डार्थः**

गायत्रीप्रतिपाद्यमाह–**भूमिरन्तरिक्षमित्यादिना** ।। भूमिरन्तरिक्षं द्यौरित्यष्टा-वक्षराणि द्यौरित्यस्य दि औ इति द्व्यक्षरत्वात् गायत्रै गायत्र्याः एकं पदं तत्सवितुर्वरेण्यमिति प्रथमपदमष्टाक्षरं ह वा किं तत इत्यत आह– **एतदु हैवास्या एतदिति** ।। अस्या गायत्र्याः एतत् अष्टाक्षरात्मकप्रथमपादप्रतिपाद्यं एतदेव उ भूमिरन्तरिक्षं द्यौरित्यष्टाक्षरप्रतिपाद्यं भूम्यन्तरिक्षस्वर्गस्थं अनिरुद्धाख्यं भगवद्रूपमेव खल्वित्यर्थः । हेति प्रमाणप्रसिद्धिद्योतकम् । एवं ज्ञानिनः फलमाह– **स इति** ।। यो गायत्र्युपासने मुख्याधिकारी ब्रह्मपदयोग्यः अस्या गायत्र्याः एतत्पदं प्रथमपादप्रतिपाद्यं हरिं एवमुक्तप्रकारेण वेदोपास्ते स एषु लोकेषु यावद्विद्यते तावदेतावत् जयति प्राप्नोति ह सर्वलोकाधिपतिर्भवतीत्यर्थः ।। १ ।।

ऋचो यजूंषि सामानीत्यष्टाक्षराणि गायत्रै गायत्र्याः एकं पदं भर्गो देवस्य धीमहीति द्वितीयं पदं अष्टाक्षरं ह वा किं तत इत्यत आह– **एतदिति** ।। अस्या गायत्र्याः एतदष्टाक्षरात्मकद्वितीयपादप्रतिपाद्यं एतदेव उ ऋचो यजूंषि सामानी-त्यष्टाक्षरप्रतिपाद्यं ऋग्यजुःसामसंस्थं प्रद्युम्नाख्यं भगवद्रूपमेव खल्वित्यर्थः । तज्ज्ञानिनः फलमाह– **स इति** ।। यो गायत्र्युपासने मुख्याधिकारी ब्रह्मपदयोग्यः अस्या गायत्र्या

एतत्पदं द्वितीयपादप्रतिपाद्यं एवमुक्तप्रकारेण वेद स यावतीयं त्रयी विद्या तावदेतावत् जयति सर्ववेदाधिपतिर्भवतीत्यर्थः ॥ २ ॥

प्राणोऽपानो व्यान इत्यष्टाक्षराणि प्राणः अपान वि आन इति विश्लेषात् । गायत्र्यै गायत्र्या एकपदं धियो यो नः प्रचोदयादिति तृतीयं पदं अष्टाक्षरं ह वा किं तत इत्यत आह– **एतदिति** ॥ अस्या गायत्र्याः एतत्तृतीयपादप्रतिपाद्यं एतदेव उ प्राणोऽपानो व्यान इत्यष्टाक्षरप्रतिपाद्यं प्राणापानव्यानस्थं सङ्कर्षणाख्यं भगवद्रूपमेव खल्वित्यर्थः । तज्ज्ञानिनः फलमाह– **स इति** ॥ योऽधिकारी ब्रह्मपदयोग्यः अस्याः एतत्पदं तृतीयपादप्रतिपाद्यं एवं वेद स यावदिदं प्रसिद्धं प्राणि तावदेतावज्जयति सर्वेषां प्राणिनामधिपतिर्भवतीत्यर्थः ॥ ३ ॥

अथ गायत्रीपादत्रयप्रतिपाद्यकथनानन्तरं चतुर्थपादप्रतिपाद्यमुच्यत इति शेषः । अस्या गायत्र्याः तुरीयं पदं तुरीयपदेन प्रणवेन प्रतिपाद्यं एतदेव किं यद्दर्शतं तत् य एष प्रसिद्धः परोरजास्तपति स चेत्यर्थः । तुरीयमित्येतत् श्रुतिः स्वयमेव व्याकरोति– **यदिति** ॥ यच्चतुर्थं वै प्रसिद्धं लोके तत्तुरीयं तुरीयशब्देनोच्यत इत्यर्थः । दर्शतं पदमित्येतदनूद्य व्याचष्टे– **दर्शतं पदमितीति** ॥ हि यस्मादेष चतुर्थपादप्रणवप्रतिपाद्यो वासुदेव आदित्यमण्डलान्तर्गतः सन् ददृश इवान्यैर्दृष्ट इव तदधीनतेजःपुञ्जस्य सूर्यमण्डलस्य दृष्टत्वात् अतो दर्शतमित्युच्यत इत्यर्थः । परोरजा इत्येतदनूद्य व्याचष्टे– **परोरजा इतीति** ॥ हि यस्मादेष चतुर्थपादप्रणवप्रतिपाद्यो वासुदेवः सर्वम् उ रजः सर्वामपि प्रकृतिमुपर्युपर्येवोपरिष्टादेव तपति प्रकाशते तदुत्तममिति यावत् तस्मात्परोरजा इत्युक्त इत्यर्थः । अत्र चतुर्थपादप्रणवप्रतिपाद्यो वासुदेवः सूर्यमण्डलस्थितः शुक्लकृष्णकनीनिकात्मकप्रकृत्युत्तमो बाह्ये स्थितो गुणत्रयात्मकप्रकृत्युत्तम इति ज्ञापनाय सर्वं रज इत्युक्तं तदुपासकस्य फलमाह– **एवमिति** ॥ योऽधिकारी ब्रह्मपदयोग्यः अस्या गायत्र्याः एतत्पदं चतुर्थपादप्रणवप्रतिपाद्यं एवमुक्तप्रकारेण वेदोपास्ते स एवमेव उपास्य वासुदेववदेव सर्वलोकवेदप्राण्युत्तमः सन् श्रिया यशसा च तपति प्रकाशत इत्यर्थः । अत्र ब्रह्मपदयोग्यानां स्वोपासनानुसारेण फलं ज्ञेयम् ॥ ४ ॥

एवं गायत्रीप्रतिपाद्यमुक्त्वा तदभिमानिदेवताया भगवदाश्रितत्वमाह– **सैषेति** ॥ सैषा गायत्री गायत्र्यभिमानिदेवता श्रीः सरस्वती वा एतस्मिन् पूर्वप्रकृते परोरजसि दर्शते तुरीये पदे वासुदेवे साक्षात्परम्परया वा प्रतिष्ठिता। एतदेव क्रमपूर्वकमाह– **तद्वा इति** ॥ तद्वा एतत् भूमिरन्तरिक्षमित्यादिना प्रस्तुतं जगत् सत्ये सन् विष्णुरस्मिन् यातीति सत्यनामकः सत्याभिमानी शेषः तस्मिन् प्रतिष्ठितम्। स कीदृश इत्यत आह– **चक्षुर्वै सत्यमिति** ॥ सत्यं सत्यनामकः शेषः। चक्षुरेव चक्षुर्नामकसूर्याभिमानी। कुत इत्यतस्तत्प्रसिद्धमित्याह– **चक्षुर्ह वै सत्यमिति** ॥ हेत्युक्तामेव प्रसिद्धिं दर्शयति– **तस्मादिति** ॥ यत् यस्मादेको ब्रूते अहं गजादिवस्त्वदर्शमिति अपरो ब्रूते अहं तद्वस्तु तथा न भवतीत्यश्रौषमित्येवं विवदमानौ विरुद्धं भाषमाणौ द्वाविदानीमेयातामागच्छेतां तयोर्मध्ये य एवाहमदर्शमिति ब्रूयात् तस्मा एव श्रद्दध्याम श्रद्धां कुर्मो न पुनरहमश्रौषमिति यो ब्रूयात्तस्मै श्रुत्यपेक्षया दृष्टेर्बलवत्त्वात्। तस्मात्सत्यप्रतिपत्तिहेतुत्वाच्चक्षुः सत्यमित्यर्थः। तद्वै तत्सत्यं सत्यनामकः शेषः। बले प्रतिष्ठितम्। किं बलमित्यत आह– **प्राणो वै बलमिति** ॥ पदार्थमुक्त्वा वाक्यार्थमाह– **तदिति** ॥ यस्मात् बलं प्राणः तत् तस्मात् बले प्रतिष्ठितमित्यस्य प्राणे प्रतिष्ठितमित्यर्थ इत्यर्थः। बले सत्यं प्रतिष्ठितमिति कुत इत्यत आह– **तस्मादिति** ॥ तस्माद्बलस्य सत्याधारत्वात् बलं प्राणाख्यं सत्याच्छेषाख्याद् ओजीयो बलवत्तरमित्याहुर्विद्वांसः। अत्र तद्वा एतद्बलं गायत्र्यां प्रतिष्ठितमिति वक्तव्यम्। गायत्र्यां तदभिमानिश्रियाम्। एषा गायत्री तदभिमानिनी श्रीः यथा जगत्सत्ये सत्यं बले बलं गायत्र्यामेवमध्यात्मं प्रतिष्ठिता आधिक्यार्थे अधीत्यव्ययम्। आत्मनामधिकत्वेन वर्तमानमध्यात्मं तस्मिन् प्रतिष्ठितेत्यर्थः। गायत्र्यभिमानिन्यां श्रियां गायत्रीशब्दं निर्वक्तुमाह– **सेति** ॥ सैषा गायत्र्यभिमानिनी श्रीर्गयांस्तत्रे त्राति ह। के ते गया इत्यत आह– **प्राणा वै गया इति** ॥ प्राणाः प्राणापानाद्याः पञ्चप्राणा गया इत्युच्यन्ते इत्यर्थः। पदार्थमुक्त्वा वाक्यार्थमाह– **तत्प्राणांस्तत्र इति** ॥ यस्माद्गयाः प्राणास्तत् तस्माद्गयांस्तत्र इत्यस्य प्राणांस्तत्र इत्यर्थ इत्यर्थः। इदानीं गायत्रीशब्दं निर्वक्ति– **तदिति** ॥ यद्यस्मात् सैषा गायत्र्यभिमानिनी श्रीः तत्तस्योपासकस्य

गयान् प्राणांस्तत्रे तस्माद्गायत्रीनाम गायत्रीति प्रसिद्धा अत्र दैर्घ्यमवधारणार्थं दैर्घ्यप्लुतिश्च हिङ्कारो बिन्दुरप्यवधारण इति वचनात् । एवं गायत्रीनामिकायास्तदभिमानिन्याः श्रियो नामान्तरमाह– **स इति** ।। स परोरजा विष्णुः याममूं गायत्रीमेव गायत्रीनामिकां तदभिमानिनीं श्रियमेव सावित्रीं सवितृनामकभगवदाश्रितत्वेन सावित्रीनामिकामन्वाह । गायत्रीसावित्र्योः परस्परं भिन्नत्वात्कथं गायत्रीमेव सावित्रीमाहेत्यत आह– **एषैवेति** ।। एषा सावित्री सा गायत्र्येव न तयोर्भेद इत्यर्थः । तद्यद्गयांस्तत्र इत्युक्तं तद्व्यक्तिविशेषनिष्ठतया दर्शयति– **स इति** ।। स विष्णुर्यस्मै ब्रह्मणे गायत्रीमन्वाह तस्य ब्रह्मणः प्राणान् सा गायत्र्यभिमानिनी श्रीस्त्रायते रक्षतीत्यर्थः ।। ५ ।।

एषैव सेति गायत्र्येव सावित्रीत्युक्तं तत्र केषाञ्चित्पक्षमनुवदति– **तां हैतामिति** ।। तां हैतां सावित्रीं सवितृनामकभगवदाश्रितां श्रियमेके अनुष्टुभं अनुष्टुबभिमानिनीमन्वाहुः । केयमनुष्टुबित्यत आह– **वागनुष्टुबिति** ।। तत्सवितुर्वृणीमहे इति वाक् अनुष्टुबित्यर्थः । यस्माद्वागनुष्टुप् तस्मात् एतां वाचं सावित्रीमनुब्रूम इत्येके आहुरिति सम्बन्धः । अनूदितं पक्षं दूषयति– **तन्न तथा कुर्यादिति** ।। सिद्धान्तमाह– **गायत्रीमेवेति** ।। गायत्री ऋचमेव सावित्रीनामकश्रीप्रतिमामनुब्रूयात् गायत्र्या एव मुख्यप्रतिमात्वादनुष्टुभश्च तदभावादित्यर्थः । गायत्र्युपासकस्य फलनिरूपणव्याजेन गायत्रीमाहात्म्यं निरूपयति– **यदि ह वा इति** ।। यद्यपि एवंविदुक्तप्रकारेण गायत्रीप्रतिपाद्यादिज्ञानी ब्रह्मा बह्विव बह्वेव विष्णोः प्रतिगृह्णाति ह वा इत्युक्तार्थप्रसिद्धिद्योतकम् । तथापि तत् बहुप्रतिग्रहजन्यं सुखं गायत्र्या एकं च न पदं प्रति एकपादविज्ञानफलं प्रति न पर्याप्तं ह वै प्रसिद्धमित्यर्थः । अनेन तत्प्रतिग्रहस्य दोषाधायकत्वं दूरनिरस्तम् ।। ६ ।।

एतदेव विवृण्वन् फलान्तरमाह– **स इति** ।। यो गायत्रीज्ञानी ब्रह्मा स पूर्णान् इमांस्त्रीन् लोकान् लोकस्थानिरुद्धात् प्रतिगृह्णीयात् प्रतिगृह्णाति स लोकप्रतिग्रहस्तज्जन्यं सुखमिति यावत् । अस्या गायत्र्याः एतत्प्रथमं पदमाप्नुयात् प्रथमपादोपास्तिफलैकदेशं प्राप्नुयादित्यर्थः । न केवलं गायत्र्युपासकस्यैहिकं

लोकाधिपत्यमात्रं किन्तु मौक्तं फलमप्यस्तीत्याह– **सोऽस्या इति** ॥ स गायत्रीज्ञानी ब्रह्मा मुक्तस्सन् अस्या गायत्र्या एतत्प्रथमं पदं प्रथमपादप्रतिपाद्यं भूम्यादि-लोकस्थमनिरुद्धमाप्नुयात्। तमन्तःप्रविश्य व्याप्नोतीत्यर्थः। अथ पुनर्यो गायत्रीज्ञानी ब्रह्मा स यावतीयं त्रयी विद्या तावदेतावत् सर्वामपि त्रयीं विद्यामिति यावत्। सर्ववेदस्थप्रद्युम्नात्प्रतिगृह्णाति स यावत् स सर्ववेदप्रतिग्रहस्तज्जन्यं सुखमिति यावत्। अस्या गायत्र्याः एतद् द्वितीयं पदमाप्नुयात् द्वितीयपादोपास्ति-फलैकदेशमाप्नुयादित्यर्थः। पूर्ववत्फलान्तरमाह– **स इति** ॥ स गायत्रीज्ञानी ब्रह्मा मुक्तस्सन्नस्या गायत्र्या एतद् द्वितीयं पदं द्वितीयपादप्रतिपाद्यं ऋगादिवेदस्थं प्रद्युम्नमाप्नुयात् व्याप्नोतीत्यर्थः। अथ पुनर्यः गायत्रीज्ञानी ब्रह्मा स यावदिदं प्रसिद्धं प्राणि तावदेतावत् सर्वानपि चेतनानिति यावत्। वायुस्थसङ्कर्षणात्प्रतिगृह्णीयात्स प्रतिग्रहोऽस्या एतत्तृतीयं पदं तृतीयपादोपास्तिफलैकदेशमाप्नुयात्। पूर्ववत् फलान्तरमाह– **सोऽस्या इति** ॥ स ज्ञानी ब्रह्मा मुक्तस्सन् अस्या गायत्र्याः। एतत्तृतीयं पदं तृतीयपादप्रतिपाद्यं प्राणापानादिवायुस्थं सङ्कर्षणमाप्नुयात् व्याप्नोती-त्यर्थः। एवं मुक्तब्रह्मणो लोकवेदवायुस्थानिरुद्धादिरूपत्रयं व्याप्यम्। अथ पुनर्य एष परोरजास्तपति यच्च दर्शतं एतदेवास्या गायत्र्यास्तुरीयं पदं तुरीयपादप्रणवप्रतिपाद्यं वासुदेवाख्यं रूपं केन च केनापि नैवाप्यं नैव व्याप्यम्। तदन्तःप्रविश्य व्याप्तुं केनापि न शक्यमिति यावत्। लोकादिस्थानिरुद्धादिरूपत्रयस्य परिच्छिन्नत्वात् सूर्यमण्डलान्तर्गतस्य परिच्छिन्नत्वेऽपि गुणत्रयात्मकप्रकृत्यतीतस्य परोरजःशब्दवाच्यस्य वासुदेवस्यापरिच्छिन्नत्वादिति भावः। नन्वनिरुद्धप्रद्युम-सङ्कर्षणेभ्यस्तद्व्याप्यलोकवेदप्राणिप्रतिग्रहो ब्रह्मणो वर्तते वासुदेवात्प्रतिग्रहः कुतो नास्तीत्यत आह– **कुत इति** ॥ यावत् वासुदेवव्याप्यमेतावत् क एव प्रतिगृह्णीयात् सर्वगतत्वेन वासुदेवो ब्रह्मणापि यतो न व्याप्यः अतो न वासुदेवात्प्रतिग्रह इति भावः ॥ ७ ॥

इदानीं गायत्र्युपासनप्रकारमाह– **तस्या इति** ॥ तस्या गायत्र्यास्तत्प्रतिपाद्य-भगवतः उपस्थानमुपासनं कर्तव्यम्। कथं हे गायत्रि गायत्रीप्रतिपाद्यभगवन्

त्वमेकपद्यसि एकपादप्रतिपाद्योऽसि एवमुत्तरत्रापि। प्रणवयुक्तपादत्रयस्य प्रत्येकं गायत्रीत्वात् तस्याश्चाष्टाक्षरत्वादित्यर्थः। त्वं द्विपद्यसि पादत्रयस्यैकपादत्वेन प्रणवस्य चापरपादत्वेन विवक्षणात् त्वं त्रिपद्यसि पादत्रयोपेतत्वात् प्रणवस्य गायत्रीत्वाविवक्षणात् तद्विवक्षायां तु त्वं चतुष्पद्यसि। त्वमपदसि कुतः हि यस्मात् त्वं ब्रह्मणोऽन्येन न पद्यसे साकल्येन न ज्ञायसे परोरजसे दर्शताय तुरीयाय पदाय वासुदेवाय तुभ्यं नमोऽस्तु। एवमुपासनस्य फलमाह– **असाविति**॥ असौ शत्रुः। अदः काम्यं मा प्रापत् नैवाप्नोत्वित्यभिप्रायेणासौ कामोऽस्मै शत्रवे मा समृद्धिपरिपूर्णो माभूदित्यभिप्रायेण वा गायत्र्युपासकोऽयं शत्रुं द्विष्यात् अस्मै शत्रवे सकामो नैव ऋध्यते ह नैव प्राप्यते समृद्धश्च न भवतीत्यर्थः। अहमदःकामजातं प्रापं प्राप्नुयामित्यभिप्रायेण वा यस्मै यत्कामार्थमेवमुक्तप्रकारेणोपतिष्ठते उपासते अस्मा उपासकाय स काम ऋध्यते समृद्धो भवतीत्यर्थः॥ ८॥

एवं गायत्रीज्ञानस्य प्रतिग्रहदोषनाशकत्वादिकं फलमुक्तं तद्गायत्रीमुखपरिज्ञान एव सम्यक् फलदं नान्यथेति भावेन गायत्रीमुखपरिज्ञानस्यावश्यं सम्पाद्यत्वे काञ्चनाख्यायिकामाह– **एतद्धेति**॥ जनको वैदेहो बुडिलं नामतः अश्वतराश्वस्यापत्यमाश्वतराश्विं प्रति तदेतद्वक्ष्यमाणमुवाच ह वै प्रसिद्धं किं तत् हे बुडिल त्वं नु इदानीमहं गायत्रीविदस्मीति यद् ब्रूथास्तत् त्वद्वचनं हो आश्चर्यकरं त्वं गायत्रीविन्न भवसीति तात्पर्यम्। कुत इत्यत आह– **अथेति**॥ यदि त्वं गायत्रीवित्स्याः अथ तर्हि हस्ती भूतो मूर्खः सन् प्रतिग्रहदोषं कथं वहसीति गायत्रीवेदनस्य प्रतिग्रहदोषनाशकत्वात्तव तु प्रतिग्रहदोषवत्त्वान्न गायत्रीवित्त्वमिति भावः। एवमुक्तो बुडिलो हे सम्राट् मद्योग्यतानुसारेण गायत्रीविदप्यहं हि यस्मादस्या गायत्र्या मुखं प्रथमाक्षरस्थां देवतां न विदाञ्चकार न ज्ञातवानस्मि तस्मान्न मम प्रतिग्रहदोषो गत इत्युवाच ह किं गायत्रीमुखमित्यतः श्रुतिः स्वयमाह– **तस्या इति**॥ तस्या गायत्र्या मुखं प्रथमाक्षरस्थमग्निरेवाग्निमण्डलगोऽग्निनामा परशुरामदेवः। तज्ज्ञानिनः फलं सदृष्टान्तमाह– **यदीति**॥ यद्यप्यग्नावग्निस्थे परशुरामे बह्विव बह्वेवेन्धनमभ्यादधति निक्षिपन्ति। ह वा इति प्रसिद्धिद्योतकं तथापि

सोऽग्निस्थस्तत्सर्वमेव यथा सन्दहति एवं तथा एवंवित् गायत्रीमुखस्थभगवद्रूपवित् यद्यपि बह्विव पापं कुरुते तथापि स गायत्रीमुखगतपरशुरामज्ञानी तत्प्रसादात्तत्सर्वमेव पापं सम्प्साय संभक्षयित्वा शुद्धो निर्दोषोऽत एव पूतः पवित्रीभूतोऽन्यानपि पवित्रीकरणसमर्थो वा अजरो जराशून्योऽमृतो मुक्तस्सम्भवतीत्यर्थः ॥ ९ ॥

इति एकोनविंशं ब्राह्मणम् ॥ ७.१९.९ ॥

उपनिषत्—

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १ ॥**

भाष्यम्—

**सूर्यमण्डलनाम्ना तु पात्रेण स्वमुखं हरिः ।**
**पिधायैव जगत्सर्वं पश्यत्यमितविक्रमः ॥**
**उदकं पीयते तेन तमसस्त्रायते जगत् ।**
**यतोऽतः पात्रमुद्दिष्टं विद्वद्भिः सूर्यमण्डलम् ॥**
**पूषा पूर्णत्वतो विष्णुर्दृष्टये विष्णुधर्मिणः ।**
**स्वमुखं प्रकाशयेदेकं नान्यथा तु कथञ्चन ॥**

टिप्पणी—

एवं पूर्वोक्तविद्यासु भगवदुपासनं तत्साक्षात्कारद्वारा मोक्षसाधनमित्युक्तं तत्रेश्वरसाक्षात्कारो नोपासनामात्रेण भवति नापि मोक्षः साक्षात्कारमात्रेण किन्तु भगवत्प्रसादादेवेत्यतः कृतोपासनेन साक्षात्कारार्थं प्राप्तसाक्षात्कारेणापि मोक्षार्थं भगवत्प्रार्थनं कार्यं तत्प्रकारप्रदर्शनार्थं हिरण्मयेन पात्रेणेति ब्राह्मणमारभ्यते । तत्र सगुणब्रह्मप्राप्त्यर्थं एकऋष्यादिशब्दाभिधेयमादित्यं प्रति मार्गयाचनमनेन क्रियत इत्यन्यथाप्रतीतिनिरासाय ब्राह्मणं प्रमाणेन व्याचष्टे– **सूर्यमण्डलेति** ॥ मुखमिति समस्तविग्रहोपलक्षणम् । यदि हिरण्मयेन पात्रेण सत्यस्य मुखमपिहितं तर्हि तस्यान्यविषयज्ञानं न स्यादित्याशङ्कां परिहरति– **जगत्सर्वमिति** ॥

नन्वेतद्विरुद्धमित्यत आह– **अमितविक्रम इति** ॥ सूर्यमण्डले पात्रशब्दं निर्वक्ति– **उदकमिति** ॥ तत्त्वं पूषन्नपावृण्विति वाक्यं व्याचष्टे– **पूषेति** ॥ पुष पुष्टाविति धातोः यथाभूतस्य धर्मस्यानुष्ठाता सत्यधर्मेति व्याख्यानमसत् । सत्यस्यापिहितमिति सत्यशब्देन विष्णोः प्रकृतत्वेन प्रकृतपरित्यागापत्तेरिति भावेन तदर्थमाह– **विष्णुधर्मिण इति** ॥ विष्णुं धारयतीति विष्णुधर्मी तस्येत्यर्थः । नच विष्णोरनाधारत्वात्कथमेवं व्याख्यानं विष्णुं हृदये धारयतीति व्याख्यानात् । हृदये विष्णुधारणं चादरनैरन्तर्योपेतं तद्ध्यानादिकमेव । तच्च भक्तस्यैव सम्भवतीति विष्णुधर्मीति विष्णुभक्त एवोच्यते । अत एवोक्तमन्यत्र सत्यधर्माय भक्तायेति अनेन श्रुतौ सत्यधर्मायेति चतुर्थी षष्ठ्यर्थेत्युक्तं भवति । यद्यपि मन्त्रे अपावृण्विति प्रार्थनं अत्र प्रकाशयेदिति स्वरूपकथनं तथापि मन्त्रतात्पर्यमात्रोक्तिरित्यदोषः । एकं प्रधानम् । अन्यथा विष्णुधर्मित्वाभावे ॥ ७.२०.१ ॥

उपनिषत्——

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूहरश्मीन् । समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि ॥ २ ॥**

भाष्यम्–

**नान्यो यत्तादृशो ज्ञाता तस्मादेकऋषिर्हरिः ।**
**यमो नियमनात्प्रोक्तः सूर्य ऊरीकृतेरयम् ॥**
**ज्ञेयः प्रजापतेरेव प्राजापत्यस्ततः स्मृतः ।**

टिप्पणी——

पूषन्नेकर्षे यमसूर्यप्राजापत्येत्यत्र पूषन्नित्यस्य व्याख्यातत्वादितरान् शब्दान् व्याचष्टे– **नान्य इति** ॥ एकं प्रधानऋषिर्ज्ञानं यस्यासावेकऋषिः । यथोक्तं प्रधान-ज्ञानरूपतो विष्णुरेकऋषिरिति । ज्ञानस्य प्राधान्यं च तत्सदृशज्ञानान्तर-राहित्यमित्यभिप्रेत्यैवमुक्तम् । नियमनात्सर्वस्येति शेषः ऊरीकृतेरुदकस्य स्व-

भक्तस्य वाऽङ्गीकृतेः प्रजापतेर्हिरण्यगर्भस्यायं प्राजापत्य इत्यभिसन्धाय सम्बोधो दर्शितः । प्रजापतेरेव ज्ञेय इति विशेषेणेति शेषः ।

उपनिषत्—

योऽसावसौ पुरुषः सोऽहमस्मि ।

भाष्यम्—

**प्राणे स्थितो यः पुरुषः सोऽसावहमिति स्मृतः ।**
**अहेयत्वादसुत्वाच्च मेयत्वाच्चास्मिनामकः ।**

टिप्पणी—

योऽसावसौ पुरुषः सोऽहमस्मीत्यत्र द्विरसाविति किमर्थमुच्यत इति शङ्कां निवारयंस्तद्व्याचष्टे– **प्राण इति** ।। एकस्यासावित्यस्यार्थः प्राण इति । ननु यद्यसुः प्राणस्तस्मिन्नसावित्यर्थः स्यात्तर्हि एतदनन्वितं स्यात् क्रियापेक्षत्वादधि-करणस्येत्यतः क्रियाध्याहारेणान्वयं दर्शयति– **स्थित इति** ।। असावसाविति वीप्सार्थतया किं न व्याख्यायत इति चेन्न । एवं व्याख्याने विष्णोः प्राणाख्यप्रतीकस्याप्युक्ति-लिङ्गात् ।। **अहेयत्वादिति** ।। न हीयते इत्यहेयमित्यर्थः ।

उपनिषत्—

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।। ३ ।।

भाष्यम्—

**अदोषत्वाद इत्युक्तो वायुस्तन्निलयो यतः ।**
**अनिलं तत एवासावमृतं चेति कीर्त्यते ।**
**तदाश्रयोऽपि ह्यमृतः किमु साक्षात्स्वयं हरिः ।**

टिप्पणी—

असुत्वात्प्राणरूपत्वात् वायुरनिलममृतमिति वाक्यमेवंभूतस्य मे शरीरपाते सति तत्स्थो वायुराध्यात्मिकः प्राणः अनिलं बाह्यं वायुं अमृतमाधिदैविकं प्रति

गच्छतु । अथेदं शरीरं भस्मान्तं सत् पृथिवीं प्रतियात्विति परैर्व्याख्यातं तदसत् । अवश्यभाविन्यर्थे प्रार्थनायोगात् । प्रकरणादुपपत्तेर्बलीयस्त्वात् । अतो लिङ्गव्यत्ययेन विभक्तिव्यत्ययेन वा समानाधिकरणान्येतानि पदानि । ननु तर्हि वायुरनिलमिति पुनरुक्तिरित्यत आह– **अदोषत्वादिति** ।। अ इत्युक्तः हरिरिति वर्तते यतो वायुस्तन्निलयः स हरिरेव निलं निलय आश्रयो यस्यासौ तन्निलयः तत एवानिलमिति कीर्त्यत इत्यर्थः । अमृतं चेति कीर्त्यते अतिरोहितविज्ञानादिति शेषः । ननु विष्णुप्रार्थनप्रकरणे वायोरनिलत्वामृतत्वोक्तिरसङ्गतेत्यत आह– **तदाश्रय इति** ।। स हरिराश्रयो यस्यासौ तदाश्रयः । तथाच कैमुत्येनेश्वरामृतत्वं साधयितुं वायोरमृतत्वमत्रोच्यते । वायोरमृतत्वज्ञान[1]मात्रेण कथमीश्वरामृतत्वं कैमुत्यलभ्यमित्यतो निलयपदेन वायोरीश्वराश्रितत्वमुच्यत इति नासङ्गतिरिति भावः ।। ३ ।।

उपनिषत्—

**ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ।।४।।**

भाष्यम्—

**क्रतुश्च ज्ञानरूपत्वात्स एव हि जनार्दनः ।**

टिप्पणी—

ॐ क्रतो स्मरेत्युक्तक्रतुशब्दं निर्वक्ति– **क्रतुश्चेति** ।। क्रतुर्मनीषेत्यभिधानादित्यर्थः।

उपनिषत्—

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।। ५ ।।**

इति विंशं ब्राह्मणम्

इति बृहदारण्यके सप्तमोऽध्यायः

१. 'ज्ञान' इति पदं मुद्रितपुस्तके नास्ति ।

भाष्यम्—

सोऽग्निरङ्गप्रणेतृत्वाद्विश्वज्ञानविदां वरः ॥ इति च ॥

जुहुराणमल्पं कुर्वत्। 'न वा अहमिमं जानाति' इतिवत्। सर्वत्राप्यहं-शब्दोऽहेयत्ववाच्येव।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमद्बृहदारण्यकभाष्ये सप्तमोऽध्यायः

टिप्पणी—

अग्ने नयेत्यग्निशब्दं व्याचष्टे– **सोऽग्निरिति** ॥ अङ्गं शरीरमप्रधानं जगद्वा नयतीत्यग्निरित्यर्थः । विश्वानि वयुनानि विद्वानित्यस्यार्थमाह– **विश्वेति** ॥ त्वद्दत्तया वयुनयेदमचष्ट विश्वमिति प्रयोगाद्वयुनशब्दो ज्ञानवाचीति भावेन विश्व-ज्ञानेत्युक्तम् । जुहुराणं कुटिलमित्यन्यथाप्रतीतिनिरासाय तदनूद्य व्याचष्टे– **जुहुराणमिति** ॥ अन्यथा यदस्मान्कुरुतेऽत्यल्पांस्तदेनोऽस्मद्वियोजयेति वचनविरोधादिति भावः। तस्योपनिषदहमित्यत्र योऽसावसौ पुरुषः सोऽहमस्मीत्यत्र चाहंशब्दोऽहेयत्व-वाचीत्युक्तं तदुपपादयति– **नवेति** ॥ अत्राहंशब्दस्याहेयत्ववाचित्वं प्रागेवोपपादितम् ॥ ७.२०.४ ॥

अथ खण्डार्थः

हिरण्मयमिव हिरण्मयं ज्योतिर्मयं पिबति रसांस्त्रायते च जगदिति पात्रं तेन हिरण्मयेन पात्रेण सूर्यमण्डलेन सत्यस्य सद्गुणपूर्णस्या-दित्यमण्डलान्तर्गतस्य तव मुखं वपुरपिहितमस्ति । हे पूषन् तद्वपुः सत्यधर्माय त्वद्विषयध्यानादिमते मह्यं दृष्टये मम त्वद्दर्शनसिद्ध्यर्थमिति यावत्। अपावृणु अपगतावरणं कुरु। हे पूषन्नेकर्षे यमसूर्यप्राजापत्य मदीयान्रश्मीन् व्यूह तेजश्च समूह स्वरूपं बाह्यं च मदीयं ज्ञानं विस्तारयेति यावत् । तथाच यत्ते रूपं कल्याणतमं तत्ते प्रसादादहं पश्यामि । असुः प्राणस्तस्मिन्नसौ स्थितो यः पुरुषः सोऽसावहेयत्वेनासुत्वमेयत्वाभ्यां चाहमस्मिनामकस्तं च पश्यामीति वाक्यशेषः । ननु मुख्यप्राणान्तर्गतस्य भगवतस्सोऽहमस्मीति नित्यास्तित्वं कल्याणतमत्वं चोक्तं तद्युक्तम् ।

मुख्यप्राणदेहस्य भस्मान्तत्वदर्शनात् । देहनाशे च तदन्तर्गतजीववन्मरणाद्यवश्यम्भावादित्याशङ्क्याह– **वायुरनिलमिति** ।। अनिलममृतं लिङ्गव्यत्ययो विभक्तिव्यत्ययो वा । यद्यपीदं शरीरं भस्मान्तं तथापि तदन्तर्गतस्य परमेश्वरस्य न मरणादिदोषप्रसङ्गः कुतः अनिलः परमेश्वराश्रितवायुरपि यदाऽमृतोऽथ तदा परमेश्वरोऽमृत इति किमु वक्तव्यमिति तदमृतत्वस्य कैमुत्यसिद्धत्वादित्यर्थः । अथ प्रणवप्रतीकं भगवन्तं प्रार्थयते– **ॐमिति** ।। ॐ ओतत्वादिगुणयुक्त क्रतो ज्ञानरूपं मां स्मर मया कृतं ध्यानादिकं स्मर अभ्यासस्तात्पर्यार्थः । नित्यज्ञानस्वरूपस्य विष्णोः भक्तविषयकस्मरणं नाम तदनुग्रहोन्मुखत्वमेव नतु संस्कारकारणकं ज्ञानमिति ध्येयम् । यथोक्तम्- 'भक्तानां स्मरणं विष्णोर्नित्यज्ञप्तिस्वरूपतः । अनुग्रहोन्मुखत्वं तु नैवान्यत्किञ्चिदिष्यते' (ई. १८) इति । एवं साक्षात्कारप्रार्थनानन्तरमग्निप्रतीकं भगवन्तं मोक्षं प्रार्थयते– **अग्न इति** ।। हे अग्ने अस्मान् सुपथा पुनरावर्तिवर्जितेनार्चिरादिमार्गेण राये मोक्षाख्यवित्ताय नय । कुतः हे देव अस्मदनुष्ठितानि विश्वानि सम्पूर्णानि मोक्षाय पर्याप्तानीति यावत् । वयुनानि ज्ञानानि भवान्वेद प्रारब्धकर्मप्रतिबद्धस्य कथं मोक्ष इत्यत उक्तम् ।। **युयोधीति** ।। अस्मज्जुहुराणं अस्मानल्पीकुर्वत् संसारे परिवर्तयदिति यावत् । एनः पापमनिष्टं कर्मेति यावत् । अस्मद्युयोधि अस्मत्तो वियोजय । वयं ते तुभ्यं भक्तिज्ञानाभ्यां भूयिष्ठां नम इत्युक्तिं विधेम नतु तत्प्रतिकर्तुं शक्नुम इत्यर्थः ।। ७.२०.४ ।।

इति विंशं ब्राह्मणम् ।। २० ।।

**।। इति भाष्यटीकायां सप्तमोऽध्यायः ।।**

# अथ अष्टमोऽध्यायः

उपनिषत्—

[तस्माद्वायुर्देवदेवो विशिष्टः]

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च । ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥ यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥ यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति । प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥ यो ह वै सम्पदं वेद सर्वꣳ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै सम्पच्छ्रोत्रे हीमे सर्वे वेदा अभिसम्पन्ना सꣳ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥ यो ह वा आयतनं वेदायतनं स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनꣳ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥ यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥ ते हेमे प्राणा अहꣳ श्रेयसे विविदमाना ब्रह्म जग्मुस्तद्धोचुः को नो वसिष्ठ इति तद्धोवाच यस्मिन् व उत्क्रान्त इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ॥ ७ ॥ वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽकला अवदन्तो

वाचा प्राणन्तः प्राणेन पश्यन्तः चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वांसो मनसा प्रजायमाना रेतसैवमजी-विष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥ रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसैवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥ अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशङ्कून् संवृहेदेवꣳ हैवेमान् प्राणान् सम्बबर्ह ते होचुर्मा भगव उत्क्रामीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं

कुरुतेति तथेति ॥ १३ ॥ सा ह वागुवाच यद् वा अहं वसिष्ठाऽस्मि त्वं तद् वसिष्ठोऽसीति यद् वा अहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद् अहꣳ सम्पदस्मि त्वं तत्सम्पदसीति श्रोत्रं यद् वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद् वा अहं प्रजापतिरस्मि त्वं तत्प्रजापतिरसीति रेतः तस्योमे किमन्नं किं वास इति यदिदं किञ्च आश्वभ्य आ क्रिमिभ्य आ कीटपतङ्गेभ्य-स्तत्तेऽन्नमापो वास इति न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चाचामन्त्येतमेव तदन्नमनग्नं कुर्वन्तो मन्यन्ते तस्मादेवं विद्वानशिष्य-न्नाचामेदशित्वा चाचामेत् ॥ १४ ॥

इति प्रथमं ब्राह्मणम्

उपनिषत्—

अहंश्रेयोविवादं तु येन कृत्वाखिलाः सुराः ।
असमर्थाः स्वरक्षायां स वायुः सुरनायकः ॥
विवदन्तोऽखिला देवा ययुर्नारायणं प्रभुम् ।
अहं श्रेयानहं श्रेयानिति वायुपुरःसराः ।
उक्तं भगवता तेन येन त्यक्तेऽखिला अपि ॥
स्थातुं न शक्ताः स श्रेयानित्युक्ताः पुनरागताः ।
उत्क्रान्ताश्च पुनः सर्वे तद्विज्ञस्यै पृथक् पृथक् ॥
सुपर्णशेषरुद्रेन्द्रसूर्यादिषु पृथक् पृथक् ।
उत्क्रान्तेषु ब्रह्मदेहाच्छरीरं न पपात ह ॥

**ऋत उत्क्रान्तमेकं तु तदन्ये निविशन्ति च ।**
**प्राण उच्चिक्रमिषति स्थातुं नाशक्नुवन् परे ॥**
**प्राणं विना नच ब्रह्मा तं विना प्राण एव च ।**
**अन्योऽन्यापाश्रयाच्छक्तौ स्थातुमन्ये कुतस्ततः ॥**
**तस्मात् प्राणो वरो देवेष्विति सर्वेऽपि मेनिरे ॥ इति पवमाने ॥**

**टिप्पणी—**

सप्तमाध्यायोक्तविद्याशेषभूता विद्या अष्टमाध्याये निरूप्यन्ते। तत्रादौ प्रमाण-विषयां विद्यामाह– **यो ह वा इत्यादिना** ॥ अत्रेन्द्रियाणां जडानामेव परस्परं विवाद इत्युच्यत इति प्रतीतिनिरासाय तद्ब्राह्मणं प्रमाणेन व्याचक्षाणस्ताव-त्तात्पर्यमाह– **अहमिति** ॥ अहं श्रेयानित्यर्थे विवादम् । असमर्था जाताः स वायुः सुरनायकः निश्चित इति शेषः । एवं तात्पर्यतो व्याख्याय ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुरिति वाक्यं व्याचष्टे– **विवदन्त इति** ॥ अहं श्रेयानहं श्रेयानिति विवदन्त इति सम्बन्धः । तद्धोवाच यस्मिन् व उत्क्रान्त इदं शरीरं पापीयो मन्यते स वो वसिष्ठ इति वाक्यं तात्पर्यतो व्याचष्टे– **उक्त-मिति** ॥ त्यक्ते देह इति शेषः । स वो वसिष्ठ इत्यनन्तरं वक्तव्यमाह– **इत्युक्ता इति** ॥ वाग्घोच्चक्राम चक्षुर्होच्चक्रामेत्यादीनि वाक्यानि व्याचष्टे– **उत्क्रान्ताश्चेति** ॥ तद्विज्ञप्त्यै भगवदुक्तपरीक्षार्थं सा संवत्सरं प्रोष्याऽगत्योवाचेत्यादि एवमजीवि-ष्मेत्यन्तानि वाक्यानि । अत्र वागादिशब्दैः प्रसिद्धवागादिकमुच्यत इत्यन्यथा-प्रतीतिनिरासाय तात्पर्यतो व्याचष्टे– **सुपर्णेति** ॥ अत्र सुपर्णशेषरुद्राः मनोभि-मानिनः । इन्द्रः श्रोत्राभिमानी । सूर्यश्चक्षुरभिमानी । आदिपदेन वागभिमान्यग्नी रेतोऽभिमानी वरुणश्च ग्राह्यः । यथोक्तमन्यत्र– 'अग्निरेव तु । उपचारतो वसिष्ठः स्यात्प्रतिष्ठैवं रविस्तथा । सम्पदिन्द्रस्तथैवोक्तो रुद्र आयतनं तथा' इति 'वरुणो वीर्यदेवता' इति च । नन्वेकस्योत्क्रान्तत्वात्कथं शरीरं न पपातेत्यत आह– **ऋत इति** ॥ अनेन यथाऽकला अवदन्तो वा चाप्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वांसो मनसा प्रजायमाना रेतसेत्यादीनि वाक्यानि व्याख्यातानि ।

अथ ह प्राण उत्क्रमिष्यन्नित्यादि न वै शक्ष्यामस्त्वदृते जीवितुमितीत्यन्तवाक्यस्य तात्पर्यमाह– **प्राण इति** ।। एतदेव कैमुत्येन साधयति– **प्राणं विनेति** ।। यदा प्राणं विना ब्रह्मापि स्थातुं नैव शक्तस्ततस्तदाऽन्ये स्थातुं न शक्ता इति कुतः किमु इति सम्बन्धः । यद्वा यदा यस्माद्ब्रह्माप्यसमर्थः ततस्तस्मादन्ये कुतः कारणाच्छक्ता इत्यर्थः । तर्ह्येवं प्राणोऽनन्यापेक्षः किन्नेत्याह– **तं विनेति** ।। तं ब्रह्माणं विना प्राणोऽपि स्थातुं नैव शक्त इत्यर्थः । प्राणब्रह्माणौ परस्परानाश्रयेण स्थातुमशक्तौ चेत्कथं तिष्ठत इत्यत आह– **अन्योन्येति** ।। नन्वेवं सति 'उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः । तेषां बलपरीक्षार्थम्' इति 'हरेर्विरिञ्चस्य तु मध्यसंस्थितेः 'तदन्यदेवाधिपतिः स मारुतः' इति वचनेन विरोधः स्यादिति चेन्न । अत्रापि प्राणकलहे ब्रह्मणो प्रवेशात् श्रुतौ तथानुक्तत्वात् प्राणं विनेति वचनं तु प्राणब्रह्मणोः स्वस्वशरीरे स्थातुं परस्परं सापेक्षावेव समर्थौ नतु निरपेक्षौ । वायुं विना ब्रह्मणोऽपि शरीरं पूतिमेष्यति । वायुश्च शोषमायाति विना ब्रह्माणमित्युक्त-त्वात् । सति चैवं यदा वायुव्यतिरेकेण ब्रह्मा स्वशरीरस्थितावसमर्थः किम्वन्य इत्येवं परम् । ननु यस्माच्छरीराद्देवानामुत्क्रमणमासीत्सोऽपि ब्रह्म-देहः । तथाच कथं विष्णुं ब्रह्माणं विना वायुमात्रेण तद्देहावस्थानमिति चेन्न । तयोस्तत्रोदासीनमात्रत्वेन नियमेन व्यतिरेकाभावादिति ज्ञेयम् । ते होचुर्मा भगवन्नुत्क्रामीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति वाक्यफलितमाह– **तस्मादिति** ।। तथाच श्रुत्यन्तरं तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेयोऽसि मोत्क्रामीरिति ।। ८.१.१४ ।।

**अथ खण्डार्थः**

प्राणज्ञानमवश्यं सम्पाद्यमिति भावेन तज्ज्ञानिनः फलमाह– **यो ह वा इति** ।। योऽधिकारी अखिलदेवानां वयसा ज्येष्ठं गुणतः श्रेष्ठं च वेद स इहैव स्वानां मध्ये ज्येष्ठश्च श्रेष्ठश्च भवति ज्येष्ठश्च श्रेष्ठश्च क इत्यत आह– **प्राण इति** ।। न केवलं प्राणस्य ज्येष्ठत्वश्रेष्ठत्ववेत्तुरुक्तं फलमैहिकमात्रं ज्ञायते किन्तु मौक्तं चेति भावेन फलान्तरमाह– **ज्येष्ठश्चेति** ।।य एवं वेद सः न केवलममुक्तौ

स्वानां मध्य एव अपिच अपितु मुक्तावपि येषां मध्ये ज्येष्ठः श्रेष्ठश्च बुभूषति भवितुमिच्छति तेषां मध्ये ज्येष्ठः श्रेष्ठश्च भवतीत्यर्थः। यथोक्तम्- 'यः श्रेष्ठं ज्येष्ठ-मखिलं देवानां वायुमञ्जसा। वेद सः स्वसमानानां ज्येष्ठः श्रेष्ठो विमुक्तिगः' इति ॥ १ ॥

यो ह वै वसिष्ठां वसतामुत्तमां वेद स इहैव स्वानां स्वकीयानां वसिष्ठो वसतामुत्तमो भवति। का वसिष्ठेत्यत आह– **वाग्वा इति** ॥ वागभिमान्यग्निरित्यर्थः। यथोक्तम् 'अग्निरेव तु उपचारतो वसिष्ठः स्यात्' इति। न केवलं वाचो वसिष्ठत्ववेत्तुरुक्त-मैहिकमात्रफलं किन्तु मौक्तं चेति भावेन फलान्तरमाह— **वसिष्ठ इति** ॥ यथोक्तं 'समीपे वसतां श्रेष्ठो वसिष्ठस्यैव वेदनात्' इति ॥ २ ॥

यो ह वै प्रतिष्ठां वेद स ज्ञानी यदि एतल्लोके स्थितीच्छुः तदा समे सर्वप्राप्यतया सर्वसाधारणे अस्मिन् लोके प्रतितिष्ठति। यदि स्वर्गादिलोके स्थितीच्छुः तदा दुर्गे गन्तुमशक्ये अमुष्मिन् स्वर्गादिलोके प्रतितिष्ठति। तथाच श्रुत्यन्तरम्– 'यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिँल्लोकेऽमुष्मिंश्च' इति। का प्रतिष्ठेत्यत आह– **चक्षुर्वै प्रतिष्ठेति** ॥ चक्षुः सूर्यः। यथोक्तं 'प्रतिष्ठैवं रविस्तथा' इति। तदुपपादयति– **चक्षुषा हीति** ॥ न केवलं सूर्यस्य प्रतिष्ठात्ववेत्तुरुक्तं फलमैहिकमात्रं किन्तु मौक्तं चेति भावेनाह– **प्रतितिष्ठतीति** ॥ य एवं वेद स ज्ञानी यदि सान्तानिक-लोकस्थितीच्छुस्तदा स मे सर्वयोग्यसाधारणे अस्मिन् सान्तानिकलोके प्रतितिष्ठति। यदि विष्णुलोके स्थितीच्छुस्तदा दुर्गेऽन्यैर्गन्तुमशक्ये विष्णुलोके प्रतितिष्ठती-त्यर्थः। यथोक्तं 'एकस्थाने स्थितिस्तु स्यात्प्रतिष्ठाज्ञस्य चेच्छतः' इति ॥ ३ ॥

यो ह वै सम्पदं वेद स इह यं कामं कामयते सोऽस्मै ज्ञानिने सम्पद्यते ह का सम्पदित्यत आह– **श्रोत्रमिति** ॥ श्रोत्राभिमानी इन्द्रः। यथोक्तं 'सम्पदि-न्द्रस्तथैवोक्तः' इति। तदुपपादयति– **श्रोत्रे हीति** ॥ तज्ज्ञानिनो मौक्तं चोक्तं फलमाह– **समिति** ॥ यथोक्तं 'सम्पद्वेत्तुः सम्पदः स्युः' इति ॥ ४ ॥

यो ह वा आयतनं वेद स स्वानां स्वकीयानामायतनं गृहमाश्रयो भवति।

न केवलं स्वानामेव किन्त्वन्येषामपि जनानामायतनं भवति। किमायतनमित्यत आह– **मन इति** ।। मनोभिमानिनः शेषसुपर्णरुद्राः। यथोक्तं– 'रुद्र आयतनं तथा' इति। तत्र सुपर्णशेषरुद्रेत्येतद्भाष्यानुसारेण रुद्रशब्दोऽन्योपलक्षकः। तज्ज्ञानिनो मौक्तं चोक्तं फलमाह– **आयतनमिति** ।। यथोक्तं– 'गृहं चायतनं विदुः' इति ।। ५ ।।

योह वै प्रजापतिं वेद स प्रजया पशुभिश्च प्रजायते प्रकृष्टो जायते कः प्रजापतिरित्यत आह– **रेत इति** ।। रेतोऽभिमानी वरुणः। मौक्तं च फलमाह– **प्रजायत इति** ।। ६ ।।

प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वं चोक्तं तत्कुत इत्यतो मीमांसया समर्थितत्वादिति भावेनाख्यायिकामाह– **ते हेम इति** ।। त इमे पूर्वोक्ताः प्राणाः वायुपुरःसराः देवाः अहं श्रेयसे अहं श्रेयानित्यर्थे विवदमानाः ब्रह्मनारायणाख्यं प्रति जग्मुर्ह। तत्र गत्वा देवास्तन्नारायणाख्यं ब्रह्म प्रत्यूचुः किमिति नोऽस्माकं मध्ये को वसिष्ठः श्रेष्ठ इति। एवमुक्तं तद्ब्रह्म देवान् प्रत्युवाच किमिति वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते अस्माच्छरीरान्निर्गते सति इदं शरीरं ब्रह्मशरीरं पापीयः पापिष्ठं मन्यते लोकः स वो युष्माकं मध्ये वसिष्ठः श्रेष्ठ इति। यस्मिन्नुत्क्रान्ते सत्यन्ये स्थातुमशक्ताः स श्रेयानिति भावः ।। ७ ।।

एवमुक्ते सति तत्परीक्षणाय तेषां मध्ये वागुच्चक्राम ह। तदुत्क्रमणेऽपि शरीरं न पपातेति ग्राह्यम्। सोत्क्रान्ता वाक् संवत्सरं संवत्सरपर्यन्तं प्रोष्यान्यत्र स्थित्वा पुनर्ब्रह्मदेहस्थान् देवान् प्रत्यागत्योवाच। किमिति यूयं मदृते मां विना जीवितुं स्थातुं कथमशकतेति। एवमुक्तास्ते देवाः ऊचुर्ह यथा अकला मूकाः वाचा वागिन्द्रियेणावदन्तोऽपि प्राणेन प्राणन्तः चक्षुषा पश्यन्तः श्रोत्रेण शृण्वन्तो मनसा विद्वांसो रेतसा प्रजायमानाः प्रजामुत्पादयन्तो जीवन्ति एवमजीविष्मेति। एवमुक्ता वाक् नाहं वसिष्ठेति निश्चित्य तस्मिन् शरीरे प्रविवेश ह ।। ८ ।।

एवं चक्षुर्होच्चक्रामेत्यादि व्याख्येयम् ।। ९-१० ।।

यथा मुग्धाः षण्मासाः बालाः मनसाऽविद्वांसः। यथोक्तं– 'षण्मासात्पूर्वबालानां केवलं प्राणतो भवेत्। व्यापार्य मनसा सर्वमतः पश्चादपस्मृतिः' इति ॥११-१२॥

अथ ह यथा लोके महासुहयः महांश्चासौ सुहयश्चेति महासुहयः परिमाणतो महान् सुशोभनलक्षणोपेतो हयः सैन्धवः सिन्धुदेशभवः अश्वपरीक्षार्थं पुरुषेणारूढः कशावेत्रादिना ताडितश्च पड्वीशशङ्कून् पटनशीलाः पटवस्तेषां संहतिः पड्वी तस्याः ईशा नियामकाः पड्वीशाः पड्वीशाश्च ते शङ्कवश्चेति तथोक्तास्तान्। यद्वा पटुभूतस्य हयस्येशा नियामका बन्धका इति यावत्। पड्वीशाः ते च ते शङ्कवश्चेति तथोक्तास्तान् संवृहेत् उन्मूलयेदेवमेव प्राणो मुख्यप्राण उत्क्रमिष्यन् इमान् प्राणान् वागादीन् संबबर्ह स्वस्वस्थानाद्भ्रंशितवान् ह । एतावता किं सिद्धमित्यत आह– **ते हेति** ॥ ते इमे प्राणा ऊचुर्ह किमिति हे भगवो भगवन् अस्माच्छरीरात् मोत्क्रमीः उत्क्रमणं मा कुरु। कुतः यस्मात् वयं त्वदृते जीवितुं न वै शक्ष्यामः नैव शक्नुम इति। यद्येवं मच्छ्रेष्ठता भगवद्भिर्ज्ञाता तर्हि तस्य उ भवतां श्रेष्ठत्वेनावधृतस्य मे यूयं बलिं पूजां कुरुतेति प्राणेनोक्ता देवास्तथेति पूजां कुर्म इत्यूचुः ॥ १३ ॥

तत्प्रकारं दर्शयति– **सेति** ॥ सा पूर्वोक्ता वागुवाच हे प्राणाहं वसिष्ठास्मि वसतामुत्तमोऽस्मीति यत् त्वं तद्वसिष्ठासि वै त्वमेव मयि स्थित्वा मदीय वसिष्ठात्वनियामक इत्यर्थः। एवमुत्तरत्रापि। इति चक्षुरुवाचेति सम्बन्धः। यथोक्तं– 'ज्येष्ठः श्रेष्ठो वसिष्ठश्च सम्पदायतनं तथा। वायुरेव महान्' इति। 'सर्वेन्द्रियाणां व्यापारान् प्राण एव करोत्ययम्। इन्द्रियस्थः पृथक् चासौ शक्तोऽपि स्वयमेव तु' इति च। एवमुक्तः प्राणस्तस्य मे किमन्नं किं वास इति देवान् प्रत्युवाच। एवमुक्ता देवा ऊचुः। आश्वभ्य आकृमिभ्यः आकीटपतङ्गेभ्यश्च कृमिकीटपतङ्ग-पर्यन्तप्राणिभिर्यदिदं किञ्चान्नमद्यते तत्तेऽन्नं आपस्तैः पीयमाना वास इति। तव सर्वप्राणिस्थत्वात्तदद्यमेव तवान्नं तत्पेयमेव तव वास इत्यर्थः। नन्वेतदन्नं वासश्च प्राणस्य पूर्वमेव सिद्धं कथं देवैर्दत्तमिति चेत् सिद्धस्यैव देवैः स्वार्थं समर्पणात्। यथोक्तं– 'सिद्धमेवान्नवस्त्राद्यं विष्णोः स्वातन्त्र्यतस्तदा। स्वार्थं समर्पयेद्विष्णोर्यथा

प्राणे सुराः पुरा' इति । सर्वाद्यस्य प्राणान्नत्ववेत्तुः फलमाह– **न ह वा इति** ॥ य एवमुक्तप्रकारेण एतत्सर्वप्राणिभिरद्यमानं सर्वं अनस्य सर्वप्राणिषु स्थित्वा चेष्टकस्य मुख्यप्राणस्यान्नं वेद अस्य प्राणान्नविदः कदाचिदभक्ष्यभक्षणेऽपि अनन्नमभक्ष्यं जग्धं भक्षितं नैव भवति ह । तथा यद्यप्ययमप्रतिग्राह्यं प्रतिगृह्णाति तथाप्यनन्नमप्रतिग्राह्यं नैव परिगृहीतं भवति । प्रामादिकाभक्ष्यभक्षणाप्रतिग्राह्यप्रतिग्रहकृतदोषेण न लिप्यत इति भावः । नेदं सर्वाद्यस्य प्राणान्नविदः फलं किन्तु स्तुत्यर्थमेवोच्यते । फलं च प्राणात्मभाव एवेति वदतो मायावादिनः श्रुतहानिरश्रुतपरिग्रहश्च । यस्मादापोवासस्तत्तस्माद्विद्वांसः श्रोत्रिया अधीतच्छन्दसो ब्राह्मणाः अशिष्यन्तो भोक्ष्यमाणा भोजनात्प्राक् अप आचामन्ति । अशित्वा भुक्त्वा चाचामन्ति । केनाभिप्रायेणेत्यत आह– **एतमेवेति** ॥ एतमेवानं चेष्टकं मुख्यप्राणं तत्तेन भोजनोभयत अपां भक्षणेन अनग्नं वस्त्राच्छादितं कुर्वन्तो मन्यन्ते यस्मादेवं पूर्वे विद्वांसः कुर्वन्ति । तस्मादधुनाप्येवं विद्वानशिष्य-न्नाचामेदशित्वा चाचामेत् । एवं कुर्वतः फलं 'प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् । स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलम्' इति वचनादवगन्तव्यम् ॥ ८.१.१४ ॥

उपनिषत्—

[क्षत्रियेण ब्राह्मणं प्रत्युपदेशः]

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैबलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा३ इति स भो३ इति प्रतिशुश्रावानुशिष्टो न्वसि पित्रेत्योमिति होवाच ॥ १ ॥ वेत्थ यथेमाः प्रजाः प्रयन्त्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति नेति होवाच वेत्थ यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न सम्पूर्यता३ इति नेति होवाच वेत्थो यतिथ्यामाहुत्या हुतायामापः पुरुषवाचो भूत्वा समुत्थाय**

वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वाऽपि हि नर्षेर्वचः श्रुतं द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकश्चन वेदेति होवाच ॥ २ ॥ अथैनं वसत्योपमन्त्रयाञ्चक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥ स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्चन वेद सर्वमहं तत्तुभ्यमवोचं प्रैहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेवं गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैबलेरास तस्मा आसन-माहृत्योदकमाहरयाञ्चकाराथ हास्मा अर्घ्यं चकार तꣳ होवाच वरं भगवते गौतमाय दद्म इति ॥ ४ ॥ स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति स होवाच विज्ञायते हास्ति हिरण्यस्या-पात्तं गो अश्वानां दासीनां प्रवराणां परिधानस्य मा नो भवान् । बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेनेच्छा सा इत्युपैम्यहं भवन्तमिति वाचाहस्मैव पूर्व उपयन्ति सहोपायनकीर्त्या उवास ॥ ६ ॥ स होवाच तथा नस्त्वं

गौतममापराध्यस्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मिंश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि न्वेवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ७ ॥

[पञ्चाग्निषु जीवहोमः]

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥ ८ ॥ पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्लादुनयो विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति ॥ ९ ॥ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति ॥ १० ॥ पुरुषो वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ ११ ॥ अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा

विष्फुलिङ्गा विष्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥ १२ ॥

[ ज्ञानिनां अर्चिरादिना मोक्षः ]

ते य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद् यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद् वैद्युतं तान् वैद्युतान् पुरुषो मानव एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु परान् परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १३ ॥

[अज्ञानिनां धूमादिमार्गेण पुनरावृत्तिः]

अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद् यान् षण्मासान् दक्षिणाऽऽदित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषाँ यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद् वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ ततो जायन्ते ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ॥ १४ ॥

इति द्वितीयं ब्राह्मणम्

भाष्यम्—

> द्युपर्जन्यधरापुंस्त्रीसंस्थितं पञ्चरूपिणम्।
> नारायणं वासुदेवं तथा सङ्कर्षणं प्रभुम् ॥
> प्रद्युम्नं चानिरुद्धं च क्रमाद्ध्यायंस्तु सर्वदा।
> पञ्चाग्निविन्नाम भवेत्स याति परमं पदम्।
> नास्य संसर्गदोषोऽपि कदाचन भविष्यति ॥ इति त्रैविद्ये ॥

टिप्पणी—

पञ्चाग्निविद्यामाख्यायिकापूर्वमाह– **श्वेतकेतुर्ह वा इति ब्राह्मणेन** ॥ तत्र ते य एवमेतद्विदुरिति पञ्चाग्निस्वरूपवेत्तॄणामर्चिरादिद्वारा ब्रह्मलोकं प्राप्तानां न पुनरावृत्तिरिति पुनरावत्तिशून्यत्वमुच्यते। तदयुक्तम्। ब्रह्मज्ञानेनैव पुनरावृत्ति-शून्यलोकप्राप्तेः प्रमाणसिद्धत्वात्। पञ्चाग्निविद्यायाश्चाऽब्रह्मविद्यात्वादित्य-तस्तामपि ब्रह्मपरतया प्रमाणेन व्याचष्टे– **द्युपर्जन्येति** ॥ पञ्चाग्निविद्यावेत्तुरैहिकं च फलमाह– **नास्येति** ॥ इदानीमभावेऽपि कालान्तरे स्यादित्यत आह– **कदाचनेति** ॥ यद्यप्यस्यां श्रुतौ इदं फलं नोक्तं तथापि च्छन्दोगश्रुतौ अथ य एतानेवं पञ्चाग्नीन् वेद न सह तैरप्याचरन् पाप्मना लिप्यत इति हिरण्य-स्तेनादिपञ्चमहापातकिभिः सह चरतोऽपि तत्संसर्गदोषो नास्तीत्युक्तत्वादत्रापि तद्ग्राह्यमिति भावेनाचार्यैरुक्तम् ॥

भाष्यम्—

दृष्टादृष्टमहत्त्वम्। अनेनोपनिषदुक्तविधानेन जातः पुत्रः प्रायः स्वर्गा-पवर्गयोग्यो भवतीति प्रजापतिकर्मवचनम्।

> यथोपनिषदं जातो योग्यः स्वर्गापवर्गयोः।
> भवेद्यदि मनः पित्रोर्विष्णोर्नान्यत्र गच्छति ॥
> न कुर्याद्यदि कर्मैतन्मनः पित्रोस्तु विष्णुगम्।
> दृष्टसामर्थ्यहीनश्च मोक्षयोग्यः स्थिरं यदि ॥

**दृष्टसामर्थ्यवांश्च स्यादाज्ञाद्यैः कारणैः क्वचित् ।**
**विशेषकारणाभावे यथोक्तं नान्यथा भवेत् ।। इति च ।।**

**टिप्पणी—**

उत्तरब्राह्मणे स यः कामयते महत्प्राप्नुयामितीत्यत्र महच्छब्दो भावप्रधानः महत्त्वं च न केवलमैहिकं किन्तु आमुष्मिकं चेत्याह— **दृष्टादृष्टेति** ।। यथोक्तं— 'ज्येष्ठश्रेष्ठादिकैर्हुत्वा प्राणायात्र परत्र च। ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा ।।' इति। 'एषां भूतानां पृथिवी रसः' इति चतुर्थब्राह्मणे पुत्रप्रजातिकर्मोच्यते तत्किमर्थं वक्तव्यमित्यत आह— **अनेनेति** ।। अत्र प्रमाणमाह— **यथेति** ।। उपनिषदुक्तप्रकारमनतिक्रम्येत्यर्थः । उपनिषदुक्तकर्मानुष्ठानमात्रेण जातः पुत्रः कथमपवर्गयोग्य इत्यतस्तत्र विशेषमाह— **यदीति** ।। संयोगावसर इति शेषः । पित्रोः मातापित्रोः । ननूपनिषदुक्तप्रकारेण कर्मानुष्ठानाभावेऽपि यदा संयोगावसरे पित्रोर्मनोविष्णुगं तदा जातः पुत्रः कीदृश इत्यत आह— **न कुर्यादिति** ।। यदि पित्रोस्तु मनः स्थिरं विष्णुगमिति सम्बन्धः । स्थिरमिति क्रियाविशेषणं तदा जातः पुत्र इति शेषः। मोक्षयोग्यः भवेदित्यनुवर्तते। ननूपनिषदुक्तकर्माकरणेऽपि जातः पुत्रो दृष्टसामर्थ्यवान् क्वचिद्दृष्टोऽतः कथमेवमुच्यत इत्यत आह— **दृष्टेति** ।। आज्ञाद्यैर्महतामिति शेषः। आद्यशब्दाद्वरादिग्रहणं आज्ञादिरूपविशेषकारणाभावे । यथोक्तं— 'उपनिषदुक्तकर्मानुष्ठानाभावेऽपि जातः पुत्रो दृष्टसामर्थ्यहीन इत्युक्तं अन्यथा न भवेत्' इत्यर्थः ।।

**भाष्यम्—**

**नारायणो द्युशब्दोक्तः सर्वदा द्युतिहेतुतः ।**
**वासुदेवस्तु पर्जन्यः परं सञ्जनयेद्यतः ।।**
**सङ्कर्षणस्तु पृथिवी प्रथितत्वात्सदैव हि ।**
**प्रद्युम्नः पुरुषेत्युक्तः पूरयेत्स जगद्यतः ।।**
**स्त्रीशब्दोक्तोऽनिरुद्धः स्यात् सहितस्त्रीषु यत्सदा ।।**

अनिरुद्धो हि वेदेषु सर्वदा त्रिषु संस्थितः ।
द्युवादिषु प्रसिद्धेषु तत्सम्बन्धाद् द्युवादिकः ॥
शब्दो भवेत् .................... ।

टिप्पणी—

'द्युपर्जन्यधरा पुंस्त्रीसंस्थितम्' इति द्युपर्जन्यादिषु नारायणादिपञ्चरूपो हरिस्तिष्ठतीति स एव द्युपर्जन्यादिशब्दाभिधेय इत्युक्तम् । इदानीं द्युपर्जन्यादि-शब्दांस्तासु मूर्तिषु निर्वक्ति– **नारायण इत्यादिना** ॥ द्युतिहेतुतो ज्ञानहेतु-त्वात् । यद्यपि श्रुतावसौ वै लोक इत्येव श्रूयते नतु द्युशब्दः तथापि तस्य द्युलोकपरत्वमभ्युपेत्य द्युशब्दो व्याख्यातः । यथाश्रुतस्य व्याख्यानम्– 'असौ लोकः प्रकाशत्वात्प्राणस्थत्वाच्च केशव' इत्यन्यत्र कृतमनुसन्धेयम् । परमुत्तमं चतुर्मुखं परमस्य सकाशाज्जन्यमिति पर्जन्य इत्यर्थः । प्रथितत्वाद्देवेषु प्रसिद्धत्वात् अयं वै लोक इत्यस्य पृथिवीपरत्वमभ्युपेत्येदं व्याख्यानम् । यद्वा पृथिवी वाव गौतमाग्निरिति च्छान्दोग्येऽभिधानात्पृथिवीशब्दव्याख्यानं तस्य पृथिव्येव समिदिति पृथिवीशब्दोऽप्येवमेव व्याख्यातव्यः । नचास्यैव पृथिवीशब्दस्येदं व्याख्यानमिति युक्तम् । तस्य पृथिवीशब्दस्य नारायणपरत्वेन सङ्कर्षणपरत्वाभावात् ॥ **पूरयेदिति** ॥ पॄ पालनपूरणयोरिति धातुः । सहितःस्थितः । तथाच स्त्रीत्यत्र सकारः सहितत्वार्थक इति भावः । केषु त्रिषु स्थितोऽनिरुद्ध इत्यत आह– **अनिरुद्धो हीति** ॥ यद्यपि श्रुतौ योषा वा अग्निरिति योषाशब्दोऽस्ति तथापि तात्पर्याय स्त्रीशब्दोऽत्र निरुक्तः । यथाश्रुतस्य तु 'योषा ज्योष्यो यतोऽखिलैः' इति व्याख्यानं द्रष्टव्यम् । ननु यद्येवं द्युपर्जन्यादिशब्दाः परमात्मपरास्तर्हि प्रसिद्धद्युपर्जन्यादिषु तद्व्यवहारो न स्यात् । नच ब्रह्मवाचका अपि शब्दाः हानादिव्यवहारसिद्ध्यर्थं ज्ञानिभिरन्यत्र व्यवह्रियन्ते अन्यैस्त्वज्ञानादेवेति वाच्यम् । तथा सत्यवाचकत्वाविशेषेण घटादिशब्दानां पटादौ व्यवहारप्रसङ्गादित्यत आह– **द्युवादिष्विति** ॥ द्युपर्जन्या-द्यन्तर्गतभगवत एव द्युपर्जन्यादिशब्दमुख्याभिधेयत्वात् तत्सम्बन्धात्प्रसिद्धेषु द्युपर्जन्यादिषु द्युपर्जन्यादिशब्दवृत्तिरित्यर्थः ॥

भाष्यम्—

...........तथाग्न्यादिरदनात्परमो भवेत्।
अङ्गत्वेनार्यते यस्मादङ्गारस्तेन कीर्तितः॥
अर्च्यत्वादर्चिरुद्दिष्टो विष्वक्त्वात् विष्फुलिङ्गकः।
समेधनाच्च समिधस्तत्र तत्र स्थितो हरिः॥
तत्तच्छब्दैः सदा वाच्य इतरे तु तदन्वयात्।
आदित्यो रश्मिरित्याद्याः शब्दाश्चैवमवस्थिताः॥
एकैकस्मिन् पञ्चभेदा अर्चिरादिविभागतः।
नारायणादिभेदेन तथैव प्रतिपादिताः॥ इति प्रवृत्ते॥
धूत्काराद्धूम उद्दिष्टः शत्रूणां पुरुषोत्तमः।
अर्चिरर्च्यतमत्वाच्च स्वाङ्गोऽङ्गार उदीर्यते॥
अङ्गित्वेनाङ्गरूपेण यत एको व्यवस्थितः॥ इत्यादि त्रैविद्ये॥

टिप्पणी—

पञ्चसु स्थलेषु स्थितानामग्न्यङ्गारार्चिर्विष्फुलिङ्गसमिच्छब्दानां प्रसिद्धार्थत्व-प्रतीतिनिरासायाभिधेयमाह– **तथाऽग्न्यादिरिति**॥ यथा द्युपर्जन्यादिशब्दवाच्यः परमस्तथाग्न्यादिशब्दवाच्यश्चेत्यर्थः। कथमित्यतस्तांच्छब्दांस्तत्र निर्वक्ति– **अदनादिति**॥ सर्वस्य संहारादित्यर्थः। अग्निर्भवेदिति सम्बन्धः। अर्च्यत्वात्पूज्यत्वात् विष्वक्त्वाद्विविधस्फुरणादित्यर्थः। यथोक्तं– 'विविधं स्फुरणाच्चैव विष्फुलिङ्ग इतीरितः' इति। यद्वा विष्वक्त्वात् विष्वक्देशस्थत्वादित्यर्थः। समेधनात् सम्यग्वर्धनात् सर्वोत्तमत्वादिति यावत्। अग्न्यादिशब्दपञ्चकवाच्यभगवतः स्थलविशेषमाह– **तत्र तत्रेति**॥ यद्वा नारायणादेर्द्युपर्जन्यादिशब्दवाच्यत्वे निमित्तान्तरमाह– **तत्र तत्रेति**॥ नन्वेवं तर्हि द्युवादिशब्दानामन्यत्र व्यवहारो न स्यात्। न च द्युवादिषु प्रसिद्धेषु तत्सम्बन्धात् द्युवादिकः शब्दो भवेदित्युक्तमिति वाच्यम्। तथात्वे द्युपर्जन्यादिशब्दानां प्रसिद्धद्युपर्जन्यादिषु लक्षणेतरवृत्त्यभावापत्तेः इति चेन्न।

परमात्मसम्बन्धेनान्येषामपि वाच्यत्वाङ्गीकारादित्यत आह– **इतरे त्विति** ॥ वचनव्यत्ययेन वाच्या इत्यनुवर्तते। इदानीं आदित्य एव समित् रश्मयो धूमइत्युक्तादित्यरश्म्यहरादि-शब्दाभिधेयमाह– **आदित्य इति** ॥ अवस्थिताः हराविति शेषः। द्युपर्जन्यधरा पुंस्त्रीरूपपञ्चाग्निषु नारायणादीनि पञ्चरूपाणि तिष्ठन्तीत्युक्तं तत्र पञ्चानामप्यग्नीनां समिद्धूमार्चिरङ्गारविष्फुलिङ्गभेदेन ये पञ्चभेदा उक्तास्तेष्वपि भगवांस्तिष्ठतीत्युक्तं तन्मूर्तिविशेषमाह– **एकैकस्मिन्निति** ॥ यथा पञ्चस्वग्निषु नारायणादिभेदेन पञ्चभेदाः प्रतिपादिता इत्यर्थः। अयमत्र विवेकः। द्युस्थो द्युशब्दोक्तो नारायणः पुनर्नारायणाद्यात्मना पञ्चविधः। तत्र नारायणः समित् वासुदेवो धूमः सङ्कर्षणोऽर्चिः पद्युम्नोऽङ्गारः अनिरुद्धो विष्फुलिङ्ग इत्यादि। पूर्वं धूमशब्दस्याव्याख्याततत्वात् व्याचष्टे– **धूत्कारादिति** ॥ 'धूञ् कम्पने' इति धातोः। 'अर्च्यत्वादर्चिः' इत्युक्तम् तन्न सर्वसाधारण्येनेत्यत आह– **अर्चि-रिति** ॥ ननु अङ्गत्वेनार्यते यस्मादङ्गारस्तेन कीर्तित इत्यनुपपन्नम्। विष्णोरन्याङ्गत्वेऽन्यस्यैव प्राधान्यापत्तेरित्याशङ्कां परिहरन्नङ्गारशब्दं निर्वक्ति– **स्वाङ्ग इति** ॥ स्वयं स्वाङ्गत्वेनार्यते इत्यङ्गार उदीर्यत इत्यर्थः। ननु स्वस्याङ्गि-त्वात्कथमङ्गत्वमित्यत आह– **अङ्गित्वेनेति** ॥ प्राचीनवचनमप्येवमेव व्याख्येयम्।

**भाष्यम्——**

> **नीचादप्युत्तमा ज्ञानं शृणुयुर्लीलया क्वचित्।**
> **श्रोतृवक्तृविभेदोऽयं नाधिक्यज्ञापकस्ततः ॥**
> **यस्याधिक्यं तु वेदोक्तं पञ्चरात्रेऽथवा भवेत्।**
> **इतिहासपुराणे वा सोऽधिको नेतरः क्वचित् ॥** इति ब्रह्मतर्के ॥

**टिप्पणी——**

अत्र वंशब्राह्मणे 'अम्भृण्यादित्यात्' इति अम्भृण्याः आदित्याद्विद्याश्रवण-मुच्यते। तदयुक्तम्। तस्या रमात्मकत्वेनादित्याद् विद्याश्रवणायोगादित्यत आह– **नीचादपीति** ॥ ज्ञायते अनेनेति ज्ञानं शास्त्रमित्यर्थः। तर्हि किमाधिक्यज्ञापकमित्यत आह– **यस्येति** ॥

**भाष्यम्—**

**आदनादादित्यः। रमणाच्छामनाच्च रश्मयः। अहीनत्वादहः। चन्दनाच्चन्द्रः। अस्य क्षत्रमन्यन्नास्तीति नक्षत्रम्। बहुरूपत्वाद्बहुवचनम्। ज्ञानादायुष्द्वाच्च वायुः। अन्यैरभरणीयत्वादभ्रम्। विद्योतनाद् विद्युत्। अशनादशनिः। निह्लादनाद् ह्रादुनिः। आसमन्तात्काशनादाकाशः। सम्यग्वत्सान् रमयतीति संवत्सरः। आदेशनाद्दिशः। अवान्तरदिशमादिशतीत्यवान्तरदिशः। रतिकरत्वाद्रात्रिः। वचनाद् वाक्। प्रणयनात्प्राणः। जहाति गमयतीति जिह्वा। चष्ट इति चक्षुः। शृणोतीति श्रोत्रम्। उपस्थितत्वादुपस्थः। यापयति नयति चेति योनिः। अभिनन्दयतीत्यभिनन्दः। उपमन्त्रणमन्तःकरणं च स एव करोति।**

**टिप्पणी—**

पूर्वं आदित्यो रश्मिरित्याद्याः शब्दाश्चैवमवस्थिता इत्यादित्यशब्दाभिधेयो भगवानित्युक्तं इदानीं तांच्छब्दांस्तत्र निर्वक्ति– **आदानादिति**।। हविरादीनामिति शेषः। रमणात् रतिरूपत्वादित्यर्थः। शामनादन्येषां सुखकरणादित्यर्थः।। **अहीनत्वादिति**।। कस्यापि अपेक्षया नीचत्वाभावादित्यर्थः। चन्द्रमा अङ्गार इत्युक्तचन्द्रशब्दं निर्वक्ति– **चन्दनादिति**।। आह्लादनादित्यर्थः। नक्षत्राणि विष्फुलिङ्गा इत्युक्तनक्षत्रशब्दं व्याचष्टे– **अस्येति**।। क्षत्रं रक्षकं विष्णोरेकत्वान्नक्षत्राणीति बहुवचनं कथमित्यत आह– **बहुरूपत्वादिति**।। नक्षत्राणां बहुत्वेन तदन्तर्गतस्यापि बहुरूपत्वादित्यर्थः। अयं न्यायोऽन्यत्राप्यनुसन्धेयः– **ज्ञानादिति**।। वातेर्गत्यर्थत्वाद्गत्यर्थस्य च ज्ञानार्थत्वादित्यर्थः। आयुष्द्वादायुःप्रदत्वादित्यर्थः। यद्यप्यस्यामुपनिषदि वायुपदं न श्रूयते। तथापि 'पर्जन्यो वा गौतमाग्निस्तस्य वायुरेव समिद्' इति छान्दोग्ये 'अयं वै लोकोऽग्निर्गौतमास्य पृथिव्येव समिद्वायुर्धूमः' इति माध्यन्दिनायनशाखायां चाभिहितत्वाद्वायुशब्दो व्याख्यातः। सर्वविद्यानिर्णायकपूर्णप्रज्ञेन तस्या अपि विद्याया निर्णेयत्वात्। अभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गा इत्युक्ताभ्रादिशब्दचतुष्टयं निर्वक्ति–

**अन्यैरित्यादिना** ॥ अशनात्सर्वस्य संहारात् निर्ह्रादानान्नितरां हर्षणादित्यर्थः ॥ **आसमन्तादिति** ॥ यद्यप्यस्यां श्रुतावाकाशशब्दो न श्रूयते तथापि पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूम इति छान्दोग्ये श्रवणादाकाशशब्दो व्याख्यातः । तस्य संवत्सर एव समिदित्युक्तं संवत्सरशब्दं व्याचष्टे– **सम्यगिति** ॥ वत्सान् भक्तानित्यर्थः । दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गा इत्युक्तदिगवान्तरदिक् शब्दौ व्याचष्टे– **आदेशनादित्यादिना** ॥ प्रधानस्य परमात्मस्वरूपस्यादेशनादित्यर्थः । रात्रिरर्चिरित्युक्तरात्रिशब्दं व्याचष्टे– **रतिकरत्वादिति** ॥ प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गा इत्युक्तवाक् प्राणचक्षुःश्रोत्रशब्दान्निर्वक्ति– **वचनादिति** ॥ **जहातीति** ॥ जुहु इत्यस्यार्थो जहातीति वा इत्यस्यार्थो गमयतीति । स्वभक्तानां पापं जहाति परित्याजयति मोक्षं प्रति च गमयतीत्यर्थः । यद्यप्यस्यां श्रुतौ अयं शब्दो न श्रूयते तथापि छान्दोग्ये जिह्वाऽर्चिरिति श्रवणात्तच्छब्दो व्याख्यातः । उपस्थ एव समिदि-त्युक्तोपस्थशब्दं व्याचष्टे– **उपस्थितत्वादिति** ॥ सर्वजीवानां हृदयस्थितत्वेन समीपे स्थितत्वादि-त्यर्थः । योनिरर्चिरित्युक्तयोनिशब्दं व्याचष्टे– **यापयतीति** ॥ ग्रामादिकं यापयति सत्कर्मणि नयतीत्यर्थः । सज्जनान्मोक्षं प्रति यापयति दुर्जनांस्तमः प्रति नयतति वाऽर्थः । अभिनन्दा विष्फुलिङ्गा इत्युक्ताभिनन्दशब्दं निर्वक्ति– **अभीति** ॥ यदुपमन्त्रयते स धूम इति च्छान्दोग्योक्तस्योपमन्त्रणस्य यदन्तः करोति ते अङ्गारा इत्यत्रोक्तस्यान्तःकरणस्य च पुरुषकर्तृकत्वप्रतीतिनिरासाय तद्व्याचष्टे– **उपमन्त्रणमिति** ॥ यद्यप्यादानादादित्य इत्यादिभाष्यं नैतदुपनिषदुक्तक्रमेण नापि छान्दोग्योक्तक्रमेण तत्र प्रथमाग्नौ आदित्य एव समित् रश्मयो धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गा इत्युक्तत्वात् रात्रिशब्दस्य चात्रान्ते व्याख्यातत्वात् । नापि माध्यन्दिनशाखोक्तक्रमेण तत्र प्रथमाग्नौ तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विष्फुलिङ्गा इत्युक्तत्वेऽपि द्वितीयाग्नौ तस्य संवत्सर एव समिदित्युक्तत्वात् । अत्र च नक्षत्रशब्दव्याख्यानानन्तरं वायु-शब्दव्याख्यानात् । तथापि प्रथमाग्नौ माध्यन्दिनशाखोक्तक्रममनुसृत्यादित्यादि-

शब्दपञ्चकव्याख्यानं द्वितीयतृतीयचतुर्थपञ्चमाग्नौ तु छान्दोग्योक्तक्रममनुसृत्य वायुशब्दादिविंशतिशब्दव्याख्यानम्। तथाहि छान्दोग्ये 'द्वितीयाग्नौ तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विष्फुलिङ्गाः' इत्युक्तत्वात्। अत्रापि वाय्वादिशब्दपञ्चकस्य व्याख्यानात्। तृतीयाग्नौ यद्यपि तस्याः संवत्सर एव समिदाकाशो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विष्फुलिङ्गा इत्युक्तं तथापि संवत्सराकाशशब्दयोर्व्यत्यासमात्रेण व्याख्यानम्। अहःशब्दस्य माध्यन्दिन-शाखायां प्रथमाग्नावेव सत्वेन तत्र तदुक्तक्रममनुसरता प्रागेव व्याख्याततत्वादत्र स न व्याख्यातः। च्छान्दोग्ये प्रथमाग्नौ रात्रिरर्चिरित्युक्तत्वेनोर्वरितः स रात्रिशब्दोऽत्र व्याख्यातः। नचोर्वरितस्यान्ते व्याख्यानं स्यादिति वाच्यं काण्वमाध्यन्दिनशाखयोः तृतीयाग्नौ रात्रिरर्चिरित्युक्तत्वेनात्रैव तस्य व्याख्येयत्वात्। चतुर्थाग्नौ तस्य वागेव समित् प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विष्फुलिङ्गा इत्युक्तत्वादत्रापि वागादिशब्दपञ्चकस्य व्याख्यानात्। पञ्चमाग्नावपि तस्या उपस्थ एव समित् यदुपमन्त्रयत् स धूमो योनिरर्चिर्यदन्तःकरोति ते अङ्गारा अभिनन्दा विष्फुलिङ्गा इत्युक्तत्वात्। अत्राप्युपस्थादिशब्दपञ्चकस्य व्याख्यानादिति मन्तव्यम्। उभयशाखोक्तक्रमानुसरणं त्वस्य भाष्यस्य तदुभयशाखानिर्णायकत्वमप्यस्तीति ज्ञापनार्थम्। अत एव च्छान्दोग्यभाष्येऽप्यभिहितम्— 'आदित्यः स तथादानात् रश्मीरतिशरूपतः। तमसा हननीयत्वादहश्चन्द्रः परं सुखम्। अनन्यराजो नक्षत्रं वायुर्ज्ञानायुरूपतः। अभ्रमब्भरणाद्विष्णुर्विद्युत् विद्योतनादपि। अशनादशनिश्चैव निर्ह्रादात् ह्रादुनिस्तथा। संवत्सरो वासनाच्च स आकाशः प्रकाशनात्। रात्रिश्च रति दानात्स दिशतीति दिशः स्मृतः। अवान्तरं दिशेद्यस्मादवान्तरदिगुच्यते। वचनाद्वाक् तथा प्राणस्त्वननाच्चक्षुरुच्यते। दर्शनाच्छ्रवणाच्छ्रोत्रं जिह्वा वै होमतः स्मृतः। उपस्थितेरुपस्थः स उपमन्त्रकृदेव सः। योनिर्युनक्ति यस्मात्स सर्वान्तःकृच्च नन्दनः' इति। यद्वा, विवक्षितश्रुतिक्रममनुसृत्य प्रवृत्तमुदाहृतवचनमनुसृत्यैव प्रायस्तदुक्तक्रमेणैवादित्यादिशब्दव्याख्यानमिति द्रष्टव्यम्।

भाष्यम्—

तदधीनं यतः सर्वं सर्वशब्दैस्ततो हरिः।

मुख्याभिधेयस्त्वन्यानि तत्सङ्गादुपचारतः॥ इति ब्रह्मतर्के॥

'तदधीनत्वादर्थवत्' इति भगवद्वचनम्। 'समाकर्षात्' इति च।

टिप्पणी—

एवं द्युपर्जन्यादिशब्दप्रवत्तिनिमित्ताधिकरणत्वेन विष्णुर्द्युपर्जन्यादिशब्दाभिधेय इत्युक्तम्। इदानीं प्रसिद्धद्युपर्जन्यादिगतद्युपर्जन्यादिशब्दप्रवत्तिनिमित्तस्य भगवदधीनत्वाच्च तच्छब्दवाच्यत्वमिति भावेनाह– **तदधीनमिति**॥ यथा भृत्यगतजयस्य राजाधीनत्वेन राजा जयीत्युच्यते तथेत्यर्थः। नचान्यगत-शब्दप्रवृत्तिनिमित्तप्रेरके शब्दप्रवृत्तिरमुख्या स्यादिति वाच्यम्। राजनि विजयि-शब्दस्य बहुलप्रयोगात्। बहुलप्रयोगसिद्धस्यैव च मुख्यत्वादिति भावेन मुख्याभिधेय इत्युक्तम्। नन्वेवं सत्यन्यत्र व्यवहारो न स्यात्। तत्सम्बन्धादन्यत्र शब्दवृत्त्यङ्गीकारे लक्षणामात्राङ्गीकारापत्तेः। नचान्यत्रापि वचनवृत्तिरङ्गीक्रियत इति वाच्यम्। तथा सत्युभयोरपि मुख्यवाच्यत्वापातात्। परमात्मसम्बन्धेनान्यत्र शब्दवृत्तिरित्यपि, न, वैपरीत्यस्यापि वक्तुं शक्यत्वादित्यत आह– **अन्यानीति**॥ उप-चारतोऽभिधेयानीति सम्बन्धः। 'तदधीनं यतः सर्वम्' इत्येतदत्रापि सम्बध्यते। यतः सर्वं तदधीनमतः स्वतन्त्रपरमात्मसम्बन्धेनैवान्यानि उपचारतोऽभिधेयानि। नत्वन्यसम्बन्धेन परमात्मोपचारतोऽभिधेयो नवोभयोर्मुख्याभिधेयत्वमिति भावः। तदुक्तं– 'एवमेव हि शब्दानां प्रसिद्धिरपि लौकिकी। वाचकत्वं प्रधानस्य त्वितरस्य तदन्वयात्' इति। अन्यगतशब्दप्रवृत्तिनिमित्तस्य भगवदधीनत्वेन भगवानेवान्य-वाचकत्वेन प्रसिद्धशब्दमुख्यार्थ इत्यत्र सूत्रमुदाहरति– **तदधीनत्वादिति**॥ सर्वस्य तदधीनत्वात्तस्मिन्नेव सर्वशब्दजातमर्थवदित्यर्थः। नन्वेवं सर्वेषां शब्दानां परमात्मपरत्वे कथमन्यत्र व्यवहारः। तत्सम्बन्धादन्यत्र शब्दप्रवृत्तौ लक्षणामात्र-स्वीकारापत्तेः। नचान्यत्रापि योगरूढ्यादिवृत्त्यङ्गीकारान्न दोषः। तथा सत्युभयो-र्मुख्यवाच्यत्वापातात्। योगरूढ्योरेव मुख्यवृत्तित्वात्। नह्यक्षादिशब्दानां

रूढ्यादिनैवानेकार्थवाचिनां कचिन्मुख्यत्वं कचिन्नेत्यस्तीत्याशङ्कापरिहाराय सूत्रं पठति– **समाकर्षादिति** ॥ न परमात्मनः सर्वशब्दवाच्यत्वाङ्गीकारे अन्यत्र व्यवहारलोपप्रसङ्गः। अन्यत्र रूढ्यादेरभ्युपगमात्। तथा सत्युभयोर्मुख्यवाच्यत्वं प्राप्तमिति चेन्न। भवेदेतद् यद्यक्षादिशब्दवदुभयत्रान्योन्यनिरपेक्षा शब्दवृत्तिः स्यात्। नचैवं किन्तु स्वतः परममुख्यया वृत्त्या परमात्मैकवाचिनां शब्दानां व्यवहारसिद्ध्यर्थं ततः समाकृष्यान्यत्र रूढत्वेन सङ्केतितत्वात्। अल्पप्रवृत्तिनिमित्तानां च तदधीनत्वादिति सूत्राभिप्रायः।

### इति द्वितीयं ब्राह्मणम्

**तथा चायं ब्राह्मणस्याक्षरार्थः।** श्वेतकेतुर्नामतः अरुणस्यापत्यं आरुणिस्तस्यापत्यमारुणेयो ह पित्राऽनुशिष्टः स्वपाण्डित्यख्यापनाय पाञ्चालानां परिषदं सभामाजगाम। तत्रागत्य जिबिलस्यापत्यं जैबलिं प्रवाहणं नामतः परिचारयमाणं स्वभृत्यैः परिचर्यमाणं प्रत्याजगाम। स प्रवाहणस्तमागतं श्वेतकेतुमुदीक्ष्य गर्वेणागतोऽयमित्युत्प्रेक्ष्य तद्गर्वशान्त्यर्थं हे कुमारा३ इत्यभ्युवादाभ्युक्तवान्। कुमार३ इति प्लुतिर्भर्त्सनार्था। स श्वेतकेतुरपि क्रोधाद्भो इति प्रतिशुश्राव प्रतिश्रावितवान्। एवं प्रतिश्रावितः प्रवाहण आह त्वं पित्रानुशिष्टोऽसि नु किमिति एवमुक्तः श्वेतकेतुरोमिति होवाच ॥ १ ॥

तत्र प्रवाहणः पृच्छति– **वेत्थेत्यादिना** ॥ इमाः प्रजाः प्रयत्यो लोकान्तरं गच्छन्त्यो यथा विप्रतिपद्यन्ता३ इति येन मार्गेण विशिष्टस्थानं ब्रह्मलोकं चन्द्रलोकं वा प्राप्नुवन्ति तं मार्गं त्वं वेत्थ किमिति। विप्रतिपद्यन्ता३ इति प्लुतिर्विचारणार्था। एवं पृष्टः श्वेतकेतुर्नेति न वेद्मीति होवाच। द्वितीयं पृच्छति– **वेत्थेति** ॥ यतिथ्यां यत्सङ्ख्याकायामाहुत्यां हुतायामापः जीवसम्परिष्वक्ताः जीवलब्धदेहाकारपरिणताः पुरुष इति वाक् यासां ताः पुरुषवाचः पुरुषशब्दवाच्या भूत्वा समुत्थाय वदन्ति वदनादिव्यापारं कुर्वन्ति तामाहुतिं वेत्थ किमिति पृष्टो नेति होवाच। अत्रापः पुरुषवाचो भूत्वेति वचनबलेन मरणकाले भूतानि जीवेन सह गच्छन्तीति

प्रष्टुरभिप्रेतमित्यवगम्यते। अन्यथाऽऽप इत्यनुवादायोगात् मरण एव भूतानां निवृत्तौ भूतनिवृत्तेरेव मोक्षत्वेन प्रसिद्धमरण एव मोक्षसम्भवे तदर्थं वैराग्यादिसाधनानुष्ठान-विधानायोगाच्च । तर्ह्यत्राप इति विशेषोक्तेः कथं सर्वाणि भूतानि जीवेन सह गच्छन्तीत्यवगन्तुं शक्यमिति चेन्न । अपां क्षितिसलिलानलात्मकत्वेन तद्ग्रहणेऽन्यभूतानामपि प्राप्तेः। नन्वपाम्भूतत्रयात्मकत्वे कथं तर्हि तत्राप्शब्द इति चेन्न। मिश्रत्वेऽपि तत्तद्भूतस्याधिक्येन तत्तद्व्यवहारोपपत्तेः। तदुक्तं 'त्र्यात्मकत्वात्तु भूयस्त्वात्' (ब्र.सू.३.१.२.) इति। ननु यदि मरणकाले भूतानि जीवेन सह गच्छन्ति तर्हि तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीत्युत्तरत्रोत्क्रान्तस्य श्रद्धयेष्टवतः श्रद्धासहितस्यैव हवाख्यप्रथमाग्नौ होमश्रवणं न स्यात्। भूतानामपि सह गतौ तथोक्तिप्रसङ्गादितिं चेन्न । तत्र श्रद्धाशब्दस्याऽजहल्लक्षणया श्रद्धयाऽद्भिश्च विशिष्टस्य जीवस्य प्रतिपादकत्वात्। यथोक्तं सूत्रकृता- 'प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः' (ब्र.सू. ३.१.५) इति। पञ्चमं पृच्छति— **वेत्थेति**।। देवयानस्य वा पथः पितृयाणस्य वा पथः प्रतिपदं वेत्थ उ वेत्थ किं किं तत्प्रतिपदमित्यत आह– **यदिति**।। यत्कर्म कृत्वा देवयानं वा पन्थानं पितृयाणं वा पन्थानं प्रतिपद्यन्ते तत्प्रतिपदं साधनं वेत्थ किमित्यर्थः । ननु देवयानपितृयाणरूपमार्गद्वयमेव नास्ति । तत्सद्भावे प्रमाणाभावात् । अतः कथमयं प्रश्न इत्यत आह– **अपि हीति** ।। हि यस्मात् नः अस्माभिर्मार्गद्वयप्रकाशकं ऋषेर्वचोऽपि श्रुतं अतो मार्गद्वयमस्तीत्यर्थः । तद्वचनमुदाहरति– **द्वे इति** ।। मर्त्यानां मरणशीलानां द्वे एव सृती मार्गौ अहमशृणवम् । के ते देवानां च पितॄणां च सम्बन्धिन्यौ देवयानपितृयाणलक्षणे इति यावत्। यदि मर्त्यानां द्वे एव सृती तर्हि तमःप्रभृत्यधोगतिः केषाञ्चिन्न स्यादित्यत आह– **ताभ्यामिति** ।। एजत्प्रत्यवायाद्बिभ्यत् वेदोक्तप्रवृत्तनिवृत्तकर्मादिसाधनसम्पूर्तिमदिति यावत्। इदं विश्वं जीवजातं ताभ्यां सृतिभ्यां ब्रह्म स्वर्गं च समेति एजदिति वैदिकानुष्ठानवत उक्तेर्नाधोगतिविरोधः तन्मार्गद्वयं क्वास्तीत्यत उक्तम्– **यदिति** ।। 'द्यौर्नः पिता पृथिवी माता' इति श्रुतेः पितरं मातरं चान्तरा द्यावापृथिव्योः मध्ये यत् यः प्रदेशस्तत्र वर्तत इति ।

यद्वा द्यावापृथिव्योर्मध्ये वर्तमानं यदेजदिदं विश्वं जीवजातमिति सम्बन्धः । इतिशब्दो मन्त्रसमाप्तिद्योतकः । एवमुक्तः श्वेतकेतुरहमेतेषु त्वत्कृतप्रश्नेषु एकं च नैकमपि न वेदेति होवाच ॥ २ ॥

अथ स्वकृतप्रश्नोत्तरदानासामर्थ्यनिर्णयानन्तरं एनं श्वेतकेतुं वसत्या वसतिप्रयोजनेन स्वसमीपवासायेति यावत् । उपमन्त्रयांचक्रे आज्ञां दत्तवान् । स कुमारः श्वेतकेतुः वसतिमनादृत्य प्रदुद्राव गतवान् । अथवा एतद्गर्वशान्त्यनन्तरम् । एनं वसत्या उपमन्त्रयाञ्चक्रे इह वसतु भवान् अर्घ्यपाद्यादिकं गृहाणेत्युपमन्त्रणं कृतवान् स कुमारस्तां वसतिमनादृत्य गतवानिति । स कुमारः स्वपितरं प्रत्याजगाम आगत्य तं पितरं प्रत्युवाच हे पितस्त्वं इति वाव किलैवंप्रकारेण वै पुरा पूर्वं नः अस्माननुशिष्टानवोच इति सम्यक् विद्यामनुक्त्वैवानुशिष्टानवोच इति भावः । एवं साक्षेपं पुत्रवचः श्रुत्वा पिताऽऽह– **कथमिति** ॥ हे सुमेधः कथं त्वां नानुशिष्टोऽसीति । तत्कारणं पुत्र आह– **पञ्चेति** ॥ राजन्यबन्धुः क्षत्रियाभासः । राजन्या राजपुत्रा एव बन्धवो यस्यासौ राजन्यबन्धू राजश्रेष्ठो वा मा मां पञ्चप्रश्नान् प्रष्टव्यार्थानप्राक्षीत् ततस्तेषु प्रश्नेषु एकं च नैकमप्यहं न वेदेति । एवमुक्तः पिता ते प्रश्नाः कतमा इत्याह । पुत्र इमे ते प्रश्नाः इति प्रतीकानि प्रश्नवाक्य-प्रतीकान्युदाजहारोदाहृतवान् ॥ ३ ॥

एवं प्रश्नवाक्यानि श्रुत्वा स पिता पुत्रक्रोधमुपशमयन्नुवाच । हे तात वत्स यथा येन प्रकारेण यत्किञ्चन यत्किञ्चिद्विद्याजातमहं वेद तत्सर्वं तथा तेन प्रकारेणाहं तुभ्यमवोचमित्येवं त्वं नोऽस्मान् जानीथा इति । त्वत्तः कोऽन्यो मम प्रियतरोऽस्ति यदर्थमहं रक्षिष्ये राजपृष्टां विद्यां अहं न जानामीति भावः । तामपि विद्यां चेदवाप्तुमिच्छसि तर्हि प्रेहि आगच्छ तत्र राजसमीपं प्रतीत्य गत्वा तु आवां विद्यार्थं ब्रह्मचर्यं वत्स्याव इति पित्रोक्ते पुत्र आह– भवानेव गच्छत्विति । इत्युक्तः स गौतमो गौतमगोत्रोत्पन्नः तत्राजगाम अनुरूपमासनमाहृत्य । अर्घ्यपाद्यादिसिद्धये उदकं भृत्यैः आहरयाञ्चकार । अथ उदकहरणानन्तरं अस्मै गौतमाय अर्घ्यं

तदुपलक्षितां पूजां चकार । पूजां कृत्वा गौतमं प्रति गौतमाय भवते वरं दद्म इत्युवाच ह ॥ ४ ॥

एवमुक्तः स गौतम उवाच । हे राजन् वरं दद्म इति त्वया प्रतिज्ञातो वरो मे एषः कः कुमारस्य मत्पुत्रस्य अन्ते समीपे यां वाचं प्रश्नरूपां अभाषथास्तां मे ब्रूहीति ॥ ५ ॥

एवं प्रार्थितः स राजोवाच हे गौतम तत् त्वया प्रार्थितं दैवेषु वरेषु वै अतस्तस्य रहस्यत्वात्तन्न प्रार्थनीयं किन्तु मानुषाणां हिरण्यादीनां मध्ये किमपेक्षितं ब्रूहीति ।

एवमुक्तः स गौतम उवाच । मम हिरण्यस्य बहुतरस्यापात्तं प्राप्तिरस्तीति त्वया विज्ञायते न केवलं हिरण्यमात्रस्य किन्तु गोअश्वानां दासीनां गवामश्वानां दासीनां प्रवाराणां परिवाराणां दासानामिति यावत् । परिधानस्य परिधानयोग्यस्य क्षौमादेरप्यपात्तं प्राप्तिरस्तीति त्वया विज्ञायते ह । अतो न मानुषो वरो मया प्रार्थ्यते किन्तु दैव एव । स च त्वया देय एवेति भावेनाह– **मानो भवानिति** ॥ नोऽस्माकं भवान् बहोः प्रभूतस्यानन्तस्यानन्तफलहेतुभूतस्यापर्यन्तस्य अपरिसमाप्तिकस्य पुत्रपौत्रादिगामिकस्य दैववित्तस्याभ्यावदान्योऽदाता मा भूदिति अवश्यं दैवं वित्तं त्वया देयमेवेति भावः । बहोर्बहुगुणस्यानन्तस्य नाशरहितस्य । अपर्यन्तस्येयत्तारहितस्य भगवतस्तद्विद्याया अभ्यवदान्यो मा भूदिति वार्थः । एवं प्रार्थितवरं प्रति स राजा हे गौतम तीर्थेनोपसदनशास्त्रेण तदुक्तप्रकारेण । विद्यामिच्छसि इच्छस्वेत्याह । अन्यथाऽदेयत्वात् । एवं राज्ञा स्मारितशास्त्रार्थो गौतम आह । अहं भवन्तमुपैमि शिष्यत्वेनोपगच्छामीति । नन्वेवं क्षत्रिये ब्राह्मणेन शिष्यवृत्तिकरणे शास्त्रविरोधः स्यादित्यतः श्रुतिः स्वयमाह– **वाचेति** ॥ पूर्वे हि किल ब्राह्मणाः क्षत्रियान् विद्यामर्थयमानाः सन्तः क्षत्रियान् शिष्यवृत्त्या वाचैवोपयन्ति उपगच्छन्ति । नोपायनशुश्रूषणादिभिः । अतः स गौतम उपायनकीर्त्योपायन-कथनमात्रेणोवास ॥ ६ ॥

स राजा तं ब्राह्मणं पुत्रतिरस्कारेण क्रुद्धं क्षमापयन्नुवाच । हे गौतम यथा तव पितामहाः अस्मत्पितामहेषु अपराधं क्षमन्ते तथा त्वं नोऽस्मान् मापराध्या-

स्त्वत्पुत्रतिरस्कृत इत्यपराधिनो न कुरु । तमपराधं क्षमस्वेति भावः । यद्वा त्वं नः अस्मान् मापराध्यः अपराधिनो न कुरु तथा तव पितामहाश्च नो मापराध्यः अपराधिनो न कुर्वन्तु । त्वत्पुत्रतिरस्कारेण ममापराधं त्वं त्वत्पितामहाश्च सर्वे क्षमन्तामित्यर्थः । नन्वयमपराधः कुतः क्षन्तव्य इत्यतो मया अपूर्वविद्याप्रदानादिति भावेन वक्ष्यमाणविद्यां स्तौति– **यथेति** ।। इयं वक्ष्यमाणविद्येतः पूर्वं कस्मिंश्चन ब्राह्मणे यथा यथावन्नोवास क्षत्रियाणामेवासाधारणविद्येति भावः । तां तु तादृशीमपि अहं तुभ्यं वक्ष्यामि यतोऽतोऽस्मदपराधः क्षन्तव्यः । किमेवमपूर्वविद्यां दत्वाऽपराधक्षमापनेन अपूर्वत्वाद्विद्यैव नोच्यत इति कुतो नोच्यत इत्यत आह– **को हीति** ।। एवं ब्रुवन्तमहं तव शिष्योऽस्मीति ब्रुवन्तं प्रत्याख्यातुं विद्यां न दास्यामीति निषेद्धुं कोऽर्हतीत्युवाचेति सम्बन्धः ।। ७ ।।

इतरप्रश्नोत्तराणां चतुर्थप्रश्नोत्तरसापेक्षत्वात् चतुर्थप्रश्नोत्तरं वदन् पञ्चाग्निविद्यामाह– **असावित्यादिना** ।। हे गौतम असौ मुख्यप्राणस्थितः लोकः प्रकाशरूपो द्युलोकस्थितो नारायणः अग्निरदनादग्निनामकः । नन्वस्याग्नित्वे तस्य समिदादिकं वक्तव्यमित्यत आह– **तस्येति** ।। अयं नारायणः पुनर्नारायणाद्यात्मकत्वेन पञ्चरूपः तस्य द्युलोकस्थितनारायणाग्नेः समित् समित्स्थानीयः समेधनात्समिच्छब्दवाच्यः समित्स्थः नारायणः । आदित्य एव आदानादादित्यनामकस्तदन्तर्गत एव धूमो धूमस्थानीयो धूत्काराद्धूमनामको धूमस्थवासुदेवः । रश्मयः रमणाच्छासनाच्च रश्मिनामकः रश्मिस्थः बहुरूपत्वाद् बहुवचनम् अर्चिरर्चिःस्थानीयः अर्च्यत्वादर्चिनामकोऽर्चिःस्थः सङ्कर्षणः । अहः अहीनत्वादहर्नामकोऽहःस्थश्च । अङ्गाराः अङ्गारस्थानीयाः स्वाङ्गत्वेनार्यते इत्यङ्गारनामका अङ्गारस्थाः प्रद्युम्नरूपविशेषाः । दिश आदेशनात् दिङ्नामकाः दिक्स्थाश्च विष्फुलिङ्गाः विष्फुलिङ्गस्थानीयाः विविधस्फुरणाद्विष्फुलिङ्गनामकाः विष्फुलिङ्गस्था अनिरुद्धरूपविशेषाः । अवान्तरमादिशन्तीत्यवान्तरदिशस्तत्स्थाश्च तस्मिन्नेतस्मिन् द्युस्थे नारायणाख्येऽग्नौ देवाः श्रद्धां श्रद्धयेष्टवन्तं अद्भिश्च विशिष्टमुत्क्रान्तं जीवं जुह्वति

एवं द्युलोकनिक्षिप्तो जीवः तस्या आहुत्या इति चतुर्थी पञ्चम्यर्थे । तस्या आहुतेः सोमो राजा सम्भवति सोमान्तर्गतो भवतीत्यर्थः ॥ ८ ॥

हे गौतम पर्जन्यः परमस्य सकाशाज्जन्य इति पर्जन्यनामको मेघचक्रस्थो वासुदेवोऽग्निर्वै । वासुदेवोऽपि नारायणाद्यात्मना पञ्चरूपः । तस्य पर्जन्यस्थ-वासुदेवाख्याग्नेः समित्तदन्तर्गतो नारायणः संवत्सर एव सम्यग्वत्सान् रमयतीति संवत्सरनामकः संवत्सरस्थ एव धूमस्तत्स्थो वासुदेवः । अभ्राण्यन्यै-रभरणीयत्वादभ्रनामकान्यभ्रस्थानि च अर्चिरर्चिस्थः सङ्कर्षणो विद्युत् विद्योतनाद्विद्युन्नामको विद्युत्स्थश्च । अङ्गारास्तत्स्थः प्रद्युम्नोऽशनिरशनादशनि-नामकस्तत्स्थश्च । विष्फुलिङ्गाः तत्स्थानिरुद्धरूपविशेषाः ह्रादुनयः निर्ह्रादनात् ह्रादुनिनामकाः गर्जनस्थाश्च तस्मिन्नेतस्मिन् पर्जन्याख्याग्नौ सोमं राजानं सोमराजान्तर्गतं जीवं जुह्वति एवं पर्जन्याग्नौ हुतो जीवस्तस्या आहुतेर्वृष्टिः सम्भवति वृष्ट्यन्तर्गतो भवतीत्यर्थः ॥ ९ ॥

अयं वै लोकः पृथिवीलोकस्थः पृथिवीनामकः सङ्कर्षणोऽग्निर्वै सोऽपि नारायणाद्यात्मना पञ्चरूपः । तस्य पृथिवीलोकस्थसङ्कर्षणाख्याग्नेः समित्तत्स्थो नारायणः पृथिव्येव प्रथितत्वात्पृथिवीनामकः पृथिवीस्थ एव । धूमस्थो वासुदेवोऽग्निरदनादग्निनामकोऽग्निश्च । अर्चिस्थः सङ्कर्षणो रात्रीरतिकरत्वाद्रात्रि-नामकस्तत्स्थश्च । अङ्गारस्थः प्रद्युम्नश्चन्द्रमाश्चन्दनाच्चन्द्रमानामकस्तत्स्थश्च । विष्फुलिङ्गस्थानिरुद्धरूपविशेषाः नक्षत्राणि अस्य क्षत्रमन्यन्नास्तीति नक्षत्रनामकास्तत्स्थाश्च । तस्मिन्नेतस्मिँल्लोकाग्नौ देवा वृष्टिं तदन्तर्गतं जीवं जुह्वति एवं लोकाग्नौ हुतो जीवस्तस्या आहुतेरन्नं सम्भवति अन्नान्तर्गतो भवति ॥ १० ॥

पुरुषो जगत्पूरणात्पुरुषनामा पुरुषस्थः प्रद्युम्नोऽग्निर्वै सोऽपि पूर्ववत्पञ्चविधः । तस्याग्नेः समित्स्थो नारायणो व्यात्तमेव व्यात्तनामकः आस्योत्पाटनगः । धूमस्थः वासुदेवः प्राणः प्रणयनात्प्राणनामकः तत्स्थश्च । अर्चिस्थः सङ्कर्षणो वाग्वचनात् वाङ्नामा तत्स्थश्च । अङ्गारस्थः प्रद्युम्नः चक्षुश्चष्ट इति चक्षुर्नामकस्तत्स्थश्च ।

विष्फुलिङ्गस्थोऽनिरुद्धः श्रोत्रं श्रवणाच्छ्रोत्रनामकस्तत्स्थश्च । तस्मिन्नेतस्मिन्नग्नौ देवा अन्नमन्नान्तर्गतं जीवं जुह्वति एवं पुरुषाग्नौ हुतो जीवस्तस्या आहुते रेतःपुरुषरेतोऽन्तर्गतः सम्भवति ।

योषा अखिलैर्जोष्यत्वाद्योषानामकः स्त्रीस्थोऽनिरुद्धोऽग्निर्वै । सोऽप्युक्तरीत्या पञ्चविधः । तस्याग्नेः समित् तदन्तःस्थो नारायणः उपस्थ एवोपस्थिततत्वा-दुपस्थनामकस्तदन्तर्गतश्च । धूमस्थो वासुदेवो लोमानि लोपकत्वाल्लोमनामको लोमस्थश्च । अर्चिस्थः सङ्कर्षणो योनिर्यापयति नयति चेतियोनिनामकस्तदन्तःस्थश्च । अङ्गारस्थाः प्रद्युम्नरूपविशेषाः । यदन्तःकरोति ते विष्फुलिङ्गस्थानिरुद्धरूपविशेषाः । अभिनन्दा अभिनन्दयतीत्यभिनन्दनामकाः । स्त्रीपुंसयोगजाभिनन्दस्थाश्च तस्मिन्नेतस्मिन्नग्नौ देवा रेतःपुरुषरेतोऽन्तर्गतं जीवं जुह्वति । एवं योषाग्नौ हुतो जीवस्तस्या आहुतेः पुरुषः सम्भवति स्वसहगता वादिभूतारब्धदेहवान् भवतीत्यर्थः । अनेन यतिथ्यामाहुत्यामिति चतुर्थप्रश्नस्य पञ्चम्यामाहुत्यां हुतायामापः पुरुषवचसो भवन्तीत्युत्तरमुक्तम् । एवमुत्पन्नस्य व्यापारमाह– **स इति** ।। स एवं देहविशिष्टो जीवो जीवति कियन्तं कालमित्यत आह– **यावज्जीवतीति** ।। यावत्कालपर्यन्तं जीवति जीवनहेतुभूतं कर्म तिष्ठतीत्यर्थः ।। ११ ।।

अथ जीवनहेतुभूतकर्मसमाप्त्यनन्तरमयं पुरुषो यदा म्रियते । अथ तदैनं पुरुष-मग्नये हरन्ति । तदेव विशदयति– **तस्याग्निरेवेति** ।। प्रसिद्धाग्निस्थो भगवानि-त्यर्थः । पुरुषो भास्वरवर्णः सम्भवति निषेकादिभिरन्तेष्ठ्यन्तैः कर्मभिः संस्कृतत्वात् ।। १२ ।।

अथ प्रथमपञ्चमप्रश्नोत्तरमाह– **ते य एवमिति** ।। य एवमुक्तप्रकारेणैतत्पञ्चाग्निस्थं भगवत्स्वरूपं विदुस्ते ये चामी अरण्ये मनोहरप्रदेशे श्रद्धां श्रद्धापूर्वकं सत्यं सद्गुणं भगवन्तमुपासते ते च विशिष्टोत्क्रान्त्येमं देहं परित्याज्यार्चिरभिसम्भवति अर्चिर्लोकं प्राप्नुवन्ति । अर्चिषो वायुलोकं गत्वाहर्नामकं देवतालोकं प्राप्नुवन्ति । अह्न

आपूर्यमाणपक्षं शुक्लपक्षाभिमानिदेवतालोकं प्राप्नुवन्ति। आपूर्यमाणपक्षात् यान् षण्मासान् आदित्य उदङ्ङुत्तरतः एति। तान् षण्मासान् उत्तरायणसंज्ञकान् तदभिमानिदेवतालोकं प्राप्नुवन्ति। मासेभ्यः संवत्सरतट्विरुणप्राप्तिद्वारा देवलोकं प्रजापतिलोकं प्राप्नुवन्ति। देवानां संवत्सरतट्विरुणप्रजापतीनां लोकमिति वार्थः। देवलोकादादित्यं सूर्यलोकं प्राप्नुवन्ति। आदित्यात्सोमवैश्वानरेन्द्रध्रुवद्वारा वैद्युतं विद्युन्नामकभारत्यधिष्ठितलोकं प्राप्नुवन्ति। मानवः 'मनु अवबोधने' इति धातोर्मनुर्ज्ञानरूपः परमात्मा तदतिप्रेमास्पदत्वेन तत्सम्बन्धी मानवः पुरुषो वायुस्तान् वैद्युतान् विद्युल्लोकप्राप्तान् जीवानेत्य ब्रह्मलोकान् चतुर्मुखलोकान् विष्णुलोकान् वा प्रतिगमयति। अत्र वायोरन्यस्यापि ब्रह्मलोकगमकत्वशङ्कापरिहाराय मानव इत्युक्तम्। नहि लोके राजानं यः कश्चित्प्रापयति क्लृप्तमतिप्रियं चाऽपहायेति भावः। तथाच श्रुतिः 'वायुरेव ब्रह्म गमयति तस्य ह्येषा शक्तिः न ह्यन्यो ब्रह्म गमयति प्रियो ह्येनद्गमयति नह्यन्यः प्रियो ब्रह्मणः' इति। ते ब्रह्मलोकं गताः परा उत्तमास्तेषु ब्रह्मलोकेषु परावतः परं ब्रह्मायुः तद्वन्तः तावत्सङ्ख्याकान् संवत्सरान् वसन्ति। तेषां तल्लोकगतानां न पुनरावृत्तिः ॥ १३ ॥

एवं देवयानमार्गं ससाधनमुक्त्वा पितृयाणमार्गं ससाधनमाह– **अथेति** ॥ अथ ये यज्ञेन ज्योतिष्टोमादिना। दानेन सत्पात्रे द्रव्यत्यागेन। तपसा कृच्छ्र-चान्द्रायणादिना। कामनया कृतेन लोकान् चन्द्रलोकान् जयन्ति प्राप्नुवन्ति। तत्कथमित्यत आह – **ते धूममिति** ॥ ते प्रथमं धूमं धूमाभिमानिदेवतालोकं अभिसम्भवन्ति प्राप्नुवन्ति धूमाद्रात्रिं रात्र्यभिमानिदेवतालोकं अभिसम्भवन्तीति प्रत्येकं सम्बन्धः। रात्रेरपक्षीयमाणपक्षं कृष्णपक्षाभिमानिदेवतालोकं प्राप्नुवन्ति। अपक्षीयमाणपक्षात् यान् षण्मासानादित्यो दक्षिणा दक्षिणत एति तान् षण्मासान् दक्षिणायनसंज्ञकान् तदभिमानिदेवतालोकं प्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं प्राप्नुवन्ति। ते चन्द्रं प्राप्यान्नं भवन्ति देवानां भोग्या भवन्तीत्यर्थः। तद्विशदयति– **तांस्तत्रेति** ॥ देवास्तांश्चन्द्रलोकं प्राप्तान् भोग्यान् कर्मिणः पुरुषान् तत्र चन्द्रलोके भक्षयन्ति तैः सेवां कारयन्तीत्यर्थः। तत्र दृष्टान्तमाह– **यथेति** ॥

यथा यज्ञे ऋत्विजः सोमं राजानं तदभिमन्यमानलताविशेषमाप्यायस्व आप्यायनं कुर्विति पुनरपक्षीयस्व अपक्षयं कुर्विति कश्चित्प्रत्युक्त्वा तदानीय भक्षयन्ति एवमेनान् कर्मिणः तत्र देवलोके त्वं स्वात्मानमाप्यायस्वानेन कर्मफलेन आत्मन आप्यायनं कुरु । अपक्षीयस्व तादृशकर्मफलेनात्मनोऽपक्षयं कुर्वित्यर्थः । एवं ते य एव मे तद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते अथ ये यज्ञेन दानेनेत्यादिना देवयानपितृयाणमार्गसाधनोक्त्या पञ्चमप्रश्नस्य तेऽर्चिरभिसम्भवन्ति ते धूममित्यादिना प्रथमप्रश्नस्य चोत्तरमुक्त्वा इदानीं तल्लोकप्राप्तिप्रकारदर्शनेन द्वितीयप्रश्नोत्तरमाह– **तेषामिति** ।। तेषां चन्द्रलोकप्राप्तानां कर्मिणां तत् कर्मार्जितमदृष्टं यदा पर्यवैति गच्छति । अथ तदा ते इममेवाकाशमाकाशलोकमभिनिष्पद्यन्ते । आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीमभिनिष्पद्यन्त इति प्रत्येकं सम्बन्धः । ते पृथिवीं प्राप्यान्नमन्नगता भवन्ति । पुनः पुरुषाग्नौ हूयन्ते । ततो योषाग्नेः जायन्ते ते कर्म कृत्वा लोकान् पुनरावृत्तिलोकान् प्रत्युत्थायिनो गमनशीला भवन्ति । ते लोकं प्रति गताः एवमेव पूर्वोक्तप्रकारेणैवाऽनु स्वकर्मार्जितादृष्टसमाप्त्यनन्तरं परिवर्तन्ते पुनरागच्छन्ति । ते एवमेवानुपरिवर्तन्ते परिभ्रमन्तीत्यर्थः । तृतीयप्रश्नोत्तरमाह– **अथेति** ।। अथ ये एतौ पन्थानौ विद्याकर्ममार्गौ न विदुस्ते कीटाः पतङ्गा भवन्ति यदिदं दन्दशूकं दशनशीलं सर्पादिकं तच्च भवन्तीत्यर्थः । यथोक्तं 'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ । तद्वर्जितास्त्रिधा यान्ति तिर्यग्वा नरकं तमः' इति । सर्वेषां परलोकगमनाभावादसौ लोको न सम्पूर्यत इति भावः ।। १४ ।।

।। इति द्वितीयब्राह्मणम् ।।

उपनिषत्——

[ साधनमार्गे विघ्ननिवारणोपायः होमः ]

**स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहं उपसद् व्रती भूत्वौदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमूह्य परिलिप्याग्नि-मुपसमाधाय परिस्तीर्यावृताज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण**

मन्थꣳसन्नीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामांस्तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्चीनि पद्यतेऽहं विधरणी इति ता त्वा घृतस्य धारया यजेꣳसराधनीं महꣳ स्वाहा ॥ १ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहा आयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवःस्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रव-मवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ

हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥ अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकशफमसि हिंकृतमसि हिंक्रियमाणमस्युद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि विभुरसि प्रभुरस्यन्नमसि ज्योतिरसि निधनमसि संसर्गोऽसीति ॥ ४ ॥ अथैनमुद्यच्छत्यामꣳ स्यामꣳ हि ते महि स हि राजेशानोऽधिपतिः स माꣳ राजेशानोऽधिपतिं करोत्विति ॥ ५ ॥ अथैनमाचामति तत्सवितुर्वरेण्यं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीर्भूः स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतोषसो मधुमत्पार्थिवꣳ रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा धियो योनः प्रचोदयात् मधुमान्नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदं सर्वं भूयासं भूर्भुवःस्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशन्ति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमसि अहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वंशं जपति ॥ ६ ॥

[होमविधेः आचार्यपरम्परा]

तं हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो

याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥ एतमु हैव चूलो भागवित्तिर्जानकाय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥ एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एनं शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वाऽनन्तेवासिने वा ब्रूयात् ॥ १२ ॥ चतुरौदुम्बरो भवन्त्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्यावुपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥

इति तृतीयं ब्राह्मणम्

**टिप्पणी—**

योऽधिकारी दृष्टादृष्टमहत्त्वमिच्छेत्तस्य कर्तव्यविशेषमाह— **स य इत्यादिना ब्राह्मणेन** ॥ योऽधिकारी अहं महत् महत्त्वं दृष्टादृष्टमहत्त्वं प्राप्नुयामिति कामयेत् स उदगयने उत्तरायणे आपूर्यमाणपक्षस्य शुक्लपक्षस्य पुण्याहे पुण्यदिवसे पुंसा नक्षत्रेण हस्तस्वात्यादिपुंनक्षत्रेण जुहोति जुहुयादित्यन्वयः । तत्रेतिकर्तव्यता-

विशेषमाह– **द्वादशाहमिति** ।। होमदिवसात्प्राक् द्वादशाहं द्वादशदिवसपर्यन्त-मुपसद्व्रती भूत्वा पयोमात्रादिभक्षणेनोपवासलक्षणव्रतवान् भूत्वौदुम्बरे उदुम्बरवृक्षमये चमसे चमसपात्रे । कंसे कांस्यपात्रे वा सर्वौषधं सर्वासामोषधीनां वक्ष्यमाण-व्रीह्यादिधान्यानां समुदायं फलानि अनिषिद्धानि क्रमुककदलीप्रभृतीनि फलानीत्येवमादिसम्भरणीयं सम्भृत्य सङ्गृह्य परिसमूह्य भूशुद्धिं कृत्वा परिलिप्य कुण्डमुपलिप्य तत्राग्निमुपसमाधाय स्थापयित्वा परिस्तीर्य स्वशाखोक्तिप्रकारेण दर्भैरास्तीर्य आवृताज्यं होमाज्यं विलापनादिना संस्कृत्य मन्थं सर्वौषधीनां पिष्टं सन्नीय समीपमानीय संस्कृताज्येन जुहोति । होममन्त्रान् पठंस्तावद्देवताप्रार्थनारूपं मन्त्रद्वयं पठति– **यावन्त इत्यादिना** ।। जातं सर्वं वेत्तीति जातवेदाः तस्य सम्बुद्धिर्हे जातवेदः । सर्वज्ञाग्न्यन्तर्गत भगवन् त्वयि स्थिता यावन्तो देवास्तिर्यञ्चो वक्रगतयः सन्तः पुरुषस्य मम कामान् घ्नन्ति । तेभ्यो देवेभ्यः भागधेयमाज्यभागमहं जुहोमि ते गृहीताज्यभागा देवास्तृप्तास्सन्तो मा मां सर्वैः कामैस्तर्पयन्तु स्वाहेति प्रथमाहुतिमन्त्रः । अहं विधरणीविघ्नकर्त्रीति या देवता तिरश्ची वक्रगतिर्निपद्यते ज्ञायते तां संराधनीं समस्तपुरुषार्थसाधिकां त्वा त्वाम् अहं घृतस्य धारया यजे स्वाहेति द्वितीयहोममन्त्रः । प्रथमाहुतिद्वयमाज्यमात्रेण घृतस्य धारयेति श्रवणात् । तथाचेयं योजना- संराधनीमहं स्वाहेति मन्त्रेणाग्नावाज्यं हुत्वा मन्थे सर्वौषधीनां पिष्टे संस्रवं स्रुवसंस्पृष्टमाज्यमवनयति सिञ्चेत् । एवमाज्यसंस्कृतं पिष्टं ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहा तस्यैव विवरणं प्राणाय स्वाहेति मन्त्रेणाग्नौ जुहुयात् । एवमग्नौ हुत्वा पुनर्मन्थे संस्रवमवनयति । तदाज्यसंस्कृतं पिष्टं वसिष्ठायै स्वाहा । तस्यैव विवरणं वाचे स्वाहेति जुहुयादित्यादि द्रष्टव्यम् । एतेनाग्नौ हुत्वा मन्थे संस्रवमवनयतीत्यन्ते उक्तस्याधिक्यं नेति न तस्योपसंहारपरत्वं कल्पनीयम् । यद्वा ज्येष्ठाय स्वाहेति मन्त्रेणाग्नावाज्यसंस्कृतमन्थं हुत्वा पुनर्होम्ये मन्थे संस्रव-मवनयतीत्यादि यथाश्रुतमेव । नचान्ते उक्तस्याधिक्यम् । होमशेषस्य मन्थस्योत्तरत्रोपयोगकथनेन तत्संस्कारार्थमन्तेऽपि मन्थे संस्रवणं कर्तव्यमिति भावेन तथोक्तत्वात् । एवं हुते दृष्टादृष्टममहत्वं लभ्यते उक्तं च– 'ज्येष्ठश्रेष्ठादिकैर्हुत्वा

प्राणायात्र परत्र च । ज्येष्ठः श्रेष्ठः समानेभ्यो भवेन्नात्र विचारणा' इति ॥ १-३ ॥

अथ होमानन्तरमेनं होमावशिष्टपिष्टं अभिमृशति अभिमर्शनं कुर्यात् । तन्मन्त्रमाह – **भ्रमदसीत्यादिना** ॥ अत्र मन्थस्थो विष्णुः स्तूयते । हे मन्थस्थ ब्रह्मन् त्वं भ्रमदसि । जगत्सर्जनादिक्रियारूपमसि जगद्भ्रामकमसीति वा । ज्वलदसि प्रकाशरूपमसि । गुणैः पूर्णमसि । प्रस्तब्धं निष्क्रियमसि । अक्लिष्टकारित्वात् । एकसभमसि । एका सभा जगद्रूपा यस्य तत् त्वमेकसभमसि एकशफमिति पाठे एकशफात्मकाश्वाद्यन्तर्गतमसीति व्याख्येयम् । यज्ञारम्भे प्रस्तोत्रा यत् हिङ्कृतं तत् त्वमसि त्वमेव यज्ञारम्भे उच्चरितहिङ्कारप्रतिपाद्यमिति भावः । तेनैव यज्ञमध्ये यत् हिङ्क्रियमाणं तत् त्वमसि तत्प्रतिपाद्यमसि । उद्गात्रा यज्ञारम्भे उद्गीथमसि उच्चत्वेन गीतमसि । तेनैव यज्ञमध्ये उद्गीयमानमुच्चत्वेन गीयमानमसि । अध्वर्युणा श्रावितमसि । आग्नीध्रेण त्वं प्रत्याश्रावितमसि त्वमेव तदुभयोच्चारित-मन्त्रप्रतिपाद्यमिति यावत् । आर्द्रे मेघोदरे विद्युदाद्यन्तर्गतरूपेण दीप्तमसि । विभुर्व्यापकोऽसि । प्रभुः समर्थोऽसि । अन्नमसि अद्यत्वादत्तृत्वाच्च ज्योतिर्ज्ञानरूपोऽसि । निधनं सर्वेषां लयस्थानमसि । संवर्गोऽसि समीचीनो वर्गो देवतारूपो यस्य सः संवर्गः सोऽसीति ॥ ४ ॥

अथैवमभिमर्शनानन्तरं एनं मन्थं सपात्रमुद्यच्छति हस्ते गृह्णाति । हस्ते गृहीत्वा जप्यमन्त्रमाह– **आमंसीति** ॥ हे मन्थस्थ भगवन् ते तव महि महत्तरं रूपं त्वमेवाऽऽमंसि आसमन्तात्साकल्येन जानासि । वयं च ते तव महि महत्तरं रूपम् । ते तव प्रसादात् आमं हि ईषदेव जानीम इत्यर्थः । स त्वं राजेशान ईशानां ब्रह्मादीनां अनश्श्रेष्टकः । गुणाधिकः पालकश्चेत्यधिपतिरिति ह प्रसिद्धमित्यर्थः । स राजेशानो भगवान् मामधिपतिं स्वावरस्वामिनं करोत्वित्यर्थः । इतिशब्दः मन्त्रसमाप्तिद्योतकः ॥ ५ ॥

अथैवं मन्त्रजपानन्तरम् । एनं हस्ते गृहीतं मन्थं ग्रासचतुष्टयं कृत्वा पृथक् संस्थाप्य प्रथमं ग्रासमाचामति भक्षयति भक्षयेदित्यर्थः । तन्मन्त्रमाह– **तत्सवितु-**

रिति ।। द्वितीयग्रासमन्त्रमाह– **भर्गो देवस्येति** ।। तृतीयग्रासमन्त्रमाह– **धियो यो न इति** ।। चतुर्थग्रासमन्त्रमाह– **सर्वां चेति** ।। सर्वां च सावित्रीं गायत्रीं सर्वाश्च मधुमतीरुक्त्वा अनु पश्चादहमेवेदं सर्वं स्वयोग्यतानुसारेण पूर्णं भूयासमिति वदेत् । ततो भूर्भुवः स्वाहेति चतुर्थग्रासं भक्षयेत् । अन्ततो भक्षणान्तत आचम्याऽऽचमनं कृत्वा पाणी हस्तौ प्रक्षाल्य शुद्धाचमनं च विधाय जघनेनाग्निं अग्नेर्जघनप्रदेशे पश्चिमे देशे प्राक्शिरा रात्रौ संविशति शयीतेत्यर्थः ।।

**अयं गायत्र्यर्थः–** यः नोऽस्माकमशेषजीवानां धियो बुद्धीः प्रचोदयात् प्रेरयेत् तस्य सवितुर्देवस्य नारायणस्य तत् गुणैस्ततं तस्मादेव वरेण्यं वरणीयं भजनीयं भर्गो भारतिज्ञानरूपं धीमहि चिन्तयाम इति ।।

**अयं मधुमत्यर्थः–** वातावयवो मधुनः सुखं यथा भवति तथा ऋतायते वान्ति वान्तु प्रार्थनप्रकरणात् । सिन्धवो नद्यो मधुनः सुखं यथा स्यात्तथा क्षरन्ति स्रवन्ति स्रवन्तु । ओषधीरोषधयो नोऽस्माकं माध्वीरानन्दकरास्सन्तु । नक्तं रात्रिरुषस उत दिवसाश्च मधुसुखमुद्दिश्य सन्तु । पार्थिवं रजो मधुमत् आनन्दकरमस्तु । पिता द्यौर्नो मधुसुखमुद्दिश्याऽस्तु । वनस्पतिर्नो मधुमान् सुखकरोऽस्तु । सूर्यो मधुमानस्तु । गावो नोऽस्माकं माध्वी सुखकराः भवन्त्विति । अत्र सर्वत्र वाय्वाद्यभिमानिदेवतायास्तदन्तर्गतविष्णोर्वा प्रार्थनं क्रियते । 'पूर्णो भूतिवरोऽनन्तसुख' इति व्याहृत्यर्थः । रात्रौ शयित्वा प्रातः सन्ध्यावन्दनं कृत्वा सूर्योदयकाले आदित्यमुपतिष्ठते आदित्यान्तर्गतभगवदुपासनं कुर्यात् । तन्मन्त्रमाह – **दिशामिति** ।। हे आदित्यान्तर्गत भगवंस्त्वं दिशां सर्वदिग्वर्तिप्राणिनामेकपुण्डरीकमसि मुख्यः श्रेष्ठोऽसि । अतस्तदुपासकोऽहं मनुष्याणामेकपुण्डरीकं भूयासमित्यर्थः । पूर्वं शयनाद् यथेतं सन्ध्यावन्दनाद्यर्थं गतं तथा एत्य गत्वा जघनेनाग्निमग्नेः पश्चिमदेशे आसीनः उपविष्टः सन् वंशमेतद्विद्योपदेशकाचार्यपरम्परालक्षणं जपति जपेत् ।। ६ ।।

तमेव वंशमाह– **ते हैतमिति** ।। तमेतं निर्माणक्रमसहितं मन्थं अरुणस्यापत्यमारुणिरुद्दालकनामा वाजसनेयाय याज्ञवल्क्यायाऽन्तेवासिने शिष्या-

योक्त्वोवाच । किं हे याज्ञवल्क्य योऽधिकारी एनं होमावशिष्टमन्थम् । यदि शुष्के स्थाणौ निषिञ्चेत् तर्हि तस्मिन् स्थाणौ शाखा जायेरन् पलाशानि पर्णानि च प्ररोहेयुरिति । एवमुत्तरत्रापि व्याख्येयम् ॥ ७ ॥

मधुको नामतः पिङ्गस्याऽपत्यं पैङ्ग्यः ॥ ८ ॥

चूलो नामतः भगवित्तेरपत्यं भागवित्तिः ॥ ९ ॥

जनकस्याऽपत्यं जानकिः आयस्थूणो नामतः ॥ १० ॥

सत्यकामो नामतः जबालस्यापत्यं जाबालः ॥ ११ ॥

बहुत्वात्तच्छिष्याणामन्तेवासिभ्य इत्येवोक्तम् एतद्विद्यासम्प्रदानयोग्यानाह– **तमेतमिति** ॥ तमेतं पूर्वोक्तमाहात्म्यविशिष्टमन्थमपुत्राय पुत्रशून्याय न ब्रूयात् । अनन्तेवासिने शिष्यशून्याय च न ब्रूयात् । तादृशाय कथने परम्पराविच्छेदेन बहुपुरुषार्थालाभात् । यद्वा अनन्तेवासिनेऽन्यविद्यास्वशिष्याय न ब्रूयात् । यथोक्तं 'अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित्' इति ॥ १२ ॥

औदुम्बरे कंसेचमसेवेत्यादि वाक्ये अपेक्षितमनुक्तं भागमाह– **चतुरौदुम्बर इति** ॥ औदुम्बरः उदुम्बरविकारश्चतुश्चतुस्सङ्ख्याको भवति । तदेवाह– **औदुम्बरः स्रुव इति** ॥ उपमन्थन्यावरणी । सर्वौषधं सम्भृत्येत्युक्तं विवृणोति– **दशेति** ॥ ग्राम्याणि प्रधानानि धान्यानि दश भवन्ति भवेयुः । कानि तानीत्यत आह– **व्रीहियवा इति** ॥ व्रीहियवास्तिलमाषाः प्रसिद्धाः अणवः श्यामाकाः प्रियङ्गवो गोधूमाश्च प्रसिद्धाः मसूराः देशान्तरप्रसिद्धाः खल्वानिष्पावाः खलु कुलाः कुलित्थाः तान् व्रीह्यादीन् पिष्टान् पिष्टीकृतान् दधनि मधुनि कृते उपसिञ्चति तेनाक्तं कुर्यादित्यर्थः । एवमुक्तं कृत्वानन्तरमाज्यस्य भागं पूर्वोक्तप्रकारेण जुहोतीति ॥ १३ ॥

॥ इति तृतीयं ब्राह्मणम् ॥

उपनिषत्—

[स्त्रीसङ्गे यज्ञत्वानुसन्धानम्]

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्रजापतिरीक्षाञ्चक्रे हन्ताऽस्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे तां सृष्ट्वाऽध उपास्त तस्मा स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणो समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाँ स्त्रीणाँ सुकृतं वृङ्क्तेऽथ यदिदमविद्वानधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥ एतद्ध स्म वै तद्विद्वान् कुमार हारीत आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽ-स्माल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं चरन्तीति बहु वा इदं सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥ तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कात्सी-द्यदोषधीरप्यसरद्यदप इदमहं तद्रेत आददे पुनर्मा मैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ता-मित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदक आत्मानं परिपश्येत्त-दभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणं सुकृतमिति ॥ ६ ॥

[दम्पत्योः अन्योन्यता]

श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयेत ॥ ७ ॥ सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ८ ॥ सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आदधामीति यशस्विनावेव भवतः । स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ सन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधिजायसे सत्वमङ्गकषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥ ९ ॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥ अथ यामिच्छेद् गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥ अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमं शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः पुत्रं पशूंस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशा पराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति यमेवंविद्वान् ब्राह्मणः शपति तस्मादेवं-

विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥ अथ यस्य जायामार्तवं विन्देत् त्र्यहं कꣳसे न पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात् त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥

[अपेक्षितपुत्रप्राप्तौ उपायाः]

स य इच्छेत्पुत्रो मे शुक्लो गौरो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातां ईश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥ अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीथः समितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवीत सर्वमायुरियादिति मांसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै औक्षेण वार्षभेण वा ॥ १८ ॥

[स्त्रीसङ्गविधिः]

अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां संजायां पत्या सहेति ॥ १९ ॥ अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वं सा त्वमस्यमोऽहं सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुंसे पुत्राय वित्तय इति ॥ २० ॥ अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय त्रिरेनामनुलोमामनुमार्ष्टि

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥
हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ ।
तं ते गर्भं हवामहे दशमे मासि सूतये ।
यथाऽग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥

[पुत्रोत्पत्तिः, जातकर्मसंस्कारश्च]

सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणीं समिङ्गयति सर्वत एवा ते गर्भ एजतु सहावैतु जरायुणा इन्द्रस्यायं व्रजः कृतः

सार्गलः सपरिश्रयस्तमिन्द्र निर्जहि गर्भेण सावराँ सहेति ॥ २३ ॥ जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यं सन्नीय पृषदाज्यस्योपघातं जुहोति अस्मिन् सहस्रं पुष्यास-मेधमानः स्वे गृहे। अस्योपसद्यां मा च्छेत्सीः प्रजया च पशुभिश्च स्वाहा मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणाऽत्यरीरिचं यद्वा न्यूनमिहाकरम्। अग्निष्टस्त्विष्ट-कृद्विद्वान्स्विष्टꣳसुहुतं करोतु नः स्वाहेति ॥ २४ ॥

[रहस्यनामकरणम्, स्तन्यप्राशनं च]

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वावागिति त्रिरथ दधि मधु घृतं सन्नीयनन्तरितेन जातरूपेण प्राशयति भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवःस्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेकरिति ॥ २७ ॥ अथास्य मातरमभिमन्त्रयत इलासि मैत्रावरुणी वीरे वीरमजीजनत् सा त्वं वीरवती भव याऽस्मान्वीर-वतोऽकरदिति तं वा एतमाहुरतिपिता बताभूरतिपितामहा बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

इति चतुर्थं ब्राह्मणम्

**टिप्पणी—**

अनेनोपनिषदुक्तविधानेन जातः पुत्रः प्रायः स्वर्गापवर्गयोग्यो भवतीति प्रजातिकर्म वक्तुमिदं ब्राह्मणं प्रवर्तते। तत्रादौ तावत्पुत्रोत्पत्तिहेतुभूतं रेतः स्तोतुमाह– **एषां भूतानामिति** ॥ एषां प्रसिद्धानां भूतानां चराचराणां पृथिवी रसः सारः सर्वगुणैर्वरा। पृथिव्या आपो वरुणो रसः। अपामोषधयः तदभिमानी सोमो रसः। ओषधीनां पुष्पाणि तदभिमानी रसः। पुष्पाणां फलानि तदभिमानी रसः। फलानां पुरुषः पुंस्त्वाभिमानी रुद्रः। पुरुषस्य रेतः तदभिमानिनी सरस्वती रसः। अनेन रेतसः उत्तमाभिमानिनीकत्वात् श्रैष्ठ्यमुक्तं भवति। यथोक्तं– 'पृथिवी सर्वभूतेभ्यः सदा सर्वैगुणैर्वरा। रसः सारो वरश्चेति शब्दा एकार्थवाचकाः। पृथिव्या वरुणः श्रेष्ठस्तस्मादोषधिदेवता। सोमस्तस्मात्तु पुरुषो रुद्रो यत्पौंस्यदेवता। तस्मात्सरस्वती वाग्धि श्रेष्ठा' इति। अत्र यद्यपि पुष्पाणां फलानां रेतसश्चाऽभिमानी नोक्तः तथापि तारतम्यप्रकरणात्पुष्पाभिमानिनो दक्षबृहस्पत्यादयः फलाभिमानीन्द्रः कामो वा ग्राह्यः। रेतोऽभिमानिनी च सरस्वंत्येव रुद्रस्य पुंस्त्वदेवतात्वोक्तेरिति ज्ञेयम् ॥ १ ॥

एवं रेतसः श्रेष्ठत्वादेव स प्रजापतिर्ब्रह्मेक्षां विचारं चक्रे। कथं हन्त अस्मा अस्य सर्वसारभूतस्य रेतसः प्रतिष्ठामाधारं कल्पयानीति। एवं विचार्य स प्रजापतिः स्त्रियं रेतसः प्रतिष्ठाभूतां संसृजे उत्पादितवान्। तां स्त्रियं सृष्ट्वा अध उपास्त मिथुनीभावाख्योपासनं कृतवान्। यस्मादेवं प्रजापतिः कृतवान् तस्मादद्यतनोऽपि स्त्रियमध उपासीत। स उपासकः उक्तोपासनेन एतं प्राञ्चं प्राक्कालीनम्। ग्रावाणं ग्रावनिभं रेतः आत्मन एव समुदपारयत् निष्कासयेत्। तेन निष्कासितेन रेतसैनां स्वस्त्रियमभ्यसृजत् संयोजयेदित्यर्थः ॥ २ ॥

नन्ववश्यंभाविन्यर्थे कथमयं विधिरिति चेत् न। मिथुनीभावस्यापि यज्ञत्वभावनाय विधानादिति भावेन प्रसिद्धवाजपेयादियज्ञवदत्रापि वेद्यादिकमाह– **तस्या इति** ॥ तस्यास्त्रियः उपस्थो वेदिः तत्साम्यात् लोमानि तद्वृत्तीनि बर्हिः तद्वृत्ति चर्मैव

चर्मकृष्णाजिनस्थानीयं यौ मध्यतो मध्यप्रदेशे विद्यमानौ मुष्कौ वृषणौ तावधिषवणे सोमाभिषवफलके इत्यन्वयः। मध्यतो योनिमध्यप्रदेशः समिद्धो दीप्तोऽग्निः तस्मिन्नग्नौ रेतो जुहुयादिति भावः। उक्तप्रकारेण मिथुनीभावस्य यज्ञभावनाकर्तुः फलमाह– **स इति**॥ वाजपेयेन यजमानस्य स प्रसिद्धो यावान् लोको भवति तावान् लोकः अस्योक्तप्रकारेण मिथुनीभावोपासकस्य भवति। वाजपेयेन यजमानस्य परलोके यावत्सुखं तावत्सुखमपि स्यादिति भावः। फलान्तरमाह– **य एवमिति**॥ यः पुरुषः एवमुक्तप्रकारेण मिथुनीभावस्य यज्ञत्वं विद्वानधोपहासं स्त्रीसङ्गं चरति स आसां स्त्रीणां सुकृतं वृङ्क्ते च्छेदयति। स्त्रीभिः कृतं सर्वं सुकृतं स्वयमादाय तासां यथा सुकृतं नास्ति तथा करोतीत्यर्थः। मिथुनीभावस्य यज्ञत्वमविज्ञायैव तदनुष्ठातुरनर्थमाह– **अथेति**॥ अथ पुनर्यः पुरुष इदं मिथुनीभावस्य यज्ञत्वमविद्वानधोपहासं चरति अस्य पुरुषस्य सुकृतं स्त्रिय आवृञ्जते च्छेदयन्तीत्यर्थः॥ ३ ॥

मिथुनीभावस्य यज्ञत्वमननुसन्धाय तदनुष्ठातुरनर्थफलं भवतीत्येतदनेकाचार्य-सम्मतमित्याह– **एतद्धस्मेति**॥ तत् मिथुनीभावस्य यज्ञत्वं विद्वानुद्दालकनामा अरुणस्यापत्यमारुणिः एतद्वक्ष्यमाणमाह। ह स्म वा इति निपातत्रयं प्रसिद्धि-द्योतकम्। एवमुत्तरत्र। नाको नामतः मुद्गलस्यापत्यं मौद्गल्यः कुमारो नामतः हरीतस्यापत्यं हारीतः। उद्दालकादयः किमाहुरित्यत आह– **बहवो मर्या इति**॥ ये इदं मिथुनीभावस्य यज्ञत्वमविद्वांसः अधोपहासं चरन्ति ते बहवो मर्याः मरणशीलाः ब्राह्मणायना ब्राह्मणाभासाः निरिन्द्रिया विनष्टेन्द्रियाः विसुकृतो विकृतपुण्याः सन्तोऽस्माल्लोकात्प्रयन्ति नरकादिकं प्रति गच्छन्तीत्यर्थः। इतिशब्दस्येत्याहेति प्रत्येकं सम्बन्धः। उक्तप्रकारेणोपहासचरणं श्रेयस्साधनमित्युक्त्वा इदानीमुपहासं विना रेतःस्कन्दने प्रायश्चित्तमाह– **बह्विति**॥ सुप्तस्य वा जाग्रतो वा पुरुषस्य यदीदं रेतो बहु वाशब्दादल्पं च स्कन्दति निःसरति॥ ४ ॥

तदा तत् स्कन्नं रेतो हस्तेनाऽभिमृशेत् अनु पश्चात् मन्त्रयेत वा मन्त्रयेच्च। तं मन्त्रमाह– **यदिति**॥ मे मम अद्याप्राप्तकाले यद्रेतः पृथिवीं प्रति अस्कांत्सीत्

स्कन्नमासीत् यदोषधीः प्रति वाऽसरदगमत् यदपः प्रति वाऽसरत् तदिदं रेतः अहमाददे गृह्णामीति मन्त्रेणानामिकाङ्गुष्ठाभ्यामादाय रेतोरूपेण बहिर्निर्गतमिन्द्रियं पुनर्मा प्रत्येतु तेजःकान्तिः पुनरेतु। भग ऐश्वर्यं ज्ञानं वा पुनरेतु। धिष्ण्या होमस्थानभूतोऽग्निः पुनर्मामेतु। आगतानीन्द्रियादीनि यथास्थानं कल्पन्तां तिष्ठन्तु इति मन्त्रेण स्तनौ भ्रुवौ वांन्तरेण स्तनयोर्भ्रुवोर्वा मध्ये निमृजेत् लेपयेत् ॥ ५ ॥

प्रायश्चित्तप्रसङ्गादन्यस्यापि तदाह– **अथेति** ॥ यद्वा यस्मिन्नुदके रेतस्सेकस्तस्मिन्नेवोदके स्वात्मदर्शने प्रायश्चित्तमाह– **अथेति** ॥ यद्युदके साधारणे रेतःसिक्ते वा आत्मानं परिपश्येत्तदा तदुदकं मन्त्रयीत। तं मन्त्रमाह– **मयीति** ॥ उदके स्वात्मपरिदर्शनेन गतं तेजः इन्द्रियं यशो द्रविणं दैवं मानुषं च सुकृतं पुण्यं च मय्यस्त्वित्यर्थः। यस्यां पुत्रो जनयितव्यस्तां स्त्रियं स्तुवन्नुपहासे इत्थम्भावमाह– **श्रीरिति** ॥ यद्यस्मात्कारणात् स्त्रीणां मध्ये मलोद्वासा उद्गतमलवद्वस्त्रा कृतरजस्वलास्नानेति यावत्। एषा पत्नी श्रीर्यशस्विनी पुत्रोत्पत्तिहेतुत्वात् ह वा इति प्रसिद्धिद्योतकं तस्मान्मलोद्वाससं यशस्विनीं कीर्तिमतीं प्रत्यभिक्रम्य गत्वोपमन्त्रयेत विशिष्टपुत्रोत्पादनं कर्तव्यमिति विचारं कुर्यात् ॥ ६ ॥

सा चेदस्मै न दद्यात् मिथुनीभावानुकूला न स्यात् तर्हि एनां स्वभार्यां कामं यथाभिलषितभोगादिभिरवक्रीणीयात् वशं कुर्यात्। एवमपि सा चेतदमस्मै नैव दद्यात्तदा कामं स्वेच्छानुसारेणैतां स्त्रियं यष्ट्या दण्डेन वा पाणिना हस्तेन वोपहत्य ताडयित्वाऽतिक्रमेत्। अतिक्रम्य गच्छेत् गमनकाले वक्तव्यमाह– **इन्द्रियेणेति** ॥ यशसा यशोहेतुभूतेनेन्द्रियेण गुह्येन्द्रियेण ते तव यशो यशोहेतुभूतपुत्रोत्पत्तिकरं रेतः आददे गृह्णामीति वदेत्। एवमुक्ता सा स्त्री अयशा एव यशोहेतुभूतपुत्रशून्यैव भवति ॥ ७ ॥

सा चेदस्मै तदा दद्यात्। तदा यशसा इन्द्रियेण ते यश आदधानि प्रापयामीति वदेत्। तदा तौ स्त्रीपुरुषौ यशस्विनावेव भवतः ॥ ८ ॥

अथ या भर्तुर्द्वेषिणी भवति तस्यास्तद्विषये प्रीतिसम्पत्त्युपायं वदन् उपहासे इत्थंभावान्तरमाह– **स यामिति** ॥ स पूर्वोक्तकामी इयं मा मां कामयेतेति

यां स्वभार्यामिच्छेत् तस्यां तदीययोनौ अर्थं गुह्येन्द्रियं निष्ठाय निक्षिप्य स्त्रीमुखेन सह मुखं सन्धाय मेलयित्वा अस्या उपस्थमभिमृश्य मन्त्रं जपेत्। तन्मन्त्रमाह– **अङ्गादिति** ॥ हे रेतस्तदन्तर्गत भगवन् त्वं अङ्गादङ्गात्सर्वस्मादङ्गात्सम्भवसि समुत्पद्यसे। विशेषतश्च हृदयात्तत्स्थनाडीद्वारेणाधिजायसे प्रकटीभवसि। स त्वमङ्ग कषायोऽसि अङ्गानां रसोऽसि। अतो दिग्धविद्धामिवौषधलिप्तां स्त्रीमिवेमाममूं मद्भार्यां मयि विषये मादय हर्षयुक्तां कुरु। मद्वशां कुर्वित्यर्थः ॥ ९ ॥

अथ यां स्वभार्यां यौवनादिभ्रंशभयात् गर्भं न दधीत न धारयीतेतीच्छेत् तस्यामित्यादिपूर्ववत्। अभिप्राण्य श्वासं मुक्त्वा अपान्यात् तं गृह्णीयात्। एवं श्वासनिरोधं कृत्वा जप्यमन्त्रमाह– **अरेता एवेति** ॥ पुत्रोत्पत्तिहेतुभूतरेतःशून्यैव भवतीत्यर्थः ॥ १० ॥

अथ यां स्वभार्यां गर्भं दधीतेतीच्छेत् अपान्यश्वासमादाय अभिप्राण्यात् श्वासं मुञ्चेत् ततो जप्यं मन्त्रमाह– **इन्द्रियेणेति** ॥ मदीयेन रेतसेन्द्रियेण ते त्वयि रेत आदधामीति जपेत् सति चैवं सा गर्भिण्येव भवति ॥ ११ ॥

एवं स्वभार्ययैवोपहासः कर्तव्य इत्युक्तं इदानीं स्त्र्यन्तरेणोपहासकरणे अभिचार-माह– **अथेति** ॥ यस्य पुरुषस्य जायायै जायाया जार उपपतिः स्यात् तमुपपतिं चेद् द्विष्यात् निजपतिः स आमपात्रे अपक्वमृण्मयभाजने अग्निमुपसमाधाय प्रतिलोमं पश्चिमाग्रं दक्षिणाग्रं वा यथा स्यात्तथा शरमयं बर्हिस्तीर्त्वा आस्तीर्य तस्मिन्नग्नौ एताः शरभृष्टीः बाणैषिकाः प्रतिलोमाः विपरीताग्राः सर्पिषाक्ता घृताक्ता जुहुयात्। तन्मन्त्रमाह– **ममेति** ॥ मम मदीये समिद्धे यौवनादिना समिद्धे योषाग्नौ अहौषीः रेतो हुतवानसि। अतस्ते तव प्राणापानावाददे इति मन्त्रमुच्चार्य प्रथमाहुतिं जुहुयात्। अनन्तरमसाविति शत्रोर्नाम गृह्णीयात्। एवमुत्तरत्रापि। पुत्रं पशूनित्युपलक्षणम् इष्टा सुकृते इष्टं यजनजनितं पुण्यं सुकृतं तदतिरिक्तकर्मजन्यं आशेच्छा पराकाश उत्तमतेजश्चेत्याशापराकाशौ। एवं हुते किं स्यादित्यत आह– **स वा इति** ॥ एवं विद्वानभिचारकर्मविद् ब्राह्मणो यं जायोपपतिं शपति स एव जारो निरिन्द्रियो

विसुकृतः गतः सुकृतः। अस्माल्लोकात्प्रैति मृतो भवतीत्यर्थः। तस्मादेवंवित्परदारगमने उक्ताऽनिष्टवित् श्रोत्रियस्य दारेण दारैः सह नोपहासमिच्छेत् न कुर्यादिति किमु वक्तव्यम्। किं तत इत्यत आह– **उतेति**॥ हि यस्मात्परदारहर्तुरेवंवित् अभिचारकर्मवेत्ता परः शत्रुर्भवति उत तस्मान्नेच्छेदित्यर्थः॥ १२॥

स्त्रीणां ऋतुकालेऽनुष्ठेयं व्रतमाह– **अथेति**॥ यस्य पुरुषस्य जायां भार्यामार्तवं ऋतुभावो विन्देत्प्राप्नुयात् तदा तस्य भार्या तदारभ्य त्र्यहं दिवसत्रयं कंसे कांस्यपात्रे न पिबेत् नाश्नीयात् अहतवासा अधौतवासा भवेत्। एनां ऋतुमतीं वृषलः शूद्रो नोपहन्यान्न स्पृशेत् वृषली शूद्री च न स्पृशेत्। त्रिरात्रान्ते चतुर्थेऽहनि प्रातःकाले आप्लुत्य स्नात्वा व्रीहीनवघातयेत्॥ १३॥

इदानीं पुत्रविशेषेच्छायां कर्तव्यविशेषमाह– **स इति**॥ स यः पुरुषो मे मम पुत्रः शुक्लः शुद्धो गौरो गौरवर्णो जायेत वेदमेकं वेदमनुब्रवीत सर्वमायुःशतवर्षपरिमितमायुरियात् प्राप्नुयादितीच्छेत् तदा क्षीरोदनं पाचयित्वा तेन होमं कृत्वा सर्पिष्मन्तं तच्छेषं तौ दंम्पती अश्नीयाताम्। एवं सति जनयितवै तादृशं पुत्रं जनयितुमीश्वरौ समर्थौ भवत इत्यर्थः॥ १४॥

एवमुत्तरत्र कपिलो लोहितः पिङ्गलः पिङ्गलाक्षः दध्योदनं पाचयित्वा दध्ना चरुं श्रपयित्वा॥ १५॥

उदौदनं उदकेनौदनं पाचयित्वेति क्षीरादिव्यावृत्त्यर्थम्॥ १६॥

दुहिता कन्या पण्डिता स्वयोग्यतानुसारेणागमजज्ञानवती॥ १७॥

विजिगीथो जयशीलः समितिगमी विद्वत्सभाप्रविष्टां शुश्रूषितां श्रोतुमीप्सिताम्। मांसमिश्रितौदनं मांसौदनं तन्मांसं किमीयमित्यत आह– **औक्षेणेति**॥ उक्षा गोवृषः तत्सम्बन्ध्यौक्षं वृषभो बलीवर्दः तत्सम्बन्धि वार्षभं तेन मांसेन युक्तमोदनमित्यन्वयः॥ १८॥

क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामित्युक्तं तत्कदेत्यतो वक्ष्यमाण-होमानन्तरमेवेति भावेन सत्पुत्रोत्पत्त्युपयुक्तं होममाह– **अथेति**॥ अथ त्रिरात्रान्ते

आप्लुतया स्त्रिया व्रीह्यवहननकरणानन्तरं चतुर्थेऽह्नि प्रातरेव स्थालीपाकावृताज्यं स्थालीपाकं चावृताज्यं च होमाज्यं चेति स्थालीपाकावृताज्यं तत्। अभिवेष्टित्वा सम्यक् कृत्वा स्थालीपाकस्याज्यसंस्कृतस्योपघातं भागं जुहोति जुहुयात् तन्मन्त्रमाह– **अग्नये स्वाहेति** ।। अत्राग्न्यनुमतिसवितृशब्दास्तदन्तर्गतविष्णुपराः तस्यैव सकलयज्ञभोक्तृत्वात्। देवाय क्रीडादिगुणसम्पन्नाय। सवितृशब्दार्थमाह– **सत्यप्रसवायेति** ।। सत्यभूतजगत्कारणायेत्यर्थः । सत्पुत्रप्रसवकारणायेति वा । इत्यनेन मन्त्रेण हुत्वा स्थालीपाकस्थं चरुशेषमुद्धृत्य प्राश्नाति भक्षयेत् । स्वयं प्राश्य इतरस्याः भार्यायाः तदेव प्रयच्छति दद्यात् । ततः पाणी प्रक्षाल्योदपात्रं पूरयित्वा तेनोदकेनैनां भार्यां त्रिरभ्युक्षति त्रिवारमभ्युक्षणं कुर्यात् तन्मन्त्रमाह– **उत्तिष्ठेति** ।। हे विश्वावसो गन्धर्व अतो मद्भार्यातः उत्तिष्ठ त्वमन्यां प्रभर्व्यां पीवरीं तरुणीमिति यावत् इच्छ इमां जायां तु पत्या मया सह संसृज संयोजयेत्यर्थः ।। १९ ।।

अथैवं गन्धर्वोच्चाटनानन्तरं यथाकामं क्षीरोदनादिभोजनानन्तरं एनां स्वभार्यामभिपद्यते प्राप्नुयात् । तदा वक्तव्यमाह– **अमोहमिति** ।। अहं मदन्तर्यामिश्रीमन्नारायणः अमो निर्दोषत्वात् अम इति नामकोऽस्मि त्वं त्वदन्तर्गता श्रीर्लक्ष्मीः सारत्वात्सेति नामिका सा त्वमसि । अमोहमित्यभ्यासस्तात्पर्यार्थः । एवमुभयोर्मिलितत्वात् सामशब्दवाच्यत्वमुक्तं इदानीं ऋक्सामशब्दवाच्यत्वमाह– **सामेति** ।। अहं मदन्तर्यामी नारायणः सामाऽस्मि सामवेदप्रतिपाद्यत्वात्सामनामक इत्यर्थः । त्वं त्वदन्तर्गता श्रीर्लक्ष्मीः ऋक् ऋग्वेदाभिमानिनीत्यर्थः । अहं मदन्तर्यामिनारायणो द्योतनात् द्युशब्दवाच्यः त्वं त्वदन्तर्गता लक्ष्मीः प्रथितत्वात्पृथिवीनामिकेत्यर्थः । हे भार्ये त्वमेहि आगच्छ । तौ लक्ष्मीनारायणाधिष्ठितावावां संरभावहै संरम्भं कुर्वः । कोऽसौ संरम्भः सह मिलित्वा रेतो दधावहै रेतो मिलितं कुर्व इति यावत् । किमर्थमयमारम्भ इत्यत उक्तम्– **पुंस इति** ।। चतुर्थी षष्ठ्यर्थे पुंस्त्वविशिष्टस्य पुत्रस्य पूतः छिद्रकर्मणस्त्राणनसमर्थस्य वित्तये लाभायेत्यर्थः ।। २० ।।

अथैवं वचनानन्तरं अस्यास्त्रियः ऊरू विहापयति विश्लेषयेत्। तन्मन्त्रमाह– **विजिहाथामिति**॥ हे द्यावापृथिवी तत्स्थानीये ऊरू विजिहाथां विश्लिष्टे भवेतामिति मन्त्रेण विहापयतीति सम्बन्धः। अनन्तरं तस्यामर्थं निष्ठाय मुखेन मुखं सन्धाय एनां भार्यामनुलोमां मूर्धानमारभ्य पादान्तमिति यावत्। त्रिस्त्रिवारमनुमार्ष्टि मार्जनं कुर्यात्। तन्मन्त्रमाह– **विष्णुरिति**॥ व्याप्तो विष्णुनामको वासुदेवो योनिं कल्पयतु पुत्रोत्पत्तिसमर्थां करोतु योनिशुद्धिं करोतु वा। त्वष्टा त्वेषात् त्वष्टृनामकः सङ्कर्षणो रूपाणि गर्भस्थपुत्रस्थाङ्गानि पिंशतु करोतु। प्रजापातनात्प्रजापतिनामकः प्रद्युम्नः आसिञ्चतु आसेकं करोतु। गर्भात्प्रजापातनं करोतु। धारणकर्तृत्वाद्धाता भगवाननिरुद्धस्ते गर्भं दधातु धारयत्वित्यर्थः। यथोक्तं–

> योनिक्लृप्तिर्वासुदेवाद्रूपं सङ्कर्षणाद्भवेत्।
> आसेककर्म प्रद्युम्नात् अनिरुद्धाच्च धारणम्॥ इति॥
> व्याप्तेर्विष्णुर्वासुदेवस्त्वष्टा त्वेषात् द्वितीयकः।
> प्रजापतिः प्रजापातान्निषेकः पातनं ततः॥
> प्रजापतिस्तु प्रद्युम्नो धाता धारणकर्मतः।
> अनिरुद्ध इति प्रोक्तः.............. ॥ इति च ॥

हे सिनीवालि चतुर्दशीमिश्रितामावास्यादेवते तदन्तर्गतभगवन् गर्भं धेहि धारय। हे पृथुष्टुके गर्भं धेहि। अत्र पृथुष्टुकाशब्देन पृथु विस्तीर्णा स्तुतिर्यस्याः सा पृथुष्टुकेति सरस्वत्युच्यते। 'गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति' इति शाखान्तरपाठात्। पुष्करस्रजौ पद्ममालावन्तौ देवौ क्रीडादिगुणसम्पन्नावश्विनावाशुगती कृष्णरामौ ते गर्भमाधत्ताम्। 'कृष्णरामौ तथाश्विनौ' इति वचनात्॥ २१॥

आवां हिरण्मयी अरणी याभ्यामरणीस्थानीयाभ्यामावाभ्यामश्विनौ कृष्ण-रामौ निर्मथतां मथनं कृतवन्तौ तं मथनोत्पन्नं गर्भं ते त्वयि हवामहे। दशमे मासि सूतवे प्रसवार्थमित्यर्थः। प्रकृतं गर्भं स्तौति– **यथेति**॥ यथा पृथिवी अग्नि-गर्भा यथा द्यौर्द्युलोक इन्द्रेण तत्पालकेन गर्भिणी यथा वायुर्दिशां गर्भः एवं तादृश-

गर्भं ते त्वयि दधामि । असाविति स्वात्मनो गर्भे जायमानस्य वा नाम गृह्णाति ॥ २२ ॥

प्रसवावसरे कर्तव्यमाह– **सोष्यन्तीमिति** ॥ सोष्यन्तीं प्रसविष्यन्तीं भार्यामद्भिरभ्युक्षति तन्मन्त्रमाह– **यथेति** ॥ यथा वायुः पुष्करणीं सर्वतः समिंजयति स्वरूपोपघातमकृत्वा चालयति । एवा एवमेव ते गर्भः सूचिकावायुना प्रेरित एजतु स्थानाच्चलतु । तदनन्तरं जरायुणोल्बेन सहावैतु निर्गच्छतु उत्तरत्रेन्द्रं प्रार्थयितुं तत्रादौ हेतुमाह– **इन्द्रस्येति** ॥ इन्द्रस्येन्द्रेण परमैश्वर्यसम्पन्नेन भगवता । सार्गलः अर्गलया वायुनिरोधेन सहितः । सपरिश्रयः परिश्रयेण परिवेष्टनेन जरायुणा सहितः । अयं गर्भः । व्रजः आश्रयः । कृतः । गर्भमाश्रित्य तद्रक्षकतया भगवान् वर्तत इति यावत् । किं तत इत्यत आह– **तमिति** ॥ हे इन्द्र परमैश्वर्यसम्पन्न सावरमावरणसहितं तं गर्भं निर्जहि निर्गमय निर्गम्यमानेन गर्भेण सह तन्नियामकतया त्वमपि निर्जहि निर्गच्छेति मन्त्रेणाभ्युक्षतीति सम्बन्धः ॥ २३ ॥

प्रसवानन्तरं कर्तव्यमाह– **जात इति** ॥ पुत्रे जाते सति तमङ्के आधायाग्निमुपसमाधाय कंसे कांस्यपात्रे पृषदाज्यं संस्कृताज्यं सन्नीय सम्पाद्य पृषदाज्यस्योपघातं भागं जुहोति । होममन्त्रमाह– **अस्मिन्निति** ॥ हि अग्न्यन्तर्गतभगवन्नहमस्मिन् स्वे गृहे सहस्रं पुष्यासम् । एधमानो वर्धमानश्च भूयासमित्यर्थः । अस्मिन् पुत्रे निमित्ते सतीति वा । अस्य पुत्रस्योपसद्यां सन्ततिं प्रजया पशुभिश्च सह मा च्छैत्सीः विच्छिन्नं मा कुरु । मयि स्थितान् प्राणान् मनसा सह त्वयि जुहोमि त्वद्विषयान् करोमि । इह कर्तव्यकर्मविषये कर्मणा यदत्यरीरिचमधिकमभवमधिकं कर्म कृतवानस्मीति यावत् । यद्वा न्यूनमकरमकरवं तत्सर्वं स्विष्टकृत् स्वभक्तिज्ञानादि-पूर्वकमिष्टं न्यूनाधिकमपि सम्यक्करोतीति स्विष्टकृन्नामा विद्वान् सर्वज्ञोऽग्निस्तदन्तर्गतो भगवान् स्विष्टं सुहुतं करोत्वित्यर्थः ॥ २४ ॥

एतद्धोमानन्तरं कर्तव्यमाह– अथेति ॥ अथ स्विष्टकृद्धोमानन्तरमस्य शिशोर्दक्षिणकर्णमभिनिधाय पिता स्वाभिमुखं निधाय त्रयीलक्षणा वाक् त्वयि

प्रविशत्वित्यभिप्रायवान् वाग्वागिति त्रिर्जपेदिति शेषः। अथ त्रिर्जपानन्तरं दधि मधु घृतं सन्नीयानन्तर्हितेन वस्त्राद्यनावृतेन जातरूपेण सुवर्णेन प्राशयति। अन्नप्राशनमन्त्रं पठति– **भूरिति**॥ हे भूः ते त्वयि दधामि इत्यर्थः॥ २५॥

अथ पूर्वोदाहृतैश्चतुर्मन्त्रैः प्रत्येकमन्नप्राशनानन्तरमस्य शिशोर्नाम करोति किमिति वेदोऽसि वेद इति नामकोऽसीति तदेतद्वेद इति नामास्य शिशोर्गुह्यं गोप्यमेव भवति। नतु प्रकटनीयम्। व्यवहारार्थं प्रसिद्धनाम तु स्वाभिप्रेतदेववाचकं कर्तव्यमिति भावः॥ २६॥

अथ नामकरणानन्तरमेनं शिशुं तन्मात्रे प्रदाय स्तनं प्रयच्छति दापयेत्। तन्मन्त्रमाह– **यस्त इति**॥ हे सरस्वति ते तव यत्स्तनः शशयः शं सुखं तस्य शयः आशयः शेसु खे शेत इति वा शशयः यो मयो भूः। अवग्रहदर्शनाद्भिन्नं पदम्। मयः सर्वप्रधानो भूः पूर्णः यो रत्नान्याभरणरूपाणि धत्त इति रत्नधा वसु आभरणरूपमेव विन्दति प्राप्नोतीति वसुवित्। यः सुदत्रः सम्यक् दाता रक्षकश्च येन त्वदीयेन स्तनेन त्वं विश्वा विश्वानि वार्याणि वरणीयानि देवादीनि पुष्यसि तं स्तनं इह लोके धातवे शिशोः पानार्थं अकः अकार्षीरित्यर्थः। अनेन स्त्रीस्तने सरस्वतीस्तनसन्निधानमस्तीति गम्यते॥ २७॥

अथ स्तनप्रदानानन्तरमस्य शिशोर्मातरमभिमन्त्रयते तन्मन्त्रमाह– **इलासीति**॥ हे भार्ये त्वमिलासि स्तुत्यासि मैत्रावरुणी मित्रावरुणनामकभगवद्रूपाधिष्ठानभूतासि हे वीरे आरब्धान्तगामिनी या भवति वीरं पुत्रमजीजनत् सा त्वं पुनर्वीरवती पुत्रवती भव। एवमाशीर्वादकरणनिमित्तमाह– **यास्मानिति**॥ याऽस्मान्वीरवतः पुत्रवतोऽकरत् अकरोदिति। एवमुक्तप्रकारेण शिशोः संस्कारकरणे किं स्यादित्यत आह– **तं वा एनमिति**॥ एवंविदः पूर्वोक्तप्रकारेण भगवज्ज्ञानवतो ब्राह्मणस्य यः पुत्रो जायते तं वा एनं जनाः हे पुत्र त्वमतिपिता पितरमतिक्रान्तोऽभूः बतेत्याश्चर्ये। न केवलमेतावत् अतिपितामहः पितामहमतिक्रान्तोऽभूः कुतः अयं श्रिया यशसा ब्रह्मवर्चसेन परमां काष्ठामवधिं प्राप बह्वैश्वर्यादिसम्पन्न इत्याहुरिति सम्बन्धः॥२८॥

**॥ इति चतुर्थं ब्राह्मणम्॥**

उपनिषत्—

## ऋषिपरम्परा

अथ वꣳशः पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तिपुत्रात् औपस्वस्तिपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्रः आलम्बीपुत्रात् वैयाघ्रपदीपुत्राच्च वैय्याघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो बर्कारुणीपुत्राद् बार्कारुणीपुत्रो आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः साङ्कृतीपुत्रात्साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माडूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भाल्लकीपुत्राद् भाल्लकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्रा आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालको अरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रि-

र्वाजस्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपात् शिल्पः कश्यपः कश्यपात् नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ समानमा साञ्जीवीपुत्रात् साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वा मकक्षायणाद्वा मकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचाराजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिः ब्रह्मणो ब्रह्म स्वयम्भुब्रह्मणे नमः ॥ ४ ॥

इति पञ्चमं ब्राह्मणम्

इति बृहदारण्यके अष्टमोऽध्यायः

इति बृहदारण्यकोपनिषत्

**टिप्पणी——**

अध्यायद्वयोक्तविद्याप्रवर्तकऋषिपरम्परामाह– **अथ वंश इति** ॥ आदित्यानि आदित्येन प्रोक्तानि इमानि शुक्लानि शुद्धानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते प्रकटीक्रियन्त इत्यर्थः । प्रजापतिर्ब्रह्मा ब्रह्मणः परब्रह्मणः श्रुतवानित्यर्थः । परब्रह्म कस्माच्छ्रुतमित्यत आह– **ब्रह्म स्वयम्भ्विति** ॥ यद्वा प्रजापतिः रुद्रो ब्रह्मणः को वा ब्रह्मशब्दवाच्य इत्यत आह– **ब्रह्म स्वयम्भ्विति** ॥ स्वस्मादेव स्वयं भवतीति स्वयम्भु अवतारत्रयविशिष्टो मुख्यो वायुर्ब्रह्मेत्यर्थः । यद्वक्ष्यति स्वयम्भु ब्रह्मसञ्ज्ञोऽसाविति । वेदपुरुषोऽपि अन्ते मङ्गलमाचरति– **ब्रह्मणे नम इति** ॥ परस्मै ब्रह्मणे नम इत्यर्थः ॥

**भाष्यम्—**

**पञ्चाग्निविद्यया चैव तथैव प्राणविद्यया।**
**प्रजातिकर्मणा चैव तथा ज्ञानप्रदानतः ॥**
**आचार्यवंशविज्ञानाद् यः पूज्यः पुरुषोत्तमः ।**
**सर्वान्तर्यामिको नित्यो नमस्तस्मै परात्मने ॥ इति सद्भावे ॥**

**इति पञ्चमं ब्राह्मणम्**

**टिप्पणी—**

एवं पञ्चाग्निविद्या भगवत्परतया व्याख्याता न केवलमेतावत् किन्त्वयमध्यायः सर्वोऽपि भगवत्पर इति भावेनैतदध्यायस्य भगवत्परत्वे प्रमाणमाह— **पञ्चाग्निविद्ययेति** ॥ एवकारत्रयस्य प्रत्येकं पुरुषोत्तम इत्यनेन सम्बन्धः । तेन विद्यानां प्रसिद्धार्थकत्वं व्यवच्छिनत्ति। चशब्दौ तथाशब्दौ च परस्परसमुच्चये । ज्ञानप्रदानतो य आचार्यस्तेषां वंशज्ञानादित्यर्थः । यद्वा ज्ञानप्रदानेन योऽयमाचार्यवंशस्तद्विज्ञानादित्यर्थः । ज्ञानप्रदानत इति आचार्यपुत्रपौत्रादिपरम्पराव्युदासः । ननु पञ्चाग्निविद्याया उक्तप्रकारेण भगवत्परत्वेऽपि प्राणादिविद्यायाः कथं भगवत्परत्वं तत्र स्पष्टं प्राणादेरेव प्रतिपाद्यत्वप्रतीतेरित्यतः सर्वत्र युक्तिमाह— **सर्वान्तर्यामिक इति** ॥ तथाच प्राणाद्यन्तर्यामिण एव प्राणादिविद्याप्रतिपाद्यत्वमिति भावः ॥ २ ॥

**भाष्यम्—**

**नित्यानन्दमनौपमं परमजं सर्वत्रगं सुस्थिरं**
**सर्वज्ञं प्रतिबोधमात्रममलं पूर्णं गुणैरच्युतैः ।**
**विश्वोत्पत्तिलयस्थितिप्रमितिसन्मोक्षे परं कारणं**
**प्रेष्ठं मे सततं प्रियात्प्रियतमं नित्यं सदोपास्महे ॥**

**टिप्पणी—**

एवं समापितभाष्यो भगवानाचार्यो यद्गुणविशिष्टतया भगवन्तं एतदुपनिषदर्थत्वेन प्रतिपादितवांस्तद्गुणविशिष्टभगवदुपासनमेवान्तेऽप्याशास्ते— **नित्यानन्दमिति** ॥

पूर्णानन्दमित्यर्थः। अपूर्णत्वस्यापि विनाशशब्दार्थत्वात् उपमैव औपमं स्वार्थिकोऽण् नास्त्यौपमं यस्यासौ अनौपमः तम्। यद्वा उपमाया अयमौपमः सोपम इति यावत्। न विद्यते औपमो यस्यासावनौपमस्तमिति। परं सर्वोत्तमं विलक्षणमिति वा केनापि प्रकारेण न जायत इत्यजं सर्वत्र गं प्राणादिषु वर्तमानं सुस्थिरं सुनित्यं सर्वं जानातीति सर्वज्ञ इति ज्ञानवत्त्वोक्त्या ज्ञानतद्वतोर्भेदशङ्कां वारयति प्रतिबोधमात्रमिति। अमलं निर्दोषम्। अच्युतैर्देशतः कालतो गुणतश्च च्युतिशून्यैः प्रमतिर्मोक्षसाधनीभूतज्ञानं यथार्थज्ञानं वा। सतां मोक्षः सन्मोक्षःद्वन्द्वैकवद्भावोऽयम्। कारणत्वं च न ब्रह्मादीनामिवेत्याह– **परमिति** ॥ मे सततं प्रेष्ठं नित्यं प्रियात्प्रियतममित्यन्वयः। विष्णुमिति विशेष्याध्याहारः ॥ १ ॥

**भाष्यम्**—

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत्।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-**
**र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥**

**टिप्पणी**—

स्वभाषितभाष्यस्याप्तिमूलत्वसमर्थनाय श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्नाह– **यस्येति** ॥ यस्य वायोर्देवस्य बळित्थेत्यादिवेदवचने दिव्यानि क्रीडादिगुणयुक्तानि त्रीणि रूपाण्युदितानि तस्य यत् तृतीयकं वपुः तेनेदं भाष्यं प्रभौ प्रभुविषयतया कृतं हीत्यन्वयः। कीदृशं चास्य मूलरूपं कानि च त्रीणि रूपाणि कीदृशानि च तत्राह– **अलमिति** ॥ तस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं च दृशेरौणादिको तच्प्रत्ययः। अनेन वायुशब्दो व्याख्यातः। वशब्दो बलवाची। अयतिर्गत्यर्थः गत्यर्थाश्चावगत्यर्थाः तत उण् वश्चासावायुश्चेति वायुरिति। किञ्च भर्गः भरणगमनकर्तृ डु भृञ् भरणे गम्लृ गतौ आभ्यामसुन्प्रत्ययो डिच्च इदमपि वायुशब्दव्याख्यानम्। वातेर्भरणार्थादयतेश्च उण्। अनेकार्थत्वाद्धातूनां

वातिर्भरणेऽपि वर्तते। अपि च महत् श्रेष्ठम्। 'वय श्रेष्ठ' इत्यस्मादुण्। तदित्थमेव रूपत्रयावताराय भगवता निहितं प्रेरितमवतीर्णं च। तत्र प्रथमकं हनुमदाख्यं वपुः रामवचोनयं रामस्य वचांसि सीतां प्रति नीतवत् रामविषयवचांसि मूलरामायणरूपाणि शिष्येषु नीतवद्वा। रामवचसि यो नयो न्याय आज्ञारूपस्तद्युक्तं वा। द्वितीयं भीमनामकं पृक्षः कुरुपृतनाक्षयकारि। तृतीयं वपुरानन्दरूपस्य हरेः प्रतिपादकशास्त्रनिर्मातृमध्वाभिधमिति। अतः परमाप्तप्रणीतत्वादिदं भाष्यं सकलसुजनैरादरेणाङ्गीकार्यमिति भावः ॥

**भाष्यम्—**

> **हनुशब्दो ज्ञानवाची हनुमान्मतिशब्दितः।**
> **रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि॥**
> **भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः।**

**टिप्पणी—**

ननु बळित्थेत्यादिवेदवचने वायोस्त्रीणि रूपाण्युदितानीत्यसत् तस्य सूक्तस्य त्रेताग्निपरत्वादित्यतः तत्सूक्तं वायुरूपत्रयपरतया प्रमाणेन व्याकुर्वन् 'यदीमुपह्वरते साधते मतिः' इत्युक्तं मतिशब्दं तावद्व्याचष्टे– **हनुशब्द इति** ॥ हन हिंसागत्योरिति धातोर्गत्यर्थस्य चावगत्यर्थत्वेन हनुशब्दस्य ज्ञानवाचित्वेन मतिशब्दसमानार्थत्वाद्धनुमान्मतिशब्देनोच्यत इत्यर्थः। हनुशब्दस्य ज्ञानवाचित्वे हनुमान्मतिमच्छब्दवाच्यः स्यादिति चेन्न। ज्ञानवतोऽपि ज्ञानस्वरूपताप्रकटनाय मतिशब्दप्रयोगात्। ऋतस्य धेना अनयन्त सस्रुत इत्येतद्व्याचष्टे– **रामस्येति** ॥ ऋतस्येत्यस्यार्थः– **स्वृस्तरूपस्येति** ॥ सुष्ठु सर्वदा सर्वत्र च सत्यरूपस्य चेत्यर्थः। यद्वा पूर्वावगतवत्सदा स्थितस्येत्यर्थः। यथोक्तम्–

> ऋ गताविति धातोस्तु पूर्वावगतवत्सदा।
> स्थितेर्ब्रह्मर्तमित्युक्तम् ............. ॥ इति ॥

धेना इत्यस्यार्थो– **वाच इति** ॥ अनयन्त सीतां प्रतीति शेषः। रामस्य वाचो

रामप्रतिपादकमूलरामायणरूपस्तेन हनुमता शिष्यान् प्रत्यनयन्तेति वा । एवं यदीमुपह्वरत इत्यर्धर्चस्य हनुमदाख्यप्रथमावतारप्रतिपादकत्वमुक्त्वा इदानीं पृक्षो वपुरित्यस्य भीमाख्यद्वितीयावतारप्रतिपादकत्वसिद्ध्यर्थं 'आशये सप्त शिवासु मातृषु' इत्येतद्भीमशब्दार्थप्रतिपादकमिति भावेन तावद्भीमशब्दार्थमाह– **भृतम इति** ।। भृताः पूर्णाः माः प्रमाः प्रमाणानि यस्मिन्नसौ तथोक्तः । अस्त्वेवं भीमशब्दार्थः किं तत इत्यतो मातृष्वित्युक्तमातृशब्दार्थं तावदाह– **वाच इति** ।। माः प्रमाणभूता वाचो मापकत्वान्मातरः स्मृता इत्यर्थः ।

भाष्यम्—

**ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम् ।**
**प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।।**
**मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।**
**मध्व आनन्दतीर्थः स्यात्तृतीया मारुतीतनुः ।**
**इति सूक्तगतं रूपत्रयमेतन्महात्मनः ।**
**यो वेद वेदवित्स स्यात्तत्त्ववित्तत्प्रसादतः ।। इति च ।।**
**साधको रामकार्याणां तत्समीपगतः सदा ।**
**हनुमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।**
**पूतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।**
**पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।**

टिप्पणी—

सप्त शिवास्वित्युक्तसप्तशिवशब्दार्थमाह– **ऋगाद्या इति** ।। ऋगाद्याश्चत्वारः । अस्त्वेवं मातृसप्तशिवाशब्दार्थः तथापि किमित्यत आह– **तत्रेति** ।। यतो भृतमो भीम इत्युक्तस्ततो भीमशब्दसमानार्थत्वात् तत्रोक्तासु सप्तशिवासु मातृषु शयो निष्णातो भीमः स्मृत इत्यर्थः । 'तृतीयमस्य' इत्यादेरानन्दतीर्थाख्यतृतीयावतार-प्रतिपादकत्वसिद्ध्यर्थं 'प्रदिवो मध्व आधव' इत्युक्तमध्वशब्दस्यानन्दतीर्थशब्द-

समानार्थत्वमाह– **मध्वित्यानन्द इति** ।। मधु द्यौरस्तु नः पितेति प्रयोगात् । वातेरवगत्यर्थात् करणे घञर्थे कविधानमिति कः मधु आनन्दकरं वः तीर्थं शास्त्रं यस्येति मध्व इत्यर्थः । स्वरित्यत्रेवोकारलोपः । आनन्दकरं तीर्थं यस्यासावानन्द-तीर्थः । तृतीयमस्येत्यत्र वपुरित्येतदनुवर्ततत इति भावेनोक्तम्– **तृतीया मारुतीतनु-रिति** ।। तृतीया मारुतीतनुः । 'मध्वः आनन्दतीर्थः स्यात्' इति सम्बन्धः । तात्पर्यद्योतनायैतज्ज्ञानफलमाह– **इतीति** ।। यदीमुपह्वरते साधते मति-रित्यस्यार्थमाह– **साधक इति** ।। साधत इत्यस्यार्थोऽयं उपह्वरत इत्यस्यार्थ-स्तत्समीपगत इति । मतिशब्दार्थो हनुमानिति । पृक्षो वपुः पितुमानित्यस्यार्थः उक्तः पृतनाक्षयकारीत्यनेन । पृक्ष इत्यस्य बकासुरवधादौ भीमे बह्वन्नभोक्तृत्वं कुरुपृतनाक्षयकारित्वं च प्रसिद्धमिति भावः । 'तृतीयमस्य वृषभस्य दोहसे' इत्येतद्व्याचष्टे– **तृतीयक इति** ।। आनन्दतीर्थनामा तृतीयकस्तुपूर्णप्रज्ञः प्रकीर्तित इति सम्बन्धः । पूर्णप्रज्ञ इत्यनेन दशप्रमतिशब्दो व्याख्यातः ।

**भाष्यम्——**

**दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।**
**प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।**
**आसमन्तात्पतित्वे तु गूढं कलियुगे हरिम् ।**
**असत्यमप्रतिष्ठं तु जगदेतदनीश्वरम् ।**
**वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।**
**येन विष्णोर्हि वर्याख्यान् गुणानज्ञासिषुः परान् ।**
**ईशानासः सूरयश्च निगूढान्निर्गुणोक्तिभिः ।**

**टिप्पणी——**

तदुपपादयति– **दशेतीति** ।। इह दशेति शब्देन सर्वमुद्दिष्टम् । 'दशेति वै सर्वम्' इति श्रुतेः । सर्वमितिशब्देन च पूर्णमुच्यते दश सर्वपूर्णशब्दाः पर्याया इति यावत् । ततो दशशब्दस्य पूर्णवाचित्वात् प्रमतिशब्दस्य प्रज्ञावाचित्वात्

दशप्रमतिशब्देन पूर्णप्रज्ञ एवोच्यत इत्यर्थः । 'यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति' इति वाक्यं व्याचष्टे– **आसमन्तादिति** ।। आधव इत्यस्यार्थोऽयं धव इत्यस्य भावप्रधानत्वमभ्युपेत्य पतित्व इत्युक्तम् । गुहासन्तमित्यस्यार्थो गूढं हरिमिति तत्र निमित्तमाह– **कलियुग इति** ।। न केवलं कालबलाद्गूढः किन्त्वित्यत आह– **असत्यमिति** ।। अनीश्वरं जीवातिरिक्तेश्वररहितं जीवेश्वरैक्यमिति यावत् । ननु जगतः सत्यत्वे तदन्तर्गतसर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्माणामपि सत्यत्वात्कथं जीवेश्वरैक्यमित्यत आह– **असत्यमिति** ।। नन्वसत्यत्वं नाम शशविषाणादीनामिवात्यन्तासत्त्वं अपरोक्षप्रतीतिविषयत्वादित्यतस्तदेव व्याचष्ट– **अप्रतिष्ठमिति** ।। ज्ञानबाध्यमित्यर्थः । मातरिश्वेत्युक्तया मूलवायुपरत्वप्रतीतिनिरासाय तृतीयोऽसुरित्युक्तम् । तृतीयोऽसु कलियुगे कालबलाद्गूढं तदेतज्जगदनीश्वरं वदद्भिश्च गूहितं हरिमासमन्तात् सर्वप्रकारेण पतित्वे सर्वस्वामित्वे विषये मथायति ब्रह्मसूत्रोपनिषदादिव्याख्यानेन हरेः पुरुषोत्तमत्वमाविष्करोतीत्यर्थः । 'निर्यदीं बुध्रान्महिषस्य वर्पस ईशानासः शवसाक्रन्त सूरयः' इत्येतद्व्याचष्टे– **येनेति** ।। यदित्यस्यार्थो येनेति तृतीयावतारेणेत्यर्थः । महिषस्येत्यस्यार्थो विष्णोरिति । वर्पस इत्यस्यार्थो वर्पाख्यान् गुणानिति निराक्रन्तेत्यस्यार्थोऽज्ञासिषुरिति ज्ञातवन्त इत्यर्थः । ईशानास इति बहुवचनमाद्यर्थे ईशानाद्या देवा अन्ये सूरयश्च ब्रह्मनिर्गुणमित्युक्तिभिर्निगूढान् गुणानित्यन्वयः ।

**भाष्यम्——**

**त्रेतायां द्वापरे चैव कलौ चैते क्रमात्त्रयः ।।**
**एतेषां हि परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।**
**स्वयं तु ब्रह्मसंज्ञोऽसौ परस्मै ब्रह्मणे नमः ।। इति च ।।**

**टिप्पणी——**

अवतारत्रयस्य कालभेदमाह– **त्रेतायामिति** ।। क्रमादेवेत्यन्वयः । त्रयो जाता इति शेषः । प्रयत्पितुः परमान्नीयत इत्यस्य तात्पर्यमाह– **एतेषामिति** ।। असौ

विष्णुः स्वयम्भु ब्रह्मसञ्ज्ञोऽसावित्यनेन ब्रह्म स्वयम्भ्वित्येतदुपनिषदन्त्यवाक्यं विष्णुपरमित्युक्तं भवति। ब्रह्मणे नम इत्यस्य ब्रह्मशब्दस्यान्यपरत्वप्रतीतिनिरासाय व्याचष्टे– **परस्मा इति** ॥ यद्वा न केवलं हनुमदादिरूपत्रयविशिष्टो वायुर्बळित्थेत्यादिश्रुतावेव प्रतिपाद्यः । किन्तु प्रजापतिर्ब्रह्मणो ब्रह्मस्वयम्भ्वित्येतदुपनिषदन्त्यवाक्ये चेति भावेनाह– **स्वयम्भु ब्रह्मसञ्ज्ञोऽसाविति** ॥ असौ रूपत्रयविशिष्टो वायुः स्वस्मात्स्वयमेवोत्पन्नत्वात्स्वयं शब्दवाच्यविष्णवाज्ञयोत्पन्नत्वाद्वा स्वयम्भूः । ज्ञानादिगुणपूर्णत्वाद्ब्रह्मेति स्वयम्भुब्रह्मसंज्ञ इत्यर्थः । तर्ह्युपनिषदि ब्रह्मणे नम इत्युत्तरवाक्ये ब्रह्मशब्देनाऽयमेव ग्राह्यः किन्नेत्याह– **परस्मा इति** ॥ ततश्चायं सूक्तार्थः । सहसः सहोरूपस्य देवस्य क्रीडादिगुणसम्पन्नस्य वायोर्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं भर्गो जगद्भरणगमनगुणं तत् इत्था इत्थम्भूतमेव वपुषे रूपत्रयावताराय यतो यस्माद्भगवताधायि अधायि निहितं भगवता प्रेरितमित्यर्थः। तस्मादजनि यद्वा यतो वायोर्भगवानजनि व्यक्तोऽभूत्तस्माद्वायोरिति सम्बन्धः । प्रथमावतारस्वरूपमाह– **यदीमिति** ॥ यदी यदेव मतिर्हनुमदाख्यं प्रथमं रूपमुपह्वरते रामस्य समीपे तिष्ठति । साधते रामकार्याणि साधयति तेन हनुमता ऋतस्य सत्यरूपस्य रामस्य सस्रुतः अमृतस्रावयुक्ताः धेना वाचः अनयन्त सीतां प्रतीति शेषः। द्वितीयावतारस्वरूपमाह– **पृक्ष इति** ॥ द्वितीयं वपुर्भीमाख्यं पृक्षः पृतनाक्षयकारी पितुमान् अन्नवान् बहुभुगिति भावः। नित्यः नित्यं सप्तशिवासु परममङ्गलरूपासु सप्तसु मातृषु प्रमाणभूतासु ऋगादिषु आशये शेते तद्विचारयतीति भावः। अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तो भवति। तृतीयावतारस्वरूपमाह– **तृतीयमिति** ॥ अस्य वृषभस्य श्रेष्ठस्य वायोः तृतीयं वपुः दोहसे ज्ञानदोहाय दशप्रमतिं पूर्णप्रज्ञात्मकं योषणः नार्यो गुरुत्वाद्बहुवचनं जनयन्त अजनयन्त ॥ **निर्यदीमिति** ॥ बुध्नात् ज्ञानरूपात् यदीं यस्मादेव महिषस्य महितषड्गुणस्य हरेः वर्पसः वरणीयत्वात्पालकत्वाद्वर्पोनामकान् गुणानीशानासः रुद्राद्या देवा अन्ये सूरयो ज्ञानिनश्च शवसा सुखेन निराक्रन्ताज्ञातवन्तस्तत्तृतीयं वपुरिति पूर्वेण सम्बन्धः ॥ **यदीमिति** ॥ यदीं य एव प्रदिवः प्रकृष्टप्रकाशरूपो मध्वः आनन्दतीर्थाख्यो

मातरिश्वा वायुः गुहासन्तं जीवेश्वरैक्यं वदद्भिर्गूहितं सन्तं हरिं आधवे आसमन्तात्पतित्वे मथायति मथ्नाति शास्त्रेण विचार्य निश्चाययतीति भावः ।। **प्रयत्पितुरिति** ।। यत् रूपत्रयं पितुः स्वोत्पादकात् परमादुत्तमाद्विष्णोः प्रणीयते प्रकर्षेण प्रेर्यते पृक्षुधः प्रश्नरूपान् वीरुधस्तं वादीन् दंसु दन्तेषु पर्यारोहति चर्वितवच्छकलीकरोतीत्यर्थः ।। **उभेति** ।। यत् यस्मादस्य जनुषं जन्मावतारं उभा उभौ लक्ष्मीनारायणौ इन्वतः प्रेरयतस्तस्मात् घृणा शुचिः कृपया शुद्धः । स आदित् आभ्यां लक्ष्मीनारायणाभ्यामेव यविष्टोऽवरोऽभवदित्यर्थः । गर्भसम्बन्धनिमित्तकदुःखलेशोऽपि नास्तीत्याह– **आदिति** ।। यतो वायुरादित् प्रकृतलक्ष्मीनारायणप्रेरणादेव मातॄराविशत् न पुनरस्य गर्भवासादिनिमित्तं विकर्मास्तीति भावः । यासु मातृषु आसमन्ताच्छुचिः शुचित्वमेवाह– **उर्वियेति** ।। उर्वियोत्कृष्टया गर्भवासपीडया अहिंस्यमानोऽबाध्यमानो विवावृधे विशेषेणाभिवृद्धोऽभूदित्यर्थः । सप्तशिवासु मातृष्वित्युक्तं तत्र विशेषमाह– **अन्विति** ।। सना जुवः सदातनं भगवन्तं जुषन्ते प्रतिपादयन्तीति सनाजुवः पूर्वं ऋगाद्या आरुहदिति यत् तदनुक्रमादेव उपक्रमादेव उपक्रमादिलिङ्गैः क्रमेणैव ऋगादिवेदचतुष्टयार्थं विचारयामासेत्यर्थः । नव्यसीषु पौरुषेयत्वेन नूतनासु अवरासु त्रिषु इतिहासपुराणपञ्चरात्राख्यासु मातृषु निधावते उपक्रमादिपर्यालोचनं विनैव शीघ्रमेवार्थं विचारयतीत्यर्थः । इति

**भाष्यम्—**

**पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।**
**अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ।।**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमद् बृहदारण्यकोपनिषद्भाष्येऽष्टमोऽध्यायः**
**इति बृहदारण्यकोपनिषद्भाष्यम्**

**टिप्पणी—**

परमात्मस्तवननमनाभ्यामेव ग्रन्थः समापनीयो नतु स्वस्तुत्यैवेति भावेन पुनर्भगवन्तं प्रणमति– **पूर्णेति** ।। वेधसे सर्वज्ञायेत्यशेषमतिमङ्गलम् ।।

श्रीमदानन्दतीर्थार्यहृत्सरोजाख्यमन्दिरः ।
इन्दिराराध्यपादाब्जः प्रीयतां पुरुषोत्तमः ॥
प्रौढिप्रकाशनार्थं वा न मात्सर्यादिदोषतः ।
कृतेयं भाष्यविवृतिः किन्तु मन्दोपकारिणी ॥
बृहदारण्यभाष्यस्य विवृतिर्या कृता मया ।
तज्जन्यपुण्यमखिलमवाप्नोतु गुरुर्मम ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद् बृहदारण्यकोपनिषद्भाष्यटीकायां श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृतायाम् अष्टमोऽध्यायः ॥

## Sanskrit Manuscript Critically Edited by Dr. A.V. Nagasampige

1. **Nyaya Sutra Vivaranam of Gambhiravamshaja**
   Number of pages - 375 Year of Publication - 1993
   Pub. by - Oriental Research Institute, University of Mysore, Mysore.

2. **Shaktinidhi** (Associate Editor)
   Number of pages - 500 Year of Publication - 1997
   Pub. by - Oriental Research Institute, University, of Mysore, Mysore.

3. **Omkaravada of Vidyadhishatirtha**
4. **Tarasvarupa Prakasha**
   Number of pages - 200 Year of Publication - 2000
   Pub. by - Oriental Research Institute, University, of Mysore, Mysore.

5. **Sadacharasmrti of Anandatirtha**
6. **Ahnika Kaustubha of Srinivasatirtha**
7. **Prakashika of Narasimhacharya**
8. **Tantradipika of Mudgala Narasimhacharya**
   Number of pages - 350 Year of Publication - 2000
   Pub. by - Oriental Research Institute, University, of Mysore, Mysore.

9. **Subhashitani** (with Kannada & English Translation)
   Number of pages - 90 Year of Publication - 2002
   Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

10. **Shruti Siddhanta Sangrahah of Vanamali Mishra**
    Number of pages - 350 Year of Publication - 2002
    Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

11. **Tantrasara Sangraha of Anandateertha,**
12. **Prakashika of Srinivasacharya**
13. **Sanatkumara Gruha Vastu Shastram**
    (with Kannada and English Summary)
    Number of pages - 350 Year of Publication - 2003
    Pub. by - Oriental Research Institute, University, of Mysore, Mysore.

14. **Pramana Sangraha of Narahari Acharya**
    Number of pages - 130 Year of Publication - 2003
    Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

15. **Yajneeyopanisahtprabha**
    Number of pages - 64 Year of Publication - 2004
    Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

16. **Madhvasiddhantasara of Sri Krishnavadhuta**
Number of pages - 50 Year of Publication - 2005
Pub. by - Sri Raghavendra Mutt, Mantralaya

17. **Adhyatma Navanitam of Sri Krishnacharya**
Number of pages - 60 Year of Publication - 2005
Pub. by - Sri Raghavendra Mutt, Mantralaya

18. **Smrtimanikya Sangrahah**
Number of pages 275 Year of Publication - 2005
Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

19. **Brhadaranyakopanishad Khandarthah**
Number of pages 289 Year of Publication - 2005
Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

20. **Brihadaranyakopanishad Bhashya**
(With Sri Bhavabodha commentary of Sri Vedeshatirtha)
Number of pages 890 Year of Publication - 2006
Pub. by - Poornaprajna Samshodhana Mandiram, Bangalore-28

## Kannada translations of Dvaita Philosophical Works

1. **Yatipranavakalpa of Sri Madhvacharya**
Number of pages - 60 Year of Publication - 1981
Pub. by -Sri Raghavendra Ashrama, Malleshwaram, Bangalore

2. **Tattvodyota of Sri Madhvacharya**
Number of pages - 150 Year of Publication - 1984
Pub. by -Sri Raghavendra Ashrama, Malleshwaram, Bangalore

3. **Atharvanopanishad Bhashyam of Sri Madhvacharya**
Number of pages - 200 Year of Publication - 1984
Pub. by -Sri Raghavendra Ashrama, Malleshwaram, Bangalore

4. **Kathalakshanam of Sri Madhvacharya**
Number of pages - 80 Year of Publication - 1994
Pub. by - Akhila Bharata Madhva Maha Mandala, Bangalore

5. **Sutraprasthana and Gururajaru**
(An independent work highlighting the theories of Chandrika Prakasha Tantradipika and Tattvamanjari of Sri Raghavendratirtha in Kannada)
Number of pages - 40 Year of Publication - 1995
Pub. by - Raghavendra Saptaha Karyalaya, Mantralaya

6. **Sadacharasmrti of Sri Madhvacharya**
Number of pages - 100 Year of Publication - 1998
Pub. by - Akhila Bharata Madhva Maha Mandala, Bangalore

**7. Srihari Vayustuti**
Number of pages - 80 Year of Publication - 1999
Pub. by - Kolar Jagannatha Rao, Mysore

**8. Mundaka Khandartha of Sri Raghavendratirtha**
Number of pages - 200 Year of Publication - 2002
Pub. by - Raghavendra Samshodhana Kendra, Bangalore

**9. Chaturdasha Stotrani**
Number of pages - 150 Year of Publication - 2002
Pub. by - Dr. A.V. Nagasampige,
Director, Poornaprajna Samshodhana Mandiram, Bangalore-28

**10. Tarkasngrah of Annambhatta**
With Deepika commentary.
Translated into Kannada and made text book in
Karnataka State Open University, Mysore-5

**11. Sootraprasthanakke Sri Raghavendrara Koduge**
Page No. 130 Year of Publication - 2004
Pub. by Sri Raghavendra Matha, Prakashanagar, Bangalore

**12. Sarva Samarpana Gadya**
Page No. 60 Year of Publication - 2005
Pub. by Sri Raghavendra Matha, N.R. Colony, Bangalore

**13. Kathakopanishad Khandartha**
Page No. 100 Year of Publication - 2006
Pub. by Sri Raghavendra Matha, N.R. Colony, Bangalore

0-0-0

# PUBLICATIONS OF POORNAPRAJNA SAMSHODHANA MANDIRAM

1. **Upanishadbhashyam** of Sri Madhvacharya — **Prof. D.Prahladacharya**, **Rs. 200/- *(Out of stock)***

2. **Gita Bhashyam (Chapters 1-2)** of Sri Madhvacharya. Pages : 672 — **Prof. D.Prahladacharya**, **Rs. 150/-**

3. **Tatvodyota Prakaranam** of Sri Madhvacharya. Pages : 281 — **Prof. A .Haridasa Bhat**, **Rs. 75/-**

4. **Vishnutatvavinirnaya *Part-I*** of Sri Madhvacharya Pages : 589 — **Prof.A.Haridasa Bhat**, **Rs. 250/- *(Out of stock)***

5. **Vishnutatvavinirnaya *Part-II*** of Sri Madhvacharya - Pages : 640 — **Prof.A.Haridasa Bhat**, **Rs. 250/-**

6. **Shrimad Bhagavatham** Pages : 939 — **Pt. P.S.Sheshagiri Acharya**, **Rs. 150/-*(No discount)***

7. **Bharatiya Darshaneshu Prathyaksha Swaroopam** — **P.V. Upadhyaya**, Pages : 151 (A collection of papers presented by scholars in the seminar) **Rs. 50/-**

8. **Panchalakshani** — **Prof. A. Haridasa Bhat** (With Prof. A. Haridasa Bhat's original commentary on Gadadhari and Jagadishi commentaries) Pages : 130 **Rs. 75/-**

9. **Sarvamula Shabda Nighantu** — **Pt. Ranganatha Katti & Pt. Shankaranarayana Adiga** (A rare collection of interpretations of words given by Sri Madhva on important words in Itihasa, Purana and Upanishad) Pages : 630 **Rs. 250/-**

10. **Subhashitani** — **Dr. A.V. Nagasampige** (wise words soaked in honey from ancient times.) Pages : 90 **Rs. 20/-**

11. **Pramana Sangrahah of Narahari Acharya** — **Dr. A.V. Nagasampige** (Commentary on Pramana Navaratna Malika) Pages : 150 **Rs. 30/-**

12. **Laghuramayanam** — **Pt. P.V. Upadhyaya** (Ramayana in brief by Sri Krishnavadhuta) Pages : 50 **Rs. 20/-**

13. **Kavyanavanita & Kavyalakshana Sangraha** — **Pt. K.S. Adiga** (Poetics in brief by Sri Krishnavadhuta) Pages : 80 **Rs. 20/-**

14. **Alankarasutrabhashyam -Chamatkara chamikaram** **Pt. R.B. Katti**
(Commentary on Rhetorics by Sri Krishnavadhuta) Pages : 80 **Rs. 20/-**

15. **Shrutisiddhantasangraha** **Dr. A.V. Nagasampige**
(Interpretations of Shrutis by
Vanamali Mishra) Pages : 350 **Rs. 140/-**

16. **Brahma Sutra Bhashya -** **Prof. D. Prahlada Char**
of Sri Madhvacharya (Commentary of Sri Jayatirtha,
and Sri Raghunathatirtha.) Pages : 100 + 391 **Rs 121 /-** ***(No discount)***

17. **Gita Bhashyam (Chapters 3-4)** **Prof. P. Venkatesha Bayari**
of Sri Madhvacharya Pages : 70 + 402 **Rs. 200/-**

18. **Muktitatvam** **Dr. Veeranarayana Pandurangi**
Pages : 72+60+12 **Rs. 40/-**

19. **Bhedatarangini** **Prof. K. Hayavadana Puranik**
of Sri Ranganatha Suri. Pages : 62+165 **Rs. 50/-**

20. **Chandogyopanisadbhashyam** **Pt. Ranganatha Katii**
of Sri Madhvacharya **Pt. Shankaranarayana Adiga**
(with Padarthakoumudi of Sri Vedeshatirtha) Pages : 79+790 **Rs. 250/-**

21. **Chandogyopanisat** **Pt. Shankaranarayana Adiga**
(with Khandartha of **Pt. Ranganatha Katti**
Sri Raghavendratirtha) Pages : 70+280 **Rs. 125/-**

22. **Yajneeyopanishatprabha** **Dr. A.V. Nagasampige**
of Sri Krishnavadhoota **Pt. P.V. Upadhyaya**
Pages : 64 **Rs. 20/-**

23. **Padavrttisavarupavicara** **Dr. H. Satyanarayanacharya**
Pages : 214 **Rs. 60/-**

24. **Samavayavimarsha** **Dr. Pandurangavitthalacharya Pandurangi**
(A critique of Samavaya) **Dr. Veeranarayanacharya Pandurangi**
Pages : 180 **Rs. 80/-**

25. **Prajna - 2005** **Dr. A.V. Nagasampige**
Journal fo PPSM **Co-Editor : Pt. Shankaranarayana Adiga**
Pages : 145 **Rs. 60/-**

26. **Brihadaranyakopanishat** **Dr. A.V. Nagasampige**
With Khandarha of Sri Raghavendratirtha Pages : 101 + 289**Rs. 160/-**

27. **Smriti Manikya Sangraha** — **Dr. A.V. Nagasampige**
(of Sri Krishnavadhuta) Pages : 210 + 64 — **Rs. 80/-**

28. **Upanishadbhashyam** — **Pt. Shankaranarayana Adiga**
**(Isha-Talava-Kath-Shatprashna)** — **Pt. Ranganatha Katii**
(With Teeka, Tippani, Khandartha) Pages : 78 + 634 — **Rs. 200/-**

29. **Dvaitabhusnam** — **Prof. A .Haridasa Bhat**
(Sri Coraturu Srinivasaacarya) Pages: 20 + 284 — **Rs.100/-**

30. **Brihadaranyakopanishad Bhashya -** — **Dr. A.V. Nagasampige**
(With the Bhavabodha commentary
of Sri Raghuttamatirtha) Pages 890 — **Rs.240/-**

31. **Advaita Sutrartha Paddhati** — **Prof. D. Prahlada Char**
(of Sri Krishnavadhuta) — **Rs. 30/-**

**0-0-0**

रघूत्तमगुरुर्भूयान्मम ज्ञानाय सर्वदा ।
श्रीमध्वशास्त्रं संशोध्य यः सम्यग् ज्ञानमाप्तवान् ॥

-तलवकारभाष्यटीकायां श्रीवेदेशतीर्थाः

रघूत्तमगुरुर्दद्यात् रघूत्तमकथादरम् ।
रघूत्तग्रन्थजातरघूत्तमकथादृतः ॥

-श्रीसत्याभिनवतीर्थाः

शुकेन शान्त्यादिषु वाङ्मयेषु
व्यासेन धैर्येऽम्बुधिनोपमेयम् ।
मनोजजित्यां मनसां हि पत्या
रघूत्तमाख्यं स्वगुरुं नमामि ॥

-न्यायामृततरङ्गिण्यां श्रीव्यासरामाचार्याः

भावबोधकृतं सेवे रघूत्तममहागुरुम् ।
यच्छिष्यशिष्यशिष्याद्याष्टिप्पण्याचार्यसञ्ज्ञिताः ॥

-चरमश्लोकः